यदिआधिप्रचुरत्वाज्जीवितनवरंतर्हिसर्वाधिनिवृत्तिमत्त्वान्मरणंवरंस्यात्तत्राह ॥ दृढमूढतेति ॥ सर्वदुःखनिदानमूढताया दार्ढ्यात्तदपिनवरमित्यर्थः ॥ तर्हिभोगेनसर्वदुःखक्षयकर त्वान्नरकोवरमस्त्वितिचेन्नेत्याह ॥ नचेति ॥ नरकस्यापिपुनःपापजन्मावसानत्वात्तत्रापिसर्वदुःखक्षयइतिभावः ॥ विष्टपंसर्वभुवनाधिपत्यम् ॥ ३५ ॥ नरस्यविवेकिनःपुरु षस्यइतिअनेनप्रकारेणविचार्यमाणाविविधजगत्क्रमाःसमस्ताःसर्वेपिनरम्याः ॥ हियस्माद्धेतोस्तेजगत्क्रमाश्चलतरकलनयाअशाश्वतत्वबुद्ध्याआहितेगृहीतेपदार्थेमहांतःकथ चिरस्थितिमात्यंतिकविश्रांतियातीत्यर्थः ॥ ३६ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाण०पू०त्रयोविंशःसर्गः ॥ २३ ॥ ॥ ७ ॥ ॥ देहनाडीक्रमोपेताषट्चक्रस्ट दयान्विता ॥ प्राणस्पंदविभागाढ्याप्राणचिंतेहवर्ण्यते ॥ १॥ यदिजगतिनकिंचिच्छोभनंस्थिरंतर्हिकितच्छोभनंस्थिरंचयत्रविवेकिनश्चित्तविश्रांतिस्तदाह ॥ एकैवेत्यादिना ॥

नवरमाधिमयंचिरजीवितंनचवरंमरणंदृढमूढता ॥ नचवरंनरकोनचविष्टपंस्थितिमुपैतिहिनक्वचिदाशयः ॥ ३५ ॥ इतिविविधजगत्क्र माःसमस्ताःखलुमतिमूढतयानरस्यरम्याः ॥ चलतरकलनाहितेपदार्थेकथमुपयांतिचिरस्थितिंमहांतः ॥ ३६ ॥ ॥ इ०वा०वा०दे०मो० नि०पू०भुशुंडोपाख्यानेसमाधानसंकल्पनिराकरणंनामत्रयोविंशःसर्गः ॥ २३ ॥ ॥ भुशुंडउवाच ॥ ॥ एकैवकेवलादृष्टिर्निरपायाप गतभ्रमा ॥ विद्यतेसर्ववित्त्वेषुसर्वश्रेष्ठासमुन्नता ॥ १ ॥ आत्मचिंतासमस्तानांदुःखानामंतकारिणी ॥ चिरसंभृतदुःस्वप्नसंसारभ्रमहारि णी ॥ २ ॥ निष्कलंकमनोमार्गविपुलांगणचारिणी ॥ तथासमस्तदुःखानांचितानर्थविनाशिनी ॥ ३ ॥ ज्योत्स्नयेवांधकाराणामलमंतःप्र जायते ॥ सास्वात्मचिंताभगवन्सर्वसंकल्पवर्जिता ॥ ४ ॥ युष्मदादिपुसुप्रापादुष्प्रापैवास्मदादिषु ॥ समस्तकलनातीतंपरांकोटिमुपागत म् ॥ ५ ॥ पदमासादयंत्येतत्कथंसामान्यबुद्धयः ॥ आत्मचिंताविलासिन्यास्तस्याःसख्योमहामुने ॥ ६ ॥ किंचित्साम्यमुपायाताविज्ञानश शिशीतलाः ॥ आत्मचिंतासमानानांविविधानांमुनीश्वर ॥ ७ ॥ आत्मचिंतावयस्यानांमध्यादेकतमामया ॥ सर्वदुःखक्षयकरीसर्वसौ भाग्यवर्धिनी ॥ ८ ॥ कारणंजीवितस्येहप्राणचिंतासमाश्रिता ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इत्युक्तवंतंविहगंभुशुंडंपुनरप्यहम् ॥ जानन्न पीदमव्यग्रःपृष्टवान्क्रीडयामुनिम् ॥ ९ ॥ सर्वसंशयविच्छेदिन्नत्यंतचिरजीवित ॥ यथार्थंब्रूहिमेसाधोप्राणचिंताकिमुच्यते ॥ १० ॥

सर्वेषुवित्त्वेषुज्ञानेषुमध्येसर्वांशेश्रेष्ठासमुन्नतासहसादुरारोहेतियावत् ॥ १ ॥ आत्मचिंतासाक्षात्कारपर्यंतआत्मविचारः ॥ चिरमनादिकालादारभ्यकामकर्मवासनासंभृतस्य दुःस्वप्नकल्पस्यसंसारभ्रमस्यहरणशीला ॥ २ ॥ निरस्तमायादिकलंका प्रत्यक्प्रवणमनएवमार्गोयत्रतथाविधेमनसोप्यमार्गेअगम्येवानिरतिशयभूमानंदलक्षणेप्रत्यगात्मा गणेसंचरणशीला ॥ तथाउपस्थितसर्वदुःखानाभाविदुःखानुसंधानप्रयुक्तचितादिसर्वानर्थानांचविनाशिनी ॥ ३ ॥ अंधकाराणांतत्कार्यभ्रांतिभिःसहपरिगणनाद्बहुवचनम् ॥ अलमत्यंतमंतोनाशस्तयेतिशेषः ॥ ४ ॥ दुष्प्रापैवेत्यवधारणेहेतुमाह ॥ समस्तेत्यादिना ॥ ५ ॥ सामान्यबुद्धयःअविशुद्धप्राकृतबुद्धयः ॥ तर्हिसातवकथंसुलभाजातेतिचेत्त त्सखीसमाश्रयणादित्याशयेनप्राणचिंतांवर्णयितुंपीठिकारचयति ॥ आत्मचिंतेत्यादिना ॥ ६ ॥ ७ ॥ ८ ॥ क्रीडयाकौतुकेन ॥ ९ ॥ किंकीदृशी ॥ १० ॥

॥ ११ ॥ भवतांपूज्यानांपुष्मदादीनांसन्निधाइत्रागत्यशनपरिशिक्षितुंविशेषत परिज्ञातुंपुनःप्रत्युत्तराणित्वत्प्रश्नस्यप्रत्युत्तरवदानिालोहुत्तम ॥ १२ ॥ देहगेहवर्णनक्रमेणवक्ष्य
मागम ॥१३॥ वातपित्तकफलक्षणमिश्रकारामहांत स्थूणाविष्टंभकाष्ठानियस्य ॥१४॥ पुर्यष्टकभार्याख्यातम् ।मत्पर्यष्टकमाभस्वजनावांधवाश्रयस्य ॥१५॥ अत साक्षित
पात्यमपावप्यमानदेहगेहपश्यसिसाक्षात्अनुभवसि ॥ सत्यांकर्णशष्कुलीद्वयलक्षणेचंद्रशालिकेशिरोगृहेयस्मिन् ॥ शिरोरुहै केशैराच्छादनवत् ॥१६॥ भुजौपार्श्वेचउपमंदिरा
णिमंदिरस्यभागायस्य ॥ दंतालिर्दंतपंक्तिलक्षणकेसरमालाभिर्भूषितप्रधानद्वारबिलंयस्य ॥ १७ ॥ रूपरसग्रहणसववासविषयोमलक्षणम् ॥ तानस्पर्शयति अंतर्निवेशयति
पानिज्ञानेंद्रियाणितल्लक्षणद्वारपालवत् ॥ तमत्यस्य सर्वांगव्याप्यासवद्वारपालत्वमितिअधोद्वारयोरपितद्द्वत्स्वयोध्यम ॥ सर्वेप्रसकुलेनलिंगदेहाभ्यामिद्वाराभ्यामेन आलालोके
नलिप्यामम ॥ विशापनश्चजागरेतारअक्ष्णाः कनीनिकेतल्लक्षणयोरालिंदयोःकृष्णतमद्वारप्रकोष्ठयो कृतास्त्वामिस्थितियस्मिन् ॥ इधोइद्वेनामैपयोयदक्षिणेक्षणपुरुष नेत्रस्य

भुशुंडउवाच॥ ॥सर्ववेदांतवेत्तासिसर्वसंशयनाशक ॥ मामेतत्परिहासार्थंमुनेपृच्छसिवायसम्॥ ११ ॥ अथवाभवतामेवभग
वन्परिशिक्षितुम्॥पुन प्रत्युत्तराणीदकामेस्तिरुपस्थिता ॥ १२ ॥ भुशुंडजीवितंपरंभुशुंडस्वात्मलाभदम् ॥ शृणुप्राणसमाधानव
क्ष्यमाणमिदंमया॥१३॥पश्येदंभगवन्सर्वदेहगेहमनोरमम्॥ त्रिप्रकारमहास्थूणंनवद्वारसमावृतम्॥१४॥ पुर्यष्टककलत्रेणतन्मात्र
स्वजनेनच॥ अहंकारगृहस्थेनसर्वत परिपालितम् ॥ १५॥ अत पश्यसिसत्कर्णशष्कुलीचंद्रशालिकम् ॥ शिरोरुहाच्छादनवद्विपुला
क्षिगवाक्षकम् ॥ १६ ॥ आस्यप्रधानसुद्वारभुजपार्श्वोपमंदिरम् ॥ दंतालिकेसरस्रग्भिर्भूषितद्वारकोटरम् ॥ १७ ॥ अनारतंरूपरस
स्पर्शनद्वारपालवत् ॥ सकुलालोकवलितताराजिंदकृतस्थिति ॥ १८ ॥ रक्तमांसवसादिग्धस्नायुसततिवेष्टितम् ॥ स्थूलास्थिकाष्ठस
ग्दसुकुड्यमुममाहितम्॥ १९॥ इडाचपिंगलाचास्यदेहस्यमुनिनायक ॥ सुस्थितेकोमलेमध्येपार्श्वकोष्ठनिमीलिते ॥ २० ॥ पद्मयु
ग्मत्रयंयत्रमस्थिमांसमयंमृदु॥ऊर्ध्वाधोनालमन्योन्यमिलत्कोमलसद्दलम् ॥ २१ ॥ सेकेनविकसत्पत्रंसकलाकाशचारिणा ॥ चलं
तितस्यपत्राणिमृदुव्यामानिवायुना॥ २२॥

जापनविषादिंतिमुनेरितिभाव ॥ १८ ॥ रक्तमांसवसाभिर्धारिमशोमयैरिवस्निग्धमुपलेपेनोपचितम ॥ स्नायवः शिरास्तत्संततिभिर्वेष्टितरुद्धम् अतएवसुकुड्यम ॥ १९ ॥ अस्य
देहस्यमध्येइडापिंगलाचनिद्वेकोमलसूक्ष्मनाड्योवामदक्षिणपार्श्वकाष्ठनिमीलितेअनभिव्यक्ते नासापुटयोःप्राणसंचारलिंगेनाभिव्यक्तसुस्थिते ॥ २० ॥ तयसवप्राणशक्तीना
माश्रयभूतइमामनंजसहस्रमध्याकनाभिमभेदमूलजालकपुरीतन्नामकसंपुटितसनालपद्मयुग्मभयाकारदूतपद्मयमभर्यतशयति ॥ पद्मयुग्मेति ॥ अस्थिग्रहणाद्धकिसधिकील
यनोप्यनास्नागम्यते ॥ अन्योन्यसंपुटीभावेनमिलत्कोमलमद्दलमतएवयमन्त्यक्रयथाकारम ॥ २१ ॥ नासापाविशावांतसचकलदेहाकाशचारिणाचप्राणस्यापानस्य
मनसिकर्मप्रत्यागिदलानियस्यतत् ॥ एवप्राणसंचारेणपद्माणिदपत्रकुर्वतीत्यथावुम्यते ॥ अतएवतस्यपद्मस्यपद्माणिप्राणापानवायुनाभ्याभामिसंतिमृदुचलंतिमृदुच्छ्वास
मि.श्वाससंचारकुर्वतिविकसंतिचेत्यथ ॥ २२ ॥

कितततत्राह॥चलत्स्विति ॥ परिवर्धतेपरितःप्रसारात्पुरीतत्संबद्धसर्वनाडीच्छिद्रेषुप्रविश्यबहुलीभवतीत्यर्थः॥ यथाबहिररण्यादौलतापत्रजालेवातेनाहतेसतिवायुःपरितःप्रसर तितद्वदित्यर्थः ॥ २३ ॥ एवद्वृद्धिंनीत सहृदयपायुनाभिकंठसर्वांगलक्षणमनेकधास्थानंकृत्वाकल्पयित्वाप्राणादिपंचसंज्ञःसन्ऊर्ध्वाधोवर्त्तमानासुद्विसप्ततिसहस्रप्रतिशाखासुए कोत्तरशतनाडीषुप्रविश्यदेहेप्रसरतीत्यर्थः ॥ २४ ॥ तदेवाह ॥ प्राणेति ॥ २५ ॥ तैःप्राणैःसहप्राणशक्तीनामपिसर्वांगेप्रसरंदर्शयति ॥ हृत्पद्मेति ॥ २६ ॥ तासामन्नरसस्यदेह व्यापनायनाडीषुव्यापारमाह ॥ यातीति ॥ २७ ॥ हृदयमेवमुख्यस्थानप्राणस्यैवमुख्यताअन्येतद्वृत्तिभेदास्तद्द्वारेणप्राणएवसर्वशरीरेंद्रियादिचेष्टा शक्तिभेदैःकरोतीत्याह ॥ सएषइत्यादिना ॥ २८ ॥ २९ ॥ यन्त्रेहाप्रतिमादियन्त्रस्यनृत्यादिचेष्टाम् ॥ यांत्रिकोयन्त्रसूत्रधारः ॥ ३० ॥ ऊर्ध्वगमनमधोगमनमितिद्विविधसंकेतवतौ ॥ ३१ ॥ एवसर्वमौपो

चलत्सुतेषुपत्रेषुसमरुत्परिवर्धते॥ वाताहतेलतापत्रजालेबहिरिवाभितः॥ २३ ॥ वृद्धिंनीतःसनाडीषुकृत्वास्थानमनेकधा॥ ऊर्ध्वाधो वर्तमानासुदेहेस्मिन्प्रसरत्यथ॥ २४ ॥ प्राणापानसमानाद्यैस्ततःसहृदयानिलः॥ संकेतैःप्रोच्यनेतज्ज्ञैर्विचित्राचारचेष्टितैः॥ २५॥ हृत्प द्मयंत्रत्रितयेसमस्ताःप्राणशक्तयः॥ ऊर्ध्वाधःप्रसृतादेहेचंद्रबिंबादिवांशवः॥ २६ ॥ यांत्यायांतिविकर्षंतिहरंतिविहरंतिच॥ उत्पतंति पतंत्याशुताएताःप्राणशक्तयः॥ २७ ॥ सएषहृत्पद्मगतःप्राणइत्युच्यतेबुधैः॥ अस्यकाचिन्मुनेशक्तिःप्रस्पंदयतिलोचने ॥ २८ ॥ का चित्स्पर्शमुपादत्तेकाचिद्वहतिनासया ॥ काचिदन्नंजरयतिकाचिद्वक्तिवचांसिच॥ २९ ॥ बहुनात्रकिमुक्तेनसर्वमेवशरीरके॥ करोति भगवान्वायुर्यन्त्रेहामिवयांत्रिकः॥३०॥ तत्रोर्ध्वाधोद्विसंकेतौप्रसृतावनिलौमुने॥ प्राणापानावितिख्यातौप्रकटौद्वौवरानिलौ॥३१॥ तयोरनुसरन्नित्यंमुनेगतिमहंस्थितः॥ शीतोष्णवपुषोर्नित्यंनित्यमंबरपांथयोः॥ ३२॥ कलेवरमहायंत्रवाहयोःश्रमहीनयोः॥ हृदाका शार्कशशिनोस्त्वग्नीषोमस्वरूपयोः॥ ३३॥ शरीरपुरपालस्यमनसोरथचक्रयोः॥ अहंकारनृपस्यास्यप्रशस्येष्टतुरंगयोः॥ ३४॥

द्यातिकमुपवर्ण्यस्वयक्रियमाणांप्राणचितांदर्शयति ॥ तयोरिति ॥ तयोर्गत्यनुसरणत्वाध्यात्मिकपरिच्छेदत्यागेनाधिदैविकसूत्रात्मरूपतदात्मभावधारणयाआसंगपाप्मदूषितस र्वेंद्रियव्रतपरित्यागेनतन्मात्रव्रताचरणवागादींद्रियाणांहिवचनादिस्वस्वविषयव्यसनितात्रतंतच्चासंगपाप्मदूषितमितिश्रमलक्षणेनमृत्युनाभग्नम् ॥ प्राणस्यतुमुखनासिकादिस्था नेषुसंचरणमेवव्रतंतच्चनविषयासंगदूषितमितिनश्रमात्मनाभज्यतइतिप्राणएवैकोव्रतभंगशून्योमृत्युनानग्रस्यते अतस्तदात्मताधारणतद्व्रतमात्राचरणलक्षणात्प्राणचिंतनात्स्वस्य जितमृत्युतेत्याशयः॥ इयंचप्राणचिताप्राणव्रतधारणसहिताबृहदारण्यकेअथातोव्रतमीमांसेत्यादिनातस्मादेकमेवव्रतंचरेत्प्राण्याच्चैवापान्याच्चनेत्पाप्मामृत्युराप्नुवदितियद्विचरे त्समापिपयिषेत्तेनोएतस्यैदेवतायैसायुज्यंसलोकताजयतीत्यंतेनग्रंथेनप्रपंचितातत एवावगंतव्या ॥ तयोरुपासनीयगुणांतराण्यप्याह ॥ शीतोष्णवपुषोरित्यादिना ॥ ३२ ॥ श्रमहीनयोरिति ॥ तानिमृत्युःश्रमोभूत्वोपयेमेअथेममेवनाप्नोद्योयमध्यमःप्राणइतिश्रुतेरितिभावः ॥ ३३ ॥ ३४ ॥

आशरीरंयावज्जीवमरुद्वयोरविच्छिन्नोपासनयो ॥ तथासप्राकृश्रुतिरुक्तायपुरुषस्समापिपयिषेदिति ॥ नविच्छिद्यावितिहितवर्थ ॥ ३५ ॥ समरूपयोरिति ॥ अभ्यासा तिशयनवहिरन्तश्चद्वादशषोडशांगुलमदेशमापपरिमितसंचारयोरित्यर्थ ॥३६॥ प्राणायामाभ्यासात्तयोः सूक्ष्मतमत्वापादनाच्चनोक्रमणाविमसक्तिरित्याशयेनाह ॥ सहस्रेति ॥ अथवानात्मन संचारेणयोमुखनासिकासंचारस्वरुपोनलक्ष्यनेतथाह ॥ सहस्रेति ॥ यथाकेश सहस्रधाभिन्नस्तावताणिम्नातिष्ठतीतिश्रुतेनाडीनामेषातिसूक्ष्मत्वाद्दुर्लक्षत्वेतत्संचरनयोगतिःसुतरांदुर्लक्ष्येत्याशय ॥ ३७ ॥ वर्णितांप्राणगतिंवर्णयिष्यमाणप्रकारप्रश्नस्यावसरंसूचयन्नुपसंहरति ॥ अविरतेति ॥ हृदिहृदयादिस्थानेष्वविरतगतसंचारोययो स्तयोमरुतो प्राणापानयोश्चाश्रितांनानामुनिपुंगवव्याणोपास्तिप्रकरणेअनेकधाविहितांनिर्दोषत्वगतश्रमत्वाजमप्रततत्वसमर्पाद्यनेकगुणविशिष्टांगतिमनुसृत्यवक्ष्यमाणप्रकारेणो

तयोममानुसरत प्राणापानाभिधानयो ॥ गतिंशरीरमरुतोराशरीरमरुद्वयो ॥ ३५॥ जाग्रत्स्वप्नसुषुप्तेषुसदैवसमरूपयो ॥ सुषुप्तस्थितस्येवग्रस्ननगच्छतिवासरा ॥३६॥ सहस्रविनिकृत्तांगाद्बिसततुलवादपि ॥ दुर्लक्ष्याविद्यमानापिगति सूक्ष्मतरानयो ॥ ३७॥ अविरतगतयोर्गतिंविदित्वाहृदिमरुतोरनुसृत्यचोदितांताम् ॥ नपुनरिहहिजायतेमहात्मन्मुदितमनापुरुष प्रणष्टपाश ॥ ३८॥ ॥ इ० वा० वा० दे० मो० नि० पू० भु० प्राणविचारणंनामचतुर्विंशतितम सर्ग ॥२४॥ ॥५॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इत्यसकथयन्पक्षीपृष्टस्त्रपुनर्मया ॥ कीदृशीप्राणवातस्यगतिरित्येवराघव ॥ १॥ ॥ भुशुण्डउवाच ॥ ॥ जानन्नपिमुनेसर्वंकिंमांपृच्छसिलीलया ॥ यथापृष्टमहंवच्मिशृणुतत्रापिमद्वच ॥ २॥ प्राणोयमनिशंब्रह्मन्स्पंदशक्ति सदागति ॥ सबाह्याभ्यंतरेदेहेप्राणोयमुपरिस्थित ॥ ३ ॥ अपानोप्यनिशंब्रह्मन्स्पंदशक्ति सदागति ॥ सबाह्याभ्यंतरेदेहेत्वपानोयमवाक्स्थित ॥ ४॥ जाग्रत स्वपनश्चैवप्राणायामोयमुत्तम ॥ प्रवर्ततेयतस्तज्ज्ञतत्तावच्छ्रेयसेशृणु ॥ ५॥ बाह्योन्मुखत्वंप्राणानांयद्धृदंबुजकोटरात् ॥ स्वरसेनात्तयज्ञानांतंधीरारेचकंविदु ॥ ६॥ द्वादशांगुलपर्यंतबाह्यमाक्रमतामध ॥ प्राणानामंगसंस्पर्शोयःसपूरकउच्यते ॥ ७॥

पास्यप्रणष्टसन्यपाश सपुरुषस्तत्क्षानेनजीवन्मुक्तोभूत्वाइहसंसारेपुनर्नजायनइत्यर्थ ॥ हिशब्द प्राणापुपास्तीनामविनिष्कामानुष्ठितानांज्ञानद्वारामुक्तिहेतुत्वश्रुतिपुमसिद्धमितिद्योतनाय ॥ ३८ ॥ ॥ इतिश्रीवासिष्ठम तात्पर्यप्रकाशेनि० पू० चतुर्विंशतितम सर्ग ॥ २४ ॥ ॥ ५ ॥ ॥ प्राणापानगतिस्वरूपेचकादिमकल्पनम् ॥ प्राणापानोदयलयस्थानंप्रश्नपूर्वंवर्ण्यते ॥ १ ॥ प्रश्नावसरप्रदानसूचितांश्चिंतनीयप्राणगतिप्रकारप्रश्नंमयापृष्टइत्याह ॥ इत्थमिति ॥ १ ॥ २ ॥ एक प्राणशब्दोरूढ अपरस्तुभागनिनीनिर्यौगिकस्तल्लक्षणपर ॥ लक्षणानुसारेणैवोभ्यस्थानमभिनीयदर्शयति ॥ अयमुपरिस्थितइति ॥ ३ ॥ एवमपानपदमप्येकयौगिकपूर्ववत्सर्वम् ॥ ४ ॥ एवलक्षणतोभेदमदर्शनपूर्वकंप्रयत्नसंरवप्राणायामत्वसिद्धिंप्रदर्शयितुंदर्शयति ॥ जाग्रतइत्यादिना ॥ ५॥ तमबहयाम्मूर्धपर्यंतमभ्यासगत्यधमांतरेचकत्वेनचिंतनीयम् ॥ मूर्धाविवाहिर्द्वादशांगुलपर्यंतमधोवासपूरकत्वेनेत्याह ॥ बाह्येतिद्वाभ्याम ॥ ६ ॥ ७ ॥

१ विनिभक्तोमादृत्यविकीर्णसाठ

एववाह्याद्देशादपानेअतं परापततिप्रविशतियोनासाग्रादिमूर्धपर्यंतोयश्चमूर्धादिहृदयपर्यंतोवायो.स्पर्शस्तंद्विविधमप्यंतःपूरकंविदुरित्यर्थः ॥८ ॥ इदानीमंत:कुंभककल्पिताक ल्पितसाधारण्येनलक्षयति ॥ अपानेइति ॥ अस्तगतेप्रशांतेसति॥ ९॥बहिरपिचरेचकादीन्दर्शयितुमुपक्रमते॥ रेचकइत्यादिना॥ अपानस्योदयस्थानेनासाग्राद्बहिर्द्वादशांगुलप र्यंते ॥ १० ॥ स्वतएवभवतीतिस्वभावायेरेचकादयःप्रोक्ताः ॥ ११ ॥ अभ्युदित अभिमुखंस्थितः ॥ तस्यवातस्यतत्रबाह्यप्रदेशएववाह्यपूरकादयश्चिंतनीयाइतिशेष ॥१२ ॥ तत्रबाह्यवाह्यंतरपानस्यैकीभावेननिश्चलप्रायांस्थितिंकुंभकत्वेनकल्पयति ॥ मृदंतरस्थेतिसार्धेन ॥ १३॥ तस्यपूर्वप्राणभावेनहृदयादारभ्यनासाग्रपर्यंतायागतिस्तांबाह्यपूरक

बाह्यात्परापतत्यंतरपानेयत्नवर्जितः॥ योयंप्रपूरणःस्पर्शोविदुस्तमपिपूरकम् ॥ ८ ॥ अपानेऽस्तंगतेप्राणोयावन्नाभ्युदितोहृदि॥ ताव त्साकुंभकावस्थायोगिभिर्यानुभूयते॥ ९ ॥ रेचकःकुंभकश्चैवपूरकश्चत्रिधास्थितः॥ अपानस्योदयस्थानेद्वादशांतादधोबहिः ॥ १०॥ स्वभावाःसर्वकालस्थाःसम्यग्यत्नविवर्जिताः॥ येप्रोक्ताःस्फारमतिभिस्ताञ्छृणुत्वंमहामते॥ ११ ॥ द्वादशांगुलपर्यंताद्बाह्यादभ्युदितः प्रभो॥ योवातस्तस्यतत्रैवस्वभावात्पूरकादयः ॥ १२ ॥ मृदंतरस्थानिष्पन्नघटवद्यास्थितिर्बहिः॥ द्वादशांगुलपर्यंतेनासाग्रसमसंमुखे ॥ १३ ॥ व्योम्निनित्यमपानस्यतंविदुःकुंभकंबुधाः॥ बाह्योन्मुखस्यवायोर्यानासिकाग्रावधिर्गतिः ॥ १४ ॥ तंबाह्यपूरकंत्वाद्यंविदुर्यो गविदोजनाः॥ नासाग्रादपिनिर्गत्यद्वादशांतावधिर्गतिः॥ १५॥यावायोस्तंविदुर्धीराअपरंबाह्यपूरकम्॥ बहिरस्तंगतेप्राणेयावन्नापा नउद्गतः॥ १६॥ तावत्पूर्णसमावस्थंबहिष्ठंकुंभकंविदुः॥ यत्तदंतर्मुखत्वंस्यादपानस्योदयंविना॥ १७॥ तंबाह्यरेचकंविद्याच्चिंत्यमानं विमुक्तिदम्॥ द्वादशांताद्यदुत्थायरूपपीवरतापरा ॥ १८॥ अपानस्यबहिष्ठंतमपरंपूरकंविदुः ॥ बाह्यानाभ्यंतरांश्चैतान्कुंभकादीनना रतम्॥ १९॥ प्राणापानस्वभावांस्तान्बुध्वाभूयोनजायते॥ अष्टावेतेमहाबुद्धेरात्रिंदिवमनुस्मृताः॥ २० ॥ स्वभावादेहवायूनांकथि तामुक्तिदामया॥ गच्छतस्तिष्ठतोवापिजाग्रतःस्वपतोपिवा॥ २१ ॥

त्वेनापिकल्पयेदित्याह ॥ बाह्योन्मुखस्येति ॥ १४ ॥ ततोबहिर्गतिबाह्यपूरकांतरतयाकल्पयति ॥ नासाग्रादिति ॥ १५ ॥ बहिरित्यादि पूर्वोक्तानुवादः ॥ १६ ॥ बाह्यरेचकद्व यकल्पनप्रकारमाह ॥ यत्तदिति ॥ उदयप्रस्पंदविना ॥ तथाचप्रस्पंदपूर्वक्षणेयदतर्मुखत्वंप्रस्पंदोन्मुखत्वतमित्यर्थ. ॥ १७ ॥ द्वादशांताद्बाह्यद्वादशांगुलचरमभागात् ॥ नासा ग्रपर्यंतमपानस्यचलनेनस्वरूपाभिव्यक्त्यापीवरता ॥ १८ ॥ १९ ॥ बुध्वाउपास्यभूयोनजायतइत्यवश्यभाविज्ञानफलेनस्तुतिः ॥ अष्टाविति ॥ यद्यपिबहिरतश्चरेचकपूरक यो.प्रत्येकंद्वैविध्यकथनात्कुंभकाभ्यांसहदशभवंतितथापिकुंभकयो प्राधान्यादष्टकाभिप्रायेणेयमुक्तिः ॥ २० ॥ एतदभ्यासात्प्राणनिरोधोपिकालेभवतीत्याह ॥ गच्छ तइति ॥ २१ ॥

फलत्वमोकृताभिमानोप्यनेननश्यतीत्याशयेनाह ॥ यत्करोतीति ॥ २२ ॥ बाह्यदृष्टिपरित्यागादंतरालदर्शनोदयेनपरमपदप्राप्तिरप्यनेनसिध्यतीत्याह ॥ अध्यग्रमिति ॥ अ
स्मिन्प्राणापानव्यापारेसंसक्तमतएवबाह्यसमर्थंपरिजहत्त्यजन् ॥ २३ ॥ २४ ॥ श्वदतीव्यवमभक्षायांतद्वतक्षीरादावितियावत् ॥ २५ ॥ २६ ॥ प्राणापानयोरनुसरणमनुसा
रंध्वनमेतेनयाप्रबोधवतांपुंसांसंशांतमलमोहेनचित्तेनअंतर्हृदयस्थेस्वस्वरूपआत्मनि ॥ २७ ॥ २८ ॥ प्राणस्याभ्युदयस्थानेपूर्वोक्तानुवाद ॥ २९ ॥ ३० ॥ हृदयसंस्थि

ऐतेनिरोधमायांतिभ्ररुत्यातिचलानिला ॥ यत्करोतियदश्नातिबुद्ध्वैवालमनुस्मरन् ॥ २२ ॥ कुंभकादीन्नरःस्वांतस्तत्रकर्तानकिंचन ॥
अध्यग्रमस्मिन्व्यापारेबाह्यपरिजहन्मन ॥ २३ ॥ दिनैः कतिपयैरेवपदमाप्नोतिकेवलम् ॥ एनदभ्यसत पुंसोबाह्येविषयवृत्तिषु ॥ २४ ॥
नयभ्रातिररतिश्चेत श्वदतीब्राह्मणोयथा ॥ एतांदृष्टिमवष्टभ्ययेस्थिता कृतबुद्धय ॥ २५ ॥ प्राप्तप्राप्तव्यमखिलंतैरखिन्नास्तएवहि ॥ तिष्ठता
गच्छतानित्यस्वपताजाग्रतातथा ॥ २६ ॥ एषाचेष्टेस्यतेदृष्टिस्तन्नयघनमाप्यते ॥ प्राणापानानुसरणप्राप्तबोधवतामलम् ॥ २७ ॥ सं
शांतमलमोहेनस्वस्थेनांतरिहोच्यते ॥ सर्वारंभान्सदास्वच्छ कुर्वन्नापिबुधोजन ॥ २८ ॥ प्राणापानगतिंप्राप्यसुखस्य सुखमेधते ॥ प्रा
णस्याभ्युदयोब्रह्मन्नयपद्माद्हृदिस्थितात् ॥ २९ ॥ द्वादशांगुलपर्यंतेप्राणोस्तंयात्ययबहि ॥ अपानस्योदयोबाह्याद्द्वादशांतान्महामुने
॥ ३० ॥ अस्तंगतिरयांभोजमध्येहृदयसंस्थिते ॥ प्राणोयत्रसमायातिद्वादशांतेनभ पदे ॥ ३१ ॥ पदात्तस्मादपानोयस्वादेतिसमनंतरम्
यात्याकाशोन्मुख प्राणोवहत्यग्निशिखायथा ॥ ३२ ॥ हृदाकाशोन्मुखोपानोनिम्नेवहतिवारिवत् ॥ अपानश्चंद्रमादेहमाप्याययतिबा
ह्यत ॥ ३३ ॥ प्राणःसूर्योग्निरथवापचत्यंतरिदंवपु ॥ प्राणोहिहृदयाकाशंतापयित्वाप्रतिक्षणम् ॥ ३४ ॥ मुखाग्रगगनंपश्चात्तापयत्यु
त्तमोरवि ॥ अपानेंदुर्मुखाग्रंतुप्लावयित्वाहृदंबरम् ॥ ३५ ॥ पश्चादाप्याययत्येपनिमेषसमनंतरम् ॥ अपानशशिनोंतस्याकलाप्राण
विवस्वता ॥ ३६ ॥ यत्रग्रस्तातदासाद्यपदंभूयोनशोच्यते ॥ प्राणार्कस्यतथांतस्यायत्रापानसितांशुना ॥ ३७ ॥ ग्रस्तातत्पदमासाद्यन
भूयोजन्मभाग्नर ॥ प्राणएवार्कतांयातिसबाह्याभ्यंतरांबरे ॥ ३८ ॥ आप्यायनकरींपश्चाच्छशितामधितिष्ठति ॥ प्राणएवेंदुतांत्यक्त्वा
शरीराप्यायकारिणीम् ॥ ३९ ॥

तेअम्भोजमध्येअस्तगतिरपानस्येतिशेष ॥ प्राणोयत्रयस्मिन्नभःपदेसमायातिसमाप्यते ॥ ३० ॥ तस्मात्तस्मात्पदात्अपानएतिउद्गच्छति ॥ प्राणापानयोरग्नीषोमात्मकत्वंप्र
पुनश्शरीरोष्मपरीस्याप्याधोमुखत्वप्रसरणेनोपपादयति ॥ यातीत्यादिना ॥ ३२ ॥ ३३ ॥ तयो सूर्यचंद्रात्मकत्वमाविस्येत्याशयेनतामप्युपपादयति ॥ प्राणइत्यादिना ॥ ३४ ॥
॥ ३५ ॥ कलाचरमोभाग ॥ यत्रयस्मिन्हार्देब्रह्मणिस्थित्वापलानहूभासाद्य ॥ ३६ ॥ यत्रयस्मिन्द्वादशांगुलपर्यंतबाह्याकाशोपलक्षितेब्रह्मणिविद्यमानेप्राणेनअपानसहस्र
परमासाद्यस्वर्ध ॥ ३७ ॥ एकस्यैवप्राणोपाधिभेदात्तिद्वयोरप्याहस्मनीयमित्याह ॥ प्राणएवेत्यादिना ॥ ३८ ॥ आप्यायनकारीत्यपोदात्तम् ॥ ३९ ॥

तत्रत्र हिद्वादशांगुलपर्यंतेप्रसृत प्राणोयावदर्कतामौष्ण्यपरित्यज्य चंद्रताशत्यनगत सामाणापानयो संध्यवस्थातस्याहेहा इहि प्राणलयादात्मनो निर्देहत्वनिःक्रियत्वनिर्मनस्त्वादयो वास्तवस्वभावा संभावयितुशक्यत्वाद्विचार्यते ॥ तत्रबाह्यकुंभकेदेहादिदेशपरिच्छेदाभावाच्चंद्रसूर्यात्मकप्राणापानक्रियाप्रयुक्तायु.कालपरिच्छेदाभावाच्चादेशकालेस्वात्मनि प्रतिष्ठितेनयोगिनानशोच्यतेइत्यर्थ ॥४०॥ एवमत कुंभकेपिहृदिप्राणापानसंधौप्रतिष्ठितस्यमनसोनिजाधिष्ठानपरमात्मतत्त्वबोधावश्यभावान्नजन्मादिप्रसक्तिरित्याह ॥ हृदीति ॥४१॥ आत्मनोमनस आधारमधिष्ठानपरमात्मानम् ॥ अथवाहृदयस्थ.स्वात्मैवप्राणसूर्य सएवापानात्मकचंद्रतयाउदयास्तमयचंद्ररश्मिभूतत्वान्नादिवृत्तिभेदाद्यात्मनावर्त्ततेनतद्व्यतिरिक्त कश्चिदस्तीत्युपासनस्वात्मदर्शनेहेतुरित्याह ॥ सोदयास्तमयमिति ॥४२॥ ननुकिंहृद्यात्मसाक्षात्कारेणवाह्यतमसावहिरेवापरिच्छिन्नस्यात्मनआवृतत्वात्तरक्षयायवाह्यज्योतिरेवकिनान्विष्यतेतत्राह ॥ नेति ॥४३॥ हार्दंत्विति ॥ बाह्यध्वांतकल्पनापिहार्दध्वांतवशादेवेतितरक्षयेतरक्षयोर्थसिद्धइतिभाव ॥ बाह्यज्योतिषावाह्यतमःक्षपणं

क्षणादायातिसूर्यत्वंसंशोषणकरंपदम् ॥ अर्कतांसंपरित्यज्यनयावच्चंद्रतांगतः ॥४०॥ प्राणस्तावद्विचार्यतेऽदेशकालेनशोच्यते ॥ हृदि चंद्रार्कयोर्ज्ञात्वानित्यमस्तमयोदयम् ॥४१॥ आत्मनोनिजमाधारंनभूयोजायतेमनः ॥ सोदयास्तमयंसेंदुंसरश्मिंसगमागमम् ॥४२॥ हृदयेभास्करंदेवंयःपश्यतिसपश्यति ॥ नक्षीणंनापरिक्षीणंबहिष्ठंसिद्धयतमः ॥४३॥ हार्दंतुक्षपयेत्ध्वांतंयत्क्षयेसिद्धिरुत्तमा ॥ बाह्येतमसिसंक्षीणेलोकालोकःप्रजायते ॥ ४४ ॥ हार्देतुतमसिक्षीणेस्वालोकोजायतेमुने ॥ हार्दांधकारक्षयदंपरिज्ञातंविमुक्तिदम् ॥ ४५ ॥ सोदयास्तमयंयत्नात्प्राणार्कमवलोकयेत् ॥ अपानेंदुःप्रयात्यस्तंयत्रहृत्पद्मकोटरे ॥ ४६ ॥ पदात्तस्मादुदेत्यंतःप्राणार्कोबहिरुन्मुखः ॥ अपानेस्तंगतेप्राणःसमुदेतिहृदंबुजात् ॥ ४७ ॥ छायायांगलितांगायांतत्रैवाशुयथातपः ॥ प्राणेत्वस्तंगतेबाह्यादपानःप्रोदितःक्षणात् ॥ ४८ ॥ आतपेपरितोनष्टेछायेवानुपदंतथा ॥ प्राणजन्मावनौनष्टमपानंविद्धिसन्मते ॥ ४९ ॥ अपानजन्मभूमौचप्राणंनष्टमवेहिहि ॥ अस्तंगतवतिप्राणेत्वपानेभ्युदयोन्मुखे ॥५०॥ बहिःकुंभकमालंब्यचिरंभूयोनशोच्यते ॥ अपानेस्तंगतेप्राणेकिंचिदभ्युदयोन्मुखे ॥५१॥ अंतःकुंभकमालंब्यचिरंभूयोनशोच्यते ॥ प्राणरेचकमालंब्यअपानाद्दूरकोटिगम् ॥ ५२ ॥ स्वच्छंकुंभकमभ्यस्यनभूयःपरितप्यते ॥ अपानेरेचकाधारंप्राणपूरांतरास्थितम् ॥५३॥ स्वसंस्थंपूरकंदृष्ट्वानभूयोजायतेनरः ॥ प्राणापानावुभावंतर्यत्रैतोविलयंगतौ ॥५४॥ तदालंब्यपदंशांतमात्मानंनानुतप्यते ॥ प्राणभक्षोन्मुखेपानेदेशंकालंचनिष्कलम् ॥ ५५ ॥

तुरूपादिदर्शनहेतुरेवनबहिरात्मदर्शनेहेतुरित्याशयेनाह ॥ बाह्येइति ॥ लोक्यतइतिलोकोजगद्रूपम् ॥ ४४ ॥ ४५॥ उक्तेबाह्यात कुंभकप्रतिष्ठेप्ररोचनायप्रपंचयिष्यन्भूमिकारचयति ॥ अपानेंदुरित्यादिना ॥ ४६ ॥ ४७॥ ॥ ४८ ॥ ४९ ॥ उदयोन्मुखतैवनिरोद्धव्येत्याशयः ॥ ५० ॥ ५१ ॥ अपानादपानोदयस्थानाद्द्वादशांगुलस्थानाद्दूरकोटिगषोडशांगुलभागप्रसारिणमित्यर्थः ॥ ५२ ॥ निःशेषत्रायुरेचनात्स्वच्छम् ॥ नासाविवरेणातःप्रविशत्यपानेवाह्यरेचकाधारप्राणस्यपूरणप्राणपूरस्तदर्थमतःआस्थितप्रविष्टस्वसस्थदेहांतर्गतपूरकंदृष्ट्वाउपास्य ॥ ५३ ॥ यत्रहार्दब्रह्मणि ॥ ५४ ॥ इदानीमर्कतासंपरित्यज्यनयावच्चंद्रतागतइत्यत्रअदेशकालेनशोच्यतेइतियदुक्तंतद्विवृण्वन्बाह्यकुंभकोक्तस्यदेशकालबाधस्यांतःकुंभकेप्यनुकर्षंदर्शयति ॥ प्राणभक्षोन्मुखइत्यादिना ॥ बहि प्राणलयाधिष्ठानचितिअतःप्राणनिर्गमापादानचितिवाबाधेनदेशकालचात्तदर्वतीवस्तुजातंचनिष्कलंचिन्मात्रमेवेतिविभाव्य

॥५६॥ ५७॥ हृत्कालीवाणात्पानाम्योर्मध्यनिर्गीर्णात्रिनिरपेत्यर्थ ॥ नादृशावस्थाप्राणापानसंधिक्षणेसर्वप्राणिनामप्यस्तियोगिनस्तुतद्विदुनान्येइत्याह ॥ क्षणमित्यादिना ॥ ५८ ॥ रितु पाणिनः निशेर ॥ ५९ ॥ ६ ॥ एवक्रियाभेदभिन्नप्राणापानतात्प्रकारमुक्तान्निरुद्धयनतरमाणापानायांतरतदधिष्ठानचिदात्मोपासनकर्तव्यमित्याशयेनाह ॥ पुष्पस्यामोदस्यादिना ॥ सक्रियाणादहिनप्रापास्यानत्याह ॥ नमप्राणमिति ॥ तदीक्रियाणल्योपलक्षितोऽपानात्मासनेत्याह ॥ नवापानमिति ॥ तथाचतत्परिच्चयार्थप्राण स्यान्तरवधिमभिव्यक्तनपूामनापाधितयाभाव ॥ ६१ ॥ आस्वादनइत्यास्वादोमाधुर्यमिव ॥ सप्राणसजीवम ॥ अप्राणनिर्जीवम् ॥ ६२ ॥ ६३ ॥ प्राणस्येति ॥ सउभा

विनायद्धहिरंनवानशृय परिशोष्यते ॥ अपानस्तक्षणपरेप्राणेत्वहितयानहि ॥५६॥ देशकालचसप्रेक्ष्यनभूयोजायतेमनः ॥ यत्रप्रा णोत्यपानेनप्राणेनापानएवच ॥५७॥ निगीर्णौबहिरतश्चदेशकालौचपश्यतो ॥ क्षणमस्तगतप्राणमपानोदयवर्जितम् ॥५८॥ अय त्ननिद्धयात्यस्यंकुंभकतत्पदंविदु ॥ अयत्नसिद्धोत्यतस्यकुंभकपरमंपदम् ॥५९॥ एतत्तदात्मनोरूपशुद्धंपापरमेवचित् ॥ एतत्तत्तस्त दाभासमेतत्प्राप्यनशोच्यते ॥ ६० ॥ पुष्पस्यांतरिवामोदःप्राणस्यांतरवस्थितम् ॥ नसप्राणंनवापानंचिदात्मानमुपास्महे ॥ ६१ ॥ जल स्यांतरिवास्वादमपानस्यांतरस्थितम् ॥ नसप्राणनवाप्राणचिदात्मानमुपास्महे ॥ ६२ ॥ प्राणक्षयस्यापांतस्यमपानक्षयकोटिगम् ॥ अपानप्राणयोर्मध्यचिदात्मानमुपास्महे ॥ ६३ ॥ प्राणस्यप्राणनंप्रोच्चैः परजीवस्यजीवनम् ॥ देहस्यधारणधुर्यंचिदात्मानमुपास्महे ॥ ६४ ॥ मनसोमननमत्युद्धेरफावबोधनम् ॥ अहंकृतेरहंकारंचिदात्मानमुपास्महे ॥ ६५ ॥ यस्मिन्सर्वंयत सर्वंयत्सर्वंसर्वतश्चयत् ॥ यच्चसर्वमयंनित्यंतच्चित्तत्त्वमुपास्महे ॥ ६६ ॥ आलोकालोकनपुण्यसवपावनपावनम् ॥ नचभावनमत्र्यन्तंतच्चित्तत्त्वमुपास्महे ॥ ६७ ॥ (अपानास्तगतोयत्रप्राणोनाभ्युदितःक्षणम् ॥ कलाकलंकरहिततच्चित्तत्त्वमुपास्महे ॥ १ ॥) नापानोऽभ्युदितोयत्रप्राणश्चास्तमुपाग त ॥ नासाग्रगगनावर्तंतच्चित्तत्त्वमुपास्महे ॥ ६८ ॥ यत्रप्राणाःसमायातियत्रापानोस्तमेतिच ॥ यत्रद्वावप्यनुत्पन्नौतच्चित्तत्त्वमुपास्म हे ॥ ६९ ॥ प्राणापानौद्रवस्यानेयात्याभ्यंतरमाश्रिते ॥ यद्वयोगिपदाधारस्तच्चित्तत्त्वमुपास्महे ॥ ७० ॥

पाम्यवाप्रदृत्यादिस्तुत ॥ वापनादिव्यापारेनिमित्तमितिसप्रयायाथ ॥ ६४ ॥ ६५ ॥ ६६ ॥ आलाकालोकनज्योतिषोज्योति ॥ भाविमनोबुद्ध्यादिविकारैनमत्नमी भवत् पुरुषभावनयप्यागनश ॥ नूनमितिनिश्चय ॥६७॥ नासापोपलक्षितद्वादशांगुलपर्यन्तगगनआवर्तःप्राणापानप्रवाहसंधियस्य ॥ विरुद्धप्रवाहद्वयसंधौसावर्ताभवति ॥६८॥ द्वादशांतमारभ्यहृदयांतंगत्वाधिपरमपद्माय पनश्चाद्वेनिमूर्धांतयप्रयगच्छति सेवाम्बकिरेधर्मसण्नायत्रउभ्यवर्तते तदिनिश्चुत्यर्थमनसिकृत्वाह ॥ यत्रप्राणइति ॥६९॥ येदप्राणापा नाद्वस्थानयायिभि पवनगम्यनेद्वतिस्तनराधारस्तदधिष्ठानयचित्तस्तनवित्यर्थ ॥ ७० ॥

१ अयंश्लोक काश्मीरस्थपुस्तक धिकहर

यत्प्राणापानोपाधिरथारूढमनाततपरिच्छिन्नसत्प्राणापानसमाहार प्राणनापाननशक्तिर्भवतिएवंकरणांतरशक्तीनामपियच्छक्तिरूपंभवतीत्यर्थ ॥ ७१ ॥ प्राणापानकुंभक भावेनतद्विसर्गरेचकादिभावेनचतदेवविवर्त्ततइतितदेवोपास्यमित्याह ॥ त्वदिति ॥ ७२॥ प्राणापानयोः परामर्शश्चालनतस्मिन्निमित्तभूततत्सत्ताबोधरूपचेत्यर्थ ॥ एवंप्राणोपा स्तिफलमपितदेवेत्युपास्यमित्याह ॥ यत्प्राप्यमिति ॥ ७३ ॥ इंद्रियाणांविषयप्रदेशोपसर्पणस्पंदस्तदुपभोगश्चानंदस्तयोः कारणम् ॥ ७४ ॥ अखिलकलनाकलंकहीनपरमा र्थत ॥ आपातदर्शिदृशातुसदाजीवोपाधिभूतेनप्राणादिषोडशकलागणेनपरिवलितवेष्टितम् ॥ सम्यगनुभव स्वनुभव सएवविभवोनिरतिशयैश्वर्यंयस्यतथाविधपरमात्मपदमु

प्राणापानरथारूढंप्राणापानमनाततम्॥यच्छक्तिरूपंशक्तीनांतच्चित्तत्त्वमुपास्महे॥ ७१ ॥त्वत्प्राणकुंभकंदेवंबहिश्चापानकुंभकम्॥ पूर कांशविसृष्टंयत्तच्चित्तत्त्वमुपास्महे॥ ७२ ॥प्राणापानपरामर्शसत्ताबोधंविरूपकम्॥यत्प्राप्यंप्राणमननात्तच्चित्तत्त्वमुपास्महे॥ ७३॥य त्प्राणपवनस्पंदोयत्स्पंदानंदकारकम्॥कारणंकारणानांयत्तच्चित्तत्त्वमुपास्महे॥७४॥यदखिलकलनाकलंकहीनंपरिवलितंचसदाकला गणेन॥स्वनुभवविभवंपदंतदग्र्यंसकलसुरप्रणतंपरंप्रपद्ये॥७५॥ ॥इ० वा० वा० दे० मोक्षोपायेपुनि० पू० भुशुंडोपाख्यानेसमाधिवर्ण नंनामपंचविंशःसर्गः॥ २५॥ ॥भुशुंडउवाच॥ ॥एषाहिचित्तविश्रांतिर्मयाप्राणसमाधिना॥ क्रमेणानेनसंप्राप्तास्वयमात्मनिनिर्म ले॥ १ ॥एतांदृष्टिमवष्टभ्यसंस्थितोस्मिमहामुने॥ नचलामिनिमेषांशमपिमेरुविचालतः॥ २ ॥गच्छतस्तिष्ठतोवापिजाग्रतःस्वपतो पिवा॥ स्वप्नेपिनचलत्येषसुसमाधिर्ममात्मनि ॥ ३॥ नित्यानित्यासुलोलासुजगत्स्थितिषुसुस्थितः॥ अंतर्मुखोस्मितिष्ठामिस्वकामे नात्मनात्मनि॥ ४ ॥ अपिसंरुध्यतेवायुरपिवासलिलंगते॥ नैतस्मात्सुसमाधानाद्विरुद्धंसंस्मराम्यहम् ॥ ५ ॥ प्राणापानानुसरणात्पर मात्मावलोकनात्॥ अशोकमनुजातोस्मिपदमाद्यंमहातपः॥ ६॥ आमहाप्रलयाद्ब्रह्मन्नुन्मज्जननिमज्जनम् ॥ अहमद्यापिभूतानांप श्यञ्जीवामिधीरधीः॥ ७॥ नभूतंनभविष्यंचचिंतयामिकदाचन॥ दृष्टिमालंब्यतिष्ठामिवर्त्तमानामिहात्मना॥८॥ यथाप्राप्तेषुकार्येषुप रित्यक्तफलैषणः॥ सुषुप्तसमयाबुद्ध्यापरितिष्ठामिकेवलम्॥ ९॥

क्तप्रकारेणप्रपद्येउपासेइत्यर्थ. ॥ ७५ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू० पचविंशतितमःसर्ग ॥ २५ ॥ ॥ ७ ॥ ॥ इत्थंस्वस्यात्मविज्ञानंनि रूप्यप्राणचिंतया ॥ भुशुंडेनात्रकथ्यतेचिरजीवितहेतवः ॥ १ ॥ अनेनोक्तप्रकारेण ॥ १ ॥ मेरोर्विचलनविचालस्तस्मादपि ॥ २ ॥ ३ ॥ जगत्स्थितिषुइष्टानिष्टलक्षणासुसु स्थितोनिर्विक्षेप ॥ स्वकामेनस्वच्छंदेन ॥ ४ ॥ वायु प्रवहाख्योज्योतिश्चक्राधारः ॥ सलिलमहानदीनाम् ॥ गते प्रवहणात्संरुध्यतेसरुध्येतापीत्यर्थ. ॥ विरुद्धव्युत्थापकंवि षयजातम् ॥ ५ ॥ हेमहातपः ॥ ६ ॥ ७ ॥ वर्तमानानित्यवर्तमानस्वभावासाक्षिदृष्टिम् ॥ आत्मनामनसा ॥ ८ ॥ निरभिमानत्वेनसुषुप्तसमया ॥ ९ ॥

॥५६॥ ५७॥ देशकालौप्राणापानाभ्यांसहैवनिगीर्णावितिपश्येत्यर्थः ॥ तादृशावस्थाप्राणापानसंधिक्षणेसर्वप्राणिनामप्यस्तियोगिनस्तुतद्विदुर्नान्येइत्याह ॥ क्षणमित्यादिना
॥ ५८ ॥ विदुर्योगिनइतिशेषः ॥ ५९ ॥ ६ ॥ एवंक्रियाभेदभिन्नप्राणचिंताप्रकारमुक्त्वातन्निरूढ्यनंतरप्राणापानाद्यंतरतदधिष्ठानचिदात्मोपासनकर्तव्यमित्याशयेनाह ॥
पुष्पस्यांतरित्यादिना ॥ संकिंप्राणोपहितएवोपास्योनेत्याह ॥ नसप्राणमिति ॥ तर्हिकिंप्राणलयोपलक्षितोऽपानात्मासनेत्याह ॥ नवापानमिति ॥ तथाचतत्परिचयार्थंप्राण
स्यांतरवस्थितमित्युक्तेनतूपासनापाधितयेतिभावः ॥ ६१ ॥ आस्वादनइत्यास्वादोमाधुर्यमिव ॥ सप्राणसजीवम् ॥ अप्राणनिर्जीवम् ॥ ६२ ॥ ६३ ॥ प्राणस्येति ॥ सउप्रा

विचाययद्दिरतर्वानभूयःपरिशोष्यते ॥ अपानभक्षणपरेप्राणेहृदितयायहि ॥५६॥ देशकालचसंप्रेक्ष्यनभूयोजायतेमन ॥ यत्रप्रा
णोत्थपानेनप्राणेनापानएवच ॥ ५७॥ निगीर्णौयद्दिरतश्चदेशकालौचपश्यतौ ॥ क्षणमस्तगतप्राणमपानोदयवर्जितम् ॥ ५८॥ अय
त्नसिद्धयात्यस्यंकुंभकंतत्पदंविदुः ॥ अयत्नसिद्धोत्यतस्यकुंभकःपरमपदम् ॥ ५९ ॥ एतत्तदात्मनोरूपश्चद्वैपापरमैवचित् ॥ एतत्तत्तस्
दाभासमेतत्प्राप्यनशोच्यते ॥ ६० ॥ पुष्पस्यांतरिवामोदःप्राणस्यांतरवस्थितम् ॥ नसप्राणंनवापानंचिदात्मानमुपास्महे ॥ ६१ ॥ जल
स्यांतरिवास्वादमपानस्यांतरस्थितम् ॥ नसप्राणंनवाप्राणंचिदात्मानमुपास्महे ॥ ६२ ॥ प्राणक्षयस्योपांतस्थमपानक्षयकोटिगम् ॥
अपानप्राणयोर्मध्यंचिदात्मानमुपास्महे ॥ ६३ ॥ प्राणस्यप्राणनंप्रोक्तं परजीवस्यजीवनम् ॥ देहस्यधारणधुर्यंचिदात्मानमुपास्महे
॥ ६४॥ मनसोमननंसत्यंबुद्धेरेकावबोधनम् ॥ अहंकृतेरहंकारंचिदात्मानमुपास्महे ॥ ६५॥ यस्मिन्सर्वंयतःसर्वंयत्सर्वंसर्वतश्चयत् ॥
यच्चसर्वमयंनित्यंतच्चित्तत्त्वमुपास्महे ॥ ६६॥ आलोकालोकनपुण्यंसर्वपावनपावनम् ॥ नचभावनमन्वंतंतच्चित्तत्त्वमुपास्महे॥ ६७॥
(अपानास्तगतोयत्रप्राणोनाभ्युदितःक्षणम् ॥ कलाकलंकरहितंतच्चित्तत्त्वमुपास्महे ॥ १ ॥) नापानोऽभ्युदितोयत्रप्राणश्चांतमुपाग
त ॥ नासाग्रगगनावर्तंतच्चित्तत्त्वमुपास्महे ॥ ६८॥ यत्रप्राणोस्तमायातियत्रापानोस्तमेतिच ॥ यत्रद्वावप्यनुत्पन्नौतच्चित्तत्त्वमुपास्म
हे॥ ६९॥ प्राणापानोद्भवस्थानेयात्याभ्यतरमास्थिते॥ येद्वेयोगिपदाधारस्तच्चित्तत्त्वमुपास्महे॥ ७० ॥

णस्यप्राणइत्यादिश्रुतेः ॥ प्राणनादिव्यापारेनिमित्तमितिसर्वपर्यायार्थः ॥ ६४ ॥ ६५ ॥ ६६॥ आलोकालोकनज्योतिषोज्योतिः ॥ भावेमनोबुद्ध्यादिविकारेनमत्नभीभवन्
पूर्वस्वभावात्तस्यैववत्तनश्च ॥ नूनमितिनिश्चय ॥६७ ॥ नासाग्रोपलक्षितद्वादशांगुलप्रदेशगगनआवर्तःप्राणापानप्रवाहसंधियस्य ॥ विरुद्धप्रवाहद्वयसंधौसावर्तोभवति॥६८॥
दुस्तानांसर्वासांनत्वसोपाधिभेदमपहाय यतश्चावेतिसूर्योस्तंयत्रचगच्छति तदेवाश्वकिरेधर्मस्तएवाद्यसउश्वएतद्वैतदितिश्रुत्यर्थमनसिकृत्याह ॥ यत्रप्राणइति ॥६९॥येद्वेप्राणापा
नोद्भवस्थानेयोगिभिःपद्यतेगम्यतेइतिपदेतदाधारस्तदधिष्ठानयच्चित्तत्त्वतदित्यर्थः ॥ ७० ॥

१ अयंश्लोकः काश्मीरस्थपुस्तकेऽधिकोदृष्टः

यत्प्राणापानोपाधिरथारूढमनाततपरिच्छिन्नंसत्प्राणापानसमाहार.प्राणनापाननशक्तिर्भवतिएवंकरणांतरशक्तीनामपियच्छक्तिरूपभवतीत्यर्थः ॥ ७१ ॥ प्राणापानकुंभक भावेनतद्विसर्गेरेचकादिभावेनचतदेवविवर्त्ततइतितदेवोपास्यमित्याह ॥ हृदिति ॥ ७२॥ प्राणापानयो:परामर्शश्चालनतस्मिन्निमित्तभूततत्सत्ताबोधरूपचेत्यर्थ. ॥ एवंप्राणोपा स्तिफलमपितदेवेत्युपास्यमित्याह ॥ यत्प्राप्यमिति ॥ ७३ ॥ इंद्रियाणांविषयप्रदेशोपसर्पणस्पंदस्तदुपभोगश्चानंदस्तयोःकारणम् ॥ ७४ ॥ अखिलकलनाकलंकहीनपरमा र्थत' ॥ आपातदर्शिदृशातुसदाजीवोपाधिभूतेनप्राणादिषोडशकलागणेनपरिवलितवेष्टितम् ॥ सम्यगनुभव.स्वनुभव'सएवविभवोनिरतिशयैश्वर्यंयस्यतथाविधंपरमात्मपदमु

प्राणापानरथारूढंप्राणापानमनाततम्॥यच्छक्तिरूपंशक्तीनांतच्चित्तत्त्वमुपास्महे॥ ७१ ॥हृत्प्राणकुंभकंदेवंबहिश्चापानकुंभकम्॥ पूर कांशविसृष्टंयत्तच्चित्तत्त्वमुपास्महे॥ ७२ ॥प्राणापानपरामर्शसत्ताबोधंविरूपकम्॥यत्प्राप्यंप्राणमननात्तच्चित्तत्त्वमुपास्महे ॥७३॥य त्प्राणपवनस्पंदोयत्स्पंदानंदकारकम्॥कारणंकारणानांयत्तच्चित्तत्त्वमुपास्महे॥७४॥यदखिलकलनाकलंकहीनंपरिवलितंचसदाकला गणेन॥स्वनुभवविभवंपदंतदग्र्यंसकलसुरप्रणतंपरंप्रपद्ये॥७५॥ ॥इ०वा०वा०दे०मोक्षोपायेपुनि०पू०भुशुंडोपाख्यानेसमाधिवर्ण नंनामपंचविंशःसर्गः॥ २५॥ ॥भुशुंडउवाच॥ ॥एषाहिचित्तविश्रांतिर्मयाप्राणसमाधिना॥ क्रमेणानेनसंप्राप्तास्वयमात्मनिनिर्म ले॥ १ ॥एतांदृष्टिमवष्टभ्यसंस्थितोस्मिमहामुने॥ नचलामिनिमेषांशमपिमेरुविचालतः॥ २ ॥ गच्छतस्तिष्ठतोवापिजाग्रतःस्वपतो पिवा॥स्वप्नेपिनचलत्येषसुसमाधिर्ममात्मनि ॥ ३ ॥ नित्यानित्यासुलोलासुजगत्स्थितिपुसुस्थितः ॥ अंतर्मुखोस्मितिष्ठामिस्वकामे नात्मनात्मनि॥ ४ ॥ अपिसंरुध्यतेवायुरपिवासलिलंगते॥ नैतस्मात्सुसमाधानाद्विरुद्धंसंस्मराम्यहम् ॥ ५ ॥ प्राणापानानुसरणात्पर मात्मावलोकनात्॥ अशोकमनुजातोस्मिपदमाद्यंमहातपः॥ ६॥ आमहाप्रलयाद्ब्रह्मन्नुन्मज्जननिमज्जनम् ॥ अहमद्यापिभूतानांप श्यन्जीवामिधीरधीः॥ ७॥ नभूतंनभविष्यंचचिंतयामिकदाचन॥ दृष्टिमालंब्यतिष्ठामिवर्त्तमानामिहात्मना॥८॥ यथाप्राप्तेषुकार्येषुप रित्यक्तफलैषणः॥ सुषुप्तसमयाबुद्ध्यापरितिष्ठामिकेवलम्॥ ९ ॥

क्तप्रकारेणप्रपद्येउपासेइत्यर्थः॥ ७५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू०पंचविंशतितमःसर्ग' ॥ २५ ॥ ॥ ९ ॥ ॥ इत्थंस्वस्यात्मविज्ञानंनि रूप्यप्राणचिंतया ॥ भुशुंडेनात्रकथ्यतेचिरजीवितहेतव' ॥ १ ॥ अनेनोक्तप्रकारेण ॥ १ ॥ मेरोर्विचलनंविचालस्तस्मादपि ॥ २ ॥ ३ ॥ जगत्स्थितिषुइष्टानिष्टलक्षणासुसु स्थितोनिर्विक्षेपः॥ स्वकामेनस्वच्छंदेन ॥ ४ ॥ वायु'प्रवहाख्योज्योतिश्चक्राधारः॥ सलिलमहानदीनाम् ॥ गतेःप्रवहणात्संरुध्यतेसंरुद्धोतापीत्यर्थः॥ विरुद्धंव्युत्थापकंवि षयजातम् ॥ ५ ॥ हेमहातप. ॥ ६ ॥ ७ ॥ वर्तमानानित्यवर्तमानस्वभावासाक्षिदृष्टिम्॥ आत्मनामनसा ॥ ८ ॥ निरभिमानत्वेनसुषुप्तसमया ॥ ९ ॥

विमृश्यपदेयतयानिश्चित्य ॥ तेनचिरजीवामि ॥ १० ॥ समायोग संधिस्तस्समयतश्च विभातप्रलेतियावत् ॥ ११ ॥ १२ ॥ आत्मन स्वस्याम्यस्यवाचटितमितिशेष ॥ शुभम
स्ताचाज्जीवनम् ॥ १३ ॥ १४ ॥ परसर्वद्वैतवाधलक्षणत्यागम् ॥ जीवितजीवनाशिनिवेशास्तवावि ॥ १५ ॥ १६ ॥ १७ ॥ सपर्न्नभासम ॥ १८ ॥ १९ ॥ अन्यत अन्यस्य
॥ २ ॥ सर्वविषय ॥ सर्वपरनानावस्तिचाचभासनश्तिसर्वपराभासम ॥ २१ ॥ आहरन्आवदान ॥ २२ ॥ ससारभयसांसारमारंभकार्यम् ॥ २३ ॥ यथाकालमारभ्योप

भावाभावमयींचिंतामोहितानीहितान्विताम् ॥ विमृश्यात्मनितिष्ठामिचिरजीवाम्यनामय ॥ १० ॥ प्राणापानसमायोगसमयसमनुस्मरन् ॥ स्वयमात्मनितुष्यामिचिरंजीवाम्यनामय ॥ ११ ॥ इदमद्यमयालब्धमिदंप्राप्स्यामिसुंदरम् ॥ इतिचिंतानमेतेनचिरजीवाम्यनामय ॥ १२ ॥ नस्तौमिनचनिंदामिकंचित्किंचित्कदाचन ॥ आत्मनोन्यस्यवासाधोतेनाहंशुभमागत ॥ १३ ॥ नतुष्यतिशुभप्राप्तौनाशुभेप्वपिसिद्यते ॥ मनोममसमंनित्यंतेनाहंशुभमागत ॥ १४ ॥ परमत्यागमालव्यसर्वमेवसदेवहि ॥ जीवितादिमयात्यक्तंतेनाहंशुभमागत ॥ १५ ॥ प्रशांतचापलंवीतशोकस्वस्थंसमाहितम् ॥ मनोममुनेशांतंतेनजीवाम्यनामय ॥ १६ ॥ काष्ठविलासिनींशैलवणमभिहिमनश ॥ समंसर्वत्रपश्यामितेनजीवाम्यनामय ॥ १७ ॥ किमद्यममसपन्नप्रातर्वाभवितापुन ॥ इतिचिंताज्वरोनास्तितेनजीवाम्यनामय ॥ १८ ॥ जरामरणदुखेपुराज्यलाभसुखेपुच ॥ नबिभेमिनतुष्यामितेनजीवाम्यनामय ॥ १९ ॥ अयंबधुपरश्चायममायमयमन्यत ॥ इतिब्रह्मन्नजानामितेनजीवाम्यनामय ॥ २० ॥ सर्वसर्वपदाभासमनाद्यतमनामयम् ॥ अहंचिदितिजानामितेनजीवाम्यनामय ॥ २१ ॥ आहरन्विहरंस्तिष्ठन्नुत्तिष्ठन्नुच्छ्वसन्स्वपन् ॥ देहोहमितिनोवेद्मितेनास्मिचिरजीवित ॥ २२ ॥ इमसांसारमारंभसुपुनपदवत्स्थित ॥ असंतमिवजानामितेनजीवाम्यनामय ॥ २३ ॥ यथाकालमुपायातावर्थानर्थौसमौमम ॥ हस्ताविवशरीरस्थौतेनजीवाम्यनामय ॥ २४ ॥ अपरिचलयाशक्त्यासुदृशास्निग्धमुग्धया ॥ ऋजुपश्यामिसर्वत्रतेनजीवाम्यनामय ॥ २५ ॥ आपादमस्तकांतेस्मिन्नदेहेममतामम ॥ त्यक्ताहंकारपकस्यतेनजीवाम्यनामय ॥ २६ ॥ यत्करोमियदश्नामितत्त्यक्त्वातद्गतोपिमे ॥ मनोनैष्कर्म्यमादत्तेतेनजीवाम्यनामय ॥ २७ ॥ यदायदामुनेकिंचिद्विजानामितदातदा ॥ मतिरायातिनौद्धत्यतेनजीवाम्यनामय ॥ २८ ॥

स्यापितभोगकालानुसारेणोपायातौप्राप्तौ ॥ २४ ॥ स्वरूपान्नपरिचलतीत्यपरिचलयामन स्थैर्यशक्त्या ॥ सुदृशासर्वभूतेष्वात्मौपम्यदृष्ट्या ॥ ऋजुमकुटिलम् ॥ यथावोक्त
भारते ॥ सर्वेजित्वमृत्युपदमार्जवब्रह्मण पदम ॥ एतावानज्ञानविषय प्रलाप किंकरिष्यतीति ॥ २५ ॥ २६ ॥ ममतापि मानस्यकाशारीरेष्वतवनोपिमेमनोनैष्कर्म्यमकर्तृगो
कृत्वभावनामात्मस्वीकरोमि ॥ २७ ॥ औद्धत्यमविनीततामायाति ॥ २८ ॥

ईश·परेषामाक्रमणसमर्थोप्याक्रातिपरिभवंनकरोमि ॥ एवंपरकृतेपरितापेसहनशीलत्वान्नखेदवान् ॥ २९ ॥ पश्यद्रूपेचेतनप्रायेअस्मिन्शरीरेभासमानेप्यहंचिदास्पदश्चि न्मात्रदर्शी ॥ एवचचिदात्मन सर्वभूतेषुसाम्यात्सर्वभूतस्थात्मासन्भूतवृंदस्वशरीरमिवपश्यामीत्यध्याहृत्ययोज्यम ॥ ३० ॥ सर्वदासमाहित·सन्आशापाशविनुन्नायाश्चित्तवृ त्ते·अतर्दृदिमस्पर्शप्रवेशनददामि ॥ ३१ ॥ बाह्यदृष्टिविषयेसुप्त सन्जगत·असत्तापश्यामिअतस्तुप्रबुद्ध सन्आत्मन सत्ताकरबिल्ववत्पश्यामीत्यन्वय· ॥ ३२ ॥ श्लथंशिथि लावयव क्षीणकृशाग क्षुब्धव्यापृतावयवक्षुण्णसचूर्णितावयव सर्वमतीतानागतवर्त्तमानवस्तुनित्यनिर्विकारात्ममात्रत्वदृशानववत्पश्यामि ॥ ३३ ॥ ३४ ॥ भावा:कला नामिववित्तादीनामुपचयाअभावास्तत्क्षयाश्चतेषुनैवाभिनिविष्टोस्मि ॥ ३५ ॥ ३६ ॥ ३७ ॥ किसर्वत्रजाड्यमनपोह्यैवाहबुद्धिस्तेनेत्याह ॥ घटइति ॥ ३८ ॥ उपसहरति ॥

करोमीशोपिनाक्रांतिंपरितापेनखेदवान्॥ दरिद्रोपिनवांछामितेनजीवाम्यनामयः॥ २९॥ पश्यद्रूपेशरीरेस्मिन्भूतस्थात्माचिदास्पदः॥ भूतवृंदमहंसाम्यात्तेनजीवाम्यनामयः॥ ३०॥ आशापाशविनुन्नायाश्चित्तवृत्तेःसमाहितः॥ संस्पर्शंनददाम्यंतस्तेनजीवाम्यनामयः॥ ३१॥ असत्तांजगतःसत्तामात्मनःकरबिल्ववत्॥ सुप्तःप्रबुद्धःपश्यामितेनास्मिचिरजीवितः॥ ३२॥ जीर्णंभिन्नंश्लथंक्षीणंक्षुब्धंक्षुण्णंक्षयंगतम्॥ पश्यामिनववत्सर्वंतेनजीवाम्यनामयः॥ ३३॥ सुखितोस्मिसुखापन्नेदुःखितोदुःखितेजने॥ सर्वस्यप्रियमित्रंचतेनजीवाम्यनामयः॥ ३४॥ आपद्यचलधीरोस्मिजगन्मित्रंचसंपदि॥ भावाभावेषुनैवास्मितेनजीवाम्यनामयः॥ ३५॥ नाहमस्मिनचान्योमेनाहमन्यस्यकस्यचित्॥ इतिमेभावितंचित्तंतेनजीवाम्यनामयः॥ ३६॥ अहंजगदहंव्योमदेशकालक्रमावहम्॥ अहंक्रियेतिमेबुद्धिस्तेनजीवाम्यनामयः॥ ३७॥ घटश्चित्पटश्चित्खंचिद्घनंशकटंचचित्॥ चित्सर्वमितिमेभावस्तेनजीवाम्यनामयः॥ ३८॥ इत्यहंमुनिशार्दूलत्रिलोककमलालिकः॥ भुशुंडोनामकाकोलःकथितश्चिरजीवितः॥ ३९॥ ब्रह्मार्णवेविलुलितंत्रिजगत्तरंगमुत्पादनाद्यभिभवेनविभिन्नरूपम्॥ आलीनमुन्नमितमाकुलदृश्यदृश्यमालोकयन्प्रकलयंश्चचिरंस्थितोस्मि॥ ४०॥ ॥ इत्यार्षेवा० वा० दे० मोक्षोपायेपुनिर्वाणप्रकरणेपू० भुशुंडोपाख्यानेचिरजीवितहेतुकथनंनामषड्विंशःसर्गः॥ २६॥ ॥ ७॥ ॥ भुशुंडउवाच॥ ॥ एतत्तेकथितंब्रह्मन्यथास्मियदिहास्मिच॥ त्वदाज्ञामात्रसिद्ध्यर्थंधार्ष्ट्येनज्ञानपारग॥ १॥

इतीति ॥ मेरुकर्णिकावासित्वात्श्यामत्वाच्चत्रिलोककमलस्यअलिरिवअलिक· ॥ ३९ ॥ उत्पादनानिसर्गा आदिपदाद्वृद्धिविपरिणामापक्षयास्तल्लक्षणेनाभिभवेनपरस्परप्र तिघातेनविभिन्नानिवैचित्र्यप्राप्तानिरूपाणियस्यतत् ॥ एवरीत्यापुन·पुनरुन्नमितमालीनचाकुलपरिभ्रमत्साक्षिदृश्यबुद्धिमनइद्रियाणांदृश्यजगद्युत्थानकालेआलोकयन्समा धिकालेप्रकलयन्विलापयश्चचिरस्थितोस्मीत्यर्थः ॥ ४० ॥ ॥ इतिश्रीवा० तात्पर्य० नि० पू० षड्विंशःसर्गः ॥२६॥ ॥ ७ ॥ ॥ भुशुडस्यप्रशसात्रयियासोस्तेनपूजनम् ॥ व सिष्ठस्यनभोगत्यास्वलोकाभिश्चवर्ण्यते ॥१॥ यथायेनप्रकारेणअस्मिचिरजीवामि ॥ परमार्थतइहकार्यकरणसघातेयदस्मितच्चकथितमित्यर्थः ॥ धार्ष्ट्येनवैयात्येन ॥१॥

आत्मोदत सुवृत्तांत ॥२॥३॥ येभवतमपश्यंतितेपादृशोधन्या ॥ यावदपेतिस्वदृशोभिरस्थितिसार्थक्याभिमायम ॥४॥ विबुधानदिवानांविबुधांपभूतयोशानैश्वर्यसंपदोदृष्टा ॥ ५ ॥ भांतायमनचिरमभिप्यापिमहांस्तस्वप्नोजनःकथंचिआप्यततआपिभवानिषमसुलभ ॥ ६ ॥ वंशस्वदेवेणुवने ॥ वेणूनामप्यष्टसुमुक्ताकरेषुपरिगणनात् ॥ ७ ॥ ८ ॥ मध्याह्नपरनमाध्याह्निककर्मलक्ष्यत ॥ सुरमविरसमर्पितोकस्वग्दहम् ॥ ९ ॥ १० ॥ मौक्तिकफलक्षणेनार्घ्येणअर्घार्थजलेन ॥ ११ ॥ भिनेषमिषेसुपमानान्नित्यशिवपूजा

श्रीवसिष्ठउवाच ॥ ॥ अहोनुचित्रभगवन्भवताभूषणश्रुते ॥ आत्मोदंत प्रकथित परविस्मयकारणम् ॥ २ ॥ धन्यास्तेयेमहात्मानम त्वंतंचिरजीवनम् ॥ भवतंपरिपश्यतिद्वितीयमिवपद्मजम् ॥ ३ ॥ यावदपदृशोधन्या स्वात्मोदतमखंडितम् ॥ यथावत्पावनबुद्धे सर्वक यितवानसि ॥ ४ ॥ प्रभ्रांतदिक्षुसर्वासुदृष्टाविबुधभूतय ॥ भवानिवजगत्यस्मिन्नमहानवलोकित ॥ ५ ॥ कथंचित्प्राप्यतेकश्चिद्भांत्वे हहिमहाजन ॥ नत्तवानिवसव्यात्मासुलभोजगतिक्वचित् ॥ ६ ॥ वंशस्वदेहिकस्मिंश्चिज्जायतेमौक्तिकयथा ॥ जगत्स्वदेहिकस्मिंश्चिद्द स्यतेत्वादृशास्तथा ॥ ७ ॥ मयातुसुमहत्कार्यमद्यसपादितंशुभम् ॥ पुण्यदेहविमुक्तात्माय द्भवानवलोकित ॥ ८ ॥ तदस्तुतवकल्याणप्रवि शात्मगुहांशुभाम् ॥ मध्याह्नसमयोयन्मेतआमिसुरमदिरम् ॥ ९ ॥ इत्याकर्ण्यभुशुंडोसौजग्राहोत्थायपादपात् ॥ सकल्पिताभ्याहस्ता भ्यामुपात्तहेमपल्लवम् ॥ १० ॥ कल्पवृक्षलतापुष्पकेसरेणहिमत्विषा ॥ तत्पात्रेमौक्तिकार्घ्येणपूरयामासपूर्णधी ॥ ११ ॥ तेनार्घ्यपाद्य पुष्पेणत्रिनेत्रमिवमामसौ ॥ आपादमस्तकभक्त्यापूजयामासपूर्वज ॥ १२ ॥ अनुव्रज्याकदर्थनस्वर्गोद्यालमितिब्रुवन् ॥ विष्टरादह मुत्थायतत खगवदाप्लुत ॥ १३ ॥ व्योम्नियोजनमात्रतुमदनुव्रज्ययागत ॥ करकरेणावष्टभ्यबलात्संरोधित खग ॥ १४ ॥ मयियाते क्षणेनैवगगनाध्वन्यदृश्यताम् ॥ निवृत्तोसौविहंगेंद्रोबुस्त्यजासगति सताम् ॥ १५ ॥ अन्योन्यमपिकस्मिंश्चित्तरगकइवांबुधौ ॥ व्योम न्यदृश्यतांयातोस्मृत्यामुनीनहम् ॥ १६ ॥ समर्पिमंडलप्राप्यजाययापरिपूजित ॥ यातेकृतयुगस्यादौपुरावर्षशतद्वये ॥ १७ ॥ स गतोहंभुशुंडनमेरोःशृंगद्रुमेभवम् ॥ अधरामकृतेक्षीणेत्रेतासप्रतिवर्त्तते ॥ १८ ॥ मध्येत्रेतायुगस्यास्यजातस्त्वरिपुमर्दन ॥ पुनरद्याष्ट मेवर्षतत्रैवोपरिभूभृत ॥ १९ ॥

परतापितस्यगम्यते ॥ पूषगम्भिरतन ॥ ११ ॥ हेस्वर्गेंद्र अनुव्रज्यालक्षणेनकदर्थनश्रमेण अलमितिब्रुवन्नहमाप्लुतउड्डीन ॥ १३ ॥ संरोधितोनिवर्तित ॥ १४ ॥ १५ ॥ आ वामन्योन्यमप्यदृश्यतांयातौ ॥ तत अहस्तमस्यभुशुंडस्यस्मृत्याअविच्छिन्नस्मरणेनोपलक्षित सप्तर्षिमंडलप्राप्यमुनीन्द्रस्वामितिशेष ॥ १६ ॥ जायया अरुंधत्या ॥ उ कायाभुशुंडसमते कालमाह ॥ यातेइति ॥ १७ ॥ १८ ॥ भूभृत मेरो ॥ १९ ॥

उपसहरति ॥ इतीति ॥ २० ॥ इतीति ॥ इतिइमासुमतेर्भुशुंडस्यसत्कथांय प्रविचारयिष्यतिसइहास्मिन्नेवशरीरेभवाजन्मादयस्तद्भयैर्बहुलाअतएवाकुलायेजीवास्तैरास्थि ताइतिइमाप्रसिद्धामसत्सरितमायानदीतरिष्यति ॥ प्रसभमितिपौरुषप्राधान्यद्योतनार्थम ॥ २१ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू०सप्तविंशतितमः सर्गः ॥ २७ ॥ ॥ ९ ॥ ॥ आख्यायिकाभिसंबंधोदेहानियतिवर्णनम ॥ आपातभातिमात्रत्वदेहादेश्चात्रवर्ण्यते ॥ १ ॥ वर्णितायाभुशुंडाख्यायिकायाः प्रकृतोपदेशगंध दर्शयति ॥ एवमित्यादिना ॥ १ ॥ प्राणाभ्यासोत्रप्राणस्यनिरोधउपास्तिर्वातत्पूर्विकाम ॥ महार्णवइतिविपुल संसारोनिगीर्यो व्यवसितः ॥ २ ॥ ३ ॥ प्राणापानावलोकि

मिलितोभूद्भुशुंडोमेतथैवाजररूपवान् ॥ इतिसंकथितंचित्रंभुशुंडोदंतमुत्तमम् ॥ श्रुत्वाविचार्यचैवांतर्यद्युक्तंतत्समाचर ॥ २० ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ इतिसुमतिभुशुंडसत्कथांयोविमलमतिःप्रविचारयिष्यतीह ॥ भवभयबहुलाकुलास्थितांसप्रसभमसत्सरितंतरिष्यतीति ॥ २१ ॥ ॥ इत्यार्षेवा०वा०दे०मोक्षोपायेपुनि०पू०भुशुंडोपाख्यानसमाप्तिर्नामसप्तविंशतितमःसर्गः ॥ २७ ॥ ॥ ९ ॥

श्रीवसिष्ठउवाच ॥ ॥ एवंभुशुंडवृत्तांतःकथितस्तेमयानघ ॥ अनयाप्रज्ञयातीर्णोभुशुंडोमोहसंकटात् ॥ १ ॥ एतांदृष्टिमवष्टभ्यस्वप्राणाभ्यासपूर्विकाम् ॥ भुशुंडवन्महाबाहोभवतीर्णमहार्णवः ॥ २ ॥ यथाज्ञानेनयोगेनसंतताभ्यासजन्मना ॥ भुशुंडःप्राप्तवान्प्राप्यंतथासादयतत्पदम् ॥ ३ ॥ असक्तबुद्धयःसर्वेभुशुंडवदवस्थितिम् ॥ प्राप्नुवंतिपरेतत्त्वेप्राणापानावलोकिनः ॥ ४ ॥ एताविचित्राभवताश्रुताविज्ञानदृष्टयः ॥ इदानींधियमालंब्ययथेच्छसितथाकुरु ॥ ५ ॥ ॥ श्रीरामउवाच ॥ ॥ भगवन्भवताभूमिभास्वताज्ञानरश्मिभिः ॥ हार्दमुद्दामदौरात्म्यंप्रमृष्टमखिलंतमः ॥ ६ ॥ प्रबुद्धाःस्मःप्रहृष्टाःस्मःप्रविष्टाःस्मःस्वमास्पदम् ॥ स्थिताःस्मोज्ञातविज्ञेयाभवंतोऽन्यपराइव ॥ ७ ॥ अहोभुशुंडचरितंपरंविस्मयकारकम् ॥ भगवन्भवताप्रोक्तमुत्तमार्थावबोधनम् ॥ ८ ॥ भुशुंडचरितेब्रह्मन्नेतस्मिन्कथितेत्वया ॥ यच्छरीरगृहंप्रोक्तंमांसचर्मास्थिनिर्मितम् ॥ ९ ॥ तत्केननामरचितंकुतोवातत्समुत्थितम् ॥ कथंवास्थितिमायातंकोवातत्रावतिष्ठते ॥ १० ॥ श्रीवसिष्ठउवाच ॥ परमार्थावबोधायदोषापाकरणायच ॥ शृणुराघवतत्त्वेनवक्ष्यमाणमिदंमया ॥ ११ ॥ अस्थिस्थूणंनवद्वारंरक्तमांसावलेपनम् ॥ शरीरसदनंरामनकेनचिदिदंकृतम् ॥ १२ ॥

नःउक्तोपास्तिशीलाः ॥ ४ ॥ यथेच्छसियोगपूर्विकामुपास्तिपूर्विकावाब्रह्मात्मप्रतिष्ठांतथाकुरु ॥ ५ ॥ त्वत्प्रायोगोपास्तीत्वदुपदेशश्रवणादेवस्वस्यतत्त्वबोधःसिद्धइतिसूचयन् राम कथाप्रसंजितदेहगेहस्वरूपमेवजिज्ञासमानःपृच्छति ॥ भगवन्नित्यादिना ॥ भूमिभास्वताभूमाववतीर्णेनसूर्येण ॥ उद्दामानिदौरात्म्यानिअनात्मस्वात्मत्वदर्शनानितत्प्रयुक्तदुश्चेष्टितानिचयस्मात्तथाविधहार्दंतम. ॥ ६ ॥ अपराद्वितीयाभवतइव ॥ ७ ॥ ८ ॥ ९ ॥ कर्तुर्निमित्तस्यस्थितिप्रकारस्यतदंत स्थस्यस्वामिनश्चप्रश्नाः ॥ १० ॥ ११ ॥ तत्राद्यस्योत्तरमाह ॥ अस्थीनि ॥ १२ ॥

नन्वीश्वरोस्यदेहस्यनिर्माताश्रुतिपुराणादिप्रसिद्ध जीवस्तुस्वकर्मोपभोगायास्यनिर्मापकस्तौकथमपलप्येतेतत्राह ॥ आभासमात्रमिति ॥ इत्थमेवविशेषनिर्मातारमि स्यय ।नहिजलेचंद्राभासोनिर्मातारमपेक्षतेनापितैमिरिककल्पितद्वितीयचंद्रबिंबमसत्त्वादित्यर्थ ॥ ईश्वरस्यनिर्मातृत्वंतुश्रौतनमुख्यम् ॥ पुरुषनि श्वसितदृष्टांतदर्शनात् ॥ जीव स्यनिर्मापयितृत्वमपितथा अबुद्धिपूर्वत्वादनिष्टनिर्मापणायोगाच्चेतिभाव ॥१३॥ देहस्यमिथ्यात्वंतुप्रतीतिकालमात्रस्थितिकत्वात्स्वप्नवदेवसिद्धमित्याह ॥ द्विचंद्रेति।चंद्र द्वित्वद्विचंद्रदर्शनस्यविधौसत्यैवभवतिनान्यदा देहोपिहियस्मात्तथैव वस्तुतस्तुसदैवसेकएवेंदुरित्यन्वय ॥१४॥ उक्तमेवस्पष्टमाह ॥ देहेति ॥ परमार्थसदधिष्ठानकतयाउपचा रात्सत् ॥ १५ ॥ असत सत्त्वभांति कदृष्टांतमाह ॥ स्वप्नइति ॥ मुधामिथ्यैव ॥ बुद्धबुद्धविधौबुद्धप्रतीतिसत्त्वे ॥ इतरद्विधौशुद्धात्मदर्शनसत्वे ॥ अलमृगतृष्णिकोदकम् ॥ १७ ॥

आभासमात्रमेवेदमित्थमेवावभासते ॥ द्विचंद्रविभ्रमाकारसदसच्चव्यवस्थितम् ॥ १३ ॥ द्विचंद्रदर्शनविधौचंद्रद्वित्वसदेवहि ॥ वस्तुत श्चैकएवेंदु स्थितोदेहस्तथैवहि ॥ १४ ॥ देहप्रत्ययकालेहिदेहोयसमवस्थित ॥ असन्नेवचसत्तस्माद्योक्त सदसदात्मक ॥ १५ ॥ स्वप्न स्वप्नावबोध संस्त्वन्यदासमुधैवहि ॥ बुद्धदोबुद्धदविधौसत्योमिथ्यैवचान्यदा ॥ १६ ॥ देहोदेहविधौसत्योत्यसत्यइतरद्विधौ ॥ प्रतिभास विधौतावज्जलसदसदन्यदा ॥ १७ ॥ प्रतिभासविधौदेह सन्नसश्चान्यदास्मृत ॥ आभासमात्रमेवेदमित्यंसप्रतिभासते ॥ १८ ॥ अय नामाहमित्यंतग्रहीतमनंनस्थितम् ॥ मांसास्थिमयनिर्माणदेहोहमितिविभ्रमम् ॥ १९ ॥ त्यजसंकल्पनिर्माणदेहा मतिसहस्रश ॥ सुख तल्पगतोयेनस्वप्नदेहेनदिक्तटान् ॥ २० ॥ परिभ्रमसिहेरामसदेहस्तेक्वसास्थित ॥ जागरायांमनोराज्येयेनस्वर्गपुरांतरम् ॥ २१ ॥ परिभ्र मसिमेरुवासदेहस्तेक्वसास्थित ॥ स्वप्नेष्वपिचय स्वप्नजन्त्रयेनमहीतटान् ॥ २२ ॥ परिभ्रमसिहेरामसदेहस्तेक्वसास्थित ॥ मनोराज्यम नोराज्येमहद्धिसवभूमिपु ॥ २३ ॥ परिभ्रमसियेनेहसदेहस्तेक्वसास्थित ॥ गतैर्देहैर्मनोराज्येयाविचित्राजगत्क्रिया ॥ २४ ॥ प्रकरोपिम हायाहोतेदेहास्तेक्वसस्थिता ॥ विलासिन्यानुरागिण्यायेनसंकल्पकांतया ॥ २५ ॥ निर्वर्तितयामिदेहेनसदेहस्तेक्वसास्थित ॥ एतेरामयथा देहामनस सदसन्मया ॥ २६ ॥

प्रतिभासविधाविति प्रसाधितार्थनिगमनत्वान्नपौनरुक्त्यम ॥ १८ ॥ आभासमात्रतामुपपाद्य स्वत्वाभिमानत्याजयति ॥ अयमिति ॥ आग्रहीतदेहाकारमननमेवसंस्कारदा र्ढ्यात्तुन पुनर्देहाकारेणस्थितम ॥ १९ ॥ त्यजतिपूर्वान्वयि ॥ संकल्पनिर्माणदेहानेवोदाहृत्यतेपामसत्यतांदर्शयति ॥ सुखतल्पगतइत्यादिना ॥ २० ॥ जागरायांजागरे ॥ छां दसमीत्वम ॥ २१ ॥ २२ ॥ मनोराज्यात कल्पितेमनोराज्यांतरमहतीपुविभवभूमिपु ॥ आम्महत समानाधिकरणजातीययोरित्यात्वेकलव्येनवभासश्छांदस ॥ महतामिद्धप्र द्धीनांवाविभवभूमिपु ॥ २३ ॥ गतै कल्पनाविलयमनुविलीनै ॥ २४ ॥ २५ ॥ निर्वर्तितभोगसुखंयासीतियोग्यतयावसमानकालोक्ति ॥ एवमविप्यत्स्वप्नमनोराज्यदेहा अप्युदाहायाः ॥ तेषुमिथ्यात्वसांकल्पिकत्वादनिश्चितत्वाद्वस्तुतस्तदेहेपितपात्वसाधयति ॥ एतेइति ॥ २६ ॥

अहंताध्यासविषयेदेहेदर्शितोन्यायोममताध्यासगोचरेधनादावपिसमइत्याशयेनाह ॥ इदंधनमिति ॥ २७ ॥ यानुदेहादौस्वामादिवैधर्म्यबुद्धि साचिरानुवृत्तिमात्रात्सत्यत्व
त्वासाकल्पिकत्वादिप्रयुक्तेत्याशयेनाह ॥ दीर्घेति ॥ २८ ॥ अतएवास्यतत्त्वज्ञानेनबाध्यत्वमुपपन्नमित्याशयेनाह ॥ प्रबोधमिति ॥ २९ ॥ सम्यक् आत्ममात्रपरिशेषेणद्रक्ष्य
सि ॥ यथाअर्कोदयेप्रबुद्धःस्वाप्नार्थान्पश्यतितद्वत ॥ ३० ॥ काचिदनिर्वचनीयामिथ्यैवेत्यर्थः ॥ उक्तमर्थंब्रह्मोत्पत्तिप्रकरणेविस्तरोक्तंस्मारयति ॥ यथेति ॥ ३१ ॥ ३२ ॥ ऐं

तथैवतादृशाचारोदेहोयंमनसःस्मृतः ॥ इदंधनमयंदेहोदेशोयमितिविभ्रमः ॥ २७॥ तत्सर्वंचित्तवीर्यस्यसंकल्पस्यविजृंभितम् ॥ दीर्घं
स्वप्नमिमंविद्धिदीर्घंवाचित्तविभ्रमम् ॥ २८॥ दीर्घंवापिमनोराज्यंसंसारंरघुनंदन ॥ प्रबोधमेष्यसियदापरमात्मेच्छयात्वया ॥ २९ ॥
द्रक्ष्यसित्वंतदासम्यगिदमर्कोदयेयथा ॥ स्वप्नसंकल्पजालेनयथान्यैवजगत्स्थितिः ॥ ३० ॥ तथैवेयंहिसंकल्पकलनाकाचिदेवहि ॥ यथा
पूर्वंमयोत्पत्तिःप्रोक्ताकमलजन्मनः ॥ ३१ ॥ मनसःस्वयमेवांतःसंकल्पकलनोद्भवा ॥ विचित्ररचनोपेतंमनस्त्वचात्तविभ्रमम् ॥ ३२ ॥
संकल्पकलनामात्रंतथेदमवभासनम् ॥ यथाकल्पितआभासोमनसोत्रजनांगनः ॥ ३३ ॥ देहादिचिंतितोदेहःस्थितोन्यस्तद्देवहि ॥
प्राक्प्रवाहचिराभ्यस्तोवासनातिशयेनचः ॥ ३४ ॥ तथैवदृश्यतेदेहस्तथाकल्पुदयेनसः ॥ पौरुषेणप्रयत्नेनसंकल्पात्वयमेवचित् ॥ ३५ ॥
अन्यथाभाव्यतेरामभूयतेतदिहान्यथा ॥ अयंसोहंममायंचसंसारइतिभाविते ॥ ३६ ॥ सत्योयोभाव्यतेरामभावनादार्ढ्यसंभवः ॥
भावितंतीव्रवेगेनयदेवाशुतदेवहि ॥ ३७ ॥ सर्वंचदृश्यतेरामकांतेवात्यंतवल्लभा ॥ अहत्यांयत्तिरश्चत्वाचथान्येनदृश्यते ॥ ३८ ॥ तथा
यंभावनाभ्यस्तःसंसारोप्यवलोक्यते ॥ यथास्वभावनोक्षिप्रमहर्यदवभासते ॥ ३९ ॥ नथेदमल्पकालस्थमपिसंलक्ष्यतेस्थिरम् ॥ व्योम
न्येवयथानापतमेसंदृश्यतेसरित् ॥ ४० ॥ धराप्यविद्यमानापिसंकल्पाद्दृश्यतेतथा ॥ दृश्यतेदृष्टिवैरूप्याद्यथाव्योमनिपिच्छिका ॥ ४१ ॥
तथैवेयजगल्लक्ष्मीर्दुर्ज्ञानादवभासते ॥ दृश्यतेसमयादृष्ट्यानचवाव्योम्निपिच्छिका ॥ ४२ ॥

दर्शोपाख्यानोक्तमपिस्मर्तव्यमित्याह ॥ यथाकल्पितइति ॥ ३३ ॥ पूर्वदेहादुत्क्रांतिकालेविचिंतितोयोदेहः ॥ ३४ ॥ तथाकल्प्युदयेनतादृगसंस्थानसंपन्था ॥ पौरुषेणप्रयत्ने
नमन प्रत्यगुर्वीकृत्यस्वात्मदर्शनेअयंदेहजगदाकार.सकल्पश्चिदेवेत्यन्वय. ॥ ३५ ॥ अन्यथाभाव्यतेयदीतिशेष. ॥ तर्हिअन्यथाभूयते ॥ इतिभावितेतथैवानुभूयतइति
शेष ॥ ३६ ॥ तदेवहिदृश्यतइतिपरेणान्वय ॥ ३७ ॥ अहल्यायत्तिर्यातिर्यथाभ्यस्ता ॥ ३८ ॥ क्षिप्रंशीघ्रमभ्यासोक्षणादिःअहोरात्रगदादिकार्दोवभासते ॥ ३९ ॥ स्थि
रराश्वतम ॥ व्योमनिमरुभूम्याकाशे ॥ सरिन्मृगतृष्णानदी ॥ ४० ॥ धराप्रअपिशब्दादनरिक्षत्रिलोकोच ॥ पिच्छिकावर्हमुष्टिः ॥ ४१ ॥ दुर्ज्ञानादभ्रमात ॥ ४२ ॥

भीरुरपिस्वसकस्येपुसमनोराज्यकल्पितइत्लिप्यामादिपु ॥ सभमभयम् ॥ ४३ ॥ स्वभाव आत्मा ॥ सप्रतिबहिमुखवशायाम ॥ ४४ ॥ यद्विभेतितदपिभर्मार्किनार्किंचित्स्वा
त्म्यतिरिक्तमस्तीत्यर्थ ॥ य विभेतिसएवर्किंचिच्छोध्योविवेचनीय ॥ ४५ ॥ अयभयाविलक्षणामोह अद्वयशुद्धात्ममिनदृश्यते ॥ तथाचस्मृति ॥ यस्मत्स्यमास्तिकस्मा
न्नुबिभेमीति ॥ ततएवास्यभयंवीयाय कस्माद्ध्यभेष्यत् द्वितीयाद्वैभयंभवतीति ॥ केनतर्ह्युपायेनास्माशुद्धस्यातितमाह ॥ सम्यगिति ॥ स्वभावआत्मा ॥ ४६ ॥ पुनरशुद्धिभामि
शंकांवारयति ॥ नेति ॥ स्वभावत काचनमास्यातापतयायद्वीर्ततापाविनास्वरूपाभिव्यक्तौपुनस्तापत्वमिवेत्यर्थः॥कुतोस्यवर्तनमायाच्छुद्धिरितिचेदृश्यमलस्याभासमात्रत्वा
दित्याह ॥ आभासमात्रमेवेति ॥ ४७ ॥ इतिअस्माज्जतो सम्यगालोकममेवान्यकलनायास्त्यागोनिवृत्तिरितिविदुरितिपूर्वेणान्वय ॥ सम्यगीक्षणंतर्हिकीदृशंतत्राह ॥ मरण

सम्यग्दृष्ट्याजगल्लक्ष्मीस्त्रयेयंनावभासते॥ भीरुरभ्येतिनयथास्वसंकल्पेपुसंभ्रमम्॥ ४३॥ स्वसंकल्पेहिमसारेनतयैतिभयंसुधी ॥ स्व
एवहिस्वभावोयमित्यसन्प्रतिभासते ॥ ४४॥ संसारसरणिस्थित्यांकस्मात्कोन्नबिभेतिकिम्॥ सएवर्किंचित्संशोध्यःशुद्ध्याविमलताग
ते॥ ४५॥ तस्मिन्नद्वयतेरामोहोयंजगत स्थित ॥ सम्यगालोकमात्रेणस्वभावःशुद्धिमृच्छति॥ ४६॥ नगृह्णातिमलभूयस्त्यक्ताभि
वर्कांचनम्॥ आभासमात्रमेवेदनसन्नासज्जगन्मयम्॥ ४७॥ इत्यन्यकलनात्याग सम्यगालोकनंविदु ॥ मरणजीवितंस्वर्गोज्ञानम
ज्ञानमेवच ॥ ४८॥ चिदाभासादृतेनास्तीत्येकतासम्यगीक्षणम् ॥ त्वमहंतादिसंसारइतिमेनदिशोदश॥ ४९॥ सर्वस्वाभासमेवेतिस
म्यगालोकनंविदु ॥ सदसन्मयसंसारेयथाभूतार्थदर्शनात्॥ ५०॥ नात्ममेतिनषोढेतिसम्यगालोकनान्मन ॥ निर्णीयसर्वभावानाम
सत्त्वसत्त्वमेवच॥ ५१॥ निष्कामंशांतिमभ्येतिसम्यगालोकनान्मन ॥ननिंदतिनयस्तौतिनहृष्यतिनशोचति॥ ५२॥ शीतलांसत्यता
मेतिसम्यगालोकनान्मन ॥ अवश्यमेवमर्तव्यंसर्वैरेवहियधुभि ॥ ५३॥ इतिबंधुवियोगेपुर्किंत्वयापरितप्यसे॥ अवश्यमेवचमयाम
र्तव्यमितिनिश्चय॥ ५४॥ इत्यात्ममरणप्राप्तौर्किंमुधापरितप्यसे॥ अवश्यमेवजातेनर्किंचित्सुविभवादिकम्॥ ५५॥

मित्यादिना ॥ ४८ ॥ चिदाभासाच्चित्प्रकाशादृतेविनापृथङ्नास्तीत्येकताबिम्बाभपरिशेष फलत सम्यगीक्षणमित्यर्थ ॥ त्वमास्त्वातिरिक्तचेतनता ॥ अहंतास्वदेहमात्रपरि
च्छिन्नचेतनता ॥ आदिपदात्स्वताहंताभिमानविषयआध्यात्मिक कार्यकारणकलाप संसारयत्यात्मानंलोकांतरेपुविषयेपुच भ्रमयतीतिससारोविषयकलापस्तदाधारावशावि
शश्चेतिसर्वंदृश्यजातमेमत्सबधिन पृथङ्नसतिर्किंनुस्वाभासस्वप्रकाशात्मस्वरूपमेवास्तीत्यन्वय ॥ ४९ ॥ सम्यगालोकनफलमाह ॥ सदसन्मयेति ॥ सद्ब्रह्मअसतीमायात
दुभयोपादानके ॥ ५० ॥ असत्त्वंबाधम् ॥ सत्त्वमधिष्ठानसन्मात्रपरिशेषम् ॥ ५१ ॥ निष्कामआप्तकामत्वादकामम् ॥ ५२॥ शीतलामपगततापमयाम् ॥ स्वस्यमुक्तावपि
बंधुजनानांबंधानिवृत्तेस्तर्वायमरणादिदर्शनजसतापोदुर्वारस्तत्राह ॥ अवश्यमेवेत्यादिना ॥ ५३ ॥ अज्ञानदशायांस्वमरणाशंकातापोप्यनेनोपायेनपरिहर्तुंशक्यइत्याशये
नाह ॥ अवश्यमेवेति ॥ ५४ ॥ ५५ ॥

॥ ५६ ॥ आपत्दारिन्द्यदुर्दशाया ॥ अर्थादेवआयाताभवत्वेव ॥ बृहतिवर्धते ॥ ५७ ॥ असदपिसदेवअसदेवनकदाचित्सत्वमापन्नमितिमायाविक्रियावैचित्र्यमात्रात्मकेप्र
पंचेकिमन्यदस्तियत्परिदेव्यतेइत्यर्थः ॥ ५८ ॥ अहंअहंकारात्मानास्मि ॥५८॥ चित्रात्कामकर्मवासनाविद्यादोषादुत्थ. ॥ चिदाभासश्चित्प्रकाशः ॥अंगेतिकोमलामंत्रणे ॥
॥ ६० ॥ येनिष्टेउदर्कफलेनिमित्तभूतेयस्मिन्परितापेइतिक्रियाविशेषणम् ॥ ६१ ॥ अनुत्तमपदेस्थितोब्रह्मवित्सर्वभावेषुनाशाताबाधपरिशिष्टांपरतांब्रह्मतामेवआदत्तेस्वीक
रोतिनप्रतीतिकालिकींखरताम् ॥ यथातित्तिरीनीडनिर्माणायतृणानांमूलतःखरभागान्परित्यज्यमृद्वींतृणकोटिमेवादत्तेतद्वदित्यर्थः ॥६२॥ एतदर्थंससारस्यखरभागपरिहारार्थं

प्राप्तव्यंपुरुषेणेतिहर्षस्यावसरोहिकः ॥ सर्वस्यैवहिसंसारेनरस्यव्यवहारिणः ॥ ५६ ॥ अर्थायाताभवत्यापच्छोकस्यावसरोहिकः ॥ बृंह
त्युदेतिस्फुरतिबुद्बुदौघइवार्णवे ॥ ५७ ॥ इदंहिजगतांजालंकिमत्रपरिदेवना ॥ सत्सदेवसदैवैतदसदेवासदेवहि ॥ ५८ ॥ क्रियावैचित्र्य
मात्रेतुकिमन्यत्परिदेव्यते ॥ नाहमस्मिनचाभूवंभविष्यामिनसोधुना ॥ ५९ ॥ देहोयंचित्रदोषोत्थःकिमन्यत्परिदेव्यते ॥ देहाच्चेदन्यएवा
हंचिदाभासस्तदंगहे ॥ ६० ॥ कौतौमेसदसद्भावौयन्निष्टंपरितप्यते ॥ इतिनिश्चयवत्स्वांतंसम्यग्ज्ञानात्मनोमुनेः ॥ ६१ ॥ नास्तमेतिनचो
देतिनशांतंपरितप्यते ॥ परतामेवनाशांतामनुत्तमपदेस्थितः ॥ ६२ ॥ आदत्तेतित्तिरीमृद्वींतृणकोटिमिवामलाम् ॥ एतदर्थमसत्येस्मि
न्नास्थाकार्यामनागपि ॥ ६३ ॥ सुरज्जवेवबलीवर्दोबध्यतेजंतुरास्थया ॥ अतस्त्वयादृढमिदमितिनिर्णीयबुद्धितः ॥ ६४ ॥ आस्थारहित
याबुद्ध्याविहर्तव्यमिहानघ ॥ कर्त्तव्यमेवकर्त्तव्यमकर्त्तव्यमुपेक्ष्यते ॥ ६५ ॥ आस्थानास्थेपरित्यज्यलीलयैवमहाधिया ॥ आभासमात्र
मेवेदयस्यचप्रतिभासते ॥ ६६ ॥ सोंऽतःशीतलतामेतिदिनांतेभुवनंयथा ॥ प्रतिभासंपरित्यज्यपदार्थपटलव्रजे ॥ ६७ ॥ आभासमात्र
सामान्यमिदमालोकयानघ ॥ आभासमात्रकंरामचित्तामर्शकलंकितम् ॥ ६८ ॥ ततस्तदपिसंत्यज्यनिराभासोभवोत्तम ॥ चिदाका
शमयोनित्यंसर्वगःसर्ववर्जितः ॥ ६९ ॥ आभासस्यपरित्यागेभवस्येकांतनिर्मलः ॥ नाहमस्मिनमेभोगाःसत्याइत्यभिभाविते ॥ ७० ॥
नेदमाडंबरंव्यर्थमनर्थायावभासते ॥ अहमेवहिवासर्वंचिदित्येवंविभाविते ॥ ७१ ॥ नेदमाडंबरंव्यर्थमनर्थायावभासते ॥ दर्शनद्वयम
प्येतत्सत्यमत्यंतसिद्धिदम् ॥ ७२ ॥

म ॥६३॥ इदमपभूतब्रह्मइतिउक्तयुक्त्यानिर्णीय ॥६४॥ तर्हिकिमास्थापरित्यज्ययथेष्टाचरणकर्त्तव्यंनेत्याह ॥ कर्त्तव्यमेवेति ॥ विहितमेवेत्यर्थः ॥ ६५ ॥ लीलयाअश्रमेण
॥६६॥ दिनांतेसौरतापोपरमे ॥ सर्वानुगतसन्मात्रदर्शनेउपायमाह ॥ प्रतिभासमिति ॥ विशेषाकारमित्यर्थः ॥ पदार्थानांपंचभूतानांपटलंसमूहस्तदात्मकेघटपटादिविषयव्रजे
॥६७॥ चित्तस्यआमर्शेनविशेषकल्पनेनकलंकितमभूदितिशेषः ॥६८॥ तत्सन्मात्ररूपमाभासमपिसत्यज्यस्वात्मव्यतिरेकबुद्ध्यात्यक्त्वानिराभासस्त्रिपुटीशून्य.सर्वगःपूर्ण.॥६९॥
निराभासतासिद्ध्युपायभूतंचिंतनद्वयमाह ॥ नाहमित्यादिना ॥ अभितोभाविते।चिंतितेसति ॥ ७० ॥ चितिसर्वबाधचिंतनंसर्वस्यचिदात्मभावचिंतनंवेतिद्वेचिंतने ॥७१॥७२॥

चिदाभासंचित्प्रकाशम् ॥ १० ॥ ११ ॥ मयामेघस्थानीयेन ॥ सुशब्दपदंश्लेषाद्गर्जनमप्याह ॥ १२ ॥ अत्रैवप्रकृष्टोबोधोयस्यतथाविधः सन्सत्यस्वतत्त्वमालोकय ॥ १३ ॥ ॥ १४ ॥ उपसहरति ॥ परिगलितेति ॥ सुसारसुषुप्तमिवसौम्यानिर्विक्षेपादृष्टिर्यस्यतथाविधस्त्वदनित्यापरोक्षमतिविततब्रह्मैवासिअत सुशुद्धयेसमुपशमात्मनितस्मिन्नेवसमाहितस्तिष्ठेत्यर्थः ॥ १५ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू० अष्टाविंश.सर्ग. ॥ २८ ॥ ॥ ७ ॥ ॥ रामस्यत्रोधाद्विश्रांतिःपुनरुक्तार्थविस्तरः ॥ कैलासेप्राकूशिवेनेत्थस्वोपदेशश्चकीर्त्यते ॥ १ ॥ इत्थसानुमहश्रीवसिष्ठेनोपदेशचमत्कारे प्रतिबोधितस्यश्रीरामस्यअन्येषांचश्रोतॄणांतत्त्वसाक्षात्कारोदयेनमुहूर्तार्धंस्वरू

प्रबोधमेहिपश्यस्वमात्मानमुदितंसदा॥ निर्विकल्पंचिदाभासंप्रातःपद्मंरविंयथा ॥ १० ॥ प्रबुद्ध्यस्वप्रबुद्ध्यस्वपुनःपुनरयंमया॥ प्रबोद्ध्यसेमहाबाहोपश्यात्मार्कमनामयम्॥११॥ मयैतेनाभिवृष्टेनशीतेनज्ञानवारिणा॥ सुशब्दशालिनारामत्वंननैवासिबोधितः॥१२॥ बोधमासादयपरंप्रबोधोद्यैवराघव॥ सत्यमालोकयालीकंत्यक्त्वेमंजागतंभ्रमम् ॥ १३ ॥ नतजन्मनतेदुःखंनदोषास्तेनतेभ्रमाः॥ सर्वसंकल्पमुत्सृज्यतिष्ठात्मनिसुसंस्थितः॥१४॥ परिगलितविकल्पदोषजालस्त्वमसिसुसारसुषुप्तसौम्यदृष्टिः॥ अतिविततमिदंसुशुद्धयेत्वंसमुपशमात्मनितिष्ठहेमहात्मन्॥१५॥ ॥इत्यार्षेवा० वा० दे० मो० नि० पू० परमार्थयोगोपदेशोनामाष्टाविंशतितमःसर्गः॥ २८॥

श्रीवाल्मीकिरुवाच॥ ॥इत्याकर्णयतिस्वस्थसमचेतसिराघवे॥ विश्रांतेस्वात्मनिस्वैरंपरमानंदमागते॥ १॥ तत्रस्थेषुचसर्वेषुतेषूपशमशालिषु॥ राघवस्यात्मविश्रांतेःस्थित्यर्थंवचनामृतम् ॥ २॥ विरराममुनेर्वारिसस्येष्वंबुधरादिव॥ अथयातेमुहूर्तार्धेराघवेप्रतिबोधिते॥ ३॥ पुनराहतमेवार्थंवसिष्ठोवदतांवरः॥ ॥श्रीवसिष्ठउवाच॥ ॥रामसम्यक्प्रबुद्धोसिस्वात्मानमसिलब्धवान्॥ ४॥ एवमेवावलंब्यार्थंतिष्ठनेहपदंकुरु॥ इदंसंसारचक्रंहिनाभौसंकल्पमात्रके॥५॥ संरोधितायांवहनाद्रघुनंदनरुध्यते॥ क्षोभितायांमनोनाभ्यामिदंसंसारचक्रकम् ॥६॥ प्रयत्नाद्रोधितमपिप्रवहत्येववेगतः॥ परंपौरुषमास्थायबलंप्रज्ञांचयुक्तितः॥ ७॥ नाभिंसंसारचक्रस्यचित्तमेवनिरोधयेत्॥ प्रज्ञासौजन्ययुक्तेनशास्त्रसंवलितेनच॥८॥ पौरुषेणनयत्प्राप्तंनतत्क्वचनलभ्यते॥ दैवैकपरतांत्यक्त्वाबालबोधोपकल्पिताम् ॥ ९॥ निजंप्रयत्नमाश्रित्यचित्तमादौनिरोधयेत् ॥ आविरिंचात्प्रवृत्तेनभ्रमेणाज्ञानरूपिणा॥ १० ॥

पविश्रांतिसमाधिनानिष्कंपस्थितिःश्रीवाल्मीकिरुवाच ॥ इत्याकर्णयतीत्यादिसार्धेन॥१॥तत्रस्थेषुत्वात्मनिविश्रांतेष्विति विभक्तिविपरिणामेनयोज्यम ॥ मुनेर्वचनामृतंविरराम इतिपरेणान्वयः ॥ २ ॥ यथावृष्टिर्तर्पितेषुसस्येषुअंबुधराद्वारिविरमतितद्वद्बोधितेसमाधेर्व्युत्थापितेअर्थाद्वसिष्ठेनैवेतिगम्यते ॥ ३ ॥ पुनस्तमेवार्थंदृढीकारायाहेत्यर्थ. ॥ ४ ॥ अर्थंपरमार्थमात्मतत्त्वम ॥ इहमसारेपदस्थितिमाकुरु ॥ तत्रोपायमाह ॥ इदमिति ॥ ५ ॥ क्षोभितायांरागद्वेषादिनाविक्षेपप्रापितायाम् ॥ ६ ॥ पौरुषअभ्यासवैराग्यदार्ढ्यलक्षणम् ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

एच्छिकममप्येप्यनयोर्नविरोधः फलतऐकद्व्यादित्याशयेनाह ॥ द्वाभ्यामिति ॥ ७२ ॥ रागादिक्षयप्रयत्नयोर्विषमद्वयसफलनाम्यस्मिन्नित्याह ॥ कुर्वित्यादिना ॥ रागा
विक्षयमवमधानफलं स्तौति ॥ यत्किंचिदिति॥७४॥७५ ॥ ७६ ॥ परस्मिंनिति ॥ ७७ ॥ किंनामसु खफलमितिशेषः ॥ शास्त्रशालिनोपिमूर्खेतिशेषः ॥ ७८ ॥ तेमना ॥ ते
अरण्यप्रसिद्धाजगुका ॥ एवार्थेवैराग्यं ॥ रागद्वेषकमप्यमूलमाह॥ मद्धनमिति॥ अन्यत अन्यस्मात्तस्यपाप्तधनममाद्यस्यकम् ॥ ७९॥ इतिव्रत्यलब्धनष्टधनादिविषयेअ
भिनिवेशात्तद्द्वयार्थंधवधनादिसव्यवहारेहालक्षणारागद्वेषयोःक्रमा केनुच्छाइत्यय ॥ कुलसुच्छासमाह ॥धनानीत्यादिना ॥८०॥ प्रियविषयभावेभक्षप्रियाभावेनपनंवर

यदेकमेतयोर्नेत्सिरम्यतग्रामसश्रय ॥ द्वाभ्यामेवायवैताभ्यांदर्शनाभ्यामिहानघ ॥ ७३ ॥ विहरन्कुरुकल्याणरागद्वेषपरिक्षयम् ॥ य
त्किंचिदुदितलोकेयन्नश्यत्यवादिवि ॥ ७४॥ तत्सर्वंप्राप्यतेरामरागद्वेषपरिक्षयात् ॥ रागादिहतयाबुद्ध्यायद्यत्रामविचेष्टितम् ॥ ७५॥
तत्तदेवप्रयात्याशुमूढानांविपरीतताम् ॥ द्वेषदोषोर्मिरुद्धासुनगुणाश्चित्तवृत्तिषु ॥ ७६ ॥ पदकुर्वंतिदग्धासुस्थलीपुहरिणाइव ॥ रागोद्वे
षश्वसर्पौद्वौनविलीनौमनोबिले॥ ७७॥ यस्यकल्पतरोस्तस्मात्किंनामांगनलभ्यते॥ येहिप्रोज्ञा स्वनियताविदग्धाःशास्त्रशालिन ॥७८॥
रागद्वेषमयास्तेवैजम्बुकास्तेधिगस्तुतान् ॥ मद्धनभुक्तमन्येनधनत्यक्तमयान्यत ॥ ७९ ॥ इतिसव्यवहारेहा केरागद्वेषयो क्रमा ॥ धना
नियथवोमित्रपुनरायांतियांतिच ॥ ८० ॥ किमेतपुनर प्राज्ञोरज्यतेवाविरज्यते॥ भावाभावभवाभोगा माययेपारमेश्वरी ॥ ८१ ॥ स
साररचनामत्तांमसक्तपातयत्यलम् ॥ नधननजनानात्मासत्यराघववस्तुत ॥ ८२ ॥ मिथ्यैवमिथ्यावसितमितीढपरिलक्ष्यते ॥ आद्य
तयो सवममन्मध्येप्यस्थिरमाधिमत् ॥ ८३ ॥ कथभ्रातिरतिंप्राज्ञोत्यन्यकल्पितखद्रुमे ॥ एकेनकल्पिताखश्रीमुक्तेनादूरगोपर ॥ ८४ ॥
इतीयमगमसाररचनातेनमाश्रम ॥ भूताजवंजवीभावमिममाततमाकुलम् ॥ ८५ ॥ गधर्वपुरनिर्माणविलासेनसमविद्धं ॥ स्वप्न
सकल्पपुरवदसदवेदमुत्थितम् ॥ ८६ ॥ सर्वत्रसस्यमेवेदसुपुप्तमिवविच्युतम् ॥ परिपश्यसिससारदीर्घस्वप्नपुरद्रुमम् ॥ ८७ ॥ अज्ञान
निद्रालुठनस्वभावात्मकमच्युतम् ॥ ससारस्वप्नसभ्रांतोभवानयमिहस्थित ॥८८॥ तदेनांविततानिद्राघनाज्ञानमयात्मिकाम् ॥ त्यजा
लक्ष्मीमिवावामनिधान पुरुषोत्तम ॥८९॥

स्याभोगायम्याम् ॥ ८१ ॥ ससत्तलपटम् ॥८२ ॥ इतिवक्ष्यमाणयुक्त्यामिथ्येत्यवसितमिथ्यैवपरिलक्ष्यते ॥ तांयुक्तिमाह ॥ आद्यतयोरिति ॥आद्यतयो पूर्वोत्तरकालयो ॥
अस्थिरमुत्तरोत्तरभावविकारपत्तम् ॥ ८३ ॥ तुच्छेसंसारइतिवधयोम्यत्वेदृष्टांतमाह ॥ अन्येत्यादिना ॥ ८४ ॥ ८५ ॥ विधु मात्रा ॥ ८६ ॥ कल्पनाया सवमसभवादधिष्ठा
नचित्सद्भावाद्यमवयसस्थम ॥ विच्युतस्वभाविभावापन्नंसुपुप्तमिव ॥८७॥ अच्युतमअस्मानुस्यूतम पूर्वान्वयि ॥ भवानगुणभावास्वपनोनिद्रास्पजेस्पृस्तरान्वयि ॥ ८८ ॥ ८९ ॥

१ प्राज्ञादिनियतादनिकोर्विनपाठ

चिदाभासंचित्प्रकाशम् ॥ १० ॥ ११ ॥ मयामेघस्थानीयेन ॥ सुशब्दपदंश्लेषाद्गर्जनमप्याह ॥ १२ ॥ अत्रैवप्रकृष्टोबोधोयस्यतथाविधःसन्सत्यंस्वतत्त्वमालोकय ॥ १३ ॥ ॥ १४ ॥ उपसहरति ॥ परिगलितेति ॥ सुसारसुपुम्नमिवसौम्यानिर्विक्षेपादृष्टिर्यस्यतथाविधस्त्वइदंनित्यापरोक्षमतिविततब्रह्मैवासिअतःसुशुद्धयेसमुपशमात्मनितस्मिन्नेवसमाहितस्तिष्ठेत्यर्थ ॥ १५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू०अष्टाविंशःसर्ग. ॥ २८ ॥ ॥ ७ ॥ ॥ रामस्यत्रोधाद्विश्रांति.पुनरुक्तार्थविस्तर ॥ कैलासेशाकूशिवेनेत्थस्वोपदेशश्चकीर्त्यते ॥ १ ॥ इत्थसानुमहश्रीवसिष्ठेनोपदेशचमत्कारै प्रतिबोधितस्यश्रीरामस्यअन्येषांचश्रोतॄणातत्त्वसाक्षात्कारोदयेनमुहूर्तार्धस्वरू

प्रबोधमेहिपश्यस्वमात्मानमुदितंसदा ॥ निर्विकल्पंचिदाभासंप्रातःपद्मंरविंयथा ॥ १० ॥ प्रबुद्ध्यस्वप्रबुद्ध्यस्वपुनःपुनरयंमया ॥ प्रबोद्ध्यसेमहाबाहोपश्यात्मार्कमनामयम् ॥ ११ ॥ मयैतेनाभिवृष्टेनशीतेनज्ञानवारिणा ॥ सुशब्दशालिनारामत्वमनेनैवासिबोधितः ॥ १२ ॥ बोधमासाद्यपरंप्रबोधोद्यैवराघव ॥ सत्यमालोकयालीकंत्यक्त्वेमंजागतंभ्रमम् ॥ १३ ॥ नतेजन्मनतेदुःखंनदोषास्तेनतेभ्रमाः ॥ सर्वसंकल्पमुत्सृज्यतिष्ठात्मनिसुसंस्थितः ॥ १४ ॥ परिगलितविकल्पदोषजालस्त्वमसिसुसारसुपुम्नसौम्यदृष्टिः ॥ अतिविततमिदंसुशुद्धयेत्वंसमुपशमात्मनितिष्ठहेमहात्मन् ॥ १५ ॥ ॥ इत्यार्षेवा० वा० दे० मो० नि० पू० परमार्थयोगोपदेशोनामाष्टाविंशतितमःसर्गः ॥ २८ ॥

श्रीवाल्मीकिरुवाच ॥ ॥ इत्याकर्णयतिस्वस्थसमचेतसिराघवे ॥ विश्रांतेस्वात्मनिस्वैरंपरमानंदमागते ॥ १ ॥ तत्रस्थेषुचसर्वेषुतेषूपशमशालिषु ॥ राघवस्यात्मविश्रांतेःस्थित्यर्थंवचनामृतम् ॥ २ ॥ विरराममुनेर्वारिसस्येष्वंबुधरादिव ॥ अथयातेमुहूर्तार्धेराघवेप्रतिबोधिते ॥ ३ ॥ पुनराहतमेवार्थंवसिष्ठोवदतांवरः ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ रामसम्यक्प्रबुद्धोसिस्वात्मानमसिलब्धवान् ॥ ४ ॥ एवमेवावलंब्यार्थंतिष्ठनेहपदंकुथाः ॥ इदंसंसारचक्रंहिनाभौसंकल्पमात्रके ॥ ५ ॥ संरोधितायांवहनाद्रघुनंदनरुध्यते ॥ क्षोभितायांमनोनाभ्यामिदंसंसारचक्रकम् ॥ ६ ॥ प्रयत्नाद्रोधितमपिप्रवहत्येववेगतः ॥ परंपौरुषमास्थायबलंप्रज्ञांचयुक्तितः ॥ ७ ॥ नाभिंसंसारचक्रस्यचित्तमेवनिरोधयेत् ॥ प्रज्ञासौजन्ययुक्तेनशास्त्रसंवलितेनच ॥ ८ ॥ पौरुषेणनयत्प्राप्तंनतत्क्वचनलभ्यते ॥ दैवैकपरतांत्यक्त्वाबालबोधोपकल्पिताम् ॥ ९ ॥ निजंप्रयत्नमाश्रित्यचित्तमादौनिरोधयेत् ॥ आविरिंचात्प्रवृत्तेनभ्रमेणाज्ञानरूपिणा ॥ १० ॥

पविश्रांतिसमाधिनानिष्कपस्थितिश्रीवाल्मीकिरुवाच ॥ इत्याकर्णयतीत्यादिसार्धेन ॥ १ ॥ तत्रस्थेषुस्वात्मनिविश्रांतेष्वितिविभक्तिविपरिणामेनयोज्यम ॥ मुनेर्वचनामृतविररामेतिपरेणान्वयः ॥ २ ॥ यथावृष्टितर्पितेषुसस्येषुअंबुधराद्वारिविरमतितद्वद्बोधितेसमाधेर्व्युत्थापितेअर्थाद्वसिष्ठेनैवेतिगम्यते ॥ ३ ॥ पुनस्तमेवार्थंदृढीकारायाहेत्यर्थः ॥ ४ ॥ अर्थंपरमार्थमात्मतत्त्वम् ॥ इहससारेपदस्थितिमाकुथाः ॥ तत्रोपायमाह ॥ इदमिति ॥ ५ ॥ क्षोभितायारागद्वेषादिनाविक्षेपप्रापितायाम् ॥ ६ ॥ पौरुषअभ्यासवैराग्यदार्ढ्यलक्षणम् ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

॥ २९ ॥ तत्रस्थेनमिथ्याज्ञानचक्रस्थेनजीवेन ॥ ३० ॥ देहचक्रकंदेहपरपराचक्रम् ॥ ३१ ॥ प्रतीतितःसन्नपिपरमार्थत असन् ॥ असत्येनाज्ञानादिनाकृतयस्माद्धेतोः ॥ ३२ ॥ ३३ ॥ तत्कृतनैवोच्यतेयदेतिशेष. ॥ चेतनवज्जडेअपराधारोपादर्शनादित्यर्थ ॥ ३४ ॥ इच्छातोहिकर्तृत्वस्यात्सातुनजडेदेहेनिर्विकारेआत्मनिवासभवतीत्याह ॥ निरीहइति ॥ ३५ ॥ अकर्त्रात्मनिश्चयफलमाह ॥ यथेति ॥ ३६ ॥ तर्हिकथराज्यसस्थितिसिद्धिस्तत्राह ॥ यथेति ॥ ३७ ॥ देहसत्यतादर्शनेतुतदभिमानलक्षणाहकारस्या

यथापश्यतिदिक्चक्रंभ्रमदत्यंतमोहितः॥ अकस्मादेवरूढेनमिथ्याज्ञानेनवल्गता॥ २९ ॥ तत्रस्थेनतथैवेदंदृश्यतेदेहचक्रकम्॥ भ्रमितं चभ्रमद्रूपंपतद्रूपंप्रपातितम् ॥ ३० ॥ हतंचहन्यमानंचदृश्यतेदेहचक्रकम्॥ धीरतामलमालंब्यघनभ्रममिमंत्यजेत्॥३१ ॥ संकल्पेन कृतोदेहोमिथ्याज्ञानेनसन्नसन्॥ असत्येनकृतंयस्मान्नतत्सत्यंकदाचन॥ ३२ ॥ असदभ्युत्थितोदेहोरज्ज्वामिवभुजंगधीः॥ असत्या मेवसत्यांचकरोत्यपिजगत्क्रियाम्॥ ३३ ॥ जडेनरामक्रियतेयन्नतत्कृतमुच्यते॥ कुर्वन्नपितदादेहोनकर्ताक्वचिदेवहि॥ ३४ ॥ निरीहो हिजडोदेहोनात्मनोस्याभिवांछितम्॥ कर्त्तानकश्चिदेवातोद्रष्टाकेवलमस्यसः॥ ३५॥ यथादीपोनिवातस्थःस्वात्मन्येवावतिष्ठते॥ सा क्षिवत्सर्वभावेपुतथातिष्ठेज्जगत्स्थितौ॥ ३६॥ यथादिवसकर्माणिभास्करःखस्थएवसन्॥ करोत्येवमिमांरामकुरुपार्थिवसंस्थितिम् ॥ ३७॥ अस्मिन्नसन्मयेदेहगृहेशून्येसमुत्थिते॥ सत्तामुपगतेमिथ्याबालकल्पितयक्षवत्॥ ३८ ॥ कुतोप्यागत्यनिःसारःसर्वसज्जनव र्जितः॥ अहंकारःकुवेतालःप्रविष्टश्चित्तनामकः ॥ ३९॥ अस्यमाभृत्यतांगच्छत्वमहंकारदुर्मतेः ॥ अस्यभृत्यतयाराममनिरयःप्राप्यते फलम्॥ ४० ॥ स्वसंकल्पविलासेनदेहगेहेदुराकृतिः॥ उन्मत्तचित्तवेतालःपरिवल्गतिलीलया ॥ ४१ ॥ शून्यंदेहगृहंप्राप्यचित्तयक्षेण तत्कृतम्॥ भीतायेनमहांतोपिसमाधिनियताःस्थिताः॥ ४२॥ चित्तवेतालमुद्वास्यस्वशरीरकमंदिरात्॥ संसारशून्यनगरेनबिभेतिक दाचन॥ ४३॥ चित्तभूताभिभूतेस्मिन्येशरीरगृहेरताः॥ चित्रमद्यापितेकस्माद्घटिताआत्मवत्स्थिताः ॥ ४४ ॥ ग्रस्तेचित्तपिशाचेनदेह सद्मनियेमृताः॥ पिशाचस्येवयाबुद्धिर्नापिशाचस्यराघव॥ ४५॥

वर्जनात्तद्भृत्यतास्यादेवेत्याह ॥ अस्मिन्नित्यादिना ॥ ३८ ॥ प्रविष्टःस्यादितिशेष ॥ ३९ ॥४० ॥ सत्यहकारेअनर्थातरमप्याह॥ स्वसकल्पेत्यादिना ॥४१ ॥ ४२ ॥ ४३ ॥ देहगृहेरताआसक्तास्तेअनतकोटिदेहेपुनष्टेपुअद्यापिदेहेनआत्मवत्तादात्म्येनघटिताःकस्मात्स्थिताः ॥ सदैवतद्घटनदुःखेअनुभूयमानेपितद्विघटनेयत्ननकुर्वंतितच्चित्रमित्यर्थ ॥ ४४ ॥ येमृतास्तेषामितिशेष. ॥ ४५ ॥

१ स्वच्छइत्यपिपाठ.

ईदृशतापभयप्रदेदग्धेशरीरकेआस्थयाविहरन्नापुरुष पिशाचएवेतिविभक्तिविपरिणामेनानुषज्यते ॥ तथास्थाकुतोनयुक्तातमाह ॥ नात्विति ॥ ४६ ॥ नयममहंकारस्यानु
मरतांमृत्पतात्यक्त्वाततोयोगभूमिकाभ्यासावहंकारस्यअस्मृतिआत्यंतिकविस्मृतिंशाप्य ॥ ४७ ॥ नमित्राणीति ॥ अहंकारिणाविनयवीर्लभ्यादौद्धस्यासस्यभावाच्चनकश्चि
त्मित्रमिति भाव ॥ ४८ ॥ फलफलहजनवैरादिरूपमतएवमरणात्मकम् ॥ ४९ ॥ ५० ॥ तस्यपरलोकेपितु समेवेत्याह ॥ अहंकारेति ॥ ५१ ॥ यस्यस्वदेहपादपस्यकोटरे

अहंकारग्रहग्रस्तगृहेदग्धशरीरके ॥ विहरन्नास्थयासाधोनतुवेतत्किलस्थिरम् ॥४६ ॥ अहंकारानुस्मरतांत्यक्त्वाविततयाधिया ॥ अहं
कारास्मृतिंप्राप्यस्वात्मैवाश्ववलंब्यताम् ॥ ४७ ॥ अहंकारपिशाचेनग्रस्तायेनिरयैषिण ॥ तेषांमोहमदांधानानमित्राणिनबांधवा ॥
॥४८॥ अहंकारोपहतयाबुद्ध्यायाक्रियतेक्रिया ॥ विषवल्ल्याइवफलंतस्या स्यान्मरणात्मकम् ॥ ४९ ॥ विवेकधैर्यहीनेनस्वाहंकारमहोत्स
व ॥ मूर्खेणालंबितोयेननष्टमेवाशुविद्धितम् ॥५०॥ अहंकारपिशाचेनवराकायेवशीकृता ॥ तएतेनरकाग्नीनांराघवेंधनतांगता ॥५१॥
अहंकारोरगोयस्यपरिस्फूर्जतिकोटरे ॥ स्वदेहपादपोऽधीरेरचिरेणनिपात्यते ॥५२॥ अहंकारपिशाचोस्मिन्देहेतिष्ठतुयातुवा ॥ त्वमेनमा
लोकयमामनसामहतांवर ॥५३॥ अवधूतोप्यवज्ञातश्चेतसैवतिरस्कृत ॥ अहंकारपिशाचस्तेनेहकिंचित्करिष्यति ॥५४॥ देहालयेस्फुर
त्यस्मिन्रामचित्तपिशाचके ॥ अस्यानंतविलासस्यकिमिवागतमात्मन ॥ ५५ ॥ चित्तयक्षाभिभूतानांयापुंसांविततापद ॥ शक्यते
परिसंख्यातुनतावर्षशतैरपि ॥ ५६ ॥ हाहास्मितोस्मिदग्धोस्मीत्येतावेद्रु खवृत्तय ॥ अहंकारपिशाचस्यशक्तयोन्यस्यनानघ ॥ ५७ ॥ स
र्वगोपियथाकाश सबधोनेहकेनचित् ॥ सर्वगोपितथैवात्मानाहंकारेणसंगत ॥ ५८ ॥ यत्करोतियदादत्तेदेहयंत्रमिदंचलम् ॥ वातरज्जु
युतंरामतदहंकारचेष्टितम् ॥ ५९ ॥

न विस्मर्तव्येत्यस्य ॥ बहुपेक्षणवर्जनंआत्मीयस्यात ॥ अधीरैरितिच्छेद ॥ ५२ ॥ मामालोकय ॥ ५३ ॥ अनवलोकनमात्रेणाकिंस्यात्तमाह ॥ अवधूतइति ॥ ५४ ॥ आत्म
न स्तदनुसरणादेवानय उपेक्षितत्वात्स्वितोप्यकिंचित्करत्वस्यात ॥ देहालयेइति ॥ ५५ ॥ चित्तेतिप्रकृताहंकारस्यैवकर्यांतरेप्यनर्थकारितास्यानायनिर्देशः ॥ ५६ ॥ ५७ ॥
अहंविस्मातीवानुभूपनइतिनैयायिकादीनांभ्रांतिवारयति ॥ सर्वगइति ॥ सबध्यतइतिसंबधःस्त्रिलिंगमार्षं ॥ ५८ ॥ वातरज्जुःप्राणात्मप्रयत्नः ॥ ५९ ॥

यय्यहंकारएवसर्वचेष्टानिमित्तंनात्मातर्हिकेनेषितंपततिप्रेषितंमन.केनप्राणःप्रथमःप्रैतियुक्तः ऊर्ध्वंप्राणमुन्नयत्यपानंप्रत्यगस्यति मध्येवामनमासीनंविश्वेदेवाउपासतेइत्यादि
श्रुतिविरोधस्तत्राह ॥ वृक्षोत्पत्ताविति ॥ आत्मसस्थःस्वेमहिम्निप्रतिष्ठितःकारणश्रुतिभिरुपचर्यतइत्यर्थः ॥ ६० ॥ उपचारेमनआदीनामत्तास्फूर्तिप्रदत्वमेवनिमित्तमित्याह ॥
आत्मेति ॥ आत्तवपुर्लब्धसत्ताककल्पितस्थूलदेहंच ॥ ६१ ॥ प्रकटाधयोश्चिज्जडयोः ॥ ६२ ॥ नन्वसबधेमनआदेःसत्तास्फूर्त्यसिद्धिः सबधेत्वात्मासगत्वासिद्धिरित्याशक्या
ह ॥चपलेति॥ चपलस्पदनानीरयतिप्रेरयतीतिचपलस्पदनेरास्तथाविधाभिरात्मनःप्राणस्यशक्तिभिरावृतवशीकृतचित्ततादात्म्याध्यासलक्षणेनमौर्ख्येणाज्ञानेनदृश्यतेनवस्तुवृ

वृक्षोत्पत्तौयथाहेतुरकर्त्रपिकिलांबरम् ॥ आत्मसंस्थस्तथेहात्माचित्तचेष्टासुकारणम्॥ ६० ॥ आत्मसन्निधिमात्रेणस्फुरत्यात्तवपुर्म
नः॥ दीपसन्निधिमात्रेणकुड्यरूपमिवामलम् ॥ ६१ ॥ अपिविश्लिष्टयोरामनित्यमेवात्मचित्तयोः॥ द्यावापृथिव्योरिवकःसंबंधःप्र
कटांधयोः॥ ६२॥ चपलस्पंदनेराभिरात्मशक्तिभिरावृतम्॥ चित्तमात्मेतिमौर्ख्येणदृश्यतेरघुनंदन॥ ६३॥ आत्माप्रकाशरूपोहिनित्यः
सर्वगतोविभुः॥ चित्तंशठमहंकारंविद्धिहार्दंबृहत्तमः ॥ ६४ ॥ आत्मासिवस्तुतस्त्वंहिसर्वज्ञोनमनोभ्रमः॥ दूरेकुरुमनोमोहंकिमेतेना
भिसंगतः॥ ६५॥ पिशाचोपिमनोरामशून्यदेहगृहेस्थितः ॥ भावयत्येषदुष्टात्मामौनमुत्तमसंस्पृशन् ॥ ६६ ॥ भवप्रदमकल्याणंधैर्य
सर्वस्वहारिणम्॥ मनःपिशाचमुत्सृज्ययोसिसत्वंस्थिरोभव॥ ६७॥ चित्तयक्षदृढाक्रांतंनशास्त्राणिनबांधवाः॥ शक्नुवंतिपरित्रातुंगुर
वोनचमानवम्॥६८॥संशांतचित्तवेतालंगुरुशास्त्रार्थबांधवाः॥ शक्नुवंतिसमुद्धर्तुंस्वल्पपंकान्मृगंयथा॥६९॥अस्मिञ्जगच्छून्यपुरेस
र्वमेवप्रदूषितम्॥ देहगेहंप्रमत्तेनचित्तयक्षेणवल्गता ॥ ७० ॥ चित्तवेतालवलितासमस्तादेहखंडजा॥ इयंजगदरण्यानीशून्याकस्य
नभीतये॥ ७१ ॥ जगन्नगर्यामस्यांतुशांतचित्तपिशाचकम्॥ देहगेहंकतिपयैःसेव्यतेसद्भिरेवयत्॥ ७२ ॥ इहसंश्रूयतेयायादिक्सैवर
घुनंदन॥ प्रमत्तमोहवेतालैःपूर्णादेहश्मशानकैः॥ ७३ ॥ अस्यांजगदरण्यान्यांमुह्यंतंमुग्धबालवत्॥ स्वयमाराध्यधैर्यांशमात्मनात्मा
नमुद्धरेत्॥ ७४ ॥जगज्जरदरण्येस्मिञ्श्वरद्भूतमृगव्रजे॥ धृतितृणरसैराममागच्छमृगपोतवत् ॥ ७५ ॥ अस्मिन्महीतलारण्येचरंतिमृ
गपोतकाः॥ त्वमज्ञानगजंभुक्त्वासैहींवृत्तिमुपाश्रय॥ ७६ ॥

त्तेनेत्यर्थः ॥ नाभिरितिपाठेचित्तविशेषणम् ॥ ६३ ॥ असगत्वोपपादनायविरुद्धत्वमेवप्रपंचयति ॥ आत्मेति ॥ शठंवंचकम् ॥६४॥ ६५ ॥ हेउत्तममनःपिशाचआत्मानमसं
स्पृशन्नपिमौनतूष्णीमेवस्वसंस्पृष्टभावयतीत्यन्वयः ॥ ६६ ॥ ६७ ॥ ६८ ॥ सशातेति ॥ शुद्धचित्तमितियावत् ॥ मृगमृगसदृशंवत्सम् ॥ ६९ ॥ ७० ॥ देहलक्षणेखडेपरिच्छि
न्नभागेजाता ॥ ७१ ॥ समस्तेत्युत्सर्गःक्वचिदन्यथात्वमपियतोदृष्टमित्याह ॥ जगदिति ॥ यत्यतः ॥ ७२ ॥ अतएवाज्ञदेहाःश्मशानतुल्याइतिनिदति ॥ इहेति ॥ ७३ ॥
धैर्यांशमाराध्यदृढमवलम्ब्य ॥ ७४ ॥ तृणसदृशैरसारैर्विषयरसैर्धृतिकृतार्थताबुद्धिम् ॥ ७५ ॥ मृगपोतकसदृशाअन्येमूढाविषयतृणानिचरतिचेच्चरतुनाम ॥ ७६ ॥

॥ ७७ ॥ ननुबधुजनैः समानशीलतयासँवावस्थानसुखदृष्टतपकोशायसतमाह ॥ अत्यल्पेति ॥ विशेषणान्युभयपयोज्यानि ॥७८॥७९॥ नमक्तव्यमासक्तिकर्दमेदृतिशेष ॥ पतलम्पमर्या पतालक्षणा सद्धीकोपनासुराणांराक्षसीस्वावतीत्यर्थ ॥ ८० ॥ अन्येनकर्मणा ॥ यक्षेणाहंकारेण ॥ अन्यस्यमनस ॥ अन्योजीव ॥ मौख्यस्यपक्षिकापरि वतमानापरपराविभाआम्बर्यरूपेस्पर्थ ॥८१॥ सेवकघनत्वादपिनात्मनिद्वु स्वतद्भोगभोक्तृशरीरादिरूपांतरावकाशस्याशयेनाह ॥ यथेत्यादिभिर्भि ॥ इतरस्यसदूपेतररूपस्य सदितरत्वस्यैव असद्वलीकादिपदैःप्रसिद्धरितिभाव ॥ ८२ ॥ यथाउपलस्यघनताकाठिन्यनोपलात्पृथक्सतीतथामानससमष्टिव्यष्टिमन समूह आदिपदात्तत्कार्यस्थूलप्रपंच

अन्येनरम्यगामुग्धाजंबूद्वीपेस्वजगले॥ विहरंतियथारामतथामाविहरानघ॥ ७७॥ अत्यल्पकालशिशिरेकर्दमालेपदायिनि॥ नमक्त व्यंबधुरूपेमहिपणेवपल्वले॥ ७८॥ भोगाभोगाथहिप्कार्यां आयंस्यानुसरेत्यदम्॥ प्रविचार्यमहार्यस्वमेकमात्मानमाश्रयेत्॥ ७९॥ अपविन्नस्यतुच्छस्यदुर्भगस्यकुराकृते ॥ देहस्यार्येनमंतव्यचिंताचहीसुदारुणा ॥ ८०॥ अन्येनरचितोदेहोयक्षेणान्येनसंश्रित ॥ दु खमन्यस्यभोक्तान्यश्चित्रेयंमौख्यचक्रिका ॥ ८१ ॥ यथैकरूपाघनताहृपदोस्यात्मनस्तथा ॥ सत्तामात्रैकसामान्यादितरस्याप्यसंभ वात्॥८२॥ यथोपलस्यघनतामानसादितथात्मन ॥ सत्तामात्रादभिन्नत्वादभावादस्यसस्थिते ॥८३॥ यथोपलस्योपलताघटस्य घटतायथा॥ सत्तामात्रादभिन्नैवमानसादितथात्मन ॥ ८४॥ अत्रेमामपरांहर्षिमहामोहविनाशिनीम्॥ शृणुयाकथितापूर्वममकै लासकदरे॥ ८५॥ संसारदुःखशांत्यर्थदेवेनार्धेंदुमौलिना ॥ अस्तींदुकरसंभारभासुरपारगोदिव ॥ ८६॥ कैलासोनामशैलेंद्रोगौरी रमणमंदिरम्॥ तत्रास्तेभगवान्देवोहरश्चंद्रकलाधर ॥ ८७॥ तंपूजयन्महादेवंतस्मिन्नेवगिरौपुरा॥ कदाचिदवसंगंगातटेविरचिता श्रम ॥ ८८॥ तपोर्थतापसाचारैश्चिरायरचितस्थिति ॥ सिद्धसंघातवलितःकृतशास्त्रार्थसंग्रह ॥ ८९॥ पुष्पार्थस्यूतपुटिक पुस्तकव्यूह संग्रही॥ एवंगुणविशिष्टस्यकैलासवनकुंजके॥ ९०॥ तप प्रचरतोराममकालोत्यवतत॥ अथैकदाकदाचित्तुबहुलस्याष्टमेदिने॥ ९१॥

च॥ नकृत ॥ सत्तामात्रस्वभावावभिन्नत्वात्पृथक्अस्यमानसादे सस्थितेराभासावित्यर्थ ॥ ८३ ॥ अथयस्यायःप्रत्येकघटतस्मानसवस्थाविप्यपियोप्यस्मृतिसदैतमेवप्रसि द्धमित्याह ॥ यथेति ॥ ८४ ॥ अथास्मिन्नर्थेइमांवक्ष्यमाणमामसशिवपूजालक्षणांदृष्टिंशृणु ॥ ८५॥ तथार्थंकैलासवर्णनमुखेनकथांप्रस्तौति॥ अस्तीत्यादिना ॥ इंदुकराणां संभार सपातस्तेनभासुर ॥ ८६॥ ८७॥ ८८॥ तापसैराचयत्नइतितापसाचार कृच्छ्रचांद्रायणादिस्तस्मिन्चिरतास्थितिर्यस्यतथाविध सन्॥ ८९॥ ९० ॥ बहुलस्यकृष्णस्य श्रावणपक्षस्याष्टमेदिने ॥ ९१ ॥

रात्र्यमुखेप्रदोषेपूजाजपध्यानादिनाक्षयमागतेसति ॥ प्राणिसंचारायुपरमात्तशांतरूपासुदिक्षुकरादिचेष्टयाप्यर्थानिवेदनंकाष्ठमौनव्रतंतत्रस्थितास्विव ॥ १२ ॥ गहनेषुवने
षु ॥ १३ ॥ तनुतांईषद्बहिःप्रवणतामितियावत् ॥ १४ ॥ स्मयात्‌विस्मयात् ॥ १५ ॥ बहिर्दृष्ट्याअवलोकितमतविचारितमित्यर्थः ॥ विचार्यचयावत्तपुरस्थसानुंप्रस्थदेशपश्यामिताव
त्तत्रप्राप्तइत्यर्थः ॥ १६ ॥ सुसयत सावधानः ॥ १७ ॥ सुमनाःसंतुष्टमनाः ॥ पुर पुरोदेशम् ॥ १८ ॥ सम्यक्‌साष्टांगप्रणम्याभिवदित.स्तुत ॥ स्वभाग्यमहोदयस्त्वस्मिस्तदनुग्रह

गतेश्रावणपक्षस्यरात्र्यग्रेक्षयमागते ॥ दिक्षुसंशांतरूपासुकाष्ठमौनस्थितास्विव ॥ १२ ॥ खद्गच्छेद्यांधकारेषुकुंजेषुगहनेषुच ॥ एतस्मि
न्नंतरेतत्रयामार्धेप्रथमेगते ॥ १३ ॥ समाधिंतनुतांनीत्वास्थितोहंबाह्यमग्नदृक् ॥ अपश्यंकाननेतेजोझटित्येवसमुत्थितम् ॥ १४ ॥ शु
भ्राभ्रशतसंकाशंचंद्रबिंबगणोपमम् ॥ प्रकटीकृतदिक्कुंजंतदालोक्यमयास्मयात् ॥ १५ ॥ अंतःप्रकाशशालिन्याबुद्धिदृष्ट्यावलोकित
म् ॥ यावत्पश्यामितंसानुंप्राप्तश्चंद्रकलाधरः ॥ १६ ॥ गौरीकरार्पितकरोनंदिप्रोत्सारिताग्रगः ॥ शिष्यान्संबोध्यतत्रस्थान्गृहीत्वार्घ्यंसु
संयतः ॥ १७ ॥ अगमंसुमनास्तस्यदृष्टिपूतमहंपुरः ॥ तत्रपुष्पांजलिंदत्वादूरादेवत्रिलोचनः ॥ १८ ॥ दत्तार्घ्येणमयादेवःसंप्रणम्याभिवं
दितः ॥ ततश्चंद्रप्रभासख्याकज्याशीतलयातया ॥ १९ ॥ दृशासर्वार्तिहारिण्याचिरमस्म्यास्पदीकृतः ॥ पुष्पसानूपविष्टायतस्मैत्रैलोक्य
साक्षिणे ॥ १०० ॥ अर्घ्यंपुष्पंतथापाद्यमभ्युपेत्यार्पितंमया ॥ मंदारपुष्पांजलयोविकीर्णाबहवःपुरः ॥ १०१ ॥ नानाविधैर्नमस्कारैःस्तो
त्रैश्चाभ्यर्चितःशिवः ॥ ततोभगवतीगौरीतादृश्यैवसपर्यया ॥ २ ॥ संपूजितासखीयुक्तागणमंडलिकातथा ॥ पूजांतेपूर्णशीतांशुरस्मिशी
तलयागिरा ॥ ३ ॥ तत्रोपविष्टंप्रोवाचमामर्द्धेंदुकलाधरः ॥ ब्रह्मन्प्रशमशालिन्यःप्राप्तविश्रांतयःपरे ॥ ४ ॥ कच्चित्कल्याणकारिण्यःसंवि
दस्तेस्थिताःपदे ॥ कच्चित्तपस्तेनिर्विघ्नंकल्याणमनुवर्त्तते ॥ ५ ॥ कच्चित्प्राप्यमनुप्राप्तंकच्चिच्छाम्यंतिभीतयः ॥ एवंवादिनिदेवेशेसर्वलो
कैककारिणि ॥ ६ ॥ गिरानुनयशालिन्यामयोक्तंरघुनंदन ॥ त्र्यक्षानुस्मृतिकल्याणवतामिहमहेश्वर ॥ ७ ॥ नकिंचिदपिदुष्प्रापंनचकाश्च
नभीतयः ॥ त्वदनुस्मरणानंदपरिघूर्णितचेतसाम् ॥ ८ ॥ नतेसंतिजगत्कोशेप्रणमंतिनयेपुनः ॥ तेदेशास्तेजनपदास्तादिशस्तेचपर्वताः ॥ ९ ॥

दृष्टिपातवर्णयति ॥ ततइति ॥ तयास्वानुभूतालौकिकनिरतिशयानंदाविर्भावचमत्कारकारिण्या ॥ ९९ ॥ १०० ॥ अभ्युपेत्यअभिमुखंसमीपेगत्वा ॥ १०१ ॥ तादृश्याशि
वपूजासदृश्यासपर्ययापूजया ॥ २ ॥ ३ ॥ तदाज्ञयातत्रसानावुपविष्टंमाम् ॥ तत्रकुशलप्रश्नेकर्त्तव्येसर्वकौशल्यपरमकाष्ठापरमात्मनिचित्तविश्रांतिमेवभगवान्प्रथममनुजिघृक्ष
यापृच्छति ॥ ब्रह्मन्निति ॥ ४ ॥ संविदश्चित्तवृत्तयः ॥ पदेपरमात्मवस्तुनि ॥ ५ ॥ ६ ॥ अनुनयोविनयस्तच्छालिन्या ॥ ७ ॥ ८ ॥ जगत्कोशेतेप्राणिनोनसंतियेनप्रणमंति ॥ सर्वे
पिप्रणमंत्येवेत्यर्थः ॥ तेदेशाःप्रशस्ततमाइत्यर्थः ॥ अपशवोवाअन्येगोअश्वेभ्यःपशवोगोअश्वाइतिवत्प्राशस्त्यलाभः ॥ ९ ॥

भूतस्यचापसंचितस्यपुण्यस्यरक्षस्थानीयस्यफलंतनोति अनंतकोटिगुणतयाविस्तारयति ॥ वर्त्तमानस्यैतद्देहारभ्यस्यसेचनममृतसेकेनेवाभिवर्धनंतनोति ॥ ११० ॥ एष्यत
श्चरिष्यमाणस्यस्वर्गार्थबीजंतनोति ॥ ११ ॥ १२ ॥ सर्वासांवर्त्तमानानामेष्यंतीनांच ॥ १३ ॥ पूर्णाइष्टार्थैरितिशेषः ॥ १४ ॥ त्यक्ताउद्वेगाश्चिसक्षोभहेतवोयस्मिंस्तथावि
धेदेवार्चनविधानंमूर्द्धानिपत्यामस्य ॥ १५ ॥ १६ ॥ पूर्णमिसकलादिशाइत्युक्त्याचसिद्धस्यविषयभोगाभिलाषशून्यमात्मद्योतनात्सर्वपापक्षयकरसर्वकल्याणवर्धनमितिविशेष
णाभ्यांचसर्वानर्थनिवृत्त्युपलक्षितनिरतिशयानंदरूपमोक्षसाधनविषयएवायंप्रश्नइतिनिश्चितवान्सर्वज्ञःपरमकारुणिकईश्वरः सर्वभावेनप्रपन्नायवसिष्ठायपरमपुरुषार्थसाधन
मरप्रानमेवमर्त्यैराधनपरमरहस्यभूतमुपदेष्टुकामःप्रतिजानीते ॥ शृण्विति ॥ १७ ॥ प्रभवक्ष्यमाणदेवार्चनानुरूपमलौकिकदेवस्वरूपमुपदेष्टुंशिष्यस्यतद्बुभुत्साजनयन्पृच्छति ॥

त्वदनुस्मरणैकांतधियोयेनस्थिताजनाः ॥ फलंभूतस्यपुण्यस्यवर्तमानस्यसेचनम् ॥ ११० ॥ तनोतिचैष्यतोबीजंत्वदनुस्मरणंप्रभो ॥
ज्ञानामृतैककलशोधृतिज्योत्स्नानिशाकर ॥ ११ ॥ अपवर्गपुरद्वारंत्वदनुस्मरणंप्रभो ॥ त्वदनुस्मरणोदारचिंतामणिमतामया ॥ १२ ॥
सर्वासामापदांमूर्ध्निदत्तमुत्पतेपदम् ॥ इत्युक्त्वासुप्रसन्नंतंभगवंतमहेश्वरम् ॥ १३ ॥ अवोचंप्रणतोभूत्वायन्मामतदिदंशृणु ॥ भगवं
स्त्वत्प्रसादेनपूर्णोमेसकलादिशः ॥ १४ ॥ किंतुपृच्छामिदेवेशसंदेहतन्निर्णयम् ॥ ब्रूहिप्रसन्नयाबुद्ध्यात्यक्तोद्वेगमनामयम् ॥ १५ ॥
सर्वपापक्षयकरंसर्वकल्याणवर्धनम् ॥ देवार्चनविधानंतत्कीदृशंभवतिप्रभो ॥ १६ ॥ ॥ ईश्वरउवाच ॥ ॥ शृणुब्रह्मविदांश्रेष्ठदेवार्च
नमनुत्तमम् ॥ वदामिमुच्यतेयेनकृतेनसकृदेवहि ॥ १७ ॥ कश्चिद्देवोस्तिमहाबाहोदेवःक स्यादितिद्विज ॥ नदेवःपुंडरीकाक्षोनचदेवस्त्रि
लोचनः ॥ १८ ॥ नदेवःकमलोद्भूतोनदेवस्त्रिदशेश्वरः ॥ नदेवःपवनोनार्कोनानलोननिशाकरः ॥ १९ ॥ नब्राह्मणोनावनिपोनाहंनत्वंहि
जोत्तम ॥ नदेवोदेहरूपोहिनदेवश्चित्तरूपधृक् ॥ १२० ॥

कश्चिदिति ॥ महाबाहोनिरंतरदेवार्चनसफलीकृतबाहो इतिबाहुसापेक्षबाह्यपूजाभावसूरताद्योतनायसंबोधनम् ॥ ननुप्रसिद्धाएवपुंडरीकाक्षत्रिलोचनादयोदेवाः किमेतावस्यपि
विषयेभगवान्मामनभिज्ञंसंभावयतीतिमन्यमानस्यवसिष्ठस्यपरिच्छिन्नेषुप्रसिद्धाज्ञात्वभ्रममपनेतुमाह ॥ नदेवइत्यादिना ॥ १८ ॥ कमलोद्भूतोब्रह्मा ॥ त्रिदशेश्वरइंद्रः ॥ नि
शाकरपद्मपनस्कलाधीनशरीरकपर्यायतयास्कोटिदेवदेहोपलक्षणम् ॥ १९ ॥ पुनर्नाहंनत्वमितिमियथोरत्रप्रसिद्धयोस्त्वच्छ्रोत्रयंतितस्मान्नुद्य ॥ यद्यहंप्रसिद्धोस्मितथात्वंप्रसिद्धोसी
त्यादिश्रुतिषुनस्त्वसमष्टिप्राणानांप्रसिद्धे कृतमएकोदेवइतिप्राणइतिप्राणस्यैवसर्वदेवात्मकत्वमुनेश्वमाणभावेनमामदेवतात्वनिवारणार्थम् ॥ एवंनैनदेवोऽधाभ्यामुक्तपूर्वमशेषेत्यादि
मर्त्यभ्राम्याक्लिकेषुवसुरादिषुदेवत्वाम्वर्शनात्त्वमेवत्वाहासोमस्य त्वाहारत्यादिमंत्रलिंगाद्देहाद्याध्यात्मिकत्वादामानपिप्रसक्तदेवतात्वंवारयति ॥ देहरूपइति ॥ १२ ॥

आध्यात्मिकप्रस्तावात्कमलाचदेहादिशोभा ॥ मतिग्रहणसर्वाध्यात्मिकभावोपलक्षणार्थम् ॥ तत्तुल्यन्यायाद्वाधिभौतिकेष्वपिसर्वभावेष्वदेवत्वमुक्तंबोध्यम ॥ कस्तर्हिदेवस्त
माह॥अकृत्रिममिति ॥ डुकृञोङ्वितःक्रि क्रेर्मम्नित्यमितिमप् ॥ कृत्रिमक्रियासाध्यतद्विलक्षणपरमार्थदेवननिरतिशयप्रमोदश्चित्प्रकाशोदेवइत्यर्थः ॥ पुंडरीकाक्षादिमत्यता
हिचित्प्रकाशाधीनसत्तास्फूर्तिकत्वात्तस्मिन्नध्यस्तास्तेपाचित्प्रकाशात्पृथक्करणेस्वरूपसिद्धिरेवदुर्लभादूरंदेवत्वमितितेष्वपिसत्ताप्रकाशएवानावृतःस्फुरन्सर्वत्रैकोदेवस्तदभिव्य
क्त्यतिशयादेवपुंडरीकाक्षादयोपिअभिभूतजाड्यत्वाद्वह्निशब्देनज्वलदंगारादिवदेवाउच्यन्तइतिनश्रुतिस्मृत्यादिवादविरोधोपीतिभावः ॥ २१ ॥ आकारादिनादेशतोवस्तुतश्चपरि
च्छिन्नेमितेकालत परिच्छिन्नेतत्देवनकुतः ॥ अयभावः ॥ दिवुक्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकांतिगतिष्वितिदशस्वर्थेषुप्रसिद्धाद्दीव्यते पचाद्यचिदेवशब्दव्यु

नदेवःकमलारूपीनापिदेवोभवेन्मतिः॥ अकृत्रिममनाद्यंतंदेवनंदेवउच्यते॥१२१॥ आकारादिपरिच्छिन्नेमितेवस्तुनितत्कुतः॥ अकृ
त्रिममनाद्यंतंदेवनंचिच्छिवंविदुः॥ २२ ॥ तदेवदेवशब्देनकथ्यतेतत्प्रपूजयेत् ॥ तदेवास्तियतःसर्वसत्तासत्तात्मरूपधृक्॥ २३ ॥ अज्ञा
तशिवतत्त्वानामाकाराद्यर्चनंकृतम्॥ योजनाध्वन्यशक्तस्यक्रोशाध्वापरिकल्प्यते॥२४॥ इयत्तादिपरिच्छिन्नंरुद्रादेःप्राप्यतेफलम्॥
अकृत्रिममनाद्यंतंफलमानंदआत्मनः॥ २५ ॥ अकृत्रिमफलंत्यक्त्वायःकृत्रिमफलंव्रजेत् ॥ त्यक्त्वासमंदारवनंकारंजंयातिकाननम्
॥१२६॥ बोधःसाम्यंशमइतिपुष्पाण्यग्राणितत्रच ॥ शिवंचिन्मात्रममलंपूज्यंपूज्यविदोविदुः ॥ २७॥ शमबोधादिभिःपुष्पैर्देवआ
त्मायदर्च्यते ॥ तत्तुदेवार्चनंविद्धिनाकारार्चनमर्चनम् ॥ २८ ॥ आत्मसंवित्तिरूपंतुत्यक्त्वादेवार्चनंजनाः॥ कृत्रिमार्चासुयेसक्ताश्चिरं
क्लेशंभजंतिते॥ २९ ॥ज्ञातज्ञेयाहियेसंतोबालक्रीडोपमंचते॥ आत्मध्यानादृतेब्रह्मन्कुर्वंतोदेवपूजनम्॥ १३० ॥ आत्मैवदेवोभग
वाञ्छिवःपरमकारणम्॥ ज्ञानार्चनेनाविरतंपूजनीयःससर्वदा॥१३१॥

त्पादनात्सकोचेमानाभावान्मायिकनिरंकुशैश्वर्यस्वच्छंदक्रीडाविजिगीषाव्यवहारस्तुतीनामाविषयकमदस्वमेच्छागतीनांचनिर्वाहकत्वाद्दशस्वर्थेषुद्युतिमोदावेवमुख्यावर्थौतौ
चनित्यनिरतिशयानंदस्वप्रकाशेब्रह्मण्येवसंभवतोनपरिच्छिन्नेपुजडेष्विति ॥ अत.अकृत्रिमचिच्छिवमेवदेवंतत्त्वतोविदुरित्यर्थ.॥२२॥ यत.सर्वजगज्जीवतत्संसाररूपंतत्सत्त्वे
वसत्तात्मरूपधृक्नस्वतइतितदेवास्तिनान्यदित्यर्थ ॥ २३ ॥ तर्हिकिंपुंडरीकाक्षाद्याकारार्चनविधिर्व्यर्थएव नेत्याह ॥ अज्ञातेति ॥ कृतंविहितम ॥ २४ ॥ आत्मनस्तत्त्वत.सा
क्षात्कारात्पूजनेनप्रसन्नादित्यर्थ. ॥ २५ ॥ कृत्रिमकामभोगानात्मपूजनात्सिद्धांतीतितदर्थंकृत्रिमपूजैवकार्यातित्राह ॥ अकृत्रिमेति ॥ २६ ॥ अकृत्रिमपूजनेतर्हिकासामग्री
तामाह ॥ बोधइति ॥ साम्यसर्वत्रात्मौपम्येनदर्शनम ॥ २७॥ २८ ॥ २९ ॥ ज्ञातज्ञेयायेकदाचिदात्मध्यानाद्व्युत्थिताःसंतःसाकारदेवपूजनंकुर्वंतश्चेद्दृश्यतेतत्तेबालक्रीडोपम
कुर्वंतिनकृत्रिमभोगाशयेत्यर्थः ॥ १३० ॥ १३१ ॥

त्वमीवस्वभावमकृत्रिमअम्ययपेतनाकाशचिदाकाशमविच्छिन्नत्वन्य अनात्मापूज्योयतोज्ञानलक्षणमात्मपूजनमेवमुख्यपूजानाम्येत्यर्थ ॥ यथाहुः ॥ देहोदेवालयःप्रोक्तो जीवःदेवस्सदाशिवः ॥ त्यजेदज्ञाननिर्माल्यंसोहंभावेनपूजयेदिति ॥ ३२ ॥ नत्वेवास्तियत सर्वसत्तासत्तात्मरूपमितिब्रह्मणएवजगज्जीवततत्सरणसत्तास्मनावस्थानमुक्तंतम्रो पर्यानिजिज्ञासुर्वसिष्ठ पृच्छति ॥ चेतनेति ॥ ३३ ॥ तत्रचित्सत्तायाश्चेत्यानधीनत्वतावत्सर्वचेत्यमलयेप्यनपायात्प्रसिद्धमितितदधीनज्ञानस्यचेत्यस्यज्ञानांतरमिवनसत्तांतरम पियुक्तमित्युपपत्तिमाह ॥ चिद्व्योमेति ॥ सर्वमतिपूर्वाधाम्यपि ॥ यथस्माद्धेतो ॥ अथवाचिद्व्योमसर्वभसर्गकालेपिअसंभवच्चेत्यपारादिपरिच्छेदशून्यत्वात्प्रलयकालवदित्यनु मानलक्षणायोपपत्तिर्दर्शितावोध्या ॥ ३४ ॥ कथर्तर्हिजगद्रूपप्रतिभासस्तत्राह ॥ यदिति ॥ तस्यापरिच्छिन्नत्वादेवमायावरणात असंमानाम्नायिकवासनादिमार्गेणय त्स्वंदितंस्पंदनमिवप्रसिद्धतेनदजगदितिप्रकाशभाति ॥ तथाहि ॥ यथत्स्वयंयत्प्रभवीपेंद्रियमनआदिस्वयप्रकचनमिवहलीभूतप्रकाशंभवतितस्यस्वकचनस्यत्वंबिंबेअसमानात्स्वय

त्वमेतच्चेतनाकाशमात्मानजीवमव्ययम्॥स्वभावंविद्धिनत्वन्य पूज्य पूजात्मपूजनम्॥१३२॥ ॥श्रीवसिष्ठउवाच॥ ॥चेतनाकाश मात्रात्मयाजगदिदंप्रभो ॥ यथातच्चेतनस्यैवजीवादित्वंतदुच्यताम्॥ ३३॥ ॥श्रीईश्वरउवाच ॥ ॥चिद्व्योमैवकिलास्तीहपारा वारविवर्जितम् ॥ सर्वत्रासंभवच्चेत्ययत्कल्पांतेवशिष्यते॥ ३४ ॥ यत्स्वयंप्रकचतितस्यस्वकचनस्यतु ॥ स्वयंयत्स्पंदितनामतेनेदं जगदित्यलम् ॥३५॥इत्येवंस्वप्नपुरवज्जगत्तालिचिदात्मकम्॥एवंचिद्व्योममात्रात्मजगदच्छंनभित्तिमत्॥ ३६॥ अत्यंतासंभवाच्चे त्यंहम्यचिद्व्योममात्रकम्॥चित्त्वात्कचतिसर्गादौयत्तज्जगदितिस्मृतम्॥ ३७॥ तस्मात्स्वप्नपुराकारयदिदंभासतेजगत् ॥ तच्चचिद्व्योम मात्रात्मन्यन्यतानामकाकुत ॥ ३८॥ चिन्मात्रमेवगिरयश्चिन्मात्रंजगदवरम्॥चिन्मात्रमात्माजीवश्चचिन्मात्रभूतसततिः ॥१३९॥ चिद्व्योममात्रादितरत्सर्गादौसववेदने ॥ भिन्नस्वर्गेपुरेवापिकिंसंभवतिकथ्यताम्॥१४०॥

यद्विकाद्दृहि यथाकारेयत्स्पंदितस्पंदनंनामप्रसिद्धंतदेवनीलपीतादितद्विषयरूपजगदित्यलमत्यन्तप्रसिद्धमित्यर्थ ॥ ३५ ॥ इतिउक्तरीत्याएवविचित्ररूपजगच्चिदात्मकमेवसत्स्व प्नपुरवत्चिदिवभातिभ्रांत्या ॥ एवमुक्तरीत्यापरमार्थतोविमृष्टंतुजगच्चभित्तिमत्अमूर्तमच्छंचिद्व्योममात्रात्मैवेत्यर्थ ॥ ३६ ॥ तर्हिकिंचिदेवचेत्याकारेणपरिणतस्वपश्यतिने त्याह ॥ अत्यतेति ॥ अपरिणामित्वादद्वयत्वाच्चात्यंतासंभवाच्चेत्यमप्यात्मचित्स्वभावावयव्ययाकचतिमथतेतदेवदृश्यजगदित्यर्थ ॥ ३७॥ ३८ ॥ अतएवारोपितरूपबाधे नचिन्मात्रस्वरूपद्रष्टव्यमित्याह ॥ चिन्मात्रमेवेत्यादिना ॥ ३९ ॥ स्वर्गेऊर्ध्वलोकेपुरेस्वनगरेवाअपिशब्दात्पातालेपुवाचिद्भिन्नंकिंसंभवतितत्कथ्यतांनिरूपणकुशलैः अचि न्मत सत्तास्फूर्तिमत्वेअचित्स्यप्राप्तानवकाशेअलीकत्वावलीकस्यचितापृथग्जीवनादर्शनाच्चितोऽसंगत्वेनाचित्त्वबाधाप्रयोगात्साधकांतरस्याप्रसिद्धेरितिभाव ॥१४०॥

१ मायावरणाद्भवादिनिकचित्पाठः

ननुयजतिददातिजुहोतीत्यादिशब्दांतरात्कर्मभेदवच्चित्आकाशजगदित्यादिनामांतराद्भेदोस्त्विति चेत्तत्राह ॥ आकाशमिति ॥ भूताकाशाव्याकृताकाशार्थत्रयपरत्वेनाभि प्रेतानात्रयाणामप्याकाशशब्दानांकाशृदीप्ताविति धात्वर्थानुगमेनचिन्मात्रवचनत्वसंभवाद्गमेरपियेगत्यर्थास्तेज्ञानार्थाइत्यनुशासनाद्वर्त्तमानेपृषन्महद्बृहज्जगच्छतृवच्चेतिक्विपि द्वित्वादिनिपातनेपिज्ञानार्थत्वानपायाच्चित्पर्यायनामतोपपत्तेरितिभावः ॥ ४१ ॥ तदेतिदर्शनायदेत्यध्याहार्यम् ॥ एवरीत्याद्वैद्वैतस्वमादिभिःसमयदानुभूयतेतत्त्वदृशातदेत्यर्थ. ॥ ४२ ॥ ४३ ॥ द्वितीयएवशब्दोऽपिशब्दार्थे ॥ ४४ ॥ अखिलचित्तसचेत्यमपिजगत्अचेत्यसन्मात्रमेवस्थितम ॥ ४५ ॥ परमाकाशस्यब्रह्मणःकलनबद्धस्याप्रजायेयेति श्रुतिदर्शितआद्यसकल्पएवत्रिजगद्भूत्वास्वयमुत्थितद्वैतवत्द्वैतवाद्यभिमतसत्यवस्तुवदित्यर्थः ॥ ४६॥ जगत्सामान्येउक्तन्यायघटपटादिविशेषेपिदर्शयति ॥ यथेत्यादिना ॥ स

आकाशंपरमाकाशंब्रह्माकाशंजगच्चितिः ॥ इतिपर्यायनामानितत्रपादपवृक्षवत् ॥ १४१ ॥ एवंद्वौस्वप्नसंकल्पमायाभिःस्वनुभूयते ॥ तदाकिलचिदाकाशमेवभातिजगत्तया ॥ ४२ ॥ यथैतत्संविदाकाशंस्वप्नेभातिजगद्वपुः ॥ तथेदंजाग्रदाख्येपिस्वप्नेभातितदेवनः ॥ ४३ ॥ यथास्वप्नपुरेचित्त्वंवर्जयित्वेतरत्क्वचित् ॥ नाकिंचित्संभवत्येवंजाग्रत्येवंमहाचितः ॥ ४४ ॥ यतोनसंभवत्यन्यच्चेत्यंकिंचित्ततोखिलम् ॥ चित्तंसंचेत्यमप्येतदचेत्यंसज्जगत्स्थितम् ॥ ४५ ॥ परमाकाशकलनंत्रिजगत्स्वयमुत्थितम् ॥ स्वप्नवद्विद्धिचिद्व्योम्निनत्वेतद्वैतवत्स्थितम् ॥ ४६ ॥ यथाचिद्व्योममात्रात्मस्वप्नेघटपटादिकम् ॥ सर्गादावेवसर्गोयंतथाचिद्व्योममात्रकम् ॥४७॥ शुद्धसंवित्तिमात्रत्वादृतेन्यत्स्वप्नपत्तने ॥ यथानविद्यतेकिंचित्तथास्मिन्भुवनत्रये ॥ ४८ ॥ याःकाश्चनदृशोयेयेभावाभावास्त्रिकालगाः ॥ सदेशकालचित्तास्तत्सर्वंचिद्व्योममात्रकम् ॥ ४९ ॥ सएषदेवःकथितोयःपरःपरमार्थतः ॥ यस्त्वंसोहमशेषंवाजगदेवचयोखिलः ॥ १५० ॥ सर्वस्यवस्तुजातस्यजगतोन्यस्यतेमम ॥ देहोहिचेतनाकाशंपरमात्मैवनेतरत् ॥ ५१ ॥ संकल्पनेस्वप्नपुरेशरीरंचिद्व्योमतोन्यन्नयथास्तिकिंचित् ॥ तथेहसर्गेप्रथमैकसर्गान्मुनेप्रभृत्यस्तिनरूपमन्यत् ॥ १५२ ॥ ॥इत्यार्षेवा०वा०दे०मो०नि०पू०जगतःपरमात्ममयत्ववर्णनंनामएकोनत्रिंशत्तमः सर्गः ॥ २९ ॥ ॥ ७ ॥ ॥श्रीईश्वरउवाच ॥ ॥एवंसर्वमिदंविश्वंपरमात्मैवकेवलम् ॥ ब्रह्मैवपरमाकाशमेषदेवःपरःस्मृतः ॥ १ ॥

गौघटपटादिः ॥ ४७ ॥ ४८ ॥ ४९ ॥ सज्ज्ञानेनपूज्योदेवःप्रथमप्रश्नोत्तरत्वेनकथितः ॥ १५० ॥ देहःपारमार्थिकस्वरूपम् ॥ १५१ ॥ उक्तमनूद्योपसहरति ॥ संकल्पनइति ॥ प्रथमादेकस्यहिरण्यगर्भस्यसर्गात्प्रभृतिप्रवृत्तेइहास्मिन्सर्गेतथासंकल्पनस्वप्नपुरशरीरादिवदेवान्यद्रूपंनास्ति ॥ १५२ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्र०पू० एकोनत्रिंशःसर्गः ॥ २९ ॥ ॥ ७ ॥ ॥ चित.सर्वात्मतासर्वभोक्तृभावेनसंस्थितिः ॥ यथाजीवदशाप्राप्ताचित्तत्राप्यत्रवर्ण्यते ॥ १ ॥ चेतनाकाशमात्रात्मयथासर्वमिदप्रभोइतियत्त्वयापृष्टतस्येदमुत्तरवर्णितमित्याह ॥ एवमिति ॥ कच्चिद्वेत्सिमहाबाहोदेव.क.स्यादितिद्विजेतिमयात्वत्पृष्टदेवार्चनविधानमूलरहस्यंयत्त्वांप्रतिपृष्टंतदप्येतदेवेत्याह ॥ एषदेवइति ॥ १ ॥

परिच्छिन्नदेशाचनपरिच्छिन्नफलमेतदर्चनमनुसर्वकामावसानभूमिभूमानन्दप्राप्तिफलमितिसर्वोत्कृष्टमित्याह ॥ तवेतदिति ॥ सर्गभू सर्वजगत्सर्गारोपाधिष्ठानम् ॥ २ ॥ तत्रवस्तु
वित्तव्ययायाससाध्यताशंकापरिहरति ॥ अयहिरिति ॥ अयहि साधनचतवसाध्यचेतिविग्रह ॥ ३ ॥ प्रबुद्धोविवेकीमुख्याधिकारीतियावत् ॥ अतिशयितोदेव अतिदेवस्त
दर्चने ॥ ४ ॥ मुख्याधिकृतदेवार्चनेतर्हिकोऽधिकारिणस्तानाह ॥ अभ्युत्पन्नेति ॥ अतएवतदनुरूपमेवकृत्रिमप्रतिमादितत्साम्पीत्येत्याह ॥ कृत्रिमेति ॥ अष्टाप्रतिमातव्यपुरम् ॥
॥ ५ ॥ तत्रशाल्यादनालाभेकोद्रवाशनमिवेत्याह ॥ शमेति ॥ ६ ॥ अर्चनकृतासंतोषमायातिप्राप्नोति ॥ ७ ॥ यत कुतश्चित्स्वमप्रायविमानाप्सरःप्रभृतिसाधनान्मिथ्यात्म
कमेवस्वर्गादिफलमासादयतीतिमुधेत्यस्योपपत्ति ॥ ८ ॥ ९ ॥ यथाहि कारणयस्यसोऽस्मदादिरस्मत्कल्पितप्रपंचांतर्गत असौचक्षुरादिदृश्यमूर्तिरूपोदेव कश्चिदनिर्वचनी

तवैतत्पूजनंश्रेयस्तस्मात्सर्वमवाप्यते॥तदेवसर्गभूःसर्वमिदंतस्मिन्व्यवस्थितम्॥२॥अकृत्रिममनाद्यंतमद्वितीयमखंडितम्॥अयहि
साधनासाध्यसुखंतस्मादवाप्यते॥३॥प्रबुद्धस्त्वंमुनिश्रेष्ठतेनेदंतवकथ्यते॥नातिदेवार्चनेयोग्यःपुष्पधूपचयोमहान्॥४॥अभ्युत्पन्नधि
योयेहिबालपेलवचेतसः॥कृत्रिमार्चामयंतेषांदेवार्चनमुदाहृतम्॥५॥शमनोधाद्यभावेहिपुष्पाद्यैर्वार्चयंतिहि॥मिथ्यैवकल्पितैरेवमा
कारेकल्पितात्मके॥६॥स्वसंकल्पकृते कृत्वाकमेरर्चनमाहृता॥बाला संतोषमायांतिपुष्पधूपलवार्चने॥७॥स्वसंकल्पकृतेरर्थैःकृ
त्वादेवार्चनंमुधा॥यत कुतश्चिन्मिथ्यात्मफलमात्रंनयंतिते॥८॥पुष्पधूपार्चनंब्रह्मन्कल्पितंबालबुद्धिषु॥यत्स्याद्भवादृशांयोग्यमर्चनं
तद्वदाम्यहम्॥९॥अस्मदादिस्त्वसौकश्चिद्देवोमतिमतांवर॥देवस्त्रिभुवनाधार परमात्मैवनेतरत्॥१०॥शिवस्सर्वपदातीत सर्वसंक
ल्पनातिगः॥सर्वसंकल्पवलितोनसर्वोनचसर्वकः॥११॥दिक्कालाद्यनवच्छिन्न सर्वारंभप्रकाशकृत्॥चिन्मात्रमूर्त्तिरमलोदेवइत्युच्य
तेमुने॥१२॥संवित्सर्वकलातीतासर्वभावांतरस्थिता॥सर्वसत्ताप्रदादेवीसर्वसत्तापहारिणी॥१३॥ब्रह्मब्रह्मन्सदसतोर्मध्यंतद्देवउच्यते॥
परमात्मपरास्मिस्यतत्सदोमित्युदाहृतम्॥१४॥महासत्तास्वभावेनसर्वत्रसमतांगतम्॥महाचिदितिसंप्रोक्तपरमात्मेतिश्रुतम्॥१५॥

योमायामयएवेत्यर्थ ॥ कस्तर्हिपारमार्थिकोदेवस्तमाह ॥ देवइति ॥ १० ॥ सर्वेभ्याब्रह्मविष्णुरुद्रादिदेवेभ्योप्यतीत सकल्पनामनोदृश्यस्तदतिग ॥ यतोवाचोनिवर्तंतअप्रा
प्यमनसासहेतिश्रुते ॥ यस्तुसर्वैर्विषयभोगसंकल्पैर्वलितोवेष्टितोब्रह्मविष्ण्वादिपदरूप सनसाधनतोपिसर्वोनफलतोपिसर्वैकभोगसुखयस्मिंस्तथाविध ॥ स्वस्वकर्मोपासनतार
तम्यानुसारेणभोगसामग्र्यासत्फलसुखलेशस्यपतमलाभादित्यर्थ ॥ ११ ॥ आत्मदेवस्तुपूजनदशायाफलदशायांचनित्यनिरतिशयपरमार्थसत्यपूर्णानंदैकस्वभावएवे
तिसएवदेवइत्यस्त्रियोग्यइत्याह ॥ दिक्कालेति ॥ १२ ॥ १३ ॥ सदसतोर्भावाभावयोवर्तमानतदन्यकालयोर्मूर्त्तामूर्त्तयो कारणकार्ययोर्व्यावहारिकप्रातिभासिकयोर्वाभात
राल्किसाक्षिचिन्मात्ररूपत्वाद्ब्रह्मस्वाद्ब्रह्मध्यम ॥ परमस्वपनामिकरणध्योतिष्यउत्कृष्टआत्मैवपरासवाविष्योतनसमा अभिस्याभक्ता शोयस्यतत्तथाविधहरमोविनिप
देनमुनिभुविराजादिपादपपालकसर्वप्रपंचप्रविलापनेनशिवमीलनचतुर्थमप्यनेसआत्मासविशेषदस्मुदाहृतमित्यर्थ ॥ १४ ॥ १५ ॥

व्यवहारेसर्वत्रानुगमात्सत्तासामान्यरूपेण ॥ सर्वबाधेतुमहासत्तात्मना ॥१६॥ तस्यैवसर्वेषादेवतादीनामात्मत्वाद्दपिमुख्यदेवत्वमित्याह॥ यदित्यादिना ॥१७॥१८ ॥ तस्यैवविमर्शोसर्वदेवतासारत्वाद्देवत्वमित्याह ॥ पादेति ॥ किसार.सदतिशेष ॥ १९ ॥ ससर्वःपूर्णोदेवएवाहनपरिच्छिन्नइत्यर्थः ॥ २० ॥ २१ ॥ सएवसर्वकर्त्तासर्वभोक्ताचेत्याह ॥ सकरोतीत्यादिना ॥ २२ ॥ पुर्यामास्ते ॥ सएषइहप्रविष्टआनखाग्रेभ्यइतिश्रुतेरितिभावः ॥ २३ ॥ शरीरमावसथोमहागृहंयस्यास्तथाविधायाम् गहनादुर्विवेकाअन्नमया

स्थितंसर्वत्रसर्वंतुलतास्वंतर्यथारसः॥ सत्तासामान्यरूपेणमहासत्तात्मनापिच॥ १६॥ यच्चित्तत्त्वमरुंधत्यायच्चित्तत्त्वंतवानघ ॥ यच्चित्तत्त्वंचपार्वत्यायच्चित्तत्त्वंगणेषुच॥ १७॥ चित्तत्त्वंयन्ममेदंचचित्तत्त्वंयज्जगत्त्रये॥ तद्देवइतितत्त्वज्ञाविदुरुत्तमबुद्धयः॥ १८॥ पादपाण्यादिमानन्योयोवादेवःप्रकल्प्यते॥ संविन्मात्रादृतेब्रह्मन्किंसारःकिलकथ्यताम्॥ १९ ॥ चिन्मात्रमेवसंसारसारःसकलसारताम्॥ गतःसदेवःसर्वोहंतस्मात्सर्वमवाप्यते॥ २० ॥ नसदूरेस्थितोब्रह्मन्नदुष्प्रापःसकस्यचित्॥ संस्थितःससदादेहेसर्वत्रैवचखेतथा॥ २१॥ सकरोतिसचाश्नातिसबिभर्त्तिप्रयातिच॥ सनिःश्वसितिसंवेत्तासोंगान्यंगानिवेत्तिच ॥ २२ ॥ सोस्यांविचित्रचेष्टायांप्रकाशिन्यांचतद्वशात्॥ तत्स्वरूपनिबद्धायांपुर्यामास्तेमुनीश्वर॥ २३ ॥ शरीरावसथायांचचलायांतत्प्रसादतः॥ सोस्यांगहनकोशायांहृद्गुहायांगुहेश्वरः॥ २४ ॥ मनःषष्ठेंद्रियाचारसत्तातीतामलात्मनः॥ तस्यसंव्यवहारार्थसंज्ञाचिदितिकल्पिता ॥ २५॥ सएषचिन्मयःसूक्ष्मःसर्वव्यापीनिरंजनः॥ इमंभास्वरमाभासंकरोतिनकरोतिच॥२६॥ साचिदत्यंतविमलाजगदर्थंजगत्क्रियाम्॥ इमांरंजयतिप्राज्ञरसेनेवमधुर्लताम्॥ २७॥ चारवोयेचमत्काराश्चितश्चितियथास्थितम् ॥ चमत्कुर्वंतिकिलतेतेनकेचिन्नभोभिधाः ॥ २८॥ केचिज्जीवाभिधानाश्चकेचिच्चित्ताभिधानकाः॥ केचित्कलाभिधानाश्चकेचिद्देशाभिधानकाः ॥ २९॥ केचित्क्रियाभिधानाश्चकेचिद्द्रव्याभिधानकाः॥ केचिद्भावविकारादिजात्यौचित्याभिधानकाः॥ ३० ॥ प्रकाशाभिधानाःकेचित्केचिच्छैलतमोभिधाः ॥ अर्केंद्राद्यभिधाःकेचित्केचिद्यक्षाभिधानकाः॥ ३१ ॥

दिवहि'कोशायस्यास्तथाविधायाम् हृद्बुद्धिःसैवगूहतीतिगुहातस्याम् आनंदमयकोशगुहेश्वरः ॥ २४ ॥ उपदेशसंव्यवहारार्थम॥ २५ ॥भास्यारोपेकरोतीव तदपवादेनकरोति ॥ नित्यभानस्यकृतत्वाभावादित्यर्थः ॥२६ ॥ रंजयतिशोभयति ॥ मधुर्वसतः ॥ २७ ॥ चमत्काराआरोप्येसत्तास्फूर्तिप्रदानरूपाः ॥ चितिमायाशबलेयस्स्थितपूर्वकामकर्मवासनानुसारेणनियतचमत्कुर्वंत्याविर्भावयति॥ तांश्चचमत्कारानेवनामकल्पनयाव्यपदिशति ॥ केचिदित्यादिना॥ सर्गभेदेननभोबहुत्वोक्तिः ॥२८॥२९ ॥ भावविकाराजायतेऽस्तिवर्धतेविपरिणमतेऽपक्षीयतेनश्यतीतियास्कोक्ताः॥आदिपदाद्गुणभेदास्तेषांजात्यावैचित्र्येणऔचित्येनचविचित्राभिधानकाः॥३०॥तानेवप्रपंचयति॥प्रकाशेति॥३१॥

चित किस्वभोगेच्छयाजगत्स्थितिरित्याह ॥ निरिच्छेति ॥ तथाचोक्तंश्रीमद्गौडपादाचार्यैः ॥ भोगार्थंसृष्टिरित्येकेक्रीडार्थमितिचापरे ॥ देवस्यैषस्वभावोऽयमाप्तकामस्यकास्पृहेति ॥ नचैवंसोकामयतबहुस्यांप्रजायेयेत्यादिश्रुतिविरोधः अस्यमहतोभूतस्यनिश्वसितमेतद्यदृग्वेदोयजुर्वेदइत्यादिश्रुत्यन्तरेइच्छाप्रयत्नाद्यनपेक्षनिश्वसितमात्रत्वोक्तेस्तद्वैक्षतबहुस्यांप्रजायेयेतिसमानतात्पर्यकश्रुत्यन्तरानुगुण्यायसोऽकामयतेत्युक्तेरचेतनप्रधानादिकर्तृकत्वाशंकावारणमात्रतात्पर्यकत्वात् ॥ तथाचभगवतोबादरायणस्यसूत्रम् ॥ कामाच्चनानुमानापेक्षेति ॥ ३२ ॥ त्रैलोक्यलक्षणानामंभोधीनांसंस्थापकताधिकस्थितिपुविचार्यमाणासुचिदेवशरीरवाच्यतत्स्वरूपाजलजालिकाजलसमूहस्थानीयानाम्पवित्रस्थ ॥ ३३ ॥ तस्यामनःप्रकस्वरूपभोक्ताविधिपुटीप्रकाशकत्वमेवभोक्तृविषेकाभोक्तृत्वमितिकल्प्यतइत्याशयेनाह ॥ शरीरेति ॥ श्वरीरस्वारोपितसंबाधभासनसमर्था

निरिच्छस्वस्वभावेनवसंतेनयथांकुर ॥ तन्यतेतद्वदेवेयजगल्लक्ष्मीश्चिदात्मना ॥ ३२ ॥ चिदेवास्तुसमग्रासुसर्वदैवैकिकैवहि ॥ त्रैलोक्यांभोधिसंस्थासुशरीरजलजालिका ॥ ३३ ॥ शरीरपंकजभ्रांतमनोभ्रमरसंभृताम् ॥ आस्वादयतिसंकल्पमधुसत्तांचिदीश्वरी ॥ ३४ ॥ ससुरासुरगंधर्वसशैलार्णवकंजगत् ॥ चितिस्थिनप्रवहतिजलावर्त्तजलयया ॥ ३५ ॥ यथचित्तमयाचारचारुचतुरचक्रिकम् ॥ संसारचक्रंचिच्चक्रेभ्राम्यतिभ्रमभाजनम् ॥ ३६ ॥ चिच्चतुर्भुजरूपेणजघानासुरमंडलम् ॥ कालोजलदखंडेनसायुधेनयथातपम् ॥ ३७ ॥ चिच्छिनेत्रतयाप्रसन्नवपशीतांशुचिह्नया ॥ गौरीकमलिनीवत्कपद्मपट्पदतांगता ॥ ३८ ॥ विष्णोः पद्मालितामेत्यचिद्ध्यानाधीनमानसा ॥ ब्रह्मीनलिन्या सरसींधत्तेपैतामहींस्थितिम् ॥ ३९ ॥ चितोब्रह्मन्विचित्राणिशरीराणीहभूरिशः ॥ पत्राणीवतरोर्हंसिकेयूरादिक्रियेवच ॥ ४० ॥ चित्समस्तसुरानीकपरिवंदितपादया ॥ त्रैलोक्यचूडामणितांधत्तेवासवलीलया ॥ ४१ ॥ चित्सुभासुरतामेत्यत्रैलोक्योदरडंबरे ॥ पतत्युदेतिसंयातिस्वात्मन्येवाब्धिवारिवत् ॥ ४२ ॥ चिद्विकाचतुर्दिक्षुअवभासवितन्वती ॥ विकासयतिनिःशेषभूतसत्ताकुमुद्वतीम् ॥ ४३ ॥ चिद्रूपणमहालक्ष्मीस्त्रिजगत्प्रतिबिंबितम् ॥ गृह्णात्यनुग्रहेणांनस्वगर्भमिवगर्भिणी ॥ ४४ ॥

॥ ३४ ॥ एवंकर्तृत्वमपितस्याः स्वाध्यारोपितकारकपरिभ्रमणप्रयानिमित्तत्वमेवेत्याशयेनाह ॥ ससुरासुरेति ॥ प्रवहतिपरिवर्त्तते ॥ ३५ ॥ यथातीतिवधलयाविधोयश्चित्तमय कर्तृत्वभोक्तृत्वरूपआचारस्तेनचारवश्चतुराश्चपलाश्चव्यष्टिजीवसंसरणचक्रिकायस्मिंस्तथाविधजीवसमष्टिसंसारचक्रमायाशबलेचिच्चक्रेभ्राम्यति ॥ ३६ ॥ चर्णितलक्षणचितएवमर्यकर्तृभोक्तृत्वविशिष्यप्रपंचयति ॥ चिदित्यादिना ॥ कालोयथातु सायुधेनेंद्रधनुर्युक्तेनजलदखंडेनातपमिव ॥ ३७ ॥ ३८ ॥ विष्णोर्नाभिपद्मेअलितांभ्रमरत्वमिवएत्यप्राप्य ॥ ब्रह्मीवास्तछक्षणायानलिन्या सरसीमहासरोभूतास्थितिमूर्त्तिम् ॥ ३९ ॥ केयूरादीनांक्रियानिर्मितिरिव ॥ ४० ॥ चूडामणितांचपतामितियावत् ॥ ४१ ॥ सुभासुरतांस्पाविंत्रजोरूपताम् ॥ ४२ ॥ साक्षादपितस्याआकारमयानिमित्ततामाह ॥ चिद्विकेति ॥ ४३ ॥ महतीलक्ष्मी स्वच्छत्वास्वस्तालक्षणाशोभायैष्णवीमायाया ॥ ४४ ॥

चतुर्दशभुवनस्थानांभूतानाम् ॥ भूतीकरोतिसत्तांसंपादयति ॥ यथावारिश्री रसशक्ति अंबुधिर्जलसमूहरूपासतीसमुद्रत्वंसमुद्रस्वरूपसत्तांसंपादयतितद्वत् ॥ ४५ ॥ इदानींता मेवचितलतात्वेनरूपयति ॥ व्योमेत्यादिना ॥ व्योमात्रमायाकाशस्तल्लक्षणायाकेदारिकायाक्षेत्रभक्तौरूढाहिरण्यगर्भात्मनाअंकुरिता ॥ सत्तौघा सर्वपदार्थसत्यतास्तल्लक्ष णाफलदायिनी ॥ ४६ ॥ संवेदनानिसविकल्पज्ञानानि ॥ चित्तेहाश्चित्तवृत्तयः ॥ ४७ ॥ ४८ ॥ जडाःशैलादयएवगुल्मकामूलप्ररोहायस्याः ॥ विग्रहाश्चतुर्विधशरीराण्येवग्र थयस्तैर्वलिता ॥ आमूलाग्रप्रवृत्तिप्रतानैः परिवर्त्तितावेष्टिता ॥ ४९ ॥ पेलवमित्यादिविशेषणविशिष्टदृश्यकुसुमअनयाजन्यतइतिपरेणान्वयः ॥ सदसद्वपुरित्यस्यपरामर्शासि हमित्युपपत्ति ॥ ५० ॥ छायाचन्द्रादिकांतिरिवाच्छंस्फुटदृश्यकुसुमम् ॥ मन्यतेअभिमानविषयीक्रियते ॥ तन्यतेविस्तार्यते ॥ ५१ ॥ तस्याश्चित.सत्सत्यंचित्चेतनम् ॥ ज

चिच्चतुर्दशभूतानांमंडलानिमहांतिच ॥ भूतीकरोतिवारिश्रीःसमुद्रत्वमिवांबुधिः ॥४५॥ विचित्रालोककुसुमाघनसंकल्पपल्लवा ॥ व्यो मकेदारिकारूढासत्तौघफलशालिनी[1] ॥ ४६ ॥ जीवजालरजःपुंजवासनारससरंजिता ॥ संवेदनत्वग्वलिताचित्तेहाकलिकाकुला ॥४७॥ अतीतासंख्यत्रिजगत्केसरोज्ज्वलरूपिणी ॥ अनारतस्पंदमहाविलासोल्लासहासिनी ॥ ४८ ॥ सर्वर्तुपर्वपरुषाजडशैलादिगुल्मका ॥ विग्रहग्रंथिवलितामूलाग्रपरिवर्त्तिता ॥ ४९ ॥ चिल्लतेयंविकसितापेलवंसदसद्वपुः ॥ विचित्रंदृश्यकुसुमंपरामर्शासहंवहु ॥ ५० ॥ अन येहहिसर्वत्रच्छायाच्छमिवजन्यते ॥ मन्यतेतन्यतेवस्तुगीयतेक्रियतेपिच ॥ ५१ ॥ महाचितानयानित्यंभासंतेभास्करादयः ॥ देहाःस्वदं तेचमिथस्तत्सच्चिज्जडविभ्रमैः ॥ ५२ ॥ चिताचावर्त्तवर्त्तिन्यासिद्धान्येवप्रनृत्यति ॥ जगज्जालरजोलेखातत्सत्ताहश्यदेहिनी ॥ ५३ ॥ चि त्सर्वजगदारंभमिमंप्रकटयत्यलम् ॥ त्रैलोक्यदीपकशिखादीपोवर्णाश्रयंयथा ॥ ५४ ॥ चिच्चंद्रबिंबेविमलेशशवत्प्राप्यसंगमम् ॥ सर्व त्रलक्ष्यतामेतिपदार्थश्रीर्जगद्गता ॥ ५५ ॥ चिद्रसायनसेकेनपदार्थपटलावली ॥ रूपमेतिफलंचैवप्रावृट्सिक्तेवसल्लता ॥ ५६ ॥ चिच्छा ययैवसर्वस्यजाड्यंसम्युदेतिच ॥ सर्वस्यास्यशरीरस्यगृहस्येवतमांस्विह ॥ ५७ ॥

इचेत्यविवेकप्रयुक्तैर्भोक्तृभोग्यताविभ्रमैर्दंपत्योर्देहावस्तुतोऽमंगलरूपाअपिमिथ स्वदतेप्रीतिविषयाभवति ॥ ५२ ॥ आवर्त्तोवात्यावर्त्तस्तद्वर्त्तिन्याचितैवसिद्धातत्सत्तयैवदृ श्यदेहिनीदर्शनयोग्याकारवतीजगज्जालरजोलेखाअन्याचिद्व्यतिरिक्तेवभूत्वाप्रनृत्यति ॥ ५३ ॥ त्रैलोक्यप्रकाशनदीपकशिखाभूताचित् ॥ दीप प्रसिद्धोवर्णाश्रयरूपवद्द्रव्य यथाप्रकटयतितद्वत् ॥ ५४ ॥ चिदधीनप्रकाशतामेवजगत.प्रपचयति ॥ चिच्चंद्रबिंबेइत्यादिना ॥ ५५ ॥ ५६ ॥ ननुचिद्यदिरसायनमिवपदार्थपटलावलीसर्वतोव्याप्यस्फुर तितर्हितत्रजाड्यनस्यात् ॥ नहिसर्वतोरसार्द्रेशुष्कताया.प्रसक्तिरस्तीतितत्राह ॥ चिच्छाययैवेति ॥ यथापचीकरणेनगृहस्यापिसर्वतस्तेजोव्याप्तिसत्वात्तदतस्तमःप्रसक्त्यभावे पितैजसभास्वरतायाभूतातरभागैरभिभवाद्बहिरभिव्यक्तसौरालोकव्याप्तौतत्प्रयुक्तच्छाययाअतस्तमउदेति ॥ तथाघटाद्यधिष्ठानचिद्भास्वरतायाअप्यध्यस्तेनाभिभवाद्बहि श्चाक्षुषवृत्त्याद्यभिव्यक्तचिद्व्याप्त्यास्फुरणेतच्छाययाअतर्जाड्यमुदेतीत्यर्थ ॥ ५७ ॥

[1] टीकानुरोधेनात्रफलदायिनीतिपाठापेक्षितइतिभाति

तथाचयथार्थाःतामासाकाराः॥ययद्दमासारायाकृतिर्विचिन्मसिद्धिस्तथोवहोतरञ्जिव्यक्तक्रमात्तूचिच्चमत्कृतिमशादेवगवाश्वघटपटाद्याकृतिर्वैचिन्म्यसिद्धिर्नोन्यथेत्याह॥ चि
चमत्कृतयइति॥ त्रैलोक्यदहासिद्धान्तर्गता साकारपदार्था एतेछायाआदर्शेत्यव्यक्ताआकृतिमाकारमपिनस्पृशेयुः साधकांतराभावादित्यर्थः ॥ ५८ ॥ क्रियाविहितनिषिद्धे
पुनरक्ति सैवकुलवधू ॥ ५९ ॥ उक्तमर्थमनुभावचित्पुण्यतिरेकमुखेनापिप्रसिद्धोदाहरणेषुसमर्थयति ॥ चिदालोकमिति द्वाभ्याम ॥ स्फुरन्नुसचलन्नुपामुखमपिप्रकटनाएतिय
दृष्ट ॥ किरत्तप्रपत्रप्रकारकालदेशानांनिरासः ॥ ६० ॥ स्वांगानिशाखा यस्य ॥ कुन्तलाल्लि केशसमूहोलतायस्मिन् ॥ चिन्मज्जनंचिदाभिषेचना ॥ ६१ ॥ एवंचचिदधी
नजन्मरक्षादिसवभावत्वाज्जगज्जलाधीनसर्वभावसरगादिजलमिवचिदेवपरमार्थतइतिसिद्धमित्युपसंहरति ॥ वर्द्धतइति ॥ ६२॥६३॥ यथकाचिदेवास्तितर्हितदात्मकं अ
र्थेरहानिद्रामूर्छामरणपूर्वकारान्तस्यांतरचअवनिस्फारमर्यामनुष्यपुरभूतविकारशून्याअधानेभासिद्दामाभिमित्तिरिवनचततिनत्कथमित्यर्थः ॥६४॥ तदेवस्पष्टंपुनराह ॥ अयमिति॥

चिच्चमत्कृतयोदेहेनभवेयुरिमायदि॥ त्रैलोक्यदेहास्त्वंकेतेनस्पृशेयु किलाकृतिम्॥ ५८॥ चिदाकाशप्रकाशेस्मिन्संकल्पशिशुधारि
णी॥ क्रियाकुलवधूर्देहगृहेस्फुरतिचंचला॥५९॥ चिदालोकविनाकस्यरसनाप्रस्फुरन्नपि॥ कथंकदाप्रकटतामेतिदृष्टंक्ववारस ॥६०॥
शृण्वंगस्वांगशाखापिकुन्तलालिलतोप्यलम्॥ चिन्मज्जनंविनादेहवृक्ष कक्ववराजते ॥ ६१ ॥ वर्द्धंतेविलुठत्यत्तिचिच्चराचरकारिणी॥
चिदेवास्तीतरन्नास्तिचिन्मात्रमिदमुत्थितम्॥ ६२॥ ॥श्रीवसिष्ठउवाच॥ ॥इत्युक्तवांस्तदाम्यक्ष सुधांशु स्वच्छयागिरा॥ पुन पृष्टो
मयारामसुधांशुस्वच्छयागिरा॥ ६३॥ यदिसर्वगतादेवचिदस्त्येकातदात्मक॥ तदयंचावनिस्फारमयाधेवनचेतति॥ ६४॥ अयन्वि
त्यान्पुराभूत्वाचिद्धीनप्रतिस्थित ॥इतीयंकल्पनालोकेप्रत्यक्षानुभवाकथम्॥ ६५॥ ॥श्रीईश्वरउवाच॥ ॥ शृणुवेतदखिलब्रह्म
न्यदाप्रष्टवदामिते॥ महानयत्वयाप्रश्न कृतोब्रह्मविदांवर॥६६॥ चिदस्तिहिशरीरेहसर्वभूतमयात्मिका॥ चलोन्मुखात्मिकैकातुनिर्विक
ल्पापरास्मृता॥६७॥ संकल्पमुद्यासैवांत स्वयमन्येवसास्थिता॥ संकल्पितेतरवरादौ शील्यत्नीययागता॥ ६८॥ सएवहिपुमान्कोपाय
येहान्यद्इवक्षणात्॥ भवत्येवंविकल्पांकाचित्स्वरूपान्यतांगता॥ ६९॥

अयमेहारि पुराहस्यभावात्पूर्वंजीवनदशायांचचित्स्वाम्चेतनावान् ॥
तसीमतयद्भिन्नत्वाज्जस्वाभाव ॥ भूत्वासम्प्रतिदस्यमरणादिदशायांचिद्धीनः स्थितइतीयकल्पनाकथंचिमोऽविनाशिस्वभावत्वादपरिणामित्वाच्चकथमपिजाड्यायोगादिति
भावार्थः ॥ ६५ ॥ यथातच्चेतनस्यैवजीवादित्वंतदुष्यनामिनिमाकल्पमश्नात्तरमनुत्थित्वाश्चातरेवसिद्धेनफलेनपोरप्युत्तरंसहैवयजुत्कामईश्वरउवाच ॥ शृण्विति ॥ अखिल
मामनप्रश्नोत्तरसहितंसर्वम ॥६६॥ वक्ष्यमाणोपादानमथमोविवमतिबिंबविदिविभ्यरहेदर्शयति ॥ चिदिति ॥ इकिल चलायांव्यष्टिसमष्टिबुद्धौ उन्मुखास्मिकाआसक्तस्व
भावा ॥ विज्ञानमयशब्दवाच्यकर्तृभोक्तृत्वभावेत्यर्थः ॥ पराकूटस्थचिन्तूनिर्विकल्पा ॥ ६७ ॥ तस्याश्चलस्वभावत्वमिवभेदोप्युपाधिकृतएवेत्याशयेनाह ॥ संकल्पेति ॥ इ
नाहमिमासिसादेवनाअनेनजीवेनात्मनानुप्रविश्यनामरूपेव्याकरवाणीतिश्रुतिर्दर्शितसकल्पनस्वात्मानमेवजीवात्मनानुद्धानुभवनी ॥ आदिकर्मणिक्त कर्तरिचेतिकर्तरिक्तः ॥
यथागुर्वठिवर्णात्मसंकल्पितइतरोवरउपपत्निर्यथातथाविभातीति शील्यंगतासतीद्वितीयेनसम्मानतम् ॥ ६८ ॥ पुनान्मनुष्यः अम्भोराशतद्वज्जूरोभवतितद्वत् ॥ ६९ ॥

एवंरीत्यास्वरूपात्परिच्युताचित्क्रमाज्जाड्यजडतादात्म्यभावयंतीसतीकलनायाः सविकल्पबुद्धेः पदंविषयतांप्रयातिस्वकल्पनयैवेत्यर्थः ॥७०॥ आकाशसहितानिपरमाणूनिसू क्ष्मभूतानितद्भावरूपाशब्दस्पर्शरूपरसगंधरूपभोग्यानांबीजात्मिकाचेत्यतामायोपलक्षितचिद्विषयताएतिपश्चाद्धाततन्मात्रसमष्टिप्राणभावस्तद्गामिनीभवति ॥ ७१ ॥ तथाभू तायास्तस्याः पंचीकरणप्रयुक्तस्थूलभूतात्मकसमष्टिव्यष्टिस्थूलदेहभावंतदंतर्लिंगदेहेजीवभावंतत्रबुध्यादिभावंचदर्शयति ॥ देशेति ॥ तन्मात्रैः सूक्ष्मभूतैः पंचीकरणेनवलितासंव लितासतीसमद्वीपचतुर्दशलोकात्मकदेशविभागातानिमेषादिद्विपरार्धावधिकालविभागाताचक्रमाद्भवति ततस्तत्रप्राणधारणाज्जीवोभूत्वाबुद्धिरहंकारोमनः अर्थाच्चित्तंचभव तीत्यर्थः॥७२॥७३॥ ब्रह्मचिदेवअप्रबोधेनाज्ञानेनशबलरूपमासाद्यदेहजीवाकारेणसकल्पितासतीतत्प्रयुक्तजाड्येनअविश्वप्रबोधिनीअसर्वज्ञाभूत्वापुनःपुनर्भोगसंकल्पादनारत

विकल्पकल्पिताब्रह्मंश्चित्स्वरूपपरिच्युता॥ जाड्यंक्रमाद्भावयंतीप्रयातिकलनापदम् ॥ ७० ॥ चित्स्वयंचेत्यतामेतिसाकाशपरमाणुता म्॥ शब्दबीजात्मिकांपश्चाद्धाततन्मात्रगामिनी॥७१॥ देशकालविभागांतातन्मात्रवलिताक्रमात्॥ जीवोभूत्वाभवत्याशुबुद्धिःपश्चा दहंमनः॥ ७२ ॥ मनस्त्वंसमुपायातासंसारमवलंबते॥ चंडालोस्मीतिमननाच्चंडालत्वमिवद्विजः॥७३॥ संकल्पिताप्रबोधेनजाड्यावि श्वप्रबोधिनी॥ शबलंरूपमासाद्यसंकल्पाद्यात्यनारतम्॥७४॥ अनंतसंकल्पमयीजाड्यसंकल्पपीवरा॥ चिज्जाड्यान्मोहमायातिपयः पाषाणतामिव॥७५॥ ततश्चित्तंमनोमोहोमायेतिविहिताभिधा॥ जाड्यंनिपुणमाश्रित्यसंसारेजायतेमुने॥७६॥ मोहमांद्यमुपायाता तृष्णानिगडपीडिता॥ कामक्रोधभयोपेताभावाभावातिपातिनी॥ ७७ ॥ त्यक्तानंतनिजाभोगाव्यवच्छेदविकारिणी॥ दुःखदावान लातप्ताशोकाशिवकृशाशया॥ ७८ ॥ इयमस्मीतिभावेनशून्येनविकलीकृता॥ देहमात्रगृहीतास्थापरंदैन्यमुपागता॥ ७९ ॥ मग्नामो हमहापंकेजीर्णेववनदंतिनी॥ भावाभावलतादोलापरिलोलशरीरका॥८०॥ असारापारसंसारविकारव्यवहारिणी॥ तापोपतप्तह्रद यारागतेजोनुरंजिता॥ ८१ ॥ निजयूथपरिभ्रष्टामृगीवावशतांगता॥ आविर्भावोदिताकारातिरोभावेस्तमागता॥८२॥ स्वसंकल्पोप यातासुभीतासंभ्रमदृष्टिपु॥ पलायतेवाप्यन्यासुवेतालेष्विवबालिका॥८३॥ उष्ट्रीवमधुरंबिंदुंवांछतेभावितंसुखम्॥ अवांतरपरिभ्र ष्टादोपाद्दोपंपतत्यधः॥८४॥

यातिसंसरति ॥ ७४ ॥ पयोजलपाषाणताकरकात्वमिवमोहजीवताभ्रममायाति ॥ ७५॥७६॥ भावोविभवः ॥ अभावोदा रिद्र्यंतदनुपातिनी ॥ ७७ ॥ व्यवच्छेदेषुभार्यापुत्रादिवियोगेषुशोकादिविकारिणी ॥ शोकैरशिवैश्चकृशाशयाकृपणा ॥ ७८ ॥ इयप्रत्यक्षदुःखमोहादिस्वभावैवाहमस्मीति भावेनभ्रमेण ॥७९॥८०॥ रागेणतेजसाक्रोधेनचानुरंजिता ॥८१॥ विभवानाभूतमात्राणावाआविर्भावेउदिताकारात्दृष्टाअभिव्यक्तावा ॥ अस्तंदैन्यंतिरोभाववा ॥ ८२ ॥ ॥ ८३ ॥ यथाउष्ट्रीकंटकनिंबपत्रादिषुचर्व्यमाणेषुस्ववासनाभावितबिंदुमल्पतरमधुररसंकांक्षतेतद्वद्दुःखबहुलेषुविषयेषुसुखकांक्षतइत्यर्थः॥ अथवायथाउष्ट्रीविषमप्रांशुवप्र प्ररूढवृक्षाग्रसंबद्धमधुपटलप्रस्रुतमधुबिंदुलेहनवांछयावृक्षमारुरुक्षुर्युगपत्पुरःपादोन्नयनमात्रात्स्वदेहभारेणावांतरपरिभ्रष्टावप्राधोविषमदेशेपततितद्वत्पततीत्यर्थः ॥ ८४ ॥

॥८५॥ नरकादिभूमिषुकष्टात्कष्टमनुप्राप्ता॥८६॥ क्रमात्मानुष्यलाभेपिबाल्यावस्थायांतिव्यवहारकौशलाभ्यासवैदग्ध्यात्कौशलाद्वैदग्ध्यांगकाव्यनाटकतर्काद्यभ्यासमुपागता सतीविविधस्यस्वस्यधनपशुक्षेत्रपरिवारादेर्निर्माणेयःपराक्रमस्तत्पदमेवगतानमोक्षोपयोगिविवेकपदमित्यर्थः ॥८७॥ एवंक्रमेणवयःपारप्राप्यप्राणात्ययमुपागतासतीसंततोभीतारांकले ॥ विवर्तनंभूमीलुठनंतत्परायणा ॥ ८८ ॥ संक्षेपोक्तमपपश्यति ॥ बाल्येइति ॥ विवशापराधीनासर्वैअर्थाभोगायस्या ॥ चिंतयाचित्तविषयादिचिंतयाआवृतापिहितविवेका ॥ ८९ ॥ कर्मगतीरेवप्रपश्यति ॥ जायतइत्यादिना ॥ ९० ॥ कुलपर्वतेहिमवदादौ ॥ ९१ ॥ देवगिरौमेरौ ॥ वीरुत्गुल्मिनी ॥ ९२ ॥ नारायणादीनामपिजीवगतिपुनःपवन पदमेवहितन्नित्यमनित्यापवित्र स्मृमादेत्यादिविशिष्टपुराणानुरोधात् ॥ नारायणादिसारूप्यमुक्तजीवविषयेवायोज्यम् ॥ अथवाङ्गजआरभ्यनजीवगतयः

परवैपम्यमायातिसकष्टात्सकष्टगता॥ दुःखाद्दुःखंनिपतिताविपदोविपदिस्थिता ॥८५॥ नानानर्थगणोपेताचेष्टापरवशाशया ॥ कष्टात्कष्टमनुप्राप्तापरितापानुतापिनी॥८६॥ क्रमादासाद्यवैदग्ध्याद्वैदग्ध्यांगमुपागता॥ विचित्रवधनिर्माणपराक्रमपदंगता ॥ ८७॥ सवतःशंकतेभीताप्राणात्ययमुपागता॥ क्षीणतोयेवशफरीविवर्त्तनपरायणा ॥८८॥ बाल्येविवशसर्वांगायौवनेचिंतयावृता॥ वार्धकेप्यतिदुःखार्त्तांम्ताकर्मवशीकृता॥८९॥ जायतेस्वर्गनगरेनागीपातालकोटरे॥ आसुरीदैत्यविवरेनरस्त्रीवसुधातले॥ ९०॥ राक्षसीरालसाधारेवानरीवनकोटरे॥ सिंहीगिरींद्रशिखरेकिन्नरीकुलपर्वते ॥ ९१॥ विद्याधरीदेवगिरौव्यालीचवनगर्त्तके॥ लतातरौस्वगीनीडेवीरुत्सानौवनेमृगी॥ ९२॥ शैतेनारायणोंभोधौध्यानीब्रह्मपुरेब्जज ॥ कांतागतोहरःशैलेस्वर्गेसुरवरोहरि ॥९३॥ दिनकरोतितीक्ष्णांशुर्वर्षत्यंबुधरोजलम्॥ करोतिश्वसनसवित्सपर्वतमहोदधिम्॥९४॥ ऋतुचक्रंप्रवहतिसहसाकालमंडलम्॥ दिनरात्रितयोपैतितेजस्तिमिरतांक्रमात्॥ ९५॥ क्वचिद्बीजरसोल्लासात्क्वचित्पाषाणमौनिनी॥ क्वचिन्नदीरसवतीक्वचित्कुमुदविस्तृति ॥९६॥ क्वचित्फलावलीपाके क्वचित्काष्ठानलादिभिः ॥ क्वचिच्छैत्यहिमहारिक्वचित्खादिनकिंचन ॥ ९७॥ क्वचिदुज्ज्वलिताकाराक्वचित्कष्टाशिलाक्वचित्॥ क्वचिन्नीलायहरिताक्वचिदभ्रंक्वचिन्मही ॥ ९८॥ सर्वात्मत्वात्सर्वगत्वात्सर्वशक्तित्वयोगतः ॥ सर्वात्वादेवरूपैवखादप्यच्छैवसापरा॥ ९९॥ चिच्चिनोतियथात्मानंयेनयत्रयदायदा॥ तत्तथानुभवत्यंगुस्पष्टाक्षीव्यादितांयया॥ १००॥

प्रपच्यनेर्विजृंभित सर्वव्यापारकस्तुतैवस्पष्टोपः ॥ कामयागत अर्धामसंगत ॥ ९३ ॥ श्वसनादिपदैवाप्याविव्यापारालक्ष्यते ॥ ९४ ॥ ऋतुघटितसंवत्सरचक्रम् ॥ कालमंडलयुगमन्वंतरादि ॥ ९५ ॥ क्वचिद्बुद्धावीजात्मकस्तत्प्ररतारेणुरसात्मकस्योल्लासोयस्या ॥ पाषाणेमौनिनीनिश्चला ॥ ९६ ॥ वृतीयांतपदद्वयानंतरमुपलक्षितेत्यध्याहार्यम ॥ शैत्येनहिममिवाचरत्हिमत्वारिजलंयस्या ॥ खमाकाशआविपवावायुश्वअप्यन्याकिंचन ॥ ९७ ॥ कष्टाकुशार्कंटकादिदुर्गमा ॥ ९८ ॥ सर्वशक्तित्वमायातयोगतः ॥ सर्वात्वादेवरूपाजमहैव ॥ सर्वनाशोत्पत्तिमाध्यपुंवप्राणच्छांवसत्वान्नकृत ॥ परमार्थतस्तुखादप्यच्छैवसाचिदित्यर्थः ॥ ९९ ॥ चित्आत्मानस्वयेनभावनप्रभययाचिनोतिविवर्त्तनापचयनपतितयातथाभावमनुभवतीत्यर्थः ॥ १०० ॥

वटीकाद तान्भावान्पुनःप्रपंचयति ॥ हंसीत्यादिना ॥ पुनर्बकीग्रहणमतिदीर्घपादचंचुजात्यंतरसंग्रहार्थम् ॥ एवंबलाकाग्रहणमप्यतिधवलतूलकंठजातिग्रहणाय ॥ १०१ ॥ वटीकाद य पक्षिजातिभेदाः ॥ शालीशारिका ॥ प्रीतीरतिरितिद्वलोपेदीर्घ ॥ शवरीमाया ॥२॥ योनिषुदेहभेदेषु ॥ ३ ॥ अवलादुर्बला ॥४॥५॥ कर्मात्माकर्मानुसारस्वभावा ॥ तथा चश्रुतिः ॥ यथाकारीयथाचारीतथाभवतिसाधुकारीसाधुर्भवतिपापकारीपापोभवतिपुण्योवैपुण्येनकर्मणाभवतिपापःपापेनेति ॥६॥ अनन्ययास्वातिरिक्तसत्तास्फूर्तिशून्यया अविद्ययाअन्यवस्थितमनियतम् ॥७॥ भर्तृहीनानायिकेवानाथास्थितेतिशेषः ॥१०८॥ हेरामत्वजडगतेरविद्याया शक्ततासामर्थ्यमवलोकययद्यस्माद्धेतोर्यापूर्णब्रह्मस्वभावा पिचित्अरघट्टस्यघटीयंत्रस्यघटीषुप्रविष्टघनपीठमाकाशस्तेनतुल्यतद्वत् ॥ निजस्यनिरतिशयानंदपूर्णभावस्यघनसमुद्रादिसकलजलोपलक्षितसर्वजगदनर्भावनसामर्थ्यस्यच

हंसीक्रौंचीबकीकाकीसारसीतुरगीवृकी॥ बकीबलाकाहरिणीवानरीकिन्नरीशुनी ॥ १०१ ॥ वटीकापिंगलीशालीमक्षिकाभ्रमरीशुकी॥ धीःश्रीर्ह्रीःप्रीतीरतिश्चशंबरीशर्वरीशशी ॥ २ ॥ एतास्वन्यासुचान्यासुपरिभ्रमतियोनिषु॥ विवर्तमानसंसारजलावर्त्ततृणंयथा ॥ ३ ॥ बिभेत्यथस्वसंकल्पात्स्वशब्दादिवगर्दभी॥ नानयासदृगन्यास्तिमुग्धाबालाचलाऽबला॥ ४॥ एषासाकथितातुभ्यंजीवशक्तिर्महामुने॥ प्राकृताचारविवशावराकीपशुधर्मिणी॥ ५ ॥ कर्मात्मेत्यभिधांप्राप्तशोच्यास्यपरमात्मनः॥ अनंतदुःखबहुलंस्वयंविभ्रममाश्रिता॥ ६॥ असदेवानयाक्रांतंविनाशिसहजंमलम् ॥ तंडुलेनेवकंचूकमनन्ययाऽव्यवस्थितम्॥ ७॥ अनंतविभवभ्रंशादौर्भाग्यपरितापिनी॥ शोचंतीप्राप्यजीवत्वंभर्तृहीनेवनायिका॥ ८॥ जडगतेरवलोकयशक्ततांनिजपदस्मरणेनविनेहचित्॥ व्रजतिकष्टमधःपतनाययायदरघट्टघटीघनपीठवत् ॥ १०९॥ ॥इत्यार्षेवा०वा०दे०मो०नि०पू०शिवपूजोपाख्यानेचेत्योन्मुखचिद्विचारोनामत्रिंशः सर्गः॥३०॥ ॥ध॥ ॥श्रीईश्वरउवाच॥ ॥चिनोत्यलीकमेवैवंसदुःखास्मीतिभावनात्॥चित्स्वप्नक्षीवतामोहपतितासंभ्रमेयथा॥१॥ अमृतापिमृतास्मीतिविपर्यस्तमतिर्वधूः॥यथारोदित्यनष्टैवनष्टास्मीतितथैवचित्॥२॥अकारणंविपर्यस्तामतिर्भ्रांतमपिस्थिरम्॥यथा जगत्पश्यतीदंतथाहंताभ्रमाच्चिति॥३॥ चित्तंहिकारणंत्वस्याःसंसारानुभवेचितेः॥ नचतत्कारणंकिंचिच्चित्त्वान्यत्वात्यसंभवात्॥४॥

स्मरणेनविनादेहमात्रपरिच्छिन्नाहघटीमात्रपरिच्छिन्नमहभोगनिमित्तपुण्यव्ययेअल्पजलक्षरणेचममरिक्ततैवसपन्नेतिमन्यमानापुनःपुनःस्वपतनायअधोधोव्रजतितत्कष्टमि त्यर्थः ॥ १०९ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू०त्रिंशत्तमःसर्गः ॥ ३० ॥ ॥ध॥ ॥ जीवतादिनिषेधेनसाशुद्धाचित्प्रदर्श्यते ॥ मनःप्राणेंद्रियद्वारावहिरतः प्रथायया ॥ १ ॥ एववर्णितप्रकारजीवजगद्भावमलीकमसदेवाज्ञानाच्चिनोतिआरोपेणसचिनोति ॥ स्वमेक्षीवतामदिरामदस्तत्कृतेसमोहेपतिता ॥ १ ॥ वधूर्मुग्धा ॥ भ्रांतकुलालचक्रादियथास्थिरनिश्चलपश्यतितथाजगदपिस्थिरपश्यति ॥ ३ ॥ तच्चित्तंकिंचिद्वस्तुन ॥ कुतः ॥ चित्त्वस्यतदन्यत्वस्यचअत्यंतमसंभवात् ॥ अचित्त्वेजगदंतःपातेनतत्कल्पनाहेतुत्वायोगादित्यर्थः ॥ ४ ॥

१ आर्षोदीर्घः

चित्तासत्त्वादेवतच्चेत्यजगतोप्यसत्त्वसिद्धमित्याह ॥ एवमिति ॥ यथाचिताचित्तयत्नतश्चेत्यतेअसौचित्‌चित्ततदधीनचेत्यचर्नाकिंतुशुद्धैवेत्यर्थ ॥ ५ ॥ चित्तनिषेधादेवचितिच
क्षुरादियुक्तदृश्यदर्शनदृष्टृरूपत्रिपुटीनिषेधोपिसिद्धइत्याह ॥ नेत्यादिना ॥ दृशिचिति ॥ ६ ॥ चिच्चित्तवृत्तिश्चेतनसत्ताश्रयश्चेत्यामितिविषया ॥आदिपदाम्नातमतिमतध्यबुद्धि
योपृषोद्भ्याअहंकथहंकाराहंकार्याणिगृह्यते ॥ ७ ॥ तत्त्वपरोक्षवस्त्वतरत्वम्‌ ॥ आदिपदात्तदाश्रयप्राप्यतत्वधागृह्यते ॥ ८ ॥ नानाजीवभेदाअनानामतिदेहमात्माभेदा
भ्यासाश्रापिन ॥ अणीअत सुमेरवद्‌व ॥ शब्दानामानिअर्थारूपाणितेषांशब्दश्री कथापिनास्ति ॥ ९ ॥ अथातआदेशोनेतिनेतीत्यादय शास्त्रीयसर्वदृश्यनिषेधाअपितत्त्व
मप्रत्यानपर्यंतमेव दृष्टेनुचित्तत्वमतियोग्यप्रसिद्धस्तेपिनसंभवनीत्याह ॥ नेतीति ॥ वस्त्वतिरिक्तावस्तुताअवस्तुताव्यधर्माअपिनस्त ॥ १० ॥ शिलाया कोशोगर्भे ॥ सेयथाप्रसि

एवंहिकारणाभावाच्चेत्यस्याप्रसंभवादिति॥ नासौचित्तंततश्चेत्ययत्नतश्चेत्यतेयया॥५॥नदृश्यदर्शनद्रष्टृरूपतैलमिवोपले॥ नकर्तृकर्मक
रणदर्शीदाविवरुण्णता॥६॥ नमातृमेयमानानिनप्रसीवनवांकुर ॥ नचित्तचेतनचेत्यादिनदनेखदिरोयथा॥७॥ नाहत्वत्वत्वतत्त्वादिप
वंतत्वमिवाम्बरे॥ सदेहत्वान्यदेहत्वेशत्वमिवकज्जले॥८॥ नानानानानचाप्यतरणाविवसुमेरव ॥नचशब्दार्थशब्दश्रीमहोपरलताय
था॥९॥ नेतिनेतिनचैवार्कमहलरजनीयथा॥ नवस्तुतावस्तुतेचतुपारेतुययोष्णता॥१०॥ नशून्यताशून्यतेवाशिलाकोशइवद्रुम ॥ शू
न्यताशून्यतानाममहतीखइवाखता॥११॥ केवलकेवलीभावस्वच्छतैवावशिष्यते॥ नचित्तात्कस्यचिद्दोषाज्जातयैतदवाप्यते॥१२॥
तत्सर्वंभावनामात्रेणानयप्रकृत स्थित ॥ तज्ज्ञोप्यभावनामात्रेणानर्थउपशाम्यति॥१३॥ तज्ज्ञोप्यभावनामात्राहतेन्यत्रोपयुज्यते॥
नतृणंनचत्रैलोक्यमितिस्वायत्ततात्रया॥१४॥ स्वायत्तएवचैषोर्थोदुःसाध्योभावनास्थित ॥ यदन्नसाध्यतेपुंसातत्कथंकेवलभ्यते॥
॥१५॥ निर्विकल्पाद्वितीयाचिद्यासौसकलगासती॥ परमैकापरासाच्छादीपिकातेजसामपि॥१६॥ सैषावभासनकरीसर्वगानित्यनि
र्मला॥ नित्योदितानिर्मनस्कानिर्विकारानिरंजना॥१७॥ घटेपटेवटेकुड्येशकटेवानरेखरे॥ असुरेसागरेभूतेनरेनागेचसंस्थिता॥१८॥

द्धामहतीशून्यताअशून्यताचकेवलकेवलीभावलक्षणास्वस्वरूपस्वच्छैवविमर्शोअवशिष्यतेनाणुमात्रमपिभिन्नानथाचित्यपीतिपरेणान्वय ॥ ११ ॥ ननुतर्हिहिरण्यगर्भात्मक
समष्टिचित्तमेवास्याश्रित्य सर्वानर्थहेतुर्दोष यस्मात्तत एवनिमित्ताच्चतुर्विधशरीरेषु जातयाअनयाएतत्संसारदुःखमवाप्यते नचतदस्माभिरुच्छेत्तुंशक्यमित्याशंक्याह ॥ नचि
त्तादिति ॥ चिद्रूपाच्चितोदोषभूतात्कस्यहिरण्यगर्भस्यचित्तान्निमित्ताज्जातयाएतदु स्वमवाप्यतइतिमाकिंतुतेनसष्टायेवर्हें द्रियविषयास्तेषुसर्वेष्वहममेतिसत्याइतिचभावना
मात्रेणापयक्त संसारलक्षणानर्थ स्थितइत्यर्थ ॥१२॥ अतएवतत्त्वज्ञोअभावनामात्रादुपशाम्यतीत्याह ॥ तज्ज्ञोपीति ॥१३॥ अतएवतृणमिथापवर्ज्जितुंशक्योपिमैलोक्यपरा
र्थोभावनाबलादेवातत्त्वविदांदु साध्य स्थितइत्याह ॥ नतृणमिति ॥ १४ ॥ नन्वतिसुलभोभावनात्याग स्वतएवमुक्तोमसिध्यतीतिमाह ॥ यदिति ॥ तृणमात्रस्यापिकरमसा
ध्यस्यविनाशाभादर्शनाविति भाव ॥ १५ ॥ भावनामात्रत्यागेपरमपुरुषार्थरूपापरमार्थचित्सर्वप्रसुलभेत्याशयेनतांवर्णयति ॥ निर्विकल्पेत्यादिना ॥ १६ ॥ १७ ॥ १८ ॥

यथादीपःपदार्थप्रकाशनायस्वरूपस्थित्यैवप्रभवतिनतुकांचनक्रियांकरोतितद्वच्चिदपीत्यर्थः ॥ १९ ॥ एषाएवंप्रभावापिसाचित्अमुनादेहादिभावनेनैवामलिनापिमलिनासंप न्ना एवमविकल्पाढ्यापिविकल्पिनीतिसर्वत्रयोज्यम् ॥२०॥ इदानींसर्वगतायाःसूक्ष्मतमायाश्चितएकैकस्मिन्देहएवआनखाग्रविशेषव्याप्तिलक्षणेउपचयेयुक्तिमाह ॥ निर्वि कल्पेति ॥ निर्विकल्पाविशेषाभिमानादिविकल्पास्पर्शिनीपरासर्वगतासूक्ष्माचित्वातेप्राणप्रधानेलिंगदेहेआवाताप्रतिबिंबभावेनानुगतासतीअगानिहस्तपादादीनिमर्माणिहृद यादिस्थानानिआदिपदाद्विसप्ततिसहस्रनाडीभेदचव्याप्यसर्वगतास्वसंविदतावन्मात्रेआकृष्येवचिनोतिउपचयंनयति ॥ यथादीर्घसूक्ष्मकौशेयादितंतुस्तर्कुयंत्रादिसूचीवेष्टनेअ तिदीर्घमपिस्वतावन्मात्रेउपसंहृत्यबदराद्याकारमुपचयनयतितद्वदित्यर्थः ॥२१॥ अतएवजाग्रतःपुरुषस्यचिद्बहीरूपाद्यालोकनैरतर्मनस्कारैश्चवलितासतींवोधतोबोधपक्षेभव ति ॥ निद्रायतोगच्छतस्तुस्वमेवासनामयरूपालोकमनस्कारवलितासतीअतर्बोधतोबहिस्त्वबोधतइतिपक्षद्वयेपिभवति ॥ सुषुप्तौत्वज्ञानमात्रसाक्षित्वान्नकिंचिदवेदिषमित्युत्थि

साक्षिवत्तिष्ठतिसतीस्पंदतेनचकुत्रचित् ॥ दीपःप्रकाशनायेवकरोतिनपुनःक्रियाम् ॥ १९ ॥ मलिनाप्यमुनैषासाविकल्पाढ्याविकल्पि नी ॥ जडेवाप्यजडाभासानसर्वासर्वगैवच ॥ २० ॥ निर्विकल्पापरासूक्ष्माचिच्चिनोतिस्वसंविदम् ॥ वातावातांगमर्मादियथायंत्रादिवे ष्टने ॥ २१ ॥ रूपालोकमनस्कारावलिताचिदबोधतः ॥ बोधतश्चैवभवतिनिद्रांसदसतीयतः ॥ २२ ॥ सापरैवचिदत्यच्छाचिंतामाया तिचेतनात् ॥ साधुरेवयथासाधुर्भावितेदुर्जनैषणाः ॥ २३ ॥ मलेनस्वर्णमायातिताम्रतांमलमार्जनात् ॥ पुनःकनकतामेतियथाचित्प रमातथा ॥ २४ ॥ स्वारोपशांत्यास्वादर्शोयथैतिप्रतिमास्थितिम् ॥ तथासर्गमिवागम्यबोधात्स्वंयातितत्पदम् ॥ २५ ॥ अभाववेदनाद स्याःसंसारःसंप्रवर्त्तते ॥ स्वभाववेदनादेषत्वसदेवोपशाम्यति ॥ २६ ॥ यदाचित्वाच्चिनोत्यंतरन्यतामसतींतदा ॥ अहंतामिवसंप्राप्य नश्यतीवाप्यनाशिनी ॥ २७ ॥ ईषत्स्पंदादधोयातिभृगुप्रांतात्तरोःफलम् ॥ यथातथैवसंवित्तेरधःपातोमहानिव ॥ २८ ॥ रूपादीनांतुसत्तै पाचितएवामलैवचित् ॥ द्वित्वैकत्वेत्वबोधोत्थेबोधेनविलयंगते ॥ २९ ॥ सत्तामात्रेणचित्तस्यबोधश्चित्तेंद्रियादिषु ॥ आलोकसत्तामा त्रेणव्यवहारःक्रियास्विव ॥ ३० ॥ तस्यपरामर्शाच्चसदसतीसत्यप्यसत्प्रायाअबोधपक्षएवभवतीत्यर्थः ॥२२॥ साअत्यच्छाब्रह्मचिदेवदेहाद्यात्मताचेतनातदनुकू लप्रतिकूलप्राप्तिपरिहारचिंतामायाति यथासाधुरेवदुर्जनसंगत्याचिरचित्तेभावितेसंस्कृतेसतिदुर्जनैषणाःप्राप्यअसाधुर्भवतितद्वदित्यर्थः ॥ २३ ॥ अतएवपुनर्ब्रह्मात्मताभाविते चित्तेसब्रह्मैवभवतीत्याशयेनदृष्टांतमाह॥मलेनेति ॥२४॥ यथाशोभनआदर्शोदर्पणःस्वारोपितमलस्यमार्जनेनशांत्याप्रतिमास्थितपुनःपुनःप्रतिबिंबाभिव्यक्तियोग्यांस्थितिस्व च्छतामेतितद्वच्चिदप्यज्ञानाज्जडजीवभावादित्सर्गमिवागम्य ॥ वाल्यपीत्यनुनासिकलोपविकल्पः ॥ आगत्यस्थितातत्त्वबोधात्तत्कैवल्यपदयातीत्यर्थः ॥ २५ ॥ अभावःअसद ज्ञानंतद्वेदनात ॥२६॥ अन्यताभेदम् ॥ उदरमतरकुरुतेअथतस्यभयंभवतीतिश्रुतेरितिभावः ॥२७॥ ईषत्स्पंदाद्वृतवियोजकप्रच्युतिमात्रात् ॥ भृगुर्गिरितटतत्प्रांतात् ॥ एषजीव भाव ॥२८॥ चितएवेति ॥ अध्यस्तस्याधिष्ठानव्यतिरिक्तसत्वाभावादितिभावः ॥ द्वित्वैकत्वेभेदाभेदाध्यासौ ॥ २९ ॥ चित्तस्यचित्तसाक्षिणः ॥ ३० ॥

१ चित्पदमित्यपिपाठः

मनसस्तुरथःप्राणइतियदुक्तंतत्रवक्ष्यमाणार्थोपयुक्तविशेषवक्तुमुपपत्तिमाह ॥ रथइति ॥ कल्पनायामानसकल्पनायानिमित्तत्वादितिशेष ॥ तदेवदर्शयति ॥ यत्रेत्यादिना ॥ ४३ ॥ बलीसूत्ररूपत्वात्सर्वधारणचालनसमर्थः ॥ ४४ ॥ एवमनसोपिप्राणक्रियानिमित्तत्वमस्तीतिव्यतिरेकमुखेनाह ॥ मनसीति ॥ आकाशेहार्दाकाशेसंलीनेसति ॥ ४५ ॥ रूपयथानराजतेतद्वदित्यर्थः ॥ एवप्राणनिरोधादपिमनोनिरुध्यतइत्याह ॥ प्राणेइति ॥ ४६ ॥ अतएवतस्यतद्रथत्वमुक्तमित्याह ॥ यत्रेति ॥ ४७ ॥ ४८ ॥ क्षेपणयत्रविशेष ॥ अन्यथाप्राणनिरोधेमनःक्षयिक्षीयतइत्यर्थ. ॥ ४९ ॥ प्राण समष्टिव्यष्टिरूपः ॥ इदुश्चद्रस्तदशाभूतंमनश्च ॥ छविश्चंद्रिकामनोवृत्तयश्च ॥ अतएवचाक्षुषादि

रथस्त्वत्रस्मृतःप्राणःकल्पनायामुनीश्वर॥ यत्रप्राणमरुत्तत्रमननंपरितिष्ठति ॥ ४३ ॥ आलोकश्रीःस्थितायत्ररूपंतत्रैवराजते॥ प्राणोबलीस्थितोयत्रतदेवपरिवेपति॥ ४४॥ यत्रयातिवनंवात्यातदेवपरिघूर्णते॥ मनस्याकाशसंलीनेनप्राणःपरिवेपति ॥ ४५॥ तेजस्यसत्तामायातेनरूपमिवराजते॥ प्राणेप्रशांतेमरुतिमनोंतर्नमनागपि॥ ४६ ॥ वात्यायामुपशांतायांरजोनपरिकंपते ॥ यत्रप्राणोमरुद्यातिमनस्तत्रैवतिष्ठति॥ ४७॥ यत्रयत्रानुसरतिरथस्तत्रैवसारथिः॥ प्राणसंप्रेरितंचित्तंयातिदेशांतरेक्षणात्॥ ४८॥ क्षेपणोन्मुक्तपाषाणइवतत्रान्यथाक्षयि॥ यत्रपुष्पंतत्रगंधोयत्राग्निस्तत्रसोष्णता॥४९॥ यत्रप्राणोमरुद्यातियत्रेंदुस्तत्रतच्छविः॥ संवित्तिःपवनस्पंदान्नाडीसंस्पर्शनश्वसः॥ ५० ॥ संवित्तिस्फारताचित्तंमनस्तत्प्राणकोटरे॥ सर्वत्रविद्यतेसंविद्व्योमस्वच्छाजडाजडे॥ ५१ ॥ क्षुभ्यंतीवतुसाप्राणस्पंदादित्यनुभूयते॥ सत्तामात्रस्वरूपेणजडेपुसमवस्थिता॥ ५२ ॥ प्राणसंबोधितावेत्तिवेदनात्मतयाजडे॥ नानास्फारसमुल्लासैर्यःपूर्वंपरिवल्गति॥ ५३ ॥ प्राणेतीतेत्वमननःसएवाशुनवेपति॥ पुर्यष्टकेचित्परमास्वेमुनेप्रतिबिंबति ॥ ५४ ॥ आदर्शएवप्रतिमादृश्यतेनोपलादिषु॥ मनःपुर्यष्टकंविद्धिसर्वकार्यैककारणम्॥ तदेवभेदैःकथितमन्यैःस्वाशयकल्पितैः॥ ५५ ॥

सवित्तिषुप्रत्येकवायोरपिनिमित्ततांप्राज्ञयोपदर्शितेत्याशयेनाह ॥ सवित्तिरिति ॥ सर्वांगेष्वन्नरसप्रवेशार्थसर्वनाडीसस्पर्शनश्वसपवन ॥५० ॥ चित्तमनोघटितलिंगशरीरात्मकेतस्मिन्प्राणकोटरेचितोबिबप्रतिबिबभावेनद्विगुणीकरणेनस्फारतापितत्तस्मादेवोपपन्नेत्याह ॥ सवित्तीति ॥५१॥ तत्रोपपत्तिमाह ॥ क्षुभ्यतीवेति ॥ स्फुटाभिव्यक्त्यासंचलंतीवयतोलिंगेचिदनुभूयतेइत्यर्थः ॥ ५२ ॥ जडेपिदेहेप्राणसबोधितासतीसर्गादिवेदनात्मतयाआध्यासिकचित्तादात्म्यबलेनवेत्ति ॥ योदेहःपूर्वंजीवनदशायापरिवल्गति व्यवहरति ॥ ५३ ॥ सएवनवेपतिनकपते ॥ भूतातःकरणप्राणज्ञानकर्मेंद्रियैर्युतम् ॥ अविद्याकामकर्माढ्यलिंगपुर्यष्टकविदुः ॥ तस्मिन्पुर्यष्टके ॥ ५४ ॥ ननुप्राणनिमित्तोमनसिचित्प्रतिबिंबउक्तइदानीतुपुर्यष्टकेसउच्यतेतत्कथनविरोधस्तत्राह ॥ मनइति ॥ अन्यैराचार्यैःस्वाशयकल्पितैःशिष्यबोधनोपायै ॥ ५५ ॥

---

१ पुस्तकांतरेप्राणसबोधितोवेत्तिवेदनात्मतयाजड इतिमूलपाठस्तदनुरूपोजडोपिदेहःप्राणसंबोधितःसन्नित्यादिटीकापाठश्चोपलभ्यते

इदानींजीवतदुपाधितद्भोग्यलक्षणस्यविश्वस्योत्पत्तिस्थितिलयेषुचित्तकरसस्मात्प्रधानत्वात्परमात्मनोब्रह्मैवतदित्यनुभावयन्नुपसंहरति ॥ यस्मादिति ॥ यस्माद्धतोस्तम भिस्येवोदेति ॥ यचयस्मात्तस्मिन्नेवस्थितवत् चकारात्तस्मिन्नेवलीयते यस्माद्धेतोमनएवदेहदृश्यादिविपरिवर्ततिभ्रमति ॥ छांदसपरस्मैपदम् ॥ तत्तस्माद्विश्वपरमवस्तुब्रह्मैवनान्यदितिवि द्धीत्यर्थः ॥ ५६ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०एकत्रिंश सर्ग ॥ ३१ ॥ ॥ ५ ॥ ॥ चित्तैक्यमतिदेहादिचयथापुर्यष्टकगता ॥ यथादेहांतरयातितत्सर्वमिहवर्ण्य त ॥ १ ॥ चरमाचित्याशुक्करीत्यादिपुंसांनदुपुर्यष्टकं चरतीमचिराटासतीकथंकथारीस्याकार्याणिऐहिकपारलौकिककर्माणिकरोतितच्छीला कथंचतदनुकूलदेहादिस्पंदशालिनीस तीब्रह्माभिधोचलति स्नाति भुंक्ते यजते प्राप्नोति क्षपियोदेवदत्तइत्यादिशब्दाभिलापयोग्यतांउपैतितत्सर्वंकथयामिशृण्वित्यर्थः ॥ १ ॥ देहस्पंदेचित्वतीविजीवचलनहेतुस्त च्चलनेचतदुपाधिपुर्यष्टकरूपमनस्तयापरिणतामायावचित्तस्वभावतिरोधायीमायाशक्तिर्हेतुस्तस्यामनोरूपेणपरिणतौपूर्वपूर्वदेहांतपरिणामसंचितकर्मराशिरेवहेतु ॥ मुंडवारणय केकर्मदैवंनपूर्वतु कर्मैवतत्प्रशंसन्तिरितिपहाद्यतिपदरूपबोधहेतुत्वस्यकमत्वमध्यवस्थापनादित्याशयेनाह ॥ प्राक्तनैरित्यादिना ॥ शक्तिरनादिमायारूपाप्रसमशक्ति स्वावरणश

यस्मादुदेतिकलनाकुलदृश्यजालयत्तत्रचस्थितवदित्यनुभूतमुच्चैः ॥ यस्मान्मनोविपरिवर्ततिदेहदृश्यासर्वंतुतत्परमवस्त्वितिविद्धिवि श्वम्॥ ५६ ॥ ॥इत्यार्षेवा०वा०दे०मो०नि०पू०मन प्राणैक्यप्रतिपादननामैकत्रिंश सर्ग ॥ ३१ ॥ ॥ ५ ॥ ॥ श्रीईश्वर उवाच॥ ॥ मुनेशृणुकथंकार्यकारिणीस्पंदशालिनी॥चरतीचतनुंपुंसामुपैतिपरमाभिधाम्॥ १ ॥ प्राक्तनैस्तंनिहत्येवस्वमनोमननेहि ते ॥ कर्मव्रातैर्विचित्रैर्हैःपरिपीवरतांगते ॥ २ ॥ मनस्तयागताशक्ति सज्जडेवागताचिते ॥ सास्फुरत्यनयाब्रह्मन्नुचिताशक्तिभूतया ॥ ३ ॥ अस्या प्रसादादिहसाचित्कलंकवतीमुने ॥ जगद्भ्रंधर्वनगरंकरोतिनकरोतिच ॥ ४ ॥ चित्ताधसत्तयादेहोमूकस्तिष्ठतिकुड्यवत् ॥ तत्सत्तयाप्रस्फुरतिनभ संप्रेरिताश्मवत् ॥ ५ ॥ यथास्फुरत्यतिजडमयोयस्कांतसन्निधौ ॥ तथास्फुरतिजीवोयंसतिसर्वगतेपरे ॥ ६ ॥

क्यात्वाग्मयप्रसनिहत्येवनास्तिनप्रानोन्निमतीतियोग्यतानीत्वाप्राक्तनैरनादिकालादारभ्यसंचयात्परिपीवरतामतिपुष्टतांगतैर्विचित्रैर्हेर्बहुविधकामवासनान्वितैर्मननैस्तैमानंचरी हिते ॥ कायवाक्कृटाद्यैर्विहितनिषिद्धकर्मव्रातैर्भिन्नैर्मनस्तयापुर्यष्टकात्मकमनोभावेनगतापरिणतासतीचित्ते स्वाधिष्ठानचित्सत्तानिश्चिदिवस्वस्वभावचलाजडेवाभिन्नभा वमागतापूर्वाज्ञानकर्मव्यवहारोचितासतीस्वशक्तिभूतयाअनयाज्ञानकर्मेंद्रियादिरूपयान्ययासामायाशक्तिरेवदृश्यादर्शनदृश्यादिनववविधससाररूपेणस्फुरतिमृत्यत्तिनान्यात्किंचि दितिद्वयोरर्थः ॥ २ ॥ ३ ॥ अस्यामायाशक्तेःअविचारलक्षणाद्विचारलक्षणाच्चप्रसादाज्जगत्करोतिनकरोतिचेतिसंबंध ॥ ४ ॥ नहिब्रह्मचित्सन्निधानाद्देहएवसर्वंकरोतुकिं चित्ताधिकल्पनयातत्राह ॥ चित्तादीति ॥ आधिपवाग्मनोवृत्त्याहंकारपरिपह ॥ ५ ॥ जीवस्यप्राणकर्मेंद्रियव्यापारप्रब्रह्मसंनिधिमात्रेणसाधारणनिमित्तमित्याह ॥ यथेति ॥ ६ ॥

---

१ पंचमाध्यायद्वितीयेब्राह्मणे  २ तत्सर्वविचारावस्थायामेकांतस्थित्वाकर्मद्वैषाश्रयंपुन पुन कार्यकरणोपादानहेतुभूतत्तु ॥ नकेवलभूचतुरयापितुकालेश्वरा भ्युपगमेषुयदीमप्रशंसनुःकर्मदैवतप्रशंसनुरिति  ३ षष्ठ प्राणजिह्वावाक्चक्षु श्रोत्रमनोहस्तस्वक् ॥ अतिषष्ठाअपानरसनामरूपशब्दकामकर्मस्पर्शसंज्ञा

बुद्ध्यादिप्रथायांज्ञानेंद्रियप्रयोजनेषुचप्रतिबिंबार्पणेनासाधारणनिमित्तमित्याशयेनाह ॥ सर्वस्थयेति ॥ आत्मरूपयाचिच्छक्त्यैवस्फुरतिस्वपरप्रथासमर्थोभवति ॥ ननुभौतिकत्वाद्द्रव्यस्वभावेस्थितजीवोपाधिभूतलिंगमद्रव्यस्वभावाद्ब्रह्मण सकाशात्कथप्रतिबिंबमादत्तेद्रव्येद्रव्यस्यैवप्रतिबिंबननियमदर्शनादितिचेत्तत्राह ॥ मुकुरइति॥ मुकुरेणद्रव्यस्वभावेअस्थितादपिगुणक्रियाजात्यादेःप्रतिबिंबादानदर्शनान्नद्रव्यादेवप्रतिबिंबोमास्त्वितिनियमइत्यर्थः ॥७॥ यदिब्रह्मप्रतिबिंबोजीवस्तर्हिकथतस्यअज्ञाननिद्रालस्यादिजाड्यानुभवः नहिसूर्यप्रतिबिंबेअभास्वरतासंभवइत्याशंक्याह ॥ प्रविस्मृतेति ॥८॥ चित्तत्वचित्तधर्मजाड्यमालिन्यादि ॥ सुमहान्नृगाधिलवणहरिश्चंद्रादिरिव ॥९॥ चित्ततादात्म्याध्यासाच्चित्तधर्मदैन्यादिप्राप्तिवत्प्राणतादात्म्याध्यासात्तद्धर्मदेहसचलनहेतुत्वमप्यस्याःसिद्धमित्याह॥ जडयेति ॥ वातशक्तिःप्राणस्तत्तादात्म्यापत्त्यातत्समानतया॥१०॥ कर्मात्मनाउक्तरीत्याक्रियास्वभावत्वमापन्नेनमनसामननशक्तिमता ॥ उपाधिपारवश्याद्वराकेणात्यंतदीनेन॥यथानौकास्तंभनिबद्धदीर्घपटाद्युपाधिपरवशेनवायुनानौकास्थाः

सर्वस्थयात्मशक्त्यैवजीवएषस्फुरत्यलम् ॥ मुकुरोबिंबमादत्तेद्रव्यात्मन्यस्थितादपि ॥ ७॥ प्रविस्मृतस्वभावत्वाज्जीवोयंजडतांगतः॥ मोहाद्विस्मृतभावत्वाच्छूद्रतामिवसद्द्विजः ॥८॥ प्रविस्मृतस्वभावाहिचिच्चित्तत्वमुपागता॥ मोहापहतचित्तत्वात्सुमहानिवदीनताम् ॥ ९॥ जडयावशयादेहोवातशक्तिसमानया ॥ संचाल्यतेतदनयावारीववीचिमालया॥ १० ॥ कर्मात्मनावराकेणजीवेनमनसामुना॥ चाल्यंतेदेहयंत्राणिपाषाणाइववायुना॥ ११॥शरीरशकटानांहिकर्षणेपरमात्मना॥मनःप्राणोदयौब्रह्मन्कृतौकर्मकृतौदृढौ ॥१२॥ चिज्जडंतूररीकृत्यरूपंजीवत्वमेत्यच॥ मनोरथमुपारुह्यवहत्प्राणतुरंगमम् ॥ १३॥ क्वचिज्जातपदार्थत्वंक्वचिन्नष्टपदार्थताम् ॥ क्वचिद्दृढपदार्थत्वंक्वचिदेकपदार्थताम्॥ १४॥ गतेवभिन्नेवास्त्येवमत्यजंतीनिजंपदम् ॥ जलतेवतरंगत्वंसैवासदसदोदिता ॥ १५॥ उपजीव्यात्मनोरूपंपरंस्फुरतिवृत्तिषु॥ आलोकमुपजीव्येमंरूपश्रीर्दृश्यगायथा ॥ १६ ॥ परमात्मनिचित्तत्त्वेस्थितेसतिनिरामये॥ जीवोजीवतिसालोकंदीपेसतिगृहंयथा॥ १७॥ आधयोव्याधयश्चैवप्रयांत्यस्यप्रपीनताम्॥ अपामिवतरंगत्वंवीचित्वस्येवफेनता॥ १८॥

पाषाणाअभिमतंदेशंप्रतिचाल्यंतेतद्वत ॥ ११ ॥ मनःप्राणोदयौमन प्राणशक्तिकर्मकृतौभृत्यौबलीवर्दौवा ॥ १२ ॥ स्वामन्यव्यवहारसाधारण्यायमनसएवरथत्वकल्पमुख्यामुख्यप्राणानांतुतुरंगमत्वमित्याशयेनाह ॥ चिदिति ॥ १३ ॥ क्वचित्जाग्रत्स्वप्नयोर्जातपदार्थत्वमाविर्भूतपदार्थत्वबहुपदार्थत्वच ॥ क्वचित्सुषुप्तेनष्टपदार्थतांतिरोभूतसर्वपदार्थतांअविद्यैकपदार्थताचगतेवेतिपरेणान्वयः ॥ १४ ॥ किंसादुग्धंदधिभावेनेवजीवजगद्भावेनपरिणामान्नष्टानेत्याह ॥ अस्तीति ॥ एवंपरिणतापिनिजपारमार्थिकवपुःस्वरूपमत्यजंतीसतीनत्त्वदृशाअसज्जाग्रदिव्यव्यवहारदृशाप्यसत्त्वमइवचआउदितार्ईषद्विकसितेत्यर्थः ॥ १५ ॥ आत्मन्यध्यस्तत्वादेवात्मसत्तामेवोपजीव्यमनोवृत्तिप्रतिफलितात्मचिद्बलेनैवमनोरूपजीवजगत्प्रथतइत्याह ॥ उपजीव्येति ॥ १६ ॥ चिदेवतत्त्वंपारमार्थिकरूपंयस्यतथाविधे ॥ १७ ॥ एवदेहचेष्टाहेतुताचितउपपादिताइदानींतस्यादेहांतरप्राप्तिप्रकारंवक्तुंवैराग्यायचदेहनिमित्तदुःखानिप्रपचयति ॥ आधयइत्यादिना ॥ १८ ॥

१ अत्रटीकानुरोधेन ( वपुः ) इतिपाठोपेक्षितइतिभाति

वैषम्यंदैन्यं स्वादि ॥ १९ ॥ अथरद्धे ॥ यथासूर्योदीप्तै स्वप्रकाशिनिरखांबदेर्मेघैस्तिरोधानम्लानिस्वशितत्वाविशेषस्यद्द्रष्टुःस्याएतितद्वत् ॥ २० ॥ घ्यवतीज्ञानानधिकृतयोनि
प्यनतरतां ॥ स्यरूपनोरिति नुमोमावश्लोकस ॥ यथाघनेनमविरासिमवजाड्येनपराभूत पुरुष स्वज्ञाविनास्वांगावदलननविदतिनानुसधसतद्वत् ॥ २१ ॥ कथतर्हि चितोमोहो
नश्यतिनत्याह ॥ प्राप्येति ॥ यथामदावि घनमोहरतोजतु कालेनस्वकर्मस्मरणप्राप्यनिर्मोहोभवतितद्वत् ॥ २२ ॥ इदानींदेहत्यागप्रकारवक्तुमुपक्रमते ॥ यदेति ॥ यदायातस्य
प्राणस्यस्पंदशक्ति अगसविदांआनखापाङ्लिंगोपाधिद्वाराप्रविष्टजीवसविदांस्वविलिंगस्योपसहारेणप्रमोषतोनिमित्ताद्धस्तपादादेरनुसधाननकरोति ॥ यथाकुष्ठोगलितानामगु
ल्यादीनांस्पंदेरणनकरोतितद्वत् ॥ तदाद देस्थितपुंशुनापास्यानेवार्पितपद्मपत्रप्राणसचारानुकूलतयानस्फुरतिनकपतेइतिपरेणान्वय ॥ १३ ॥ यथायक्षोभ्रात्विगूभिरपराभूत

आधिव्याधिभिराकीर्णशरीराम्भोजषट्पद ॥ जीवोवैषम्यमायातितरगत्वेयथापय ॥ १९ ॥ चिच्छक्ति सर्वशक्तित्वान्नाहचिदितिभा
वनात् ॥ अत्रमेवेतिवैवस्यमूर्यादीमेरिवांबुदे ॥ २० ॥ वैवश्याञ्चवतीमौढ्यान्नविदत्यात्मसविदम् ॥ घनजाड्यपराभूत स्वांगावदलन
यथा ॥ २१ ॥ प्राप्यचाप्यनुसधानमस्यामोहोविनश्यति ॥ घनमोहरतोजंतु स्वकार्यस्मरणयथा ॥ २२ ॥ यदागसविदांवातस्पदशक्ति
प्रमोषत ॥ नकरोत्यनुसंधानकुष्ठीस्पंदेपणयथा ॥ २३ ॥ असविस्स्पदतोदेहेपद्मपत्रंत्दढिस्थितम् ॥ नस्फुरत्यपरास्पदारुपात्रंयथाव
हि ॥ २४ ॥ निःस्पदपद्मपत्रेंत प्राणाःशांतिप्रयांत्यमी ॥ तालवृतेयथाऽस्पदेयहि पवनशक्तय ॥ २५ ॥ प्राणशांतेतरस्पर्शेजीवोनिष्पूर्ण
मूकनाम् ॥ यानिशांतिनभोवायोनहस्तव्ययथारज ॥ २६ ॥ विरजविगताधारमनोहिशिष्यतेमुने ॥ तिष्ठत्यात्मपदलब्ध्वाजलादितरुबी
जवत् ॥ २७ ॥ इतिवैकल्यमायाते कारणौघे समतत ॥ पुर्यष्टकेशमयातेदेह पततिनिश्चल ॥ २८ ॥ चिच्चेत्यचेतनान्मोहात्स्पदमायाति
वामना ॥ तदीरितास्मरत्यंतरन्यद्विस्मरतिस्वयम् ॥ २९ ॥ हृत्पद्मपत्रस्फुरणात्स्फुटपुर्यष्टकभवेत् ॥ हृत्पद्मयत्रेवहनाद्रुद्धपुर्यष्टकक्षयि
॥ ३० ॥ देहपुर्यष्टकयावदस्तितावत्सजीवति ॥ शांतेपुर्यष्टकेदेहोमृतइत्युच्यतेद्विज ॥ ३१ ॥

दात्पाघनस्पदनेतद्वत् ॥ १४ ॥ शांतितेजसिविलयम् ॥ मनःप्राणेप्राणास्तेजसीतिश्रुते ॥ २५ ॥ रूपोपाधिविलयान्निरर्गलपूर्णोनामोपाधिविलयान्मूकश्चेय कारणात्मात
ज्ञायेयाति ॥ २६ ॥ रजोगुणप्रधानस्याधारप्राणोपरमादेवविरजविगताधारश्चमनोपिसदेहप्रमाणेनकारणात्मपदलब्ध्वातद्भावेनैवशिष्यते ॥ तर्हिकिंसर्वथागतनेत्याह ॥ तिष्ठ
तीति ॥ जलादिभूतमात्रापरष्टम्यपार्थिवतरुबीजवत्पुनर्देहाविर्भावोन्मुखतिष्ठतीत्यर्थ ॥ २७ ॥ सएवास्यादेहत्यागइत्याह ॥ इतीति ॥ २८ ॥ पुर्यष्टकस्यतर्हिकेनहेतुनोद्भवइ
तिषडुत्पत्त्यस्पदान्तरस्पदमपूर्वपूर्वभोक्ताविभावस्मते ॥ सापवासनास्पवाह्यासनास्पदेषस्वरूपाज्ञानकृतेचितश्चेत्याकारत्वेमनहेतुरितितस्योन्मुखत्वायचितश्चेत्याकारताप्रतिप
त्तिलक्षणास्पदमृत्वेतिप्रथमवीरुपपनेननिरोद्धुम्प्येत्याशयेनाह ॥ चिच्चेत्यचेतनादिति ॥ २९ ॥ वहनात्पलमाद्रुद्धेनिश्चलेसतीतियावत् ॥ ३० ॥ ३१ ॥

१ शांतिरस्पर्शादिम्पिपाठ

॥ ३२ ॥ वातयंत्रेव्यज परस्परविरुद्धानांवातपित्तकफाख्यानांमलानांरागद्वेषादिवासनामलानांचसंबो वातप्रकोपात् शस्त्रादिकृतदेहच्छेदभेदादिनशाश्च ॥ अभ्यंतरेदेहमध्ये ॥ ३२ ॥ अतएवभोगवासना नादी ॥ ३३ ॥ स्वस्यसंवित्ति सकल्पस्तद्वशात् ॥ वैवश्यमरणादिदु खसहस्रम् ॥ सर्वैकान्यकियत्तद कालेदाप्रत्ययविधानान्नित्यदेतिच्छादसम् ॥ ३४ ॥ शून्येषुतत्सकल्पाभावान्नमृत्युवश्यतेत्याह ॥ वासनेति ॥ विमलारागादिमलरहिता ॥ ३५ ॥ ३६ ॥ व्योममरुतिलद्व्योमवायौप्राणे ॥ ३७ ॥ एवलीनस्यमनस पुन स्वर्गनरका दिभोजकादृष्टप्रबोधितस्यहार्दाकाशेएवचक्षुष्टोवामूर्ध्नोवाअन्येभ्योवाशरीरदेशेभ्योनिर्गमनयमलोकादिगमनस्वर्गनरकभोगादिकस्वकल्पनैवनतुवहि स्वर्गादयोनामान्येसर्ता त्याशयेनाह ॥ सुचिरेति ॥ सुचिरमनादिकालादभ्यस्तस्तत्तद्भोगयोग्यशरीरादिभावोयेन ॥ यत्रतत्रेतिस्वर्गादेर्नियतदेशसत्त्वनिराकरणार्थम् ॥ ३८ ॥ ३९ ॥ तस्यादेहातरय

विरुद्धमलसंबोधाच्छेदभेददशावशात् ॥ नप्रस्फुरतिहृत्पद्मयंत्रमभ्यंतरेयदा ॥ ३२ ॥ तदापुर्यष्टकंशांतिमुपैतिगगनेशनैः ॥ संरोधिते वातयंत्रेयथापवनसंततिः ॥ ३३ ॥ स्वसंवित्तिवशाज्जीवोवैवश्यमुपगच्छति ॥ पद्मयंत्रंशरीरस्थंप्रवाहंयातिनित्यदा ॥ ३४ ॥ वासना विमलायेषांहृदयान्नापसर्पति ॥ स्थिरैकरूपजीवास्तेजीवन्मुक्ताश्चिरायुषः ॥ ३५ ॥ संरुद्धेपद्मयंत्रेहिप्राणेशांतिमुपागते ॥ देहःपतत्य धैर्योयंकाष्ठलोष्टसमःक्षितौ ॥ ३६ ॥ यथैवव्योममरुतिलीनंपुर्यष्टकंभवेत् ॥ तथैवतत्रैवतदालयमेतिमनोमुने ॥ ३७ ॥ सुचिराभ्यस्तभा वंतुवासनाखचितंमनः ॥ यत्रतत्रभ्रमत्स्वर्गनरकादिप्रपश्यति ॥ ३८ ॥ शरीरंशवतामेतिमनोमारुतवर्जितम् ॥ गतेगृहजनेदूरंगृहंसंशू न्यतामिव ॥ ३९ ॥ सर्वगाचिच्चेतनतोजीवीभूयमनःस्थिता ॥ पुर्यष्टकवपुर्भूत्वासातिवाहिकदेहिनी ॥ ४० ॥ तन्मात्रपंचकंचित्तंक्रोडी कृत्यव्यवस्थिता ॥ स्वप्नभ्रमवदाकारंभावात्स्थूलंप्रपश्यति ॥ ४१ ॥ दृढभावनयापश्चात्तत्रैवरसशालिनी ॥ आतिवाहिकदेहत्वंविस्मर त्यखिलंक्षणात् ॥ ४२ ॥ असत्येवशरीरेस्मिन्कृतकृत्रिमभावना ॥ नयत्यसत्यंसत्यत्वंसत्यंचासत्यतामपि ॥ ४३ ॥ सर्वगाहिचिदंशेनजी वीभूयाभवन्मनः ॥ मनःपुर्यष्टकरथमाक्रामतिततोजगत् ॥ ४४ ॥ पुर्यष्टकवातमयंदेहमुत्थापयत्यलम् ॥ स्वस्पंदिवेतालइवजीवतीत्यु च्यतेतदा ॥ ४५ ॥ क्षीणेपुर्यष्टकेचित्तंयदाव्योमनिलीयते ॥ तदास्फुरतिदेहोयंमृतइत्युच्यतेपिच ॥ ४६ ॥ स्वभाववशतोजीवोविस्मृत्या शक्तिमृच्छति ॥ वैवश्यात्कालवशतःपर्णंजर्जरतामिव ॥ ४७ ॥

हणकममाह ॥ सर्वगेति ॥ सर्वगाब्रह्मचिदेव ॥ अनेनजीवेनात्मनानुप्रविश्यनामरूपेव्याकरवाणीतिश्रुत्युक्तचेत्याकारानुप्रवेशाचेतनत ॥ ४० ॥ तन्मात्राणिसूक्ष्मभूतानितेपापं चानासघातात्मकचित्तमातिवाहिकदेहाख्यपुर्यष्टकम् ॥ भावात्सकल्पनात् ॥ ४१ ॥ रसशालिनीअहंताशक्तिमती ॥ ४२ ॥ अस्मिन्उक्तलक्षणेस्थूलदेहे ॥ असत्यजगत्सत्य त्वनयतिआरोपेणप्रापयति ॥ सत्यंस्वीयब्रह्मभावअसत्यतानास्तिनभातीतिस्वप्रतीतियोग्यताम ॥ ४३ ॥ चित्तससरणक्रममाह ॥ सर्वगेति ॥ अशेनबुद्धिप्रतिबिंबिताशेन ॥ ४४ ॥ वातमयसूत्रभूतप्राणप्रचुरम् ॥ यदाउत्थापयतितदाहृदिप्रविश्यस्पदीस्पदनशीलोवेतालोयस्यतथाविध शवइवजीवतीत्युच्यतेजनैरित्यर्थ. ॥ ४५ ॥ व्योमनिहार्दा काशेब्रह्मणि ॥ स्फुरतिकाष्ठलोष्टादिवदचेतनःस्फुटोभवति ॥ ४६ ॥ स्वस्याजरामरब्रह्मरूपताविस्मृत्यजरठदेहगतामशक्तिस्वयंऋच्छतिप्राप्नोति ॥ ४७ ॥

तत पूर्वम्म्रियतइत्याह ॥ जीवशक्त्येति ॥ जीवस्तदधिष्ठानप्राणस्तच्छक्त्या अपरामृष्टे अतएव चलनाभ्भिरुद्धे सति ॥ ४८॥ पुनः पुननानाशरीरग्रहणं भवसरणजरामरणांत मेवप्राप्यमित्याशयेनाह ॥ यथेति ॥ यथा जीवानाम् ॥ ४९ ॥ ५० ॥ ५१ ॥ उक्तमेवोपसंहर्तुमनुवदति ॥ सर्वगेति ॥५२॥ परितोवितते पूर्णे चिदमलनभसि मयनरूपा पूर्वतन स्वीयशुभाशुभमयकर्मपरिणतिरूपा अतएवसुखदुःखफलभोगेहास्यरोदनादिकलकलैः कोलाहलैर्मुखरा तत्तन्मयाश्चित्प्रचुरजीवजगद्रूपा कल्पना स्फुटाभिरामा आपा तरमणीया विविधे शरीरैर्जननमरणादिभिश्चास्या आत्मविमोहतापनाय स्फुरति प्रतिभासतइत्यर्थः ॥ ५३ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्य० नि० प्रक० पू० द्वात्रिंशः सर्गः ॥ ३२ ॥ यथा जीवजगद्भ्रमो हृदकलकल्पिता ॥ विचारैर्बलसाध्यास्तथा तत्र निरूह्योच्यते ॥१॥ सर्वगापिचिदेतस्मिन्श्वेतसि प्रतिबिंबतीतियदुक्तं यच्च द्वैतभावनयापश्वात्सर्वेषरसशालिनी त्यापूर्वमभोगमयप्राप्यनुपपत्तिवर्णित शक्ते ॥ चन्द्रार्धेतिद्वाभ्याम ॥ धरतीतिधरश्चन्द्रार्धस्यशेखरेधरश्चन्द्रार्धशेखरधर ॥ अर्धशब्दस्यपोडशतमभागनिष्ठत्वेन समीशवाचित्वा भावनानपुंसकत्वार्धनपदक मत्यस्याभवत्ते पक्षीतरपुरुष ॥ अनंतस्यदिक्कालवस्तुकृतपरिच्छेदशून्यस्यएकरूपस्यसजातीयविजातीयस्वगतभेदशून्यस्य चिह्लक्षणस्यतत्त्वस्य

जीवशक्त्यापरामृष्टेनिरुद्धेपवनस्पंदे ॥ प्राणेसरोधमायातेम्रियतेमानवोमुने॥४८॥यथाजातानिजातानिचान्यान्यन्यानिकालत ॥वृ
क्षात्पर्णानिशीर्यंतेशरीराणितथानृणाम्॥४९॥जायतेचम्रियतेचशरीराणिशरीरिणाम्॥पादपानांचपर्णानिकातत्रपरिदेवना॥५०॥
चिद्युधौस्फुरत्येतादेहबुद्बुदपंक्तय ॥इतश्चान्याइतश्चान्याएतास्वास्थानधीमत ॥५१॥ सर्वगापिचिदेतस्मिन्श्चेतसिप्रतिबिंबति॥ यदा
यमंतरात्तेनान्योहिमुकुराहते॥ ५२ ॥ चिदमलनभसिप्रयनरूपा परिविततेतदतन्मया स्फुरंति॥ कलकलमुखरा स्फुटाभिरामा विवि
धशरीरविमोहतापनाय॥ ५३ ॥ ॥इ०वा०वा०दे०मो०नि०पू०देहपातविचारोनामद्वात्रिंशत्तमः सर्गः ॥ ३२ ॥ ॥ श्रीवसिष्ठउवा
च॥ ॥चंद्रार्धशेखरधरचित्तत्त्वस्यमहात्मनः ॥ अनंतस्यैकरूपस्यद्वित्वंकथमुपागतम् ॥ १ ॥ कथंचतन्महादेवरुद्रपर्यायसंकुलम् ॥ भ
वेद्दुःखोपघातायप्रज्ञयाविनिवारितम् ॥ २ ॥

सजातीयजीवरूपविजातीयजडजगद्रूपंचद्वित्वंकथमुपागतम् ॥ किंस्वतउतपरत ॥ नाद्य ॥ अविकारत्वा दसंगत्वाच्च नापिद्वितीय द्वितीयस्यैवाप्रसिद्धेरितिभाव ॥ १ ॥ यदितु निर्निमित्तमेवतदागतमितिब्रूषेतर्हि सकोपेमानाभावादनंतकोटिभिस्तत्पर्यायैर्वर्धने संकुलम्यात्मचिरा नुवर्तमानत्वात्प्रज्ञयातत्त्वबोधेनैकत्वागनुकूलत्वाभ्यांनुबलतमनकथंविनिवारितंसत् आत्यंतिकदुःखोपघाताय भवेत् ॥ निर्निमित्तस्यैकस्याप्युच्छेदाप्रसिद्धे ॥ कथंचिदेकस्योच्छे देप्यन्येषामनंतानांनादरासंधानांपरिशेषात्पुनः पुनरन्यान्यनिर्निमित्तवधोत्पत्तदुर्वारत्वाच्च ॥ यथागुक्तमसराक्तिमायानिमित्तमिथ्याभूतमेवतदितिमकश्चिद्दोषइतियुक्तम् ॥ सा सामनुकीर्तास्यात्सहजाया ॥ आद्येपित्वतउतस्वाउतपरतश्वंधाधेयेतिविमर्शेअनिर्मोक्षानवस्थाविरोधापत्ते ॥ सहजायामप्यीच्छ्यशक्तिवत्सतिप्रसन्न्यपनेतुमशक्त्या अनिर्मो क्षतादवस्थ्यात् ॥ ऐकरस्यश्रुतिविरस्यप्रसंगाच्च ॥ किंचमायायाश्रकेर्मिथ्यात्वेअत्यतासत्वादसत कार्योत्पादकत्वायोगात्स्वएवसमुत्थितोनिर्हेतुकोनोत्सारयार ॥ सत्यत्वेज्ञानेनभि वस्यपोमाशेनैमोक्षदोषानिर्मोक्षस्पृष्टभयतत्त्वाशारज्जु ॥ नचनिष्कर्षेतत्त्वासत्त्वानिरिक्तानुनीयाविचारेनविषयस्यापयिनुशक्या ॥ तथैवविभयाज्ञानोत्तरमपितस्याभिवार्य त्वात्॥ नद्वितीयाधारेनमयनाद्वितीयाधारफूशक्या शानस्याकारएकत्वात्स्यत्वान्यानात्याद्येनात्ससत्त्वनपरिदृश्यवर्तीनामनुवर्तनभवत्वात्ते पूर्वर्णवाभिवारणाविधि॥२॥

नवयजीवजगदादिद्वैतप्रमाणैरुपपादयितुंप्रवृत्ताःकिंतुमोहादनादिकालादारभ्यभ्रांत्याप्रसक्तंतदध्यारोपापवादन्यायमाश्रित्यापवदितुम् तत्राध्यारोपेसर्गादौयत्कामकर्मवास नादिनिमित्तकारणानाब्रह्माविद्याद्युपादानकारणानांवियदादिक्रमस्यव्यष्टिसमष्टिस्थूलसूक्ष्मादिविभागकोशभेदादीनांकल्पनंतत्सर्वंस्वयमसत्यमपिसत्यवस्तुपरिचयोपायत याश्रुत्याकल्पितपरमार्थसत्यप्रयोजनाविसंवादितयाइतरवादिकल्पनापेक्षयाउत्कृष्टमितिश्रोतृणाविश्वासजननायलोकदृष्टैवोपपत्तिभिःशास्त्रेषुसमर्थ्यते॥ परिचितेतुसर्वात्मके सर्वप्रतीचितस्याद्वितीयताबोधनायपरमार्थदृष्टिमेवावलंब्यापोद्यतएवेतितस्मिन्नेकत्वमभ्युपेत्यतद्विरुद्धद्वित्वासंभवोद्भावनतवस्वाभ्युपगतविरुद्धसिद्धांतविरुद्धंचेतिकथनपश्य सीत्याशयेनश्रीभगवान्समाधत्ते ॥ सर्वशक्तीत्यादिना ॥ यदाब्रह्मव्यवहारदृशासर्वशक्तिपरमार्थदृशातुएकसदेवविद्यतइतिव्यवस्थितंदृष्टिद्वयमंगीकृतंतदाद्वित्वैकत्वलक्षणायाः कलायाःसर्वशक्त्येकदेशादुदयोयस्यतथाविधस्तदाक्षेपोनिर्मूलएव ॥ हियस्माद्व्यवहारदृशाअध्यारोपःपरमात्मदृशाऽपवाद ॥ नतावद्व्यवहारदृष्ट्या ॥ य सर्वज्ञःससर्वविद्यस्य ज्ञानमयतपइतिश्रुत्योपपादितात्सर्वज्ञात्सर्वशक्तिमतोजीवजगद्द्वैतागमोनुपपन्नः ॥ धर्मिग्राहकमानेनतस्यतत्स्वभावस्यैवनिर्णयात् ॥ तदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यम् ॥ यत्र नान्यत्पश्यतिनान्यच्छृणोतिनान्यद्विजानातिसभूमेतिश्रुतिदर्शितपरमार्थदृष्टिगम्येतुनकदाचिदपिद्वित्वतद्विरोध्येकत्ववाप्रसक्तमितितत्रतदनुपपत्त्युद्भावननिर्मूलमेवेत्यर्थः ॥ २ ॥

॥ श्रीईश्वरउवाच ॥ ॥ सर्वशक्तिहितद्ब्रह्मसदेकंविद्यतेयदा ॥ तदानिर्मूलएवायंद्वित्वैकत्वकलोदयः ॥ ३ ॥ सतिद्वित्वेकिलैकंस्यात्सत्ये कत्वेद्विरूपता ॥ कलेद्वेअपिचिद्रूपेचिद्रूपत्वात्तदप्यसत् ॥ ४ ॥ एकाभावादभावोत्रएकत्वद्वित्वयोर्द्वयोः ॥ एकंविनानद्वितीयंनद्वितीयंवि नैकता ॥ ५ ॥ कार्यकारणयोरेकसारत्वादेकरूपता ॥ फलांतस्यापिबीजादेर्विकारादिहकल्पना ॥ ६ ॥ चित्त्वंचेत्यविकल्पेनस्वयंस्फुरति तन्मयम् ॥ विकारादितदेवांतस्तत्सारत्वान्नभिद्यते ॥ ७ ॥

ननुनेहनानास्तिकिंचन नतुतद्द्वितीयमस्तिततोन्यद्विभक्तम् विभुचिदानंदमरूपमद्भुतमित्यादिश्रुतिभिर्द्वित्वमेवनिषिध्यतेनैकत्वमित्यविरुद्धमेकत्वंकथंद्वित्वतुल्यकक्षतयानिषि ध्यतेतत्राह ॥ सतीति ॥ सतिप्रसिद्धेद्वित्वेतद्व्यावृत्तयेएकत्वकल्प्यते सतिचैकत्वेतदेवैकत्वात्तरसहितद्वित्वमितिकल्प्यतइतिपरस्परसापेक्षकल्पनत्वात्तुल्यकक्षेएवते ॥ तत्रैकत्व लक्षणधर्मस्यापितदतिरिक्तस्यकल्पनेचिदेकरस्यव्याघातप्रसंगात्तदप्यसदेवेत्यर्थः ॥४॥ ५ ॥ इदानींव्यवहारपरमार्थदृष्ट्योरुपदेशादिव्यवहारायमिश्रणेपिसत्ताद्वैविध्यकल्पना न्नपरमार्थसतिव्यावहारिकसत्तयाजीवजगद्द्वैतविरोधइत्याह ॥कार्येति ॥ बीजादेःपुनःफलांतस्ययथासएवायमितिप्रत्यभिज्ञायमानैकस्वभावेअनुगतद्रव्येविकारान्नानात्वक ल्पनातद्वदुपपत्तेरित्यर्थः॥६॥ यदितुसर्वविकाराणापरमार्थसत्ताव्यतिरिक्ताव्यावहारिकसत्तानाभ्युपेयतेतदासुतराद्वैतंचिद्विकल्पएवफलितइतिराहुशिरोद्वैतविरोधोद्भावनतुल्य त्वदाक्षेपइत्याशयेनाह ॥ चित्त्वमिति ॥ अतस्सएवसारःपरमार्थोयस्यतत्त्वात् ॥ एवंचमायातत्कार्याणापृथक्सत्त्वपक्षःअपृथक्सत्वपक्षःअसत्वपक्षस्तृतीयविधापक्षोवाना नावादिकल्पितप्रधानपरमाणुक्षणिकाक्षणिकविज्ञानशून्यतादिपक्षोवायःकश्चित्त्वयाभ्युपगम्यतातथाप्यसंगाद्वयचिन्मात्रभासस्पर्शीससर्वोपिचिदधीनसिद्धिकश्चिद्विकल्पमात्र मितिचितःकदापिबंधप्रसक्तिरेवयत्रदुर्लभातत्रानिर्मोक्षोद्भावनदूरनिरस्तमेवेतिभावः ॥ ७ ॥

यदिदंदृश्यतेजगत्तत्तस्याश्चितेश्चिल्लक्षणायालताया फलपल्लवपुष्पादीत्यन्वयः ॥ १९ ॥ यदिनु अनृतमेवजीवजगद्भावविवेकायपृच्छसितदाशृणुसाचितमहतीअविद्याउप
नयनविचित्रवर्णरंजितोपनेत्रयस्यास्तथाविधायदाभवतितदाजीवत्वेनअभिधीयतइत्यभिधातथाविधासतीद्वीद्वित्वस्वबाह्यत्ववाह्यजीवजगद्भावपश्यतीत्यर्थः ॥ २० ॥ अन्या
अब्रह्माचिद्रूपास्मि ॥ २१ ॥ अकलंकेनैवरूपेणस्थितापिसकलंकवयत्पुर्यष्टकरूपकल्पितंतेनससारसरितप्राप्यऔपाधिकचेतनेनैवचेततिननिष्कलंकचेतनेनेत्यर्थः ॥ २२ ॥
एतेनपुर्यष्टकेनएकतातादात्म्याध्यासलक्षणाजीवनाएति ॥ तन्मयश्चित्प्रचुरः सन्जीवतिप्राणनादिक्रियालभते ॥ २३ ॥ इत्थसर्वगापिचित्तेस्मिश्वतसिप्रतिविवर्तीत्येतदाक्षेपा
शसमाधायदृढभावनयापश्चात्तत्रैवरसशालिनीत्येतदाक्षेपाशसमाधानुनम्यस्थूलदेहप्राप्तिक्रममाह ॥ आतिवाहिकेति ॥ भावनापचकपाचभौतिकस्थूलदेहसंस्कारात्मकं ॥
भूत्वादेहलाभायव्रीहियवतिलमाषादिद्रव्यमहसंपन्नमस्मीतिवेत्ति ॥ तदहव्रीहियवास्तिलमाषाइतिजायतइतिश्रुतेरित्यर्थः ॥ श्रुतौइतिशब्दोभाविदेहानुकूलद्रव्यमात्रोपलक्ष

यदिदंदृश्यतेतस्यास्तल्लतायामहाचितेः॥ फलपल्लवपुष्पादिनभिन्नंतन्मयंयतः॥ १९॥ महाविद्योपनयनाच्चिद्भवत्यभिधासती॥ साजी
वत्वेनबाह्यत्वंतदाद्वींद्विवपश्यति॥ २०॥स्वयमन्यैवमस्मीतिभावयित्वास्वभावतः॥ अन्यतामिवसंयातिस्वविकल्पात्मिकांस्वतः॥ २१॥
॥ २१॥ अकलंकेनरूपेणरूपंयत्सकलंकवत्॥ संसारसरितंप्राप्यचेतनेनैवचेतति ॥ २२ ॥ चिद्वपुःस्वयमेतेनत्वेकतामेतिजीवताम्॥
चित्तत्वस्यावभासेनजीवोजीवतितन्मयः॥ २३॥ आतिवाहिकदेहोपिजीवतांसमुपागतः॥ भावनापंचकंभूत्वाद्रव्यमस्मीतिवेत्त्यलम्
॥ २४॥ तद्द्रव्यंप्राणिनाभुक्तमाशुगच्छतिवीर्यताम्॥ ततोहंप्राणवान्जातोवेत्तीत्यनुभवात्मकम्॥ २५॥ अहंतादिक्रमेणाशुपंचका
नुभवभ्रमात्॥ स्थावरंजंगमंसर्ववेत्तितत्तद्भवत्यलम्॥ २६॥ काकतालीययोगेनदृढाभ्यासक्षयेणच॥ वासनांतरसंश्लेषात्सूक्ष्ममा
कारमुज्झति॥ २७॥ द्वित्वस्वसंविदाद्वित्वमेकस्यैवप्रवर्त्तते॥ पुंसोवेतालसंकल्पाद्वेतालइवभासुरः॥ २८॥

णार्थः ॥ तेनस्थावरस्वेदजादिदेहप्राप्तिस्थलेतत्तद्बीजानुकूलजलादिद्रव्यभावोप्यस्यभवतीतिद्योतनायद्रव्यमस्मीतिवेत्तीतिसामान्योक्तिः ॥ २४ ॥ वीर्यतांगेतस्त्वरक्षादौ
तुबीजभावम् ॥ ततस्त्रियानिषेकक्रमेणाहंप्राणवान्स्थूलदेहोजातोस्मीतिवेत्तीत्यर्थः ॥ २५ ॥ अनुभवात्मकब्रह्मैवउक्तेनाहंतादिक्रमेणपश्चात्मासघ पंचकस्थूलदेहस्तदनुभव
भ्रमाच्चक्षुरादिद्वाराबाह्यस्थावरजंगमचवेत्तिपुनस्तद्वासनयास्वयमपितत्तद्भवतीत्यर्थः ॥ २६ ॥ ननुपूर्वमशकादिदेहत्यागेतद्देहाकारवासनात्मनासूक्ष्मतयास्थितस्यपुर्यष्टकस्य
दृढाभ्यस्तमशकाकारस्यसौक्ष्म्यस्यचकथंनिवृत्तिर्हस्त्याकारस्यस्थौल्यस्यचानभ्यस्तस्यकथंलाभस्तत्राह ॥ काकतालीयेति ॥ यथाआकस्मिकेकाकतालसंवधेकाकमरण
प्रयोजककर्मैवनिमित्तंनान्यत्तथादृढाभ्यस्तवासनाभिभवेचिरव्यवहितहस्त्याद्यहंभाववासनोद्भवेचकर्मैवनिमित्तम् ॥ उद्भूतहस्तिवासनांतरसंश्लेषात्तुचिराभ्यस्तमपिसूक्ष्मम
शकाकारमुज्झतीत्यर्थः ॥ २७ ॥ विरोधिवासनोद्भवेनपूर्ववासनोपमर्देउत्तरस्याभ्यासेनदार्ढ्येचदृष्टांतमाह ॥ द्वित्वेत्यादिना ॥ २८ ॥

॥ २९ ॥ अनेकस्यजगतोपि ॥ ३० ॥ ३१ ॥ असकल्पात्क्षयोयस्यतथाविधम् ॥ द्विभसिद्धम ॥ ३२ ॥ किमत्यर्थेनयाशय्य ॥ सकल्पनेमानसमयमेनरचनेक्लेश भ्रमास्ति नमृमकल्पस्यविनाशने ॥ औदासीन्यमात्रेणस्वतएवतत्सिद्धेः ॥ प्रसिद्धश्चायमर्थइत्याह ॥ सकल्पयक्षइति ॥ गधर्वोभमनस्तत्पुर्यामनोरथरचितपुर्या स्पृष्टौसकल्पएवासभा त्रिरचनासमर्थत्वायक्षोविष्यशिल्पीप्रसिद्धोननुतत्क्षयइत्यर्थः ॥ ३३ ॥ कदर्थनाक्लेशः ॥ ३४ ॥ ३५ ॥ उर्ध्व सर्वगुणाल्कटेनदनोयानेस्थितोपीतिशेषः ॥ नपरिक्षीणक्लेशो

अद्वित्ववेदनाद्वित्वमात्मनोपिनिवर्त्तते ॥ नकरोमीतिसकल्पात्पुरुषस्यैवकर्तृता ॥ २९ ॥ द्वित्वसकल्पतोद्वित्वमेकस्यैवप्रवर्त्तते ॥ अद्वित्व सविदाद्वित्वमनकस्यापिनश्यति ॥ ३० ॥ परमात्मनयाद्वित्वनकिलात्मनिविद्यते ॥ अविकारादिमत्त्वेनसर्वगत्वेनसर्वदा ॥ ३१ ॥ यत्स्व सकल्परचितमसकल्पक्षयंहितत् ॥ यथामुनेमनोराज्यंगधर्वनगरयथा ॥ ३२ ॥ तथासकल्पनेक्लेशोनसकल्पविनाशने ॥ सकल्पयक्षो गधर्वपुर्यां स्पृष्टोनतुक्षये ॥ ३३ ॥ पुष्टमकल्पमात्रेणयदिदकु खमागतम् ॥ तदसंकल्पमात्रेणक्षयिकात्रकदर्थना ॥ ३४ ॥ यत्किंचिदपि मकल्प्यनरोदु खनिमज्जति ॥ नकिंचिदपिसकल्प्यसुखमव्ययमश्नुते ॥ ३५ ॥ मकल्पव्यालनिर्मुक्तानयदातवचेतना ॥ नतदानदनोघा नेत्यमुच्चै परिराजसे ॥ ३६ ॥ स्वविवेकानिलै रुत्वामकल्पजलदक्षयम् ॥ परांनिर्मलतामेहिशरदीवनभोंतरम् ॥ ३७ ॥ सकल्पसरित मत्तांमणिमत्रेणशोषय ॥ तत्रोत्थमानमात्मानंसमाश्वास्यभवामना ॥ ३८ ॥ सकल्पानिलनिर्धूतंभ्रांतपर्णतृणाशवत् ॥ भूताकाशे चिदात्मानमवलंब्यविलोकय ॥ ३९ ॥ स्वसकल्पनकालुष्यविनिवार्यात्मनात्मन ॥ परप्रसादमासाद्यपरमानदवान्भव ॥ ४० ॥ सर्वश क्तिमयोत्यात्मायथाभावयत्यलम् ॥ तत्तयापश्यतितदास्वसकल्पविजृंभितम् ॥ ४१ ॥ संकल्पमात्रमेवेदजगन्मिथ्यात्वमुत्थितम् ॥ अ संकल्पनमात्रेणक्षणक्वापिविलीयते ॥ ४२ ॥ संकल्पवातवलितजन्मजालकदवकम् ॥ असकल्पानिलस्पर्शाद्विश्राम्यतिपरपदे ॥ ४३ ॥ त्व ष्णाकरजलतिकामिमांरूढिमुपागताम् ॥ सकल्पमूलोद्धरणात्परिशोषवतींकुरु ॥ ४४ ॥ प्रतिभाससमुत्थानंप्रतिभासपरिक्षयम् ॥ यथाग धर्वनगरतथासस्मृतिविभ्रम ॥ ४५ ॥ प्रभुरस्मीतिविस्मृत्यतावच्छोचतिभूमिप ॥ भूमिपोस्मीतिसंजातायावन्नास्यदृढस्मृति ॥ ४६ ॥

राजसे ॥ ३६ ॥ संकल्पनाशनेतर्हिकउपायस्तमाह ॥ स्वविवेकेति ॥ ३७ ॥ ३८ ॥ पर्णतृणस्यअशा स्वचारस्तद्वत्भ्रांतम् ॥ भूताकाशेसर्वभूततत्राकाशे ॥ ३९ ॥ ४ ॥ य द्वस्तुब्रह्माकारणभोग्याकारेणवायथाभावयतितथापश्यति ॥ ४१ ॥ ४२ ॥ सकल्पलक्षणेनपुरोवातेनवलितंवलितजन्मलक्षणानांजालानांजलधराणांकदंबकंअसकल्पल क्षणस्यपाश्चात्यानिलस्यस्पर्शात्परपदब्रह्माकाशविश्राम्यतिविलीयतइत्यर्थ ॥ ४३ ॥ ४४ ॥ अविद्याकामसंकल्पनाशेपियविजगद्भासेतर्हितस्यतिभासमात्रमितिजीव न्मुक्तानुभवसिद्धदृष्टांतपूर्वपरिशिष्यनश्यत्याशयेनाह ॥ प्रतिभासेति ॥ ४५ ॥ यावदज्ञानतावदेवजगत्प्रतिभासःशोकहेतुर्ज्ञानसमकालनिस्याशयेनाह ॥ प्रभुरिति ॥ ४६ ॥

ज्योतिर्भि सूर्यचंद्राग्निवाक्करणरूपैस्तमोभिरधकाराज्ञानतत्कार्यैश्चमुक्ता ॥ १३ ॥ तस्याःपूर्वापेक्षयायेविशेषास्तानाह ॥ घनेति ॥ सर्वेषापरापरिणतिमित्युत्तरत्रोपमानतयास बधः ॥ १४ ॥ यदापूर्वभूमिकैवाभ्यासवशाद्घनसौषुमादिवत्परापरिणतियातितदाआकाशेविद्यमानाशून्यशक्तिःपरमाकाशचिदेकघनब्रह्माकाशभावमागतेवभूत्वाचेत्याशो न्मुखतात्यजतीतिपरेणान्वयः ॥ स्वतोऽप्युत्थानशून्यताभवतीत्ययपूर्वापेक्षयाफलतोपिविशेषइतिभावः ॥ १५ ॥ १६ ॥ क्रियाहिकालस्यकला परिच्छिन्नमवकाशसापेक्ष वस्त्वाकाशस्यकलाताभ्यासकलेकालताकाशतेतत्परित्यागादेवत्यक्त्वा सकलदृश्यमात्रनकलयतीतिसकलाकला व्यावर्त्तनीयजडाभावान्नाजडा अनामिकाशब्दाभिला पायोग्यावक्ष्यमाणविशेषणासत्ताधत्ते ॥ १७॥ जाग्रत्स्वप्नसुषुप्तिभ्यस्तुर्यांयोविराड्हिरण्यगर्भाव्याकृतेभ्यस्तुर्यांशस्तेनकलिताप्रथमानाम् ॥ १८ ॥ अतएवसर्वनिमित्तक

एषैवमनसोन्मुक्ताचिच्छक्तिःशांतिशालिनी॥ सर्वज्योतिस्तमोमुक्तावितताकाशसुंदरी ॥ १३ ॥ घनसौषुप्तलेखावच्छिलांतःसन्निवे शवत् ॥ सैंधवांतस्थरसवद्वातांतःस्पंदशक्तिवत्॥ १४॥ कालेनयत्रतत्रैवपरांपरिणतिंयदा॥ शून्यशक्तिरिवाकाशेपरमाकाशगातदा ॥ १५ ॥ चेत्यांशोन्मुखतांनूनंत्यजत्यंब्धिवचापलम्॥ वातलेखेवचलनंपुष्पलेखेवसौरभम् ॥ १६ ॥ कालताकाशतेत्यक्त्वासकलेस कलाकला॥ नजडानाजडास्फाराधत्तेसत्तामनामिकाम्॥ १७॥ दिक्कालाद्यनवच्छिन्नमहासत्तापदंगताम्॥ तुर्यंतुर्यांशकलितामक लंकामनामयाम्॥ १८॥ कांचिदेवविशालाक्षसाक्षिवत्समवस्थिताम्॥ सर्वतःसर्वदासर्वप्रकाशस्वाद्वतत्पराम्॥ १९॥ एषाद्वितीया पदताकथितातवसुव्रत॥ तृतीयंशृणुवक्ष्यामिपदंपदविदांवर ॥ २० ॥ एषाद्वैक्येत्यवलनादनामार्थापदंगता ॥ब्रह्मात्मेत्यादिशब्दार्थाद् तीतोदेतिकेवला॥ २१ ॥ स्थैर्येणकालतःस्वस्थानिष्कलंकापरात्मना॥ तुर्यातीतादिनामत्वादपियातिपरंपदम् ॥ २२॥ सापरापरमा काष्ठाप्रधानंशिवभावतः ॥ चित्येकानिरवच्छेदात्तृतीयापावनीस्थितिः॥ २३॥

सार्वकालिकसर्ववस्तुगोचरेभ्यःप्रकाशेभ्य.प्रथाभ्यःस्वादुभ्यश्चानदेभ्यश्चतत्परांतादृशोत्कर्षवतीस्पृहणीयतरांच ॥ १९ ॥ उक्तांतुर्याख्यांद्वितीयभूमिकामुपसंहृत्यतृतीयामव तारयति ॥ एषेति ॥ पदभूमिकाम् ॥ २० ॥ तस्यापूर्वापेक्षयायेविशेषास्तानाह ॥ एषेत्यादिना ॥ दृक्ब्रह्माकाराअखण्डवृत्तिश्चेत्यतद्यामब्रह्मतयोर्वलनात्क्षीरोदकवदेकीभा वान्नमयतिगोचरयतीतिनामप्राहकाशःअर्थ्यतेगम्यतेइत्यर्थोपाम्नाशस्तदुभयशून्यतापदंगता ॥ अतएवब्रह्मात्मेत्यादिपदवाक्यार्थादतीता ॥ तथाचसंप्रज्ञातसमाधिगम्यैवपू र्वाभूमिकाइयत्वसंप्रज्ञातसमाधिप्रतिष्ठागम्येतिविशेषइतिभावः ॥ २१ ॥ स्थैर्येणषड्भावविकारराहित्येनकालतोपिस्वस्थास्थिरा तमसोपिपरेणआत्मनास्वेनैवनिरस्तकल का ॥ याअतिशयितपरंपदपरमपुरुषार्थइत्यर्थः ॥ २२ ॥ सर्वेषांपराणांपरापरमाकाष्ठाअवधिः ॥ शिवभावत.परममंगलत्वात्सर्वेभ्योमगलेभ्य.प्रधानम् ॥ एकामुख्यानिरव च्छेदाविच्छित्तिरहिताचितिस्थितिस्तृतीयेत्यर्थः ॥ २३ ॥

अकलकस्थितिमाह ॥ शुद्धेति॥ सत्यावाऽसत्यावाइत्येवमादिभिर्विकल्पनामशब्दार्थैः सर्वैर्विमुक्ताव्यवहारेसमनामरूपात्मिकापिसर्वशून्यस्वभावासेत्यर्थः ॥ ५ ॥ उक्तनि
ष्कलकस्थितिप्रसिद्ध्यर्थंसुषुप्त्यादिभूमिकाभेदान्दर्शयितुमुपक्रमते ॥ सर्वमिति ॥ सर्वंपूर्णनिरुपममस्मिन्आकाशमिवभयमविकसतीत्याकाशविकासातथाविधयास्वमायाश
क्त्याजाग्रत्स्वप्नसुषुप्तिलक्षणैःसृष्टिस्थितिसंहारलक्षणैरध्यात्माधिभूताधिदैवलक्षणैर्वाभिर्मार्गैःप्रवृत्तजगन्मनसैवजृंभितम् ॥ ६ ॥ अतोमनश्छेदेनैवास्यच्छेदइत्याह ॥ म
नसेति ॥ सत्यस्यालोकात्साक्षात्कारात् ॥७॥ एवंतत्त्वबोधेनकल्पनाभिः सहमनसिच्छिन्नेप्रथमयस्यांभूमिकायांजीवन्मुक्तस्यस्थितिर्भवतितांलक्षणेनाभ्यावदर्शयति ॥ भृष्टबी
जोपमेत्यादिना ॥ इतिनामिका जुष्टंयदापश्यत्यन्यमीशमस्यमहिमानमितिवीतशोकइतिश्वेताश्वतरकाठकश्रुत्योः श्रद्धांवोऽन्येस्वपितिनामनिर्वचनेस्वअपीतीतिविभागेषुइति
पदेनप्रवृत्तत्वादितिनामिकेत्यर्थः ॥ यद्यप्यस्यांसुषुप्तावपिस्वपितिनामास्तितथापितत्त्वबोधेनाज्ञानलिंगाविद्याधारस्योपाधेर्यस्यामविद्यायांलयस्तयोरभावादप्ययबोधक

शुद्धानिरंशासत्यावासत्यावेत्येवमादिभिः ॥ विमुक्तानामशब्दार्थैः सर्वैः सर्वात्मिकापिस्वम् ॥ ५॥ सर्वंनिरुपमंशांतमनसैतद्विमार्गग
म् ॥ प्रसृतंबृंहितंब्रह्मशक्त्याकाशविकासया ॥ ६ ॥ मनसामनसिच्छिन्नेसेंद्रियावयवात्मनि ॥ सत्यालोकाज्जगज्जालेप्रच्छन्नेविल
यंगते ॥ ७॥ छिद्यतेशीर्णसंसारकलनाकल्पनात्मिका ॥ भृष्टबीजोपमासत्ताजीवस्यइतिनामिका ॥ ८ ॥ पश्यतीनामकलितोसृजती
चेत्यचर्वणाम् ॥ मनोमोहाभ्रनिर्मुक्ताशरदाकाशकोशवत् ॥ ९ ॥ शुद्धाचिद्भावमात्रस्थाचेत्यचिन्तापलंगता ॥ समस्तसामान्यवती
भवतीर्णभवार्णवा ॥ १० ॥ अपुनर्भवसौषुप्तपदार्थित्यपीवरी ॥ परमासापविश्रांताविश्रांताविततेपदे ॥ ११ ॥ एतत्तेमनसिक्षीणे
प्रथमकथितपदम् ॥ द्वितीयंशृणुविप्रेंद्रशक्तेरस्याः सुपावनम् ॥ १२ ॥

स्यापिशब्दस्यनिवृत्तौस्वरूपमात्र्यपर्यंकइतिशब्दएवावशिष्टस्तन्नामसपद्यतइतिभावः ॥८॥ एवंसर्वदृश्यबाधेनापरोक्षदृश्याभावपरिशेषात्पश्यतीस्यपितस्यानामांतरमित्याह ॥
पश्यतीति ॥ चेत्यस्यचित्तविषयस्यचर्वणापुनःपुनःभीत्यानुस्मरणउत्सृजतीत्यजती ॥ ९ ॥ भावैकल्पचिन्तापलंगतापिसापतचित्स्वभावमात्रस्यासमस्तस्यसामान्यसत्तातद्वती
तत्प्राधान्येनपरिशिष्टेतियावत् ॥ भवेजीवदशायामेवतीर्णोभवार्णवोयस्याम् ॥ १० ॥ सौषुप्तमितिपदस्यसुषुप्तनिरतिशयानदात्मकसुखंस्वलाभरूपमितिच्छांदोग्यश्रुत्युत्तरत्र्यनु
मानानुपानदादिहैरण्यगर्भानंदांतशतगुणोत्तरोत्तरोत्कृष्टविषयानंदसीकरमहार्णवायितत्वेनश्रुतिदर्शितनिरतिशयानंदरूपत्वेनपीवरीअतिमहती ॥ अथवासौषुप्तपदस्यसौषुप्त
स्थानस्ययत्स्वातिस्यनिरस्तत्वाविद्यामौल्यविवेकघनपूर्णानंदस्वप्रकाशस्वरूपतेनपीवरी ॥ अतएवनामस्यागलक्षणयानामसौषुप्तपदनामिकापिसेतिभावः ॥ ११ ॥ उत्तरस्याम
वतारयिष्यन्वर्णितप्रथमस्यानुपसंहरति ॥ एतदिति ॥ शक्तेर्भिन्नभूमिकैर्दशिकाराणा ॥ १२ ॥

ब्रह्मविष्णुहरादीनामत्रयःपरमःपिता ॥ महादेवःपरात्मासौपूज्यसीमातईर्यते ॥१॥ भक्तवात्सल्यातिशयान्ममविकासेप्रबोधनेउन्मुखोमद्भाग्योदयेनप्रेरितःसन्बहिर्विकासनेत्रो न्मीलनआददेस्वीचकार ॥ १ ॥ हरस्यमुखलक्षणेनिर्मलत्वात्रिपुण्ड्रशरदभ्ररेखाकितत्वाच्चाकाशतलेउदितोदृशाचंद्रसूर्याग्निलक्षणनेत्राणांचयोबोधसमाधेःप्रबुद्धतांद्योतयामा स ॥ यथासमुद्रकान्मेघसम्पुटकाद्द्यावाभूमिसंपुटाद्वाउद्गतःअशूनाराशिरर्कोऽहर्द्योतयतितद्वदित्यर्थः ॥ अर्कअंशुराशिरित्युत्वविषयेयत्वछादसम् ॥२॥ तत्रभगवास्तत्त्ववोधो पयोगितयाउपायोपेयसारौप्रथममाह ॥ मुनेइति ॥ हेमुनेत्वयाप्रथममननविचारमाहूयसन्निधाप्यस्वस्यप्रतीच सत्तापारमार्थिकरूपमेवाशुमीयताप्रमाणैर्निर्धार्यताम् ॥ तत्र प्रतीचिअनर्थवहिर्मुखत्वापादनेनसर्वानर्थमूलत्वमर्थयुष्मत्प्रत्यययोग्यमचिद्दशमाआहर ॥ यथाअचलमेवाकाशपवनःस्पदतानयस्तापरजोजाड्यादिभाजकरोतितादृशमि तिलमर्थोपमा ॥ ३ ॥ ननुत्वमर्थेष्वपिद्रष्टव्यहेयमुपादेयचबहस्तितत्कुतोनादत्तेव्यतत्राह ॥ द्रष्टव्यमिति ॥ येनाश्रुतंश्रुतभवत्यमतमतमविज्ञातविज्ञातभवतीत्यादिश्रुतेरात्मद र्शनेनैवसर्वद्रष्टव्यानांतत्त्वतोदृष्टत्वाद्दृष्टैरदृष्टैर्वाभ्रमैःसमसहकिंप्रयोजनम् ॥ तद्विदस्तत्त्वविदः ॥ इहभातिविषये ॥ ४ ॥ उपात्ताइष्टार्था प्रहीणाअनिष्टाश्वचित्ताश्वासनहे

**श्रीवसिष्ठउवाच ॥ ॥ ततोमुहूर्त्तेनहरोगौरीकमलिनीसरः ॥ मद्विकासोन्मुखःस्वैरंविकासंवहिराददे ॥ १ ॥ दृक्त्रयोद्योतयामासमुखा काशतलोदितः ॥ बोधंसमुद्रकादर्कअंशुराशिरिवोद्गतः ॥२॥ ॥श्रीईश्वरउवाच ॥ ॥ मुनेमननमाहूयस्वसत्तैवाशुनीयताम् ॥ त्वमर्थ माहरानर्थपवनःस्पंदतामिव ॥ ३ ॥ द्रष्टव्यमिहयत्किंचितद्दृष्टंकिंसमंभ्रमैः ॥ नहिहेयमुपादेयंचेहपश्यामितद्विदः ॥ ४ ॥ शांत्यशांतिमया नेतान्विकल्पान्दलयन्नसिः ॥ धीरोसिनान्यथास्थित्वात्वमेवभवचात्मदृक् ॥ ५ ॥ इमांदृश्यदशामाशुबाह्यबोधायवापुनः ॥ समाश्रि त्यमदुक्तंत्वंशृणुतूर्ष्णीस्थितेनकिम् ॥ ६ ॥ इत्युक्त्वाबाह्यबोधस्त्वंमाभवेतित्रिशूलधृक् ॥ प्राणेनेदंदेहगेहंपरिस्फुरतियंत्रवत् ॥ ७ ॥ प्राण हीनंपरिस्पंदंत्यक्त्वातिष्ठतिमूकवत् ॥ चालनीपावनीशक्तिःशक्तिःसंवेदनीचितिः ॥ ८ ॥**

तुत्वाच्छांतिमयास्तएवविपरीताविक्षेपहेतुत्वादशांतिमयास्तानेतान्विकल्पान्दलयस्त्वमेवधीर असिरसिअन्यथातुनधीरोसि ॥ अतःआस्थित्वाआस्थाविधायआत्मदृक्चाद्धी रश्वभव ॥ तथाचदृश्याकारानास्कंदितचिदात्मस्वभावावस्थितिरेवमुख्य कल्पइतिभावः ॥ ५ ॥ तत्रचेत्त्वमसमर्थस्तर्हितत्प्राप्तयेकंचित्कालश्रवणाद्यनुकूलांकतिपयामेवबा ह्यदृष्टिमवलम्ब्यनिरंतरतत्त्वप्राप्तयेयतस्वनकदाचिदपिप्रमादादुपरमस्वेत्याह ॥ इमामिति ॥ बाह्यबोधाय सूर्योयथासर्वलोकस्यचक्षुर्नलिप्यतेचाक्षुषैर्बाह्यदोषैः ॥ एकस्तथा सर्वभूतांतरात्मानलिप्यतेलोकदुःखेनबाह्यइतिश्रुतौअलेपकत्वसमर्थनायसर्वप्रपंचबाह्यत्वेनदर्शितस्यात्मनोबोधायतूष्णीमात्मलाभप्रयत्नविनास्थितेनावस्थितेनकिंकःपुरुषा र्थइत्यर्थः ॥ ६ ॥ बाह्याकारदर्शनानामध्येदेहात्मतादर्शनमेवमहाननर्थःसर्वानर्थबीजचेतितदेवममत्याजयितुभगवान्प्रवृत्तइतिवसिष्ठआह ॥ इत्युक्त्वेति ॥ त्रिशूलधृक्इति प्रागुक्तकल्पांतरमुक्त्वात्वबाह्यदेहादावात्मबोधोयस्यतथाविधोमाभवेत्याशयेनवक्ष्यमाणदेहात्मताभ्रमनिरासोपायमाहेतिपूरयित्वाव्याख्येयम् ॥ त्रुटितोवायंथोत्रान्वेष्यः ॥ तत्रदेहस्यक्रियाशक्तिरिवचेतनशक्तिरपिपरायत्तेतिनात्मप्रसक्तिरित्याशयेनप्राणाधीनादेहचेष्टेत्याह ॥ प्राणेनेति ॥ ७ ॥ देहस्यचालनीचलनानुकूलाक्रियाशक्तिःपावनीपवन प्रयुक्ता ॥ संवेदनीशक्तिस्तुआत्मचितिरेवेत्यर्थः ॥ ८ ॥

अस्यांप्रतिष्ठायांभूमिकायांस्थिति-सासर्वेभ्य शैवशास्त्रप्रसिद्धपदभ्यभ्य-श्रुतिप्रसिद्धधूमार्चिरादिभ्यभ्यस्तदध्वगेभ्यस्तैरध्वभिरुपास्तिफलभूभ्यलोकभेदशमेभ्यश्चदूरगा अतोहे अगममापिवचसांगाचरविपयतांनसमायातिकिंतुस्वयमेवानुभूयतइत्यर्थ ॥ २४ ॥ त्रिभ्योआपरादिमार्गेभ्य कल्पनायास्तत्सापेक्षतुपत्वसम्यायाश्चातीतइतिएवरूपोदेव सनातनोनित्योनाम्य ॥ अतोम्यदार्त्तमितिश्रुतेरितिभाव ॥ २५॥ तन्मयवेदनात्तदुपादानकत्वदर्शनात्एतन्मयम् ॥ उपादानातीताद्वितीयसत्यसंवेदनात्तुइदंनेवच ॥ द्विविध विकस्यातीतमित्यर्थ ॥ २६ ॥ तदेवस्पष्टमाह ॥ नेदमिति ॥ स्वस्यकोशउदरतद्वत् ॥ २७ ॥ कुतस्तत्समेभ्योपिसमाभासतप्रहेतुमाह ॥ अद्वैतैक्यादितिद्वाभ्याम् ॥ प्रलयाम्बि वद्वैक्याभावेपिस्वात्मनिसंक्षोभ स्यान्नेत्याह ॥ असंक्षोभादिति ॥ कुतोनसंक्षोभस्तत्राह ॥ घनचेतनयेति ॥ घनेपिसैंधवखण्डवत्सादिविकारस्तत्रसएवदृष्टस्तद्वत्किनस्यात्त त्राह ॥ अविकारादिमत्वादिति ॥ आदिपदाद्विसत्तपरिग्रह ॥ चिरनित्याअपिकालाकाशादयोनित्यायस्मात्तादृशतया ॥ २८ ॥ सतामसतामपि शिशुकल्पितनप्त शिलाको

चिरमस्याप्रतिष्ठायांमवांध्वाध्वगदूरगा॥ साममाप्यगवचसांनसमायातिगोचरम्॥ २४॥ त्रिमार्गकलनातीतमितितेकथितमुने॥ तिष्ठतस्मिन्पदेनित्यमितिदेवःसनातन ॥ २५॥ एतन्मयमिदंविश्वंमनेतन्मयवेदनात्॥ सत्यसंवेदनान्नेदनचनेदंमुनीश्वर॥ २६॥ नेदं प्रवर्त्ततेकिंचिन्नेदंकिंचिन्निवर्त्तते॥ शांतसमसमाभासप्रयंतस्वस्यकोशवत्॥ २७॥ अद्वैतैक्यादसंक्षोभाद्घनचेतनयातया॥ अविकारा दिमत्वाच्चनित्यानित्यतयाचिरम्॥ २८॥ चिद्घनत्वाच्छिशुशिलाकोशानांजगतामपि॥ मनागपिनभेदोस्तिसतामप्यसतामपि॥ २९॥ समस्तंसुशिवंशांतमतीतंवाग्विलासत ॥ ओमित्यस्यचतन्मात्रातुर्यासापरमागति ॥ ३०॥ ॥श्रीवाल्मीकिरुवाच॥ ॥इत्युक्त्वा नमलद्दक्षपरिणामतोस्मिन्पारेपदेममुपशांतरवाभिधाने॥ तूष्णीमतिष्ठद्मुनामुनिनाचसार्धविश्रांतवृत्तिरथतन्नमुहूर्तमीश ॥३१॥ इ॰वा॰वा॰दे॰मो॰नि॰पू॰श्रीपरमेश्वरोपदेशोनामचतुस्त्रिंश सर्ग ॥३४॥ ॥ ५ ॥

शानांजगतामपिचिद्घनत्वान्नमनागपिभेदोस्तीतिसमसमाभासमितिसूक्तमितिभाव ॥ २९ ॥ उक्तमेवतुर्यातीतत्वमुपपादयन्नुपसंहरति ॥ समस्तमिति ॥ ओमित्यस्याक्षर स्यविराडादिभिरकारादिमात्राभेदेनकल्पितैश्चतुर्भि-पादैःप्रविभक्तस्ययानादबिंदुशक्तिशांताख्यास्तस्याअर्धमात्रायामाभास्तासुतुर्याशांताख्यासापरमागति ॥ तस्यांहिओ तानुसाम्नमुना विकल्पाख्यासुस्थितिपुअविकल्पाख्यातुरीयतुरीयातापनीयश्रुतीपरमागतिम्यसाविततिभाव ॥ ३० ॥ ईश शिवइतिवर्णितमकारेणोक्तवानुपविष्टयानसन्अ यअमनामसितनमुनिनावाधस्थी स्फुरनपादिभिश्चसार्द्धंसम्यगुपशांतोरवःप्रणवार्धमात्राचरमभागोयत्रेतिप्युतस्याशांतरवाभिधानेअस्मिन्सर्वसंसारपारेतुरीयतुरीयपदेअम लापादृग्भूतानरस्मिन्नैविकरस्येनपरिणामतोविश्रांतावृत्तियस्यतथाविध-सन्तपर्वसिष्ठाश्रमेमुहूर्तंतूष्णीन्निस्पंदएवातिष्ठत ॥ मनस-परमपदविश्रांतौतदधीनसर्वेंद्रियचेष्टानाकु ठीभावादितिभाव ॥ ३१ ॥ ॥ इतिवासिष्ठ तात्पर्यप्रकाशे पू॰चतुस्त्रिंश सर्ग ॥ ३४ ॥ ॥ ५ ॥ ॥ ५ ॥

अतएवबोधनिरस्तसर्वामंगल·परमानंदात्मास्वतएवशिवशब्दार्होनप्रवृत्तिनिमित्तसापेक्षइत्युक्तमित्याह ॥ कर्मेति ॥ १८ ॥ इदंजगत्बाधेनास्ति आरोपेचास्ति ॥ तदधिष्ठान तत्त्वअस्तिहिअस्त्येव ॥ व्यावहारिकसद्वैलक्षण्यात्सदिव ॥ १९॥ शिवब्रह्मसदादिनामकल्पनापिजीवन्मुक्तानामधिकारिप्रबोधनार्थैवेत्याह ॥ अविश्रांतेत्यादिना ॥ मुमुक्षुभि रधिकारिमोचनेच्छुभिर्विचित्रस्यजगत·शुद्धस्यतत्त्वस्यचमननतल्लक्षणोय·शुद्धात्मनिकलकस्तद्युक्तआत्मामनोयेषाम् ॥ २० ॥ परमार्थस्यअदूरेसंनिहितेजीवन्मुक्तस्यदृक्प थेतिष्ठद्भि· ॥ मोक्षायस्वोपासकायेभक्तास्तेषांबोधायशास्त्रार्थस्यतत्त्वतज्ज्ञाननतदुपायानारचनायसम्यगुपपादनाय ॥ २१ ॥ पुराणानांवेदानांसिद्धांतानांबादरायणसूत्रादीनां

कर्मबुद्धींद्रियाद्यंतसुखदुःखादिसंक्षये ॥ शिवआत्मेतिकथितस्तत्सदित्यादिनामभिः ॥१८॥ यत्रेदमखिलंनास्तितद्रूपेणैवचास्तिवा ॥ तदाकाशादच्छतरमनंतंसदिवास्तिहि ॥ १९॥ अविश्रांततयायत्रतनुविधैर्मुमुक्षुभिः ॥ विचित्रशुद्धमननकलंककलितात्मभिः ॥२०॥ अदूरएवतिष्ठद्भिर्जीवन्मुक्तस्यदृक्पथे ॥ मोक्षोपासकबोधायशास्त्रार्थरचनायच ॥ २१ ॥ ब्रह्मेंद्ररुद्रप्रमुखैर्लोकपालैःसुपंडितैः ॥ पुराण वेदसिद्धांतसिद्धयेभावितात्मभिः ॥ २२ ॥ चिद्ब्रह्मशिवआत्मेशपरमात्मेश्वरादिका ॥ एतस्मिन्कल्पितासंज्ञानिःसंज्ञेपृथगीश्वरे ॥ २३॥ एवमेतज्जगत्तत्त्वंस्वंतत्त्वंशिवनामकम् ॥ सर्वथासर्वदासर्वसर्वंयत्सुखमास्वभो ॥ २४ ॥ शिवआत्मापरंब्रह्मेत्यादिशब्दैस्तुभिन्नता ॥ पुरातनैर्विरचितातस्यभेदोनवस्तुतः ॥ २५ ॥ एवंदेवार्चनंनित्यंज्ञःकुर्वन्मुनिनायक ॥ यत्रास्मदादयोभृत्यास्तत्प्रयांतिपरंपदम् ॥ २६ ॥ श्रीवसिष्ठउवाच ॥ ॥ अविद्यमानमेवेदंविद्यमानमिवस्थितम् ॥ यथातन्मेसमासेनभगवन्वक्तुमर्हसि ॥ २७॥ ॥ श्रीईश्वरउवाच ॥ योसौब्रह्मादिशब्दार्थःसंविदंविद्धिकेवलम् ॥ स्वच्छमाकाशमप्यस्यस्थूलंमेरुरणोरिव ॥ २८॥ सावेद्यमिहगच्छंतीयातिचिन्मामयो ग्यताम् ॥ अप्यवेद्यवतीनूनमुन्मन्यंतपदस्थिता ॥ २९ ॥

सिद्धयेसार्थक्याय ॥ २२ ॥ पृथक्संज्ञाकल्पिता ॥ २३ ॥ भोवसिष्ठवियदादिजगदारोपाधिष्ठानत्वाज्जगत्तत्त्वम् ॥ अवस्थात्रयारोपाधिष्ठानत्वात्स्वंतत्त्वंचयत्सर्वदासर्वप्रका रे·सर्ववस्तूनांसर्वभावनिर्वाहकतत्केवलब्रह्मसुखमेवनाणुमात्रमप्यन्यदस्तीतिनिश्चित्यत्वमास्व ॥ २४ ॥ २५ ॥ एवमुक्तस्थितिरूपदेवार्चनम् ॥ यत्रयस्मिन्परमशिवपदेअस्म दादयएकैकगुणाभिमानिनोभृत्याइवसृष्ट्यादिकर्मनियताः ॥ २६ ॥ इदानींवसिष्ठ·शुद्धचितिजीवभावतत्संसरणारोपक्रमजिज्ञासु·पृच्छति ॥ अविद्यमानमिति ॥ २७॥ उत्त रोत्तरारोपेस्थौल्योपचयंवक्तुंपरमसूक्ष्मरूपमूलदर्शयति ॥ योसाविति ॥ मेरुरणोरिवेति ॥ चित्सौक्ष्म्यस्यजडसौक्ष्म्यस्यचस्पष्टमेवांतरमितिभावः ॥ २८ ॥ साचिद्वेद्यगोचरस स्फारोद्बोधाद्वेद्यकल्पनोन्मुखीयदाभवतितदाचेतनाच्चिदितिक्रियानामयोग्याभवतीत्यर्थ· ॥ उन्मन्यंतपदेनिर्विकल्पसमाधिप्रसिद्धचिदानंदैकरसस्वभावेस्थितापि ॥ २९ ॥

१ आकाशमपिमध्यस्थमित्यपिपाठः

॥ २० ॥ इयत्तापीनांपयावमाहनादेशतांकालतांषगता कल्पना सपषेताश्चाहताया सरूयदस्युव्येक्षा ॥ २१ ॥ ताभिर्देशकालकल्पनाभि संवलितासाअहंतास्पदगोच
स्कारोद्बोधात्स्वविज्ञानासतीपवनस्यलेखिकेयाम भाणस्पदासतीजीवाभिधानिकाभवति ॥ जीवप्राणधारणेइतिधात्वर्थानुगमादित्यर्थ ॥ २२ ॥ एवनिश्चयसंस्कारोद्बो
दुध्यादिशब्दवाच्यापिभवतीत्याह ॥ जीवेति ॥ २२ ॥ ततोवाचिककायिकमानसिकव्यवहारसंस्कारोद्बोधाच्छब्दादिशक्त्याअहंतानुगम्यते नप्रदर्शितमत्यतपिच्छितास्वि
मात्मरूपयया ॥ २४ ॥ २५ ॥ अंतस्थयाअनावृतसाक्षिरूपयाप्रसरात्स्याप्यामअनातीतिप्रइतिप्रमारूपसपद्यते ॥ तथात्मन स्वप्रकाशतानबलादेवेत्याह ॥ आत्मदृगि
॥ २६ ॥ एवमत कल्पनावासदृस्यसत्ताकल्पनायाहेतुरित्याह ॥ सपद्यमानाइति ॥ नावक्ष्यमाणा ॥ २७ ॥ तेजःसत्तायाप्रकाशिनीपस्तु सत्ता ॥ २८ ॥ रसयतीतिरसोर

क्षणाद्भावितवेद्यत्वादहंतामनुगच्छति ॥ पुरुषत्वात्पुमान्स्वप्नेवनवारणतामिव ॥ ३० ॥ अस्याहंतादिरूपायादेशतांकालतागता ॥ स
पद्यतेततःशून्यरूपिण्यसत्स्यएवता ॥ ३१ ॥ ताभिःसंवलितासैवसत्ताजीवाभिधानिका ॥ भवतिस्पदविज्ञानापवनस्येवलेखिका
॥ ३२ ॥ जीवशक्तिस्तयाभूतानिश्चयैकविलासिनी ॥ बुद्धितामनुयातासाभवत्यज्ञपदेस्थिता ॥ ३३ ॥ शब्दशक्त्याक्रियाशक्त्याज्ञानश
त्त्यानुगम्यते ॥ प्रत्येकप्रस्फुरत्यंतरप्रदर्शितरूपया ॥ ३४ ॥ मिलित्वैषगण क्षिप्रंस्मृतिंसमनुकूलयन् ॥ मनोभवतिभूतात्मबीजसंकल्प
शाखिन ॥ ३५ ॥ आतिवाहिकदेहोक्तिभाजनतद्विदुर्बुधा ॥ अंतस्थयाब्रह्मशक्त्याप्ररूपंस्वात्मनात्मदृक् ॥ ३६ ॥ संपद्यमानाएवास्मिंश्चे
तसीमाहिशक्तय ॥ पश्चाद्दिहवहिष्ठास्ताउयत्यनुदिताअपि ॥ ३७ ॥ वातसत्तास्पंदसत्तास्पर्शसत्तातथैवच ॥ त्वक्सत्तातेजसासत्तातया
सत्ताप्रकाशिनी ॥ ३८ ॥ रूपसत्ताजलसत्तास्वादुसत्तातथैवच ॥ तथैवरससत्ताचगंधसत्तातथैवच ॥ ३९ ॥ भूसत्ताहेमसत्ताचपिंडस
त्ताचपीवरी ॥ देशसत्ताकालसत्तासर्वाकाराकारवर्जिता ॥ ४० ॥ सर्वसत्तागणंचैतत्क्रोडीकृत्यस्वरूपवत् ॥ स्फुरत्याश्रित्यपत्रादिबीजं
बीजादितांगतम् ॥ ४१ ॥ एतत्पुर्यष्टकंविद्धिदेहोयश्चातिवाहिक ॥ अपारबोधमेतत्तुस्फुरत्यगविभागवत् ॥ ४२ ॥ एवमापगसपन्नस
पन्नंनचाकिंचन ॥ नज्ञाननचतद्रूपनविद्धाचितचेतनम् ॥ ४३ ॥

नेंद्रियतत्त्वसा ॥ ३९ ॥ हेमशब्देनरजतसुवर्णमयेप्रशोधस्वपरिणामे ॥ पीवरीअतिमहतीप्रभोगपिंडसत्ता ॥ ४० ॥ स्वरूपवत्तादात्म्येनक्रोडीकृत्यसंग्रह ॥ यथाबीजमुत्तरोत्त
रपरिणामेनबीजादितामनभकुरकांडशाखापत्रादिक्रोडीकृत्यस्फुरतितद्वत् ॥ बीजादीकांविनामितिपाठेबीजतिउत्तरोत्तरबीजानियेभ्यस्तादृशानामकुरकांडादिपरंपराणामावि
र्भावनतांगतम् ॥ ४१ ॥ एतदुक्तसर्वसत्ताक्रोडीकृतस्वरूपपुर्यष्टकस्थूलाविवेकभयात्मकम् ॥ अयमनवासनात्मनाआतिवाहिकोदेह ॥ अपारोपरिच्छिन्नोबोधश्चिदात्मक
यस्यतथाविधमविप्रपृतम् उक्तविभागवत्स्फुरतिनाम्यविस्पर्थ ॥ ४२ ॥ एवमारोपक्रममपच्यापवादवर्शयति ॥ एवमाविति ॥ …
तत्पुर्यष्टकरूपम ॥ विद्यातचनअचिदाभासेनाचितचेतनमपिन ॥ ४३ ॥

जलपीठस्यजलाधारस्यसमुद्रस्येतियावत् ॥४४॥ कथमिदविज्ञातंतत्राह ॥ सविदिति ॥ यतोदृश्यजातंसविदेवेतिसवेदनेएकात्मक सविद पृथक्कृततुअचेतनंभासकशून्यमित्यु भयथापिनजीवतीत्यर्थ. ॥४५॥ किंचेदज्ञातसद्वास्तवस्यादज्ञातवानोभयथापीत्याह ॥ सवेदनादिति॥ सवेदनादित्यस्यव्याख्यापरिज्ञानादिति ॥४६॥ अथयदिकश्विद्ब्रूयात्स्व तश्चिन्मात्रस्वभावमपिएतद्वस्तुवद्धस्याप्रजायेयेतिसकल्पात्स्वातरेवदृश्याशतानिविदतेइतितर्हिसकल्पकल्पितस्यमिथ्यात्वात्तस्याणोःपरमसूक्ष्मस्यात्मनस्तन्मात्रस्वभावेनसत्ताप्र थमकल्पितेदेहकेसूक्ष्मदेहेएवचिराभ्यासात्स्थूलतापश्यति ॥४७॥ स्थूलदेहगबधाच्चसर्वमातरकोशचतुष्टयवाह्यविषयजातचस्थूलत्वमापन्नतद्वत्तैवस्वकल्पनयापश्यति ॥ वा

परंपरेप्रस्फुरितंकेवलंकेवलात्मसत्॥ जलपीठस्यजठरेजलद्रवविलासवत्॥ ४४॥ संवित्संवेदनैकात्मपृथगेतदचेतनम् ॥ संपद्यतेप रिज्ञातंसंकल्पनगरोपमम्॥ ४५॥ संवेदनात्परिज्ञानाच्छिवतामेवगच्छति ॥ अज्ञातमेववायत्तत्कथंगच्छतिवस्तुताम्॥ ४६॥ अथै तद्विंदतेस्वांतःसंकल्पादंशतांस्वतः॥ तन्मात्रसत्तातस्याणोरेतांपश्यतिदेहके॥ ४७॥ सर्वंस्थूलत्वमापन्नंतदेवाशुप्रपश्यति ॥ तस्यतन्मा त्ररंध्राणियथादेशंप्रपश्यति ॥ ४८ ॥ ततःपुरुषरूपैकभावनात्पुरुषाकृतिम् ॥ काकनालीयवद्दृष्ट्वातुष्टंपुष्टंभवत्यलम्॥ ४९॥ जीवदेत दवस्थाकंस्थितंपश्यतिदेहकम्॥ असंतमेवगंधर्वपुरंस्वप्ननरंयथा॥ ५०॥ ॥श्रीवसिष्ठउवाच॥ ॥गंधर्वनगराकारमपिस्वप्ननरोप मम्॥ जगद्दुःखायदुःखस्यकात्रयुक्तिःपरिक्षये॥ ५१॥ ॥श्रीईश्वरउवाच॥ ॥ वासनावशतोदुःखंविद्यमानेचसाभवेत् ॥ अविद्य मानंचजगन्मृगतृष्णांबुभंगवत्॥ ५२ ॥ अतःकिंवास्यतेकेनकस्यवावासनाकुतः ॥ कथंस्वप्ननरेणांगमृगतृष्णांबुपीयते ॥५३॥ स द्रष्टरितुसाहंतेसमनोमननादिके॥ अविद्यमानेजगतियत्सत्तत्परिदृश्यते॥ ५४॥ यत्रनोवासनानैववासकोनैववास्यता॥ केवलंकेव लीभावःसंशांतकलनभ्रमः॥ ५५॥ यस्यसत्योप्यसत्योवाशून्यएवहियक्षकः॥ विलीनस्तस्यकैवल्यात्किमन्यदवशिष्यते ॥ ५६ ॥

स्वरूपादिदर्शनेचतस्यदेहस्यचक्षुरादिलक्षणानितन्मात्रद्वाराणियथाविषयव्यवस्थितानिप्रपश्यति ॥ ४८ ॥ ततोहस्तपादाद्यवयवसघातेआंतरकोशेषुचपुरुषाकारेणैकत्वभाव नात्पुरुषाकृतिपश्यति तेनचाकस्माद्व्यवहारक्षमतादृष्ट्वातुष्टपुष्टच भवति ॥ ४९ ॥ ५० ॥ मिथ्येतिज्ञातमपिजगद्दुःखजनयत्येवअतोदु.खचिकित्सामिथ्यात्वज्ञानादन्यैववाच्ये तिमन्यमानोवसिष्ठ पृच्छति ॥ गंधर्वेति ॥ ५१ ॥ वासनाक्षयपर्यंतदृढतरमिथ्यात्वनिश्चयएवदु खनिवृत्त्युपायोनापाततइत्याशयेनोत्तरमाह ॥ वासनेत्ति ॥ ५२ ॥ अत्यतास त्त्वदृढनिश्चयेआश्रयविषयाद्यभावादेववासनानुदयसिद्धिरित्याह ॥ अतइति ॥ ५३ ॥ द्रष्ट्रादिसहितेजगत्यविद्यमानेसतियद्ब्रह्मात्रसत्तदेववाशिष्यते ॥ ५४ ॥ ५५ ॥ सत्यो व्यावहारिक.असत्य.प्रातिभासिकोवायक्षकोयस्यप्रौढस्यदृशाशून्यत्वान्नित्यविलीनः ॥ ५६ ॥

एवमुक्तरीत्यायआदिपुरुषःस्वसृष्टस्यद्रष्टासंपद्यतेसनिमेषंप्रतिनिमेषलक्ष्यकालेपिस्वरूपपर्यालोचनमात्रेणव्योमचिदाकाशमात्रंसमुदेति॥ अथस्वरूप...
अनंतमपारंचसंसारंप्रतिनीयते ॥९॥ कल्प कल्पनासमर्थ. ॥ प्रतिभासस्यविपर्यास पराक्प्रवणतातन्मात्रेण ॥१०॥ व्योम्निसूचीछिद्राद्याकाशेपि ॥११॥ तेचसर्गभेदायावतां
जीवानांतुल्यकालतुल्यगोचरवासनोद्भवस्तावतांमिथोदर्शनादिव्यवहारसंवादिनः अन्येषांतच्छून्याइत्यैंदवोपाख्यानन्यायमाश्रित्याह ॥ दृश्यतइति॥ अदर्शनचकल्पितरूपा
शे अधिष्ठानांशेनुसर्वेषांनित्यापरोक्षतैवेत्याह ॥ दृष्टेनेति ॥ १२ ॥ तत्रयुक्तिमाह ॥ सर्गाइति॥ यतःसर्गेणसर्गात्मनास्थितेनजीवेनसंभाव्यमानाःसतएवसर्गाःसंभवंतिनतुतेशिवे
परमार्थस्वभावेपरमेव्योम्नि ॥ तत्रतेपाव्योमरूपत्वस्यैवपर्यवसानादित्यर्थः ॥ १३ ॥ ननुसर्गाब्रह्मसत्तानिरपेक्षा.स्वसत्तयावादेशकालसंबंधबललब्धसत्ताभावासतुतत्राह ॥ स्व
यचेति ॥ सदसद्रूपानैकतरनियतस्वभावाः एवंदेशःकालश्चसर्गैःआक्रांतः तयोरपिसर्गांतर्गतत्वात्सर्गसापेक्षरूपत्वेनसर्गाधीनकल्पनत्वाच्चेत्यर्थ.॥ तर्हिसर्गएवस्वस्यकाला

द्रष्टादिपुरुषस्त्वेवंस्वयंसंपद्यतेहियः॥ सनिमेषंप्रतिव्योमसमुदेत्यथनीयते॥ ९॥ निमेषएवकल्पोयोमहाकल्पपरंपराम्॥ प्रतिभासवि
पर्यासमात्रेणानुभवत्यलम्॥ १०॥ परमाणौपरमाणौव्योम्निव्योम्निक्षणेक्षणे॥ सर्गकल्पमहाकल्पभावाभावाभवंतिते॥ ११॥ दृश्यं
तेकेचिदन्योन्यंसाधर्म्याद्वासनागतेः॥ मिथःकेचिन्नदृश्यंतेदृष्टेनाथसदात्मना॥ १२॥ सर्गाःसर्गेणसर्वत्रसंभवंतिनतेशिवे॥ भवंतिपर
मेव्योम्निव्योमरूपाइतिस्वयम्॥ १३॥ स्वयंचसदसद्रूपालीयंतेस्वप्नशैलवत्॥ सर्गैर्नदेशआक्रांतोनचकालोनकर्तृता॥ १४॥ नचैते
सत्स्वरूपावानकल्प्यंनापिचक्षणः॥ नचेदंजायतेकिंचिन्नचकिंचननश्यति॥ १५॥ सर्वसंकल्परूपेणचिच्चमत्कुरुतेचिति॥ स्वप्नप
त्तननिर्माणपातोत्पातनवज्जगत्॥ १६॥ नदेशकालक्रमणंकरोतिचमनागपि॥ यथासंकल्पशैलेनदेशकालाद्यनंतकम्॥ १७॥ आ
क्रांतमपिनाक्रांतंतथैवजगतासता॥ अथनाक्रांतमक्रांतमिवसंकल्पमेरुणा॥ १८॥

दिसंबंधरूपमन्यादृशंवासत्वंकरोतुतत्राह ॥ नकर्तृतेति ॥ सर्गाणामितिविपरिणामेनानुषंगः ॥ १४ ॥ तर्हिसर्गा स्वयमेवयावत्प्रलयंसत्स्वरूपाःसंतुतत्राह ॥ नचैतेइति ॥ सर्गस
त्पदयोःपर्यायत्वापत्तेर्नाशानापत्तेः ॥ नाभावोविद्यतेसतइतिभगवत्सिद्धांतादितिभावः ॥ तर्हिसर्गेसत्त्वमध्यस्तमेवास्तुतत्राह ॥ नकल्प्यमिति ॥ असतःसत्त्वाध्यासाधिष्ठान
त्वासंभवादितिभावः ॥ तर्हिवैनाशिकमतवत्तत्तत्क्षणरूपमेवसत्त्वंधारयानुगतमस्तुतत्राह ॥ नापीति ॥ क्षणरूपस्यसत्त्वस्यप्रतीतिकालपर्यंतमनवस्थितेरत्यंताप्रतीतस्यसत्त्वेअ
लीकस्यापितदापत्तेरितिभावः ॥ एतेनआद्यंतक्षणसंबंधलक्षणौजन्मनाशावपिसर्गस्यनिरस्तावित्याशयेनाह ॥ नचेदमिति ॥ १५॥ एवंचास्मत्सिद्धांतएवशरणमित्याशयेनप्रा
गुक्तंस्मारयति ॥ सर्वमिति ॥ १६ ॥ कथंतर्हिदेशकालाक्रांतताप्रत्ययस्तत्राह ॥ यथेत्यादिना ॥ १७॥ यथाउच्चैःस्थितेनसंकल्पमेरुणानाक्रांतमेवअथापिसंकल्पकालेआ
क्रांतमिवप्रतिभासतेतद्वदितिपरेणान्वयः ॥ १८ ॥

---

१ अप्यनाक्रांतमित्यपिपाठः

॥ ५० ॥५८॥ कुतोनोपदेश्यलत्राह ॥ जीवमिति ॥ तस्मादात्मज्ञाविवेकिनश्रामाधिकारिविशेषणमुपदिशतिनत्वश्रामाधिकारत्वादुद्धमनुत्तरधातिशालिनमार्यैर्मुक्तमुपेक्षि
तमसद्दृशयत्निमानित्यावसन्मयबालय अन्नप्रशालिउपदिशतेसकनकवदवदातांसुवर्णीस्वनुतांस्वमदृष्टपुरुषायददातिसोपिमूर्खएवेतियावत् ॥ ५९ ॥ ॥ इतिश्रीवासिष्ठम०
तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू० एकचत्वारिंश सर्ग ॥ ४१ ॥ ॥ ॥ ७ ॥ ॥ समष्टिव्यष्टिसंसारकुमिरीशादिपूर्विका ॥ मायैवेत्युपदिश्याथशास्तु स्वनिलयययौ ॥ १॥ जी
वेनस्वस्याकस्थितपश्यतितिदृष्टमिस्थतेयोध्यारोपउक्तस्तच्छेषजिज्ञासुर्वसिष्ठ पृच्छति ॥ ततइति ॥ आदिसर्गेक्रमायध्यासक्रमे ॥ उक्तानुवाद पूर्वानुसंधानार्थं ॥ १ ॥ स
सजीव स्वप्नरोपयात्सक्षमनाडीपुविस्तृतमप्रशांतपश्यतितदुत्तरमसूक्ष्मेपिबाकारोपिपश्यतीत्यर्थ ॥ १ ॥ उक्तमेवदृष्टांताशयविवृणोति ॥ सर्वंगत्वादिति ॥ नाडीछिद्रेत

शून्यएवहिवेतालस्त्वेत्यंचित्तवासना ॥ उदितेयजगन्नामीतच्छांतौशांतिरक्षता ॥ ५७ ॥ अहंतायांजगतिचम्हगतृष्णाजलेत्वय ॥ सा
स्यस्तंधिग्यतनरनोपदेश्यस्त्वसाविति ॥ ५८ ॥ जीवंविवेकिनमिहोपदिशतितज्ज्ञानोथालमुद्धममसन्मयमार्यमुक्तम् ॥ अन्नप्रशास्ति
फिलय कनकावदातांसस्वप्नदृष्टपुरुषायसुतांददाति ॥ ५९ ॥ ॥ इ० वा० वा० दे० मो० नि० पू० जगन्मिथ्यात्वप्रतिपादननामैकचत्वा
रिंश सर्ग ॥ ४१ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ तत सजीवोभगवन्दृष्टवान्देहसंभ्रमम् ॥ आदिसर्गेनत्त संस्य कामवस्था
मुपैतिहि ॥ १ ॥ ॥ श्रीईश्वरउवाच ॥ ॥ परस्मात्परमेव्योम्निपूर्वोक्तक्रमतोवपु ॥ जीव पश्यतिसपन्नसचस्वप्ननरोयथा ॥ २ ॥ सर्वगत्वा
चिद्दनस्यकार्येस्वप्ननरोपिहि ॥ यथाकरोत्याशुतयाजीवोयापिशरीरधृक् ॥ ३ ॥ सनातनोहमव्यक्त पुमानित्यभिधानत ॥ करोत्यात्म
नितेनाशुप्रथम प्रथित पुमान् ॥ ४ ॥ एवससर्गेकस्मिंश्चिच्चप्रथमोयसदाशिव ॥ कस्मिंश्चिद्विष्णुरित्युक्तोनाम्युत्पन्न पितामह ॥ ५ ॥ पि
तामह सकस्मिंश्चित्कस्मिंश्चिदपिचेतर ॥ सश्चसंकल्पपुरुष सकल्पान्मूर्तिमास्थित ॥ ६ ॥ पुष्ट प्रथमसकल्प स्तांमनोमूर्तिमास्थित ॥
यद्यथाकल्पयत्याशुतत्तथानुभवत्यलम् ॥ ७ ॥ तत्त्वसद्रूपमखिलशून्यवेतालकोयथा ॥ भ्रमदृष्ट्यातुसद्रूपमित्यहंताजगद्गति ॥ ८ ॥

मवेरोपिसबरात्मिनत सत्वादितिभाव ॥ कार्यंस्वप्नाद्ययथाकरोतितथाअयापिसर्वेषांप्रसिद्धमित्यर्थ ॥ ३ ॥ सएवादिसर्गेसमष्ट्युपाधिकोहिरण्यगर्भाख्य स्वात्मनिवासव
नुपश्चनामभेदमपिकथयतीत्याह ॥ सनातनइति ॥ ३ ॥ तस्यैवसात्विकराजसतामसकल्पेषुसदाशिवादिमूर्तित्रयमन्येनेतरकल्पकत्वनियतमित्याह ॥ एवमिति ॥ ५ ॥ आका
शप्रभवोब्रह्मतिपूर्वरामायणोक्तेनाभ्युत्पत्तिनियम पितामहस्यनास्तीत्याशयेनाह ॥ पितामहइति ॥ इतरोदुर्गागौरविनायकादि ॥ तेषामपितत्तन्माहात्म्यप्रतिपादकपुराणा
दिभागेषुब्रह्मापुत्रवत्तुल्यप्रसिद्धे ॥ सउक्त सदाशिवादिपुरुष सकल्पमय सोकामयतबहुस्यांप्रजायेयेतिश्रुत्युक्तमायिकसंकल्परूप ॥ ६ ॥ प्रथमसकल्पएवसूक्ष्मभूतसर्गद्वाराप
७ सस्तत्कालसमष्टिव्यष्टिमनोरूपमास्थितोहिरण्यगर्भादिरूप सम्यक्प्रभुवनप्रजासर्गादियथाकल्पयतितत्तथाव्यवहारक्षममनुभवतीत्यर्थ ॥ ७ ॥ तस्यदृष्ट्याअसद्रूपंभ्रमदृष्ट्या
तुसद्रूपसत्यमिवभाति ॥ ८ ॥

ततारपुष्पे ॥ ३१॥ पूर्वमेवशमवतामयातस्यश्रीगुरोरीश्वरस्यानुस्मृतिपूर्वकमेवतदुपदिष्टंनित्यापरोक्षदेवार्चनंनवयापरिष्कृतयाश्रद्धादिपवित्रयाचधियामयानुष्ठेयत्वेनांगीकृत तत्राकृतजडदेवार्चनंजिहासितंचेत्यर्थः ॥३२॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०द्विचत्वारिंश सर्गः ॥४२॥ ॥ ७ ॥ ॥ इहश्रुत्वासवैराग्यराम स्वात्मशिवार्च नम् ॥ प्रबुद्ध कृतकृत्यस्वतत्रातिष्ठमवर्णयत् ॥ १ ॥ ईश्वरोपदिष्टतत्त्वदर्शनपर्यवसितस्वात्मशिवार्चनश्रीरामस्यश्रद्धातिशयसिद्धयेप्रशसन्स्वयमपितदेवपुनरुपदिशति ॥ एतदि त्यादिना ॥ परसर्वोत्कृष्टम् ॥ इदजगत्तत्त्वम् ॥१॥ यत्रमायायाअलीकेभ्रमेअलीकोपाधिघटितत्वादलीकेनजीवेनअलीकमसदेवजगद्विलोक्यते ॥ २ ॥ तत्रकविकल्पितेनमे रुत्वेनराजादेर्वर्णनेतथानुभवोदृष्टातइत्याह ॥ यथेति ॥ विविधकल्पयतीतिविकल्पेनयेनकविनायस्मिन्राजादौमेर्वादिविविधभावकल्पनयद्विकल्पस्तेनकाव्यरचनयायथाय

श्रीवसिष्ठउवाच॥ ॥इत्युक्त्वानीलकंठोसौत्यक्तपुष्पांजलौमयि॥ततारपरिवारेणसममंबरकोटरम्॥ ३१॥ तस्मिन्गतेत्रिभुवनाधिपतावुमेशेस्थित्वाक्षणंतदनुसंस्मृतिपूर्वमेव॥ अंगीकृतंनवपवित्रधियामयात्मदेवार्चनंशमवतेवजिहासितंतत्॥३२॥ ॥इ०वा०वा०दे०मोक्षोपायेपुनिर्वाण०पू०परमात्माभिधानंनामद्विचत्वारिंशःसर्गः॥ ४२ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥एतदुक्तंपरंतेनस्वयमेवचवेद्म्यहम्॥रामत्वमपिजानीषेयथेदंसमवस्थितम्॥ १॥ यत्रालीकमलीकेनकिलालीकेविलोक्यते॥ तस्यांसंसारमायायांकिंसत्यंकिमसन्मयम् ॥ २॥ यथायेनविकल्पेनयद्विकल्पेनकथ्यते॥ तथातेनात्मकल्पेनजगताप्यनुभूयते॥३॥ यथाद्रवत्वंपयसियथास्पंदोनभस्वति॥ यथानभसिशून्यत्वंतथासर्गत्वमात्मनि ॥ ४ ॥ ततःप्रभृतितेनैवक्रमेणार्चनमात्मनः ॥ अद्ययावद्गतव्यग्रःकुर्वन्नहमवस्थितः॥५॥ अनेनार्चाविधानेनमयेमेरामवासराः॥अखिन्नेनातिवाह्यंतेव्यवहारपराअपि॥६॥ यथाप्राप्तैःक्रियाचारकुसुमैरात्मनोर्चनम्॥व्युच्छिन्नमपिव्युच्छिन्नंनकदाचिदहर्निशम्॥७॥ ग्राह्यग्राहकसंबंधेसामान्येसर्वदेहिनाम् ॥ योगिनःसावधानत्वंयत्तदर्चनमात्मनः॥८॥दृष्ट्यानयारघुपतेसंगमुक्तेनचेतसा ॥संसारविरलारण्येविहरास्मिन्नखिद्यसे ॥ ९॥ दुःखेमहतिसंप्राप्तेधनबंधुवियोगजे॥एतांदृष्टिमवष्टभ्यविचारंकुरुसुव्रत ॥१०॥

थाकथ्यतेतथातथाश्रुत्वाआत्मानकल्पयतीत्यात्मकल्पोराजादिस्तेनस्वस्मिन्जगतामेरुताकल्पवृक्षताचाप्यनुभूयते कथमन्यथाकाव्यार्थानुभवचमत्कारास्वादस्तस्यबहुवित्त लाभमानादिकचकवेःस्यादितिभाव ॥३॥ विविधकल्पनाचाज्ञातस्यात्मन स्वभावएवेत्याशयेनदृष्टांतांतराण्याह ॥ यथेति ॥४॥ एवस्वात्माविकस्यैवविकल्पाध्यारोपस्यार्च नत्वचिंतनतदाप्रभृत्यद्यपर्यंतकुर्वन्नेवस्थितइत्याह ॥ ततइति ॥५॥६॥ सुषुप्तिकालेव्युच्छिन्नमपिकदापिनव्युच्छिन्नम् ॥ तदापिसुखमहमस्वाप्सनकिंचिदवेदिषमित्यु.त्थितप्रति सधानहेत्वविद्यावृत्तिपुष्पत्रयार्चनसद्भावादितिभाव. ॥७॥ तर्ह्यज्ञानामपितादृशशिवार्चनसदैवास्तीतिकस्तवतेभ्योविशेषस्तत्राह ॥ ग्राह्येति ॥ सावधानत्वविशेषइत्यर्थ. ॥८॥ साचसावधानताआसगत्यागएवेतिदर्शयन्नर्चनेदृष्टफलबाहुल्यकीर्तनेनरामप्रवर्तयति ॥ दृष्ट्येति ॥९॥ त्यक्तस्यासगस्यपुनरनुत्पादेविचारदार्ढ्यहेतुरित्याह॥दुःखेइति ॥१०॥

अतएवसकल्पानुसारेणपुरुषकीटस्थावरादिजन्मवैचित्र्यमित्याह ॥ सपद्यतइति ॥ सर्वकारक ऐहिकामुष्मिकसर्वक्रियासमर्थ ॥ १९॥ तस्युपास्थावराणायोनिरपिसपद्य ते ॥ एवमेवअण्डजादिचतुर्विधजातय सपद्यतइत्यर्थ ॥ २ ॥ क्षणप्रतिमायाधिष्ठातु सकल्पक्षणेएव ॥ वासनासौक्ष्म्यात्परमाणूपमाईपत्स्थूलासेत्रसरेणूपमा सगा साभतस ति ॥ २१ ॥ वर्तमानसर्गवदेवातीतानागतानामपिक्रमोबोध्यइत्याह ॥ एषएवेति ॥ तेषांरुद्रादितृणांतानाम ॥ कथतर्हिसर्गोपरमस्तत्राह ॥ अस्याइति ॥ एवभूतस्यपरमार्थ तत्वस्यभावनात्साक्षात्कारात् ॥ २२ ॥ क्षणलेशमात्रमपिचिद्वलनोपबृंहितुखल्वेकल्पकोटिविस्तृतानर्थोदयइत्याह ॥ निमेषेति ॥ २३ ॥ लुठितापच्युता ॥ चित स्वरूपप्रति ष्ठितत्वमस्तेत्याह ॥ सेति ॥ स्वस्वचित्तेनव्यज्यतेअनुभूयतइतिस्वरूपा ॥ २४ ॥ अभिमानव्यायथायथासर्ग मौढिगस्फुलितयातयाचिद्वलविद्योतनप्रासपरिच्छेदाधिक्यप्र युक्ताआत्मन क्षुद्रताचेत्याह ॥ अस्मिन्निति ॥ २५ ॥ सगतैरसत्यैर्दिग्देशकालकृतैरशै परिच्छेदै परमामशकपुत्तिकायताअणुताक्षुद्रताचात्मनइतिशेष ॥ परमाणुनेतिपाठेतु

यथोच्चैर्देशकालादितयैवजगतासता॥ संपद्यतेययायोसौपुरुष सर्वकारक ॥१९॥ अनेनैवक्रमेणेहकीट सपद्यतेक्षणात्॥ तस्युपास्थावरादेवमेवेहजातयोहिचतुर्विधा ॥२०॥ रुद्राद्यास्तृणपर्यंता सपद्यंतेक्षणंप्रति॥ परमाणूपमा सतितथाकेचिदणूपमा ॥२१॥ एषएवक्रमस्तेषांसतिवासतिसर्गके॥ अस्या ससारमायायाएवंभूतार्थभावनात् ॥ २२ ॥ भेदोपशांतावभ्यासाद्भवत्युपगत शिव ॥ निमेषशतभागार्धमात्रमेवपराचिति ॥ २३ ॥ स्वरूपतश्चेल्लुठितासैषोदेत्यनवस्थिति ॥ साखरूपाशिलाकाशइवचित्स्वात्मनिस्थिता ॥ २४ ॥ तद्भानावभासात्मब्रह्मशब्देनगीयते॥ अस्मिन्मौढिगतेसर्गेमहाचिद्योतनंनच ॥ २५॥ सगतासत्यादिग्देशकालांशपरमाणुता ॥ जीवतामागताभूततन्मात्रवलनाक्रमात् ॥ २६॥ भवत्यगमृगीवीरुत्कीटदेवासुरादिकम्॥ यस्मिन्नित्येततन्नतिद्दृष्टेसर्गेवतिष्ठति॥ २७॥ सदसद्ग्रथितंविश्वविश्वगेविश्वकर्मणि ॥ नतद्दूरेननिकटेनोर्ध्वेनाधोनतेनमे ॥ नपूर्वनापनप्रातर्नसन्नासन्नमध्यमम् ॥ २८ ॥ अनुभवकलनात्तेस्यमाताभवतिनसर्वविकल्पनेष्वसत्सु॥ फलद्रुविभवाप्रमाणमालास्थितिमुपयातिनवारिणीववह्नि ॥ २९॥ यथापृष्टंमुनेप्रोक्तंत्वयिकल्याणमस्तुते॥ दिशप्रयामोभिमतामागच्छोत्तिष्ठपार्वति॥ ३०॥

परमेणाणुनालिंगोपाधिनाव्यष्टिजीवतामागतासतीभूततन्मात्रवशाद्विवर्तेद्रियावलनाक्रमात्देहअगमृगीवीरुत्लताकीटदेवासुरादिकभवतीतिपरेणान्वय ॥ २६ ॥ अत एवदृक्सृष्टेसर्गवविश्वसदसद्ग्रथितंतिष्ठतीत्याह ॥ यस्मिन्निति॥२७॥विवेकेतुतत्सर्वत्रिकालाविपरिच्छेदनिर्मुक्तमेवेत्याह ॥ नतदिति ॥ तेत्वदीयत मेमदीयपन ॥ मध्यमसदसत्प लनात्स्वप्रकाशचैतन्यमृतेविनाअन्योमाताअनुभवितानभवति ॥ यातुलौकिकीफलस्युरवोप्यवहारविभवायस्या सकाशात्तथाविधाप्रमाणमालासावारिणिवह्निरिवतत्रस्थि तिमोपयाति ॥ तत्रापिपुष्टीमात्रस्यबाधादित्यर्थ ॥२९॥उपदेशमतापरितोषवर्तायमीश्वर स्वोपदिष्टार्थमाशिषापिवसिष्ठमनुगृह्यसोपदेशमुपसहत्योत्तस्थावित्याह॥यथेति॥३०

ततारपुप्लुवे ॥ ३१॥ पूर्वमेवशमवतामयातस्यश्रीगुरोरीश्वरस्यानुस्मृतिपूर्वकमेवतदुपदिष्टंनित्यापरोक्षदेवार्चनंनवयापरिष्कृतयाश्रद्धादिपवित्रयाचधियामयानुष्ठेयत्वेनांगीकृत तत्प्राक्तनजडदेवार्चनजिहासितचेत्यर्थ ॥३२॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू० द्विचत्वारिंश सर्गः ॥४२॥ ॥ ७ ॥ ॥ इदंश्रुत्वासवैराग्यराम स्वात्मशिवार्च नम् ॥ प्रबुद्ध कृतकृत्यस्त्वतत्प्रतिष्ठमवर्णयत् ॥ १ ॥ ईश्वरोपदिष्टतत्त्वदर्शनपर्यवसितस्वात्मशिवार्चनंश्रीरामस्यश्रद्धातिशयसिद्धयेप्रशसन्स्वयमर्पितदेवपुनरुपदिशति ॥ एतदि त्यादिना ॥ परसर्वोत्कृष्टम् ॥ इदजगत्तत्त्वम् ॥१॥ यत्रमायायाअलीकेभ्रमेअलीकोपाधिघटितत्वादलीकेनजीवेनअलीकमसदेवजगद्विलोक्यते ॥ २ ॥ तत्रकविकल्पितेनमे रुत्वेनराजादेर्वर्णनेतथानुभवोदृष्टांतइत्याह ॥ यथेति ॥ विविधकल्पयतीतिविकल्पेनयेनकविनायस्मिन्राजादौमेर्वादिविविधभावकल्पनयद्विकल्पस्तेनकाव्यरचनयायथाय

श्रीवसिष्ठउवाच॥ ॥इत्युक्त्वानीलकंठोसौत्यक्तपुष्पांजलौमयि॥ततारपरिवारेणसममंबरकोटरम्॥ ३१॥ तस्मिन्गतेत्रिभुवनाधिपतावुमेशेस्थित्वाक्षणंतदनुसंस्मृतिपूर्वमेव॥ अंगीकृतंनवपवित्रधियामयात्मदेवार्चनंशमवतैवजिहासितंतत्॥३२॥ ॥इ०वा०वा०दे०मोक्षोपायेषुनिर्वाण०पू०परमात्माभिधानंनामद्विचत्वारिंशःसर्गः॥ ४२ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥एतदुक्तंपरंतेनस्वयमेवचवेद्म्यहम्॥रामत्वमपिजानीषेयथेदंसमवस्थितम्॥ १॥ यत्रालीकमलीकेनकिलालीकेविलोक्यते॥ तस्यांसंसारमायायांकिंसत्यंकिमसन्मयम् ॥ २॥ यथायेनविकल्पेनयद्विकल्पेनकथ्यते॥ तथातेनात्मकल्पेननगताप्यनुभूयते॥३॥ यथाद्रवत्वंपयसियथास्पंदोनभस्वति॥ यथानभसिशून्यत्वंतथासर्गत्वमात्मनि ॥ ४ ॥ ततःप्रभृतितेनैवक्रमेणार्चनमात्मनः ॥ अद्ययावद्गतव्यग्रःकुर्वन्नहमवस्थितः॥५॥ अनेनार्चाविधानेनमयेमेरामवासराः॥अखिन्नेनातिवाह्यंतेव्यवहारपराअपि॥६॥ यथाप्राप्तैःक्रियाचारकुसुमैरात्मनोर्चनम्॥व्युच्छिन्नमपिव्युच्छिन्नंनकदाचिदहर्निशम्॥७॥ ग्राह्यग्राहकसंबंधेसामान्येसर्वदेहिनाम् ॥ योगिनःसावधानत्वंयत्तदर्चनमात्मनः॥८॥ दृष्ट्यानयारघुपतेसंगमुक्तेनचेतसा ॥ संसारविरलारण्येविहरास्मिन्नखिद्यसे ॥ ९॥ दुःखेमहतिसंप्राप्तेधनबंधुवियोगजे॥ एतांदृष्टिमवष्टभ्यविचारंकुरुसुव्रत ॥ १० ॥

थाकथ्यतेतथातथाश्रुत्वाआत्मानकल्पयतीत्यात्मकल्पोराजादिस्तेनस्वस्मिन्नगतामेरुताकल्पलक्षनावाप्यनुभूयते कथमन्यथाकाव्यार्थानुभवचमत्कारास्वादस्तस्यवद्गुवित्त लाभमानादिकचकवे स्यादितिभाव ॥३॥ विविधकल्पनाचाज्ञातस्यात्मन स्वभावएवेत्याशयेनदृष्टांतांतराण्याह ॥ यथेति ॥४॥ एवंस्वाभाविकस्यैवविकल्पाध्यारोपस्यार्च नत्वचिंतनंतदाप्रभृत्यद्यपर्यंतकुर्वन्नेवस्थितइत्याह ॥ ततइति ॥५॥६॥ सुषुप्तिकालेव्युच्छिन्नमपिकदापिनव्युच्छिन्नम ॥ तदापिसुखमहमस्वाप्सनकिंचिदवेदिषमित्युत्थितप्रति सधानहेत्वविद्यावृत्तिपुष्पत्रयार्चनसद्भावादितिभाव. ॥७॥ तर्ह्यज्ञानामपितादृशशिवार्चनसदैवास्तीतिकस्तवतेभ्योविशेषस्तत्राह ॥ ग्राह्येति ॥ सावधानत्वविशेषइत्यर्थः ॥८॥ साचसावधानताआसगत्यागएवेतिदर्शयन्नर्चनेदृष्टफलबाहुल्यकीर्तनेनरामप्रवर्तयति ॥ दृष्ट्येति ॥९॥ त्यक्तस्यासगस्यपुनरनुत्पादेविचारदार्ढ्यंहेतुरित्याह॥दुःखेइति ॥१०॥

सुखदु खेहर्षविषादौ ॥ एवंप्रायाईदृशानश्वराएव ॥११॥ प्रथममायांतितितोयांति ॥ स्वम्यसनासंगिनपुरुषपरिभवतिष ॥१२॥ अविचारितैरतर्किते ॥१३॥ हेनिमल ताजग क्रियास्त्वतर्नंतासांत्वमतर्नाकिंचित्तुच्छमेव ॥ १४ ॥ यचितभगतस्तुच्छतनिश्छसितसालैवजगदितिपरय तथादर्शनिपितवबधाविविियोगेस्वाषयपरिसत्तनदृवनहर्षशोकमस क्तिरित्याह ॥ त्वमिति ॥ १५ ॥ १६ ॥ इतिउक्तरीत्याचिद्रूपेजगत्कचपास्ये ॥ १७ ॥ उक्तार्थनस्यपरमकाष्ठायांरामस्यापयति ॥ चिदेकताननामिति ॥ १८ ॥ स्वयसम

सुखदु खेनकर्तव्येधनबधूदयक्षये ॥ एवंप्रायाएवसर्वानित्यंससारदृष्टय ॥ ११ ॥ जानास्येवगतिंचित्रांविषयाणांप्रमाथिनीम् ॥ यथायांतियथायांतियथापरिभवतिष ॥ १२ ॥ एवमेवप्रवर्ततिप्रमाणिचधनानिच ॥ एवमेवावहीयतनिमित्तैरविचारितै ॥ १३ ॥ नतास्त्वनतासांत्वनिर्मलातजगत्क्रिया ॥ इदमित्यजगत्किचित्किमुधापरितप्यसे ॥ १४ ॥ त्वमिहासिजगद्रूपचिन्मात्रविततारुते ॥ निजावयवकावत्तौक क्रमाहर्षशोकयो ॥ १५ ॥ नातचिन्मात्ररूपोसिनतेभिन्नमिदजगत् ॥ अतस्तव कयकुत्रहेयोपादेयकल्पना ॥ १६ ॥ इतिचित्त्वरूपांचल्येचिन्मयेजगदत्तुधौ ॥ तरगजालेचांभोधौक क्रमोहर्षशोकयो ॥ १७ ॥ चिदेकताननामेत्यसौपुनीमागत स्थितिम् ॥ अद्यप्रभृतिरामत्वतुयावस्यात्मकोभव ॥ १८ ॥ सम समसमाभासोभास्वद्वपुरुदारुधी ॥ तिष्ठात्माचारतोनित्यपरिपूर्णइवार्णव ॥ १९ ॥ एतत्त्वंश्रुतवान्सर्वेस्थितस्त्वंपरिपूर्णधी ॥ यदिच्छसीतरत्प्रष्टुंतत्पृच्छरघुनदन ॥ २० ॥ यत्पृष्टप्रथमेकल्पेनदष्यपरिचोदय ॥ ॥ श्रीरामउवाच ॥ ॥ इदानींसंशयोनष्टान्विनिवृत्तोविशेषत ॥ २१ ॥ ज्ञातंज्ञातव्यमखिलजातादृष्टिरकृत्रिमा ॥ नमुनेस्तिमलंद्वित्वनचेत्यनचकल्पनम् ॥ २२ ॥ तदाममाभूदज्ञानप्रशांतमधुनातुतत् ॥ कलकआत्मनोस्तीतितदज्ञानवशेनया ॥ २३ ॥ भ्रांतिरासादिदानींसानिवृत्तात्वत्प्रसादत ॥ नजायतेनम्रियतेनचैवात्माकलकित ॥ २४ ॥ सर्वंखल्विदंब्रह्ममयमित्युदितोरम्यलम् ॥ प्रश्नेभ्य सशयेभ्यश्चवांछितेभ्यश्चसर्वत ॥ २५ ॥ शुद्धंमेनिर्मलंचेतस्त्वष्ट्रायत्नभ्रमादिव ॥ सदाचारोपदेशेपुप्रामप्रोक्तेपुसाधुभि ॥ २६ ॥ निराकांक्षीस्थितोरम्यत सुमेरुकनकेष्विव ॥ नतदस्त्यस्तियन्नाशानतदस्तियदीप्सितम् ॥ २७ ॥

सर्ववैपम्यनिर्मुक्तः ॥ समेनब्रह्मणासमाऐकरस्यापन्नाअगदाभासायस्य ॥ १९ ॥ २० ॥ प्रथमेकल्पेविचारारभेवैराग्यप्रकरणेत्वयायत्पृष्टयेप्रश्ना कृतास्तेपुअर्थांकिंचिदवशिष्टमेवस्तितहितत्परघोदयपृच्छ ॥ २१ ॥ मलमज्ञानम् ॥ द्वित्वजीवब्रह्मभेद ॥ कल्प्यतेयेनतत्कल्पनमन ॥ २२ ॥ २३ ॥ २४ ॥ ब्रह्मैवब्रह्ममयमब्रह्मविवर्तोवा ॥ वांछितेभ्यश्चनिवृत्तमितिशेप ॥ २५ ॥ त्वष्ट्रायभ्रेआरोप्यभ्रमणभ्रमस्तल्लक्षितलक्षणतस्मात्सूर्यबिंबमिवशुद्धभास्वरम् ॥ साधुभि प्राप्तेभ्यउपगतेभ्य शिष्येभ्यःप्रोक्तेपुसर्वेषामाचाराणांसाधनानामुपदेशेपुनिराकांक्षी ॥ २६ ॥ विरलम्येआशा अनुपलभ्येइप्सेतिभेद ॥ २७ ॥

मध्यमुपेक्ष्यम् ॥ २८ ॥ रौरवनरकविशेषचापिनद्वेष्मि ॥ २९ ॥ कणशःपरमाणुशोविभज्यकीर्णानिविक्षिप्तानिविनाशितानीतियावत् ॥ त्रिजगंतियेनतथाविधस्यक्षीरसाग रस्यसस्तति सर्वतोव्याप्तिरिवव्याप्तिर्यस्य ॥ औत्प्रेक्षिकमेतत् ॥ अथवाकणश प्रस्नैर्यश.क्षीरलवैःकीर्णानिसिक्तानित्रिजगतिययातथाविधामनुवशक्षीरसागरेसस्तुतिर्व्यवहा रोयस्यतथाविधश्चिरसभ्रांतोरामलक्षणोमदराचलोबोधामृतोत्पत्त्याकृतार्थ सांप्रतविश्रांतउपरतभ्रमोवृत्तइतिपरेणान्वय ॥ ३० ॥ इदजगत्इत्थययथादृष्टप्रकारमेवनान्यत्त त्त्वमस्तीतियेनमूढेनज्ञाततस्यत्वदिकुसदेहजालेनज्वलितेवअधिकसतापिनीइदवस्तुइदमवस्तुइतिकलनाअलमस्तिहेमुनीश्वरत्वमितिमदुक्तार्थस्वानुभवसवादायपश्येतिपरेणा

नतदस्तियदादेयंहेयंमध्यंचराचरे ॥ इदंहेयमुपादेयमिदंसदिदमप्यसत् ॥ २८ ॥ इतिचिंताभ्रमःशांतोनिपुणंपरमोमुने ॥ नस्वर्गमभि वांछामिद्वेष्मिवापिनरौरवम् ॥ २९ ॥ आत्मन्येवहितिष्ठामिमंदराद्रिरिवाभ्रमः ॥ कणशःकीर्णत्रिजगत्क्षीरसागरसंस्तुतिः ॥ ३० ॥ वि श्रांतश्चिरसंभ्रांतोनिर्भ्रमोराममंदरः ॥ अवस्त्विदमिदंवस्तुपश्येतिकलनास्त्यलम् ॥ ३१ ॥ त्वदितस्यकुसंदेहजालेनज्वलिताधिकम् ॥ इदमित्थंजगदितिज्ञातंयेनमुनीश्वर ॥ ३२ ॥ सयत्रयातिकार्पण्यंजगतस्तन्नलभ्यते ॥ विचित्राकुलकल्लोलाज्जडाद्वृत्तिविवर्जितात् ॥ ॥ ३३ ॥ त्वत्प्रसादेनभगवंस्तीर्णाःस्मोभवसागरात् ॥ संपदामवधिर्ज्ञातोदृष्टःसीमांतआपदाम् ॥ ३४ ॥ सर्वसारेप्यदीनाःस्मःपूर्णाःस्मः परमेश्वर ॥ ययाबभेद्यामपरैर्दलिताशामतंगजम् ॥ संसारसागरेसम्यग्वीरतामागतंमनः ॥ ३५ ॥ परिगलितविकल्पतामुपेतंप्रग लितवांछमदीनसारसत्त्वम् ॥ त्रिजगतियदतिप्रसन्नरूपंप्रमुदितमंतरनुत्तमंमनोमे ॥ ३६ ॥ ॥ इ० वा० वा० दे० मो० नि० पू० विश्रां तिवर्णनंनामत्रिचत्वारिंशःसर्गः ॥ ४३ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

न्वय ॥ ३१ ॥ ३२ ॥ सतादृशमूढपुरुषोयत्रयस्मिन्धनादिविषयेकार्पण्ययातिजगतःसबाधितद्वस्तुतत्त्वदृशानलभ्यतेऽस्माभिरितिशेषः ॥ यतोवयविचित्राअशनायादिलक्षणा आकुलाकल्लोलाःषडूर्मयोयस्मिस्तथाविधाच्छुद्धचिदाकारवृत्तिविवर्जिताज्जडाद्भवसागरात्त्वत्प्रसादेनतीर्णाःस्मइतिपरेणान्वयः ॥ ३३ ॥ ३४ ॥ सर्वसारेभूमानंदविषयेपि नित्यलब्धत्वाददीनाःस्मः ॥ अस्मन्मनःससारलक्षणेसमरेदलितःआशामतंगजोयेनतथाविधंसत्परैरभेद्यांसम्यग्वीरतांययौ ॥ ३५ ॥ पूर्णांमनःस्थितिमेववर्णयन्नुपसहरति ॥ परिगलितेति ॥ अदीनसारमकार्पण्यदृढसत्वस्थैर्ययस्य ॥ त्रिजगतिप्रसिद्धानिपूर्णचंद्रक्षीरसागरशरदाकाशादीनियानिप्रसन्नरूपाणितान्यतिक्रांतमतिप्रसन्नरूपम् ॥ सापेक्ष समासश्छादसः ॥ अंतःप्रमुदितमतएवानुत्तममेमनःस्थितमित्यर्थः ॥ ३६ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू० त्रिचत्वारिंशःसर्गः ॥ ४३ ॥ ॥ ७ ॥

दृश्यासंगक्षयोपायांवांछात्यागमस्य पुन ॥ मन क्षयांतागुरुणाज्ञानवाक्यार्थमीरिता ॥ १ ॥ रामेणस्वस्यतस्वबोधविश्रांतौवर्णितायामपितत्परिपाकात्प्राक्मच्युतिर्माभूदिति शिलानिखातस्थूणावाक्यार्थसंधिकीलपरंपरामिवजीवन्मुक्तलक्षणभूतांप्रागुक्तसाधनपरंपरामेवमतिष्ठापयिष्यन्श्रीवसिष्ठःप्रागुक्तेयथाप्राप्तमप्यवहारोपभोगादिलक्षणेशिवार्चनेपि सर्वारंभाहिदोषेणधूमनाग्निरिवावृताइतिन्यायेनममाबुद्धिसापरानिष्टाप्रसक्तेरमर्जनाभोगस्यानर्थहेतुत्वात्तस्यापिपुनर्जननायनर्थइत्याशंकांवारयन्नाह ॥ केवलेनेति ॥ केवलेनरागादिविरहितेनअतएवअसंगमेनकर्तृत्वाभिमानलक्षणक्रियासंगशून्येन ॥ १ ॥ ननुविषयाणांतुष्टिजनकत्वनियमात्कथंतेपुरागस्तत्कुत्राक्यमित्याशंक्याह ॥ यथेति ॥ प्राप्तिक्षणातिरिक्तपूर्वोत्तरकालयोस्तेषुतुष्टिहेतुत्वव्यभिचारान्नायंनियमइतिभाव ॥ २ ॥ अतएवचिरानर्थैक्षणिकसुखेप्रसंगोपिनयुक्तइत्याह ॥ वांछेति ॥ वां

श्रीवसिष्ठउवाच ॥ ॥ केवलेनेंद्रियै सार्द्धवर्त्तमानार्थवर्त्तिना ॥ असंगमेनमनसायत्करोपिनतत्कृतम् ॥ १ ॥ यथाप्राप्तिक्षणेवस्तुप्रयमेतुष्टयेतया ॥ नप्राप्त्येकक्षणादूर्ध्वमितिकोनानुभूतवान् ॥ २ ॥ वांछाकालेयथावस्तुतुष्टयेनान्यदातया ॥ तस्मात्क्षणसुखेसक्तिर्बालोचभातिनेतर ॥ ३ ॥ वांछाकालेतुष्टयेयत्तत्रवांछैवकारणम् ॥ तुष्टिस्त्वतुष्टिपर्यंतातस्माद्वांछांपरित्यज ॥ ४ ॥ यदितत्पदमाप्तोसिकदाचित्कालपर्ययात ॥ तदहंभावनारूपेनमक्तव्यंत्वयापुन ॥ ५ ॥ आत्मज्ञानाचलस्याग्रेरामविश्रांतवानसि ॥ अहंभावमहाश्वभ्रेनपुनपातमर्हसि ॥ ६ ॥ यत्स्मृतानलसंदृष्टेज्ञत्वमेरुशिर स्थिते ॥ पुनर्गर्भानुकारात पातालेपतनंकुत ॥ ७ ॥ दृश्यतेनेस्वभावोयममतासत्तामय ॥ मन्येक्षीणविकल्पोसिजातोसिहृतकालिक ॥ ८ ॥ स्वभावेसंस्थितोरामइत्यावेदयतीवमे ॥ सौम्यपूर्णार्णवप्रख्यासमतानिर्मलातव ॥ ९ ॥ आशायातुनिराशत्वमभावयातुभावनम् ॥ अमनस्त्वमनोयातुतवासंगेनजीवत ॥ १० ॥ यांयांवस्तुदशांयासितस्यांतस्यामवस्थितम् ॥ सत्तासामान्यरूपेणब्रह्मसंहितंचिद्घनम् ॥ ११ ॥

छापरेनलाभोलक्ष्यते ॥ ३ ॥ यदापसुखलाभकाम क्षणिकोपिवांछानिरोधसुखहेतुसदाआत्यंतिकवांछोच्छेदोनिरतिशयानंदहेतुरित्यर्थादागतम् तथापिवांछैवानर्थइत्याशयेनाह ॥ वांछाकालेइति ॥ तुष्टिरानंद अतुष्टिस्तुष्टिविरोधिवांछैवपर्यंतोविच्छेदोयस्यास्तथाविधा ॥ ४ ॥ ननुपूर्णानंदपदमाप्तोहंतस्मैमस्संपुनर्विषयवांछात्यागोपदेशास्तेकिमर्थस्तमाह ॥ यदीति ॥ पुनःकालांतरेप्यहंभावपंकेनिमज्जनंमाभूदितितत्ववस्थितिदार्ढ्यार्थंपुनरुपदेशइत्यर्थ ॥ ५ ॥ ६ ॥ सत्यपिदार्ढ्येपुनर्मज्जनंकिनाशंक्यतेतमाह ॥ यदिति ॥ यत्स्माद्धेतोः ॥ गर्भोमातृकुक्षिगत पिंडस्तमनुसरत्यकरोतिजन्मादयनर्थमितिगर्भानुकारोहंभावस्तत्क्षणोंतःपाताले ॥ दृढीभूतज्ञानस्यावश्यमविद्यानर्थबीजोच्छेदित्वादितिभाव ॥ ७ ॥ अन्येषामुपकारायवासनयेवमुक्तंभवत्वज्ञाननष्टमितिमयासमतादिलिंगैर्लक्षितमेवेत्याशयेनाह ॥ दृश्यतइति ॥ कालिकाअविद्या ॥ ८ ॥ ९ ॥ नसजनमसंगस्तेमजीव

यत्रेति ॥ वस्तुभोगसुखम् ॥ यथागतंप्रारब्धोपनीतदुःखमपि ॥ १३ ॥ खवत्आ
बलात्मननादिदार्ढ्यात् ॥ १२ ॥ इदानींनिर्वासनत्वस्यस्वानुभवगम्यलक्षणमाह ॥ यत्रेति ॥ वस्तुभोगसुखम् ॥ यथागतंप्रारब्धोपनीतदुःखमपि ॥ १३ ॥ खवत्आ
काशवत् ॥ १४ ॥ अभव्यंदुःखाद्यपित्रिपुट्येकीकारेणात्मतयाअनुभव ॥ तेनतस्यप्रतिकूलताशाम्यतीतिभाव ॥ १५ ॥ दुःखादौप्रातिकूल्यविकल्पनमनःकृतमितितदेववाभु
शुद्धोक्तयुक्त्यानिरोद्धव्यमित्याशयेनाह ॥ चित्तेति ॥१६॥१७॥ अज्ञानमेववाप्रवृत्तिद्वारानर्थनिदानमितितदेवज्ञानदार्ढ्येननिरसनीयमित्याह ॥ मौर्ख्येति ॥ १८ ॥ चित्तोन्मे
षनिमेषाभ्यामितियदुक्तंतद्दृष्टांतेनस्फुटयति ॥ यथेत्यादिना ॥ यथाखमाकाशवातस्यरजसाचसंगात्स्पंदाच्चमलिनचलनादिस्वभाववेदनसंपन्नंतथाचितश्चित्तलक्षणात्स्पंदा
च्चेत्यतयाइदमनर्थजातमुपस्थितमित्यर्थ ॥ १९ ॥ उक्तेर्थेअन्वयव्यतिरेकौदर्शयति ॥ दृश्येतिद्वाभ्याम् ॥ नानाच्छिद्रप्रविष्टसौरालोककुड्यसंबंधजाचित्रवर्णधीरिव ॥ २० ॥

अज्ञातात्मानिबद्धोसिविज्ञातात्मानबध्यसे ॥ रामत्वंस्वात्मनात्मानंबोधयस्वबलादतः ॥ १२ ॥ यत्रनस्वदतेवस्तुस्वदतेचयथागतम् ॥
अवासनत्वंतद्विद्धिसाम्यमाकाशकोमलम् ॥ १३ ॥ वासनारहितैरंतरिंद्रियैराहरक्रियाः ॥ नविक्रियामवाप्नोषिखवत्क्षोभशतैरपि
॥ १४ ॥ ज्ञाताज्ञानंतथाज्ञेयंत्रयमेकतयात्मनि ॥ शांतात्मानुभवाभव्यंनभूयोभवभागसि ॥ १५ ॥ चित्तोन्मेषनिमेषाभ्यांसंसारप्रल
योदयौ ॥ वासनाप्राणसंरोधादनिमेषंमनःकुरु ॥ १६ ॥ प्राणोन्मेषनिमेषाभ्यांसंसृतेःप्रलयोदयौ ॥ तमभ्यासप्रयोगाभ्यामुन्मेषरहि
तंकुरु ॥ १७ ॥ मौर्ख्योन्मेषनिमेषाभ्यांकर्मणांप्रलयोदयौ ॥ तद्विलीनंकुरुबलाद्गुरुशास्त्रार्थसंयमैः ॥ १८ ॥ यथावातरजःसंगस्पंदात्खं
भाववेदनम् ॥ तथाचितश्चेत्यतयास्पंदादिदमुपस्थितम् ॥ १९ ॥ दृश्यदर्शनसंबंधस्पंदेनेयंजगद्गतिः ॥ स्फुरत्यालोककुड्यादिसंगजा
वर्णधीरिव ॥ २० ॥ दृश्यदर्शनसंबंधस्पंदाभावेनजायते ॥ वेदनाभवदाभासाचित्रपुंसामिवाशये ॥ २१ ॥ चित्तस्पंदोत्थितामायातद
भावेविलीयते ॥ पयःस्पंदोत्थितावीचिस्तदभावेविनश्यति ॥ २२ ॥ त्यागेनवासनांशस्यबोधाद्वाप्राणरोधनात् ॥ चित्तेनिस्पंदतांयाते
कुतःस्पंदस्यसंभवः ॥ २३ ॥ असंवित्स्पंदमात्रेणयातिचित्तमचित्तताम् ॥ प्राणानांवानिरोधेनतदेवचपरंपदम् ॥ २४ ॥ दृश्यदर्शनसंबं
धेयत्सुखंपारमार्थिकम् ॥ तदंतैकांतसंवित्त्याब्रह्मदृष्ट्यामनःक्षयः ॥ २५ ॥ यत्रनाभ्युदितंचित्तंतत्तत्सुखमकृत्रिमम् ॥ नस्वर्गादौसंभव
तिमरौहिमगृहंयथा ॥ २६ ॥

भवतीतिभवज्जगत्तदाभासा ॥ यथाचित्रलिखितपुंसामाशयेहृदिभायनैवनजायतेतद्वत् ॥ २१ ॥ २२ ॥
स्पंदस्यकौटस्थ्यच्युतिरूपस्य ॥ २३ ॥ वार्थेचशब्दः ॥ २४ ॥ बोधाद्वाइतिमध्यमोपायमुक्तंविवृणोति ॥ दृश्येति ॥ विषयेंद्रियसंबंधेयत्सुखंप्रसिद्धंतत्परमार्थतोब्रह्मसुखमे
व ॥ एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिश्रुतेः ॥ अतस्तस्यातःपरमावधिर्मानुषानंदमारभ्योत्तरोत्तरशतगुणोत्कर्षेणश्रुत्यादर्शितोयतोवाचोनिवर्तंते अप्राप्यमन
सासह आनंदंब्रह्मणोविद्वान्नबिभेतिकदाचनेति तदेकांततन्मात्रपूर्णतातत्संवित्तिरूपयाब्रह्मदृष्ट्यामनःक्षयःसिद्ध्यतीत्यर्थः ॥ २५ ॥ तत्तत्सुखंब्रह्मसुखंतच्चस्वर्गादिभोगभूमौन
संभवति ॥ तत्रचित्तस्यकामासूयादिकलुषत्वादित्यर्थः ॥ हिमशिशिरजलंतस्यगृहंसरः ॥ २६ ॥

नराप्यं रनुमगस्यरानुभवैकगम्यमित्यर्थः ॥२७॥ चित्तस्योनोनाश ॥ मनोदुर्बोधात्तूत्तितिमशावेत्रचित्तवेदिता चित्तसत्त्वाप्रतीतिर्बोधेनतुभातिर्नश्यतीतियुक्तश्चित्तनाशइति
नार ॥ वालरूचित्रवेतालवत ॥ तेनदुर्बोधेन॥२८॥ननुभ्रानिनामपिव्यवहारदशनाच्चित्तमस्येवतत्कथमानेनन्नष्ट सत्त्वनष्टत्वयोर्युगपदेकत्र विरोधात्तत्राह॥ विद्यमानमपीति॥
॥ २९ ॥ नाधना यनस्मात्प्यत्व भ्रमत्वस्यन्यरभाक् ॥ ३० ॥ भ्रांतिबीजस्यमेवचित्तस्यचित्तनासावाधेनप्रविलीयतइत्यर्थः ॥ घटादिनाशेपिकपालाद्यात्मनापरिशेषदर्शना
न्मन मृद्घटनाश काप्यवसितुण्येत्याह॥नाभावदर्शन ॥ ३१ ॥ वस्तुबोधस्यावस्तुकल्पितनाशमात्रबाधकत्वप्रसिद्धेरपिनसत्त्वाशबाधकत्वप्रसक्तिरित्याह ॥ अवस्त्वेवेति ॥ चि
त्तादिसर्वजगतःसमाधिकस्यात्मनोविवर्तइतिशेषः ॥ ३२ ॥ तर्हिकर्जीवन्मुक्तचित्तस्यव्यवहारक्षमावस्थावासम्येत्र नेत्याह ॥ चित्तमिति ॥ विद्वारसमाधिसाक्षात्कारवर्धिता

चित्तोपशमजस्फारमवाच्यवचमासुखम् ॥ क्षयातिशयनिर्मुक्तंनोदेतिनचशाम्यति ॥ २७॥ बोधाद्भवतिचित्तांतोदुर्बोधाच्चित्तवेदि
ता ॥ बालवेतालवत्तेनमोहश्रीघनतांगता ॥ २८ ॥ विद्यमानमपित्वेतच्चित्तबोधाद्विलीयते ॥ सदप्यसदिवाभातितांम्रहेमीकृतयथा
॥ २९ ॥ अन्यच्चित्तमचित्ताख्यमचित्तमत्त्वमुच्यते ॥ नामार्थान्यत्वमाक्चित्तबोधात्तास्रसुवर्णवत् ॥ ३० ॥ नसंभवतिचित्तत्वंतेनतत्प्रवि
लीयते ॥ भ्रमःशाम्यतिबोधेननाभावोविद्यतेमल ॥ ३१ ॥ अवस्त्वेवविकल्पात्मचित्तादिशशशृंगवत् ॥ सर्वतदात्मनस्तस्मात्तद्विबो
धाद्विलीयते ॥ ३२ ॥ चित्तसत्त्वसमायातकिंचित्कालंजगत्स्थितौ ॥ विद्धत्यतुर्यावस्थायांतुर्यातीतम्भवत्यत ॥ ३३ ॥ यन्नैवभूरिभुवन
भ्रमविभ्रमोर्मिर्नित्यंस्थितंममनेकतयैकमेव ॥ भवात्मसंभवतिनेतरदंगकिंचिच्चित्तादिकंघनतदीवहिसन्निवेश ॥ ३४ ॥ ॥इ०
वा०वा०द०मो०नि०पू०चित्तसत्तासूचननामचतुश्चत्वारिंश सर्ग ॥ ४४ ॥ ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अत्रेमा
मत्रबोधायविस्मयोल्लासकारिणीम् ॥ अपूर्वांचैवसंक्षेपाद्रामरम्यांकथांशृणु ॥ १ ॥ योजनानांसहस्राणिविपुलंविमलस्फुटम् ॥ युगै
रप्यजरद्रूपमस्तिबिल्वफलमहत् ॥ २ ॥ अविनाशरसाधारसुधामधुरसारवत् ॥ पुराणमपिबालेंदुदलमार्दवसुंदरम् ॥ ३ ॥

ररस्यानवालकौकिलवारभ्यविनष्टाविपालशकतबाधितानुवृत्ति विवेककेवल्याविर्भूततुर्यातीतावस्थैवतस्यवासलवीतिभाव ॥ ३३ ॥ ततुर्यातीतब्रह्मयावन्नज्ञातंतावच्चि
त्तजगदादिविध्यावेशणस्थितंसवात्मकंभवतिनचित्तादिकनामकिंचिविनरहस्त्वनरमसीतिज्ञानमात्रेणतन्मात्रभावभावपरिशेषश्चित्तादेर्युक्तएवेत्याशयेनाह ॥ यन्नैवेति ॥ यथा
न रेमनारपयरिकश्चिनवामारोपवनवाप्यादिसन्निवेशस्तथासमावेशावेशनास्तिनहृत्परमसूक्ष्म अच्छिद्रचित्रैकरसघनेब्रह्मण्यपिजगदसमावेशावेशनासीत्यर्थः ॥ ३४ ॥ ॥ इ
तिश्रीवासि०मा०स०प्रकाशेनिर्वाण०पू०चतुश्चत्वारिंश सर्ग ॥ ४४ ॥ ॥ ५ ॥ ॥ स्वानंदरससंपूर्णत्रिजगत्कल्पभास्वरम् ॥ ब्रह्मबिल्वफलत्वेनपरब्रह्मोपवर्ण्यते ॥ १ ॥
रूपांविलाशाख्यानमाह ॥ १ ॥ नजीर्यतइत्यजरद्रूपस्यप्रभावोयस्य ॥२॥ सुधेवसुधानैक्षयायाअतिमधुरसारवत् ॥ बालेंदोरंकुरमायायान्ति रितिमुपचीयमानानिदलानीवमा
र्दवसौंदर्यमस्यनपरमाणुस्पर्शसदृशं ॥ ३ ॥

भुवनव्यूहमध्यगतमहामेरुरिवमेढीभूतम् ॥ मंदराद्रिरिवाचलंदृढम् ॥ ४ ॥ प्रागुक्तंसहस्रपदमसंख्यपरमितिव्याचष्टे ॥ योजनेति ॥ जगतःस्थितेर्विधारणस्यनियमनस्यचमूलम् ॥ ५ ॥ हरतिवहति ॥ राजिकासूक्ष्मसर्षपास्तत्कणानापद्धतेःपक्तेः ॥ ६ ॥ षड्रस.षडिंद्रियभोग्यब्रह्मलोकांतसुखलव.प्रसिद्धोवा ॥ ७ ॥ तेनतादृशरसयुक्तेनापिपाकेनयत्पा तपतननसमेति ॥ तर्हिकिंस्वस्थानएवजीर्यतिनेत्याह ॥ सदैवेति ॥ ८ ॥ जरठाश्चिरायुष. ॥ ९ ॥ १० ॥ विततमतिविस्तीर्णयत्स्थौल्यबृहत्त्वातच्छालिनः ॥ ११ ॥ समस्तेषुफ लेषुपुरुषार्थेषुचसारस्यश्रेष्ठस्य॥अष्ठिर्वीजनास्ति॥१२॥शिलायाअंत.प्रदेशइवनीरंध्रोघनः॥विज्ञानघनएवेतिश्रुतेः ॥ स्यंदमानेंदुबिंबवत्स्वसंविदामृतमिवास्वाद्यनिरतिशयानंद

व्यूहमध्यमहामेरुंमंदराद्रिरिवाचलम् ॥ महाकल्पांतवात्यायाअपिवेगैरचालितम् ॥ ४ ॥ योजनायुतकोटीनांकोटिलक्षशतैरपि ॥ वैपुल्येनापरिच्छेद्यंमूलमाद्यंजगत्स्थितेः ॥ ५॥यस्यबिल्वफलस्योच्चैर्ब्रह्मांडानिसमीपतः॥ हरंतिलीलांशैलाधोराजिकाकणपद्धतेः॥६॥ स्यंदमानरसापूरांस्वाद्वींरसचमत्कृतिम्॥ यस्यातिशेतेनोकश्चिदपिराघवषड्रसः॥ ७॥ नकदाचनपाकेनपातंतेनसमेतियत्॥ सदैवपक्वमप्यंगजरसायन्नबाध्यते ॥८॥ब्रह्मविष्णिंद्ररुद्राद्याजरठाःकेचिदेवन॥ यस्योत्पत्तिंविजानंतिमूलंवाव्रंतमेवच॥९॥ अदृष्टांकुरवृक्षस्यत्वदृष्टकुसुमाकृतेः॥ अस्तंभमूलशाखस्यफलस्यास्यमहाकृतेः॥ १० ॥एकपिंडघनाकारविततस्थौल्यशालिनः॥ यस्योत्पत्तिविकारादिपरिणामोनदृश्यते॥ ११ ॥समस्तफलसारस्यफलस्यास्यमहाकृतेः॥ नमज्ज्ञानाष्ठिविततोनिर्विकारोनिरंजनः॥ १२॥ शिलांतरिवनीरंध्रःस्यंदमानेंदुबिंबवत्॥ रसंस्वसंविदास्वाद्यंस्यंदमानइवामृतम्॥ १३॥ कोशस्सकलसौख्यानांशीतलालोककारकः॥ शैलाभामृतपिंडाभोमज्जाआत्मफलस्थितेः ॥ १४ ॥ तस्मात्परममज्जातुयासौस्वात्मचमत्कृतिः॥ अनंतरक्षितोनित्यमनन्यःश्रीफलंगतः ॥ १५॥स्वसंनिवेशवैचित्र्यमन्यत्वफलतांगताम् ॥ अत्यजंत्यातयातन्व्यास्थूलयाप्यतिबालया॥ १६॥

रसंस्यंदमानः ॥ १३ ॥ कोशइति ॥ एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिश्रुतेः ॥ आत्मनोमानुषानंदादिहैरण्यगर्भानंदांतकर्मफलस्थितेर्मज्जासारः ॥ १४ ॥ तस्माद्धैरण्यगर्भानंदफलादपिपरमस्याव्यक्तस्यमज्जा ॥ अनंतेनत्रिविधपरिच्छेदशून्यस्वभावेनैवरक्षित' ॥ स्वात्मकमेवश्रीफलबिल्वगतःसचानन्यःअद्वयएवेत्यर्थः ॥ १५॥ अनन्यत्वमेवोपपादयितुंचमत्कृतिपदस्वारस्यप्रकटयति ॥ स्वसंनिवेशेत्यादिना ॥ यतस्तयास्वात्मचमत्कृत्यास्वाध्यस्तस्यान्यत्वस्यभेदजातस्यफलतापरमप्रयोजनतांगतंचिदेकरसमज्जारूपपारमार्थिकस्वसंनिवेशवैलक्षण्यमत्यजत्यैवइदंभेदादिस्वयमुत्पाद्यभावितमितिपरेणान्वयः ॥ प्रकारांतरैरपितस्याश्चमत्कृतित्वोपपादनायतन्व्येत्यादिविरुद्धविशेषणानि ॥ अणोरणीयस्त्वात्तन्व्या महतोमहीयस्त्वात्स्थूलया चिरंतनत्वेपिवृद्ध्यादिविकाराभावादतिबालया ॥ १६ ॥

असमोपिभेदस्योत्पादनेकोहेतुस्तमाह ॥ इयमिति ॥ इयमहमस्मीतिअनिवमिदंताभ्यासएवतद्धेतुरित्यर्थः ॥ अन्यतापृथक्त्वतथापारकमलमविद्यामेवभूतभुवनभेदाविरूपेणो त्पादयेत्यर्थः ॥ असदपवित्यनेनस्वप्रकाशचिदेकरसेमलस्यैपसंभवोनास्तिकुतरांतत्कार्यभेदस्येतिद्योत्यते ॥ १७ ॥ स्वोत्पादितैर्भूतभुवनभावैर्भेदैस्तद्गतोत्पादनद्वाराआभिमानिकस पलनंसाळमतइत्याह ॥ अहमिति ॥ अहंकलाअहंकारस्तस्या समुदयोव्यष्टिसमष्टिरूपेणोद्भवस्तत्समनंतरम् ॥ आकाशतद्गुणःशब्दश्चमिश्रम्यगुणैकदेशीयेपांतयाविधैर्बळो ध्योपलक्षितव्यष्टिसमष्टिशरीरपरमाणुभिः ॥ १८ ॥ स्वस्वरूपापरित्यागनैवरूपापत्तिरेषास्यामहतीआत्मचमत्कृतिरित्यभयावर्णितेत्युपसंहरति ॥ इतीति ॥ शक्तिर्म्यवहारसमर्थ तातत्स्वरूपताम् ॥ १९ ॥ समेनिर्विकारेनिजेरूपेएवइदंजगदाकारादकृत्समसारिता ॥ २० ॥ इयंचविपयराशिसर्वमियमेवनान्यदस्या किंचिदितिद्रष्टव्यमित्याह ॥ इदमित्या

इयमस्मीतिकलनादसदप्यन्यतामलम् ॥ भेदायसंभवदिदंस्वयमुत्पाद्यभावितम् ॥ १७ ॥ अहंकलासमुदयसमनंतरमेवसा ॥ वलि ताकाशशब्दांगत्रैलोक्यपरमाणुभिः ॥ १८ ॥ इत्यनुक्रमतोयातासविच्छक्तिस्वरूपताम् ॥ मज्जाप्राकृसन्निवेशंस्वतमेवाप्यसमुज्झती ॥ १९ ॥ संविच्छक्त्यातयातत्रततस्तरलरूपया ॥ निजएवसमेरूपेदृगित्यसंप्रसारिता ॥ २० ॥ इदंव्योममहानंतमियंकालमयीकला ॥ इयंनियतिरित्युक्ताक्रियेयस्पंदरूपिणी ॥ २१ ॥ अयंसंकल्पविस्तारस्त्वयमाशांतरभ्रमः ॥ रागद्वेषस्थितिरियंहेयोपादेयधीरियम् ॥ ॥ २२ ॥ इयत्वत्ताल्वियमत्तातत्तेयसंस्थितास्वयम् ॥ ब्रह्मांडोघोयमूर्ध्वस्य स्वयमंगोर्ध्वमप्यधः ॥ २३ ॥ अयंपुरःपार्श्वतोयंपश्चाद्दाराद्द वीयसी ॥ इदंभूतंवर्तमानभविष्यत्त्विदमित्यपि ॥ २४ ॥ इदमंत स्थितानल्पकल्पनाभोरुहालयम् ॥ ब्रह्मांडमंडपापीडक्रीडामंडपमंडल म् ॥ २५ ॥ अनंतकलनातत्त्वपरिपल्लविताहरे ॥ रुद्रजकर्णिकाचेयंलोकपद्माक्षमालिका ॥ २६ ॥ इयंकीर्णमहारुद्रगणापूरितकोटरा ॥ दीर्घाभ्रसरणिर्भ्रांतिध्वसनेभ्य प्रभाविनी ॥ २७ ॥ इयंमेरु ककुभ्यत्रजगत्पंकजकर्णिका ॥ स्फुरद्द्रुमधूल्लासलंपटामरषट्पदा ॥ २८ ॥ इयमुद्दामसौगंध्यस्वर्गश्रीपुष्पमंजरी ॥ जगज्जरठवृक्षस्यरजोनरकमूलिन ॥ २९ ॥

दिना ॥ २१ ॥ आध्यात्मिकार्थाअपीयमेवेत्याह ॥ अयमिति ॥ २२ ॥ २३ ॥ लिंगभेदःआत्माब्रह्मेत्यादिविशेष्यपरमध्यात्मत्वयोज्यः ॥ दवीयसीदूरतरा ॥ २४ ॥ अंत स्थिताअनंता कल्पनांभोरुहाणामालयाजीवायस्मिंस्तथाविधम् ॥ २५ ॥ अनंते कलनातत्त्वे रचनरहस्ये परितःपल्लविता ॥ २६ ॥ कीर्णे सर्वतोव्याप्तैर्महारुद्रगणैःपूरितको टरा अभ्रसरणिराकाशपदवी ॥ अस्मिन्महत्यर्णवेतरिसेभवाअधि ॥ नीलग्रीवा शितिकंठाःशर्वाश्रितिश्रुतेरितिभाव ॥ भ्रांताविपयलंपटा स्वर्गिणस्तेषांध्वसनेभ्य अधःपतने भ्यानिमित्तेभ्यःप्रभाविनीप्रतापवतीप्रकाशवतीवा ॥ नक्षत्रपातेनतःपथेप्रभानुवर्तितदर्शनादित्यर्थः ॥ २७ ॥ अथअस्यामुत्तरस्यांककुभिदिशि द्रुमलक्षणस्यमधुनउल्लासेअ मरामकरंदेलंपटा अमरलक्षणा षट्पदायस्याम् ॥ २८ ॥ रजोगुणकार्यरागादिनानरकेषु सिध्यमूलिनोमूलवतोजगज्जरठवृक्षस्यउद्दामसीमध्यास्वर्गश्रीलक्षणापुष्पमंजरीइयमे वेत्यर्थः ॥ २९ ॥

ऊर्ध्वमपारापरितश्चापारपर्यंता व्योमलीलाव्योमाकारासरोजिनीकमलिनीसरसीवाइयमेवेत्यर्थ. ॥३० ॥ क्रिया कर्माण्येवपरितो माहायस्याम् ॥ तरंगाइवतरलाभासत्वाव लीयस्याम् ॥ सर्ग प्रजोत्पादनतल्लक्षणेआवर्त्तनाविधानेकार्येतिष्ठतीतितत्स्थाभूरिभूतपरंपरायस्याम् ॥ ३१ ॥ इयत्तयाप्राण्यायु.परिमाणेनप्रसरिणीविस्तृता तेजोभिरग्न्या दित्यचंद्रादिभि केसरिणी ॥ व्योमैवपंकजंयस्यास्तथाविधाकालनलिनीइयमेव ॥ ३२ ॥ ३३ ॥ इतिवर्णितप्रकाराःसर्वैसानिजमज्जाचमत्कृतिरेव ॥ एवप्रकारैर्व्यष्टिसमष्टि सकल्पसन्निवेशस्यात.कृतसस्थिति. ॥ ३४ ॥ ३५ ॥ बिल्वाख्यायिकासमाप्यस्वरूपेणैवचितिवर्णयन्नुपसंहरति ॥ एषेति ॥ एकत्वसंख्यायाअपिद्वैतापादकत्वान्नैकात्मिका

इयंचताराकिंजल्काब्रह्मार्णवतटस्थिता॥ अपारापारपर्यंताव्योमलीलासरोजिनी ॥ ३० ॥ इयंक्रियापरिग्राहातरंगतरलावली ॥ सर्गावर्त्तविधानस्थभूरिभूतपरंपरा ॥ ३१ ॥ इयत्तयाप्रसरिणीक्षणकल्पादिपल्लवा॥ तेजःकेसरिणीकालनलिनीव्योमपंकजा ॥ ३२॥ इमाभावविकाराढ्याजरामृतिविषूचिकाः॥ विद्याविद्याविलासाढ्याइमाःशास्त्रार्थदृष्टयः ॥ ३३ ॥ इतिसातस्यबिल्वस्यनिजमज्जाचमत्कृतिः॥ संकल्पसन्निवेशांतरेवैवकृतसंस्थितिः ॥ ३४ ॥ शांतास्वस्थानिराबाधासौम्याभावनयोज्झिता ॥ कर्तृत्वमप्यकर्तृत्वंकृत्वाकृत्वेवसंस्थिता ॥ ३५ ॥ एषैकिकैवविविधेवविभाव्यमानानैकात्मिकानविविधाननुसैवसैव ॥ सत्यास्थितासकलशांतिसमैकरूपा सर्वात्मिकातिमहतीचितिरूपशक्तिः॥ ३६ ॥ ॥ इत्यार्षेवा०वा०दे०मोक्षोपायेषुनि०पू०बिल्वोपाख्यानेपंचचत्वारिंशःसर्गः॥ ४५॥
श्रीरामउवाच॥ ॥ भगवन्सर्वसारज्ञत्वयैषाबिल्वरूपिणी ॥ महाचिद्घनसत्तेहकथितेतिमतिर्मम ॥ १ ॥ चिन्मज्जारूपमखिलमहंतादीदमाततम् ॥ नमनागपिभेदोस्तिद्वैतैक्यकलनात्मकः ॥ २ ॥ ॥ श्रीवसिष्ठउवाच॥ ॥ यथाब्रह्मांडकूश्मांडमज्जामेवादिसंस्थितिः॥ तथाचिद्बिल्वमज्जेयंब्रह्मांडादिजगत्स्थितिः ॥ ३॥

नापिविविधाकितुसैवएकत्वसंवैका ॥ वीप्सयासजातीयविजातीयनिवृत्तिर्वा ॥ सकलस्यद्वैतविकल्पस्यशांत्यालमैकरूपा ॥ अनेनस्वगतभेदस्यापिव्यावृत्तिः ॥ अतिमहती ब्रह्मशब्दलक्ष्याचितिरूपाशक्तिरेवेत्यथव्युत्पादितेत्यर्थः ॥ ३६ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू०पचचत्वारिंशःसर्गः ॥ ४५॥ ॥छ॥ ॥ इह शिलिमनोदृष्टपद्मिनीखडमडितम् ॥ शिलोदरमिवब्रह्मप्रपचाभासमीर्यते ॥ १ ॥ श्रीरामःस्वस्यबिल्वाख्यानतात्पर्यबोधंदर्शयति ॥ भगवन्निितिद्वाभ्याम् ॥ १ ॥ २ ॥ नाहंतादिमात्रचिद्बिल्वमज्जाकिंतुब्रह्मांडादिसर्वमपीतिनिस्संकोचबोध्यमित्याशयेनवसिष्ठउवाच ॥ यथेत्यादिना ॥ ३ ॥

चिद्बिल्वस्य मज्जेत्युक्ते अतः प्रदेशस्यावयवानां रसघन परिणामविशेषइतिकस्यचिद्भ्रांतिमारयति ॥ स्थितिरिति ॥ यथाबिल्वस्वपरमज्जायाआधारस्तथास्थितिलक्षणमज्जायाआ
धयाया स्वाधारस्यस्वपरस्यानीयस्याम्यत्वसंभवेतत्त्वत परिणामरूपामज्जास्यात् नत्वसर्वगस्यास्यचिदात्मनःप्रकारस्यैवनैकदेशेनचापरिणामित्वेविनाशोदुर्वार ॥ नचैतन्निरवयवे
मण्यों न प्रदेश परिणामोवासंभवतीतिनमज्जाराज्य परिणामपरइत्यथ ॥ ४ ॥ तर्हि किंपरइतिचेच्चित्सत्यलक्षणचमत्कारपरइत्याशयेनाह ॥ चितेरिति ॥ शिलांत शिल्पिमनःक
ल्पितपद्मवनसन्निवेशवदित्यर्थ ॥५॥ दृष्टांतविवरीतुमस्मशिलाख्यायिकामस्तौति ॥ अत्रेति ॥६॥७॥ मनःकल्पनानामानत्यादनंतानि ॥८॥ उपनिगूढानिसश्लिष्टानि ॥ ९॥
॥ १० ॥ दृष्टवैपरीत्येनापिमन कल्पनसंभवादाह ॥ कर्णिकेति ॥ कर्णिकाजालेषुमूलानियेषाम ॥ इतराण्यिकानिचिन्मूलानिच ॥ ११ ॥ शाखा पद्ममुकुलवत्सन्निवेशिन ॥

स्थितिश्चिद्बिल्वमज्जास्यात्स्वाधारान्यत्वसंभवे॥ विनाश सर्वगस्यास्यनचैतत्संभवत्यलम्॥ ४ ॥ चितेर्मरीचबीजस्यजगदास्याचमत्कृ
ति ॥ स्थितासौपुनसौम्यांत शिलांत सन्निवेशवत्॥ ५॥ अत्रेमामिंदुवदनचित्रांविस्मयकारिणीम्॥ वर्ण्यमानामयारम्यामन्यामा
ख्यायिकांशृणु ॥ ६ ॥ स्निग्धास्पष्टामृदुस्पर्शामहाविस्तारशालिनी ॥ निबिडानित्यमक्षुब्धाक्वचिदस्तिमहाशिला ॥ ७ ॥ तस्यामतःप्र
फुल्लानिपद्मानिसुबहून्यपि॥ सरस्यामिवरम्याणितान्यनंतानिसतिवै ॥८॥ अन्योन्यप्रोतपत्राणिमियोविघटितानिच॥ मिथश्चोपनि
गूढानिगूढानिप्रकटानिच॥ ९ ॥ अधोमुखान्यूर्ध्वमुखान्यपितिर्यङ्मुखानिच॥ मिथोमिलितमूलानिमिथ प्रोतमुखान्यपि॥ १० ॥ क
र्णिकाजालमूलानिमूलांत कर्णिकानिच॥ ऊर्ध्वमूलान्यधोमूलान्यमूलानीतराणिच॥ ११ ॥ तपांचनिकटेसंतिशाखा शतसहस्रश ॥
चकोराश्चमहाकारा पद्मवत्सन्निवेशिन ॥ १२॥ ॥ श्रीरामउवाच॥ ॥ सत्यमेतन्मयादृष्टातादृशीसामहाशिला॥ शालग्रामेहरेर्धा
म्निविद्यतेपरिवारिणी॥ १३॥ ॥ श्रीवसिष्ठउवाच॥ ॥ एवमेतद्विजानासिदृष्टवानसितांशिलाम्॥ योयश्चतत्रवैप्राण समस्ताहृगन
तर॥ १४॥ मयात्वियमपूर्वैवशिलेहकथितातव॥ यस्यामतर्महाकुक्षौसर्वमस्तिचनास्तिच॥ १५॥

चकोराश्चविकसितपद्मवत्सन्निवेशिनइत्यथाख्यायते ॥ १२ ॥ स्वयतीर्थयात्रायांशालग्रामक्षेत्रेदृष्टांशिलांगुरुवाक्यात्स्मरन्राम सैवाचभगवताजगत्कल्पनासहितमस्मद्दृष्टां
मतेनोराद्दनेतिमन्यमानआह ॥ सत्यमेतदिति ॥ परिवारिणीपद्मवनलांछनपरिवृता ॥ १३ ॥ दृष्टांतदार्ष्टांतिकसंबंधस्त्वयासम्यग्बुद्धइत्यनुमोदमानोवसिष्ठआह ॥ एवमेतदि
ति ॥ तांदृष्टांतभूतांशिलांदृष्टवानसीतिविजानासियश्चनादृगुदार्ष्टांतिकभूतश्चिदात्मायोयादृशस्वभाव ॥ अनतरोनिरवकाशश्चिद्घन सम प्राणस्यापिप्राणोनिरतिशयानंदरू
पस्तमतस्मिन्नपिविषयेदृष्टवानसीतिविजानासि ॥ १४ ॥ मयात्वनत्वदृष्टशिलादृष्टांतत्वेनाभिप्रेतांकित्वपूर्वांप्रत्यक्षशिलात्वेनपरिकल्प्यबिल्वमिवोपम्यस्तेतिउपायेतात्पर्य
विषयारेपिनोपेयेविस्तारइत्याशयेनाह ॥ मयात्विति ॥ १५ ॥

चिदात्मनिगौण्याशिलाशब्दप्रयोगनिमित्तानुगुणान्दर्शयति ॥ घनत्वेति ॥ आदिपदादभेद्यत्वैकरसत्वकूटस्थत्वादिपरिग्रहः ॥१६॥ अपिशब्दाभ्यांसूचितोविरोधोमाययापरिह र्त्तव्य ॥१७॥१८॥ जगदेवमयातत्रपद्मवनत्वेनोत्प्रेक्षितमित्याह ॥ अस्यामेवेति ॥ तच्चजगदन्यदिवभातमपिवस्तुतोनान्यत्शुद्धचिदात्मकचवानकिंतुमायैवेत्यर्थः ॥१९॥ तेषा चनिकटेसतिशखाःशतसहस्त्रशइतियदुक्तंतत्तात्पर्यमाह ॥ शखेति ॥ लोक्यतइतिलोकचित्रलिख्यतेशिल्पिमन कल्पनयायथातथाभूतभव्यसर्वंजगत् तत्रशालभंजिकावस्तु तोयथावास्तवीवअस्तीतिपरेणान्वयः ॥ २० ॥ २१ ॥ आदत्तेस्वीकरोतितथाएषाचिदपिघनाएकिकांएकपिंडतास्वीकरोतीत्यर्थः ॥ २२ ॥ तत्स्वरूपादभिन्नोपिवपुर्मय परि च्छिन्नाकारइवभातीत्यर्थ. ॥ सुषुप्तावस्थयाटकच्छेदात्प्रागनभिव्यक्तयेत्यर्थः ॥ २३ ॥ २४ ॥ सतोःशिलामरिचयोर्नोदेतिनास्तमायातितथेत्यर्थ. ॥ पुरध्यामुचरित्रायाश्चि

चिच्छिलैषामयोक्तातेयस्यामंतर्जगंतिवै ॥ घनत्वैकात्मकत्वादिवशादेषाशिलैवचित् ॥१६॥ अप्यत्यंतघनांगायाःसुनीरंध्राकृतेरपि ॥ विघनेंतर्जगद्वृंदंव्योम्नीवविपुलानिलः ॥ १७॥ द्यौःक्ष्मावायुराकाशंपर्वताःसरितोदिशः ॥ संतितस्यांशिलायांचसुषिरंनमनागपि ॥ ॥ १८ ॥ अस्यामेवघनांगात्मजगत्पद्मंविजृंभते ॥ एतस्माद्वस्तुतोनान्यदन्यच्छुद्धात्मकंचवा ॥ १९ ॥ शंखपद्मादिकंलोकंपाषाणेलिख्य तेयथा ॥ भूतंभवद्भविष्यच्चशिलायांशालभंजिका ॥ २० ॥ तथास्तितत्रतत्सर्वंसंस्थानंवस्तुतोयथा ॥ उपलांतःसन्निवेशोनानात्माप्ये कपिंडताम् ॥ २१ ॥ यथादत्तेतथैषाचित्पिंडाकारैकिकांघनाम् ॥ यथापद्मःशिलाकोशादभिन्नस्तद्वपुर्मयः ॥ २२ ॥ तथासर्गश्चितोरू पादभिन्नोपिवपुर्मयः ॥ सुषुप्तावस्थयाचक्रपद्मलेखाःशिलोदरे ॥ २३ ॥ यथास्थिताश्चितेरंतस्तथेयंजगदावली ॥ शिलांतःपद्मलेखाली मरिचांतश्चमल्कृतिः ॥ २४ ॥ नोदेतिनास्तमायातियथासर्गस्तथाचितौ ॥ यथापुरंध्र्यांमर्त्त्यौंतर्मज्जावाबिल्वगायथा ॥ २५ ॥ तथानंत विकाराढ्याचितौब्रह्मांडमंडली ॥ विकारादितदेवेतिमुधैवोक्तिरनर्थिका ॥ २६ ॥ तत्तांसमुपयात्याशुजलंबिंदुरिवांभसि ॥ अनंतत्वा च्चितेरेतद्विकारादिचितेरिति ॥ २७ ॥ उक्त्यासंपद्यतेयच्चतल्लयेनविलीयते ॥ ब्रह्मैवेदंविकारादिविकाराद्यर्थवर्जितम् ॥ २८ ॥ वर्जनावर्ज नेर्थस्यब्रह्मैवानंततावशात् ॥ ब्रह्मस्थितंविकारादिब्रह्मैवोत्पादितंक्रमात् ॥ २९ ॥

यामतर्मनसिमरर्यस्तत्कांतःसदैवास्ति ॥ २५ ॥ यदाविकारिणांब्रह्मांडानांचिन्मात्रत्वतदातद्विकारभुवनशरीरादिभेदानांचिन्मात्रत्वमर्थसिद्धमितितदुक्तिरर्थशून्यत्वान्मुधानि ष्फलैव ॥ २६ ॥ कुतोर्थशून्यातत्राह ॥ तत्तामिति ॥ यतएतद्विकारादिआशुब्रह्माद्यानांचिन्मात्रतादर्शनक्षणएवतत्तांचिन्मात्रतासमुपयातिनपृथगणुमात्रमप्यवशिष्यतइति हेतोः ॥ २७ ॥ कविवर्णिततगंधर्वनगरवैचित्र्यवदुक्तिमात्रसिद्धत्वादपितस्यप्रत्येतृचिन्मात्रत्वमित्याह ॥ उक्त्येति ॥ सभूरितिव्याहरत् भुवमसृजत एतइतिवैप्रजापतिर्देवानसृज त असृग्रमितिमनुष्यानिंदवइतिपितॄनित्यादिश्रुत्याभुवनादिसर्गस्यनामपूर्वकत्वोक्तेरेवनामलयेनलयोप्यूह्यः ॥२८॥ विकाराद्यर्थवर्जनमपिनवस्त्वतरमित्याह ॥ वर्जनेति ॥ २९ ॥

पुष्पफलपर्यंतस्वकार्यबीजवत्सर्वभाविस्वत्तानुरक्तिवशमावपिसर्वविवेत्याह ॥ बीजेत्याविना ॥ १० ॥ अंकुराविपूर्वपूर्वविकारेषुभवतीविषमानिमाथउत्तरकालकाष्टशाखा पत्रशाखियाति ॥ ११ ॥ द्वैतस्यैकत्वकल्पनाधीनकल्पनत्वावप्यकल्पितविम्मार्थतत्त्वमित्याह ॥ एकत्वमिति ॥ एतयोर्बीजतत्कार्ययो ॥ अन्यत्रभवच्चिद्व्यतिरिक्तजात्मकल्पना नवधीनाद्भृति ॥ नच्चिद्रूपंतुकदाचिदपिद्वैतशाजात्मत्वभावंनसंभवतीत्यर्थ ॥ १२ ॥ तदेवस्फुटयन्प्रकृतेयोजयति ॥ चिदिति ॥ १३ ॥ मज्जादिविभिन्नैरितिशेष ॥ १४ ॥ एक भवद्इतिप्रसिद्धजगद्रूपेणदृश्यते ॥ सुपुत्रकशिल्पिवासनामात्रम ॥ १५ ॥ १६ ॥ जगत्कर्तृजीवेश्वरतत्पर्यंतवीयकर्तृत्वाविजगत्स्वचितिश्चिदेव ॥ प्रभाभवाभावाविर्भावतिरोभावा

अन्यान्यार्थमिदंविद्धिजगद्व्योमसासमम् ॥ बीजंपुष्पफलांतस्थंबीजातनान्यदात्मकम् ॥ ३० ॥ यादृशीबीजसत्तासाभवतीयात्यथो त्तरम् ॥ चिद्घनेचिद्घनत्वयत्सएवत्रिजगत्क्रम ॥३१॥ एकत्वमेतयोर्द्वित्वमेकाभावेद्वयोःक्षति ॥ जगदन्यभवोद्भूतिर्नकदाचित्तदीदृशम् ॥३२॥ चिद्विन्नकदाचिद्वद्वयमंनमिथोद्वयम् ॥ महाशिलांतरेभेदोलेखात्मास्तियथाघटु ॥३३॥ तदन्यानन्यमज्जादिचिद्घनेत्रिजगत्त या ॥ रेखोपरेखावलितायथैकापीवरीशिला ॥३४॥ तथात्रैलोक्यवलितब्रह्मैकमितिदृश्यते ॥ एतच्छिलांतरज्ञादियथानित्यसुपुत्रकम् ॥३५॥ नात्मनेतिनचोदेतितयाहताजगद्गति ॥ यथाशिलांतर्लेखादिभिद्यतेनशिलांतरात् ॥३६॥ तत्सारत्वाज्जगत्कर्तृकर्तृत्वादिजगच्चि ति ॥ यथाशिलांतराज्ञानांस्वदास्वदभवाभवा ॥३७॥ विपर्यत्वनगच्छतिकर्त्तारोजगतस्तथा ॥ नेदंकदाचित्क्रियतेनकदाचननश्यति ॥३८॥ अद्विवत्प्रभवोल्लासविलासावेदनात्मकम् ॥ यथायथयदाकारतयातत्रतदेवहि ॥३९॥ ब्रह्मसत्तात्मकंसर्वंसुपुत्रस्थमिवस्थित म् ॥ भूरिभावविकारात्मायोयंजगद्गुरुभ्रम ॥ सुपुत्रमेवतद्विद्धिशिलांतःपंकजादिवत् ॥ ४० ॥ नित्यंसुपुत्रपदमेवजगद्विलास सम्यक् प्रशांतममचिद्घनखात्मकत्वात् ॥ पद्मा शिलांतरिवसर्गदशास्वसाराद्दष्टानदेहमुपयातिकदाचिदेव ॥४१॥ ॥इ॰वा॰वा॰दे॰मोक्षो पायेपुनि पू शिलाकोशोपदेशोनामषट्चत्वारिंश सर्ग ॥ ४६ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥

॥ १७ ॥ शिलायथातत्स्वरूपंनिविपर्यत्वंनगच्छतितथाआत्मतत्त्वदर्शनपिकर्तारइत्यर्थ ॥ १८ ॥ अविषद्विरिव्रूत्प्रभवविकारित्वादित्यर्थ ॥ अतएवशिलानानाशिल्पिनीविरु द्धमानसकल्पनाभेदइवब्रह्मापिनानाजीवविरुद्धकल्पनाभेदपितत्तद्रूपमेवावतिष्ठतइत्याह ॥ यथेति ॥ यदाकारकल्प्यतइतिशेष ॥ १९ ॥ सुपुत्रस्थयथाप्रतिजीवविविधभस्वा मापकल्पनाभेदमविरोधेनसहतेनतद्वदित्यर्थ ॥ सुपुत्रमनुन्मिषितवासनामात्रमेव ॥ ४० ॥ आख्यायिकातात्पर्यसंक्षिप्योपसंहरति ॥ नित्यमिति ॥ चिद्घनपद्मस्वतदात्मक त्वात् ॥ असारात्तुच्छा शिलांतःपद्मादयसर्गादिदशाआत्मनिदृष्टाअपिकदाचिदपिदेहंस्वरूपस्थितिनापयास्येवेत्यर्थ ॥ ४१ ॥ ॥ इतिश्रीवासिष्ठम॰तात्पर्यप्रकाशेनि॰पू॰ षट्चत्वारिंश सर्ग ॥ ४६ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥५॥

१ यतइतिक्वचित्पाठ

इहबिल्वशिलाख्यानतात्पर्यमुपवर्ण्यते ॥ मयूराडरसेबर्हवर्णसंस्थानभेदवत् ॥१॥ बिल्वदृष्टांतवशादचिद्रूपमेवतदंतर्वीजमज्जादीनामिवस्वगतभेदेननत्रतत्समसत्ताकसर्गोद्भवश्चा ॥ सर्गश्चचि त्रोक्तइतितात्पर्यभ्रमोमाभूदितितत्तात्पर्यवर्णयति ॥ चित्तत्वस्येति ॥ चिद्रूपतत्वयावत्स्वस्वरूपप्रतिसंधानशून्यतावदेवसर्गगर्भमितिद्योतनायाचेतनफलदृष्टांतः ॥ सर्गश्चचि त्रोक्तइतितात्पर्यभ्रमोमाभूदितितत्तात्पर्यवर्णयति ॥ तर्हिकिंचित्तत्त्वादन्यएवसर्ग एतदपिदुर्वच त प्रसिद्धस्वापादपरःस्वापःस्वमएवयुगवत्सरादिक्रमात्स्वसत्ताकल्पितसन्निवेशेनप्रवृत्तोनचित्समसत्ताकःस्वगतभेदइत्यर्थ ॥ १ ॥ तर्हिकिंचित्तत्त्वादन्यएवसर्ग एतदपिदुर्वच मित्याह ॥ देशेति ॥ २ ॥ तर्हिकिमसदेवेदसर्गादितदपिदुर्वचमित्याह ॥ समस्तेति ॥ समस्तानाशब्दानातदर्थानातद्वासनानातत्प्रयुक्तसंकल्पविकल्पादिकलनानाचवेदितुरवस्था मित्याह ॥ देशेति ॥ २ ॥ तर्हिकिमसदेवेदसर्गादितदपिदुर्वचमित्याह ॥ फलस्येति ॥ अनानातथाना त्रयेप्येकात्मत्वात्सत्यत्वेअत्यतासतस्तेनवेदनादर्शनादित्यर्थः॥३॥ तस्माच्चिदधीनप्रातिभासिकानुक्रमवैचित्र्याशयेनैवफलत्वेनोत्प्रेक्षणमित्याह ॥ फलस्येति ॥ अनानातथाना

श्रीवसिष्ठउवाच॥ ॥चित्तत्त्वस्यफलस्येवचितःस्वापापरक्रमात् ॥ससत्तासन्निवेशेनयःससर्गइतिस्थितः॥१॥ देशकालक्रियादीनाम पितन्मयरूपतः॥इदमन्यदिदंचान्यदितिनात्रोपपद्यते॥२॥समस्तशब्दशब्दार्थवासनाकलनाविदः॥एकात्मत्वादसच्चेदमितिसंकथ्यते कथम् ॥३॥ फलस्यांतःसंनिवेशोनामानुक्रमतोयथा॥ चितःस्वसत्ताघनतानानानानास्थितातथा॥४॥ अनानैवापिनानैवक्षुब्धेवाक्षु भितैवच॥ यथाफलांतःस्वासत्ताचिदंतःसिद्धयस्तथा ॥५॥ जगन्नगरमादर्शेचितःस्वंप्रतिबिंबितम् ॥कचतीवाकचदपिशिलांतःसंनि वेशवत् ॥ ६ ॥ परमेचिन्मणौसंतिजगत्कोटिशतान्यपि॥ चिंतामणावनंतानिफलानीवार्पितान्यलम् ॥ ७ ॥ चित्समुद्गकएवेदंतदंगो त्कीर्णमाततम् ॥ जगन्मौक्तिकमाभातितदंशमयमन्यवत् ॥ ८ ॥ अहोरात्रंविकरयन्वेदनावेदनान्यलम् ॥ चिदादित्यःस्थितोभास्वाञ्ज गद्द्रव्याणिदर्शयन् ॥ ९ ॥

नाचभूत्वास्थिता ॥ ४ ॥ तत्रानानात्वायंशएवप्राथम्याद्वास्तवइत्याह ॥ अनानैवेति ॥ क्षुब्धाविक्रतेव ॥ सिद्धय सन्निवेशनिष्पत्तयः ॥ ५ ॥ शिलाख्यानस्यतात्पर्यंदर्शय ति ॥ जगदिति ॥ शिलांतःसन्निवेशवज्जगदितियदुक्तंतस्याप्यादर्शेप्रतिबिंबितनगरमिवचित स्वस्वरूपमेवअकचदपिकचतीत्यर्थेतात्पर्यमित्यर्थः ॥ ६ ॥ मायिकानंतशक्तिम त्त्वाद्वाचिंतामणौचिंतकमनोरथफलानीवचितिसर्वंजगदस्तीतितत्तात्पर्यंवर्णनीयमित्याह ॥ परमेइति ॥ अर्पितानीतिश्रुतिषुअरनाभिनिदर्शनोपन्यासादितिभाव ॥ ७ ॥ क ल्पितविकाराशाशिभावेनमुक्ताशुक्तिसपुटकेमुक्तानामिववाचितिजगत्स्थितौतात्पर्यमित्याह ॥ चित्समुद्गकइति॥तदंगेतद्गर्भेउत्कीर्णमिवतदंगोत्कीर्णम् ॥ तदेवाह ॥ तदंशमय मिति ॥ ८ ॥ आदित्यःस्वस्वरूपाविर्भावतिरोभावात्मकमहोरात्रविभागमिवचिन्मणिशिलापिस्ववेदनावेदनात्मकजगद्द्रव्यप्रकाशनाप्रकाशनेस्वात्मनिकरोतीत्यर्थेवातत्तात्प र्यमित्याह ॥ अहोरात्रमिति ॥ विकरयन्विकलयन्विकुर्वन्नितियावत् ॥ ९ ॥

समुद्रस्यकोटरेगर्भेआवर्त्तरगादिस्पंदभेदानांसमग्रमाप्लवजगद्देवामोचिन्मात्ररूपत्वेपातत्तात्पर्यमित्याह ॥ समुद्रेति ॥ १० ॥ वर्त्तमानसर्गस्यातीतानागतसर्गस्यचतुल्यत याचिन्मात्ररूपतामदर्शनेनातत्तात्पर्यमित्याह ॥ यदस्तीति ॥ शालभंजिकाउत्कीर्णाअनुत्कीर्णावाप्रतिमा ॥ ११ ॥ चित्स्वाप्यानस्यापिजगतश्चित्सारत्वेतात्पर्यमित्याशये नाह ॥ भावेति ॥ यत्सत्यमत्यत्तच्चिद्रूपमज्जाकल्पमेव ॥ पदार्थश्रीर्बिल्वादिफलपदार्थश्रीर्मज्जैवसारोयस्यास्तथाविधामसिद्धेत्यर्थः ॥ १२ ॥ शिलोदरात्पृथक्करणेपञ्चनानावि शब्दार्थासस्वपचित पृथक्करणेजगत्सत्वेवातत्तात्पर्यमित्याह ॥ पद्मेति ॥ १३ ॥ नवैतन्मयमद्वयमित्यंशस्फुटयति ॥ नानेति ॥ यद्विचित्रोमपृथक्क्रियतेतर्हिनानापिजगच्चि दात्मकतयाभनानैवभवतियथातादृशशिलोदरमित्यर्थः ॥ १४ ॥ यथामरुमरीच्यादिमृगदशाअमलस्यव कोशोजलराशिः स्थलधियास्थलमेवेदमिति बुद्धिमतांविदुषांह त्यानुभानुभा मृगातपएव ॥ मृगसम्बन्धआतपादिरसजलादिरिवेतिसदसद्वपुर्यथाभातिएवचिरत्वमावस्त्वमपिभासि ॥ वस्तुतस्तुत्वंनैवसदसद्वपुरित्यर्थः ॥ १५ ॥ यथापयो

समुद्रकोटरावर्तपय स्पंदविलासवत्॥ अनानैवघनानाचिच्छिलांत सन्निवेशवत्॥१०॥यदस्तितच्चितिशिलाशरीरेशालभंजिका॥ यन्नास्तितच्चितिशिलाशरीरेशालभंजिका॥११॥भावाभावेपुयत्सत्यचिन्मज्जाकल्पमेवतत्॥ मज्जासारापदार्थश्रीस्तन्मयस्यात्तदे वहि॥१२॥पद्मनानादिशब्दार्थस्यकायद्वच्छिलोदरम॥ नानातद्वदिदनानातदेतन्मयमद्वयम्॥१३॥नानाप्येकतयानानापद्मादिव शिलोदरम्॥ यथातदविभागात्मतयेदंचिद्घनांतरम्॥१४॥यथामलपय कोश स्थलधियांतुभानुभा॥ सन्नेवासन्निवेवचिन्नेवत्वस दसद्वपु॥१५॥यथासम्यक्पयोराशि कोटरेकलनोन्मुखम्॥ द्रवत्वात्स्पदतेऽस्पंदतयेदंचिद्घनांतरम्॥१६॥चिच्छिलाशवपद्मौघ स्तन्मयत्वेप्यतन्मय ॥ जगद्विद्विसपद्मादिपदार्थचिच्छिलांतरम् ॥ १७॥ महाशिलाघनोप्येपचिद्घनम्यशिलोदरम्॥ अरघ्रोनिर्द्वयो च्छोज सशांत सनिवेशवत्॥१८॥तपतीदंजगद्ब्रह्मशरत्कालइवामलम्॥स्फुरतीदंजगद्ब्रह्मसौम्य सोमइवाद्भुत ॥ ॥१९॥ब्रह्मणीद सुषुप्तमनास्त्यनाशशिलाघनवत्॥ ब्रह्मत्वंब्रह्मणियथातथैवेदंजगत्स्थितम्॥२०॥

राशि कोटरमध्यद्रवत्वात्स्पंदतेतथाअस्पंदमपिचिद्घनस्यआंतरस्पंदशंक्येत्यर्थः ॥ १६ ॥ तर्हितमपद्मादे शिलामयत्वमिवजागतरात्तपद्मादेश्चिन्मयताकुतोनविभाव्यतेतत्रा ह ॥ चिच्छिलेति ॥ अतन्मयस्तद्बोधाद्विनिरोप ॥ अतएवस्तत्तथाबुध्यस्वेत्याह ॥ जगदिति ॥ १७ ॥ दृष्टांतीकृतशिलाघनोपिपरमार्थदृष्ट्याचिच्छिलोदरमेवसम्पन्नमित्या ह ॥ महाशिलेति ॥ अतएवतत्रशिल्पियमसदृशतयापिरघ्रादिसम्भावनापिनास्तीत्याशयेनविशिनष्टि ॥ अरघ्रइति ॥ सन्निवेशवत्तन्मिथ्यासन्निवेशेनभासतइत्यर्थः ॥ १८ ॥ य थाशरत्कालस्तपतिअमृतद्रुत सोम स्फुरतीतिकालात्मकयोरेवसूर्यसोमयोरवांतरभेदकल्पनयाक्रियाकारकभावेनव्यपदेशस्तथाब्रह्मजगत्प्रकाशयतिजगदात्मनास्फुरतीतिव्य पदेशइत्याह ॥ तपतीति ॥ सौम्योनयनाभिरामः ॥ १९ ॥ एवंचब्रह्मात्मनाजगन्नित्यमनष्टमित्यस्थितमितिधाउत्प्रेक्षितुशक्यमित्याशयेनाह ॥ ब्रह्मणीति ॥ घासनामात्ररूपत्वात्सुषु प्तमात्रम ॥ यथाशिलाघनजात्मनानित्यमस्तिच्छिलात्मनानित्यसन्नद्वित्यर्थः ॥ २० ॥

चिदात्मनासत्त्वेजगद्ब्रह्मशब्दार्थयोर्भेदोनास्तीत्याह ॥ नानयोरिति ॥ २१ ॥ एषांजगताम् ॥ तस्याश्चिदाकृतेरिव ॥ २२ ॥ मेर्वादिस्थूलतमोपिपदार्थस्तत्त्वदृशाआलोकना च्छुद्धमस्थौल्यादिधर्मकब्रह्मैवभवति यथाकरकाद्यम्बुकेवलपयोभवतितद्वत् ॥ अतोवहिस्तृणगुल्मादेर्ब्रह्माडातस्यअतश्चितादेर्हिरण्यगर्भांतस्यापिचजगतःपरमयदब्विवोत्त रोत्तरसूक्ष्मतमभूतसूक्ष्माव्याकृताक्षराततद्विभागेनातेयद्रूपपरिशिष्यतेतदेवपरविदुर्ब्रह्मविदइतिपरेणान्वयः ॥ २३ ॥ स्थूलस्यविमर्शेसूक्ष्ममात्रत्वेयुक्तिमाह ॥ तत्समूहइति ॥ पचीकृतस्तपचीकृतसमूहः अपचीकृतभूतानितुचित्तमेवेत्येवक्रमेणवोध्यमित्यर्थ ॥ २४ ॥ सौक्ष्म्येसत्सारत्वादेवतत्स्थौल्येपिसत्यतरत्वलक्षणसारतरताप्रपचेपामरैरनुभूयत इत्याह ॥ यत्सौक्ष्म्येपीति ॥ अतएवाप्परमाणुगतरसशक्तेःस्थूलजलेइन्द्रियगोचरतेवघटादौब्रह्मसत्तायास्तद्गोचरतेत्याह ॥ यथेति ॥ २५ ॥ पायसीस्थूलजलनिष्ठासतीयो

नानयोर्विद्यतेभेदस्तरुपादपयोरिव ॥ यानीमानिजगंतीहनान्यत्तानिचिदाकृतेः ॥ २१ ॥ भावाभावादिनास्त्येषांतस्याइवकदाचन ॥ ब्रह्मैवजगदाभासंमरुतापोयथाजलम् ॥ २२ ॥ ब्रह्मैवालोकनाच्छुद्धंभवत्यंबुयथातपः ॥ मेर्वादेस्तृणगुल्मादेश्चित्तादेर्जगतोपिच ॥ २३ ॥ परमांबुविभागेनयद्रूपंतत्परंविदुः ॥ तत्समूहस्तदेवोच्चैश्चित्तंमेरुतृणादिकम् ॥ २४ ॥ यत्सौक्ष्म्येपिहिसारात्मस्थौल्येसारतरं हितत् ॥ यथारसात्मिकाशक्तिःपरमाणुतयानघ ॥ २५ ॥ स्थिताजगत्पदार्थेषुपायसीब्रह्मतातथा ॥ रसशक्तिर्यथानानातृणगुल्मलतां भसाम् ॥ २६ ॥ तथानानातयोदेतिसैवासैवेवब्रह्मता ॥ यैषारूपविलासानामालोकपरमाणुता ॥ २७ ॥ गुणगुण्यर्थसत्तात्मरूपिण्या सांपरात्मता ॥ चितिचित्तेस्तिमेर्वादितदभिव्यंजनात्मनि ॥ २८ ॥ पिच्छपक्षौघकाठिन्यंमयूरांडरसेयथा ॥ चितितत्त्वेस्तिनानातातद भिव्यंजनात्मनि ॥ २९ ॥ विचित्रपिच्छिकापुंजोमयूरांडरसेयथा ॥ यथानानात्मिकेत्येवबर्त्यंडरसबर्हिते ॥ ३० ॥ विवेकदृष्ट्यादृष्टेतेत थाब्रह्मजगत्स्थितम् ॥ सनानातोप्यनानातोयथांडरसबर्हिणः ॥ ३१ ॥

ग्येतिशेषः ॥ स्थूलवैचित्र्येणसत्तावांतरसामान्यात्मनासत्तावैचित्र्येप्येतादृशादृष्टांताःकल्प्याइत्याशयेनाह ॥ रसशक्तिरित्यादिना ॥ २६ ॥ रूपविलासानानीलपीतादिरूप वैचित्र्याणामालोकपरमाणुतासूक्ष्मतमरूपसामान्यंयथातथेत्यनुषज्यते ॥ २७ ॥ परात्मताब्रह्मसत्तापिआसांघटादिव्यक्तीनांगुणिगुणरूपावातरवैजात्यार्थसत्तात्मरूपिणी भवतीतिशेषः ॥ आविर्भावदशायाकार्यात्मनाकारणमेवास्तीतिवत्तिरोभावदशायामपिकारणात्मनाकार्यमप्यस्त्येवेत्येतदपिदृष्टांतेनोपपादयति ॥ चितीति ॥ सर्वथातिरो भावेमायाशबलचितिअर्धतिरोभावेचित्तेमेर्वादिस्थूलकार्यजातमस्ति यथापिच्छानिपक्षौघा.काठिन्यंचमयूरोपादानभूतेतदंडरसेसंतितद्वदित्यर्थः ॥ २८ ॥ २९ ॥ ३० ॥ वि वेकदृष्ट्याभेददृष्ट्या ॥ तथाचतत्रकल्पितभेदोयथानवास्तवाभेदविरोधीतद्वदत्रापीत्याह ॥ सनानातइति ॥ अंडेरसरूपोबर्हिणोमयूरः ॥ ३१ ॥

चिद्वैतात्मकमेवब्रह्मअसुयथाब्रह्मास्तथजगदिति पमसतथा द्वैताद्वैतात्मकम् ॥ नैतावतावैषम्यप्रसक्तिः ॥ यथासदसतो सत्तासमतायामवस्थितिस्तथातन्निरूप णारेत्यथ ॥ ३२ ॥ ननुविषम्यपरिहारायसत्तासमतायामेवावस्थानमितिकुतः अभावमभावतापत्तिलक्षणशून्यत्वपिवैषम्यपरिहारावित्याशङ्क्याह ॥ यतइति ॥ रूपतत्त्व भावस्थमत्रनुपपन्नसन्नंनशून्यनिष्ठम ॥ अभावस्यापिसदधीननिरूपणत्वात् ॥ नभावपरमतैवसिद्धि ॥ तस्यपाद्यत्वान्नानाऽनानात्मकभिन्नाभिन्नस्वभावमिदजगद्रूपनस त्तोपस्यनत्संभवमनुपपन्नम ॥ नअर्थस्यनशब्दस्यमहुर्वीहि ॥ ३३ ॥ एवमनुपपन्नस्यापिवर्हिरसदृष्टान्तेनैवेकरस्यनेयमित्याशयेनाह ॥ चिज्जगदिति ॥ यथाजगतिचि दात्मकंतत्त्वमनुगतंतथावर्हिणिरसोनुगत यथाचित्तत्त्वेजगत्तल्लीनंतथारसेबर्हीतिपश्येत्यर्थ ॥ ३४ ॥ उपमेोक्तमर्थरूपकेणैकीकृत्यदर्शयन्भेदनिरस्यति ॥ नानेति ॥ नाना विधपदार्थभ्रमलक्षणे पिच्छै पूर्णाआपाततोविदेहजगत्पृक्षणमयूराण्डस्यरस ॥ तत्रभासमानजगन्मयूररूपनुअमयूरत्वसत्तालक्षणपदपरमार्थवस्तुविद्धि तत्रभेद कुतोस्ति त्यथ ॥ ३५ ॥ ॥ इतिश्रीनानासिद्धम० तात्पर्यप्रकाशेनि० पू० सप्तचत्वारिंश सर्ग ॥ ४७ ॥ ॥ ९ ॥ ॥ यत्सत्तास्फूर्तिसोस्यानिर्माणविवर्तकल्पिते ॥ तस्त्वि

जद्वैतद्वैतमत्तात्मातथाब्रह्मजगद्भ्रम ॥ यथासदसतोसत्तासमतायामवस्थिति ॥ ३२ ॥ यतस्सदसतोरूपभावस्यविद्धितपरम् ॥ नानानानात्मकमिदत्वनुभूतनसंभवम् ॥ ३३ ॥ चिज्जगद्वलनपश्यवर्हिरसबर्हिणम् ॥ यथाजगतिचित्तत्त्वचित्तत्त्वेयज्जगत्तथा ॥ नानानानात्मकंचमयूराण्डरसोयथा ॥ ३४ ॥ नानापदार्थभ्रमपिच्छपूर्णांजगन्मयूराण्डरसश्चिदाया ॥ मयूररूपत्वमयूरमंत सत्तापदंविद्धि कुतोस्तिभेद ॥ ३५ ॥ ॥ इ० वा० वा० दे० मो० नि० पू० चिह्नोपदेशोनामसप्तचत्वारिंश सर्ग ॥ ४७ ॥ ॥ ९ ॥ ॥ श्रीवसिष्ठउवाच ॥ यथानुदितरूपात्मसर्वमस्तीदमाततम् ॥ मयूरइवबीजेंतस्सदहतादिगादिष ॥ १ ॥ यत्रनाभ्युदितंकिंचित्तत्रसर्वंचविद्यते ॥ तदत्राप्यगिरा स्वगसुखसारेणार्यियति ॥ २ ॥ तथाचमुनयोदेवागणा सिद्धामहर्षय ॥ आस्वादयंत स्वरूपंसदातुर्यपदेस्थिता ॥ ३ ॥ एतेयेस्तब्ध नयनदृष्टयोनिर्निमेषिण ॥ तेदृश्यदर्शनासंगस्पदत्यागेव्यवस्थिता ॥ ४ ॥

रानदघनब्रह्मनिष्कम्पवर्ण्यते ॥ १ ॥ मयूररसदृष्टान्तात्तिरोभूतजगद्विषयगर्भीपिदर्चित्संवलितबीजशक्तिमदव्याकृतमेवतत्वनतत परशुद्धमसीतिम्पामोहोमाभूदितितदधिष्ठा ननिर्विशेषभूमानरूपनिष्कम्पपरिचाययितुंश्रीवसिष्ठउवाच ॥ यथेति ॥ बीजेअडअंतर्मयूरइववर्णितमतरहनाविदहादिगादिविषयाविषसर्वंसमयथशुद्धेकालत्रयेप्यनुदि तरूपात्मअनुत्पन्नस्वरूपमेवास्ति तदेवोक्तदृष्टांततात्पर्यविषयोनशबलमित्यर्थः ॥ १ ॥ यत्रपरमार्थत किंचिन्नाभ्युदितंतत्रैवसर्वंजगदविषयाविद्यतेतदेवाघास्मिन्देहेपिअगि राअगानारमभूत प्राणःसन्मन्गादिवैषयिकसुखसारेणचित्तवृत्तिभेदेनविविधभोगाकारतयास्फटिकमुकुरादौ प्रतिबिम्बवदर्थ्यते ॥ तथाचविषयसुखानुभवबलात्तद्विभूतनिरति शयानंदसद्भावोनुमेयइत्यर्थः ॥ २ ॥ सर्वसाधारण्येनतत्सद्भावेअनुमानप्रमाणमुक्त्वाविदुषामनुभवप्रमाणमप्याह ॥ तथाचेति ॥ स्वरूपस्वात्मभूतभूमानंदम् ॥ ३ ॥ सर्वैरपिकुतो नानुभूयतइतिचेद्दृश्यदर्शनासमाध्याणस्वरूपजविशेषावृतिग्रहाण ॥ अतएवतदुभयपरिहारायमाध्यनिरुद्धदृष्टयःप्राणनिरोधपराश्वयोगिनोदृश्यतइत्याह ॥ एतेइति ॥ स्तब्ध नयनेनोऽपकेरदीनर्नेन्द्रियव्यपेक्षाः ॥ ४ ॥

इदंत्वनारूढषष्ठादिभूमिकाना आरूढषष्ठसप्तमभूमिकास्तुव्यवहरंतोपिसमाहिते पूर्वभूमिकागतैस्तुल्यमात्मसुखंमंदैवास्वादयतीत्याह ॥ नास्थिताइति ॥ कर्मसुव्यवहारेषुस्थि तानामपियेषाषष्ठादिभूमिकागतानाबाह्यार्थसत्यताभावनानआस्थिनाईषदपिस्थिता येचपूर्वभूमिकागताःसंवित्संवेद्यसंबंधत्यागलक्षणसमाधौस्थितायेषां प्राणोमनश्चनस्पद ते तेचचित्त चेत्यसमासगयोस्त्यागोयस्मिंस्तथाविधेभूमानदपदेतुल्यतयास्थिताइतिसार्धद्वयस्यार्थः ॥५॥६॥ षष्ठादिभूमिकागताअतब्रह्माकाराखंडवृत्तिधारास्पदात्तेनांशेननिर तिशयानदास्वादनलक्षणपरमपुरुषार्थयथाससाधयतितथैवबहिश्चित्तचेत्यादिस्पदाद्यवहारसस्थितिमपिकुर्वंति यथाजगदीश्वरोत.सदैवस्वरूपानदप्रतिष्ठोपिबहिर्मााययाजग द्यवस्थापालयतितद्वदित्यर्थ ॥७॥ तेषाव्यवहारेदृश्येषुबाह्यविषयेषुदर्शनानावृद्धिवृत्तीनांसगमेत्रिपुट्यामप्यभिव्यक्तोनिरतिशयानदात्मातद्धादयत्येवेतिसर्वोपिव्यवहार सुख रूपएव ॥ यथाऐंदवोरश्मिस्तरुपल्लवमत.प्रविश्यछादयतितद्वदित्यर्थ ॥ ८ ॥ अत.स्वरूपसुखनुतेषासुतरानिर्विक्षेपमित्यत्रापिदृष्टातमाह ॥ बिबादिति ॥ बिबनित्यातराले

नास्थिताभावनायेषांस्थितानामपिकर्मसु॥ संवित्संवेद्यसंबंधस्पंदत्यागेचयेस्थिताः॥ ५॥ प्राणोनस्पंदतेयेषांचित्रस्थवपुषामिव ॥ मनोनस्पंदतेयेषांचित्रस्थवपुषामिव ॥ ६ ॥ चित्तचेत्यसमासंगत्यागेतेस्वपदेस्थिताः ॥ स्पंदात्संसाधयंत्यर्थंतेनांशेनेश्वरोयथा ॥ ७ ॥ तथैवचित्तचेत्यादिस्पंदात्कुर्वंतिसंस्थितिम्॥ यथाछादयतिस्वच्छःपल्लवंरश्मिरैंदवः॥८॥ तथात्माछादयत्यंतर्दृश्यदर्शनसंगमे॥ बिंबाद्दूरंप्रयातस्यभित्तावपतितस्यच॥ ९ ॥ यदिंदोस्तेजसोरूपंतद्रूपंशुद्धसंविदः॥ नदृश्यंनोपदेशार्हंनात्यासन्नंनदूरगम्॥ १० ॥ केवलानुभवप्राप्यंचिद्रूपंशुद्धमात्मनः॥ नदेहोनेंद्रियप्राणौनचित्तंनचवासना॥ ११ ॥ नजीवोनापिचस्पंदोनसंवित्तिर्नवैजगत्॥ नसन्नासन्नमध्यंचशून्याशून्यंनचैवहि॥ १२ ॥ नदेशकालवस्त्वादितदेवास्तिनचेतरत्॥ एतैःसर्वैर्विनिर्मुक्तंत्वदिकोशशतेनच ॥ १३ ॥ यत्रैतत्स्पंदतेदृश्यंतत्तदात्मपदंभवेत्॥ यच्चनाद्यंनकल्पांतंनवस्त्वाद्यनिलादिभिः ॥ १४ ॥ इहचामुत्रसद्रूपादन्यथाभवतिकिंचित्॥ जायंतेचम्रियंतेचदेहकुंभाःसहस्रशः॥ १५॥

कस्यशुद्धनभ.स्थस्येंदोस्तेजसश्चद्रिकायायद्रूपतदेवपरमात्मनोनिर्विक्षेपाछादरूपंतैरनुभूयतइत्यर्थ. ॥ ९ ॥ १० ॥ तदेवदेहादिसर्वोपाधिनिर्मुक्तमात्मनस्तत्त्वमित्याह ॥ नदेह इत्यादिना ॥ ११ ॥ १२ ॥ देशकालवस्तुनिरूप्यत्रिविधपरिच्छेदादिनाब्रह्मैवास्ति ॥ एतैर्देहादिभिः ॥ शतशब्दआनत्यपर. ॥ भूतभाविदेहकोशानात्वदिवासनात्मनास्थिता नामानत्यात् ॥ १३ ॥ एवकोशशतेनत्वदिचित्तेयत्रयस्मिन्सतिएतद्दृश्यमाविर्भावतिरोभावादिनास्पंदतेतत्सन्मात्रमेवात्मपदभवेत्सभावितमित्यर्थ. ॥ एवकार्यकारणविलक्षण तत्सभावनीयमित्याह ॥ यच्चेति ॥ यद्ब्रह्मआद्यमहाकल्पादिकालेभवमव्याकृताख्यकारणम् ॥ तथाकल्पातप्राकृतादिप्रलयरूपचन ॥ सर्गकालेपिइहएतस्मिंल्लोकेअमुत्र परलोकेवाअनिलादिभि.शोषणदहनछेदनभेदनादिविकारै कचित्सद्रूपादन्यथानभवतीतिसविकारवस्तुआदिपदात्तद्विकाराश्चयन्नभवतीत्यर्थः ॥ १४ ॥ ननुदेहादिविकारैस्तद नुगनसद्रूपस्यापिविकार किनस्यात्तत्राह ॥ जायतेचेति ॥ १५ ॥

१ स्वस्थइत्यपिपाठः

र्द्दीकरहारिपगलितेस्याह ॥ नचेति ॥ १६ ॥ विष्वक्सवत शुसिद्धयाभवणापुपायपरिष्कृतया ॥ १७ ॥ अतएवभ्यवहरन्नपि निर्विकारात्मदर्शनान्नित्यमुक्तात्मस्वरूप
लिवत्याह ॥ मज्वलन्नपीति ॥ मज्वलन्स्वराज्यपयोग्यम्यवहारेपुदीप्यमान ॥ १८ ॥ १९ ॥ इअगकालादिसर्वंजगद्ब्रह्मत्यात्मदृष्ट्यादृष्टवतस्तवकिंभूयोपिभ्रमणसंभवतिनै
वसंभवतीत्यर्थः ॥ यतस्त्वस्तुत सममविषमस्वरूपगच्छसिसर्वत्रेवमामनानसीतिसमगएव॥ मलैवसन्ब्रह्माप्येनीतिश्रुतेरितिभाव ॥२०॥ ॥इतिश्रीवासिष्ठम॰तात्पर्यप्रकाशनिर्वा
णप्रकरणपू॰अष्टचत्वारिंशःसर्ग ॥ ४८ ॥ ॥ ५ ॥ ॥ विकारेभ्योविवर्त्तस्यवैलक्षण्यमिहोच्यते॥ अमबोधान्नविद्यास्तिमबोधेनास्तिसेतिच ॥ १ ॥ विकारारम्भाभ्यांविवर्त्त
स्यलक्षणतोभेदंजिज्ञासमानोराम पृच्छति ॥ यदीति ॥ आविपवाबारम्भपरियह ॥ बृंहितेनित्यनिरतिशयवद्धिमतिविविधपरिच्छेदशून्येइतियावत् ॥ १ ॥ तत्रकारणेकार्यो
त्पत्त्यवधाअनिरोहितभागवस्य १प्रतिबद्धभागवस्य २प्रच्छन्नभागवस्यो ३अप्रच्छन्नभागवस्यो ४विनष्टभागवस्य ५श्चेति ॥ आद्योमृदावेघटादिभाव ॥ द्वितीयोजलस्यहिमक

सयात्वाभ्यंतरस्यास्यनात्माकाशस्यखंडना॥ तच्चदेहादिसकलमात्मैवात्मविदांवर॥१६॥ केवलंबोधवैरूप्यादीपत्पृथगिवास्थितम् ॥
विष्वगारमभयविश्वंज्ञातयुष्मासुसिद्धया॥१७॥ प्रज्वलन्नपिकार्येपुनिर्वाणोनिममोभव ॥ यदिदंदृश्यतेकिंचिज्जगत्स्थावरजंगमम्
॥१८॥ तत्सर्वंब्रह्मनिधमनिर्गुणनिर्मलात्मकम्॥ निर्विकारमनाद्यंतनित्यशांतसमात्मकम् ॥ १९॥ कालक्रियाकरणकर्तृनिदानका
र्यजन्मास्थितिप्रलयसंस्मरणादिसर्वम्॥ ब्रह्मेतिदृष्टवतएवतवात्मदृष्ट्याभूयोपिकिंभ्रमणमंगसमगएव ॥ २० ॥ ॥इत्यार्षेवा॰वा॰
दे॰मोक्षोपायेपुनि॰पू॰ब्रह्मैकात्मप्रतिपादननामअष्टचत्वारिंशःसर्ग ॥४८॥ ॥५॥ ॥श्रीरामउवाच॥ ॥यदिनास्ति
विकारादिब्रह्मन्ब्रह्मणिबृंहिते॥ तदिदंकथमाभातिभावाभावमयंजगत्॥ १॥ ॥श्रीवसिष्ठउवाच॥ ॥ अपुनःप्रागवस्थानयत्स्वरू
पविपर्यय ॥ तद्विकारादिकंतातयत्क्षीरादिपुवर्त्तते॥२॥ पयस्तांपुनरभ्येतिदधित्वान्नपुनःपय ॥ शुद्धमायतमध्यंपुब्रह्मब्रह्मैवनिर्मलम्
॥३॥ क्षीरादेरिवतेनास्तिब्रह्मणोनविकारिता॥ अनाद्यंतविभागस्यनचैपोवयविक्रम ॥ ४ ॥

ठकाभाव ॥ तृतीयोरज्जुसर्पभाव ॥ चतुर्थोजटस्यतरंगभाव ॥ पंचमोदुग्धस्यदधिभाव ॥ तत्रांत्यएवजन्मादिभावविकार परिणामश्च इतरेतुविवर्त्तभेदाएवेत्याशयेनप्र
थमंतस्यविकारलक्षणमाह ॥ अपुनरिति ॥ यत्क्षीरदीसादिपुदधित्वेतुष्यादिलक्षणंकार्यंपुन प्राक्तनक्षीरादिभावावस्थानशून्यक्षीरादिस्वरूपविपर्ययरूपविपनेतदेवविकार
संस्कारपरिणामादिशब्दवाच्यमित्यर्थ ॥ २ ॥ ब्रह्मणिमगछक्षणकार्यंनुनतथातत्स्वधर्म्याविस्याह ॥ अशुद्धमिति ॥ ३ ॥ असतुतर्हिपरमाणुभिर्द्व्यणुकादीनामिवावयव्यारंभक
मलक्षणमाह ॥अनाद्यंतेति ॥ आद्यंतलक्षणदेशिकपरिच्छेदवस्तुक्रियासंयोगादिविभागवस्तुनावयवेष्ववयव्यारंभकम स्यात्तद्विलक्षणस्यब्रह्मण सइत्यर्थः ॥ एतेनबहूनांसमु
त्पन्नानांसमवेतानांवावस्तुनामवयवसमवेतेवासमवायेनैककार्यजनकत्वमारंभकत्वम् ॥ यथातंतुनांपटमति यथावाकारणगुणानांकार्यगुणपनीतिवैशेषिकाद्यभिमतलक्षणमुक्तं
मम ।अथारंभकमारम्भकं ॥ द्रव्याणिद्रव्यांतरमारभंते गुणाश्चगुणांतरमिति ॥ ४ ॥

ब्रह्मणिजगतस्तुपरिशेषाद्विवर्त्तत्वमेवसिद्धमितितल्लक्षणेनदर्शयति ॥ समस्येति ॥ विकृतिरन्यथाभावः ॥ सभ्रमविवर्तम् ॥ तथाचाद्यतयो·समेतदसंस्पर्शिवैषम्यप्रतिभासोविव
र्त्तइतितल्लक्षणमितिभाव· ॥ ५ ॥ तदसस्पर्शदर्शयति ॥ नसवेद्यमिति ॥ ६ ॥ मध्येविकारासंस्पर्शःकथज्ञायतइतिचेदाद्यतयोस्तदसस्पर्शस्वभावावधारणादेवलिंगादित्याह ॥
यादृगिति ॥ ७ ॥ आत्मनस्तुप्रकाशस्वाभाव्येनसमतासर्वानुभवसिद्धा अनात्मभावश्चतस्यात्यतासभाव्यइत्याह ॥ आत्मात्विति ॥ ८ ॥ ९ ॥ चित्प्रकाशैकरसेब्रह्मणितद्वि

समस्याद्यंतयोर्यैयंदृश्यतेविकृतिःक्षणात् ॥ संविदःसंभ्रमंविद्धिनाविकारेस्तिविक्रिया ॥५॥ नसंवेद्यंनसंवित्तिस्तत्रब्रह्मणिविद्यते ॥ तद्ब्र
ह्मशब्दकथितंनिःसंबंधचिदात्मवत् ॥६॥ यादृगाद्यंतयोर्वस्तुतादृगेवतदुच्यते ॥ मध्येयस्ययदन्यत्वंतदबोधाद्विजृंभितम् ॥७॥ आत्मात्वा
द्यंतमध्येषुसमःसर्वत्रसर्वदा ॥ स्वमप्यन्यत्वमायातिनात्मतत्त्वंकदाचन ॥ ८ ॥ अरूपत्वात्तथैकत्वान्नित्यत्वादयमीश्वरः ॥ वशंभाववि
काराणांनकदाचनगच्छति ॥ ९ ॥ ॥श्रीरामउवाच॥ ॥विद्यमानेसदैकस्मिन्ब्रह्मण्येकांतनिर्मले ॥ संविद्भ्रमस्वरूपाया अविद्यायाःक
आगमः ॥१०॥ ॥श्रीवसिष्ठउवाच॥ ॥ब्रह्मतत्त्वमिदंसर्वमासीदस्तिभविष्यति ॥ निर्विकारमनाद्यंतंनाविद्यास्तीतिनिश्चयः ॥ ११ ॥ य
स्तुब्रह्मेतिशब्देनवाच्यवाचकयोःक्रमः ॥ तत्रापिनान्यताभावमुपदेष्टुंक्रमोस्त्यसौ ॥ १२ ॥ त्वमहंजगदाशाश्चद्यौर्भूश्चाप्यनलादिवा ॥ ब्र
ह्ममात्रमनाद्यंतंनाविद्यास्तिमनागपि ॥ १३ ॥ नामैवेदमविद्येतिभ्रममात्रमसद्विदुः ॥ नविद्यतेयासासत्याकीदृग्रामभवेत्किल ॥ १४ ॥
॥श्रीरामउवाच ॥ ॥उपशमप्रकरणेत्व्यस्तनेतुत्वयेरितम् ॥ अविद्येयंतथेत्थंचविचार्यतइतिप्रभो ॥ १५ ॥ ॥श्रीवसिष्ठउवाच ॥ ॥ए
तावंतमबुद्धस्त्वमभूःकालंरघूद्वह ॥ कल्पिताभिःकिलैताभिर्बोधितोसिस्वयुक्तिभिः ॥ १६ ॥ अविद्येयमयंजीवइत्यादिकलनाक्रमः ॥ अ
प्रबुद्धप्रबोधायकल्पितोवाग्विदांवरैः ॥ १७ ॥ अप्रबुद्धंमनोयावत्तावदेवभ्रमंविना ॥ नप्रबोधमुपायातितदाक्रोशशतैरपि ॥ १८ ॥

रुद्धस्वभावायाअविद्यायाःकथप्रसक्तिर्येनतत्रजगद्विवर्त्तःस्यादितिप्रबुद्धदशाराम·शकते ॥ विद्यमानेइति ॥ १० ॥ नप्रबुद्धदशाअविद्यासद्भावंब्रूमःकित्वबुद्धव्युत्पादनायक
ल्पनयेत्याशयेनोत्तरमाह ॥ ब्रह्मतत्त्वमिति ॥ सर्वपूर्णम् ॥ ११ ॥ नअन्यतायाभावसद्भाववदाम कितूपदेष्टुमसौक्रमःकल्पितइत्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥ यद्यविद्याना
स्त्येवतर्ह्युपशमप्रकरणेयथाभातिरविद्येयतथेत्थचविचार्यतइतित्वयैवाविद्यासद्भावमंगीकृत्योक्तमितिरामःशकते ॥ उपशमेति ॥ १५ ॥ तत्तुतवाबोधदशायात्वद्बुद्ध्यनुसारिक
ल्पनयोक्तमिदानीतुत्वप्रबुद्धइतिनतत्कल्पनावसरइत्यविरोधइत्याह ॥ एतावतमिति ॥ १६ ॥ १७ ॥ भ्रममविद्यादिशास्त्रीयव्यवहारकल्पनाम् ॥ तत्मनः ॥ १८ ॥

पूर्वनाममभावनारिपुरूपरापनिरासकत्वादितिभाव ॥ १९ ॥ सत्गुरुबोधपुनत्स्वोपदेशोप्यथस्याशयेनाह ॥ सर्वमिति ॥ २० ॥ २१ ॥ येनयादृशोपदेशेनाववोध्यमेतश्च
ण्विनिर्धेय ॥ २२ ॥ तमेवाह ॥ ब्रह्मेति ॥ यथेच्छसीनिऐच्छिकेनव्यवहारेणनवास्तवब्रह्मत्वहानिरितिभाव ॥ २३ ॥ कोटि सर्वयातिबाधावधिस्तम्भायम् ॥ एकेति ॥ त
मकाभाहक शाकरकत्वमनुपश्यनश्त्यादिमुनेरितिभाव ॥ २४ ॥ हेराघवत्वतिष्ठन्गच्छन्स्वपन्नत्वपश्यअत अहंभावरूपआत्मेत्यनुभव ॥ २५ ॥ वेदनमिवेक्षरवम्भसमव
॥ २६ ॥ सर्वैकात्मशुद्धसविन्मयात्मक सत्वमेव ॥ तच्छ्रुतिप्रसिद्धमनापतनरपरवसन्स्थितोसि ॥ २७ ॥ यद्ब्रह्मेति ॥ आत्मेतितुर्यइत्यपिप्रसिद्धम्याश्वअविद्याप्रकृतिश्च

युक्त्यैवबोधयित्वैपजीवआत्मनियोज्यते॥ यपुक्त्यासाधतेकार्यंनतपशतैरपि॥१९॥ सर्वब्रह्मेतियोब्रूयादप्रबुद्धस्यकुमंते॥ सकरो
तिसुहृद्धस्यास्याणोद्यं खनिवेदनम्॥२०॥युक्त्याप्रबोध्यतेमूढःप्राज्ञस्तत्त्वेनबोध्यते॥ मूढ प्राज्ञत्वमायातिनयुक्त्याबोधनविना॥२१॥
एतावंतमबुद्धस्त्वकालंयुक्त्याप्रबोधित ॥इदानींसप्रबुद्धस्त्वमयापेनावबोध्यसे॥२२॥ब्रह्माहंत्रिजगद्ब्रह्मत्वंब्रह्मखलुदृश्यभू ॥ द्विती
याकलनानास्तियथेच्छसितयाकुरु॥२३॥ असंवेद्यमहासंवित्कोटिमात्रजगत्त्रयम्॥ एकप्रत्ययवानत कुर्वन्नपिनलिप्यसे॥२४॥
भारूपश्चेतनोव्यापीपरमात्माहमित्ययम्॥ राघवानुभवांतस्त्वतिष्ठन्गच्छंस्वसन्स्वपन ॥२५॥ निर्ममोनिरहंकारोबुद्धिमानसिसा
धुवेन्॥तद्ब्रह्मवेदनशांतमवभूतस्थितभव॥२६॥ तदनाद्यतमाभाससत्त्वमेवपरपदम् ॥ स्थितोसिसर्वगैकात्मशुद्धसविन्मयात्मक
॥२७॥ यद्ब्रह्मात्मातितुर्यश्चयाविद्याप्रकृतिश्चया॥ तदभिन्नसदैकात्मयथाकुंभशतेपुनभ्॥२८॥ नात्मनःप्रकृतिर्भिन्नाघटान्मृन्मयता
यथा॥ मन्मृन्मात्रयथावांतरात्मैवप्रकृति स्थिता॥२९॥ आवर्त्त सलिलस्येवय स्पंदस्त्वयमात्मन ॥ प्रोक्त प्रकृतिशब्देनतेनैवेहसए
वदि॥३०॥ यथैकःस्पंदपवनौनानाभिन्नौनसत्तया॥ तथैकमात्मप्रकृतीनानाभिन्नेनसत्तया॥३१॥ अबोधादेतयोर्भेदोबोधेनैवविं
लीयते॥ अबोधात्सन्मयोयातिरज्ज्वांसर्पभ्रमोयथा॥३२॥ चित्त्वेन्नेकलनायोर्जयदेतत्पततिस्फुरन्॥ चित्तांकुरलदेतस्माद्भावसंसा
रमंडक॥३३॥

भागाद्यक देनैवम मिद्धात्मत्वमभिन्नसम्बधैकात्मकमित्यथ ॥ २८ ॥ यथाघटस्यमृन्मयतासद्रात्मवम्मानतथाप्रकृतिरित्यथ ॥ २९ ॥ स्पंदोविवर्त्तनम ॥ तेनसम्बाध
मनाबनश्म बर्लमआत्मैवात्मनिताणुनाघमप्यन्यदित्यथ ॥ ३० ॥ सत्तयावस्तुत्वेन ॥ ३१ ॥ सन्मय सन्मात्र ॥ यानित्यपातरनिनिशेष ॥ ३२ ॥ तदेवचित्तांकुरतत्वा
न्मरन्भाविममारबनसारक.तपपनइत्यथ ॥ ३३ ॥

१ ब्रह्मब्रह्मदृश्यभूरित्यपिपाठः

एतत्कलनाबीजमेव ॥ ३४ ॥ नोपततिचेत्सुखदुःखफलाःशरीरद्रुमायेभ्यस्तथाविधाश्चित्तांकुरानजायते ॥ ३५ ॥ उपक्रांतमुपदेशरहस्यमुपसंहरति ॥ द्वित्वमिति ॥ हेराम जगतिअसत्भ्रांत्युपात्तद्वित्वजहिहित्यज ॥ आचहौइतिचकाराज्जहातेरि· ॥ यतस्त्वबोधमुपागतोसि ॥ आत्मैकभावलक्षणेननिरतिशयानंदविभवेनअभयात्माभव ॥ दुःखं तुकालत्रयेपिनास्त्येवेतिनःपरमार्थसारउपदेशइत्यर्थः ॥ ३६ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०एकोनपंचाशत्तमःसर्गः ॥ ४९ ॥ ॥ ७ ॥ ॥ इहकल्पनयाजीवलिंगपुर्यष्टकोद्भवः ॥ वर्णितोक्षीस्त्तथातस्यबाह्यार्थग्रहणक्रम· ॥ १ ॥ भिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाइतिश्रुतेस्तत्त्वसाक्षात्कारेणस्वयच्छिन्नसर्वसंशयोपिरामः

एतदेवात्मविज्ञानाद्दग्धंसद्वासनाजलैः॥संसिक्तमपियत्तेननभवत्यंकुरक्षमम्॥३४॥नोचेत्पततिचित्क्षेत्रेकलनाबीजकंततः॥चित्तांकुरानजायंतेसुखदुःखलवद्रुमाः॥३५॥द्वित्वंजगत्यसदुपात्तमबोधजातंबोधक्षयंजहिहिबोधमुपागतोसि॥आत्मैकभावविभवेनभवाभयात्मानास्त्येवदुःखमितिनःपरमार्थसारः॥३६॥ ॥इत्यार्षेवा०वा०दे०मोक्षोपायेषुनि०पू०संस्तुतिविचारयोगोनामएकोनपंचाशःसर्गः॥४९॥ ॥७॥ ॥श्रीरामउवाच॥ ॥ज्ञातंज्ञातव्यमखिलंदृष्टंद्रष्टव्यमक्षतम्॥परेणपरिपूर्णाःस्मोब्रह्मज्ञानामृतेनते॥१॥पूर्णात्पूर्णमिदंपूर्णंपूर्णात्पूर्णंप्रसूयते॥पूर्णेनापूरितंपूर्णंस्थितापूर्णेचपूर्णता॥२॥लीलयेदंतुपृच्छामिभूयोबोधाभिवृद्धये॥बालस्येवपिताब्रह्मन्नकोपंकर्त्तुमर्हसि॥३॥

परेषामुपकारायतत्संशयपदंप्रष्टुकामःप्रथमंस्वानुभवमभिलप्यदर्शयति ॥ ज्ञातमित्यादिना ॥ वयंतेत्वत्संबंधिनाब्रह्मज्ञानामृतेनपरिपूर्णाःस्म· ॥ १ ॥ स्वानुभवेन पूर्णमदःपूर्णमिदंपूर्णात्पूर्णमुदच्यते ॥ पूर्णस्यपूर्णमादायपूर्णमेवावशिष्यतइतिश्रुतिसंवादयति ॥पूर्णादिति॥ पूर्णाद्ब्रह्मणःसकाशादुपाधौप्रविश्यआनखाग्रात्पूर्णमिदंजीवरूपंपरमार्थत.पूर्णंब्रह्मैव यत·पूर्णाद्ब्रह्मयदादिक्रमेणप्रसूयतेव्यष्टिसमष्ट्युपाधिरूपतदपिपूर्णमेवप्रसूयते॥ तद्यदामहावाक्योत्थेनाहंब्रह्मास्मीतिज्ञानेनसमूलोपाधिपरिच्छेदापनयनात्पूर्णेनब्रह्मणापूर्णमेवजीवतत्त्वमखंडैक्येनापूरितंतदाकल्पितापूर्णताभ्रमस्यापगमात्पूर्णस्यपूर्णतैवप्राक्स्थितैवावस्थितेत्यर्थः ॥ २॥ भूयस्तोजनानांबोधाभिवृद्धयेबालस्यलीलाप्रश्ने।पितेवकोपंकर्त्तुंनार्हसि ॥ ३ ॥

अत्यल्पमिदमुच्यतेयद्गोलकातिरिक्तानींद्रियाणिनसंतीति यतःसम्यग्विमर्शेचिद्व्यतिरेकेणप्रमातृप्रमाणप्रमेयविभागाःकेपिननिरूपयितुंकेनापिवादिनाशक्यतइत्याशयेनवसि
ष्ठःप्रथमसमाधत्ते ॥ इंद्रियादीति ॥ ९ ॥ यदितुकल्पनयाद्रष्टुर्दृश्यस्यचोपपत्तिमन्यसेतर्हिइंद्रियादिघटितपुर्यष्टकत्वेनापिपूर्वपूर्ववासनानुसारेणकल्पनोपपत्तेर्नकिंचिदनुपपन्न
मित्याशयेनाह ॥ गगनादपीति ॥ तयाचिताआत्मनामायाशबलस्वभावेनपुर्यष्टकत्वेनस्वरूपभावद्रूपापूर्वपूर्ववासनानुसारेणभावितंकल्पितमित्यर्थः ॥ १० ॥ उक्तेर्थेमायां
तुप्रकृतिंविद्यान्मायिनंतुमहेश्वर अस्यावयवभूतैस्तुव्याप्तसर्वमिदंजगदितिश्रुतिप्रमाणयति ॥ तदेवचेति ॥ ११ ॥ एवंचेंद्रियद्वाराबहिर्निर्गतेनपुर्यष्टकघटकेनचित्तेनघटा
दिव्याप्यास्ववृत्तिप्रतिबिंबितघटादेर्बाह्यत्वाकारेणैवहृदयेनीत्वाप्रदर्शनंतथैवकालांतरेस्मृतिःस्वप्नेचांतर्गतस्यैवबाह्यत्वेनानुभवश्चेतिसर्वमुपपन्नमित्याशयेनाह ॥ पुर्यष्टकत्वमि

श्रीवसिष्ठउवाच॥ ॥इंद्रियाद्यपिचित्तादिघटाद्यपिनकिंचन॥ पृथक्संभवतीहांगनिर्मलाच्चेतनादृते ॥ ९ ॥ गगनादपियाऽच्छाचित्त
यारूपंस्वमात्मना ॥ चित्त्वात्पुर्यष्टकत्वेनभाववत्त्यैवभावितम्॥ १० ॥ तदेवचप्रकृतितांगतंजगदवास्थितेः ॥ तस्याअवयवाज्जातमिं
द्रियादिघटादिच ॥ ११ ॥ पुर्यष्टकत्वमायातंयच्चित्तंस्वस्वभावतः ॥ स्वएवावयवस्तस्मिन्घटादिप्रतिबिंबति ॥ १२ ॥ ॥ श्रीरामउवा
च॥ ॥जगत्सहस्रनिर्माणमहिम्नोदर्पणस्यच॥ पुर्यष्टकस्यभगवन्रूपंकथयकीदृशम्॥ १३ ॥ ॥श्रीवसिष्ठउवाच॥ ॥अनाद्यंतंजग
द्बीजंयद्ब्रह्मास्तिनिरामयम्॥ भारूपंशुद्धचिन्मात्रंकलाकलनवर्जितम्॥ १४ ॥ कलनोन्मुखतांयातमंतर्जीवइतिस्मृतः॥ सजीवःखलु
देहेस्मिंश्चिनोतिस्पंदतेस्फुटम्॥ १५ ॥

ति ॥ एवंरीत्यापुर्यष्टकत्वमायातंचिद्रूपंतत्स्वमेवपुर्यष्टकस्यचित्तादिघटितस्वभावतःस्वयमेवस्वःचित्तवृत्त्याख्योवयवोभवति तस्मिन्नवयवेघटादिवाह्यंबाह्याकारेणैवप्रतिबिंब
ति ॥ मृतदेहेतुपुर्यष्टकघटितस्यलिंगात्मनोजीवस्यस्वकल्पनयैवलीलोपाख्यानोपदर्शितरीत्यानिर्गमनान्नदर्शनादिसामर्थ्यमितिसर्वदोषपरिहारइतिभावः ॥ १२ ॥ यद्येवंत
र्हिपंचीकृतभूतभागेनजगदाकारेणपरिणमतोऽपंचीकृतभूतकार्यलिंगभागेनतत्प्रतिबिंबपदंदर्पणभूतस्यसपुर्यष्टकस्यैवकिंरूपंतदेवकथयेतिरामःपृच्छति ॥ जगदिति ॥ १३ ॥
तत्स्वरूपवक्तुंवसिष्ठस्तन्मूलमज्ञातब्रह्मतत्त्वंनिर्दिशति ॥ अनाद्यंतमिति ॥ १४ ॥ तद्ब्रह्मवियदादिभूतसूक्ष्मसंघातेनापंचीकृतेनलिंगपंचीकृतेनब्रह्मांडचसंघातदंतःप्रतिबिंबलक्ष
णकलनोन्मुखतायातसत्सूत्रप्राणानामभिमानेनधारणाज्जीवइतिस्मृतोऽभूदित्यर्थः ॥ चिनोतिवासनोपचयेनांगोपचयेनचोपचितोभवति उपचितश्चबाह्यांतर्व्यापारात्मनास्प
दतेचेत्यर्थः ॥ १५ ॥

सचाक्षस्यसबधश्चित्तेनसमन्वितस्यजीवतएवबाह्यार्थवेदनेकारकोभवतिनमृतस्यमुक्तस्यवेत्यर्थः ॥ २८ ॥ अस्तुबहिरेवतथापिकथमंतस्तदनुभवस्तत्राह ॥ यद्यदित्यादिना ॥ यद्यदत करणवृत्तिरूपनयनरश्मिरूपवास्वच्छतरवस्तुतस्मिन्बाह्यनभःस्थघटादिप्रतिबिंबतिसचप्रतिबिंबोवृत्त्यतर्गतेनजीवेनश्लिष्टोभवति ॥ तर्हिबहिष्ठएवाहघटमनुभवामीतिकुतोनानुभूयतेतत्राह ॥ बहिरिति ॥ यद्यपिबहिर्जीवोस्तितथाप्यसौबहिःअजीवतिप्राणान्नधारयति ॥ नञोनलोपश्छांदसः ॥ अनुव्यचलदितिवत्तिङंतोत्तरपदःसमासोवा॥ यत्रप्राणव्याप्तिस्तत्रैवाहंतावमर्शोनबहिरित्यर्थः ॥ २९ ॥ अस्त्वेवतर्हिघटेप्रथाफलोपपत्तिस्तथापिकथमंतर्देहादिघटाकारानुप्रवेशस्तत्राह ॥ निघृष्टेति ॥ यदानयनतारकेपटलादिदोषराहित्याच्छाणनिघृष्टनूतनेंद्रनीलाभेभवतस्तदातयोस्तारकयोर्घटप्रतिबिंबसहिताचित्तवृत्तिःप्रविशतीतिबाह्यगतोघटादिपदार्थःप्रतिबिंबतीत्युच्यते ॥ ३० ॥ सचैवनयनतारकानुप्रविष्टःपदार्थोहार्देनाहमभिमानवताजीवेनतद्देशप्रतिबिंबतयाश्लिष्टोभवतीत्यर्थः ॥ इतिअनयारीत्याघटादिबाह्यवस्तुबहिस्वभासमानमेवांतर्देहेअहंकारसंव

बाह्यार्थवेदनेनित्यंसंबंधोक्षस्यकारकः॥ समन्वितस्यचित्तेननमुक्तस्यकदाचन॥ २८॥ यद्यदच्छतरंतस्मिन्नभःस्थंप्रतिबिंबति॥ जीवेनभवतिश्लिष्टोबहिर्जीवोप्यजीवति॥ २९॥ निघृष्टनवरत्नाभेयदानयनतारके॥ तदातयोर्बाह्यगतःपदार्थःप्रतिबिंबति॥ ३०॥ जीवेनभवतिश्लिष्टःप्रतिबिंबतयाततः॥ जीवज्ञेयत्वमायातिबाह्यंवस्त्वितिराघव॥ ३१॥ यत्संश्लेपमुपायातितद्बालोपिहिविंदति॥ पशुर्वास्थावरोवापिजीवःकस्मान्नवेत्स्यति॥ ३२॥ अच्छस्यनयनस्याथोरश्मयोजीववेष्टिताः॥ क्रोडीकुर्वंत्यलंदृश्यंजीवस्तत्त्वेनविंदति॥ ३३॥ एषएवक्रमःस्पर्शेसंबंधःप्रत्ययोद्भवः ॥ रसेगंधेचकथितोजीवसंस्पर्शसंभवः॥ ३४ ॥ शब्दस्त्वाकाशनिष्ठत्वात्कर्णाकाशगतःक्षणात्॥ जीवाकाशंविशत्यंतरित्थमिंद्रियसंविदः॥ ३५॥ ॥श्रीरामउवाच॥ ॥ दृश्यतेमानसादर्शेयंत्रदार्वोदरेपुतत्॥ प्रतिबिंबितमेतन्मेब्रूहिब्रह्मन्किमात्मकम्॥ ३६॥

लितजीवज्ञेयत्वमायातीत्यर्थः ॥ ३१ ॥ चेतनस्यार्थसस्पर्शेवेदननियमोबालपश्वादिष्वपिप्रसिद्धइत्याह ॥ यदिति ॥ स्थावरेष्वपिगुल्मविशेषेस्पर्शमात्रेणपत्रसंपुटीकरणदर्शनात्तद्वेदनसर्वत्रानुमीयतइतिभावः ॥ ३२ ॥ दूरस्थविषयस्यकथंगोलकसंस्पर्शइतिपामरशंकामपाकुर्वन्नाह ॥ अच्छस्येति ॥ गोलकातिरिक्तस्यस्वच्छतमस्येंद्रियस्यरश्मयःप्रागुक्तरीत्याजीववेष्टिताःसंतःपुरोवर्तिविषयंक्रोडीकुर्वंत्यालिंगंति ॥ ३३ ॥ चक्षुष्युक्तक्रमस्पर्शादावप्यतिदिशति ॥ एषएवेति ॥ ३४ ॥ शब्देविशेषमाह ॥ शब्दस्त्विति ॥ शब्दस्यवृत्तिप्रतिबिंबनविनापिसाक्षाच्छ्रोत्रद्वारातःप्रवेशोपिसंभवतीतिभावः ॥ इत्थंगंधस्यापिपवनद्वारातःप्रवेशसंभवोऽस्तुनामेत्याशयेनयथासंभवमुक्तन्यायमुपसंहरति ॥ इत्थमिति ॥ ३५ ॥ इदानींरामःप्रसंगात्सर्वेषांप्रतिबिंबानांस्वरूपजिज्ञासुःपृच्छति ॥ दृश्यतइति ॥ यत्मानसानिचआदर्शाश्चतत्समाहारे काचकांस्यमणिजलादियंत्रदारूणामौदरेषुउदरान्निर्गतेषुनवपल्लवादिषुयत्प्रतिबिंबितघटमुखप्रभादिएतत्किमात्मकंतन्मेब्रूहीत्यर्थः ॥ ३६ ॥

यर्थविंबस्यसत्यत्वेपिचिद्यतिबिंबभूतयोर्व्यष्टिसमष्टिजीवयोर्विद्यानिरिकरूपभांतिमात्रसिद्धेनमिथ्यतुशक्य तभात्यतजडयोर्मुखदर्पणयोर्घटचित्तत्त्वयोर्वापरस्परसापेक्षप्रति बिंबरूपदुर्घटमितिकिंवाच्यमित्याशयेनोत्तरमाह ॥ अत्यंतेति ॥ दृशास्यैतस्यात्मनोभांतिसिद्धि ॥ ३७ ॥ नकेवलप्रतिबिंबमात्रभांतिरपितुजगदपीत्याह ॥ तावदिति ॥ अप्य र्थेतुशब्दः ॥ तावन्मात्रभांतिमात्रम् ॥ अतएवअतद्दृजगतिविश्वासोमास्तु ॥ अहमित्यादिप्रपंचतरंगस्थानीयश्चिज्जलात्पृथगसन्नित्यर्थ ॥ वर्त्तमानतुसदाचिज्जलमेवेत्य र्थ ॥ ३८ ॥ ३९ ॥ हेरामत्वंनित्यमसक्तमतिसन्शांतात्मासमस्तस्वखवेत्तीतिस्वसंविद्भिर्यस्यतथाविधश्चभूत्वासमस्ताभवलक्षणामयरूपामायायस्यत थाविधःसन्समतायांब्रह्मस्वभावेनिविष्टमतिस्तिष्ठेत्यर्थ ॥ ४० ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्य० प्रकाशेनिर्वाण० पू० पंचाशत्तमःसर्ग ॥ ५० ॥ ॥ ५ ॥ ॥ जीव

॥ श्रीवसिष्ठउवाच ॥ ॥ अत्यंतजडयोरेवजीवयोरिवतन्मिथः ॥ प्रतिबिंबदृशोभ्रांतिविद्धिवेद्यविदांवर ॥ ३७ ॥ तावन्मात्रजगत्त्वेतद्वि श्वासोमातवास्त्विह ॥ अहमित्यादिस्तरंगोवर्त्तमानंसदाजलम् ॥ ३८ ॥ परांभोधौतुनास्त्येवदेशकालक्रियादिकम् ॥ तन्मयैकतयानि त्यमात्मासर्वत्रसर्वग ॥ ३९ ॥ नित्यमसक्तमतिर्मुदितात्माशांतस्वपासुखदु खविदत ॥ तिष्ठनिविष्टमतिःसमतायामस्तसमस्तभवाम यमाय ॥ ४० ॥ ॥ इ० वा० वा० दे० मो० नि० पू० अक्षसंवेदनविचारयोगोपदेशोनामपंचाशत्तमःसर्ग ॥ ५० ॥ ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ नपुनर्भवत पूर्वसंपन्नाश्चक्षुरादय ॥ यथाकमलजस्यैतत्सर्वमेवत्वयाश्रुतम् ॥ १ ॥ ब्रह्मपुर्यष्टकस्यादावर्थसंवि दयोदिता ॥ पुर्यष्टकस्यसर्वस्यतथैवोदेतिसर्वदा ॥ २ ॥ विद्धिपुर्यष्टकजीवोयोगर्भस्थेंद्रियोदय ॥ यथयाभावयत्याशुतत्तयापरिपश्य ति ॥ ३ ॥ इंद्रियाणींद्रियार्थांश्चविद्धिसंवेदनंस्वकम् ॥ संपन्नंचयथातत्तेप्रोक्तमाद्यमन स्थितौ ॥ ४ ॥

त्वानिममोदेहःपुर्यष्टकमितिभ्रम ॥ अबोधावेशवशोपेतुमद्वैवैकमितीयते ॥ १ ॥ कलनोन्मुखतांयातमित्यादिनावर्णितमहंकारदेहेंद्रियादीनांवागसतांकल्पनजीवसमष्टेःपद्मज स्येवव्यष्टेस्तथापितुल्यमितितात्पर्यंत्वयाज्ञातमेवेतिवक्ष्यमाणोपोद्घातायप्रथममनुवदति ॥ नपुनरिति ॥ अप्यर्थेपुन शब्द ॥ कमलजस्येवप्रयतोपिसृष्टे पूर्वमनाद्यतमित्यादि वर्णितब्रह्मस्वभावेस्थितस्यचक्षुरादयोनसंपन्नाइत्येतत्सर्वमेवत्वयामद्वचनतात्पर्यंश्रुतमवधारितमित्यर्थ ॥ १ ॥ एवंपुर्यष्टककल्पनोत्तरमप्यसहायार्थकल्पनमपिसमष्टिवद्व्यष्टे रीमामित्याह ॥ ब्रह्मेति ॥ ब्रह्माहिरण्यगर्भःसमष्टिपुर्यष्टकजस्ययथासर्गादौव्यवहृतव्यार्थसंविदुदिताथासर्वस्यव्यष्टिपुर्यष्टकस्याप्युदेति ॥ २ ॥ तदेवगर्भस्थितिमारभ्यदर्शय ति ॥ विद्धीति ॥ योव्यष्टिजीवोगर्भस्थएवचक्षुरादींद्रियोदयविशिष्टःपुर्यष्टकात्मापञ्चमासिसंपद्यतेसतदारभ्ययथयाव्यवहर्तव्यंवस्तुभावयतितथातत्तयासमयापरिपश्यती त्यर्थ ॥ ३ ॥ एवंचआद्यमन स्थितौहिरण्यगर्भमनोव्यापारेयथातत्कर्तृत्वेनइंद्रियाणिइंद्रियार्थांश्चस्वसंवेदनंयथातत्तेतथापिव्यष्टेःसंपन्नमितिमयाप्रोक्तमितीत्यर्थः ॥ ४ ॥

वेद्यदोषात्तस्वेदनंतत् सर्गात्पूर्वसंभवतीव्यष्टिसमष्ट्योरैकैवशुद्धासंवित्ततस्तदनंतरंअहंवेदनालक्षणानतजीवपुर्यष्टकान्वितासास्तुतथापिसंवेदनस्वरूपमनिंदितमेवेत्यर्थः ॥ ५ ॥ वेद्यदोषात्तस्वेदनंतत् सर्गात्पूर्वसंभवतीव्यष्टिसमष्ट्योरेकैवशुद्धासंविन्ततस्तदनंतरंअहंवेदनालक्षणानतजीवपुर्यष्टकान्वितासास्तुतथापिसंवेदनस्वरूपमनिंदितमेवेत्यर्थः

कुनोननियतेइतिचेद्वेद्यस्यपरमार्थतोऽसत्त्वादित्याह ॥ नत्विति ॥ एकत्वादिहेतुभिरनामयेसवेदनेपरस्यतदन्यस्यास्तितासत्यतानत्वित्यन्वयः ॥ नास्तित्वेचअभावत्वादयस्त्रयो हेतवः ॥ अभावत्वादेशकालकृतपरिच्छेदवत्वादनेकत्वाद्वस्तुकृतपरिच्छेदवत्वादशून्यत्वात्स्थूलत्वाच्चेत्यर्थः ॥ ६ ॥ ननुसवेदनमेवमनस्तादिभावंगच्छतीत्युक्तेतत्रमनस्तादीना मसत्यत्वेसवेदनमेवासत्यंकिनस्यात्तत्राह ॥ चेत्यादीति ॥ चेत्यमतव्यादिगोचरबुद्धिवृत्त्यध्यारोपमात्रतन्नवास्तवमनस्ताप्राप्तिःसेत्यर्थः ॥ ७ ॥ तर्हिविद्याविलासाविर्भूतस्वरू

शुद्धासंवित्संभवंतीसंवेदनमनिंदितम् ॥ ततोहंवेदनानंतजीवपुर्यष्टकान्विता ॥ ५ ॥ नत्वेकत्वादनंतत्वादवेद्यत्वादनामये ॥ अभावत्वा दनेकत्वादशून्यत्वात्परास्थिता ॥ ६ ॥ चेत्यादिबुद्ध्यातत्किंचिन्नमनस्तांचगच्छति ॥ नचजीवत्वमायातिनचपुर्यष्टकात्मिका ॥ ७ ॥ नवि द्यादिविलासोस्तिसोस्तिनास्तीवयःसदा ॥ परमात्मेतिकथितोमनःषष्ठेंद्रियातिगः ॥ ८ ॥ तस्मात्संपद्यतेजीवश्चिन्मूर्तिर्मननात्मकः ॥ भ्रमःकेवलमित्याद्यउपदेशायगीयते ॥ ९ ॥ यतःकुतश्चित्संपन्नेत्वविद्यामयआमये ॥ उपदेश्योपदेशेनप्रविलीनेविचारणात् ॥ १० ॥ प्रशांतसकलाकारंज्ञानंतत्रावशिष्यते ॥ यत्राकाशमपिस्थूलमणाविवमहाचलः ॥ ११ ॥ यत्रोद्यदाचारमपिसदप्यसदिवस्थितम् ॥ जगज्जान्विपर्यास्यक्त्वाकायेत्वंतिष्ठनिर्मले ॥ १२ ॥ असन्मयमविद्यारूपमेवतदेवहि ॥ यद्वीक्षितासतीनूनंनश्यत्येवनदृश्यते ॥ १३ ॥ आलोकितंनामकथमवस्तुकिललभ्यते ॥ प्रयत्नेनापिसंप्राप्तंमृगतृष्णांबुकैरिव ॥ १४ ॥

पत्वात्पूर्वंतदप्यसत्किनस्यात्तत्राह ॥ नेति ॥ आदिपदाच्चरमप्रमाणमननादिपरिग्रहः ॥ योमूढैर्नास्तीवेतिकल्प्यतेसपरमात्मासदास्ति ॥ ८ ॥ यद्यद्वितीयएवसःतर्हितस्मात्सर्वए तआत्मानोव्युच्चरंतीतिश्रुत्याअग्निविस्फुलिंगन्यायेनजीवसपत्तिःकथमुक्तेतिचेदुपदेशायकल्पनयेत्याह ॥ तस्मादिति ॥ ९ ॥ अतएवाविद्यारोगस्यनमूलंचिंत्यंकिंतुचिकित्सै वचिंतनीयेति ॥ मूलकल्पनादिश्चिकित्सोपायएवनवास्तवइत्याह ॥ यतइति ॥ प्रविलीनेसतिस्वरूपज्ञानमेवावशिष्यतइतिपरेणान्वयः ॥ १० ॥ ११ ॥ उद्यदाचारंनिष्पद्य मानव्यवहारार्थक्रियाशालीतिसद्व्यावहारिकसत्यमप्यसच्छून्यमिवयत्रस्थिततत्रत्वजगज्जान्विषयास्त्यक्त्वानिर्मलेजीवन्मुक्तःकायेसत्येऽवतिष्ठ ॥ १२ ॥ इदानीमविद्यायाः स्वरूपमाह ॥ असन्मयमिति ॥ १३ ॥ मृगतृष्णांबुकैरिवसंप्राप्तदृष्टांतोप्यप्रसिद्धइत्यर्थः ॥ १४ ॥

असदेवसद्भातिपत असदज्ञानादेवास्यसत्यतेत्यन्वय ॥ १५ ॥ सत्यात्मन सन्निधानादत्यंतमसत्यायाअप्यविद्याया कल्पनाकल्पितेत्यर्थ ॥ १६ ॥ तस्यतेजीवस्योपदेशाय तस्या अविद्याया हेतोर्जीवादिकल्पमाकृता ॥ १७ ॥ आबोधनोन्मुखीवासार्थदर्शनोन्मुखासतीयथाभावयतीतिपरेणान्वय ॥ १८ ॥ बालेनसंभावितोयक्षकइवसत्यःअ सत्योवाभवतु अपतुपचतन्मात्रस्यपचीकरणात्मिकादिक्कलनासत्तयासत्यतयासंभावयतीत्युत्तरेणान्वयः ॥ १९ ॥ तथात्मनिदेहात्मनिरध्रान्इंद्रियद्वाराणि ॥ छांदसपुंस्त्वम् ॥ २ ॥ एभ्य पचतन्मात्रेभ्य परमार्थतोऽन्यदेवान्याभासमिंद्रियद्वारै पश्यति ॥ २१ ॥ तथइंद्रियमनःप्राणादिअंत ॥ इवपटादिवासम् ॥ भाववासनाम् ॥ २२ ॥ तथवि पर्येंद्रियसंयोगाभिव्यक्तस्वात्मसुखमेवविषयसुखतयासंभावयतीत्याह ॥ रश्मिजालमिति ॥ २३ ॥ एवस्वाभाविकस्वसंवेदनमेवविषयसन्निकर्षाज्जातमहंकारात्मनोधमइति

असदेवसदेवासदज्ञानादस्यसत्यता ॥ ज्ञानापयास्थितंवस्तुदृश्यतेनस्वतिभ्रम ॥ १५ ॥ अविद्यायाविचारोयजीवपुर्यष्टकादिका ॥ अप्यत्यतमसत्याया कल्पनाकल्पितात्मन ॥ १६ ॥ तस्यास्तउपदेशायसेयंजीवादिकल्पना ॥ कृताशास्त्रे प्रबोधायतांत्वमेकमनाःशृणु ॥ १७ ॥ जीवत्वमिवसंप्राप्तापुर्यष्टकपदस्थिता ॥ कलाकलककलिताचितिराबोधनोन्मुखी ॥ १८ ॥ यद्ययाभावयत्याशुतत्तयानुभवत्यलम् ॥ सत्योभवत्वसत्योवाबालेननिशियक्षक ॥ १९ ॥ पचतन्मात्रकलनासंभावयतिसत्तया ॥ तत्रात्मनितथारध्रान्पश्यतितथोदितान् ॥ २० ॥ एभ्यएवसमुत्पन्नंयद्धिस्थंभूतपंचकम् ॥ पश्यत्यनन्यदन्याभंशाखाशतमिवांकुर ॥ २१ ॥ इदमतरिदंबाह्यमितिनिश्चयवांस्तत ॥ जीवोभावययादत्तेतत्तथाप्रतियत्यय ॥ २२ ॥ रश्मिजालमिवेंदोर्यदात्मन प्रतिभासनम् ॥ बाह्यस्पर्शतयातेनतदेवाधूरीकृतम् ॥ २३ ॥ मरिचस्येवयत्तैक्ष्ण्यशून्यत्वमिवखस्ययत् ॥ आत्मनोवेदनयत्तदेवान्यदिवस्थितम् ॥ २४ ॥ अत्रैवनिश्चयंयत्वानियम सुदृढीकृत ॥ अनेनेत्यमनेनेत्थमाप्यमित्यवखंडितम् ॥ २५ ॥ स्वभावेतरनामासौस्वसकल्पमयात्मक ॥ कश्चित्कदाचिद्भवतिस्वभावेनैवनान्यथा ॥ २६ ॥ आत्मनैवेदमखिलसंपन्नंद्वैतमद्वयम् ॥ खंडोमधुरसेनेवसद्दैवचमहाघट ॥ २७ ॥ सन्निवेशविकारादिदेशकालादिसंभवात् ॥ संभवत्यत्रनत्वीशेदेशाकालाद्यसंभवात् ॥ २८ ॥

संभावयतीत्याह ॥ मरिचस्येति ॥ २४ ॥ अभमांसारिकविषयभोगेष्वेवपुरुषार्थपर्यवसाननिश्चययत्वाऐहलौकिकपारलौकिककर्माचरणनियम सुदृढीकृत ॥ अनेनलौकिककर्मणा ॥ अनेनवैदिककर्मणा ॥ अवखंडितमपरसुखमुद्दिश्येत्यर्थ ॥ २५ ॥ तथैकप्रवृत्तिनियम स्वाभाविकरागाविकृतइतरस्तुशास्त्रकृत ॥ द्विविधोप्ययसकल्पमयात्मकत्वयो कदाचित्कश्चिदेवस्वाभाविकपुरुषयत्नेनैवेतरजित्वाभवतिनान्यथेत्यर्थ ॥ २६ ॥ तथोभयभाप्यात्मैवस्वभावशास्त्राभ्यंतरानुसारीतत्तद्व्यापारसाधनफलात्मनाविवर्ततइत्याह ॥ आत्मनैवेति ॥ खंड मधुसारशर्कराविशेष ॥ २७ ॥ यद्यपिसंवपटोपूर्वतनमृदर्पिडावस्ययोर्विनाशाद्विकारीतथापिमाधुर्यंस्वरूपाविनाशात्तवंशोविवर्तवदीती महाप्रसंगविकार सभवतीतिधर्म्यादित्याह ॥ सन्निवेशेति ॥ अभमधुमराद्री ॥ ईशेप्रमाणि ॥ २८ ॥

अथवाखंडोमधुरसेनेवेतिवाक्येखंडोवनखंडः मधुरसेनवसंतद्रवेणेवेत्यर्थस्तथाचाविकारएववृक्षविकारहेतुर्जलभागोदृष्टांतइत्याशयेनाह॥ इतइति ॥ यथावृक्षप्रविष्टोरसोज लमित पत्रमित पुष्पमहमितिवैचित्र्येणोदित सन्अद्वित्वेपिद्वितांवहन्दृष्टस्तथानःस्वात्मनिप्रसिद्धसत्तारूपब्रह्मापिइत पटइत कुड्यमहमित्यादितोभेदात्सर्वजगदात्मनाआत्मनि द्वित्वमाहरद्विद्धीतिपरेणान्वय· ॥ २९ ॥ ३० ॥ यथावाअंभोदोमेघःअयग्रीष्मेअर्करुगेवाहमितितादूप्येणतिष्ठति ततआयवर्षारंभेवारिदानावसरेवारिदोहमितितिष्ठति ततोभू मिप्रवेशेनांकुरातर्जलात्मनाप्रवेशेअद्यांकुरोहमितितिष्ठति तथाआत्मापिकालभेदेनभावाभावाकारोभूत्वातिष्ठतीत्यर्थ· ॥३१॥ अयचजगद्विवर्त्तनियमक्रम कल्पितोपिनकेन चिदन्यथाकर्तुंशक्यइत्याह ॥ इतीति ॥ सर्वेश्वरेब्रह्मणिततप्रसिद्धम् ॥ ३२ ॥ एववस्तुस्वभावनियतिरपिवस्तुभेदभिन्नानान्यथाकर्त्तुंशक्येत्याशयेनाकाशादिस्वभावस्याज्ञात ब्रह्मस्वभावस्यचवैलक्षण्यमाह ॥ आदर्शेतिद्वाभ्याम् ॥ आदर्शवत्स्वच्छेआकाशेस्व स्वीयोभागःकार्यवानैवप्रतिबिंबति ॥ कुतः ॥ व्यतिरेकासंभवतःआकाशेआकाशकार्ये

इतःपुष्पमितःपत्रमहमित्युदितोयथा॥ खंडेस्वात्मनिनःसत्तारसोऽद्वित्वेद्वितांवहन्॥ २९ ॥ इतःपटइतःकुड्यमहमित्यादितस्तथा॥ सर्वात्मनात्मनिब्रह्मविद्धित्वंद्वित्वमाहरत्॥ ३० ॥ अद्यांकुरोहमद्यार्करुगहंत्वद्यवारिदः॥ यथेतितिष्ठत्यंभोदस्तथात्मासदसद्वपुः॥ ३१ ॥ इति भाव्यमनेनेदमित्थंसर्वेश्वरेततम्॥ क्रमंखंडयितुंलोकेकस्यनामास्तिशक्तता ॥ ३२ ॥ आदर्शस्वच्छआकाशेनैवस्वःप्रतिबिंबति॥ व्यतिरेकासंभवतःकचत्येवहिकेवलम्॥ ३३ ॥ ब्रह्मणित्वात्मनात्मैवस्थितःकचतिबिंबति॥ द्वैतीभवत्यदेहोपिचिन्मयत्वात्स्वभावतः॥ ३४ ॥ यद्यथैवात्मकचनंवेत्तितंभवतात्मना॥ असत्यमपितन्नेहव्यभिचारीकदाचन॥ ३५ ॥ हेमत्वकटकत्वेद्वेसत्यासत्यस्वरूपिणी॥ हेम्निभांडगतेयद्वच्चित्वाचित्त्वेतथात्मनि॥ ३६ ॥ सर्वगत्वाच्चितेश्चित्त्वंनित्यंमनसिविद्यते॥ हेमत्वंकटकस्येवजडभावःस्थितोन्यदा॥ ३७ ॥ चित्त्वजाड्यात्मकंचित्तंदृढंभावयतिस्वयम्॥ यथायदैवयद्भावंतथाभवतितत्तदा॥ ३८ ॥ कालेकालेचिताजीवस्त्वन्योन्योभवतिस्वयम्॥ भाविताकारवानंतर्वासनाकलिकोदयात्॥ ३९ ॥

भूतांतरेवाआकाशभेदाभावात् ॥ किंतुकेवलमाकाशनिष्प्रतिबिंबदर्पणोदरवत्स्वच्छतयाकचतिदीप्यतएवेत्यर्थ· ॥ ३३ ॥ साविद्यंब्रह्मतुनतथेत्याह ॥ ब्रह्मणीति ॥ कचतिसर्ववस्तुशक्त्यादिरूपेणदीप्यते ॥ जीवरूपेणप्रतिबिंबति ॥ भेदकल्पनयाचद्वैतीभवति ॥ ३४ ॥ अस्त्वेवंकिंततस्तत्राह ॥ यदिति ॥ तत्रसर्गादौयद्वस्तुस्वभावेनात्मकचनवृत्तंतंस्वभावमसत्यमपिभवतासत्येनात्मनासत्यंवेत्तिसचनियमोनकदाचनव्यभिचारीतिसर्वापिनियतिःसिद्धेत्यर्थ· ॥ ३५ ॥ सत्यानृतमिथुनीभावेवाचारंभणश्रुतिदर्शितन्यायेनदृष्टांतमाह ॥ हेमत्वेति ॥ ३६ ॥ अतएवप्रथमकार्येमनसिचिज्जडोभयरूपतादृश्यतेतत्रयन्नित्यंतत्सत्यमित्याह ॥ सर्वगत्वादिति ॥ अन्यदाकदाचिदित्यर्थः ॥ ३७ ॥ चित्तजाड्येतिपाठेचित्तस्यजाड्यजडदेहविषयाकारस्तदात्मकचित्तदृढभावनयायदैवयथादेवनरस्थावरादिनायेनप्रकारेणयदायद्भावभवतितदातथैवतद्भावभवतिअनुभवतीत्यर्थः ॥ ३८ ॥ अतएवकालभेदेनजीवस्याहमाकारभेदानुभवइत्याह ॥ कालइति ॥ चिताअंतर्वासनाकलिकानामुदयाद्विकासाद्वैचित्र्येणभाविताकारवान्सन्अन्योऽन्योभवति ॥ ३९ ॥

यथास्वप्नदृष्टोग्रामोवनादिसत्तान्यतेक्षणाद्धनादिभावयातितथादेहभूतोयंजीवोपिदेहाद्देहांतरभावयाति ॥ यत स्वप्नवदेवप्रतिभासात्मकइत्यर्थः ॥ ४०॥ यथास्वप्नेप्रतिभासत
इतिप्रतिभासोदृश्यमानोनरोघटितिकुड्यभूत्वापटोभवेत्तथामरणमूर्छायामपिप्रतिभासमानमिवदेहांतरभवतीत्यर्थः ॥४१॥ नन्वयंदेह सत्यस्तर्हियनेदसतेपसकथंदेहांतरभवेत्त
त्राह॥ असत्यमेवेति ॥ मरणजननादिकमपिमर्तुःप्रातिभासिकमेव जीवतांतुतद्देहस्यवाह्यादिदर्शनंस्वाविद्याकल्पितस्यैवनतद्वासनामयस्येतिभावः ॥ स्वस्याम्यरूपवद्देहांतरसवि
त्यथ ॥४२॥ तर्हिकियीयनपार्थक्यवद्देहांतरमप्येतद्देहस्यकालिकःपरिणामोनेत्याह ॥ कालेनेति ॥ एतादृशमेतद्देहरूपकालेनअन्यत्वद्देहांतरभावएतीतिन यतःप्रकृतमिदश
रीरमान्यापवस्थाभेदेपितदेवेदमितिप्रत्यभिज्ञानिश्चयारूढम्॥ एतेभूतभाविदेहास्तुन प्रत्यभिज्ञानाभावादन्येनान्येसंतिनसंतीत्यादिभ्रांतिगच्छंतिअतस्तेपास्वतोजीवतएवभवो
वासनयासमद्भवइत्यथ॥४३॥ ननुकदापिजागदृष्टेदेशादिशारीरभावेकास्यवासनातत्राह ॥वस्त्विति॥ इदंतुजगद्रूपजीवस्वप्नेंतर्गतविद्धि ॥ तस्यभयप्रावसथाद्वय स्वप्नाइतिश्रुते

स्वप्नेदृष्टोयथाग्रामोयातिसत्तान्यतेक्षणात्॥ देहादेहतयायातिदेहोयंप्रतिभात्मकः ॥ ४० ॥ प्रतिभासोयथास्वप्नेनर कुड्यपटोभवेत् ॥
भवत्यसत्यमेवेदंदेहांतरमिदंस्वत ॥४१॥ असत्यमेवम्रियतेत्वसत्यंजायतेपुन ॥ जीव स्वप्रतिभासेनस्वप्नवत्स्वान्यरूपवत्॥ ४२॥का
लेनैतादृशंरूपमिदनान्यत्वमेतिवै ॥ प्रकृतंनिश्चयारूढभ्रमत्येतेभव स्वत ॥४३॥ वस्तुदृष्टमदृष्टंचस्वप्नेसमनुभूयते॥ जीवस्वप्नेजगद्रूप
विद्धिवेद्यविदांवर॥४४॥ अजाग्रद्दृष्टिदृष्टोय स्वाभिधानादिनेरित ॥नस्वप्नोविद्यतेतस्मादच्छात्माचितिमात्रकम्॥४५॥ अथापूर्वा
भिधस्वप्नेयथापश्यतिनान्यथा॥ अग्रदृष्टंतथैवार्थंचेतनश्चित्प्रपश्यति॥४६॥ प्राक्तनीवासनाद्यापिपौरुषेणावजीयते॥ त्य कुकर्माघ
यत्नेनप्रयातिहिसुकर्मताम्॥४७॥ मोक्षादृतेनशाम्यंतिजीवतांचक्षुरादय ॥उन्मज्जतिनिमज्जतिकेवलदेशकालत ॥४८॥

रित्यथ ॥ इदंतुस्वप्नेअननुभूतस्यापिदर्शनमिहजन्मन्यननुभूताभिप्रायेण ॥ दृष्टंचादृष्टंचश्रुतंचाश्रुतंचानुभूतंचाननुभूतंचसर्वंपश्यतीतिश्रुतिमवलम्ब्योक्तम् ॥ वस्तुतस्त्वनादीस
चारेनाननुभूतंकिंचिदस्तीतिमरणकालेभाविदेहारंभककर्मोद्बोधितवासनानुसारेणैवदेहांतरोद्भवदृतिभावोध्यम् ॥४४॥तर्हिवाक्यजन्यब्रह्मसाक्षात्कारलभ्यब्रह्मभावोपिदेहांतरव
द्वासनामय स्वप्नएवकिनस्यात्तत्राह॥ अजाग्रदिति॥ य शिवमद्वैतंचतुर्थंमन्यतइतिस्वाभिधानादिनाईरित अजाग्रद्रूपस्यातुरीययादृष्ट परमात्मातस्यउक्तलक्षणस्त्रिविध स्वप्नए
वनविद्यतेजाग्रतिकदापितदनुभवाभावेनतद्वासनाऽप्रसिद्धेस्तस्यवासनामयत्वायोगात्तस्मात्स्वच्छात्माचैतन्यमात्रमित्यर्थः ॥४५॥ सएवचिदात्माचेतनजीवोभूत्वाअपूर्वमपू
र्वाभिधमभिनवंपत्तमानमर्थंयथापित्स्वभावादेवपश्यतिनान्यथातथैवापेदृष्टमप्यर्थंप्रपश्यतीत्यर्थः ॥ ४६ ॥ अतएवादृष्टविषयेपिभावनाप्रचयेनदृढीकृतवासनापूर्वदृष्टविष
यावामनोभवतीतिपुरुषप्रयत्नप्राबल्यंप्रदर्शितमित्याह ॥ प्राक्तनीति॥ ४७ ॥ एवजीवस्यवासनापरिणतिलक्षणोदेहादिप्रभोदर्शित इदानींकदातन्निवृत्तिरितिवांछायामाह ॥
मोक्षादिति ॥ ४८ ॥

मोक्षंविनैवदेहादिनिवृत्तिः किंनस्यात्तत्राह ॥ चितइति ॥ यतश्चितोयावन्मोक्षदेहाकारकलनावासनातिष्ठत्येव॥स्वकलनैवैतस्यजीवस्यपंचात्मादेहोऽग्रेतिष्ठतीव ॥ यथाशिशो
र्भावितोमहायक्षोग्रेतिष्ठतितद्वद्दुर्निवारइत्यर्थः ॥४९॥ इदानीकथंचित्स्थूलदेहनिवारणेपिमोक्षंविनालिंगदेहलक्षणपुर्यष्टकंदुर्निवारमित्याशयेनतद्दर्शयति ॥ मनइति॥५०॥
ननुशास्त्रेज्ञानेंद्रियकर्मेंद्रियप्राणाभूतानिअंतःकरणमविद्याकामकर्माणिपुर्यष्टकमित्युक्ततत्तुपंचीकृताकाशवाय्वादिलिंगघटितस्थूलांतमूर्त्तरूपमपिस्यात्तत्कथममूर्त्तमनोबु
द्ध्याद्यष्टकमेवपुर्यष्टकमुक्तंतत्राह ॥ अमूर्त्तएवेति ॥ त्वदुक्तमूर्तपुर्यष्टकंतदास्याद्यदिपंचीकरणेनामूर्त्तानांतन्मात्राणांस्थौल्यंस्यात् ॥ अयंतुतन्मात्ररूपोलिंगात्माअमूर्तएव ॥
अस्यखल्वपंचीकृताकाशत्वमतिपीनतानिरवधिकस्थौल्यंतच्चनसंभवति नह्यमूर्त्तवासनाकोटीनामपिमेलनेस्थौल्यंदृष्टंयदास्यखत्वमेवदुर्लभंतदास्थूलवाततामहान्गुल्मोवृक्ष
इवात्यंतमसंभाविता ॥ एवंस्थूलतेजोजलपृथ्वीतापि ॥ एवंचस्थूलभूतानामेवासंभवेअस्यपरमाणोरप्यतिसूक्ष्मस्यदेहतासुमेरुतेवात्यंतासंभाविततिनभौतिकदेहांतपुर्यष्टकंव

चितःस्वकलनात्तस्यदेहोग्रइवतिष्ठति॥ पंचात्माभावितोसत्योमहायक्षःशिशोरिव॥ ४९॥ मनोबुद्धिरहंकारस्तथातन्मात्रपंचकम्॥
इतिपुर्यष्टकंप्रोक्तंदेहोसावातिवाहिकः॥ ५० ॥ अमूर्त्तएवचित्तात्माखत्वमस्यातिपीनता॥ वाततास्यमहागुल्मोदेहतास्यसुमेरुता
॥५१॥ विरजस्त्वक्रमेणैवनिरवस्थस्तुमुक्तिभाक्॥ सुषुप्तैकावस्थास्यजडाःक्रोडीकृतायया॥ ५२॥ स्वप्नताग्नीतथावस्थादेहप्रत्यय
शालिनी॥ आमोक्षंभ्रमतीहायमितिस्थावरजंगमैः॥ ५३ ॥ कदाचिद्धिसुषुप्तस्थःकदाचित्स्वप्नवत्स्थितः॥ आतिवाहिकदेहोयंसर्व
स्यैवावतिष्ठते॥५४॥ यदासुषुप्तभावस्थोभाविदुःस्वप्नवेधितः॥ तदाकालानलसमस्तिष्ठत्यनुदिताकृतिः॥ ५५॥

र्यंतइत्यर्थः ॥ ५१ ॥ मुक्त्यनुपयोगादपिनमोक्षशास्त्रेत्रस्थूलसद्भावकल्पनायुक्तेत्याशयेनाह ॥ विरजस्त्वेति ॥ मनोमात्रमेवदेहादिप्रपंचश्चेन्मनसोवैराग्याद्यभ्यासेनविरज
स्त्वेशमादिसाधनसंपत्त्यावाक्याज्ज्ञानोदयक्रमेणमनःकल्पितस्वप्नप्रायप्रपंचस्यतन्मूलाज्ञानस्यचबाधेस्वकार्यकारणावस्थावधद्वयशून्यस्यमुक्तिरुपपद्यते ॥ स्थूलभूतभौतिक
मूर्त्तप्रपंचाभ्युपगमेतुतादृशस्यज्ञानेनबाधादर्शनान्नमुक्तिरुपपद्यतइत्यर्थः ॥ एवंचनिष्कर्षेस्वप्नसुषुप्तीद्वेएवावस्थेनजाग्रन्नाम्नीस्थूलविषयाअन्याअवस्थाकेनचिदुपपादयितु
शक्येत्याशयेनतेविभज्यदर्शयति ॥ सुषुप्ततेतिसार्धेन ॥ ययाजडाःसर्वदेहादिप्रपंचावासनात्मनोपसहृत्यक्रोडीकृताः ॥ ५२ ॥ इतिएवंपरिदृश्यमानप्रकारेणस्थावरजंगमैरा
कारैरातिवाहिकदेहएवआमोक्षाद्भ्रमतीत्यर्थः ॥ ५३ ॥ ५४ ॥ भाविभिर्दुःस्वप्नैर्वासनात्मनांतःप्रविष्टैर्वेधितोविद्धइवगतस्मृतिरतएवानुदिताकृतिश्चित्प्रतिबिंबखचितत्वादुपसं
हृतजगत्त्वाच्चकालानलसमोदीप्तस्तिष्ठति ॥ अनेनातज्ज्ञानशून्यनैयायिकादिसुषुप्तिःप्रत्युक्ता ॥ ५५ ॥

नभस्यावरादिनिकृष्टावस्थासुजाड्याधिक्यात्सुषुप्तिप्राप्युयमित्याह ॥ स्थावराद्यास्विति ॥ अप्यर्थेचशब्द ॥ तथापकल्पवृक्षाणांपुण्याधिक्यात्कृमिकीटसुतृणादिषु स्वाभा
वादाजडाधिक्येपिनमनुष्यादिषबोधोस्तीतिनमस्त्वितैवेत्यर्थ ॥ ५६ ॥ तथापिचित्तजाड्यप्रकर्षएवसुषुप्तिश्चित्तभ्रमणमेवसग्रतिश्चित्तस्यतत्स्वबोधएवबन्धमुक्तिस्तुयतैवास्य
जाग्रदितिपर्यवसन्नमित्याह ॥ सुषुप्ततेत्यादिना ॥ ५७ ॥ ५८ ॥ ५९ ॥ प्रबोध उत्कृष्टविम्बाभ्रमस्वरूपोभवति ॥ सचबोधोबुद्धे पुरुषप्रयत्नत ॥ ६० ॥ तत्त्वतोयावान्यश्चेति
ज्ञातप्रमाणोजीव सर्वांतर्योजानातिभासयतिसाक्षीतन्मयएवभवतीत्यर्थ ॥ यस्त्वज्ञातप्रमाणःसोपिपरमार्थत स्वस्यएवाज्ञानाच्छिलावद्दृढीकृतेस्वहृदयेसुदीर्घस्वप्नविभ्रमती
प्रभयपश्यतीतिपरेणान्वय ॥ ६१ ॥ तर्हिकिंजीवानांहृदयेपाषाणवत्प्रमयमस्तिनेत्याह ॥ जीवानामित्यादिना ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ अस्यजीवाणो सोपुप्तीस्थितिर्वा

स्थावराद्यास्ववस्थासुकल्पवृक्षदशासुच ॥ भवत्येवसुषुप्तस्योघनमोहशिलाघन ॥५६॥ सुषुप्ततास्यजडताश्वभ्रोत्येयंहिसस्वृति ॥ य
प्रबोधोस्यसामुक्तिस्तज्जाग्रत्ताततुर्यता ॥५७॥ जीवप्रबोधान्मुक्तिर्हिप्रबोधात्परमात्मताम् ॥ सोभ्येतिक्षालितमलतामंकनकतामिव
॥५८॥ जीवप्रबोधान्मुक्तिर्यासाचद्विविधोच्यते ॥ एकाजीवन्मुक्ततेतिद्वितीयादेहमुक्तता ॥ ५९ ॥ जीवन्मुक्तिर्हितुर्यत्वंतुर्यातीतपदंत
त ॥ बोधोजीव प्रबोधोयसचबुद्धिप्रयत्नत ॥६०॥ ज्ञातप्रमाणजीवोंतर्योजानातीहतन्मय ॥ पश्यतीमभ्रयचैवसुदीर्घस्वप्नविभ्रम
म् ॥ ६१ ॥ मिथ्योदित स्वहृदयेस्वस्यएवशिलीकृते ॥ जीवानामंतरेत्वन्यन्नकिंचिच्चित्कलांविना ॥६२॥ तामेवान्यतयापश्यन्मुधैवप
रिशोचति ॥ जीवाणोरंतरेत्वन्यन्नकिंचित्परमार्हते ॥ ६३ ॥ यत्रतत्रजगद्दृष्टमहोमायाविजृम्भितम् ॥ स्याल्पतःक्वयदवूर्नांयथानाना
भ्रमोदय ॥६४॥ जीवाणूनांतथैवांतर्मिथ्याससरणोदय ॥ बधोस्यवासनाबंधोमोक्ष स्याद्वासनालय ॥ ६५ ॥ वासनांतास्यसोपु
प्तीस्वप्नेविस्फुरतिस्थिति ॥ घनवासनमोहोयजीव स्थावरतादिभाक् ॥६६॥ मध्यस्थवासनस्तिर्यक्पुरुषस्तनुवासन ॥ यदांतर्जीवि
तेनांतोनहिजातापटादय ॥६७॥ जीवैक्यादुभयो सत्ताग्राह्यग्राहकयोस्तदा ॥ आत्मानात्मसमालीढोबहिरंतर्यदाञ्चिता ॥६८॥

सनानामंतोऽवधि ॥ तुर्यंतुर्यातीतयोर्निर्वासनत्वात् ॥ सचस्वमेस्फुरतिवैचित्र्येणस्फुटीभवतीत्यर्थ ॥ कथस्फुटीभवतितत्राह ॥ घनेति ॥ ६६ ॥ तस्यवासनासुधोत्कर्षादुत्त
रोत्तरगुणयोनिप्राप्तिरित्याह ॥ मध्यस्थेति ॥ पुरुषोमनुष्यगंधर्वदेवगंधर्वादि ॥ वासनानांक्षयतारतम्येनवैचित्र्यस्फुटोभावमुक्तावासप्रहणादिवैचित्र्येणापितमाह ॥ यदेत्या
दिना ॥ यदायस्मिन्सुषुप्तिविच्युतिकालेदेहांत आनस्वापव्याप्तमाणाद्भावलक्षणनजीवितेनएतावानेवहपरिमितएवाहमित्यंत परिच्छेदोजभवतितदापटादय पदार्थाबहिर्जाता
सपन्ना ॥ ६७ ॥ संनुबहि क्वितत्राह ॥ जीवैक्यादिति ॥ तदाचक्षुरादिद्वारनिर्गतांत करणद्वारानिर्गतेनचस्वयवच्छिन्नजीवेनपटादीनाव्याप्तौघटमहंजानामीतिप्रासपाहक
योर्वासनात्मिकासत्तातत्तद्वैचित्र्येणस्फुटीभवतीत्यर्थ ॥ एतदेवस्पष्टमाह ॥ आत्मेति ॥ अत स्थितआत्माजीवोयदाबहिरनात्मसमालीढोभवतितदाचिताभासव्याहकवासना
मगवृष्णेवाप्यस्तविभागेनसोदयाउदेतीत्यर्थ ॥ ६८ ॥

प्रत्यग्दृष्टेरन्यासुपराग्दृष्टिषुयाएतारुद्रादिब्रह्मांडांता.शतमसंख्या कलना.प्रतिभासास्ताएताःसर्वप्राणिप्रत्यक्षास्तस्यादित्यस्यदीप्तयोरश्मयः ॥ १७ ॥ मयाचिदात्माइतिएव प्रभाव सूर्यइतित्वत्प्रश्नोत्तरत्वेनोक्तएतत्सर्वंजगदसौतपतिप्रकाशयति ॥ १८ ॥ भुवनाभोगाब्रह्मांडाः ॥ १९ ॥ भातिस्फूर्तिलभते ॥ भवतिसत्ताचलभते ॥ २० ॥ रेवेताल वर्णितशबलब्रह्मलक्षणस्यत्रैलोक्यमंडपमणे.सूर्यस्यपारमार्थिकतत्त्वभूतेमुख्याधिकारिषुविज्ञानशास्त्रजन्याखंडाकारसाक्षात्कारस्तन्मात्रेणकचितात्मनिस्वात्मतयाप्रथमाने अनधिकारिजंतुमात्रेतुअविकासभाजिअस्फुटेइहप्रत्यगात्मनिअग्निविस्फुलिंगवच्चिज्जन्मनोर्जीवजगतोर्भवनस्यपृथक्सत्तायाःकर्तृत्वभोक्तृत्वाद्यनंतसंभ्रमतानाचावलेखाः उल्लेखाःसंति ॥ परमार्थदृशातुमनागपिनसंति अतस्त्वंशांतप्रश्नाडंबरमास्वेत्यर्थः ॥२१॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०एकसप्ततितमःसर्गः ॥ ७१ ॥ ॥ ७ ॥ इहावसिष्टप्रश्नानापचानामुत्तरक्रमात् ॥ वेतालायाप्रमत्तायराज्ञागम्यगुदीर्यते ॥ १ ॥ एवंप्रथमप्रश्नसमाधायकस्मिन्स्फुरंतिपवनेमहागगनरेणवइतिद्वितीयप्रश्नंराजासमाध

तादृशोस्तिमहादित्यःशतमन्यासुदृष्टिषु ॥ याएताःकलनाःसर्वास्ताएतास्तस्यदीप्तयः ॥१७॥ अस्यादित्यस्यदीप्तीनांब्रह्मांडास्त्रसरेणवः ॥ मयाचित्सूर्यइत्युक्तःसर्वमेतत्तपत्यसौ ॥१८॥ विज्ञानात्मैवपरमोभास्करोभाविताशयः ॥ इमेयेभुवनाभोगास्तस्यैवत्रसरेणवः ॥१९॥ विज्ञानपरमार्कस्यभासाभांतिभवंतिच ॥ इमाजगदहर्लक्ष्म्यःक्वचिल्लक्ष्म्योरवेरिव ॥ २० ॥ विज्ञानमात्रकचितात्मनिजंतुजातेत्रैलोक्यमंडपमणेरविकासभाजि ॥ चिज्जन्मनोर्भवनसंभ्रमतावलेखाःसंतीहरेनहिमनागपिशांतमास्व ॥ २१ ॥ ॥इ०वा०वा०दे० मोक्षोपायेषुनिर्वाणप्रकरणेपू०वेतालप्रथमप्रश्नोत्तरवर्णनंनामैकसप्ततितमःसर्गः ॥ ७१ ॥ ॥ ७ ॥ ॥राजोवाच॥ ॥कालसत्तानभःसत्तास्पंदसत्ताचचिन्मयी ॥ शुद्धचेतनसत्ताचसर्वमित्यादिपावनम् ॥ १ ॥ परमात्ममहावायौरजःस्फुरतिचंचलम् ॥ कुसुमांगइवामोदस्तदतद्रूपकंस्वतः ॥ २ ॥

त्ते ॥ कालसत्तेत्यादिना ॥ तत्रगगनपदेनप्रसिद्धगगनस्यैवग्रहणविवक्षितमुतमहत्पदविशेषितत्वाद्रौण्यामहाकालरूपश्चित्संवलितमायाकाशउतस्पंदशक्तिप्रधानःसूत्रात्माकाशःउतततोनिष्कृष्ट.शुद्धचिदाभासलक्षणोजीवाकाश.अन्योवास्तुसर्वेष्वपिकल्पेषुतत्तत्सत्ताएवसूक्ष्मतमत्वात्तेषारेणवस्त्वयोक्ताइत्याह ॥ कालसत्तेति ॥ स्पंदःक्रियाशक्तिप्रधानःसूत्रात्मातत्सत्ता ॥ शुद्धचेतनस्ततोनिष्कृष्टश्चिदाभासस्तत्सत्ताचेत्यादिसर्वंसूक्ष्मत्वात्पावननिर्दोषरज.परमात्ममहावायौकल्पितानेकविकारैश्चंचलस्फुरतीतिपरेणान्वय ॥ १ ॥ ननुपरमात्मनएवसर्वानुगतसत्तारूपत्वात्तत्रकालादिसत्तास्फुरतीत्याधाराधेयभावेनव्यपदेशःकथंतत्राह ॥ कुसुमांगइति ॥ यथाकुसुममेवस्वांगेआमोदाख्यंभेदस्वतएवपरिकल्प्यकुसुमेआमोदरूपकमिवतदाधेयतयास्थिततद्वत्परमार्थसत्त्वैवकालादिसत्ताभेदात्मतांस्वात्मनिपरिकल्प्यस्थितेत्यर्थः ॥ २ ॥

१ कुसुमरूपकमिवेत्यपिपाठः

स्वमात्मस्वमांतरंगच्छन्नित्यादितृतीयप्रश्नस्योत्तरमाह ॥ जगदाख्येदंति ॥ शांतमशांतमस्तस्वमदोषमसगज्योतीरूपम् ॥ अतएवतथाबोधमात्राद्ब्रह्मशांतत्वबृंहणम् ॥ ३ ॥ र
भासभाययापममात्ममितिचतुर्थप्रश्नसमाधत्ते ॥ रभासभइति ॥ अत अतःब्रह्मणिविवर्तितविपत्तनशील अपिशब्दात्प्रमातरकारणेषुपरिणामशीलच अत सोणुस्ततोप्यतर
मं'त्यथ ॥ ४ ॥ विपत्तजगदृहणादिनिमित्तोपसत्तद्ब्रह्मात्मादिशब्दगोचरतानतुवस्तुनःसर्वधर्मशून्यत्वादित्याह ॥ सद्ब्रह्मेति ॥ ५ ॥ अतएवपटसत्तातनुसत्तायांपयवस्यतितनु
सत्ताकापासतन्तोसाचतकलसत्तायांसागूलमसत्तायांसाबीजसजलादिसत्तायामित्यादिक्रमेणयायासत्ताविभाव्यतेसासातत्तदनुभवनिर्मितानाकारान्विहायरभासंभ
वदनतदनुभवरूपचिन्मात्रपयमस्यतीत्यमलइशमलजगदाकारणततमिस्तृतमित्यर्थ ॥ ६ ॥ तत्माणुपदप्रवृत्तौनिमित्तमाह ॥ सूक्ष्मत्वादिति ॥ एवसौक्ष्म्यपिनपूर्णताहानि
रिनिप्रसंगारयापितद्वत्स्यात्अनिपरिच्छिन्नत्वात्परमाणमायादनिमज्जादाकाशपूर्णमात्यादिपचमप्रश्नापिदत्तोत्तर सदत्तइत्याशयेनाह ॥ अनंतत्वादिति ॥ मेघादिपदनप्रश्नो

जगदाख्यमहास्वप्नस्वप्नात्स्वप्नांतरंव्रजन् ॥ रूपत्यजतिनोशांतंब्रह्मशांतत्वबृंहणम् ॥ ३ ॥ रभासंभोयथापत्रमात्रमेवातरांतरम् ॥ अ
तरंतस्त्थदहिवि-न्वयस्ञविवरयपि ॥ ४ ॥ सद्ब्रह्मात्मादिभि शब्दैर्यदतामिर्विगीयते ॥ शून्यमप्यपदंशतननतत्किंचिच्चकिंचन ॥५॥ याया
विभाव्यतेसत्तामासानुभवनिर्मितान् ॥ रभासंभवदंतावच्चिन्मात्रममलततम् ॥ ६ ॥ सूक्ष्मत्वादप्यलभ्यत्वात्परमात्मापराणुक ॥
अनंतत्वादसावेवभासामेवादिमूलताम् ॥ ७ ॥ अणोरप्यत्यनंतस्यपुंसोस्यजगदाद्यपि ॥ परमाणुवदाभातिप्रतीतत्वादरूपवत् ॥ ८ ॥
परोणुरपोऽलभ्यत्वात्पूरकत्वान्महागिरि ॥ सर्वावयवरूपोपिनिरस्तावयवःपुमान् ॥ ९ ॥ अस्यवैज्ञप्तिमात्रस्यमज्जामात्रजगत्त्रयी ॥
विज्ञानमात्रमप्येहिमाधोविद्धिजगत्त्रयम् ॥ १० ॥ विज्ञानमात्रकलनाकलितजगतिशांतस्वभावसुकुमारमनतरूपम् ॥ वेतालबाल
यपदतदलघनायमेवस्वयसमनुभावयशांतमास्व ॥ ११ ॥ ॥ इ० वा० वा० द० मोक्षोपायेपुनिर्वाणप्रकरणेपू० वेतालप्रश्नभेदोनाम
द्विसप्ततितम सर्ग ॥ ७२ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

त्कानवतापचम्यक्रमणग्रहणतत्पांमूलतामाधारताम् ॥ ७ ॥ जगदादित्रसाकादिपत्नकमतीतत्वादणुनरतत्तदाकारवृत्तिपरिच्छिन्नचित्कणपरिच्छेदत्वादरूपवन्नि स्वरूप
त्यागप्रसाहादिवत् ॥ तदपिसूक्ष्मतमनाडीच्छिद्रपुभासमानपरमाणववदेवेति ॥ ८ ॥ कस्यानवयवस्यैवपरमाणुमहागिरेरितिपष्ठप्रश्नंसमाधत्ते ॥ परोणुरिति ॥ अलभ्यत्वाच्च
क्षुरादिकरणोपासत्वात् ॥ एषपरोणुःपूरकत्वात्समस्तोप्यात्ममहागिरिः ॥ अध्यारोपदशासर्वमूर्तामूर्तअवयवरूपयस्यतथा ॥ नेतिनेत्यपवादेननिरस्तावयव ॥ ९ ॥ सप्तमशि
लांतर्निर्दिष्टकानरूपमज्ञाजमर्यादस्यशपकटयति ॥ अस्येति ॥ हियस्माजगत्त्रयमाधापृथ्वीअंतरंखसमाहिमेदस्याविश्रुतिपुहादाकाशरूपविज्ञानमात्रस्यमप्यमांतरमज्जाम
यसिद्धमितिघट्टोत्यथ ॥ १० ॥ सप्तप्रश्नानांनिरासेनप्रीत्यावेतालपरिभवच्चिन्नोक्तार्थसंक्षेपेणोपसहरति ॥ विज्ञानेति ॥ हेवेतालबालकजगतिविज्ञानमात्रस्यकलनाना
त्स्कोशटानांस्थिपकटनतत्त्वासविज्ञानरूपभावार्दर्शयतालपाटपटिरलपनीयमनास्कर्दनीयमेवअतोमदुक्त्यात्वमेवस्वभावमात्मानमनुभावयस्वानुभवमारोहयशांतदर्पमा
स्वत्य ॥ ११ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० पू० द्विसप्ततितम सर्ग ॥ ७२ ॥ ॥ ७ ॥ ॥ ७ ॥

उपदिश्यात्रवेतालप्रश्ननिर्णयमंस्थितिम् ॥ भगीरथस्यवृत्तांतस्तत्रान्योप्यत्रवर्ण्यते ॥ १ ॥ तत्रतस्मिन्राजनिविचारोचितयाधियाअनुमितयाभावितात्मतयातत्त्वज्ञतयानिमि
त्तेन ॥ वेतालपक्षेवासर्वयोज्यम् ॥ १ ॥ अविचलध्यानीसमाधिस्थइतियावत् ॥ २ ॥ एवक्रमेणराजवर्णितक्रमेण ॥ ३ ॥ बालभ्रांतिकल्पितवेतालकस्यकायइवविलीय
ते ॥ ४ ॥ चित्तसर्वतउपसहृत्यस्वोभावःपरमात्मातदापतिततत्प्रतिष्ठितकुर्वन् ॥ ५ ॥ हेमुनेमननशीलरामएकस्मिन्वस्तुनिशमःसर्ववृत्तिलयस्तेनशांतात्मोपरतचित्त अतएव
सर्वत्रसमंब्रह्मपश्यतीतिसमदर्शनः ॥ ६ ॥ असमूढातपूर्वान्वयि ॥ नन्वेवस्थितम्यमेकथदेहयात्रासिद्धिस्तत्राह ॥ यथेति ॥ दुःसाध्यमन्येषांकष्टसाध्यमपिकार्यंयस्यानायासे

श्रीवसिष्ठउवाच॥ ॥इतिराजमुखाच्छ्रुत्वावेतालःशांतिमाययौ ॥ भावितात्मतयातत्रविचारोचितयाधिया ॥ १ ॥ उपशांतमनाभू
त्वामत्वैकांतमनिंदितम्॥ बभूवाविचलध्यानोविस्मृत्यविषमांक्षुधाम्॥ २ ॥एतद्राममयोक्तंतेवेतालप्रश्नजालकम्॥ एवंक्रमेणचि
दणौतेनेदंसंस्थितंजगत्॥ ३ ॥ चिदणोःकोशगंविश्वंविचारेणविलीयते॥ कायोवेतालकस्येवशिष्यतेयत्पदंतुतत् ॥ ४ ॥ संहृत्यसर्वत
श्चित्तंस्तिमितेनांतरात्मना॥ स्वभावापतितंकुर्वन्निरिच्छंतिष्ठशांतधीः ॥ ५ ॥ आकाशविशदंकृत्वामनसैवमनोमुने ॥ तिष्ठैकशमशां
तात्मासर्वत्रसमदर्शनः॥ ६ ॥ स्थिरबुद्धिरसंमूढोयथाप्राप्तानुवर्त्तिनः ॥ राज्ञोभगीरथस्येवदुःसाध्यमपिसिद्ध्यति ॥ ७॥ संपूर्णशांतम
नसःपरिवृत्तवृत्तेर्नित्यंसमेसुखमयात्मनितिष्ठतोंतः॥ सिद्ध्यंतिदुर्लभतराअपिवांछितार्थागंगावतारइवसागरखातवस्तु ॥ ८ ॥ ॥इ०
वा०वा०दे०मो०नि०पू०वेतालाख्यानंनामत्रिसप्ततितमःसर्गः॥ ७३ ॥ ॥ ९ ॥ ॥श्रीरामउवाच॥ ॥यथाचित्तचमत्कृ
त्याराज्ञोगंगावतारणम्॥ भगीरथस्यसंपन्नंतन्मेकथयभोप्रभो ॥१॥ ॥श्रीवसिष्ठउवाच॥ ॥ आसीद्भगीरथोनामराजापरमधार्मि
कः॥ भुवःसमुद्रयुक्तायामंडलीतिलकोपमः॥ २॥ संकल्पानंतरंप्राप्तायथाभिमतमर्थिनः॥ चंद्रप्रसन्नवदनादस्माच्चिंतामणेरिव॥३॥

नैवसिध्यति ॥ ७ ॥ यथासगराशुमद्दिलीपादिदुर्लभतरोपिसागराणासगरपुत्राणांतत्खातसमुद्रस्यचवस्तुसंजीवनमणिप्रायोगंगावतारःशांतितृप्तिसमदर्शित्वादिगुणसंपन्नस्यभ
गीरथस्यानायासेनसिद्धस्तद्वदित्यर्थः ॥ ८ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०त्रिसप्ततितमःसर्गः ॥ ७३ ॥ ॥ ९ ॥ ॥ भगीरथस्यात्रगुणाश्चिताचाथविचा
रजा ॥ त्रितलेनचसवादोजिहासातोत्रवर्ण्यते ॥ १ ॥ चित्तस्यपूर्णतादिलक्षणयाचमत्कृत्या ॥ १ ॥ समुद्रयुक्तायाभुवोराजास्वीयकोसलमडल्यास्तुतिलकोपमः ॥ २ ॥
तस्यदानशौण्डतावर्णयति ॥ संकल्पानतरमिति ॥ अर्थिनोयाचकाअस्माद्भगीरथाद्याच्ञासंकल्पानतरमेवसमीपगमनवाक्प्रयोगादिश्रमविनैवयथाभिलषितमर्थंप्राप्ताःप्राप्तवं
तः ॥ गत्यर्थाकर्मकेतिकर्त्तरिक्तः ॥ चद्रप्रसन्नवदनादित्यनेनदानोत्साहान्मुखेप्रसादातिशयएवनत्वस्यधनव्ययदुःखान्म्लानिरितिद्योत्यते ॥ ३ ॥

अपामपुरानवारयन्ति ॥ साधूनामिति ॥ एवव्ययशीलस्यकथधनप्राप्तिस्तमाह ॥ तृणमात्रमिति ॥ कश्चित्आयस्थानेस्वधर्मत प्राप्तंतृणमात्रमप्युपादत्ते ॥ पौनरुक्त्यात्तृणो
पादानाप्रसिद्धर्थचिंतामणिपदेनकामधनुर्लक्ष्यत ॥ ४ ॥ यथावज्रवेधनमणि अध.अधोभागेअयसायन्त्यतेवध्यतेइत्ययोयममश्वसारदृढतरस्यांतरपरिभ्रमत्यास्वकांत्या
उज्ज्वलतीप्रकाशमानायप्रथचक्रनेमियस्मिन्कर्मण्यितयथाभवतिमथाभित्त्वास्वप्रोतगुणयोम्यकरोतितथायोगंभीरयोमलयत्तरमपिसर्वदुर्जनतश्चेष्टितचनवेशास्कदनेनस्वमता
पनोज्ज्वलतिरथनेम्यप्रिलानिषमबलानियस्मिन्कर्मणितयथाभवतितथाराधाषपोतेंनियसअध·पादवेशोनिगडाधयोभिर्धीध्यतेइत्ययोपथकृत्वाअभिनत्भित्त्वेषगुणपूर्णचका
रेस्यर्थ ॥ वज्रमारमपीतिपाठेपिरूपकेण्यायमेवतात्पर्याय ॥ ५ ॥ दिवानिशप्रजापालनायसर्वत·परिभ्रमणास्तस्यप्राप्तोपिनृणामधर्मप्रवृत्तिहेतुतमोगेहांधकारदैन्यदारिद्र्यम

साधूनांयोव्ययस्यार्थंधनान्यविरतददौ॥ तृणमात्रमुपादत्तेकश्चिच्चिंतामणिर्यथा ॥ ४ ॥ वज्रसारमिवप्रोतमुज्ज्वलन्नेमियोभिनत्॥
अधोमणिरयोयश्चसर्वदुर्जनचेष्टितम्॥५॥ अधूमवह्निदहश्री श्रांतोपिदैन्यमप्यलम् ॥ तमोहरन्नृणांनैशद्युमणिर्वेश्मनामिव ॥६॥
किरन्नग्निकणासारमभित स्वप्रतापजम्॥ मध्याह्नसूर्यकांताग्निरिवज्वलतियोरिपु ॥ ७ ॥ मृदुशीतलसस्पर्शोयस्समाह्लादयन्मन ॥
सुज्ञानांद्रवतिस्निग्धस्येंदोरिंदुमणिर्यथा ॥ ८ ॥ जगद्यज्ञोपवीतस्यस्वर्गपातालवाहिन ॥ गंगावाहस्ययेनास्यांतृतीय·पूरितोगुण
॥९॥ अगस्त्यशोषितोंभोधिर्गंगापूरेणपूरित ॥ येनदुष्पूरभृतोपिमहासार्थोर्थिनामिव ॥ १० ॥ गंगासोपानपङ्क्त्यायेनपातालवासि
न ॥ योजिताब्रह्मणोलोकेयांधवालोकयधुना॥ ११ ॥ ब्रह्माणशंकरजह्नुतपमाराधयश्चय ॥ भूयोभूयोययौखेदमशून्याध्यवसायि
न ॥ १२ ॥ यौवनेवर्तमानस्यतस्यभूमिपतेरपि ॥ प्रविचारयतोलोकयात्रांपयाकुलामिमाम् ॥ १३ ॥ सुविरागचमत्कारविचारकणि
कोदभूत् ॥ वयस्यपिचतारुण्येदैवाद्वल्लीमराविव ॥ १४ ॥

प्यहरन ॥ यथाद्युमणिर्वेश्मननिशातमोम्यहारिदैन्यंचहरतितद्वत् ॥ विशेषणेउभयमयोव्ये ॥ ६ ॥ स्वस्यप्रताप पराक्रम·अतिप्रमताप तस्माज्जातमग्निकणानामासारधा
राकिरन्सन्योऽरिपुमध्याह्नकालेजह्नून सूर्यकांतशिलाग्निरिवज्वलति ॥ अग्निपक्षेभरा.अपाण्यपांसतीतिअरिणस्तृणादयस्तेषु ॥ ७ ॥ सुज्ञामृतमनश्चचिदस्तेषांसन्निधौ ॥
इंदुमणिश्चन्द्रकांत ॥ ८ ॥ येनगंगावाहस्यगंगाप्रवाहलक्षणस्यजगद्यज्ञोपवीतस्यतृतीयोगुणस्तनु.अस्यांपृथिव्यांगंगावतारणेनपूरित ॥ ९ ॥ सर्वविमतचर्त्तिनामर्थिनांमहाम्
सार्थ.सघोधनेनेव ॥ १० ॥ भूतप्रोषित्वाधूमस्वनिर्दग्धस्वान्पातालवासिन अधोगतिप्रामार्पाधवा.सगरपुत्रायेनगंगालक्षणयासोपानपङ्क्त्याब्रह्मणोलोकेयोजिताआरोपि
ता ॥ ११ ॥ अशून्याध्यवसायिन अविच्छिन्नदृढनिश्चयात्स्वमनसःसकाशात् ॥ १२ ॥ अपिशब्दात्तपमेवेतियम्यते ॥ १३ ॥ यौवनेविचारवैराग्योदयोऽतिदुर्लभइत्यिपोत
नायमराविवेति ॥ १४ ॥

इतिवक्ष्यमाणप्रकारेणइमांजगद्यात्रांचिंतयामास ॥ चिंताप्रकारमेवाह ॥ नित्यमित्यादिना ॥ १५ ॥ श्यामारात्रिः ॥ यद्भोगोभुक्तविरसंचफलयस्यतत्तथाविधमेवसर्वेषां
कुर्वतांकर्मलक्ष्यतेनत्वपूर्वंपरमपुरुषार्थफलंचेत्यर्थः ॥ १६ ॥ तत्तस्मात्साधनरूपकर्मविपूचिकेवाशुद्धिदुःखफलमेवेत्यर्थः ॥ १७ ॥ १८ ॥ अथउक्तचिंतानंतरंसत्तेनःसक्का
शादेकांतमत्यंतभीतसन् ॥ १९ ॥ भ्रमताजीवानारागद्वेषादिसंसारवृत्तिपुनःफलभूतास्वेनासुस्वर्गनरकमानुष्यादिरण्यानीषुच ॥ २० ॥ २१ ॥ साधनचतुष्टयश्रवणमन
नाद्युपायैश्चिराभ्यस्तयत्साम्यविक्षेपवैषम्यशून्यं समाधिस्तदात्मना अनादिसिद्धब्रह्माकारेणचउत्थेनाविभागेननतेयस्यप्रत्यक्तत्त्वस्याववोधेनसर्वदुःखानिक्षीयंतेइतिपरेणान्वय
॥ २२ ॥ २३ ॥ उदयचनेति ॥ २४ ॥ एवमुपदिष्टोभगीरथोविवेकेनस्वयमेवात्मतत्त्वमतःपर्यालोच्यापाततोनिश्चित्यतत्रविक्षेपव्याकुल्याच्चित्तस्यप्रतिष्ठामलभमानःस्वावगता

एकांतेचिंतयामासमहीपतिरसाविति ॥ जगद्यात्रामिमांनित्यमसमंजसमाकुलम् ॥ १५ ॥ पुनर्दिनंपुनःश्यामादानादानशतंपुनः ॥
तदेवभुक्तविरसंलक्ष्यतेकर्मकुर्वताम् ॥ १६ ॥ येनप्राप्तेनलोकेस्मिन्नप्राप्यमवशिष्यते ॥ तत्कृतंसुकृतमन्यच्छेषंकर्मविपूचिका ॥ १७ ॥
पुनःपुनःपर्युषितंकर्म्मकुर्वन्नलज्जते ॥ मूढबुद्धिरबुद्धिस्तुकःकुर्यात्किलबालवत् ॥ १८ ॥ अथैकदोद्विग्नमनाःकदाचित्त्रितलंगुरुम् ॥ एकां
तंसंस्थितंभीतःसमपृच्छद्भगीरथः ॥ १९ ॥ ॥ भगीरथउवाच ॥ ॥ अंतःशून्यास्वनुचिरंभ्रमत्संसारवृत्तिषु ॥ अरण्यानीषुचैतासुभृशं
खिन्नावयंविभो ॥ २० ॥ जरामरणमोहादिरूपाणांभवकारिणाम् ॥ भगवन्सर्वदुःखानांकथमंतःप्रजायते ॥ २१ ॥ ॥ त्रितलउवाच ॥
चिरसाम्यात्मनोत्थेननिर्विभागविलासिना ॥ राजन्ज्ञेयावबोधेनपूर्णेनभरितात्मना ॥ २२ ॥ क्षीयंतेसर्वदुःखानित्रुट्यंतिग्रंथयोभि
तः ॥ संशयाःसमतांयांतिसर्वकर्माणिचानघ ॥ २३ ॥ ज्ञेयंविदुरथात्मानंसंशुद्धंज्ञप्तिरूपिणम् ॥ सचसर्वगतोनित्यंनास्तमेतिनचोद
यम् ॥ २४ ॥ ॥ भगीरथउवाच ॥ ॥ चिन्मात्रंनिर्गुणंशांतमस्तिनिर्मलमच्युतम् ॥ देहादिनेतरत्किंचिदितिवेद्मिमुनीश्वर ॥ २५ ॥ किं
तत्रप्रतिपत्तिर्मेस्फुटतामेतिनेतरा ॥ एतावन्मात्रसंवित्तिःस्यामहंभगवन्कथम् ॥ २६ ॥ ॥ त्रितलउवाच ॥ ॥ ज्ञानेनज्ञेयनिष्ठत्वमेति
चेतोत्वदंवरे ॥ ततःसर्ववपुर्भूत्वाभूयोजीवोनजायते ॥ २७ ॥

शगुरवेनिवेदयस्तत्स्फुटीभावेविक्षेपोपशमेचोपायपृच्छति ॥ चिन्मात्रमिति ॥ अस्तीत्यनेनअसत्त्वापपादकोऽज्ञानांशोमेनष्टइतिसूचितम् ॥ देहेंद्रियप्राणमनोबुद्ध्यादिव्यतिरिक्तमत
रत्किंचिदात्मानेत्यपित्वद्वचनविश्वासात्स्वोपपत्त्याचवेद्मि ॥ २५ ॥ तत्राभानापादकोऽज्ञानांशइतरावभासहेतुर्विक्षेपांशश्चस्वस्यननष्टइतिदर्शयति ॥ किमिति ॥ अत्रअनयोः
सदसद्विवेकवोधयोर्मध्येइतराआयासदात्मवोधरूपाप्रतिपत्तिः स्फुटताकरतलामलकवत्स्पष्टतांनैतितत्रकिंकारणम् ॥ अहंसर्वविक्षेपशान्त्याएतावन्मात्रसंवित्तिश्चकथंकेनोपा
येनस्यामित्यर्थः ॥ २६ ॥ तत्रभगीरथस्यराज्याद्यभिमानादेवतत्तद्विषयेषुचित्तधावनाद्विक्षेपस्तस्यावल्यादेवनस्फुटात्मप्रतिपत्तिरितिनिश्चित्यत्रितलस्तत्परित्यागेनायंप्रथ
मगीतोक्तामानित्वादिसाधनान्युपदिशति ॥ ज्ञानेनेति ॥ ज्ञायतेअनेनेतिज्ञानममानित्वादितेनज्ञेयंयत्तत्प्रवक्ष्यामीत्यादिभगवद्दर्शितेस्मिन्येनिष्ठत्वस्थैर्यम् ॥ सर्ववपुःपूर्णस्वभावः ॥
नजायतेपूर्णस्वभावान्नप्रच्यवतइत्यर्थः ॥ २७ ॥

अमानित्वादिपुक्तानिषिदवयुत्यानुवाक्याख्याभ्यांमपपथयति ॥ असक्तिरित्यादिना ॥ २८ ॥ मयिचानन्ययोगेनभक्तिरव्यभिचारिणीत्यस्यतात्पर्यार्थंदर्शयति ॥ आत्मनइ
ति ॥ निष्कटात्मचिंतनमवाप्रभगवद्भक्तिनगुणपरिममश्रवणकीर्तनादिर्भगवदभिप्रेतेत्यर्थ ॥ २९ ॥ ३० ॥ अध्यात्मज्ञाननित्यत्वंश्रवणमननिदिध्यासनाभ्यास तत्त्वज्ञाने
नाथस्यपरमात्मनस्वस्वरूपस्फुटाभिव्यक्तियात्वयापृष्टासासर्वसाधनफलीभूता सर्वेषामेवसाधनानामनहंकारलक्षणसाधनमूल अहंकारेसतिअमानित्वादेर्दुसंपादत्वादि
त्याशयेनाह ॥ अहंभावेति ॥ ३१ ॥ तर्हितत्परित्यागोपायममवदेतिपृच्छति ॥ शरीरइति ॥ ३२ ॥ विकसितामकामोपहृतत्वेनस्फुटीभूतासत्ताशुद्धात्माकारतांगत्वास्थि
तस्येतिशेष ॥ ३३ ॥ त्यक्तराज्यंमांजनानवहुमन्यंते शमवश्योपहसिष्यंति सर्वाभिलषितपूरणसमर्थोहंकथभिक्षामटिष्यामि कथंकदन्नपानादिनाजीविष्यामीत्यादिर्वि

असक्तिरनभिष्वंग पुत्रदारगृहादिषु ॥ नित्यंचसमचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ २८ ॥ आत्मनोनन्ययोगेनतद्भावनमनारतम् ॥ विवि
क्तदेशसेवित्वमरतिजनसंसदि ॥ २९ ॥ अध्यात्मज्ञाननित्यत्वतत्त्वज्ञानार्थदर्शनम् ॥ एतज्ज्ञानमितिप्रोक्तमज्ञानतदतोन्यथा ॥ ३० ॥
रागद्वेषक्षयाकारसमारव्याधिभेषजम् ॥ अहंभावोपशांतौतुराजन्ज्ञानमवाप्यते ॥ ३१ ॥ ॥ भगीरथउवाच ॥ ॥ शरीरेस्मिंश्चिरा
रूढोगिरौतरुरिवस्वके ॥ अहंभावोमहाभागवद्मेत्यज्यतेकथम् ॥ ३२ ॥ ॥ त्रितलउवाच ॥ ॥ पौरुषेणप्रयत्नेनत्यक्त्वाभोगौघभाव
नाम् ॥ गत्वाविकसितांसत्तामहंकारोविलीयते ॥ ३३ ॥ यन्त्रणापंजरंयावद्भ्रमलज्जादिनाखिलम् ॥ अकिंचनत्वशेषेणस्फुटातावदहंरु
ति ॥ ३४ ॥ सर्वमेतद्धियात्यक्त्वायदितिष्ठसिनिश्चल ॥ तदहंकारविलयेत्वमेवपरमपदम् ॥ ३५ ॥ शांताशेषविशेषणाविगतभी सत्य
क्तसर्वैषणोगत्वानूनमकिंचनत्वमरिपुत्यक्त्वासमग्रांश्रियम् ॥ शांताहंकृतिरस्तदेहकलनस्तेष्वेवभिक्षामटन्मामप्युज्झितवानलयदि
भवस्युच्चैस्त्वमुच्चैरसि ॥ ३६ ॥ ॥ इ० वा० वा० दे० मोक्षोपायेपुनिर्वाणप्रकरणेपू० भगीरथोपदेशोनामचतु सप्ततितम सर्ग ॥ ७४ ॥
॥ श्रीवसिष्ठउवाच ॥ ॥ अथतस्यगुरोर्वक्त्रादित्याकर्ण्यभगीरथ ॥ मनस्याहितकर्तव्य स्वव्यापारपरोभवत् ॥ १ ॥

तावयुक्तलज्जाभिमानादिनाकृतपहेपूर्ववदेवनियमणालक्षणपंजरयावदकिंचनत्वशेषेणसर्वत्यागेननभवतावदहंकृति स्फुटाअस्यमविकसितासत्यतीत्यथ ॥ ३४ ॥ तर्हि
॥ ३५ ॥ सर्वत्यागमेवावश्यकर्तव्यतयापपथयति ॥ शांतेति ॥ शांताव्यनतानिच्छमवचामरादीनिराजविशेषणानियस्यतथाविध.सन्नूनमस्यतमकिंचन सन्समग्रांश्रियमरिपु
त्यक्त्वाअस्तदेहाभिमानस्तेष्वरिष्वेवभिक्षामटन्सन्मांगुरुमपिअलपूर्ण सन्परम्यार्थपरिशेषाभावाद्दुज्झितवान्गुरुशुश्रूषणेन यावदायुष्यपोषयावेदांतोगुरुरीश्वरइत्यादिशा
स्त्रमामाण्यप्रसंगादीदृशलक्षणसंपन्नोयदिभवसितर्हिसर्वमुमुक्षुमुख्योभूतस्त्वमुच्चै सर्वोत्कृष्टस्तैवासिनतेससारसभावनापीत्यर्थ ॥ ३६ ॥ ॥ इतिश्रीवासिष्ठम० तात्पय
प्रकाशेनि० पू० चतु सप्ततितम सर्ग ॥ ७४ ॥ ॥ ७ ॥ ॥ सर्वस्यागेनसर्वस्वत्यागोराज्ञोभवण्यते ॥ भैक्षचर्याकपिच्छीलेभ्रितलेनसमस्थिति ॥ १ ॥ मनसिआ
हितनिश्चितवक्ष्यमाणकर्तव्ययेनतथाविध.सन् ॥ १ ॥

अग्निष्टोमग्रहणविश्वजित्सर्वैतानांसोमसंस्थानामुपलक्षणम् ॥ २ ॥ अगुणिश्रुताध्ययनादिविकलमपिअविचारयन् तद्विचारेविलंबापत्तेः ॥ ३ ॥ असवःप्राणास्तन्मात्रावशे
षः ॥४ ॥ सीमांतिनेसीमांतेसन्निहिताय ॥ ५ ॥ अधोवासःकौपीनाच्छादनतदवशेषः ॥ ६ ॥ यत्रस्वयदृष्टोपिजनैर्भगीरथनाम्नानज्ञायते यत्रचजनमुखात्स्वनामापिनज्ञायते
नश्रूयतेतत्रतादृशेषु ॥ ७ ॥ ॥ इतिअनयारीत्यावर्त्तमानः ॥ ८ ॥ द्वीपानिनर्यतरितानिमंडलानि ॥ अवशःसन्नदर्शनाधीनचित्तः ॥ ९ ॥ प्रवाहपतितान्क्रमप्राप्तान्नानागारा
न् ॥ छादसपुस्त्वम् ॥ प्राप्येतिशेषः ॥१०॥ विविदु परिचिक्युः ॥११॥ अनादृतमशेषराज्ययेन ॥१२॥ शोचितःशोकविषयीकृतः ॥१३॥ १४ ॥ स्वमेवगुरुमितिपूर्वान्वयि ॥

ततःकतिपयेष्वेववासरेषुगतेषुसः॥ अग्निष्टोममखंचक्रेसर्वत्यागैकसिद्धये ॥ २॥ गोभूम्यश्वहिरण्यादिददौधनमशेषतः॥ द्विजेभ्योनि
जबंधुभ्योगुण्यगुण्यविचारयन्॥ ३॥ दिवसत्रयमात्रेणसर्वमेवपरित्यजन्॥ असुमात्रावशेषोसावासीद्राजाभगीरथः॥ ४॥ अथ
सर्वार्थरिक्तंतत्खिन्नप्रकृतिपौरकम्॥ सीमांतिनेतृणमिवराज्यंस्वमरयेददौ॥५॥ आक्रांतेद्विषताराज्येमुनिःसद्मनिमंडले॥अधोवासो
वशेषोसौनिर्जगामस्वमंडलात्॥ ६॥ यत्रनज्ञायतेनाम्नायत्रनज्ञायतेमुखात्॥ तत्रग्रामेष्वरण्येषुदूरेषूवासधैर्यवान्॥७॥ इत्यल्पेनैव
कालेनप्रशांतसकलैषणः॥ परमेणशमेनासावापविश्रांतिमात्मनि ॥ ८॥ भ्रमन्द्वीपानिभूपीठकदाचित्कालयोगतः ॥ अवशःशत्रु
णाक्रांतंस्वमेवप्रापतत्पुरम्॥ ९॥ नानागारांश्चतत्रासौप्रवाहपतितांश्चतान्॥ पौरांश्चमंत्रिणश्चैवशमीभिक्षामयाचत॥ १०॥ विवि
दुस्तेनृपंपौरामंत्रिणश्चभगीरथम्॥ पूजयामासुरथतंसविपादाःसपर्यया॥ ११॥ प्रभोराज्यंगृहाणेतिप्रार्थितोप्यरिणामुनिः॥ नादत्ते
नादृताशेषस्तृणमप्यशनादृते॥ १२॥ कतिचिद्दिवसांस्तत्रनीत्वान्यत्रजगामसः॥ भगीरथोयंहाकष्टमितिलोकेनशोचितः॥ १३॥ अ
थान्यत्रोपशांतात्मापरिविश्रांतधीःसुखी॥ आत्मारामंकदाचित्तुसप्रापत्रितलंगुरुम्॥ १४॥स्वमेवस्वागतंकृत्वातेनसार्धंभगीरथः॥कं
चित्कालमुवासाद्रौवनेग्रामेपुरेजने॥१५॥समतामुपयातौतौगुरुशिष्यौसमौस्थितौ॥कलयामासतुःस्वस्थौविनोदंदेहधारणम्॥१६
किमयंधार्यतेदेहःकिंवानेनोज्झितेननः॥यथाक्रमंयथाचारंतिष्ठत्वेषयथास्थितम्॥१७॥इतिनिश्चित्यतिष्ठंतौतौवनाद्वनगामिनौ॥ अ
नानंदंपरानंदंनासुखंनचमध्यमम्॥ १८॥ धनानिवाजिविभवाद्यैश्वर्यंचाष्टधोदितम्॥ सिद्धैरप्यर्पितंतुष्टैर्मेनातेजर्जरंतृणम् ॥१९॥

स्वागतग्रहणवंदनाद्युपलक्षणम् ॥१५॥ विनोदकुतूहलभूतदेहधारणम् ॥१६॥ यथाक्रमयथाशास्त्रोक्तक्रमम् यथाचारंवृद्धाचारमनुसृत्यचतिष्ठतु ॥ १७ ॥ नविद्यतेविषयानं
दायत्रतथाविधपरानंदप्रापतुरितिशेषः ॥ तदेवविशिनष्टि ॥ नासुखमिति ॥ असुखदुःखतद्रहितम् मध्यमंसुखदुःखोभयशून्यांतरालावस्थातद्भिन्नम् ॥ १८ ॥ तयोर्मानुषभोगे
ष्विवदिव्यभोगेष्वपिवैराग्यदार्ढ्यंदर्शयति॥ धनानीति ॥ तच्चरितसंतुष्टैः सिद्धैर्ब्रह्मादिभिरर्पितदत्तमणिमादिभेदेनाष्टधाउदितप्रसिद्धमैश्वर्यंचजर्जरजीर्णतमतृणमिवमेनाते॥१९

स्यारभक्ष्यप्राप्यकमणवयावत्त्वयावराय धारणीयइतिनिश्चित्यतस्थतु ॥ २० ॥ मौमुनीनिजेनपूर्वसमाचरणक्रमेणजातसुखमसौख्यंदुःखमपिअभिनन्दतु ॥ यतस्तौस मप्याविसमग्रतृणिअनिसमौएफरसीभूतौसर्वास्वतस्तत्स्वभावादवशमिनौपरमशांतिमतौ ॥ २१ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० पू० पञ्चसप्ततितम सर्ग ॥ ७५ ॥ पुनर्भगीरथस्यराज्यप्राप्तिर्दर्शयते॥आराध्यमत्रब्रह्मादीन्गंगायाअवतारणम ॥ १ ॥ कोसलमंडलाद्भगीरथास्पदमंडलापमंडलांतरे ॥ अनपत्यतयान् ॥ आमिषमत्स्यइवमत्स्या रि ॥ १ ॥ नष्टाशास्यक्रमपालनमर्यादायपातथाविधा सत पालनसमर्थयागुणलक्ष्म्यासयुक्तंनृपमन्विष्यतिस्म ॥ २ ॥ सप्रगुणलक्ष्मासमन्वितोयमितिपरिज्ञायमत्यभिक्षा पतमागतंसैन्यभिविष्यमहीपतिचक्रु ॥ ३ ॥ इष्टनिगजआशिश्रियआरुरोह ॥ ४ ॥ नीरंध्रतांपूर्णताम ॥ ५ ॥ मस्मिन्नेवकालेदैवात्कोसलराज्यहारिणोपिमरणाद्वयोध्या

स्वकर्मणैवदेहोयंयावत्सत्त्वमनिच्छया ॥ धारणीयइतिस्वेनकर्मणैवाथतस्थतु ॥ २० ॥ अभिनन्दतुरागतमुक्तमौनिजसमाचरणक्रम जमुनी ॥ सुखमसौख्यमर्थाप्सितवर्जितौसमसमेतिसमौशमिनौस्वत ॥ २१ ॥ ॥ इ० वा० वा० दे० मो० निर्वाणप्र० पू० भगीरथनि र्वाणनामपञ्चसप्ततितम सर्ग ॥ ७५ ॥ ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अथैकदापुरेश्रेष्ठेएकस्मिन्भिन्नमंडलांतरे ॥ अनपत्यनृप मृत्युरहन्मत्स्यइवामिषम् ॥ १ ॥ तत्रप्रकृतय खिन्नानष्टदेशक्रमानृपम् ॥ अन्विष्यंतिस्मसयुक्तगुणलक्ष्म्याविशालया ॥ २ ॥ तंभगीर थमासाद्यस्थिरभिक्षाचरमुनिम् ॥ परिज्ञायसमानीयसैन्येचक्रुर्महीपतिम् ॥ ३ ॥ भगीरथ क्षणेनैवप्राप्तपीवायुनासर ॥ वलित सेन यागुर्व्याझटित्याशिश्रियेगजम् ॥ ४ ॥ भगीरथोजगन्नाथोजयतीतिजनारवै ॥ नीरंध्रतामुपाजग्मुर्गिरींद्राणांमहागुहा ॥ ५ ॥ तत्रत पालयततद्राज्यराजानमादृता ॥ आजग्मु प्राक्प्रकृतय प्राहुरित्यनृपाधिपम् ॥ ६ ॥ ॥ प्रकृतयऊचु ॥ ॥ राजन्नस्माकमधिपोय स्त्वयाममपुरस्कृत ॥ मृत्युनाविनिर्गीर्णोसौमत्स्येनवामिषमृद् ॥ ७ ॥ तत्तत्पालयितुंराज्यप्रसादकर्तुमर्हसि ॥ अप्रार्थितोपयातानात्वा गाथानांचनोचित ॥ ८ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इतिसंप्रार्थितोराजातदंगीकृत्यतद्वच ॥ सप्तसागरचिह्नाया सप्तभूवभुव पति ॥ ९ ॥ सम शांतमनामौनीवीतरागोविमत्सर ॥ प्राप्तकार्यैककरण सतिरोहितविस्मय ॥ १० ॥ पातालतलनष्टानांसागराकारकारिणाम् ॥ पितामहानांगंगांबुशुश्रुवेतारणक्षमम् ॥ ११ ॥ तदाकिलस्वर्गनदीवहतिस्मनभूतले ॥ पितॄणांभूतविस्त्योभूत्तेनगंगाजलांजलि ॥ १२ ॥

स्याअपियस्तत्पाभगीरथमागम्यप्राप्यमासुरित्याह ॥ मधति ॥ भगीरथस्थयपाक्तनामधिपुरोहितादिप्रकृतय ॥ ६ ॥ राज्यत्यजतात्वयाय सीमांतवासीशत्रि राज्यदानेन पुरस्कृत असौ ॥ ७ ॥ तत्तस्माद्गतास्त्वयाक्तनराज्यम ॥ ८ ॥ ९ ॥ मौनीमितहितसत्यवाक् ॥ तिरोहितस्तत्त्वज्ञाननबाधितोविस्मयोमहत्त्वपिकौतुकेआश्चर्यताबुद्धिर्यस्य ॥ १० ॥ अश्वान्वेषणायभूम खननात्सागराकारगर्तकर्तृणांसगरपुत्राणाम ॥ कपिलक्रोधाग्निनापातालतलेनष्टानांभस्मीभूतानांस्वपितामहानांगंगाम्बुप्लावनेनजलांजलिदानेनचतारणक्ष मनन्याप्तजलमितितादृश्यंश्रवणजनपरंपरयातेनशुश्रुवेइत्यर्थ ॥ ११ ॥ तदानीभूतलेगंगास्थितिनतस्मैपजलांजलि कृतोनस्तत्तदत्याशयेनाह ॥ तदति ॥ तेनभगीरथेनैवाम्येषा मपिपितृणांमप्रजलांजलिभूतासजाताविस्मयाभस्यानिपत्यतयाविधोभूदित्यर्थ ॥ १२ ॥

ततस्तच्छ्रवणदिनात्प्रभृति ॥ १३ ॥ गंगावतरणकार्यार्थंयत्तपआदिकार्यंतदर्थाईहाचेष्टायस्य ॥ १४ ॥ अयोजयत्अवतार्यसंयोजितवान् ॥ १५ ॥ जगत्पते शशिविभृतः शिवस्यागसंगिनीशिरसिसंगता सापेक्षत्वादसमर्थत्वेपिसमासश्छादसः ॥ जगत्पतेर्ब्रह्मणोवानियोगादितिशेषः ॥ नभस्तलाद्वाभूमिनिपतति ॥ महात्मनांस्वर्गिणावद्धीपुण्यसततिरिवेत्युत्प्रेक्षा ॥ १६ ॥ भगीरथेमहीपतौसजातस्यशाश्वतस्ययशसआसमुद्रप्रचारार्थवीथिकाइतिरूपकोत्प्रेक्षा ॥ १७ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०षट्सप्ततितम सर्ग ॥ ७६ ॥ ॥ ७ ॥ ॥ चूडालाख्यानमुक्तार्थद्रढिम्नेत्रावतार्यते ॥ शिखिध्वजस्यमाहात्म्यविवाहक्रीडनक्रमाः ॥ १ ॥ भगीरथेनपश्चाद्राज्यकालेधि

भगीरथेनचमहीमवतारयितुंदिवः॥गंगांगृहीतोनियमस्ततःप्रभृतिभूभृता॥१३॥ ततोराज्यंपरित्यज्यमंत्रिणांभूपतिःशमी॥ तपसेकार्यकार्येहोजगामविजनंवनम्॥१४॥ तत्रवर्षसहस्रैश्चसमाराध्यपुनःपुनः॥ ब्रह्माणंशंकरंजह्नुंभुविगंगामयोजयत्॥१५॥ ततःप्रभृत्यमलतरंगभंगिनीजगत्पतेःशशिविभृदंगसंगिनी॥ नभस्तलान्निपततिगांत्रिमार्गगामहात्मनामिवबद्धपुण्यसंततिः॥ १६ ॥ स्फुरत्तरंगभंगिनीस्वफेनपुंजहासिनीप्रसन्नपुण्यमंजरीयुतेवधर्मसंततिः॥ भगीरथेमहीपतौयशःप्रचारवीथिकातदाहिसात्रिमार्गगामहीतलेबभूव ह॥१७॥ ॥इ०वा०वा०दे०मो०निर्वाणप्रकरणेपू०गंगावतरणंनामषट्सप्ततितमःसर्गः॥ ७६ ॥ ॥ ७ ॥ ॥श्रीवसिष्ठउवाच॥ ॥एतामवष्टभ्यदृशंभगीरथधियाधृताम्॥ समःस्वस्थोयथाप्राप्तंकार्यमाहरशांतधीः॥ १॥ इदंपूर्वंपरित्यज्यक्रोडीकृत्यमनःखगम्॥ शांतमात्मनितिष्ठत्वंशिखिध्वजइवाचलः॥ २॥ ॥श्रीरामउवाच॥ ॥कोसौशिखिध्वजोनामकथंवालब्धवान्पदम्॥ एतन्मेकथयब्रह्मन्भूयोबोधविवृद्धये॥३॥ ॥श्रीवसिष्ठउवाच॥ ॥द्वापरेभवतांपूर्वमिदानींचभविष्यतः॥ तेनैवसन्निवेशेनदंपतीस्निग्धतांगतौ॥४॥ ॥श्रीरामउवाच॥ ॥यत्पूर्वमासीद्भगवंस्तदिदानींतथैवहि॥ भविष्यतिकिमर्थंवैवदमेवदतांवर॥५॥ ॥श्रीवसिष्ठउवाच॥ ॥जगन्निर्माणनियतेरस्याब्रह्मादिसंविदः॥ ईदृश्यवस्थितिर्नित्यमनिवार्यस्वभावजा ॥ ६ ॥ यदन्यद्बहुशोभूत्वापुनर्भवतिभूरिशः॥ अभूत्वैवभवत्यन्यःपुनश्चनभवत्यलम्॥ ७॥ अन्यत्वावर्तसंनिवेशाढ्यंसादृश्येनविवल्गति ॥ सदृशाविषमाश्चैवयथासरसिवीचयः॥८॥ ताएवान्याश्चदृश्यंतेव्यवस्थाःसंस्तौतथा॥ तस्माद्राजेवभूयोपिवक्ष्यमाणकथेश्वरः॥ ९ ॥

याधृताम् ॥ १ ॥ इदंविभवजातपरित्यज्य ॥ मनःखगक्रोडीकृत्यत्वदिनिरुद्ध्य ॥ २॥३॥ दंपतीजायापतीपूर्वकल्पेद्वापरेअभूताम् ॥ इदानीमष्टाविंशेचतुर्युगेऽपिमद्वापरेतेनैवसन्निवेशेनभविष्यतः ॥ ४ ॥ भूतभविष्यतो सादृश्येकोहेतुरितिरामप्रश्नार्थः ॥ ५ ॥ जगन्निर्माणेनियतिरूपायाब्रह्मादीनासत्यसकल्पसंविदः अनिवार्यस्वभावएवतद्धेतुरित्यर्थः ॥ ६ ॥ ईदृशीत्युक्तंप्रपंचयति ॥ यदिति ॥ यथाएकस्मिन्नाम्रतरौअन्यदन्यत्फलबहुशोभूत्वापुनःपुनस्तादृशमेवभूरिशोभवति ॥ स्कंधवटस्तुअभूत्वैवभवतिसचच्छिन्नःपुनस्तस्मिन्नभवति ॥ ७ ॥ ८ ॥ सस्तृतौशिखिध्वजादिससारेपितथेत्यर्थः ॥ राजाअतीतशिखिध्वजइववक्ष्यमाणकथायावर्ण्यत्वेनईश्वरोनायकः ॥ ९ ॥

॥ १० ॥ कण्वाकुण्डे ... [illegible]

॥ ११ ॥ सकलानांवापीकूपतडागारामादिकार्याणाम ॥ विदग्धोलोकशास्त्रनिष्णात ॥ १४ ॥ शांतश्वासीत्सुभग सौभाग्यलक्षणयुक्तश्च विनयार्थानांपरेषामपि विनयशिक्षा देमूनांवान्यासांवदितावक्ता ॥ १५ ॥ सर्वैवेदआनातितथापिमाननाअभिज्ञताभिमानसत्शून्य ॥ सैणवीप्यसनादि ॥ १६ ॥ उत्तमनओजसास्वबाहुवीर्येण ॥ अनेनपिता मांडलिकएवासीदसौस्वबाहुवीर्येणैवसम्राट्समभवदितिगम्यते ॥ १७ ॥ साम्राज्यमयुक्तयासपर्या ॥ महाद्दिकापिवस्यूनामभावाव्यजानाधनवद्धतइतिषिगतजेतम्यराभुधरा

भविष्यतिमहातेजास्तद्वृत्तांतमिमंशृणु ॥ द्वापरेपूर्वमभवदनीतेसप्तमेमनौ ॥ १० ॥ चतुर्युगेचतुर्थेतुसर्गेस्मिन्कुरुणांकुले ॥ जम्बूद्वीपेप्र
सिद्धस्यविंध्यस्यादूरसंस्थिते ॥ ११ ॥ मालवानांपुरेश्रीमाञ्छिखिध्वजइतीश्वर ॥ धैर्यौदार्यदयायुक्तःक्षमाशमदमान्वित ॥ १२ ॥
शूरःशुभसमाचारोमौनीगुणगणाकर ॥ आहर्त्तासर्वयज्ञानांजेतासर्वधनुष्मताम् ॥ १३ ॥ कर्त्तासकलकार्याणांभर्त्तापूर्ववपुर्भुव ॥
पेशलस्निग्धमधुरोविदग्धःप्रीतिसागरः ॥ १४ ॥ सुंदर शांतसुभग प्रतापीधर्मवत्सलः ॥ वदिताविनयार्थानांदातासकलसंपदाम् ॥ १५ ॥
भोक्तासत्संगसहित सुश्रोतासकलश्रुते ॥ वदासौमाननाशून्य स्त्रैणवणवदस्थान् ॥ १६ ॥ पितरिस्वर्गमापन्नेबालएवोत्तमौजसा ॥
कृत्वाषोडशवर्षाणिस्वयंदिग्विजयंवशी ॥ १७ ॥ नूनंसाम्राज्यसपर्याभूमंडलमयोजयत् ॥ अतिष्ठद्दिगताशंकपालयन्धर्मत प्रजा
॥ १८ ॥ सधीमान्मन्त्रिभि सार्धयशसाशुक्लयन्दिश ॥ अयगच्छत्सुवर्षेषुवसतेप्रोल्लसत्यलम् ॥ १९ ॥ पुष्पपुंजभ्रमाणेषुस्फुरत्सुशशिर
श्मिषु ॥ मंजरीजालदोलासुविटपांतःपुरांतरे ॥ २० ॥ रज कर्पूरधवलेवलद्दलकपाण्के ॥ आमोदविलसत्पुष्पगुलुच्छकवितानके ॥ २१ ॥
गायत्सुगहनेपूर्वैर्मिथुनेष्वलिनामिव ॥ आवातिमधुरेवायौशशिशीकरशीतले ॥ २२ ॥ कदलीकदलीकच्छतलपल्लवलासिनि ॥ कां
तांप्रतिधभूवास्यवसचेत समुत्सुकम् ॥ २३ ॥ क्षीयकुसुमसंभारसौगंध्यमधुरासवे ॥ मनोनान्यास्पदचक्रेसवसतमिवोदितम् ॥ २४ ॥

धाराकम ॥ १८ ॥ वर्षेपुगच्छत्सुयौवनमेपाभेसतीतिथावत् ॥ अथास्यपेन कांतामतिसमुत्सुकमभूदेतिपद्यमेनसंबंध ॥ १९ ॥ विटप शाखातल्लक्षणेअंत पुरांतरेमंजरीजालदोला सुअलिनांमिथुनेषुगायत्स्वितिप्ध्यवर्हितेनान्वय ॥ २० ॥ नवेयात पुरतत्सामपीकरपननवर्णधर्मि ॥ रजइति ॥ २१ ॥ शशिनाशीकरैश्चशीतले ॥ २२ ॥ कदलीमविद्धा कद ल्योगुल्मभेदास्तपांकच्छप्रायेषुतलेषुपल्लवेषुचलासिनिलास्पर्शलिइतिरोत्यमार्थोपपादकमाध्यार्थविशेषणम् ॥ ससवित्युत्तरपार्श्वमेवगुणसौंदर्यादिश्रवणात्तृबालायामनुरक्तमि तिगम्यते ॥ २३ ॥ कुसुमसंभाराणांसौगंध्यलक्षणैर्मधुरैरासवै क्षीबमत्तसन्तूसवसतमनमिवउदितरागपल्लवितमन अन्यास्पदंकांतातिरिक्तविषयावलंबननचक्रे ॥ २४ ॥

तदौत्सुक्यप्रकारप्रपंचयति ॥ उद्यानेत्यादिना ॥ २५ ॥ २६ ॥ निवेक्ष्यामिपरिणेष्यामिममेवतस्याअपिस्वाभिलाषप्रयुक्तसंतापःकदास्यादेनशीघ्रंघटनास्यादित्याशयेनाह ॥ मृणालेति ॥ इंदुवल्लभ्य पुष्पितलतागृहात्मनाइंदीभूनावल्लभ्यस्तदभिलाषिणी ॥ २७ ॥ २८ ॥ २९ ॥ वनानामुपवनानाचगुणानुवर्णनेआवलितासुकथासुचारमतेतिसप्तमीनांस वच. ॥ ३० ॥ ३१ ॥ कुमारी स्तदिपूजयामासवद्धमेनेसाकल्पिकभूषणैरलचक्रेवा ॥ मन्येइत्यवितर्कैः॥वितर्कवचनंवसिष्ठस्यवाक्यालंकारार्थम् ॥३२॥ मन्त्रिणापदलक्षणम्॥

उद्यानवनदोलासुलीलाकमलिनीषुच॥ कदाप्रणयिनींमुग्धांहेमाब्जमुकुलस्तनीम् ॥ २५ ॥ करिष्येकामिनीमंकेपर्यंकेकुंकुमांकिताम्॥ कदाकमलवल्लीनांदोलास्वलिरिवालिनीम् ॥ २६॥ आलोलांतांनिवेक्ष्यामिबालांभुजलतानुगाम् ॥ मृणालहारकुंदेंदुवंदवल्लभ्यभिलाषिणी॥ २७॥ मत्कृतेमदनातप्ताकदास्यादिंदुसुंदरी ॥इतिचिंतापरोभूत्वाकुसुमावचयोन्मुखः ॥ २८ ॥ विजहारवनांतेषुकुसुमोपवनेषुच॥ वनोपवनलेखासुलीलाकमलिनीषुच॥ २९ ॥ वल्लीवलयगेहेषुविविधोद्यानभूमिषु॥ वनोपवनविन्यासवर्णनावलितासुच॥ ३०॥शृंगाररसगर्भासुकथास्वरमतोन्मनाः॥स्तद्धिहारलसत्कायविलोलालकवल्लरीः ॥ ३१ ॥ कुमारीःपूजयामाससुवर्णकलशस्तनीः॥एतन्मन्येविदुर्भव्यामंत्रिणोनृपनिश्चयम् ॥ ३२ ॥ इंगिताकारवेदित्वमेवमंत्रिपदंपरम् ॥ अथतस्यविवाहायमंत्रिवर्गोविचारयन्॥ ३३ ॥सुराष्ट्राधिपतेःकन्यांययाचेयौवतान्विताम्॥ नवयौवनसंपन्नांभार्यात्वेविधिनोत्तमाम्॥ ३४ ॥ उपयेमेसतामात्मसदृशींप्रतिमामिव॥ चूडालेतिभुविख्यातानाम्नानृपतिसुंदरी ॥ ३५॥ सातंभर्त्तारमासाद्यरेजेफुल्लेवपद्मिनी॥ नीलनीरजनेत्रांतांचूडालांसशिखिध्वजः॥ ३६ ॥ स्नेहाद्विकासयामाससूर्योदेवोयथाब्जिनीम्॥ अवर्धततयोःप्रीतिरन्योन्यार्पितचेतसोः॥३७॥ हावभावविलासाढ्यैरंगैर्नवलतेवसा॥सुमंत्र्यर्पितसर्वार्थःससुखीसुस्थितप्रजाः॥ ३८ ॥ राजहंसइवाब्जिन्यारेमेदयितयातया॥ अंतःपुरेषुदोलासुलीलाकमलिनीषुच॥३९॥ उद्यानेषुविहारेषुलतापुष्पगृहेषुच॥ कदंबवनलेखासुचंदनागुरुवीथिषु॥४०॥ मंदारदामलोलासुकदलीकंदलीषुच॥ पुरांतेषुवनांतेषुदिगंतेषुसरस्सुच॥ ४१ ॥

परस्परानुरागगुणशीलकुलादिसपत्तिविचारयन् ॥ ३३ ॥ युवतीनासमूहोयौवतम् ॥ भस्याढेतद्धितेपुवद्भावः ॥ तेनान्वितां नवेनयौवनेनवयसाचसंपन्नाम् ॥ ३४ ॥ प्रतिमांप्र तिच्छायामात्मसदृशीमनुरूपाम् ॥ ३५ ॥ ३६ ॥ विकासयामासप्रसादयामास ॥ ३७ ॥ हावभावादयःशृंगारचेष्टाभेदास्तदाढ्यैरंगैर्नवलतेवसाशुशुभेइतिशेषः ॥ शोभनैरा [illegible]भिरर्पिताःसर्वेउपभोग्यार्थायस्मै ॥ अथवाशोभनैर्धार्मिकैर्मन्त्रिभिःसर्वेभ्योर्थिभ्यःअर्पिता.सर्वेअभिलषितार्थायस्य ॥ अतएवसुस्थितप्रजा [illegible]पुरेषे ॥ ४० ॥ ३९ ॥चंदनागुरुसुगंधितासुवीथिषुचदनागुरुवृक्षाणापंक्तिषुच ॥ ४० ॥ ४१ ॥

॥ ४१ ॥ धुरेवैर्वलीवर्दै च्छेपुरूषेपुसतरमणीयमर्यादर्थियोस्तथाविधयोर्मेघसस्यसपत्कांतयोपुभूम्योरिव ॥ ४२ ॥ मिथ अन्योन्यस्माच्छिक्षणादन्योन्यसाम्यार्थित्वा धकोविदीप्राप्ततरौ अतएवसर्वगुणसाम्यादनुरागेणताद्रूप्यरजमाबर्जविम्यमियसपन्नमित्याह ॥ स्वरूपमिति ॥ ४४ ॥ अन्योन्यहृदयस्थत्वादेहृदयसंक्रांतमेकमेवजीवस्वरूपम् ॥ षिमादिशिम्येवरव्यमपितत्तच्छिम्यकुशलानामुत्वाचायत्तअभ्यस्य ॥ ४५ ॥ यथाबालोवद्धावशधर्पवेदमसचर्यमितिशास्त्रनियतकालादेवमिपाप्यकातितम् ॥ सा चूडाला ॥ असौशिखिध्वज ॥ ४६ ॥ अमावास्याप्राप्येनिशेष ॥ इहकाविवमिथोहृदयस्थौसंतौऐक्यमुपागतौ ॥ ४७ ॥ मिश्रितक्षीरोदकवदेकरसौ ॥ ४८ ॥ भूतल

जगलेपुजनांतेपुजंयूजधीरजातिपु ॥ बभूवाह्लादकसर्वंतयोरन्योन्यचेष्टितम् ॥ ४२ ॥ सद्दपयोर्धुरवरैर्भूम्योरिवकांतयो ॥ नित्यमेवावियुक्तत्वात्प्रियत्वाच्चेष्टितस्यच ॥ ४३ ॥ मिथ कलाकलापस्यकोविदौतौबभूवतु ॥ स्वरूपमेकमवंतौदधतुर्भिन्नतांगतौ ॥ ४४ ॥ अन्योन्यहृदयस्थत्वाद्दिवसंक्रांतमक्षतम् ॥ सर्वंशास्त्रार्थवैदग्ध्यंचित्राद्यपिमुखात्प्रभो ॥ ४५ ॥ बाल कालादिवागत्यसासीत्सर्वार्थपंडिता ॥ नृत्यवाद्यादियाचचचूडालावदनादसौ ॥ ४६ ॥ अशिक्षतयभूवाथकलानामतिकोविद ॥ अमावास्यामिवेंद्वर्कावन्योन्यविलसत्कलौ ॥ ४७ ॥ मिथोहृदयसस्थौतौद्वावप्यैक्यमुपागतौ ॥ तौसास्थितावेकरसावन्योन्यदयितावुभौ ॥ ४८ ॥ पुष्पामोदाविवाभिन्नौभूतलस्थौशिवाविव ॥ वैदग्ध्यसुंदरमतीसर्वशास्त्रार्थपंडितौ ॥ ४९ ॥ कार्यार्थंप्रभुवंप्राप्तौकमलाकमलाधवौ ॥ स्नेहाव्यसन्नमधुरौसमविज्ञातवादिनौ ॥ ५० ॥ अनुवृत्तिपरावाज्ञालोकवृत्तांततद्विदौ ॥ कलाकलापसंपन्नौलसद्भ्रसरसायनौ ॥ शीतलस्निग्धमुग्धागौशशांकोद्वाविवोदितौ ॥ ५१ ॥ रेजेलसच्चरतिभोगविलासकांतमंत पुरेपुमिथुनंतदनुत्तमश्रि ॥ ब्रह्मांडखंडकुहरेष्विवराजहंसयुग्मविकासिमदमन्मथमदचारि ॥ ५२ ॥ ॥ इ० वा० वा० दे० मो० नि० पू० चूडालोपाख्यानेशिखिध्वजविलासकथनंनामसप्तसप्ततितमसर्ग ॥ ७७ ॥ ॥ ६ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ एवंबहूनिवर्षाणिमिथुननिर्भरस्पृहम् ॥ रमेयौवनलीलाभिरमदाभिर्दिनेदिने ॥ १ ॥ अथयातेपुबहुपुवर्षपुवाटत्तिशालिपु ॥ शनैर्गलिततारुण्यभिन्नकुंभादिवांभसि ॥ २ ॥

स्यौभूमावबतीर्णौशिवौगौरीशंकराविव ॥ ४९ ॥ सहपत्येकप्रापृष्टसदेहपलोकशास्त्ररहस्यसमनुष्यकालतुल्यविषयचविज्ञातचतुरशीलययोस्तौ ॥ ५० ॥ परस्परगुरुहिताभिज्ञादीनांचानुवृत्ति प्रियहितविनयाद्याचारलत्परौ ॥ लोकवृत्तांतस्यतस्यशास्त्रैकगम्यधर्मरहस्यस्यचविदौ ॥ लसतिश्रृंगारादिनवरसलक्षणाभिरसायनानियययोस्तौ ॥ ५१ ॥ ब्रह्मांडस्यस्वमध्यावयवस्यसत्यलोकस्यकुहरेपुगंभीरसरस्सुराजहंसयोर्युग्ममिथुनमिव ॥ ५२ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्य० नि० पू० सप्तसप्ततितम सर्ग ॥ ७७ ॥ ॥ ९ ॥ तयो क्रमेणवैराग्यसच्छास्त्राभ्यासमिथुनात्चूडालायाविवेकोमहानलाभश्चवर्ण्यते ॥ १ ॥ निर्भरस्पृहदृढप्रेम ॥ मिथुनतत्त्वापुसहस्रम ॥ १ ॥ अथशनैस्तारुण्येगलतिसतितयुग्म इतिनिर्णीयअध्यात्मसमतशास्त्रविचारयामासतिदशमेएकादशेचसंबंध ॥ २ ॥

निर्णयहेतुप्रथमतत्कृतविचारप्रपचयति ॥ तरगेत्यादिना ॥ तरगनिकराकारेणभगुरेणदेहेनव्यवहरणशीलेदेहिनि ॥ मरणदेहवियोग. ॥ ३ ॥ कुतोदुर्निवारणंतत्राह ॥ हिमाश निरिति ॥ ४ ॥ तृष्णाभोगतत्साधनतृष्णाप्रावृषिकटुतुबीलतेवदीर्घतागतावर्ततइतियावत् ॥ रयोत्रवार्षिकपूर. ॥ ५ ॥ जीव्यतेअस्मिन्नितिर्जीवनदेहादि ॥ ६ ॥ दुःखान्या ध्यात्मिकादीनितृष्णाचचेतःपततिनिपत्यतुदतीतियावत् ॥ ७ ॥ अप्रियासपत्नीकामयतेयस्तस्यकाताप्रियतमेव ॥ ८ ॥ अरतिरिष्टविषयालाभनिमित्तदौर्मनस्यम् ॥ वैरस्यर सशोषः ॥ इहास्मिन्संसारे ॥ ९ ॥ दशासुजन्ममरणादिदुर्दशासु ॥ तद्युग्ममिथुनंइतिविषार्यतत्रअध्यात्मशास्त्रमेवसमारव्याधिभेषजनिर्णीयतदेवविचारयामासेत्यन्वय॰

तरंगनिकराकारभंगुरव्यवहारिणि ॥ पातःपक्कफलस्येवमरणंदुर्निवारणम् ॥ ३ ॥ हिमाशनिरिवांभोजेजरानिपतनोन्मुखी ॥ आयुर्गलत्यविरतंजलंकरतलादिव ॥ ४ ॥ प्रावृषीवलतातुंबीतृष्णैकादीर्घतांगता ॥ शैलनद्यारयइवसंप्रयात्येवयौवनम् ॥ ५ ॥ इंद्रजालमिवासत्यंजीवनंजीर्णसंस्थिति ॥ सुखानिप्रपलायंतेशराइवधनुश्च्युताः ॥ ६ ॥ पतंतिचेतोदुःखानितृष्णागृध्रइवामिषम् ॥ बुद्बुदःप्रावृषीवाप्सुशरीरंक्षणभंगुरम् ॥ ७ ॥ रंभागर्भइवासारोव्यवहारोविचारगः ॥ सत्वरंयुवतायातिकांतेवाप्रियकामिनः ॥ ८ ॥ बलादरतिरायातावैरस्यमिवपादपम् ॥ तदिहस्याच्छुभाकारंस्थिरंकिमतिशोभनम् ॥ ९ ॥ यदासाद्यपुनश्चेतोदशासुनविदूयते ॥ इतिनिर्णीययुग्मंतत्संसारव्याधिभेषजम् ॥ १० ॥ चिरंविचारयामासशास्त्रमध्यात्मसंमतम् ॥ आत्मज्ञानैकमात्रेणसंस्तृत्याख्याविषूचिका ॥ ११ ॥ संशाम्यतीतिनिश्चित्यतावास्तांतत्परायणौ ॥ तच्चित्तौतद्गतप्राणौतन्निष्ठौतद्विदाश्रयौ ॥ १२ ॥ तदातदर्चनपरौतदीहौतौविरेजतुः ॥ तत्रैवातिघनाभ्यासौबोधयंतौपरस्परम् ॥ १३ ॥ तस्मीतौतत्समारंभावन्योन्यंतौबभूवतुः ॥ अथसाविरतंरामरमणीयपदक्रमान् ॥ १४ ॥ श्रुत्वाध्यात्मविदांवक्त्राच्छास्त्रार्थांस्तारणक्षमान् ॥ इत्थंविचारयामासस्वमात्मानमहर्निशम् ॥ १५ ॥ अव्यापृताव्यापृतावाधियाधवलयेद्धया ॥ प्रेक्षेतावत्स्वमात्मानंकिमहंस्यामितिस्वयम् ॥ १६ ॥ कस्यायमागतोमोहःकथमभ्युत्थितःक्कवा ॥ देहस्तावज्जडोमूढोनाहमित्येवनिश्चयः ॥ १७ ॥ आबालमेतत्संसिद्धंमतौचैवानुभूयते ॥ कर्मेंद्रियगणश्चास्मादभिन्नावयवात्मकः ॥ १८ ॥

॥ १० ॥ ११ ॥ तद्विदाअध्यात्मशास्त्रविदएवाश्रयःशरणययोस्तौ ॥ १२ ॥ १३ ॥ तस्मिन्नध्यात्मशास्त्रएवसम्यक्तच्चिंतनतच्छ्रवणमन्योन्यतत्प्रबोधनमित्यादि.समारंभोययोस्तौ ॥ साचूडाला ॥ १४ ॥ इत्थवक्ष्यमाणप्रकारेण ॥ १५ ॥ अव्यापृतात्यक्तशारीरव्यापारा ॥ प्रेक्षेविविच्यपश्येयम ॥ अस्मिन्कार्यकारणसघातेअहचेतनधातुःकिस्याम ॥ १६ ॥ अयसंसारलक्षणोमोहोभ्रम कस्यागतः यस्यहिभ्रातिरागतासतन्निवारणेस्वस्थ.स्यात्सएवकइत्यर्थः ॥ कथवेतिनिमित्तजिज्ञासाक्केतितन्मूलजिज्ञासा ॥ मूलेहिपरिज्ञातेतदुच्छेदेनोच्छेत्तुसशक्य ॥ १७ ॥ मतौस्थूलोहगौरोहमित्यादिबुद्धिवृत्तौसत्यामेवानुभूयतेनस्वतइतितस्यजडत्वमित्यर्थः ॥ अस्माद्देहादभिन्नहस्तपाद्यवयवात्मकः ॥ १८ ॥

१ एवव्याख्यानेपुवद्भावानुपपत्तिः ॥ अप्रियसपत्नीसग्रहणकामयतइतिव्याख्यानेतुनकाप्यनुपपत्तिः   २ कथकैर्निमित्तैरित्यपिपाठः

बुद्धींद्रियमणोपिएवशरीरावयवात्मकएव ॥ यद्यप्यणवश्चेतिसूक्ष्मेंद्रियप्राणादय सूक्ष्मलिंगदेहावयवाएवनस्थूलदेहावयवाइतिवादरायणेनसिद्धांतिततथापितेपदिहावयव त्वेनैवापादितपामरमनुष्यादयवयवदेहस्यकल्पात्तत्ववयवजडत्वमेवेत्याशय ॥ १९ ॥ मनआदेरपिजडदेहादिपेरकत्वात्तत्संयोगयोग्यदृम्नयायस्याविरुद्धइत्यसिद्धमित्याह ॥ प्रेर्यतइत्यादिना ॥ २० ॥ सदासत्ताआत्मस्वभावेनेतिनिश्चय ॥ क्षेपणैरजुयंत्रे ॥ २१ ॥ खातेनखपदर्यानरालिकनिजदेशेन ॥ साबुद्धिर्भासतेप्रेर्यते ॥ २२ ॥ जीवेनभावावच्छिन्नचिदाभासेनजन्यतेअभ्यस्यते ॥ तथाचयक्षदेहवत्तस्याप्यसत्वादेवजडत्वमित्यर्थ ॥ वातात्माप्राणोपाधि ॥ २३ ॥ अंतरन्येनस्वातिर्यामिविवचेतन्यनपरिपूर्णोजीवति ॥ चत्यात्वस्य साक्षिभावेनविषयप्रकाशनतेनकलंकिनादूषितप्रायेण ॥ २४ ॥ जीर्णेनचिरंतनेन ॥ २५॥ चेत्योल्लेखकलंकिनेतिनिर्दोषपपत्तिमाह ॥ असत्येति॥

अवयवावयविनोनभेदोजडएववच ॥ बुद्धींद्रियगणोप्यवजडएवेतिदृश्यते ॥ १९ ॥ प्रेर्यतेमनसायस्माद्यष्ट्येवभुविलोष्टक ॥ मनश्चैवजडमन्येसकल्पात्मकशक्तियत् ॥ २० ॥ क्षेपणैरिवपाषाण प्रेर्यतेबुद्धिनिश्चयै ॥ बुद्धिर्निश्चयरूपैवजडामत्तैवनिश्चय ॥ २१ ॥ खातेनेवसरित्तूनसाहकारेणवाप्यते ॥ अहंकारोपिनि सारोजडएवशवात्मक ॥ २२ ॥ जीवेनजन्यतेयक्षोबालेनेवभ्रमात्मक ॥ जीवश्चचेतनाकाशोवातात्माहृदयेस्थित ॥ २३ ॥ सुकुमारोंतरन्येनकेनापिपरिजीवति ॥ अहोनुज्ञातमेतेनचेत्योल्लेखकलंकिना ॥ २४ ॥ जीवोजीवतिजीर्णेनचिद्रूपेणात्मरूपिणा ॥ चेत्यभ्रमवताजीवश्चिद्रूपेणैवजीवति ॥ २५ ॥ आमोद पवनेनेवखातेनेवसरिद्रय ॥ असत्यजडचेत्यांशचयनाचिद्वपुर्जडम् ॥ २६ ॥ महाजलगतोत्यग्निरिवरूपस्वमुज्झति ॥ सद्वासद्वायदाभातिचित्समाधौसतिस्वत ॥ २७ ॥ स्वरूपमलमुत्सृज्यतदेवभवतिक्षणात् ॥ एवंचिद्रूपमप्येतच्चेत्योन्मुखतयास्वयम् ॥ २८ ॥ जडशून्यमसत्कल्पचैतन्येनप्रबोध्यते ॥ इतिसंचिन्त्यचूडालाकेनैपायेनचेतनी ॥ २९ ॥ इतिसंचिंतयामासचिरायेत्यव्युत्थित ॥ अहोनुचिरकालेनज्ञातंज्ञेयमनामयम् ॥ ३० ॥

चयनात्साहस्यससमाध्यासाच्चिद्वपुश्चिरस्वभावमपितज्जडमिवसपन्नमित्यर्थ ॥ २६ ॥ महाजलतमजलसामुद्रघातशुतोग्निरिवस्वभास्वररूपमुज्झतिमुंचति॥ अतएवसत्ताशेचिद्विलक्षण्यमिवलब्ध्वापट सम्पट सच्चिनिसत्ताघटपटाद्यपिदाकारसमरसानुभूयते ॥ घटाद्याकारस्यमदारीलयेघटोनास्तिपटोनास्तीतिसत्ताकारमप्युज्झतीअभावतामप्यापद्यतइतिभाव ॥ चित्समाधौचेत्यैकाप्यसद्रूपमसद्रूपवायदेवभासनोपनीतंस्वतआभातितदेवक्षणात्सलपूर्णस्वरूपमसत्स्यतरक्षणात्स्वयभवतीतिपरेणान्वय ॥ २७ ॥ एवमुक्तरीत्यापरमार्थतश्चिद्रूपमपिअविद्यावरणाद्भ्यासपरंपरयाजडशून्यमसत्कल्पमसपन्नजगद्रूपमुद्भावनात्तत्स्वभावेनपरमन्येनैवतत्तत्त्वाकारवृत्तिभ्यास्यामूलाविद्यावरणभगहाराप्रबोध्यतइतिपरेणान्वय ॥ २८ ॥ तर्हिमूलाविद्यावरणभंगेनैपायमत्रचित्केनोपायेनदृश्यस्वप्रविहायप्रबोधयतीत्याचिंतितिचिंतितवतीत्याह ॥ इतीति ॥ २९ ॥ दृश्यसर्व्वमानप्रकारेणाप्यबुध्यत आत्मतत्वमित्यर्थ ॥ ३० ॥

---

१ शक्तिमदित्यपिपाठ

कश्चिदपिपुरुषोनहीयतेपरमपुरुषार्थात्प्रच्युतोनभवतीत्यर्थः ॥ अथवाकश्चिदपिकाम्योर्थोनहीयतेनहानिप्राप्यते ॥ तत्रास्यैवसर्वकामावाप्तेरित्यर्थः ॥ अथवाकिंचिद्वस्तुदुःखसाधनमितिबुद्ध्यानहीयतेनत्यज्यते ॥ सर्वस्याप्यानंदैकरसत्वसपत्तेरित्यर्थ. ॥ हानासभवोक्तिरुपादानस्याप्युपलक्षणम् ॥ चिद्विलासस्यअता.परिच्छेदहेतवः ॥ ३१ ॥ द्वितीयस्यनैमिरिकदृष्टिपरिकल्पितस्येदोःपदेस्थानेस्थिताभातिकल्पिताइतियावत् ॥ ३२ ॥ शुद्धसंवेदनमेवआकारःस्वरूपंयस्याः ॥ शिवभूमानंदरूपत्वात्परममंगलतादृशस्वभावात्कदाप्यप्रच्युतमित्यच्युतम् ॥ ३३ ॥ सकृन्मूलाविद्यावरणभगेनविभातानपुनःकेनाप्याव्रियतइतिसकृद्विभाता अतएवनित्योदयवतीपरिगीयतेवेदांताद्यध्यात्मशास्त्रेषुलक्षणया ॥ ३४ ॥ चेत्यादित्रिपुटीजालमस्याःसकाशाद्भिन्नवस्तुन यतएषात्रिपुटीतयासाक्षिभूतयाचेत्यतेनतुमानन सिद्धासैषासाक्षिचित्त्रिपुटीप्रवृत्तेःप्रागेवस्वतःसिद्धत्वादाद्या ॥ ३५ ॥ विजृंभतेविवर्तते ॥ ३६ ॥ मनोबुद्ध्यादिविवर्तैश्चिदात्मनिमातरिप्रमातृभावापन्नेसतितत्रतरंगादिकलनाप्रायाजगद्रूपभूतभौतिकपदार्थानांसत्ताअस्ति

**यद्वैविज्ञेयंतांकृत्वानकश्चिद्धीयतेपुनः ॥ एतेहिचिद्विलासांतामनोबुद्धींद्रियादयः ॥ ३१ ॥ असंतःसर्वएवाहोद्वितीयेंदुपदस्थिताः ॥ महाचिदेकैवास्तीहमहासत्तेतियोच्यते ॥ ३२ ॥ निष्कलंकासमाशुद्धानिरहंकाररूपिणी ॥ शुद्धसंवेदनाकाराशिवंसन्मात्रमच्युतम् ॥ ३३ ॥ सकृद्विभाताविमलानित्योदयवतीसदा ॥ साब्रह्मपरमात्मादिनामभिःपरिगीयते ॥ ३४ ॥ चेत्यचेतनचित्तादिनास्याभिन्नंनमानतः ॥ तयैपाचेत्यतेचिद्भीःसैषाद्याचिदितिस्मृता ॥ ३५ ॥ अचेत्यंयदिदंचित्त्वंतत्तस्यारूपमक्षतम् ॥ मनोबुद्धींद्रियाद्यर्थरूपैःसैवविजृंभते ॥३६॥ तरंगकणकल्लोलकलनेयंचिदात्मनि ॥ जगद्रूपपदार्थानांसत्तास्फुरतिमातरि ॥ ३७॥ यदिदंतत्परंरूपंतस्याःखलुमहाचितेः ॥ शुद्धचिन्मणिवत्साहिसेयंसमसमोदिता ॥ ३८॥ अनन्ययैवयाशक्त्याजगज्जृंभिकयास्थिता ॥ सत्तामायातिरेकेणनान्यासंभवतीहहि ॥ ३९ ॥ विचित्रतेवभांडानांननुहेमतयायथा ॥ सातथोदेतितद्रूपमात्मानंचेततिस्वयम् ॥ ४० ॥ स्वचित्तेनद्रवत्वेनतरंगादित्वमंबुषु ॥ महाचितौजगच्चित्तादुदेतीवानुदेत्यपि ॥ ४१ ॥**

तास्फुरति ॥ ३७ ॥ यदिदजगत्सत्तारूपंप्रसिद्धतत्तस्याअधिष्ठानभूतायामहाचितेरेवपररूपंद्रुपातरम ॥ खलुशब्दोद्वेवावब्रह्मणोरूपेमूर्त्तंचैवामूर्त्तंचेत्यादिश्रौतप्रसिद्धिद्योतनार्थः ॥ यतःसाहिचित्स्फटिकमणिवज्जगत्प्रतिबिंबमसंगैवधत्ते सेयजगत्सत्ताचव्यावहारिकेषुप्रातिभासिकेषुचसमसमास्वस्वाधिष्ठानानुसारिणीउदिता ॥ ३८ ॥ अतएवजगत्सत्तायाअधिष्ठानसत्तान्यत्वनिरूपणायोगान्मायामात्रत्वमित्याह ॥ अनन्ययैवेति ॥ ३९ ॥ अतएवनामरूपविशेषप्रलयेजगत्सत्तामायाशबलब्रह्मसत्तात्मनैवपरिशिष्यते ॥ मायाबाधेतुआनंदैकरससन्मात्ररूपमात्मानस्वयमनुभवतीत्याह ॥ विचित्रतेवेति ॥ भांडानामलकारजातानाविचित्रतायथाप्रविलयेहेमतयाहेमसत्तात्मनैवोदेतितथेत्यर्थः ॥ ४० ॥ सत्तायांदर्शितन्यायेनैवजगद्वैचित्र्यस्फुरणरूपचिद्भेदानामपिविषयाकारभेदेमिथ्यात्वपर्यालोचनेअपरिच्छिन्नपरब्रह्मचिन्मात्रतापर्यवस्यतीत्याशयेनाह ॥ स्वचित्तेनेतिद्वाभ्याम ॥ यथास्वमेंद्रजालादौद्रवत्वेनपरिणतेनस्वचित्तेनसिद्धेषुसमुद्राद्यंबुषुतरंगादिअनुदयप्युदेतीवतथामहाचितौब्रह्मण्यपिसमष्टिचित्ताज्जगदनुद्यदप्युदेतीत्यर्थ ॥ अनुदेतीतिनअस्तिढंतेनसहेतियोगविभागात्समासश्छांदसोवा ॥ ४१ ॥

१ एवेहेतिक्वचित्पाठ.

अस्त्येवेत्यत आह ॥ तदिति ॥ तत्तमस्त्रमेव चिद्रूप आलीव विस्तकल्पितजलरूपेण रूपवान् सत्तरंगादिरूपेणेवान्यथा यामस्त आलम्य तिरिक्तं नाणुमात्रमपि किंचिदस्ति एवमपि ॥ ४२ ॥ त्मात्ममवाहजगद्गानविशेषभेदे सपञ्चो न परमार्थतः पूर्णचिदात्मनो मत्तो व्यतिरिक्तमणुमात्रमप्यस्तीत्यहं भावस्याप्यपरिशेषादनहंभावचिन्मात्रमेवाततं विस्तीर्णमित्यर्थः ॥ ४३ ॥ मरणं देहवियोगो नाशो व्यसद्दत्तिर्वा ॥ सदसद्गती स्वर्गनरकौ ॥ ४४ ॥ तथप्रस्तुतविचारस्यावधौ विश्रांतिं दर्शयति ॥ अच्छेद्य इति ॥ ४४ ॥ आसे शासस्तोरिति सलोपः ॥ अमरणं देहवियोगो नाशो व्यसद्दत्तिर्वा ॥ ४५ ॥ चिरकालिकपरिच्छेदरहितम ॥ अनंतदेशवस्तुकृतपरिच्छेदरहितम ॥ ब्रह्मादिस्तंबपर्यंतप्राणिकर्मफलौघाश्वकारास्तत्साधनव्यापारा अफलत्वादस्यामासोयस्मिन् ॥ ४६ ॥ पुस्तककलाचित्रपुरुषजातिसत्तकममयी तन्निर्मिता ॥ अथवा पुस्त्वप्रतिमायां कल्पितापुरुषजातिः ॥ कर्म लारिकानिष्फलसाधनायथावेष्टाध्वइरमाकाशमेवनान्यत् ॥ ४७ ॥

तदात्मैवयथायातोरूपवान्जलधौद्रवात् ॥ एवंचिन्मात्रमेवाहमनहंभावमाततम् ॥ ४२॥ नतस्यजन्ममरणेनतस्यसदसद्गती ॥ ननाश सत्तवत्यस्यचिन्मात्रनभसःक्वचित् ॥ ४३ ॥ अच्छेद्योयमदाह्योयंचिदादित्योतिनिर्मल ॥ आहोनुचिरकालेनशांतास्मिपरिनिर्वृता ॥ ४४ ॥ निर्वामिभ्रमनिर्मुक्तमासेनिर्मंदराब्धिवत् ॥ असदाभासमत्यच्छमनंतमजमच्युतम् ॥ ४५॥ आत्माकाशमनाबाधममलपरमचिरम् ॥ अनंतमिदमाकाशंफलौघाश्वाफलादिका ॥ ४६॥ सुरासुरयुतविश्वमेतन्मयमकृत्रिमम् ॥ पुस्त्वकर्ममयीसेनासर्वेन्न्मात्रकयथा ॥ ४७॥ द्रष्टदृश्यमयीसत्ताचिन्मात्रैक्यमयीतथा ॥ इदमैक्यमिदद्वित्वमहनाहमितीतिच ॥ ४८ ॥ कइवभ्रमसमोह कथकस्यकृतःकवा ॥ स्वमनतमनायासमुपशांतास्मिसस्थिता ॥ ४९ ॥ निर्वाणपरिनिर्वाणागतमासेगतज्वरम् ॥ अचेतनचेतनंवायोयमाभातिचेतति ॥५० ॥ भासमानात्मतद्रूपखंमहाचितिसस्थितम् ॥ नेदनाहंनचान्यच्चनभावाभावसंभव ॥ शांतसर्वंनिरालयकेवलंसस्थितपरम् ॥५१॥ इत्थंविचारणपरापरमप्रबोधाद्बुद्धायथास्थितमिदपरमात्मतत्त्व ॥ सशांतरागभयमोहतमोविलासाशांतायभूवशरदम्बरलेखिकेव ॥५२॥ ॥इ०वा०वा०दे० मोक्षोपायेपुनिर्वाणप्रकरणेपू०भृहालाप्रबोधोनामअष्टसप्ततितम सर्ग ॥ ७८ ॥ ॥७॥
श्रीवसिष्ठउवाच ॥ ॥दिनानुदिनमित्येषास्वात्मारामतयातया ॥ नित्यमंतर्मुखतयाथभूवप्रकृतिस्थिता ॥ १ ॥

तदनुरूपचलनादि तन्मयीभ्य पुस्तचित्रादिनिर्मितसेना ॥ ४७ ॥ ४८ ॥ किंवस्तुचतुष्टयप्रकारभोक्तृनिमित्ताधिकरणसभावनाप्रतिषेधार्थम ॥ स्वपारमार्थिकरूपप्राप्त्येतिशेष ॥ ४९ ॥ निर्वाणमोक्षसुखेपरितोनिर्वाणानिर्वाणागतभवज्वरगमकठपामीकरवआप्तस्वरूपमेवाहमासे ॥ यदचेतनचेतनवाभाभाति योयतद्भोक्तार्थंचेतति तदुभयभासमानात्माभिन्नयद्रूपतद्रूपस्वचिदाकाशमेवेतिपरेणान्वय ॥ ५० ॥ किंद्वताद्वतान्यत्वादिजगत्स्वभावमस्त्विति चेन्नेत्याह ॥ नेदमिति ॥५१॥ उक्तमेवसंक्षिप्योपसंहरति ॥इत्थमिति॥ परमप्रबोधादात्यंतिकमोहनिद्रापगमात्सशांतारागादयस्तमोविलासाअवस्थायस्तमायस्या ॥ ५२ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू० अष्टसप्ततितम सर्ग ॥ ७८ ॥ ॥७॥ ॥ अपूर्वमीमतीदृष्टापृष्ट्याधरणीगता ॥ भूहालयारस्यशोभायाहेतुर्योभोग्यवर्ण्यते ॥ १ ॥ एवविचारेणोत्पन्नस्यतत्त्वज्ञानस्याभ्यासादिनक्रमेणापरोक्षभूमिकाप्रतिष्ठामाह ॥ दिनानुदिनमिति ॥ दिनानुदिनंदिनक्रमेण ॥ नित्यमर्तर्मुखपरमति स्वाभाविकरूपतस्मिन्स्थितापतिष्ठिता ॥ १ ॥

तस्यास्तत्प्रतिष्ठालक्षणान्याह ॥ नीरागेत्यादिना ॥ २ ॥ परिपूर्णादेहादांतरात्मनसोऽप्यांतर प्रत्यगात्मायस्या ॥ ३ ॥ सुचिरंप्राक्संसारश्रांतातदा निरतिशयानंदघनेज्ञानलब्धे पदांतरेपरमपदेविश्रांता ॥ ४ ॥५॥ कथमल्पकालिकेनबोधेनानादेर्महत्तमस्यचभ्रमस्यनिवृत्तिस्तत्राह॥यथेति ॥ कश्चिदनिर्वचनीयस्वरूपःस्पंदविभ्रमःअविदुषिअकस्माद्देवागतस्तथातत्त्वज्ञानवतिसर्वंनि शेषमकस्मादेवविलीयतइत्यर्थः ॥ दीर्घपाठेयथाविलीयतेतथातत्त्वज्ञानवतांवभूवेतिकथंचिद्व्याख्येयम ॥ ६ ॥ नष्टमकलद्वैतेयत्रतथाविधेपदे ॥ ७ ॥ यथाजरद्गवीवृद्धागौर्दुरारोहतमसंतृणोदकसमालोकतुल्यातपचद्रिकोपभोगंशैलाग्रदेशंप्राप्यअनाकुलासंस्थिताभवतितद्वत्सापिसमालोकजापदादिसर्वावस्थास्वेकरूपप्रकाशप्रत्यगात्मानजामदाद्यसबंधात्मनास्वज्ञावेनप्राप्यतस्मिन्नेवात्मन्यनाकुलासंस्थितेत्यर्थः ॥ ८ ॥ आत्मनस्तत्त्वदर्शनप्रयुक्तेनोदयेनपूर्णानंदस्वरूपाविर्भावेण ॥९॥ स्म

नीरागानिरुपासंगानिर्द्वंद्वानिःसमीहिता॥नजहातिनचादत्तेप्रकृताचारचारिणी॥२॥ परितीर्णभवांभोधिःशांतसंदेहजालिका॥परमात्ममहालाभपरिपूर्णांतरात्मना॥३॥ विश्रांतासुचिरंश्रांताघनलब्धपदांतरे॥ सर्वोपमातीततयाजगामाव्यपदंस्थताम्॥४॥इतिसाभामिनीतस्यचूडालावरवर्णिनी॥स्वल्पेनैवहिकालेनययौविदितवेद्यताम्॥५॥ यथायमागतःकश्चिज्जागतःस्पंदविभ्रमः॥तथाविलीयतेसर्वंतत्त्वज्ञानवतिस्वयम्॥६॥ अदृष्टसकलेशांतेपदेविश्रांतिमेत्यसा॥ रराजशरदच्छाभ्रमालेवगतसंभ्रमा॥७॥ अनाकुलासमालोकमसंबंधात्मनात्मनि॥जरद्गवीवशैलाग्रंसतृणंप्राप्यसंस्थिता॥८॥स्वविवेकघनाभ्यासवशादात्मोदयेनसा॥शुशुभेशोभनापुष्पलतेवाभिनवोद्गता॥ ९ ॥ अथतामनवद्यांगींकदाचित्सशिखिध्वजः॥ अपूर्वशोभामालोक्यस्मयमानउवाचह॥१०॥ भूयायौवनयुक्तेवमंडितेवपुनःपुनः॥ अधिकंराजसेतन्विजगद्राजवतीयथा॥११॥ प्रपीतामृतसारेवलब्धालभ्यपदेवच॥ आनंदापूरपूर्णेवराजसेनितरांप्रिये॥ १२ ॥ उपशांतंचकांतंचदधानासुंदरंवपुः॥ अभिभूयेंदुमायासिश्रियंकामपिकामिनि॥ १३ ॥ अभोगकृपणंशांतमूर्जितंसमतांगतम्॥ गंभीरंचप्रशांतंचचेतःपश्यामितेप्रिये॥१४॥तृणीकृत्यत्रिभुवनंपीताखिलजगद्रसम्॥अनंतोद्दामरंसौम्यंमनःपश्यामितेप्रिये॥१५॥नकेनचिन्महाभागेविभवानंदवस्तुना॥चेतस्तवतुलामेतिमरुक्षीराब्धिसुंदरम्॥१६॥ तैरेवबालकदलीमृणालांकुरकोमलैः॥ अंगैःस्थितिमनुप्राप्तैर्वर्द्धियातेवलक्ष्यसे॥ १७॥ तथातेनैवतेनैवसन्निवेशेनसंस्थिता॥ अन्यतामुपयातासिलतेवऋतुपर्यये॥१८॥

यमानोविस्मयस्मेरास्य ॥ १० ॥ जगत्जगती ॥ वर्तमानेपृषन्महद्बृहज्जगच्छतृवच्चेतिशतृवद्भावातिदेशादुगितश्चेतिस्त्रियांङीपूछादसत्वान्नकृतः ॥ राजवतीराजन्वतीपूर्णचंद्रवतीवायथाराजतेतद्वद्राजसे ॥ ११ ॥ १२ ॥ १३ ॥ ऊर्जितविवेकोर्जितम ॥ शांतशमादिगुणवत ॥ प्रशांतमुपरतचापलम ॥ १४ ॥ १५॥ मरुरिवनिर्जलजाड्यनयाक्षीराब्धिरिवपूर्णतयाचसुंदरम् ॥ ॥ १६ ॥ स्थितिमचापल्यमुपायातैस्तैःप्राक्तनैरेवांगैरवयवैस्तेजोतिशयेनवर्द्धियातेव ॥ १७ ॥ ऋतुपर्ययेशिशिरात्यये ॥ १८ ॥

१ मूलस्थतृणपदमुदकस्याप्युपलक्षणमित्यर्थः

मयामोरसायनादिमयाग आयोमोमयाविविद्धिर्युक्तयोराभयोगहठयोगोपायास्ताभ्यइतिमम ॥ १९ ॥ २० ॥ एवराज्ञापृष्टाचूडालास्वशोभातिशयनिमित्तपरिच्छिन्नदेहा
स्मतास्याम पृष्याहिनीयमहात्मलाभश्चेतिगूढोक्त्याप्रथममुत्तरमाह ॥ नाकिंचिदिति ॥ अहमिदसर्वमूढजनप्रसिद्धमिदशरीरात्मत्वत्यक्त्वा न विद्यते आकिंचिदशेषा किंचिन्मा
महापारापस्त्रियाविषमहात्मत्वेतरबाधेनआगतानतुममरसायनादिसाधनमात्रेण किंचित्किंचिदस्त्यनुच्छत्ततत्तिरस्याकारतेनेत्यर्थ ॥ अथवा अहं किंचित्किंचिदाका
रजापास्वमावस्थाद्दयनागतानाप्यत्किंचित्किंचिदाकारसुपुमरूपाकिनुदवमवस्थाप्रथममपिस्वकामुगीयस्वभावमागतातेनहेतुनेत्यर्थः ॥ अथवा अहं कर्मोपासना विनाकिंचित्कि
चिदाकारद्दद्वद्वादिहिरण्यगर्भातरभावनाकृततारस्यासिध्यानागता नाप्याकिंचित्किंचिदाकारमभ्यक्तरूपाकिंत्विदसर्वेत्यक्त्वास्यस्वरूपएवावस्थितातेनहेतुनेत्यर्थ ॥ अथवा

किंत्वयापीतमम्तप्रासमायान्यमेववा ॥ अमृत्यु मेवसप्रामाप्रयोगायोगयुक्तित ॥ १९ ॥ राज्यार्चिंतामणेवापित्रैलोक्याद्वात्वयाधि
कम् ॥ अप्राप्तंकिमनुप्राप्तनीलोत्पलविलोचने ॥ २० ॥ ॥ चूडालोवाच ॥ ॥ नाकिंचिर्त्किंचिदाकारमिदत्यक्त्वाहमागता ॥ नकिंचि
त्किंचिदाकारतेनास्मिश्रीमतीस्थिता ॥ २१ ॥ इदसर्वपरित्यज्यसवमन्यन्मयाश्रितम् ॥ यत्तत्सत्यमसत्यचतेनास्मिश्रीमतीस्थिता ॥
॥ २२ ॥ यत्किंचिन्नकिंचिच्चतज्जानामियथास्थितम् ॥ यथोदययथानाशतेनास्मिश्रीमतीस्थिता ॥ २३ ॥ भोगैरभुक्तैस्तुष्यामिभुक्तै
रिवसुदूरगैः ॥ नहृष्यामिनकुप्यामितेनास्मिश्रीमतीस्थिता ॥ २४ ॥ एकैवाकाशसंकाशेकेवलेहृदयेरमे ॥ नरमेराजलीलासुतेनास्मिश्री
मतीस्थिता ॥ २५ ॥ आत्मन्येवहितिष्ठामित्यासनोद्यानसद्मसु ॥ नभोगेपुनलज्जासुतेनाहश्रीमतीस्थिता ॥ २६ ॥ जगतांप्रभुरेवास्मि
नकिंचिन्मात्ररूपिणी ॥ इत्यात्मन्येवतुष्यामितेनाहश्रीमतीस्थिता ॥ २७ ॥ इदचाहमिदनाहसत्याचाहनचाप्यहम् ॥ सर्वमस्मिनकिंचि
च्चतेनाहश्रीमतीस्थिता ॥ २८ ॥ नसुखप्रार्थयेनार्थनानर्थनेतरांस्थितिम् ॥ यथाप्राप्तेनतुष्यामितेनाहश्रीमतीस्थिता ॥ २९ ॥

अहमिदंलिंगदेहपरिच्छिन्नजीवाकारत्यक्त्वायन्नाकिंचित्किंचिदात्मकआकारोयस्यतथाविधपरमार्थतोनाकिंचित्किंचिदाकारचब्रह्मत्वमागतामामवर्तातेनहेतुनेत्यर्थः ॥ २१ ॥
उक्तमेवार्थमन्यतरेणपुनराह ॥ इदमिति ॥ इदपरिच्छिन्नसर्वंपरित्यज्यसर्वमपरिच्छिन्नमन्यन्मयाआश्रितम ॥ किंतत् ॥ यत्तत्सत्यमबाधितनविद्यतेसम्मूर्तस्यवमूर्तत्वप्रपंच
रूपयप्रत्यसत्यच ॥ तनेनिप्रागवत् ॥ २२ ॥ नकिंचित्किंचिदाकारमितिश्लोक्तिभङ्ग्यतरेणप्रपंचयति ॥ यदिति ॥ यद्वस्तुउदय सगस्तमनतिक्रम्येतियथोदयस्वदृष्टिदशादस्यमा
नकिंचित्परिच्छिन्न यदेवचयथानाशमस्यदशादस्यमामनाकिंचिद्भक्षितयथायेनकूटस्थभूमानदस्वभावेनस्थितजानामीत्यर्थ ॥ २३ ॥ २४ ॥ हृदयपदेनहार्दब्रह्मल
क्ष्यते ॥ २५ ॥ आसनोद्यानादिपुरेहस्थितमप्यहपूर्णात्म्यवतिष्ठामिमनुभूषणसम्मानादिशारीरमानसभोगेपुतत्वलाभमयुक्तलज्जासुचा ॥ २६ ॥ २७ ॥ इददेहादिचास्तदुपभो
ग्यमधिष्ठानदशाआरोपितदशानुनाहम् ॥ २८ ॥ मामर्थजिहासामानिरोप ॥ २९ ॥

वयस्याभिःसखीभूताभि· तनु कृशीभूतो विद्वेषोरागश्चयाभिस्तथाविधाभि स्वप्रज्ञाभिःशास्त्रदृष्टिभिश्चसहरमे ॥ अथवाशास्त्रदृष्टिभि.करणैस्तनुरल्पीभूतोविद्वेषोरागश्चयासां तथाविधाभिर्वयस्याभि.सखीभि.सहरमे ॥ ३० ॥ अंगहेनाथइहजगतिअहनयनरश्मिभिरन्यैर्वाइंद्रियैश्चित्तेनचयत्पश्यामितन्नकिंचिदस्तमेव ॥ तेनेंद्रियमनोदृश्येनविरहितंतुनकिंचिन्निष्प्रपंचवस्तुअत.पश्यामि ॥ यतोहेतोरितिवर्णितरीत्याअंतर्बहिश्चसम्यगबाधितरूपंपश्यामि तेनहेतुनाचिरसततमुदितापरमाभ्युदयश्रीमतीअस्मीत्यर्थः ॥ ३१ ॥

॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू०एकोनाशीतितमःसर्गः ॥७९॥ ॥ ७ ॥ ॥ अज्ञेनराज्ञातद्वाक्यस्यासंबद्धत्ववर्णनम् ॥ खेचरत्वादिसिद्धीनां बीजंचात्रनिरूप्यते ॥ १ ॥ एवंवर्णितप्रकारेणस्वशोभातिशयेनिमित्तानिवदतीम् ॥ १ ॥ बालाअप्रौढबुद्धिरसि ॥ परबोधानुकूलवाक्योच्चारणेअकुशलेतियावत् ॥ २ ॥ अ

तनुविद्वेषरागाभिःप्रज्ञाभिःशास्त्रदृष्टिभिः ॥ रमेसहवयस्याभिस्तेनाहंश्रीमतीस्थिता ॥ ३० ॥ पश्यामियन्नयनरश्मिभिरिंद्रियैर्वाचित्तेनचेहहितदंगनकिंचिदेव ॥ पश्यामितद्विरहितंतुनकिंचिदंतःपश्यामिसम्यगितिनाथचिरोदयास्मि ॥ ३१ ॥ ॥इत्यार्षेवा०वा०दे०मोक्षोपायेषुनि०पू०चूडालात्मलाभोनामैकोनाशीतितमःसर्गः ॥ ७९ ॥ ॥ ७ ॥ ॥श्रीवसिष्ठउवाच ॥ ॥एवमात्मनिविश्रांतांवदंतींतांवराननाम् ॥ अबुध्वातद्गिरामर्थंविहस्योवाचभूपतिः ॥१॥ ॥ शिखिध्वजउवाच ॥ ॥ असंबद्धप्रलापासिबालासिवरवर्णिनि ॥ रंमसेराजलीलाभीरमस्वावनिपात्मजे ॥ २ ॥ किंचित्त्यक्त्वानकिंचिद्योगतोप्रत्यक्षसंस्थितम् ॥ त्यक्तप्रत्यक्षसद्रूपःसकथंकिलशोभते ॥ ३ ॥ भोगैरभुक्तैस्तुष्टोहमितिभोगान्जहातियः ॥ रुषेवासनशय्यादीन्सकथंकिलशोभते ॥ ४ ॥ भोगाभोगेपरित्यज्यखेशून्येरमतेतुयः ॥ एकएवाखिलंत्यक्त्वासकथंकिलशोभते ॥ ५ ॥ वसनाशनशय्यादीन्सर्वान्संत्यज्यधीरधीः ॥ यस्तिष्ठत्यात्मनैवैकःसकथंकिलशोभते ॥ ६ ॥ नाहंदेहोन्यथाचाहंनकिंचित्सर्वमेवच ॥ एवंप्रलापोयस्यास्तिसकथंकिलशोभते ॥ ७ ॥ यत्पश्यामिनपश्यामितत्पश्याम्यन्यदेवयत् ॥ प्रलापइत्यसन्यस्यसकथंकिलशोभते ॥ ८ ॥

सबद्धप्रलापतामेवनाकिंचित्किंचिदित्याद्युक्तेर्दर्शयति ॥ किंचिदिति ॥ साकारस्यैवशोभाप्रसिद्धा यस्त्वाकारसामान्यंत्यक्त्वानिराकारतांगतःसशून्यप्रायःकथंशोभेतेत्यर्थः ॥ ३ ॥ भोगैरभुक्तैस्तुष्यामीतियत्त्वयोक्तंतदप्यसबद्धमित्याह ॥ भोगैरिति ॥ रुषाक्रोधेनेव ॥४ ॥ एकैवाकाशसंकाशेकेवलेहृदयेरमेइतियत्त्वयोक्ततदप्यसंगतमित्याह ॥ भोगाभोगेइति ॥ स्वयसाक्षाद्भोगोमित्रभृत्यादीनामाभोजनमाभोगश्चेत्यनयोःसमाहारपरित्यज्यतत्साधनंवित्ताद्यखिलंचत्यक्त्वायएकएवशून्येखेपिशाचवद्रमतेसकिलशोभते इतिकथसंगच्छतामित्यर्थः ॥ ५ ॥ धीरधीःअतिक्रोधादिवधैर्यमात्रबलेनशीतोष्णक्षुत्तृषादिदुःखानिसहमानइत्यर्थः ॥ ६ ॥ इदंचाहमिदंनाहमितियदुक्ततदप्यसबद्धमित्याह ॥ नाहमिति ॥ ७ ॥ पश्यामियन्नयनरश्मिभिरिंद्रियैर्वेत्यंतेयदुक्तंतत्तुसुतरामसंगतमितिनैतेशोभाहेतवइत्युपसंहरति ॥ यदिति ॥८ ॥

॥ ९ ॥ १० ॥ कष्टमिति ॥ नचेदिदानींमहतीविनष्टिरित्यादिमुनेरितिभाव ॥ ११ ॥ अंगेतिरामसंबोधने ॥ १२ ॥ खेगमागमोदेवघत्तचारस्तद्विषयेइच्छावभूव ॥ ता
दृशाशारम्भातवस्तारितिभाव ॥ १३ ॥ १४ ॥ एकैवति ॥ अर्थाद्भर्तु शत्रुजयायद्विमिहायनप्रवासकालेइतिगम्यते ॥ अन्यथातत्पराधीनायास्तस्या एकांतनिरतत्वायो
गात् ॥ ऊर्ध्वगस्यप्राणपवनस्यचिरस्वचरसिद्ध्यनुकूलभूमध्यादिदशानिरोधाभ्यासम ॥ १५ ॥ खेचरसिद्धिप्रयोजककियाप्रसंगेनराम क्रियासामान्येनिमित्तजिज्ञासुराक्षिप
ति ॥ यदिदमिति ॥ यदिदंस्थावरजंगमचजगत्तत्सर्वंस्पंदच्युतक्रिययानिष्पादितंदृश्यते विनाकर्मादिकारकस्पंदकस्याप्युत्पत्तेरदर्शनात ॥ तथैवसतिक्रियानाम स्पंदस्यकथंनि
ष्पत्ति स्पंदक्रियाकूटस्थात् आद्येआत्माश्रयोऽनवस्थावा द्वितीयेप्याघातःअविराम फलानवस्थाचेतिकथंक्रियानाम्नोवस्तुनउत्पत्तिरनुभूयतेअनुभवपथमारोहतिनव

तस्माद्बालासिमुग्धासिचपलासिविलासिनि॥नानालापविलासेनक्रीडामिक्रीडसुंदरि ॥ ९ ॥ प्रविहस्याट्टहासेनशिखिध्वजइतिप्रि
याम्॥ मध्याह्नस्नातुमुत्थायनिर्जगामांगनागृहात्॥ १०॥ कष्टनात्मनिविश्रांतोमहद्वचांसिनयुक्तवान्॥ राजेतिखिन्नाचूडालास्वव्यापा
रपराभवत्॥ ११ ॥ तदातथांगतत्रायतादृगाशययोस्तयो ॥ ताभि पार्थिवलीलाभि कालोबहुतिथोययौ ॥ १२ ॥ एकदानित्यवत्सा
यानिरिच्छायाअपिस्वयम्॥ चूडालायाबभूवेच्छालीलयाखगमागमे॥ १३॥ खगमागमसिद्ध्यर्थमथसानृपकन्यका॥ सर्वभोगान
नादृत्यसमागम्यचनिजनम्॥ १४॥ एकैवैकांतनिरतास्वासनावस्थितागिका॥ ऊर्ध्वगप्राणपवनचिराभ्यासचकारह॥ १५॥ ॥श्री
रामउवाच॥ ॥यदिदंदृश्यतेकिंचिज्जगत्स्थावरजंगमम्॥ स्पंदच्युतंक्रियानाम कथमित्यनुभूयते॥ १६॥ कस्यस्पंदविलासस्यघना
भ्यासस्यमेवद॥ब्रह्मन्खगमनाद्येतत्फलयत्नैकशालिन ॥ १७॥ आत्मज्ञोवाप्यनात्मज्ञ सिद्ध्यर्थलीलयाथवा॥ कथंससाधयत्येतद्य
थातद्वदमेप्रभो॥ १८॥ ॥श्रीवसिष्ठउवाच॥ ॥त्रिविधंसंभवत्यंगसाध्यंवस्त्विहसर्वत ॥उपादेयंचहेयंचतथोपेक्ष्यंचराघव॥ १९॥

इत्यथ ॥ १६ ॥ एवमाक्षिप्यप्रस्तुतंपृच्छति ॥ कस्येति ॥ एतत्खगमनादिसिद्धिजातंकस्यस्पंदविलासस्यफलंतद्वदेत्यथ ॥ १७ ॥ अनात्मज्ञ सिद्ध्यर्थंआत्मज्ञोलीलया
वाएतत्सिद्धिजातंकथंकेनक्रमेणससाधयतितद्वदेत्यथ ॥ १८ ॥ अवेद्यमात्माश्रयानवस्थादिकोदोषोयदिक्रियास्वरूपमात्रसिद्ध्येकारकापेक्षास्यात् नतुतथाकिंतुक्रि
यासाध्यस्यफलस्य फलनिष्पत्तयेहियस्तानिकारकाणिनांतरीयकतयाक्रियामपेक्षन्ते ॥ तथाहिफलस्यसाध्यताकारकाणांसाधनताचव्यपदेष्टुशक्यते ॥ तथाचसाध्यसा
धनोभयविलक्षणाक्रियानसाध्यापेक्षितसाधनेभ्य साधनांतरमपेक्षतइतितस्याःसक्रियकूटस्थकारणमितिविवक्षयानिरवकाशएवेत्याशयेनवसिष्ठउत्तरमप्रसमाधानानुकूल
गौणमुख्यसाधारणंक्रियासाध्यविभज्यदर्शयति ॥ त्रिविधमिति ॥ उपादानबुद्धिविषयीभूतवस्तुउपादेयप्रवृत्तिविषय हानबुद्धिविषयहेयनिवृत्तिविषय उपेक्षाबुद्धिगम्यमुपे
क्ष्यतदीयारादीप्येपिकपोपचाराद्वेनोपक्षयायपनर्थ कृतइतिलोकव्यवहारदर्शनाद्बोध्यंसाध्यत्वम ॥ १९ ॥

तेषुफलवैलक्षण्यदर्शयति ॥ आत्मभूतमिति ॥ आत्मनःस्वस्यभूतमनुकूलम् ॥ एतयोर्हेयोपादेययोर्मध्यमांतरालिकम् ॥२०॥ आह्लादनकरंसाक्षात्परंपरयावासुखानुकूलम् ॥ दुःखनिवारणसाधनस्यापिसुखानुकूलत्वादेवतत्साधनोपादानसिद्धेरितिभावः ॥ तद्विरुद्धसुखविघाति ॥ दुःखस्यापिस्वास्थ्यसुखविघातित्वादेवद्वेष्यत्वादितिभावः ॥ २१ ॥ त्रयएतेसाध्यभेदाअज्ञानामेवेत्याह ॥ सन्मतेरिति॥२२॥विदुषस्तृतीयकल्पाभ्युगमेपिनकश्चिद्दोषइत्याशयेनाह ॥ केवलमिति ॥ २३ ॥ एकमेववस्तुएकस्यैवपुरुषस्यबोधरोग वैराग्यावस्थाभेदेनत्रेधासपद्यतेइत्याशयेनाह ॥ ज्ञस्येति ॥ एवसिद्ध्यर्थलीलयाथवाइतिप्रश्नाशयोरुपपत्तिमुक्त्वाकथंसंसाधयत्येतदित्यंशसमाधानश्रावयति ॥ शृण्वित्यादि ना ॥ २४ ॥ तत्रसिद्धितारतम्येचिराचिरयत्नापेक्षायाचनिमित्तान्याह ॥ देशेति ॥ २५ ॥ एषादेशादीनाचतुर्णांमध्येश्रीशैलाद्युत्तमदेशादिचतुष्टयमेलनेशीघ्रंसिद्धिलाभाद्यो गमत्रजपादिक्रियायाइतरदेशाद्यनुष्ठितक्रियापेक्षयाप्राधान्यस्योत्कर्षस्यकल्पनाभवति ॥ फलोत्कर्षोपितदनुसार्येवेत्याह॥सिद्धादीति ॥ यतस्तेसिद्धादयःफलोत्कर्षक्रमाअ

आत्मभूतंप्रयत्नेनउपादेयंचसाध्यते ॥ हेयंसंत्यज्यतेज्ञात्वाउपेक्ष्यंमध्यमेतयोः ॥ २० ॥ यद्यदाह्लादनकरमादेयंतच्चसन्मते ॥ तद्विरुद्धम नादेयमुपेक्ष्यंमध्यमंविदुः ॥ २१ ॥ सन्मतेर्विदुषोज्ञस्यसर्वमात्ममयंयदा ॥ त्रयएतेतदापक्षाःसंभवंतिनकेचन ॥ २२ ॥ केवलंसर्वमेवे दंकदाचिल्लीलयातया ॥ उपेक्षापक्षनिक्षिप्तमालोकयतिवानवा ॥ २३ ॥ ज्ञस्योपेक्षात्मकंनाममूढस्यादेयतांगतम् ॥ हेयंस्फारविराग स्यशृणुसिद्धिक्रमःकथम् ॥ २४ ॥ देशकालक्रियाद्रव्यसाधनाःसर्वसिद्धयः ॥ जीवमाह्लादयंतीहवसंतइवभूतलम् ॥ २५ ॥ मध्येचतु र्णामेवैषांक्रियाप्राधान्यकल्पना ॥ सिद्ध्यादिसाधनेसाधोतन्मयास्तेयतःक्रमाः ॥ २६ ॥ गुटिकांजनखड्गादिक्रियाक्रमनिरूपणम् ॥ त त्रासतांचदोषोत्रविस्तारःप्रकृतार्थहा ॥ २७ ॥ रत्नौषधितपोमंत्रक्रियाक्रमनिरूपणम् ॥ आस्तामेवकिलैषोपिविस्तारःप्रकृतार्थहा ॥ २८ ॥श्रीशैलेसिद्धदेशेचमेर्वादौवानिवासतः ॥ सिद्धिरित्यपिविस्तारःकृतार्थप्रकृतार्थहा ॥ २९ ॥

पितन्मयास्तादृशक्रियोत्कर्षानुसारिणइत्यर्थः ॥ २६ ॥ अस्त्वेवंकिंनतस्तत्राह ॥ गुटिकेति ॥ तत्रखगमनादिसाधनानिसिद्धगुटिकासिद्धांजनसिद्धखड्गसिद्धपादुकादीन्यपि उड्डामरतन्त्रयोगिनीकल्पादिविस्तृतबहुग्रंथप्रसिद्धानिसंति ॥ कथंससाधयत्येतद्यथावद्ब्रह्मेप्रभोइतित्वदीयप्रश्नस्यतत्क्रियाक्रमनिरूपणकर्त्तव्यमितिचेदभिप्रायस्तर्हिविस्तृतो त्यातदसंभवात्तद्विस्तारःकार्यः ॥ तेनतत्रतासुसिद्धिषुविषयेअसतामजिज्ञासूनामतत्त्वविदांचत्वदतिरिक्तश्रोतॄणांदैवादभिलाषोदयेतत्रैवप्रवृत्त्यामहान्दोषःस्यात्तवापिसवि स्तारःप्रकृतस्यात्मतत्त्वश्रवणार्थस्यविघ्नरूपत्वाद्विघातकइतिनतन्निरूपणमत्रोचितमित्यर्थः ॥ २७ ॥ एषन्यायोमणिमंत्रादिसाध्यसिद्धिक्रमनिरूपणेश्रीशैलादिसिद्धदेशनि वाससाध्यसिद्धिक्रमनिरूपणेचयोज्यइत्याह ॥ रत्नेतिद्वाभ्याम ॥ २८ ॥ हेकृतार्थेतिरामसंबोधनंतासांसिद्धीनांत्वादृशदृष्ट्यातुच्छतेतिद्योतनार्थम ॥ २९ ॥

१ मूढविरागावस्थेतिक्वचित्पाठः

तर्हि मय्यभाप्यय प्रपन्न इति रामस्य विषादो माभूदिति प्रस्तुतज्ञानसाध्योपयोग्यानुषंगिकखगमादिसिद्धिसाधनं वर्ण्यमानकथासंबद्धमविस्तारमाणायामक्रममवतारयति ॥ तस्मा दिति ॥ ३० ॥ तमार्यायमनियमप्रतिष्ठनष्टा जमदर्शनेन संक्षिप्याह ॥ अतस्त्वादिति ॥ साध्यार्थादितरा साधनार्था स्थवासनास्त्यक्ता स्थानकानि सिद्धाद्यासनानि आदिपदात्समका यशिरार्पासनानि भ्रलतानासाग्रप्रेक्षणमित्यादि योगशास्त्रोक्तक्रियाक्रमपरिग्रहः ॥ ३१ ॥ तमेव क्रियाक्रममवयुत्य प्रपञ्चयति ॥ भोजनेति ॥ साधुसम्यग्योगशास्त्रार्थस्य भा वनात्परिशीलनात् ॥ ३२ ॥ ३३ ॥ त्यागरेचने आदाने पूरकनिरोधे कुम्भके च प्रभुः सम्यग्भ्यस्ते पुनः सम्यग्योगिनः प्रभुत्वात्प्राणस्वामित्वसम्पत्तेर्लौकिकस्य पुंसः प्रभोर्भृत्या इवाख लिला प्राणविधेयतां स्वाधीनतां यान्तीत्यर्थः ॥ ३४ ॥ प्राणानां स्वाधीनत्वे तत्सम्बद्धसिद्धीनामपि स्वाधीनता सिद्ध्यतीत्याह ॥ राज्येति ॥ सर्वस्याधिकारिणः ॥ ३५ ॥ इदानीं

तस्माद्धि त्वद्ध्वजकथाप्रसंगपतितामिमाम् ॥ प्राणादिपवनाभ्यासक्रियांसिद्धिफलांशृणु ॥ ३० ॥ अतस्त्वाद्यखिलास्त्यक्तासाध्यार्थेतरवासना ॥ गुदादिद्वारसंकोचान्स्थानकादिक्रियाक्रमे ॥ ३१ ॥ भोजनासनशुद्ध्याचसाधुशास्त्रार्थभावनात् ॥ स्वाचारात्सुजनासंगात्सर्वत्यागात्सुखासनात् ॥ ३२ ॥ प्राणायामघनाभ्यासाद्रामकालेनकेनचित् ॥ कोपलोभादिसंत्यागाद्भोगत्यागाच्चसुव्रत ॥ ३३ ॥ त्यागादाननिरोधेषुभृशयांतिविधेयताम् ॥ प्राणाःप्रभुत्वात्तज्ज्ञस्यपुंसोभृत्याइवाखिला ॥ ३४ ॥ राज्यादिमोक्षपर्यंता समस्ताएवसंपद ॥ देहानिलविधेयत्वात्साध्याःसर्वस्यराघव ॥ ३५ ॥ परिमंडलिताकारामर्मस्थानंसमाश्रिता ॥ आंत्रवेष्टनिकानामनाडीनाडीशताश्रिता ॥ ३६ ॥ वीणाग्रावर्तसदृशीसलिलावर्तसन्निभा ॥ लिप्यार्धोंकारसंस्थानाकुंडलावर्तसंस्थिता ॥ ३७ ॥ देवासुरमनुष्येषुमृगनक्रखगादिषु ॥ कीटादिष्वब्जजातेषुसर्वेषुप्राणिषृ स्थिता ॥ ३८ ॥

सर्वसिद्धीनां देहानिलविधेयत्वमुक्तमुपपादयितुं सर्वदेहमध्यगताम् आसमन्तिसदृमशानप्रधानमाडीशताश्रिता मूलाधारादारभ्य आ ब्रह्मरन्ध्रं समस्तुपकेष्वनुप्रविश्य निर्गता मूलाधारे साध पिण्डलपवृत्ता संस्थाना कुण्डलीनिराशक्तिगर्भीसुषुम्नानाडीं वर्णयति ॥ परिमण्डलिताकारेत्यादिना ॥ परितःप्रयतनशास्त्राभिः परिवेष्टितत्वात्परिमण्डलिताकारा अत एवांत्राणामपि नाडीभिर्वेष्टमानाम वेष्टनिकानाम ॥ ३६ ॥ तां मूलाधारे स्वाग्रगत कुण्डलिनीसंस्थानानुकूल्येन वर्णयति ॥ वीणेति ॥ वीणादण्डस्याग्रमूलभागे प्रसिद्धो रेखासमकलशीमूलपरिवसन रूप सलिलपरिवसनरूपावायआवर्तस्तत्सदृशी ॥ लिप्यालेखनेनप्रदर्शनितु ओंकारस्याधमर्धोंकारस्तस्य संस्थानमिव संस्थानं यस्या ॥ द्रविडाक्षरे पूर्वार्धमिव नागराक्षरे उत्तरा र्धमिव वा तत्संस्थानं लभ्यमित्यर्थः ॥ अर्धनपुंसकमित्येकदेशिना समासः ॥ ओमार्धमित्रेतिपररूपम् ॥ ३७ ॥ इयं च नमनुष्यस्येवापि तु सर्वभाषिशरीरेष्वित्याह ॥ देवेति ॥ ३८ ॥

शीतेनार्तं शीतार्त्तिनिवारणायदृढवद्धमंडलइतियावत् ॥ तथाविधस्यसुभस्यभोगींद्रस्यभोगःकायस्तद्वद्बद्धंमंडलंयया ॥ सिताशुभ्रा ॥ कल्पाग्निनाविगलताअंतर्वलयाकारेर खास्फुटितेनेंदुनातुल्यवद्धाकुंडलीवलयाकृतिर्यया ॥ अथवाकल्पतेजरणसमर्थोभवतीतिकल्पोग्निर्जाठराग्निस्तेनविगलन्यो मूर्ध्नियोगशास्त्रप्रसिद्धश्चंद्रःसएवविलीयमूलाधारेप्रसृतोघनीभूयतत्रबद्धकुंडलाकृतिस्तद्वत्स्थितेत्युत्प्रेक्षा ॥ ३९ ॥ ऊरुपदेनऊरुमूलसंधिर्गुदलक्षणयोच्यतेततआरभ्यभ्रूमध्यपर्यंतयानिरंध्राणितानिस्पृशंतीतिष्वनुस्यूतामनोवृत्तिभिरतश्चचलाबहिश्चपवमानेनप्राणादिनासस्पंदा ॥ ४० ॥ तस्यामूलेंत.सार्द्धत्रिवलयाकाराकुंडलिनीसंज्ञाचिच्छक्तिंदर्शयति ॥ तस्याइति ॥ तस्मिन्मूलाधारेवीणामूलेदुर्लक्षेणनर्त्तीवेगेनेवलसतीपरमसूक्ष्मापराख्यासर्वशब्दमूलभूतागतिःशब्दब्रह्मात्मिकास्फूर्त्तिःसैवप्राणसंगान्नाभिहृदयकंठदेशेषूत्तरोत्तरंव्यक्ततरापश्यंतीमध्यमावैखरीत्यादिभेदानुभजतेइति ॥ तथाचोक्तमत्रशास्त्रे ॥ चैतन्यसर्वभूतानांशब्दब्रह्मेतियद्विदु ॥ तत्प्राप्यकुंडलीरूपंप्राणिनांदेहमध्यगम् ॥ वर्णात्मनाविर्भवतिगद्यपद्यादिभेदतइति ॥ सार्वेनाप्युक्तम् ॥ यासामित्रावरुणसदनादुच्चरंतीत्रिषष्टिवर्णानत्रप्रकटकरणैःप्राणसंगात्प्रसूते॥ तांपश्यंतीप्रथममुदितामध्यमांबुद्धिसंस्थांवाचंवक्त्रेकरणविशदांवैखरींचप्रपद्येइति॥४१॥

**शीतार्तसुप्तभोगींद्रभोगवद्बद्धमंडला॥ सिताकल्पाग्निविगलदिंदुवद्बद्धकुंडली॥३९॥ ऊरोर्भ्रूमध्यरंध्राणिस्पृशंतीवृत्तिचंचला॥ अनारतंचसस्पंदापवमानेनतिष्ठति॥४०॥ तस्यास्त्वभ्यंतरेतस्मिन्कदलीकोशकोमले ॥ यापराशक्तिःस्फुरतिवीणावेगलसद्गतिः ॥४१॥ साचोक्ताकुंडलीनाम्नाकुंडलाकारवाहिनी॥ प्राणिनांपरमाशक्तिःसर्वशक्तिजवप्रदा॥४२॥ अनिशंनिःश्वसद्रूपारुषितेवभुजंगमी॥ संस्थितोर्ध्वीकृतमुखीस्पंदनाहेतुतांगता ॥ ४३ ॥ यदाप्राणानिलोयातिहृदिकुंडलिनीपदम् ॥ तदासंविदुदेत्यंतर्भूततन्मात्रबीजभूः ॥४४॥ यथाकुंडलिनीदेहेस्फुरत्यब्जइवालिनी॥ तथासंविदुदेत्यंतर्मृदुस्पर्शवशोदया॥४५॥ स्पर्शनंमृदुनान्योन्यालिंगिकातत्रयंत्रयोः॥ यथासंविदुदेत्युच्चैस्तथाकुंडलिनीजवात्॥४६॥**

सर्वासांप्राणेंद्रियबुद्ध्यादिशक्तीनामपिसत्तास्फूर्त्तिप्रवृत्तिनिर्वाहकत्वाज्जवप्रदा ॥ ४२ ॥ तत्रकथंप्राणशक्तिजवप्रदातदाह ॥ अनिशमिति ॥ सैवस्वमुखात्प्राणमूर्ध्वंक्षिपतिअपानंचाधआकर्षतीत्यनिशंनिःश्वसद्रूपेत्यर्थः ॥ ४३ ॥ कथंबुद्धिशक्तिजवप्रदातदाह ॥ यदेति ॥ यदाहृदिस्थितःप्राणःकुंडलिन्याआकृष्टःसन्अपानवृत्त्याकुंडलिनीपदयातितदाभूततन्मात्राण्यपंचीकृतभूतान्येवबीजमुपादानंयस्यतथाविधेअंतःकरणेभवतीतिभूर्जीवसंवित्स्मृतिसंकल्पाध्यवसायाभिमानरागादिवृत्तिभेदैरंतरुदेतीत्यर्थः ॥ ४४ ॥ कथंचेंद्रियशक्तिजवप्रदातदाह ॥ यथेति ॥ एवंप्राणबुद्ध्योराहितज्ञानक्रियात्मशक्तिःकुंडलिनीदेहेमृदु स्पर्शोविषयसन्निकर्षोयेषांतेषांचक्षुरादीनांवशोदयासतीदेहेयथायथायादृशभोजकादृष्टदृष्टसामग्रीवैचित्र्येणस्फुरतितथातथातत्तदिंद्रियैरर्थविशेषस्फूर्तिंतत्फलभोगादिलक्षणासंविदुदेतीत्यर्थः ॥ ४५ ॥ कथंमृदुस्पर्शवशानुगातदाह ॥ स्पर्शनमिति ॥ कुंडलिनीजवात्तथास्फुरतियथामृदुनाचक्षुरादिनाविषयस्पर्शनंप्रथममुदेति ॥ तथाचतत्रयंत्रंकार्यकरणसंघातयुनक्तीतियंत्रयुःप्रमातातस्यवृत्तिद्वाराबहिर्निर्गतस्यबाह्यविषयेणसहअन्योन्यमालिंगनमन्योन्यालिंगिका ॥ भावेण्वुल् ॥ वृत्तिव्याप्तिप्रयुक्ताव्याप्तिरुदेति ॥ तयाचयथाविषयावरणभंगेउच्चैःस्फुटतरासंविद्घटादिप्रथाउदेतितथातेनतेनप्रकारेणेत्यर्थ ॥ ४६ ॥

तत्रमूलाधारस्थाया कुण्डलिन्याश्चक्षुरादिप्रवर्तनेनाभ्युदयमित्याशयेनाह ॥ तस्यामिति ॥ उत्पद्यतेप्रतायते ॥ विलीयतेसंकुचति ॥ ४७ ॥ कथमुत्पद्यतेविलीयतेचतदाह ॥ नित्यमिति ॥ प्राणात्मनाऊर्ध्वपातोत्सुकतयाअपानात्मनाअधःप्रवेशोन्मुखयातया ॥ उक्तमुपसंहरति ॥ सेति ॥ सामानीसाधारणी ॥ समानशब्दात्स्वार्थेसाम्यजिक। पि हलस्तद्धितस्यतियलोप ॥ ४८ ॥ अपरिच्छिन्नायाश्चितामूलाधारेमात्रमूलपरिच्छिन्नकुण्डलिन्याख्यस्थानाद्भव कथंकिमर्थंवतिराम पृच्छति ॥ आकल्पादिति ॥ आक ल्पादितिकालत ॥ सर्वमितिवस्तुतश्चापरिच्छिन्न ॥ देशकृतपरिच्छेदाभावस्यापिवस्तुकृतपरिच्छेदाभावेंतर्भावइत्याशयेनोभयोरेवोपादानम् ॥ ४९ ॥ वसिष्ठस्तुतर्हिकाल कृतपरिच्छेदाभावोपितदंतर्भूतएवतिपृथगुपादानस्यायम यद्विस्पष्टीकरणायतस्यपृथगुपादानतर्हिदेशकृतपरिच्छेदाभावेपितत्समानमितिमितयानुवादव्याजेनदर्शयन्निराका रयानिर्विषयायाश्चितास्त्रीयाकारघटादिमोचरतयाचाभिव्यक्त्यर्थंतदासविद्यैवेत्यतभूततन्मात्रबीजभूरित्युकार्थविस्तराद्विवरिष्यन्स्थूलसूक्ष्मदेहद्वयाकारपरिणतभूतसा

तस्यासमस्ता सयज्ञानाद्योद्दयकोशगा ॥ उत्पद्यतेविलीयतेमहार्णवइवापगा ॥ ४७ ॥ नित्यपातोत्सुकतयाप्रवेशोन्मुखयातया ॥ सासवसविदायीजंत्येकासामान्युदाहृता ॥ ४८ ॥ ॥ श्रीरामउवाच ॥ ॥ आकल्पादनवच्छिन्नाचित्सवित्सर्वमस्तिहि ॥ तस्मात्कुड लिनीकोशात्केनार्थेनोदयः स्फुट ॥ ४९ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ सर्वत्रसर्वदासर्वंचित्सविद्विद्यतेनघ ॥ किंत्वस्याभूततन्मात्रवशाद भ्युदय क्वचित् ॥ ५० ॥ सर्वत्रविद्यमानापिदेहेपुतरलायते ॥ सर्वगाप्यातप सौरोभित्त्यादौवैविजृम्भते ॥ ५१ ॥ क्वचिन्नपंकचित्स्पष्ट चिद्रुच्छन्नतांगतम् ॥ वस्तुवस्तुनिदृष्टतत्तत्सद्भावैर्विजृम्भितम् ॥ ५२ ॥ एतद्द्वय क्रमेणाहशृणुवक्ष्यामितेनघ ॥ देहेस्वेचयथोदेतिमृश सविन्मयक्रम ॥ ५३ ॥ चेतनाचेतनभूतजातंव्योमतयाखिलम् ॥ सर्वंचिन्मात्रसन्मात्रशून्यमात्रंयथानभ ॥ ५४ ॥

देहेष्वविद्योविशेषाभिव्यक्तिरित्याह ॥ सर्वमेत्यादिना ॥ ५० ॥ मनुदेशकृतपरिच्छेदाभावेसविस्तर्वघटासेनेत्याशंक्योपाधिवशात्सर्वतस्या स्फुटीभावइतिसदृष्टांतमाचष्टे ॥ सर्वत्रेति ॥ तरलायतमुद्धोअवच्छरप्रतिबिंबनाभ्यांद्विगुणीकृत्यभवशाद्रहलीभूताम्लसूर्यकवद्धिचावन्यात्रघलीभवतीत्यर्थ ॥ तथोपाधिकृतबहलीभावेनस्फुटीभावे दृष्टांतमाह ॥ सर्वगेति ॥ ५१ ॥ तथाप्युपाधिमालिन्यतारतम्येनचिदभिव्यक्तितारतम्यमित्याह ॥ क्वचिदिति ॥ मृच्छिलादिवस्तुनितच्चिद्वस्तुअविद्याख्येनाभिभवात्तम धारित्स्थशैत्यमिवमस्टमदर्शनमतम् ॥ देवमनुष्यादिलिंगनुस्पष्टमभिव्यक्तम ॥ वृक्षादिलिंगेपूरुषटोछन्नतांचहि संवेदनविषकाक्षमतांगतदृष्टम ॥ चिदंशाद्यनसत्तांशेतारतम्यमि त्याह ॥ तदिति ॥ तेषांविविधोपाधीनांसर्वानुभवसिद्धै सद्भावैरपिलिंगैस्तत्सर्वमपिविजृम्भितमनभिभूतमित्यर्थ ॥ ५२ ॥ उक्तमेवाभिव्यक्तितारतम्यंक्रमादासर्गसमाप्तेर्निरूपयिमु मतिजानीत ॥ एतदिति ॥ स्वेमनुष्यादिदेहेयात्मशुस्थावरादिदेहेययायत्दृशतारतम्येन ॥ ५३ ॥ तदुपोद्घातेनसूक्ष्मस्थूलभूताभ्यासमपचनायसर्वाधिष्ठानसच्चिदेकरससर्वमप चतउन्मयूष्यमात्मतच्चमात्रानिर्दिशति ॥ चेतनेति ॥ नभोनभोपवत्सम विशुसूक्ष्मश्च ॥ ५४ ॥

तस्मिंस्तथैवस्थितेमायाकल्पितैकदेशेआकाशादिसूक्ष्मभूतानांक्रमादध्यासात्तदेवभूतमात्रात्मरूपकंस्थितमित्याह ॥ तद्धीति ॥ ५५ ॥ ततन्मात्रपंचकप्राणमनोबुद्धिज्ञाने
न्द्रियकर्मेंद्रियमितिपंचधागतलिंगशरीरप्रतिविवतयाप्रविश्यदीपाद्दीपशतमिवसंपन्नस्त्वस्वसंविदमंतर्भूताजन्मादिविकारा आदिपदाजाग्रदाद्यवस्थाभेदाश्रयस्मिंस्तथाविधद्वि
त्वजीवभावमितियावत् ॥ लक्षसेलक्षयसि ॥ छांदसउपपदव्यत्यय. ॥ ५६ ॥ कानिचिल्लिंगारंभपरिशिष्टानिपंचकानिजीवस्यदेवमनुष्याद्याकारवासनानुसारिसंकल्पलव
रूपिणास्वसत्तामात्रकेणैवपंचीकरणद्वारास्थूलदेहत्वंव्रजंति ॥ ५७ ॥ देहप्रकरणाद्धेमादित्वंधत्तूरादिस्थावरशरीरताम ॥ अथवातिर्यगादित्वमित्यादिपदादेवस्थावरदेहपरि
ग्रह. ॥ हेमादित्वमित्यनेनस्वर्णरजतखर्परोपलक्षितब्रह्माडत्वंतदंतर्गतभुवनादिभोग्यतांचेत्यर्थ. ॥ ५८ ॥ अस्त्वेवंकिंततस्तत्राह ॥ एवंहीति ॥ स्थितंसिद्धम ॥ तदधिष्ठानचैत
न्यसर्वत्रास्तीतिघटाद्यपिचेतनंकिंनस्यात्तत्राह ॥ चिदिति ॥ ५९ ॥ पंचकवशाच्चैतन्याभिव्यंजकप्राणादिपंचकघटितलिंगदेहप्रावान्याद्देवमनुष्यदेहादौमुख्याचेतनाभि

तद्धिचिन्मात्रसन्मात्रमविकारंस्वनामयम् ॥ क्वचित्स्थितसंविदेवभूततन्मात्रपंचकम् ॥ ५५ ॥ तत्पंचधागतंद्वित्वंलक्षसेत्वंस्वसंविदम् अंतर्भूतविकारादिदीपाद्दीपशतंयथा ॥ ५६ ॥ स्वसत्तामात्रकेणैवसंकल्पलवरूपिणा ॥ पंचकानिव्रजंतीहदेहत्वंतानिकानिचित् ॥ ५७ ॥ कानिचित्तिर्यगादित्वंहेमादित्वंचकानिचित् ॥ कानिचिद्देशतादित्वंद्रव्यादित्वंचकानिचित् ॥ ५८ ॥ एवंहिपंचकस्पदमात्रंजगदिति स्थितम् ॥ चित्संविदत्रसर्वत्रविद्यतेरघुनंदन ॥ ५९ ॥ केवलंपंचकवशाद्देहादौचेतनाभिधा ॥ जडस्पंदाभिधाक्वापिस्थावरादौजडाभि धा ॥ ६० ॥ यथाम्बुःस्थितोवीचिरिवस्थलमिवास्थितः ॥ पंचकेपुनर्थैतच्चिल्लोलरूपाजडान्विता ॥ ६१ ॥ इतःसौम्यइतोलोलःकिम ब्धिरितिनोयथा ॥ विकल्पादौतथैवैतत्पंचकंहिजडाजडम् ॥ ६२ ॥ देहादिपंचकंजीवःस्पंदःशैलादिकंजडम् ॥ स्थावराद्यनिलस्पंदिस्व भाववशतोनघ ॥ ६३ ॥

धा ॥ क्वापितिर्यक्षुलिंगस्थूलदेहयो समप्राधान्याज्जडस्पंदाभिधाजडचेतनाभिधा ॥ स्थावरादौलिंगस्यात संवेदनमाचलत्वेनबहिर्जनैश्चेतनत्वाविभावनाज्जडाभिधाप्रसिद्धे
त्यर्थ. ॥ ६० ॥ त्रिष्वपिचित्कथंतारतम्येनस्थितेत्यत्रदृष्टांतमाह ॥यथेति॥यथादिवाविलीनोघनसमुद्र सायंशिशिरपवनसंपर्काद्धिलातटेक्रमाद्घनीभावात्तस्तब्धोनिश्चल स्थित.
सन्द्रवप्रदेशेवीचिरिवचल ईषद्घनप्रदेशेईषच्चल. अत्यंतघनप्रदेशेस्थलमिवाचलश्चस्थितस्तथैवैषाचिन्नरतिर्यक्स्थावरदेहरूपेषुपंचकेषुलोलरूपाईषल्लोलाअत्यंतजाड्या
न्विताचस्थितेत्यर्थ ॥ ६१ ॥ यथाक्वचिद्घनीभावेनलोलत्वाभावेपितस्यनाब्धित्वव्याघातस्तथास्थावरादिभावेपिनचिद्रूपताक्षतिरित्याह ॥ इतइति ॥ नोइतिकाकु ॥ किमब्धिरि
तिव्यपदेशोनभवतिकिंतुभवत्येवयथातथैवैतत्सुरनरतिर्यग्विकल्पादौचैतन्यमक्षतमित्यर्थः ॥ अथवायजडाजडविकल्पोऽप्यस्तपंचकधर्मएवनचिद्धर्मस्तस्यानिर्धर्मकत्वादि
त्याशयेनाह ॥ पंचकंहीति ॥ ६२ ॥ पंचकेस्वभाववशतईदृशावहवोविकल्पादृष्टाइत्याह ॥ देहादीति ॥ देहाद्याकारपरिणतपंचकप्राणधारणाधीनस्पंदचैतन्याभ्यांजीव
श्चेतनस्तत्प्रयोजकस्पंद शैला दिकंजडमेव ॥ स्थावरादिशरीरेगुवाह्यानिलाधीनस्पंदिअतश्चेतनमित्यादिव्यवस्थितविकल्पा.स्वभाववशतोदृष्टाइत्यर्थः ॥ ६३ ॥

ननस्य स्यात्कथाभाव स्वभाव सकथविरुद्धविकल्पात्मक स्यात् विरोधोहिपरसापेक्ष स्वोभावस्तन्नस्यापेक्ष यदिस्वीयोभाव स्वभावस्तथाप्यसौस्वमात्रसापेक्षोननरसापेक्ष इतिकथपरसापेक्षस्यविकल्पस्यस्वरूपनिमित्तत्वास्याद्विनिय विपर्यनुयुज्यतनहित्ययास्वभावविहायवाच पर्यनुयोक्तव्या ताएवहिचिज्जाद्विशिष्टरूपा ॥ स्वापुनरुक्तार्थे स्वार्थस्यानुपपत्त्यर्थेनान्यजात्य विरुद्धगमयत ॥ एवशीतोष्णादिधर्मपराहिमाग्न्यादिधर्मिपराशाकमनोपिइतिएवप्रकारैस्सर्वमपरिदृश्यतइत्यर्थ ॥ स्वभावादितिल्यब्लोप कर्मणिपचमी ॥ ६४ ॥ अयत्रावाम पर्यनुयोज्यास्तस्यावासनाकल्पितविकल्पवत्सकार्यानुचारित्वनतत्पराधीनत्वात् किंतुगृहीतवासनांशानांतत्तद्विरुद्धविकल्पभावेन विकारैर्वालितात्मनांपचकानांस्थितएवपर्यनुयोजनयोग्यादित्याह ॥ गृहीतेति ॥ नाजिरविकल्पनविरोधमाभोच्छेत्रादितिभाव ॥ ६५ ॥ अथवाननतासामप्यपराध पूर्व पूर्वविरुद्धविकल्पसहस्रवासनानुमार्गित्वात् अतश्चाज्ञानविरुद्धविकल्पकल्पनामूलत्वात्पनापुसाचित्तमितइतश्चविरुद्धविकल्पसहस्रैपनतुविषयसाविक्षिप्तावासनाएवपर्यनु

वाच पर्यनुयोक्तव्या स्वज्ञावाद्रघुनंदन ॥ शीतोष्णादिहिमाग्न्यादिवाकेतिपरिदृश्यते ॥ ६४ ॥ गृहीतवासनांशानांपुष्टाभावविकारिणाम् ॥ स्थितय पचकानांहियोज्या पर्यनुयोजने ॥ ६५ ॥ वासनास्तुविपर्यस्ताइतोनंतुमितश्चता ॥ पुसाप्राज्ञेनशक्यतेसुखपर्यनुयोजितुम् ॥ ६६ ॥ अशुभंवाशुभंवापितेनपर्यनुयोज्यते ॥ प्रबुद्धवासनचान्यत्पचकसुप्तवासनम् ॥ ६७ ॥ यत्रपर्यनुयोगस्यफलसमनुभूयत ॥ तत्रतसप्रयुंजातनाकाशमुष्टिभि क्षिपेत् ॥ ६८ ॥ तृणाग्रनिष्ठामेवाया पचकानांहिराशय ॥ विवेकनिष्ठा कीटाद्याएतेस्थावरजंगमा ॥ ६९ ॥ प्रसुप्तवासना केचिद्यथास्थावरजातय ॥ प्रबुद्धवासना केचिद्यथानरसुरादय ॥ ७० ॥ सवासनाविला केचिद्यथैतेतिर्यगादय ॥ प्रक्षिप्तवासना केचिद्यथैतेमोक्षगामिन ॥ ७१ ॥ अयस्वास्तेनसवित्सुमनोबुद्ध्यादिका कृता ॥ हस्तपादादिसयुक्त संज्ञा पचकराशिभि ॥ ७२ ॥

पाजिनुशक्यन्तस्वभावादयइत्याह ॥ वासनादिति ॥ ६६ ॥ पुसामशुभेतियकृत्स्थावरादिभावेशुभेदेवादिभावेवाप्रबुद्धवासनंसुप्तवासनंपचकतिष्ठति ॥ तेनवासनैवतद्धेतु पर्यनुयोज्यतइत्यन्वय ॥ ६७ ॥ किंचवासनापर्यनुयोगस्यतत्क्षयोपायेप्रवृत्तफलेनसफलता स्वभावादिपर्यनुयोगस्यनकिंचित्फलमस्तीत्याह ॥ यत्रेति ॥ ६८ ॥ अतएव वासनाक्षयपूर्णात्मलाभाम्नायाया स्वपरायोपितृणाग्रस्थनिष्ठनिष्ठानुच्छ्रायेपनितृणाग्रनिष्ठा सप्रपचेविवेकनिष्ठारेवादिभोगशालिदेहाअपिकीटाद्याइवतुच्छतरा सप पतइत्याह ॥ तृणाग्रेति ॥ ६९ ॥ अतएववासनास्वापप्रबोधतारतम्यादेवपचकेपुस्थावरादिवैचित्र्यमित्युदाहृत्यदर्शयति ॥ प्रसुप्तेतिद्वाभ्याम् ॥ ७० ॥ वासनाभिराविलेना स्वच्छनचित्तनसहिता सवासनाविला ॥ प्रक्षिप्तवासनास्त्यक्तवासना ॥ ७१ ॥ वासनावैचित्र्यादेववैषनरादिपचकराशिराकाशभूमिमनादिविचित्रप्रव्यवहारक्षमहस्तपादादिलक्ष्मिनकर्मेंद्रियसमन्वैर्नरादिपचकराशिभि स्वाख्यास्तुसवित्त्वेनरादियोग्यव्यवहारोपितामनाबुद्ध्यहंकार चक्षुश्रोत्रघ्राणरसनस्पर्शादिकाअतर्बाह्यकरणरूपा सज्ञा संकेत कृताअतएवताप्रतिप्राणिविचित्रस्वभावादृश्यतइतिभाव ॥ ७२ ॥

तिर्यग्भि.पश्वादिभिस्तुचत्वारःपादाःश्रृंगेपुच्छंचेति पक्षिभिस्तुचंचु.पक्षौपुच्छंपादौचेति सर्पैस्तुफणाभोगःपुच्छमिति कृमिकीटैर्दंशमशकादिभिश्चस्वस्ववासनानुरूपव्यवहार योग्याअवयवादिसंकेता कल्पिताइत्यर्थ ॥७३॥ आद्यतमध्येषुचलैर्विकारिभिर्जडैश्च ॥ अधिष्ठानसद्रूपेणतुअचलैरजडैश्च ॥ ७४ ॥ एवंपचकाख्यलिंगभेदाननंतानुपवर्ण्य तेष्वेकतमस्यकस्यचित्कर्मोपासनसमुच्चयानुष्ठानफलसमष्टयहंभावप्राप्तस्यकश्चिदेकःसंकल्पपरमाणुरस्यसंसारनभोवृक्षस्यबीजमित्याह ॥ एषामिति ॥ समष्टिगोचरत्वादभि व्याप्त.संकल्पोभिसंकल्पस्तल्लक्षण.परमाणु सर्गरूपाणामाकाशवृक्षाणांबीजंतेषुचसर्गाकाशवृक्षेषुइमानिपंचकानीत्यहोमायेत्यर्थ. ॥ ७५ ॥ सर्गाणामाकाशवृक्षत्वयदुक्तंत

तिर्यगादिभिरप्यन्यैरन्याःसंज्ञाःप्रकल्पिताः॥ स्थावरादिभिरप्यन्यैरन्यान्याःसंविदःकृताः॥ ७३ ॥ इतिसाधोस्फुरंतीमेचित्राःपंचकरा शयः॥ रूपैराद्यंतमध्येषुचलाचलजडाजडैः ॥ ७४ ॥ एषामेकोभिसंकल्पःपरमाणुर्महीपते॥ बीजमाकाशवृक्षाणांसर्गाणांतेष्विमा नितु॥ ७५॥ इंद्रियाणिचपुष्पादिविषयामोदवर्तीहि॥ इच्छाभ्रमर्योराजंत्योमंजर्यश्चंचलक्रियाः ॥ ७६ ॥ लोकांतराणिस्वच्छानिगु ल्मामूलंसमेरवः॥ पल्लवानीलजलदालतालोलादिशोदश॥ ७७॥ वर्त्तमानानिभूतानिभविष्यंतिचयानितत्॥ जयंतितान्यसंख्यानि फलानिरघुनंदन॥ ७८॥ पंचबीजास्तएतेहिरामपंचकपादपाः॥ स्वयंस्वभावाज्जायंतेस्वयंनश्यंतिकालतः॥ ७९॥ स्वयंनानात्वमायां तिचिरंजाड्यात्स्फुरंतिच॥ स्वविविक्ताःशमंयांतितरंगाइववारिधौ॥ ८०॥ इतोयांतिसमुत्सेधमितोयांतिशमंस्वयम्॥ एतेजाड्यवि वेकाभ्यांतरंगाइवतोयधौ॥ ८१॥ येविवेकवशमालयंगतारामपंचकविलासराशयः॥ तेनभूयइहयांतिसंस्थितिंप्रभ्रमंतिजगतीत रेमुहुः॥८२॥ ॥इ०वा०वा०दे०मोक्षोपायेषुनिर्वाण०पू०चू०पंचकविलासोनामाशीतितमःसर्गः॥८०॥ ॥ छ ॥ ॥

त्पुष्पतदामोदादिकल्पनयोपपादयति ॥ इंद्रियाणीत्यादिना ॥ आदिपदादिंद्रियावयवेषुपुष्पावयवतायथोचितंयोज्या ॥ विषयलक्षणेष्वामोदेषुवर्त्तनशीलंतत्प्रधानमितियाव त् ॥ चचलानाकर्मेंद्रियाणांक्रिया. ॥ ७६ ॥ स्वच्छानिस्वर्गादिलोकांतराणिगुल्माविटपाः ॥ समेरवोमेरुसहिताःसर्वेपर्वतामूलम् ॥ ७७ ॥ भूतानिचतुर्विधशरीराणि ॥ तत्त स्यवृक्षस्य ॥ ७८ ॥ स्वभावात्स्वविवेकशून्यादात्मनः ॥ ७९ ॥ स्वस्माद्विविक्ताविवेकदृष्ट्यादृष्टाः ॥ ८० ॥ श्लोकद्वयोक्तमेवसंगृह्याह ॥ इतइति ॥ इतःपराग्दृष्टेः ॥ इतःप्र त्यग्दृष्टे. ॥ ८१ ॥ हेरामयेपंचकविलासराशयःआलयनिर्वासननाशपर्यंतंविवेकवशंगतास्तेइहसंसारेभूयोजन्ममरणदेहधारणादिसंस्थितिनयाति इतरेतुजगतियथापूर्वंप्रभ्र मत्येवेत्यर्थः ॥ ८२ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०अशीतितमःसर्गः ॥ ८० ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

कुण्डलिन्याः प्रसंगतरोमोद्गमरामकमा ॥ सिद्धिसिद्धेक्षणोपायाय शेषमिह वर्ण्यते ॥१॥ यदा प्राणानिलो यातिरुद्धिं कुण्डलिनीपदम् तदासंविदुदेत्यतभूतत्स्माभवीजभूरितिबुद्धि शक्तिप्रवरत्वापपादने भूतत्स्माभवीजभूरित्यशस्यस्फुटीकरणाय प्रस्थूलसूक्ष्मपंचकविचारसंगमयन्‌खेचरादिसिद्धिबीजप्राणाभ्यासोपयुक्तमस्तुतकुण्डलिन्याः प्राणापुरव प्रकारमदर्शयति ॥ एतदिति ॥ तस्यस्थूलदेहात्मकस्यपंचकस्यांतरेमूलाधारेतस्यांप्राग्वर्णितायांकुण्डलिन्यामेतस्यलिंगात्मकपंचकस्यबीजमुपादानभूतसूक्ष्मप्रथमप्राणपंचकरू पणस्फुरतीत्यर्थः ॥ १ ॥ सामाणरूपेणांत स्फुरिताकुण्डलिनीमारुतधर्मेणस्वधर्मेणचस्पंद स्पर्श संविदितिभिरूपकल्पनाभूत्वाकलाचिज्जीवोमन सकल्पोबुद्धिरहंकार पुर्यष्टक लिंगमित्यादिनामानिकलनादिव्यापारोपाधिभिर्लभतइत्याह ॥ सांतरितिभिः ॥ २ ॥ ३ ॥ ४ ॥ तमस्पदशके प्रधानवसिततत्स्थानभेदेविभज्यदर्शयति ॥ अपानतामिति ॥ ५॥

श्रीवसिष्ठउवाच॥ ॥एतत्पंचकबीजंतुकुंडलिन्यांतदंतरे॥ प्राणमारुतरूपेणतस्यांस्फुरतिसर्वदा ॥ १ ॥ सांत कुंडलिनीस्पंदस्पर्शसं विक्लामला॥ कलोक्ताकलनेनाशुकथिताचेतनेनचित्‌ ॥ २ ॥ जीवनाज्जीवतांयातामननाच्चमन स्थिता ॥ सकल्पाच्चैवसकल्पा बोधाद्बुद्धिरितिस्मृता॥ ३॥ अहंकारात्मतांयातासैषापुर्यष्टकाभिधा॥ स्थिताकुंडलिनीदेहजीवशक्तिरनुत्तमा ॥४॥ अपानतामुपाग त्यसततंप्रवहत्यध ॥ समानानाभिमध्यस्थाउदानाख्योपरिस्थिता॥ ५ ॥ अधस्त्वपानरूपैवमध्येसौम्यैवसर्वदा॥ पुष्टाप्युदानरूपैव पुम स्वस्थैवतिष्ठति॥६॥ सर्वयत्नमधोयातियदियत्नान्नधार्यते॥ तत्पुमान्मृतिमायातितयानिर्गतयाबलात्‌ ॥ ७॥ समस्तैवोर्ध्वमा यातियदियुक्त्यानधार्यते॥ तत्पुमान्मृतिमायातितयानिर्गतयाबलात्‌॥८॥सर्वयात्मनितिष्ठंत्स्यरेचकोर्ध्वाधोगमागमौ ॥ तज्जतोहीं यतेव्याधिरतमारुतरोधत ॥९॥सामान्यनाडीवैधुर्यात्सामान्यव्याधिसंभव ॥प्रधाननाडीवैधुर्यात्प्रधानव्याधिसंभव ॥१०॥ ॥ श्रीरामउवाच॥ ॥किंविनाशा किमुत्पादा शरीरेस्मिन्मुनीश्वर॥आधयोव्याधयश्चैवयथावत्कथयाशुमे॥११ ॥

वृत्तिभेदप्रयोजनान्याह ॥ अधइति ॥ अपागमनापेक्षप्रयोजनमित्यर्थ ॥ अपानोदानाभ्यामाकृष्यमाणापिस्वयंसौम्यानिश्चलैव ॥ तद्वदृष्टव्यत्वादेवपुष्टाबलवत्यप्यूर्ध्ववृ त्तिरुदानरूपैवसतीस्वस्थैवतिष्ठतिनतिंगबहिरुत्क्रामयतीत्यर्थ ॥ ६ ॥ एवमधोवृत्तेरपिसावष्टंभिकेत्याह ॥ सर्वप्रयत्नमिति ॥ यदिसामान्यवृत्त्यानधार्यतेतर्हिसाजीवसंविद्पा नरस्यासर्वयत्नप्रयासात्तथाआकृष्यमाणाअधोमार्गेणबहिर्यांति ॥ किमतस्तत्राह ॥ तदिति ॥ ७ ॥ प्रागुक्तस्पष्टमाह ॥ समस्तैवेति ॥ ८ ॥ अतएवप्राणापानगतिनिरोधा भ्यासेनसर्वासिसमानस्यनरवृत्तिजयेसर्वव्याधिक्षयमृत्युजयसिद्धिरित्याह ॥ सर्वयेति ॥ आत्मनिवेष्टे ॥ ९ ॥ एकशतप्रधाननाडीस्तच्छाखास्तुसामान्यनाडीस्तास्वन्नरसप्रा पिकाया समानवृत्तेर्वैषम्यकफपित्तादुष्टयादिधुयमव्यापारस्तवैषम्यवायुभिर्वैषम्येणान्नरसाकर्षणाद्व्यरोगाणांमहारोगाणांचसंभवइत्याह ॥ सामान्येति ॥ १० ॥ कस्मा द्विनाशोयपातोकिंविनाशा ॥ एवंकिमुत्पादा ॥ ११ ॥

तेषानिवृत्तिरौषधानुनयैस्तात्कालिकोपशम· सुखरूपस्यात्मनःपरिशेषात्सुखं तेषांमूलतोज्ञानेननाशोमोक्षइत्यर्थः ॥ १२ ॥ मिथ अन्योन्यनिमित्तकत्वात्क्रमसंलग्ने कदाचि
युगपदुत्पन्नाद्वाप्तनिमित्तात्समयुगपत् कदाचित्सुखातिरिक्तेपर्यायेण ॥ १३ ॥ मौर्ख्यमज्ञानतन्मूले ॥ १४ ॥ तत्रआध्युद्भवनिमित्तान्याह ॥ अतत्त्वज्ञानेति ॥ आक्रमणनि
ग्रहस्तविनातदभावादित्यर्थः ॥ हृदिचित्तेतानवस्तिमितवायुप्रायास्वास्थ्यहेतुसूक्ष्मतामुत्सृज्यरागद्वेषेषुप्रसक्तेरितिशेषः ॥ १५ ॥ इदप्राप्तमिदनप्राप्तमितिचिंतायाइतिशेष. ॥
भयशोकनिमित्तप्राप्तौतत्प्रतीकारोपायापरिज्ञानलक्षणघनमोहददतीतिघनमोहदा. ॥ १६ ॥ इदानीशारीरव्याध्युद्भवहेतूनाह ॥ भृशमित्यादिना ॥ इच्छामौर्ख्येआंतरेतद्धे

श्रीवसिष्ठउवाच॥ ॥ आधयोव्याधयश्चैवद्वयंदुःखस्यकारणम् ॥ तन्निवृत्तिःसुखंविद्यात्तत्क्षयोमोक्षउच्यते ॥ १२ ॥ मिथःकदाचि ज्जायेतेकदाचित्समयमेवच ॥ पर्यायेणकदाचिच्चआधिव्याधीशरीरके ॥ १३ ॥ देहदुःखंविदुर्व्याधिमाध्याख्यंवासनामयम् ॥ मौर्ख्य मूलेहितेविद्यात्तत्त्वज्ञानेपरिक्षयः ॥ १४ ॥ अतत्त्वज्ञानवशतःस्वेंद्रियाक्रमणंविना ॥ हृदितानवमुत्सृज्यरागद्वेषेष्वनारतम् ॥ १५ ॥ इ दंप्राप्तमिदंनेतिजाड्याद्वाघनमोहदाः ॥ आधयःसंप्रवर्ततेवर्षासुमिहिकाइव ॥ १६ ॥ भृशंस्फुरंतीष्विच्छासुमौर्ख्येचेतस्यनिर्जिते ॥ दु रन्नाभ्यवहारेणदुर्देशाक्रमणेनच ॥ १७ ॥ दुष्कालव्यवहारेणदुष्क्रियास्फुरणेनच ॥ दुर्जनासंगदोषेणदुर्भावोद्भावनेनच ॥ १८ ॥ क्षी णत्वाद्वाप्रपूर्णत्वान्नाडीनांरंध्रसंततौ ॥ प्राणेविधुरतांयातेकायेतुविकलीकृते ॥ १९ ॥ दौस्थित्यकारणंदोषाद्व्याधिर्देहेप्रवर्त्तते ॥ नद्याः प्रावृण्निदाघाभ्यामिवाकारविपर्ययः ॥ २० ॥ प्राक्तनीचैहिकीवापिशुभावाप्यशुभामतिः ॥ यैवाधिकासैवतथातस्मिन्योजयतिक्र मे ॥ २१ ॥ आधयोव्याधयश्चैवंजायंतेभूतपंचके ॥ कथंशृणुविनश्यंतिराघवाणांकुलोद्वह ॥ २२ ॥ द्विविधोव्याधिरस्तीहसामान्यःसार एवच ॥ व्यवहारस्तुसामान्यःसारोजन्ममयःस्मृतः ॥ २३ ॥ प्राप्तेनाभिमतेनैवनश्यंतिव्यावहारिकाः ॥ आधिक्षयेणाधिभवाःक्षीयंतेव्या धयोप्यलम् ॥ २४ ॥ आत्मज्ञानंविनासारोनाधिर्नश्यतिराघव ॥ भूयोरज्ज्ववबोधेनरज्जुसर्पोहिनश्यति ॥ २५ ॥

तू ॥ दुरन्नादयस्तुवाह्या. ॥ दुर्देशा.श्मशानादयः ॥ १७ ॥ दुष्टेषुनिशीथप्रदोषादिकालेष्वशनव्यवायादिव्यवहारेण ॥ दुर्भावाविषसर्पव्याघ्रतस्करादिशंकास्तेषांमनस्युद्भाव
नेन ॥ १८ ॥ नाडीनामन्नरसाप्रवेशेनक्षीणत्वाद्विगुणरसवातादिप्रवेशेनप्रपूर्णत्वाद्वाविधुरताकफपित्तादिप्रकोपेनव्याकुलताम् ॥ आघातादिनाविकलीकृते ॥ १९ ॥ दौस्थि
त्यमस्वास्थ्यतत्कारणव्याधिःसदेहस्याकारविपर्ययः ॥ २० ॥ साचाधिव्याधिसामग्रीप्राक्तनैहिककर्मानुसारेणमिलतीत्याह ॥ प्राक्तनीति ॥ २१ ॥ २२ ॥ सामान्य.पेलव
सारोदृढतरश्च ॥ व्यवह्रियतइतिव्यवहार.क्षुत्तृषास्त्रीपुत्रलालसादिस्तत्सभवश्च ॥ जन्ममयोजन्मादिविक्रियामूलम ॥ २३ ॥ अभिमतेनान्नपानस्त्रीपुत्रादिना ॥ २४ ॥ आ
धिर्व्याधि.भूयोभूयसालोकपरिशीलनाद्रज्जुतत्त्वप्रत्ययपर्यंतेनावबोधेन ॥ २५ ॥

मारण्न(ासर्वेषांतटवीरुधामिवसर्वेषामाधिव्याधिविलासानांसाम्याधिसक्षयोमूलहामूलोच्छेदीत्यन्वय ॥ २६ ॥ सामान्यव्याधिष्वनाधिजव्याधय सुचिकित्स्याइत्याशये
नाह ॥ अनाधिमादिति ॥ अन्धैरवृपरंपरोपदिष्टैश्चिकित्सने ॥ २७ ॥ लीलार्कोक्तितीर्थेपुस्नानम मन्त्रात्औपधानीत्यापुपाया वकुश्वसद्भजनादधिगम्यौपधानि
चिकित्साशास्त्राणिषत्वयाज्ञायतएवेतिशेप ॥ २८ ॥ आधिभ्योव्याधिजन्मप्रकारमचिकित्सोपायचराम पृच्छति ॥ आधेरिति ॥ द्रव्यादीपधाविरयामपुण्यादिरूपयेति
स्वस्वभावनयोक्ति ॥ २९ ॥ तत्रप्रथमतद्भवप्रकारमाह ॥ चित्तेइत्यादिना ॥ विधुरितेआधिभि क्षुब्धे ॥ उक्तमर्थंदृष्टान्तेनोपपादयति ॥ तथाहीतिसार्धेन ॥ अप्पुरोमार्गम्

आधिव्याधिविलासानांरामसाराधिसक्षय ॥ सर्वेषांमूलहाप्रावृण्नदीषतटवीरुधाम् ॥ २६ ॥ अनाधिजाव्याधयस्तुद्रव्यमन्त्रशुभक्र
मैं ॥ चिकित्सकादिशास्त्रोक्तैर्नश्यंत्यन्यैरिहाथवा ॥ २७ ॥ स्नानमन्त्रौपधोपायावक्तुश्चाधिगतानिच ॥ त्वयाचिकित्साशास्त्राणिकिमन्य
दुपदिश्यते ॥ २८ ॥ ॥ श्रीरामउवाच ॥ ॥ आधे कथंभवेद्व्याधि कथंचसविनश्यति ॥ द्रव्यादितरयायुक्त्यामंत्रपुण्यादिरूपया ॥ २९ ॥
श्रीवसिष्ठउवाच ॥ ॥ चित्तेविधुरितेदेह सक्षोभमनुयात्यलम् ॥ तथाहिरुषितोजतुरग्रमेवनपश्यति ॥ ३० ॥ अनवेक्ष्यपुरोमागममा
गमनुधावति ॥ प्रस्तमार्गमुत्सृज्यशरार्त्तोहरिणोयथा ॥ ३१ ॥ सक्षोभात्साम्यमुत्सृज्यवहतिप्राणवायव ॥ देहेगजप्रविष्टेनपयांसीव
सरित्तटे ॥ ३२ ॥ असमंवहतिप्राणेनाड्योयांतिविसस्थितिम् ॥ असम्यक्संस्थितेभूपेयथावर्णाश्रमक्रमा ॥ ३३ ॥ काश्चिन्नाड्य प्रपूर्णं
त्वयांतिकाश्चिद्रिक्तताम् ॥ प्राणाविधुरितेदेहमवंत सरितोयथा ॥ ३४ ॥ कुजीर्णत्वमजीर्णत्वमतिजीर्णत्वमेववा ॥ दोपायैवप्रयात्य
न्नप्राणसंचारदुष्क्रमात् ॥ ३५ ॥ यथाकाष्ठानिनयतिप्रवाहोदेशासरिद्रय ॥ तथान्नानिनयत्यंत प्राणवात स्वमाश्रयम् ॥ ३६ ॥ यान्य
न्नानिनिरोधेनतिष्ठंत्यंत शरीरके ॥ तान्येवव्याधितायांतिपरिणामस्वभावत ॥ ३७ ॥ ॥ एवमाधेर्भवेद्व्याधिस्तस्याभावाच्चनश्यति ॥
यथामन्त्रैर्विनश्यंतिव्याधयस्तत्क्रमंशृणु ॥ ३८ ॥

॥ ३० ॥ ३१ ॥ रुष्टीनिकोपितयेषआधिरुतात्सक्षोभात्प्राणवायव साम्यमुत्सृज्यामार्गेणवहंति ॥ यथागजस्यप्रविष्टेनप्रवेशेनक्षुब्धानिपयांसिसरितस्तटेअमार्गेवहंतितद्वत्
॥ ३२ ॥ असमविषमम् ॥ विसस्थितिकफपित्तादिपूर्णतामयुक्तविषमसंस्थानताम् ॥ ३३ ॥ तदेवाह ॥ काश्चिदिति ॥ प्राणैराविधुरितेसर्वतोविक्षुब्धीकृतदेहे ॥ सरितोनाड्य स्रो
तांसीव ॥ ३४ ॥ ३५ ॥ समानाख्यःप्राणवात स्वमाश्रयसर्वशरीरमुक्तान्यन्नानिरसीकृत्यनयति ॥ मध्येतुसमानएषसेतद्भुक्तमन्नंसमनयतीतिश्रुतेरितिभाव ॥ ३६ ॥ धातुवि
पम्यपरिणामस्वभावत ॥ ३७ ॥ उपसंहरति ॥ एवमिति ॥ अभावाच्चाशाम् ॥ ३८ ॥

हरीतक्या फलानि हरीतक्य ॥फलेलुपिहरीतक्यादिपुव्यक्तिरितिनियमान्नवचनेयुक्तवद्भाव ॥ तथायरलवादयोवायुवह्निभूजलादिबीजात्मकामन्त्रवर्णामात्रिकभावनावशतो नाडीपुन्याध्याकारपरिणतान्नरसानामुत्सारणपाचनादिकार्यंकुर्वंतीत्यर्थ ॥ ३९ ॥ आध्युपशमोपायानाह ॥ शुद्धयेत्यादिना ॥ ४० ॥ ४१ ॥ ४२ ॥ प्रासंगिकप्रश्नोत्तर मुपसंहृत्यप्रकृतसिद्धिहेतुनिरूपणप्रस्तौति ॥ आधीति ॥ ४३ ॥ पुर्यष्टकाख्यस्यलिंगात्मनोजीवस्याधारभूताम् ॥ ४४ ॥ आपूर्यकूर्मनाड्याप्राणमवष्टभ्येत्यर्थः ॥ तथाचप तजले.सूत्रम ॥ कूर्मनाड्यास्थैर्यमिति ॥ कंठकूपादधउरसिकूर्माकारानाडीतस्यांकृतसंयम स्थैर्यंलभतेयथासर्पोगोधावेतितद्भाष्यम् ॥ कायस्यापीनतागरिमाख्यासिद्धिरपि तथातादृशीभैरवीसिद्धांतीत्यर्थ ॥४५॥ केनतर्ह्यूर्ध्वंनभोगतिसिद्धिस्तदाह ॥यदेत्यादिना॥यदापूरकेणपूर्णेदेहांतरायतोमूलाधारादारभ्यब्रह्मरंध्रपर्यंतदीर्घीकृत्योर्ध्वमाकृष्टःप्राण

यथाविरेकंकुर्वंतिहरीतक्यःस्वभावतः ॥ भावनावशतःकार्यंतथायरलवादयः ॥ ३९ ॥ शुद्धयापुण्ययासाधोक्रिययासाधुसेवया ॥ मनःप्रयातिनैर्मल्यंनिकषेणेवकांचनम् ॥ ४० ॥ आनंदोवर्धतेदेहेशुद्धेचेतसिराघव ॥ पूर्णेंदावुदितेव्यत्रनैर्मल्यंभुवनेयथा ॥ ४१ ॥ सत्वशुद्ध्यावहंत्येतेक्रमेणप्राणवायवः ॥ जरयंतितथान्नानिव्याधिस्तेनविनश्यति ॥ ४२ ॥ आधिव्याध्योरितिप्रोक्तौनाशोत्पत्तिक्रमौत्वयि ॥ कुंडलिन्याःकथायोगादधुनाप्रकृतंशृणु ॥ ४३ ॥ पुर्यष्टकपराख्यस्यजीवस्यप्राणनामिकाम् ॥ विद्धिकुंडलिनीमंतरामोदस्येवमंजरीम् ॥ ४४ ॥ तांयदापूरकाभ्यासादापूर्यस्थीयतेसमम् ॥ तदैतिमैरवंस्थैर्यंकायस्यापीनतातथा ॥४५॥ यदापूरकपूर्णांतरायतप्राणमारुतम् ॥ नीयतेसंविदेवोर्ध्वंसोढुंघर्मक्रमंश्रमम् ॥ ४६ ॥ सर्पीवत्वरितैवोर्ध्वंयातिदंडोपमांगता ॥ नाडीःसर्वाःसमादायदेहबद्धालतोपमाः ॥ ४७॥ तदासमस्तमेवेदमुत्प्लावयतिदेहकम् ॥ नीरंध्रंपवनापूर्णंभस्त्रेवांबुततांतरम् ॥ ४८ ॥ इत्यभ्यासविलासेनयोगेनव्योमगामिना ॥ योगिनःप्राप्नुवंत्युच्चैर्दीनाइंद्रदशामिव ॥ ४९ ॥

मारुतोयस्मिन्कर्मणितद्यथास्यात्तथासंवित्कुंडलिनीप्राणनिरोधोद्भूतमूष्माणतत्प्रयुक्तशारीरक्लमानसंभ्रमचाभ्यासपाटवेनामृताप्लावनेनचसोढुंसमकर्तुमूर्ध्वंनीयते ॥ ४६ ॥ नीयमानाचसाआकर्षणाद्दंडोपमादीर्घतागतासतीसर्पीवत्वरितैवोर्ध्वमभ्यासपाटवाद्याति ॥ कथयातितदाह ॥ नाडीरिति ॥४७॥ तदानाडीद्वारानीरंध्रनिरवकाशयथास्यात्त थापवनेनापूर्णंलघुत्वमापन्नसमस्तमापादमस्तकमिदंदेहककूपादूर्ध्वमाकृष्यमाणाचर्मभस्त्राततव्याप्तमंतरमतःप्रदेशोयेनतथाविधमम्बिवउतूऊर्ध्वप्लावयतिउड्डीनकरोतितदेवा काशगमनमित्यर्थ ॥ ४८ ॥ इतिएवविधेनाभ्यासविलासेनयोगेनकायाकाशसंबंधसंयमलक्षणेन ॥ तथाचभगवतःपतंजले सूत्रम ॥ कायाकाशयोःसंबंधसंयमाल्लघुतू लसमापत्तेश्चाकाशगमनमिति॥तद्भाष्यच यत्रकायस्तत्राकाशंकायस्यतेनसंबंध प्राप्तिस्तत्रकृतसंयमोयोगीजित्वातत्संबंधलघुतूलादिषुआपरमाणुभ्यःसमापत्तिलब्ध्वाजित संबंधोलघुर्भूत्वापादाभ्यांजलेसंचरतिततस्तूर्णनाभितंतुमात्रेविहृत्यरश्मिषुविहरतिततोयथेष्टमाकाशगतिरस्यभवतीति ॥ ४९ ॥

दर्शनं सिद्धगणानामाह ॥ ब्रह्मनाडीत्यादिना ॥ यदा रेचकेन प्रयोगेणोर्ध्वमारूढा कुण्डलिनीशक्तिर्ब्रह्मनाडीं सुषुम्नां तदन्तःप्राणप्रवाहेण शीर्षकपालद्वयसन्धिलक्षणस्य कपाट स्पर्शाद् द्वादशाङ्गुलमितमूर्धनि पाशनाख्यस्थाने मुहूर्तमात्रं स्थितिमाप्नोति तदा व्योमगानां सिद्धानां दर्शनं भवतीति परेणान्वयः ॥ तथा च भगवत्पतञ्जलेः सूत्रम् ॥ मूर्धज्योतिषि सिद्धदर्शनमिति ॥ तद्भाष्यं च ॥ शिरःकपालेऽन्तश्छिद्रं प्रभास्वरं ज्योतिस्तत्र यमाश्रित्य सिद्धानां द्यावापृथिव्योरन्तरालचारिणां दर्शनमिति ॥ ५० ॥ ५१ ॥ अदिव्यानामिन्द्रिया णामिति भावलक्षणषष्ठी यानादरदति षष्ठी ॥ यदास्मदादीनामिन्द्रियाणामदिव्यानां सतां तस्य पिसन्निकर्षे सिद्धा मातत्वमद्वोपरत्वदुर्लभतशानयनोश्चमण चाक्षुपप्रभासन्निकर्ष विनापादशानदाणधारणमामण सिद्धानां दर्शनं कथं भवेत्तच्च कीदृशमित्यर्थः ॥ ५२ ॥ नयकथं भवेदित्यंशमिष्टापत्त्या यसिद्ध परिहरति ॥ नकेचनेति ॥ नभस्वतो नभस्वतो वायुभूता

ब्रह्मनाडीप्रवाहेण शक्तिः कुण्डलिनी यदा ॥ बहिरूर्ध्वं कपालस्य द्वादशाङ्गुलमूर्द्धनि ॥ ५० ॥ रेचकेन प्रयोगेण नाड्यन्तरनिरोधिना ॥ मुहूर्तं स्थितिमाप्नोति तदा व्योमगदर्शनम् ॥ ५१ ॥ ॥ श्रीरामउवाच ॥ ॥ दर्शनं कीदृशं ब्रह्मन्नयनाश्रुगणं विना ॥ अदिव्यानामिन्द्रियाणां तत्त्वमवश्यं भवेत् ॥ ५२ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ न केचन महाबाहो नृचरेण नभस्वता ॥ अदिव्येनाश्रिता ज्ञाने दृश्यन्ते पुरुषेन्द्रिये ॥ ५३ ॥ विज्ञानादृश्यते स्थैर्ये बुद्धिनेत्रेण राघव ॥ दृश्यन्ते व्योमगाः सिद्धाः स्वप्नवत्स्वाथदा अपि ॥ ५४ ॥ स्वप्नावलोकनं यद्वत्तद्वत्सिद्धावलोकनम् ॥ केवलं यद्विशेषोऽयं सिद्धप्राप्तौ स्थिरायतौ ॥ ५५ ॥ मुखाद्बहिर्द्वादशान्ते रेचकाभ्यासयुक्तितः ॥ प्राणेश्चिरस्थितिं नीते प्रविशत्यपरां पुरीम् ॥ ५६ ॥ ॥ श्रीरामउवाच ॥ ॥ वदस्व भावस्य कथं ब्रह्मन्नचलसंस्थितिः ॥ वक्तारः सानुकम्पा हि दुःप्रश्नेऽपि न खेदिनः ॥ ५७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ शक्तिर्या तु स्वभावाख्या यथा स्फुरति चात्मनः ॥ सर्गादिषु तथैवासौ स्थितिं याति ति निश्चयः ॥ ५८ ॥

सिद्धा आश्रिता ज्ञाने मलिन पुरुषेन्द्रिये दिव्यनेत्रोपायान्तरेण मानदृश्यत इति सत्यमेव त्वयोक्तमित्यर्थः ॥ ५३ ॥ केन तर्हि दृश्यन्ते तत्राह ॥ विज्ञानादिति ॥ विज्ञानाद्योगाभ्यासससंस्कृतमनसः ॥ ५४ ॥ कीदृशमिति प्रश्नस्योत्तरमाह ॥ स्वप्नावलोकनमिति ॥ स्थिरायततासत्यादरदानफलाप्राप्तिव्यवहारक्षमार्थता स्वप्नापेक्षया विशेष इत्यर्थः ॥ ५५ ॥ इदानीं परकायप्रवेशो येनोपायेन सिध्यति तमाह ॥ मुखादिति ॥ द्वादशान्ते द्वादशाङ्गुलिपरिमितपदे ॥ ५६ ॥ विशेषोऽयं सिद्धप्राप्तौ स्थिरायतेति यदुक्तं तत्र स्वभाव एव हेतुः सर्व्व सर्वस्य जगतो मायामयत्वादनियतस्थितित्वात् बहुशस्त्वयैव घटस्य पटतादृष्टेः स्वासिनाभ्युत्थादितस्य भावस्यैकस्य नियतस्थितिः कथमिति राम पृच्छति ॥ यदेति ॥ ५७ ॥ सत्यसंकल्पस्येश्वरस्य सर्गादिकाले संकल्पप्रयुक्ता वस्तुस्वभावनियतिः पियावत्सर्गकालमेव न प्रलये सास्तीति सर्वनियतिभङ्गवादविरोध इत्याशयेन प्रागुक्तमेव स्मारयन्नृवसिष्ठस्तदुत्तरमाह ॥ शक्तिरिति ॥ ५८ ॥

॥ अवस्तुत्वादिति ॥ क्वचित्कामरूपदेशादौ ॥ शारदंग्रीष्मादिफलम् ॥ ५९ ॥ नानाऽनानातयाअनियतस्वभावतयास्थि
कालभेदेनेवदेशभेदेनापिवस्तुशक्तेरनियततादृष्टेत्याह ॥ अवस्तुत्वादिति ॥ क्वचित्कामरूपदेशादौ ॥ शारदंग्रीष्मादिफलम् ॥ ५९ ॥ नानाऽनानातयाअनियतस्वभावतयास्थि
तसर्वमेवेदंब्रह्म ॥ ब्रह्मस्वभावेनैवनियतैकरूपनान्येनेत्यर्थः ॥ कथतर्हिवह्नेरूर्ध्वज्वलनादिनियतिस्तत्राह ॥ जृंभतेइति ॥ प्राणिकर्मतत्फलोपभोगव्यवहारार्थमज्ञातब्रह्मैवक
चित्कालतथातथानियतस्थितिभूत्वाजृंभतइत्यर्थः ॥ ६० ॥ इदानींमणिमाख्यामहिमाख्याचसिद्धिःकेनोपायेनसिध्यतीतिरामःपृच्छति ॥ सूक्ष्मेति ॥ नीयतेयोगिनेतिशेषः
॥ ६१ ॥ अस्यप्रश्नस्योत्तरमुत्तरसर्गेविस्तराद्वर्णयिष्यस्तदुपोद्घाततयादेहेअग्नीषोमव्याप्तिनिरूपयिष्यन्प्राणापानयोःसघर्षादंतरालेजाठराग्निनिष्पत्तौदृष्टांतमाह ॥ काष्ठेति ॥
॥ ६२ ॥ द्वयोः प्राणापानयोः ॥ अग्निर्जाठरः ॥ ६२ ॥ प्राणापानयोः सघर्षणोपपत्त्यैअन्योन्याकर्षकत्वेकारणमाह ॥ मासमित्यादिना ॥ कुत्सितस्यदेहयंत्रस्यज
छेदेद्वैधीभावः ॥ द्वयोः प्राणापानयोः ॥ अग्निर्जाठरः ॥ ६२ ॥ प्राणापानयोःसघर्षणोपपत्त्यैअन्योन्याकर्षकत्वेकारणमाह ॥ मासमित्यादिना ॥ कुत्सितस्यदेहयंत्रस्यज
ठरेउदरप्रदेशेनाभेरूर्ध्वमधश्चसमिलत्अतएवमिथःश्लिष्टमुखमामाशयपक्वाशयभस्त्राद्वयरूपस्थूलमांसादिविस्थैरूर्ध्वमाकाशसस्थैरभ्रःस्थैरवोजलेनिमग्नैश्चभागैःपरस्परश्लि

अवस्तुत्वादविद्यायावस्तुशक्तिरपिक्वचित् ॥ भिद्यतेदृश्यतेत्र्यंगवसंतेशारदंफलम् ॥ ५९ ॥ सर्वमेवमिदंब्रह्मनानानानातयास्थितम् ॥
जृंभतेव्यवहारार्थंकेवलंकथितस्थिति ॥ ६० ॥ ॥ श्रीरामउवाच ॥ ॥ सूक्ष्मच्छिद्रादिगत्यर्थंपूरणार्थंचखस्यवा ॥ अणुतांस्थूलतांवा
पिकायोयंनीयतेकथम् ॥ ६१ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ काष्ठक्रकचयोःश्लेषाद्यथाछेदःप्रवर्त्तते ॥ द्वयोःसंघर्षणादग्निःस्वभावाज्जा
यतेतथा ॥ ६२ ॥ मांसंकुयंत्रजठरेस्थितंश्लिष्टमुखंमिथः ॥ ऊर्ध्वाधःसंमिलत्स्थूलध्वंभःस्थैरिववेतसम् ॥ ६३ ॥ तस्यकुंडलिनीलक्ष्मी
र्निलीनांतर्निजास्पदे ॥ पद्मरागसमुद्गस्यकोशेमुक्तावलीयथा ॥ ६४ ॥ आवर्त्तफलमालेवनित्यंसलसलायते ॥ दंडाहतेवभुजगीसमुन्न
तिविवर्तिनी ॥ ६५ ॥ द्यावापृथिव्योर्मध्यस्थाक्रियेवस्पंदधर्मिणी ॥ संविन्मधुविबोधार्कोत्हृत्पद्मपुटषट्पदी ॥ ६६ ॥ तत्सर्वंशक्तिपद्मा
दिबाह्येनाभ्यंतरैस्तया ॥ हृदिव्याधूयतेवातैःपत्रवृंदमिवाभितः ॥ ६७ ॥

ष्टरुपलक्षितमधोभस्त्राऊर्ध्वंवायुनाचविरुद्धदेशयोःकृष्यमाणवेतसकुंजमिवकंपमानंस्थितंवर्ततइत्यर्थः ॥ ६३ ॥ अस्तुनत्विततस्तत्राह ॥ तस्येति ॥ तस्यमांसस्याधस्तनभस्त्रा
भागस्यमूलभागरूपेनिजेआस्पदेमूलाधारेप्रागुक्ताकुंडलिनीसर्वस्यकार्यकारणसंघातस्यप्राणप्रदत्वाल्लक्ष्मीः ॥ ६४ ॥ जपकालेआवर्त्यमानारुद्राक्षादिफलमालेवनित्यमभी
क्ष्णप्राणापानोद्गिरणनिगिरणाभ्यासलसलायतेकंपेनाव्यक्तरवंजनयति ॥ अव्यक्तानुकरणाड्डाचिबहुलग्रहणात्करोत्यर्थेक्यङ् ॥ समुन्नतिरूर्ध्वमुखतातयाविवर्तिनीपरिवर्त्त
नशीला ॥ ६५ ॥ द्यावापृथिव्योर्मध्येप्राणिनामूर्ध्वाधोगतिहेतुर्विहितनिषिद्धक्रियेवप्राणापानयोरूर्ध्वाधोगतिहेतुत्वात्स्पंदधर्मिणी चाक्षुषादिसविल्लक्षणानामधूनारूपादिवि
षयास्वादानाविबोधेअर्कइवस्थिता ॥ ६६ ॥ शक्तयोज्ञानकर्मेंद्रियादिशक्तयः ॥ प्रागुक्तहृत्पद्मादिपदान्नाडीजालंचहृदिआभ्यंतरैर्वातैस्तयाव्याधूयतेकंप्यते ॥ यथाबाह्येन
वातेनतरुपत्रवृंदंव्याधूयतेतद्वदित्यर्थः ॥ ६७ ॥

षासम्यामयद्व्रिशालस्फुरतिमभसत्वभावादेववायवोमटपत्काप्रपापाणाविमट्टपर्णतृणादिचकवलयतीवकालेनजरयंतितद्वतम्योन्यपिप्राणवायवोभुक्तमन्नादिजरयतीत्य र्थ ॥ ६८ ॥ जरणप्रकारमेवाह ॥ वातैरिति ॥ तथाशुक्तछत्यमनाडीजलाप्रिप्राणवातैराहन्यमानध्मायमानलोहकारजलेवतरलायते ॥ तरलायमानस्यतस्यछदिअतन्नमपिष्ट स्यान्नस्यप्रथमरसोरसाद्रक्तरक्तान्मांसमांसात्स्वकृत्वचोमेदोमदसोमज्जामज्जाभ्योस्थीन्यस्थिभ्यःशुक्रमितिविविधप्रकार्येणान्यस्यान्यापरिणतिरेति ॥ यथावसंतेतरोरतःप्रवि टभौमरसस्यपल्लवमअर्थपुष्पाणिफलानीत्यादिरितितद्वदित्यर्थ ॥ ६९ ॥ तथसमस्तपिधानुस्थानेपूत्तरोत्तरपरिणामसिद्धयेपरस्परसघर्षाज्जाठराग्नरभिव्यक्तिरस्तीत्याशयेना ह ॥ देहस्विति ॥ आजरणजरणपरंपरयाचरमधातुपरिणामपर्यंतमित्यर्थ ॥७० ॥ सदेह सर्वांगेउदितेनपदर्शनेनतनजाठराग्निनाऔष्ण्यमेति ॥७१॥ तस्यैवसर्वदेहव्यापिनोजाठ

यद्व्योमस्फुरत्यगस्वभावात्तत्रवायव ॥ बलवन्त्ट्टुर्यत्किंचिद्भूशाकवलयनितत्॥६८॥ वातैराहन्यमानतत्पद्याटिलरलायते॥ छघन्या न्यतिकार्येणपल्लवादियथातरो ॥६९॥ देहस्वाजरणसर्वरसानांपवनोन्वहम्॥ जनयत्यभिमन्योन्यसघपाद्दनवेणुवत्॥७०॥ स्वभाव शीतवातात्मादेहस्तेनौष्ण्यमेत्यथ॥ उदितेनससर्वांगेभुवनभानुनायथा॥७१॥सर्वतोविचरेढस्मिंस्तत्तेजस्तारकाकृति॥छत्पद्महेमभ्र मरंयोगिनांचित्यतांगतम्॥७२॥ तत्प्रकाशमयज्ञानंचिंतितसप्रयच्छति॥ येनयोजनलक्षस्यवस्तुनित्यहिदृश्यते॥७३॥ तस्याग्नेर्वा हवस्येवजलसंशुष्कमिंधनम्॥ मांसपकजखंडाख्यछत्सर कोशवासिन ॥७४॥ यदच्छशीतलत्वचतदस्याग्नेद्रुरुच्यते॥ इतींदोरुत्थि त सोग्निरग्नीपोमौहिदेहक ॥७५॥ सर्वतूष्णात्मकंकिंचित्तेजोकांम्यभिधविदु ॥शीतात्मकतुसोमाख्यमाभ्यामेवकृतजगत्॥ ७६ ॥ विद्याविद्यास्वरूपेणसर्वसदसदात्मना॥जगद्वायेननिर्वर्त्ततदेवैवविभज्यते ॥७७॥ सविप्रकाशविद्यादिसूर्यमग्निंविदुर्बुधा ॥ अस ज्जाड्यतमोविद्याघाद्दु सोममनीपिण ॥७८॥

रामर्त्यत्पर्येतारकाकारेणयोगिभिरुपासनक्रियतइत्याह ॥ सर्वतइति ॥ अस्मिन्देहे ॥ ७२ ॥ तदेवचिद्रूपेणाचिंत्यमानव्यवहितविप्रकृष्टसर्वपदार्थदर्शनसिद्धिजनयतीत्याह ॥ तदिति ॥ ७३ ॥ तस्याग्नेरिंधनमाह ॥ तस्येति ॥ वाडवस्याग्नःसामुद्रजलमिवमांसलक्षणे पकजखंडेराख्यपद्मछत्सरस्तत्कोशशायिनस्तस्यजाठरस्याग्नरपिशारीरमन्तरसरूप जलसंशुष्कज्वलनयोग्यमिंधनमित्यर्थ ॥ ७४ ॥ देहेंधनभूतमिन्दुशलक्षणेनविभज्यदेहस्याग्नीषोमात्मकत्वमाह ॥ यदिति ॥ ७५ ॥ बहिरपिजगत्प्रकाशौष्ण्याभ्यांशैत्य जाड्याभ्यांचाग्नीषोमात्मकत्वमित्याह ॥ सर्वमिति ॥ ७६॥ अथवाचिज्जडोभयघटितसदसदात्मकमविद्याशबलब्रह्मैवजगदाकारेणनिर्वृत्तमितितदेवैषप्रकाशजाड्यात्मनाग्नी षोमरूपेणविभक्तमित्याह ॥ विद्येति ॥ ७७ ॥ तद्विभागमेवस्फुटमाह ॥ सविदिति ॥ विद्याआत्मतत्त्वस्फूर्तिम् ॥ अविद्याद्यासाद्यपर्याय ॥ ७८ ॥

देहेष्वाजरणंसर्वरसानांपवनोन्वहम् जनयत्यग्निमन्योन्यसंघर्षाद्वनवेणुवदितित्वदुक्त्यादेहबहिश्चप्रत्यक्षेणाऽग्न्यादित्यादेर्वाड्वधीनोद्भवोदयादिदर्शनाद्वह्निर्वाय्वात्मनःसोमादुदेती त्ययमर्थोमयाबुद्धइतिशेषः ॥ शेषं.स्पष्टं ॥ ७९ ॥ परस्परंपर्यायेणप्रजीपेतेजिगीषेते ॥ जेःसनिद्वित्वकुत्वयोरभावश्छादसः ॥ अज्झनगमामितिदीर्घः ॥ प्रजीवेतेइतिपाठेनुप रस्परमुपजीवतइत्यर्थ. ॥ ८० ॥ अनयोर्जन्मबीजाकुरवत्परस्परोपादानकदिवसरात्रिवत्परस्परनिमित्तकंच ॥ स्थितिस्तुछायातपसमापरस्परोपघातिनीत्यर्थः ॥ ८१ ॥ दृष्टा तभेदोपन्यासस्यतात्पर्यांतरमाह ॥ तुल्येति ॥ युगपदुपलंभेछायातपस्थितिःपर्यायेणोपलंभेदिनरात्रिस्थितिर्दृष्टांतइत्यर्थः ॥ ८२ ॥ दृष्टांतयो.कार्यकारणभावद्वयपरत्वपक्षे

॥श्रीरामउवाच॥ ॥वह्निर्वाय्वात्मनःसोमादुदेतीतिमुनीश्वर॥ सोमस्योत्पत्तिमधुनावदमेवदतांवर॥ ७९ ॥ ॥श्रीवसिष्ठउवाच॥ अग्नीषोमौमिथःकार्यकारणेचव्यवस्थिते॥ पर्यायेणसमंचैतौप्रजीपेतेपरस्परम् ॥ ८० ॥ जन्मांगबीजांकुरवत्तथादिवसरात्रिवत्॥ स्थितिश्छायातपसमाकेवलासैतयोर्भवेत्॥ ८१ ॥ तुल्यकालोपलंभासावित्यंछायातपस्थितिः॥ केवलैकोपलंभाढ्यास्थितिर्दिवस रात्रिवत्॥ ८२॥ कार्यकारणभावश्चद्विविधःकथितोनयोः॥ सद्रूपपरिणामोत्थोविनाशपरिणामजः॥ ८३॥ एकस्माद्यद्द्वितीयस्यसं भवोंकुरबीजवत्॥ कार्यकारणभावोसौसद्रूपपरिणामजः॥ ८४॥ एकनाशेद्वितीयस्ययद्भावोदिनरात्रिवत् ॥ कार्यकारणभावोसौ विनाशपरिणामजः॥ ८५॥ सद्रूपपरिणामस्यप्रदृष्टक्रमसंस्थितेः॥ अक्षोपलंभादितरत्प्रमाणंनोपयुज्यते ॥ ८६ ॥ विनाशपरिणाम स्यदिनरात्रिक्रमस्थितेः॥ अभावोप्येकवस्तुस्थोगतोमुख्यप्रमाणताम्॥ ८७॥

प्यवांतरभेदांतरद्वयेपितात्पर्यमस्तीत्याह ॥ कार्यकारणभावश्चेति ॥ ८३ ॥ तयोराद्यमुपपादयति ॥ एकस्मादिति ॥ ८४ ॥ द्वितीयमुपपादयति ॥ एकेति ॥ भावउत्पत्तिः ॥ ८५ ॥ आद्येकार्यदशायांकारणसत्वेमृदात्मकोयंघटइत्यादिप्रत्यक्षंप्रमाणमित्याह ॥ सद्रूपेति ॥ यद्यप्यनुमानादीनामपिसंभवोस्तितथापिप्रत्यक्षसिद्धेर्थेनतेमृग्यतेइत्यनुप योगोक्तिः ॥ तदुक्तंन्यायवाचस्पत्ये ॥ नहिकरिणिदृष्टेचीत्कारेणतमनुमिमतेमिमातारइति ॥ सिद्धिसत्वेनपक्षतारूपकारणाभावादित्याशयः ॥ ८६ ॥ एवंद्वितीयेपिकार्यद शायांकारणासत्वेदिवारात्रिनोपलभामहेइत्यनुपलब्धिःप्रमाणमित्याह ॥ विनाशेति ॥ एकवस्तुस्थःएकवस्तुमात्रग्राहिप्रत्यक्षाविरुद्धः ॥ ८७ ॥

१ उपलब्धेरभावोऽनुपलब्धिः

नतुकार्यकुर्वन्कारणमुच्यत तत्कर्तृत्वंचकारणस्यतदभिनिवेशलक्षणायामास्थायांदृष्टम् नचप्रकाशनमात्रोपक्षीणस्यचिनस्यराग्निनिमित्तेआस्थास्तीतिनास्तिकर्तृत्वम् एव राधेरपिदिनम् सत्यनास्तीत्यभावपरिणामेनकार्यकारणभावोनिर्मूल ॥ एवमचेतनस्यमृदादेर्घटादिजननेआस्थासंभवति तस्याश्चेतनधर्मत्वात् ॥ किंचानुपमर्दितात्मृत्पिंडा म्घटानिष्पद्यते उपमर्देतुमृत्सदोनस्यस्येवतिकिंसद्रूपेणपरिणमत नचपिंडघटव्यतिरिक्ताउभयानुगतामृन्नामकाचित्सप्रतीयास्ति ॥ किंचबीजादिस्थितनिनष्टुनस्यन्नष्ट वाअंकुरंजनयत् ॥ नाद्य ॥ कुसूलादौतदसंगात् ॥ नद्वितीयःपूर्ववत् ॥ तदात्वप्राणेप्यसमर्थपरमुत्पादयितुसमर्थमितिकाबाधोयुक्ति ॥ चतुर्थस्तुकस्य सर्वानुभवबाधितइ तिनकस्मादित्यस्यधिदुत्पत्तिविनाशावाकिंनुस्वभावतएवउत्पत्त्यनेमिनश्यतिचतथपौर्वापर्यदर्शनादविवेकिनांकार्यकारणभावविकल्पःस्यादित्यादिदुर्युक्तिवादिन स्वानुभवबि रोधोद्भावनेनैवनिरसनीयाइत्याह ॥ अनास्थेति ॥ इत्यादिरायुक्तिर्दुर्युक्तिस्तद्वादिनः ॥ अवज्ञयाअवमानेन ॥ स्वानुभूत्यपलापिनाचतेषामित्यन्वेषणीया ॥ अनास्थादियुक्ति बुद्धिरकर्तृत्वादिबुद्धिजनयतिचसयोरेवकार्यकारणभावस्त्वानुभवसिद्धइतिकथंतत्सामान्यापलाप ॥ यदिनजनयतितर्हिंतयास्वानुभवबलस्तवपरंबोधयितुमयायुक्त्युपन्या

अनास्थानास्तिकर्तृत्वमित्याद्यायुक्तिवादिन ॥ अवज्ञयाबहिष्कार्या स्वानुभूत्यपलापिन ॥८८॥ प्रत्यक्षवदभावोपिप्रमैवरघुनंदन ॥ अन्यभावोपिशीतस्यप्रमाणसर्वजंतुषु ॥ ८९ ॥ अग्निर्धूमतयाभागांप्रयातिपयोदताम् ॥ सद्रूपपरिणामेनतदग्नि सोमकारणम् ॥९०॥ अग्निर्नष्टतयाशैत्यादसावेवप्रयातियत् ॥ विनाशपरिणामेनतदग्नि सोमकारणम् ॥९१॥ समांबुधिपय पीत्वाधूमोद्गारेणवाडव ॥ पयोदतांप्रयातेनतदेवजनयत्यलम् ॥९२॥ अर्कंपीत्वानिशानाथमामावास्यपुन पुन ॥ उद्गिरत्यमलेपक्षेक्षणालमिवसारस ॥९३॥

स स्वानुभवविरुद्धप्रलापइति ॥ एवराभिरपिचरमभावविकारात्मनाअभावपरिणामेनदिनस्यकारणमितिस्वानुभवसिद्धमेव ॥ नचनाशोनभावविकारः उत्पत्त्यादेरिवतस्या पिभावधर्मत्वानुभवात् ॥ एवंबीजांकुराद्यवस्थास्वनुगतद्रव्यमप्यबाधितप्रत्यभिज्ञानुभवसिद्धंनापलाप्यं तदेवस्थितनिनष्टुनश्यन्नष्टमित्याद्यवस्थाभेदस्त्वात्मन्यनुभवदकारा दे कारणतावस्थाभेदपृच्छितइतितद्व्यभेदास्तेषांनिर्हेतुकोत्सत्त्वादाचिन्त्यमाणकामतिर्गौरवपस्ताश्चप्रलपतोमूर्खाअवज्ञयैवबहिष्कार्याइत्यर्थ ॥ ८८ ॥ अनुपलब्धे मा मान्यसंदेहवारयति ॥ प्रत्यक्षवदिति ॥ प्रमैवप्रमाणमेव ॥ नचाभावप्रमाकरणत्वमन्यत्रनदृष्टमितिभ्रमितव्यम् ॥ तेजोऽभावस्यशीतानुमितौलिंगविधयाकरणत्वप्रसिद्धेरि त्याह ॥ अन्यभावइति ॥ ८९ ॥ वह्निरम सद्रूपपरिणामनसोमकारणत्वमुदाहरति ॥ अग्निरिति ॥ स्पष्टम् ॥ ९० ॥ अभावपरिणामेनापितदुदाहरति ॥ अग्निरिति ॥ अशीत मियद्वायुभावमामोति ॥ यथाचाअग्निरुद्वायत्तिवायुमेवाप्येतीतिश्रुते ॥ ९१ ॥ सद्रूपपरिणामेनाग्नीषोमयो परस्परकारणत्वमर्कमेकर्णोदाहरति ॥ समेत्यादिना ॥ वाडवोमवा नल पयोदतांप्रयातेनस्वेनैवतत्समांबुधिपयएवजनयति ॥ क्षीरदधिघृतादीनामपिरसात्मकसोमरूपत्वात्सर्वमपयोपाद ॥ ९२ ॥ आअमावास्यामित्यामावास्यम् ॥ आङ्म र्यादाभिविध्योरित्यव्ययीभावेनपुंस्त्वमार्षम् ॥ कृष्णपक्षेअमावास्यापर्यंतमित्यर्थ ॥ अमलेशुक्लपक्षे ॥ ९३ ॥

---

१ असौनष्टतयाशैत्याद्वायुतामेवयातियदितिपुस्तकांतरेपाठ ॥ मूलस्यपाठेतुवायुभावमित्यध्याहारलभ्योऽर्थः ॥

सोमोमुखमिवशोभमानोयत्रतथाविधवसंतग्रीष्मागमेप्राण.सोष्मावायुभा... अमृतोपमतद्रसंपीत्वापीनतागतःसन्नभवद्व्याप्तसर्वनाडीजालागमनाच्छरीरपूर... अमृतोपमशीतसोमरसपीत्वा
ल्लिकएवप्राण.सोमस्यापानस्यमुखादन्नपानादेरुदरेआगमनेसतिअमृतोपमतद्रसंपीत्वापीनतागतःसन्न ... इतिश्रुतेरितिभावः ॥ सोमसुखागमेइतिपाठेनुप्राणोग्निभूतोयजमानप्राणोऽध्वरेअमृतोपमशीतसोमरसपीत्वा पौर्णमास्यापीनतांगत.पुनः
न.सोमपरिणामइत्यर्थः॥ तदपानेनाजिघृक्षत्तदावयत्सैषोन्नस्यग्रहइतिश्रुतेरितिभावः ॥ सोमसुखागमेइतिपाठेनुप्राणोग्निभूतोयजमानप्राणोऽध्वरेअमृतोपमशीतसोमरसपीत्वा... आगमनाच्चद्रंप्राप्यतद्भावप्राप्त कलाभिःस्वशरीरपूरयतिसएवास्यपौर्णमास्यापीनतांगत.पुनः
तेधूमादिमार्गेणसुखस्यस्वर्गस्यागमेअभ्रस्यचद्रसन्निहिताकाशलक्षणमार्गपर्वणआगमनाच्चद्रंप्राप्यतद्भावप्राप्त कलाभिःस्वशरीरपूरयतिसएवास्यपौर्णमास्यापीनतांगत.पुनः
तेधूमादिमार्गेणसुखस्यस्वर्गस्यागमेअभ्रस्यचद्रसन्निहिताकाशलक्षणमार्गपर्वणआगमनाच्चद्रंप्राप्यतद्भावप्राप्त ... धूमाद्रात्रिरात्रेरपरपक्षमपरपक्षाद्यान्षट्दक्षिणैतिमा
सोमपरिणामइत्यर्थः ॥ धूमादिमार्गश्चद्रभावश्चश्रुत्यैवदर्शितः ॥ अथयत्रेमेप्रातरिष्टापूर्तेदत्तमित्युपासतेतेधूममभिसभवंतिधूमाद्रात्रिरात्रेरपरपक्षमपरपक्षाद्यान्षट्दक्षिणैतिमा
सास्तान्नैतेसवत्सरमभिप्राप्नुवतिमासेभ्यःपितृलोकपितृलोकादाकाशमाकाशाच्चद्रमसमेषसोमोराजातद्देवानामन्नमिति ॥ तस्मिन्नेतस्मिन्नग्नौदेवाःश्रद्धाजुह्वतितस्याआहुतेः
सोमोराजासभवतीतिचपचाग्निविद्यायाम ॥१४॥ यदिमन्यसेनवायुर्भौमरसशोषयतिकित्वर्करश्मयएवतपिबतिरात्रावप्यूष्मरूपेणतेषासत्त्वादितितदातएवोदाहरणमित्याश

पीत्वामृतोपमंशीतंप्राणःसोममुखागमे ॥ अभ्रागमात्पूरयतिशरीरंपीनतांगतः ॥ १४ ॥ जलमप्युदपांभोगेप्रयात्यर्कस्यरश्मिताम् ॥
नाशात्मकतयातोयमौष्ण्यत्वादेतिह्यग्निताम् ॥ विनाशपरिणामेनतत्तोयंवह्निकारण
म् ॥ १५ ॥ नाशात्मकनयातोयमौष्ण्यत्वादेतिह्यग्निताम् ॥ विनाशपरिणामेनतत्तोयंवह्निकारण
सद्रूपपरिणामेनतज्जलंवह्निकारणम् ॥ १६ ॥ हुताशोनाशमागत्यसोमोभवति
म् ॥ १६ ॥ अग्नेर्विनाशेसद्रूपपरिणामोनिशाकरः ॥ इंदोर्विनाशेसद्रूपपरिणामोहुताशनः ॥ १७ ॥ हुताशोनाशमागत्यसोमोभवति
म् ॥ १६ ॥ अग्नेर्विनाशेसद्रूपपरिणामोनिशाकरः ॥ इंदोर्विनाशेसद्रूपपरिणामोहुताशनः ॥ १७ ॥
वैतथा ॥ दिवसोनाशमागत्यरात्रिर्भवतिवैयथा ॥ १८ ॥ तमःप्रकाशयोश्छायातपयोर्दिनरात्रयोः ॥ मध्येविलक्षणंरूपंप्राज्ञैरपिनल
भ्यते ॥ १९ ॥ संधिरप्यविलोपःस्यादेतयोरेवतद्वपुः ॥ भावाभावैर्यथैकास्थानिष्ठावेतौतथैवहि ॥ १०० ॥

भ्यते ॥ यदादित्यस्यलो ... शुक्लरूपेणतत्रापामनुगमदर्शनात् ॥ यदादित्यस्यलो
येनाह ॥ जलमपीति ॥ उतऊर्ध्वमादित्यरश्मिभिरपांभोगेपानेकल्प्यमानेपिजलमर्कस्यरश्मितासद्रूपपरिणामेनयाति शुक्लरूपेणतत्रापामनुगमदर्शनात् ॥ यदादित्यस्यलो
हितरूपतेजसस्तद्रूपयन्छुक्लतदपामितिश्रुतेरितिभावः ॥ १५ ॥ यस्तुतत्रशैत्यद्रवत्वयोर्नाशऔष्ण्यरौक्ष्ययोश्चोद्भवस्तदशेविनाशपरिणामिताप्यस्तीतिसकीर्णोदाहरणमिदमि
त्याह ॥ नाशात्मकतयेति ॥ १६ ॥ सर्वत्राग्नीषोमात्मकेपरिणामेउभयरूपसकीर्णतापिसूक्ष्मदृशालक्षयितुशक्येत्याशयेनाह ॥ अग्नेरितिद्वाभ्याम् ॥ १७ ॥ १८ ॥ तर्हितमः
प्रकाशयोश्छायातपादौचकिमनुगतरूपयेनसद्रूपपरिणामतातत्रस्यादितिचेत्तद्वत्सैवतत्राभिज्ञतमैरपिश्रगयाहिकयानलभ्यतइत्याह ॥ तमइति ॥ मध्येअनुगतंव्यावृत्ततम.
प्रकाशविलक्षणसन्मात्ररूपम् ॥ अथवामध्येसधौउभयविलक्षणम् ॥ दिनरात्रयोरितिसमासातश्छादसः ॥ १९ ॥ ननुतमःप्रकाशयो.सधिरुभयविलोपात्माशून्यरूपस्तत्र
नोभयविलक्षणंकिंचिद्रूपमस्तीत्याशक्याह ॥ सधिरिति ॥ अनयोःसधिरपिअविलोप.अशून्यरूपःस्यात् यतस्तत्सधिरूपमेतयोरेववपु.परस्परसलग्नस्वरूपम ॥ नहिशून्ययोः
सधिर्नामभवति नवानिर्निमित्तासतो.शून्यता ॥ कथतर्हिनौसंधौवर्त्तेतेइतिचेत् यथापूर्वोत्तरकालयोर्भावाभावैः ॥ उदाहरणबाहुल्याद्बहुवचनम् ॥ परस्परानिरपेक्षनिरूपणे
नभावरूपेणसापेक्षनिरूपणेनाभावरूपेणचतमइदप्रकाशाभावरूपमेकमेववस्तुप्रकाशश्चायतमोऽभावरूपमेकमेववस्त्वितिसर्वानुभवादेतावेकास्थानिष्ठौस्थितौतथैवहिसंधाव
पिवर्त्तेते नाणुमात्रमप्यन्यथाभूतावित्यर्थः ॥ १०० ॥

॥ १०१ ॥ यथाविरुद्धाविरुद्धतमःप्रकाशघटिताअहोरात्रास्तथाचिज्जडोभयघटिताःसर्वव्यवहाराइत्याह ॥ चिद्रूपेति ॥ जलमयेबिंबेसूर्यकरद्वारासूर्यबिंबस्थितामृतात्मक
कलाभिःक्रमेणपूर्णाउभयारब्धाऐंदवीतनुरिव ॥ २ ॥ चिज्जडोभयांशाभ्यामेवप्रकाशाप्रकाशतयाआविर्भूताभ्यामनोऽग्नीषोमात्मकतेत्याह ॥ प्रकाशमिति ॥ ३ ॥ बहि
सूर्योदयात्तमइवांतश्चरमदस्याचिदादित्योदयाज्जन्ममूलतमोनिवृत्तिरित्याह ॥ चित्सूर्येइति ॥ जयस्योदयोयस्मात्तथाभूतम ॥ ४ ॥ निजेअस्यगात्मनिजडेसोमदेहेदृष्टेसति
तत्तादात्म्येनस्फुरंत्यपिचित्सत्तात्वमिवापन्नाग्रुतांतरयत्तस्यैवसतीभूत्वासत्सत्तयाअसत्यवद्भवेत् ॥ यथानिशीथेअर्धरात्रेऽन्येचंद्रेविलसतितदनुप्रवेशेनस्फुरन्सौरप्रभाभरश्चंद्र
धर्मचंद्रिकात्वेनसत्यमर्थंसत्तयासन्निवभूत्वास्वसत्तयाअसत्यवद्भवतितथासौरप्रभाभरोनास्तीतिसर्वजनानुभवादितिभाव ॥ ५ ॥ दृष्टांतदार्ष्टांतिकयोरुपपत्तिफलमाह ॥
सोममिति ॥ चंद्रमंडलेप्रविष्टःसूर्यप्रभारूपोग्निःसोममलमयमपिबिंबंप्रकटयतिस्फुरद्रूपंकरोति ॥ देहेनुजीवभावेनानुप्रविष्टाचिद्देहस्यचिरप्रभावद्भासमहाभासाविभावयाक

द्वाभ्यांचैतन्यजाड्याभ्यांभूतानिप्रस्फुरंतिहि ॥ यथातमःप्रकाशाभ्यामहोरात्रामहीतले ॥ १०१ ॥ चिद्रूपजडरूपाभ्यामारब्धेयंजगत्स्थिति ॥ जलाग्रुताभ्यांमिश्राभ्यांशीतातनुरिवैंदवी ॥ २ ॥ प्रकाशमनलंसूर्यंचिद्रूपंविद्धिराघव ॥ जडात्मकतमोरूपंविद्धिसोमशरीरकम् ॥ ३ ॥ चित्सूर्येनिर्मलेदृष्टेनामनस्येद्भवोदयम् ॥ व्योमसूर्येयथादृष्टेयथाकृष्णनिशातम ॥ ४ ॥ सोमदेहेजडेदृष्टेचिन्निजेसत्यवद्भवेत् ॥ निशीथेविलसत्यन्येयथासौरप्रभाभर ॥ ५ ॥ सोमंप्रकटयत्यग्निश्चिद्देहस्यचिरंप्रभाम् ॥ स्वसंविन्मयमिद्धश्चिद्देहस्यरूपमकंजम् ॥ ६ ॥ चिन्निष्क्रियात्वनामासाकेवलानोपलभ्यते ॥ आलोकइवदीपेनदेहेनैवावगम्यते ॥ ७ ॥ चितश्चेत्योन्मुखत्वेनलाभःसैवचसस्थिति ॥ निश्चेत्यायाःशुभोलाभोनिर्वाणवातदेवहि ॥ ८ ॥ अन्योन्यलब्धसत्तास्यावेवंकुड्यप्रकाशवत् ॥ अग्नीषोमाविमौज्ञेयौसंपृक्तौदेहदेहिनौ ॥ ९ ॥ अतिशायिनिनिर्वाणेजाड्येचैवातिशायिनि ॥ अग्नीषोमस्यचैवांगस्थितिर्भवतिकेवला ॥ ११० ॥ प्राणोग्निरुष्णप्रकृतिरपानःशीतलःशशी ॥ छायातपवदित्येतौसंस्थितौमुखमार्गगौ ॥ १११ ॥

रोति ॥ यथाप्रकाशयत्येकःस्वालोकमिमरश्मिः ॥ सोमःसोमीमयाकृत्स्नंप्रकाशयतिभास्रेतिभगवद्वचनात् ॥ एवमन्योन्यमेलनेतादात्म्याध्यासात्सकलरूपप्रभामंडलमिद्धर्भ
वति चिद्वत्स्वसंविन्मयमनुभ्योऽहंचेतनइत्यादिस्वानुभवानुसारिदेहस्यरूपभवतीत्यन्वय ॥ ६ ॥ इतोपिचितस्यादेहधर्मत्वभ्रमइत्याह ॥ चिदिति ॥ नमयतिसंकोचयतीतिनामउपा
धिसंपृक्त्या ॥ ७ ॥ अज्ञानावृतायाश्चितश्चेत्योपाध्युन्मुखत्वप्रयानियमादेवानर्थप्राप्तिरित्याह ॥ चितइति ॥ ८ ॥ एवमुक्तरीत्याकुड्यसौरप्रकाशवदन्योन्यसंवलनाधीनसद्रूपे
णवान्यव्यवहारविषयतादिर्मौदेहदेहिनावप्यग्नीषोमात्मकौज्ञेयौ ॥ ९ ॥ तयोरसंवलितावस्थैकस्थिति रूपसिद्धांतमाह ॥ अतिशायिनीति ॥ निर्वाणमुपाधिनिवृत्त्याआमदावि
र्भावस्तस्मिन्नतिशायिनिआत्यंतिकेसिद्धेअग्नेःकेवलास्थितिर्भवति जाड्येत्वतिशायिनिजलशिलादिगतेसोमस्यकेवलास्थितिर्भवतीत्यर्थ ॥ ११० ॥ प्राणापानयोरप्य
ग्नीषोमात्मकत्वंप्रमुक्तप्रकृतोपयोगायस्मारयति ॥ प्राणइति ॥ १११ ॥

तयो.कुड्यालोकवदन्योन्यतादात्म्यस्थितिंदर्शयति ॥ अपानेइति ॥ १२ ॥ मूलनाणकुंडलिनीरूपश्चिदग्निराधारादिकंठांतचतुर्दलादिपद्मपत्रस्थंपरादिवैखरीपर्यंतवाचात्मकम् ॥त्विषाअर्थप्रकाशनशक्त्या॥ अनुभूत्याविवक्षापक्षेत्वर्थप्रथारूपयास्फूर्त्या ॥ यथाबहिःसूर्यइतिशेषः ॥ १३ ॥ यथासर्गादौमायाशबलब्रह्मसविच्छीतोष्णरूपिणीब्रह्मांडाकारेणाग्नीषोमाभिधाप्राप्तातथान्नृणाव्यष्टिदेहानासर्गेपीत्यर्थ. ॥ १४ ॥ अस्त्वेवब्रह्मांडमिवशरीरमप्यग्नीषोमात्मकंकितत कार्यंतत्राह ॥ यत्रेति ॥ यथादिविकृष्णपक्षेअस्यात्मासूर्य.सोमस्यशीता.पचदशकला.प्रतिपदादितिथिषुक्रमेणग्रसतिएकाधुवाख्याचिद्रूपापरिशेषयति तत.शुक्लपक्षेक्रमेणोष्णाउद्गिरतिताभि क्रमेणपूर्यमाणाध्रुवाकलापूर्ण.सोमोजायते तथाल्हदिस्थित प्राणसूर्योऽपानरूपस्यसोमस्यमुखनासिकाद्वाराप्रविष्टाःशीता.पचदशकलाग्रसित्वामुखाद्बहिर्ध्रुवाख्यामेकाकलापरिशेष्यपुनस्ताउष्णाउद्गिरतिताभि.सापूर्यमाणाबहिरपानाख्यःसोमोजायते तत्रबहिःप्राणापानसधिकालःपूर्णमासीहृदित्वमावास्या अतरालदेशेइडापिंगलयोःप्रत्येकमूर्ध्वाधोभागप्रतिशाखानाडीषट्केप्राणसूर्यस्यप्रवाहाद्द्वेअयनेमेषादयोद्वादशमासास्तदतरालेसक्रातयः ॥ अपानसोमस्यप्रवाहाच्चैत्रादयोमासाविष्कभादयोयोगाअन्यानिचपर्वाणिनिष्पद्यतेइतियोगिनाप्रत्य

अपानेशीतलेसत्तामेत्युष्णःप्राणपावकः॥ प्रतिबिंबमिवादर्शेसचतस्मिंस्तथैवहि ॥ १२॥ चिदग्निःपद्मपत्रस्थंसोमंवाचात्मकंत्विषा॥ जनयत्यनुभूत्येहकुड्यालोकंयथाबहिः॥ १३ ॥संसृत्यादौयथाकाचित्संविच्छीतोष्णरूपिणी॥अग्नीषोमाभिधांप्राप्तासैवसर्गेनृणामिह ॥ १४ ॥ यत्रसोमकलाग्रस्ताक्षणंसूर्येणषोडशी॥ मुखाद्वितस्तिमात्रंस्यात्तत्रबद्धपदोभव ॥ १५॥ नूनंसूर्यपदंप्राप्तोयत्रसोमोल्हदंबरे ॥ नूनंकेवलयास्थित्यातत्रबद्धपदोभव ॥ १६ ॥ उष्णमग्निश्चिदादित्यःशैत्यंसोमउदाहृतम् ॥ यत्रैतौप्रतिबिंबस्थौतत्रबद्धपदोभव ॥ १७॥शरीरेसोमसूर्याग्निसंक्रांतिज्ञोभवानघ॥ तत्रसंक्रांतिकालाहिबाह्यास्तृणसमाःस्मृताः॥ १८॥

क्षम् ॥ अन्यैस्तुस्वरोदयादिशास्त्रतोज्ञेयम् ॥ एवस्थितेवक्ष्यमाणदेहाणुतास्थौल्याद्युपयोगिधारणाभेदाःप्रथमंत्रिभि.श्लोकैरुपदिश्यते ॥ यत्रमुखाद्बहिर्देशेसूर्येणाग्रस्ताध्रुवाख्यासोमस्यापानस्यषोडशीकलाप्राणेनोद्गीर्णाभिःकलाभि.पूर्यमाणाक्षणप्राप्यापूर्णमासीचद्रइववितस्तिमात्रस्यात्तत्रभुशुडोपाख्यानोक्तबाह्यकुंभकेनमनोधारणयाबद्धपद स्थिरोभवेत्यर्थः ॥ १५ ॥ तथायत्रल्हदबरेकलाग्रासेनक्रमाद्ग्रस्यमानोऽपानाख्यःसोमोऽमावास्यायामिवकेवलयाशुद्धचिद्रूपध्रुवाख्यकलात्मिकयास्थित्यातिष्ठतितत्रातःकुंभकेनबद्धपदोभव ॥ १६ ॥ इदानीमर्धरेचकेनार्धपूरकेणवाअतरालेप्राणस्योभयतोनिरोधेनबिबप्रतिबिबवत्तुल्यरूपतामापाद्यधारणामाह ॥ उष्णमिति ॥ १७॥ यथावसंतग्रीष्मवर्षाशरत्सुक्रमेणशीतस्यौष्ण्येनग्रासात्सोमस्याग्निसक्रांतिः शरद्धेमतशिशिरेषुक्रमादौष्ण्यस्यशैत्येनग्रासादग्नेःसोमसंक्रातिस्तयो.सधीविषुवतौसूर्यस्यचमेषादिषुसक्रांतिस्तथाशरीरेपिअपानशैत्यस्यजठराग्निनाग्रासेसोमस्याग्निसक्रातिः प्राणौष्ण्यस्यबहिःशैत्येनग्रासादग्नेःसोमसंक्रातिः सूर्यस्यसक्रातयस्तुप्रागुक्तास्ताजानातीतितज्ज्ञोभवेतिपूर्वोक्तधारणागविधिः ॥ प्रासंगिकतज्ज्ञानस्यप्रसिद्धसक्रातिस्नानदानादिफलेभ्यउत्कृष्टतमफलकीर्त्तनप्रधानफलेनस्तुतिर्वा ॥ १८ ॥

मनुसर्वत्यजतासर्वशून्यतैवावशिष्यतात्कथसर्वस्वायत्तलभ्यस्यात्तत्राह॥येनेति॥यद्यपिसर्वत्यक्तःसर्वशून्यः यतामापन्नस्तथापितेनत्यक्तजगदाश्रयांतरालाभात्समेवाभिस्थया
मनुसर्वत्यजतासमयशून्यतैवावशिष्यतेतत्कथसर्वस्वायत्तलभ्यस्यात्तत्राह ॥ ५० ॥ अतएवसर्वत्यागेसर्वबाधाबाध्यब्रह्मपदशाआत्यंतिकत्वहक्षयान्निर्वाणदीप
यद्यव्यवहारसत्तास्फूर्तिलभतइतिसएवसम्यग्ब्रह्मदशात्रिकालस्थसमलभ्येन्युच्यतइतिभाव ॥ अस्नेहेनेति ॥ ५१ ॥ तदेवस्फुटयति ॥ स्थितमिति ॥ ५२॥ सर्वत्यागेशून्यतापत्तिवा
दृष्टांतस्वगतस्वरूपस्यानिर्वेदसम्यग्व्यवहारप्रकाशनाद्यवहारदशासस्नेहदीपदृष्टांतमाह ॥ समस्तेति ॥ तथानिर्वाणपर
रयति ॥ समस्तेति ॥ समस्तानांवस्तूनांराज्यारण्योपकरणानां निष्कासेत्यागे ॥५३॥ परिशिष्टचित त्वानिरिक्तत्वात्स्वस्यतत कःपुरुषार्थस्तत्राह ॥ सर्वत्यागेहीति ॥ दिवौकसांसूर्यचन्द्रनक्षत्रादीनाम
मपुरुषार्थोपित्वत्तानेतरविस्यर्थ ॥ ५४ ॥ तत्यस्यक्तसर्वमपपशून्यत्वेपिसर्वसविदात्वतन्नावोस्सवेतिनआश्रयसक्तिरित्याह

येनसर्वपरित्यक्तंतस्मिञ्छून्येपिसंस्थितम् ॥ जगत्सर्वंत्रिकालस्थंतंतौमुक्तावलीयथा ॥ ५० ॥ अस्नेहेनेवदीपेनयेनसर्वंसमुज्झित
म् ॥ सस्नेहेनेवदीपेनतेनसर्वंप्रकाशितम् ॥५१॥ स्थितंसर्वंपरित्यज्यय शेतेऽस्नेहदीपवत् ॥ सराजतेप्रकाशात्मासम सस्नेहदीपवत् ॥५२
समस्तवस्तुनिष्कासेयथात्वमवशिष्यसे ॥ सर्वत्यागेकृतेतादृग्विज्ञानमवशिष्यते ॥ ५३ ॥ समस्तवस्तुदाहेपियथात्वनेतरान्नृप ॥ सर्व
त्यागतएवांगतयानिर्वाणमुच्यते ॥ ५४ ॥ सर्वत्यागोहिशून्यात्मा आश्रय सर्वसंविदाम् ॥ अनंतानामुदाराणांखमिवेददिवौकसाम्
॥५५॥ सर्वत्यागरसापानेजरामरणभीतय ॥ नकाश्चनप्रबाधतेखस्येवव्योमलेखिका ॥ ५६ ॥ सर्वत्यागोमहत्त्वस्यकारणंनिर्मल
युते ॥ सर्वंत्यजसिचद्यस्माद्वृद्धिस्थैर्यंयद्युत्तमम् ॥५७॥ सर्वत्याग परानंदादु खमन्यत्सुदारुणम् ॥ इत्योमित्युररीकृत्ययदिच्छसितदा
चर ॥ ५८ ॥ सर्वंत्यजतियस्तस्यसर्वमेवोपतिष्ठते ॥ यथैवानुविशत्यम्भोतथैवायातिवारिधौ ॥ ५९ ॥ सर्वत्यागांतरेवास्तिज्ञानमात्मप्र
सादकम् ॥ यच्छून्यकिलशांडस्यतत्रत्नादितिष्ठति ॥ ६० ॥ सर्वत्यागवशादेवहृतकालेकलावपि ॥ शाक्येनविगताशंकमुनिनामेरुव
त्स्थितम् ॥ ६१ ॥ सर्वत्यागोमहाराजसर्वसंपत्समाश्रय ॥ नगृह्णातिहियत्किंचित्सर्वंतस्मैप्रदीयते ॥ ६२ ॥ कृत्वामेवंपरित्यागशा
त स्वस्थोवियत्सम ॥ सौम्योभवसियद्रूपस्तद्रूपोभवभूपते ॥ ६३ ॥

॥ ५५ ॥ सर्वत्यागरसस्यआपानेईपरस्यात्त्वावनेकृते
यथाभसमोदासीनस्यतत्स्यव्योमलेखिकाच्छिद्रकारिकाटिकिका काश्चिदपिनप्रबाधतेतद्वत् ॥ ५६ ॥ निर्मलायुति स्वरूपस्फूर्तिर्यस्मात्तयाविधस्यमहत्त्वस्यतत्कुतस्तथा
ह ॥ सर्वमिति ॥ ५७ ॥ इतिविमृश्यप्रतिशेष ॥ ओमित्यस्यविवरणमुररीकृत्येति ॥ ५८॥ सर्वत्यागेविभवहानिंवारयति ॥ सर्वमिति ॥ सर्वविभवजातमारब्धोपनीतमुपतिष्ठते ॥
वारिधौअनुप्रयायथावर्षाभिविशतितथानद्याश्चआयात्येवसहेत्यर्थ ॥ ५९ ॥ सर्वस्याज्ञानतत्कार्यस्ययस्त्यागस्तदंतरेवात्मप्रसादकज्ञानमवश्यमस्ति ॥ भांडस्यमध्ये
यदात्मादिशून्यस्यलब्धेपरमादितिष्ठतीतिकिंचिल्लभसिद्धमित्यर्थ ॥ ६ ॥ कलौपापिष्ठतमेपिकालेपेत्तासत्वावतिनीचेनापिशाक्येनसर्वत्यागवशात्मेरुवत्स्थितंयदातदापुण्ये
द्वापरकालेवेदमार्गबलविनापुण्यतमेनत्वयाविगताशंकस्थोमवास्थेयमितिकिंवाच्यमितिद्योतमायत्तनेति ॥ ६१ ॥ सर्वासांसंपदांसमाश्रयोनिवासस्थानम् ॥ ६२ ॥ ६२ ॥

हेमहास्वभावभूमिपालत्वंप्रथमंत्याज्यंसर्वंमनसापरित्यज्यअथोअनंतरंयेनत्यजसितन्मनश्चविहायतदनंतरंत्यागाभिमानलक्षणमहंकारमलंचविमुच्यजीवन्मुक्तरूपोभवेत्यर्थः ॥ ६४ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०त्रिनवतितमःसर्गः ॥ ९३ ॥ ॥ ७ ॥ ॥ इहचित्तपरित्यक्तुंतन्मूलपरिशोधने ॥ देहादिवेद्यबाधेनपूर्णचिच्छेषईर्यते ॥ १ ॥ चित्तत्यागचित्तत्यागोपायम् ॥ १ ॥ निरस्तनममेतित्यक्तमपि ॥ अप्यर्थोहिशब्द. ॥ २ ॥ एतच्चित्तमादातुममतयास्वीकर्तुंजानामिद्रव्यइववास्मिन्मूर्त्तत्वाभावादस्यत्यागतुनजानामि ॥ हेउत्तम ॥ ३ ॥ स्वरूपंत्यागार्हंपिंडीकृतसामान्यरूपम् ॥४॥ कुम्भस्तदेवाह ॥ वासनैवेति ॥ रागवासनेत्यर्थः ॥ उदाहृतोलोके ॥ तथाचलौकिकाआ

सर्वंपरित्यज्यमहास्वभावत्यजस्वथोयेनचतद्विहाय ॥ त्यागाभिमानंचमलंविमुच्यविमुक्तरूपोभवभूमिपाल ॥ ६४ ॥ ॥ ॥ इ०वा०वा०दे०मो०नि०पू०चू०शिखिध्वजावबोधनंनामत्रिनवतितमःसर्गः ॥ ९३ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ एवंवदतिवैकुंभेचित्तत्यागंमुहुर्मुहुः ॥ अंतर्विचारयन्सौम्योराजावचनमब्रवीत् ॥ १ ॥ ॥ शिखिध्वजउवाच ॥ ॥ हृदयाकाशविहगोहृदयद्रुममर्कटः ॥ भूयोभूयोनिरस्तंहिसमभ्येत्येवमेमनः ॥ २ ॥ जानामिचैतदादातुंमत्स्यंजालइवाकुलम् ॥ त्यागमस्यनजानामिचित्तंद्रव्यइवोत्तम ॥ ३ ॥ चित्तस्यादौस्वरूपंमेयथावद्भगवन्वद ॥ ततश्चित्तपरित्यागंयथावद्वदमेप्रभो ॥ ४ ॥ ॥ कुंभउवाच ॥ ॥ वासनैवमहाराजस्वरूपंविद्धिचेतसः ॥ चित्तशब्दस्तुपर्यायोवासनायाउदाहृतः ॥ ५ ॥ त्यागस्तस्यातिसुकरःसुसाध्यःस्पंदनादपि ॥ राज्यादप्यधिकानंदःकुसुमादपिसुंदरः ॥ ६ ॥ मूर्खस्यतुमनस्त्यागोनूनंदुःसाध्यतांगतः ॥ पामरस्येवसाम्राज्यंतृणस्येवसुमेरुता ॥ ७ ॥ ॥ शिखिध्वजउवाच ॥ ॥ स्वरूपंवेद्मिचित्तस्यवासनामयमाकुलम् ॥ त्यागःसमन्येदुःसाध्योवज्रनिर्गिलनादपि ॥ ८ ॥ संसृत्यामोदपुष्पस्यदुःखदाहानलस्यच ॥ जगदब्जमृणालस्यमोहमारुतखस्यच ॥ ९ ॥ शरीरयंत्रवाहस्यहृत्पद्मभ्रमरस्यच ॥ अयत्नाच्चेतसस्त्यागोयथाभवतितद्वद ॥ १० ॥ ॥ कुंभउवाच ॥ ॥ सर्वनाशोस्ययःसाधोचेतसःसंसृतिक्षयः ॥ सएवचित्तसंत्यागइत्युक्तंदीर्घदर्शिभिः ॥ ११ ॥

हुरपूपेषुममवासनास्तिमड्केष्वस्यचित्तमिति ॥ ५ ॥ सुकरइति ॥ औदासीन्यमात्रेणतत्सिद्धिरितिभावः ॥ राज्यादपीति ॥ तथाचाहुः ॥ यच्चकामसुखलोकेयच्चदिव्यमहत्सुख तृष्णाक्षयसुखस्यैतेनार्हतःषोडशीकलामिति ॥ सुदरोहृद्यः ॥ ६ ॥ कुतस्तर्हिससर्वैर्नक्रियतेतत्राह ॥ मूर्खस्येति ॥ ७ ॥ वेद्मित्वद्वचसेत्यर्थः ॥ वज्रस्यनिर्गिलनान्निगिरणादपिदुःसाध्यः ॥ सतिमौर्ख्येऔदासीन्यस्यैवदुष्करत्वादितिभाव ॥ ८ ॥ जगल्लक्षणयदब्जंतन्मृणालस्य ॥ जालेतिपाठेपिजलेभवजालमितिव्युत्पत्त्याअब्जमेवार्थः ॥ सर्वपर्यायैःकारणमेवोपलक्ष्यते ॥ ९ ॥ शरीरयंत्रंवहतिप्रवर्त्तयतीतिकर्मण्यण् ॥ यथायेनोपायेनभवति ॥ १० ॥ सर्वस्यवक्ष्यमाणमूलांकुरशाखापल्लवादेर्नाशःसएवसस्ततेरपिक्षयःसएवचित्तस्यसत्यागोनतुबाह्यार्थत्यागवन्ममतानिवर्त्तनमित्यर्थ. ॥ दीर्घदर्शिभिरपरिच्छिन्नात्मदर्शिभिः ॥ ११ ॥

उक्तमर्थं विमृश्यानुवादेनानुमोदमानः शिखिध्वजस्तत्रोपपत्तिमाह ॥ चित्तेति ॥ चित्तं हि व्याधिः ॥ नहि व्याधेः शतशोपि ममतात्यजनलक्षणेन त्यागेनाभावोनुभूयते किंतु चिकि त्समर्थं विमृश्यानुवादेनानुमोदमानः शिखिध्वजस्तत्रोपपत्तिमाह ॥ समोच्छेदेनैवातस्तदुच्छेदाय तन्मूलशाखापल्लवादि विवेदेत्यर्थः ॥ १२ ॥ अहमर्थ एव बीजं यस्य ॥ सशाखाफलपल्लवस्य द्रुमस्योन्मूलनेन तत्स्थानाकाशमिव निरावरणं विक्षेपरहितं स्वयंस्य तथाविधा भव ॥ १३ ॥ समवत्यस्मिन्निति संभवः क्षेत्रम् ॥ १४ ॥ अहमर्थोदयोयस्तथाविधोयोयं सविचारवेदनात्मकोभिमानी प्रसिद्धः ॥ एतदेवेति स्वयंस्य तथाविधाभव ॥ परमात्मपदमिति ॥ परमात्मनः पदनीडे मायायां च क्षेत्रम् ॥ यतस्तत्सर्वमस्यैवमायामयप्रपंचस्य क्षेत्रम् बीजालनिर्देशः ॥ बीजं मूलम् ॥ १५ ॥ कास्य संभव इति प्रश्नस्योत्तरमाह ॥ परमात्मपदमिति ॥ एतस्मादिति ॥ एतस्मादथमोत्पन्नान्मूलात्परिच्छिन्नोहमितिनिश्चयात्मा चिदाभासस्तत्वादनुभवात्मकोंकुरोजा मध्येतत्सापि तत्क्षेत्रमित्यर्थः ॥ कोंकुरइत्यस्योत्तरमाह ॥ एतस्मादिति ॥ देहाद्याकृतिस्मरणाच्चित्तनामतन्मननान्मन इत्यभिधायस्यास्तथाविधापीनता जायत इति यत इत्यर्थः ॥ १६ ॥ तस्यैवापचयेन चित्तद्रुमात्मना परिणतिरित्याह ॥ अस्येति ॥

शिखिध्वजउवाच ॥ ॥ चित्तत्यागादहं मन्ये चित्तनाशं सुसिद्धये ॥ अभाव शतशो व्याधे कथमस्यानुभूयते ॥ १२ ॥ ॥ कुंभउवाच ॥ अहंबीजश्चित्तद्रुमः सशाखाफलपल्लवः ॥ उन्मूलय समूलं तमाकाशहृदयो भव ॥ १३ ॥ ॥ शिखिध्वजउवाच ॥ ॥ चेतसः किंमुने मूलं कोंकुरः कोस्य संभवः ॥ काः शाखाः के च वा स्कंधाः कथमुन्मूल्यते च सः ॥ १४ ॥ ॥ कुंभउवाच ॥ ॥ अहमर्थोदयोयोयं सचित्तावेदनात्मकः ॥ एतच्चित्तद्रुमस्यास्य विद्धि बीजं महामते ॥ १५ ॥ परमात्मपदक्षेत्रे मायामयस्य तत् ॥ एतस्मात्प्रथमोद्भिन्नादंकुरोनुभवाकृतिः ॥ १६ ॥ निश्चयात्मा निराकारो बुद्धिरित्येव सोच्यते ॥ अस्य बुद्ध्यभिधानस्य यांकुरस्य प्रपीनता ॥ १७ ॥ संकल्परूपिणी तस्याश्चित्तनाम मनोभिधा ॥ जीवो मिथ्योपलंभात्मा शून्यात्मा ह्युपलोपमः ॥ १८ ॥ स्तंभः कायोयमेतस्य श्वास्थिरमरजितः ॥ देशांतरेंकुरो देशे कालस्य सदा स्य वासना ॥ १९ ॥ शाखायाश्चित्तवृक्षस्य दीर्घा दूरगता लताः ॥ इंद्रियाण्यल्पभोगाश्च भावाभावात्मयोनयः ॥ २० ॥ विटपो घा महांतो स्य शुभाशुभफलाकुलाः ॥ इदृशस्यास्य चित्तस्य द्रुक्षस्य प्रतिक्षणम् ॥ २१ ॥ शाखाविलवनं कुर्वन्मूलकाषं भरं कुरु ॥ ॥ शिखिध्वजउवाच ॥ ॥ चित्तद्रुमस्य शाखादेः कुर्वाणोहं विकर्तनम् ॥ २२ ॥ कथं करोमि मूलस्य निःशेषकषणं मुने ॥ ॥ कुंभउवाच ॥ ॥ वासनाविविधा शाखा फलस्वादादिनान्विता ॥ २३ ॥

परेणान्वयः ॥ १७ ॥ तस्य वृक्षस्य जीवमाह ॥ जीव इति ॥ परमार्थतो निर्विकारत्वात्सर्वविकारशून्यात्मा अतएवोपलोपमो मिथ्याभूतचित्तद्रुमसंबंधोपलंभात्मा साक्षीत्यर्थः ॥ १८ ॥ स्तंभो मूलाच्छाखापर्यंतो मध्यप्रदेशः अयंकायः शरीरमेव ॥ मूलस्तंभदेशाद्देशांतरे अपरदेशे स्कंधशाखादिमरोहाय यमंकुरो देशोंकुरारंभेपि कर्मार्पितवर्षतादिकाल इव तत्संभोगप्रदकर्मपरिपाककाले रागद्वेषप्रवृत्त्यादिकरपल्लवाद्याकारेण स्फुरतेयोरसः सोस्य वासनैवेत्यर्थः ॥ १९ ॥ अस्य चित्तवृक्षस्य या दीर्घा दूरगतास्ता लता विस्तृताश्च शाखास्ताश्चेंद्रियाणि भावाभावा जन्ममरणानि तत्वात्मनोनर्थसहस्रस्य योनयः कारणीभूता भोगाश्च अस्य महांतो विटपीघाश्च वांतरशाखासमूहा इति परेणान्वयः ॥ २० ॥ २१ ॥ विषयभोगासंगच्छेदनलक्षणशाखाविलवनं कुर्वन्संगाद्द्वितीयात्मदर्शनलक्षणमूलकाषं भरं यत्नातिशयं कुर्वित्यर्थः ॥ तत्प्रशाखालवनेमूलकाषे चोपायं राजा पृच्छति ॥ चित्तेति ॥ २२ ॥ तत्र शाखालवनोपायं कुंभ आह ॥ वासना इति ॥ २३ ॥

अभाविताआसक्तित्यागेनानुद्भाविताअतविचारसंविद्दलेनलूनाभवंति ॥ उक्तमेवार्थंजीवन्मुक्तेपुलक्षणतयादर्शयति ॥ असंसक्तेति ॥ २४ ॥ शाखालवनाभ्यासेदृढेसतिमू लकाषेयोग्योभवतीत्याह ॥ चित्तद्रुमेति ॥ लताजालशाखासमूहम् ॥ २५ ॥ गौणमगम ॥ मुख्यप्रधानम ॥ २६ ॥ मुख्यत्वेनप्राधान्येन ॥ प्रधानासपादनेयत्नप्रसाधित स्याप्यगस्यवैफल्यप्रसगादितिभावः ॥ २७ ॥ त्वचित्तलक्षणस्यकटकखडस्यकरजवनस्यअलनिरवशेषमूलदाहकुर्वितिपूर्वेणान्वय ॥ एवकृतेअचित्तताभवति ॥ तद्दाहस्य प्रसिद्धेनानलेनासिद्धेरनलातरजिज्ञासु पृच्छति ॥ अहभावात्मनइति ॥ अर्थकर समर्थ ॥ २८ ॥ कोहस्यामितिविचारादिसाक्षात्कारातद्रूपधृक् ॥ २९ ॥ मयास्वबुद्ध्यैव वाह्यार्थादेहाद्यहकाराताआध्यात्मिकार्थाश्चअनात्मान अनृताश्चेतिज्ञातास्तथाप्यनरात्मतत्त्वापरिचयाज्जडेप्यहकारेपुन:पुनरात्मताभ्रातिर्ननिवर्त्ततएवंनिनविश्राम्यामीत्या

अभाविताभवंत्येतल्लूनाःसंविद्दलेनते ॥ असंसक्तमनामौनीशांतवादविचारणः ॥ २४ ॥ संप्रामकारीयःसोंतर्लूनश्चित्तलतोभवेत्॥ चित्तद्रुमलताजालंपौरुषेणविकर्त्तयन्॥२५॥ यस्तिष्ठतिसमूलस्ययोग्योनिकषणेभवेत्॥ गौणंशाखाविलवनंमुख्यंमूलविकर्तनम॥ ॥२६॥ चित्तवृक्षस्यतेनत्वंमूलकापपरोभव ॥ मुख्यत्वेनमहाबुद्धेमूलदाहमलंकुरु ॥ २७ ॥ चित्तकंटकखंडस्यभवत्येवमचित्तता॥ शिखिध्वजउवाच॥ ॥अहंभावात्मनश्चित्तद्रुमबीजस्यहेमुने ॥ कोनलोदहनाख्येस्मिन्कर्मण्यर्थकरोभवेत्॥ २८ ॥ ॥कुंभउवा च॥ ॥राजन्स्वात्मविचारोयंकोहंस्यामितिरूपधृक्॥ चित्तदुर्द्रुमबीजस्यदहनेदहनःस्मृतः॥ २९॥ ॥शिखिध्वजउवाच॥ ॥मुनेम यास्वयाबुद्ध्याबहुशःप्रविचारितम् ॥ यावन्नाहंजगन्नोर्वीवनमंडलमंडितम्॥ ३०॥ नाद्रिस्तटंनविपिनंनपर्णस्पंदनादिच ॥ जडत्वा न्नचदेहादिनमांसास्थ्यसृगादिच॥ ३१ ॥ कर्मेंद्रियाण्यपिनचनचबुद्धींद्रियाणिच ॥ नमनोनापिचमतिर्नाहंकारश्चजाड्यतः॥ ३२ ॥ कटकत्वंयथाहेम्नितथाहंत्वचिदात्मनि॥ जडंत्वसद्रूपतयातेनतन्नास्तिहेमुने ॥ ३३ ॥ सन्निवेशनिवासात्मासर्वार्थादिःपरेपदे॥ विद्य तेनान्यदन्यत्वान्नभसीवमहाद्रुमः॥ ३४॥

ह ॥ मुनेइत्यादिषड्भि ॥ यावदितिसाकल्ये ॥ सर्वजगद्बहुश प्रविचारितमित्यर्थ ॥ तदेवविशिष्याह ॥ नाहमित्यादि ॥उर्व्यांतदतर्गतवनमंडलादिभिश्चमंडितंजगन्नाहमिति सक्षिप्योक्ति. ॥ ३० ॥ तदेवविस्तरेणाह ॥ नाद्रेरित्यादि ॥ जडत्वादितिसर्वत्रहेतुः ॥ ३१ ॥ ३२ ॥ अहकारेजडत्वनास्तीतिशकाविवर्त्तत्वहेतुनावारयन्जडस्यस्वत सेद्धुम शक्त्याचित्यध्यासात्सिद्धौमिथ्यात्वपर्यवस्यतीत्याह ॥ कटकत्वमिति ॥ तथाअहत्वविवर्त्तइतिशेष ॥ जडतुशुक्तिरजतमृगतृष्णादिअसद्रूपतयाप्रसिद्धमितिशेषः ॥ तेनजड त्वहेतुनातदहत्वादिनास्तिमिथ्यैवेत्यर्थ ॥ ३३ ॥ ब्रह्माद्यादिरुक्तजडवर्गस्याधिष्ठानसद्रूपादन्यत्वादपिअसत्वमित्याह ॥ सन्निवेशेति ॥ स्वत सतश्चेतन्यात्परस्परचान्यदन्यत्वा द्भिन्नत्वात्परेपदेचितिनविद्यते ॥ तथात्वकुतइतिचेद्यतोब्रह्माद्यादिजडवर्गश्चतुर्दशभुवनादिसन्निवेशानानिवासात्माआधार सर्वेषामर्थानाशब्दादिविषयाणामादि कारणभूत ॥ नचचिदात्माविभक्तस्वभावोनिर्विभागसत्तासामान्यरूपत्वादित्यर्थ. ॥ ३४ ॥

टी

२॥

इतिअनयारीत्याअहंत्वलक्षणस्यमलस्यमार्जनंजानन्नपिअतःप्रत्येकरसयत्नसाक्षिचिन्म्यतन्नजानामि ॥ ३५ ॥ इदानींपरिशेषादेवसाक्षिचैतन्यपरिचायथिष्यन्कुंभउवाच ॥ एतावदिति ॥ एतावन्मात्रकमहंकारपर्यंतदृश्यत्वम् ॥ ३६॥ अज्ञात्वाभोक्तृत्वाविनामसिद्धांतरांतरकोशपरंपराबधीयमानैकरसेचिन्मात्रेसनिअनानदाजरूपाश्वमा या शब्दादिविषया स्वरते ॥ येनवाबुद्धिवृत्त्युपारूढेनइष्टानिष्टविभागनिर्णीयते ॥ ३७ ॥ विवेकदृशापर्यालोचनेएवरूपस्यमेममदेहादिअहंकारगणअहमितितादात्म्याभिमानलक्षणमलस्यइदंसकारणमकारणंवेतिअहंनवेद्मियत्सत्यमज्ञानजनवेद्मीत्यर्थः ॥ ३८ ॥ ३९ ॥ सतासत्येनअसतामिथ्याभूतेनवायेनमलेनहेतुनासंसारीस्थितोसि ॥ २ ॥ तस्त्यमिथ्यातिवानजानामिकिंतुचित्तद्रुमस्यसर्वानर्थफलस्यमूलमितिसामान्यतो इभावश्चास्ममभावश्चेतिविशेषतोपिजानामि तत्त्वत्कुनिरसितुमुपायनजानामि ॥ ननुनाहं नममनितुच्छिरेवतस्यागोपायप्रसिद्धःप्राक्कयैवसनादिपुरीरीत सकथमपलप्यतेतत्राह॥त्यक्तत्यक्तमिति ॥ तथापुनःपुनस्त्यक्तमपिमूलोच्छेदाभावात्पुनःपुनर्मामुपैति अतस्तम्मू

जानन्नपीतिभगवन्नहंत्वमलमार्जनम् ॥ अतयज्ञनजानामितेनतप्येचिरमुने ॥ ३५ ॥ ॥कुंभउवाच॥ ॥एतावन्मात्रकंदृदयदिन त्वमहीपते ॥जडत्वात्तन्महाबुद्धेयोसितद्दढमेनघ॥ ३६॥ ॥शिखिध्वजउवाच॥ ॥चिन्मात्रमहमच्छात्मवेदनविदुपावर ॥ यत्रज्ञा वा स्वदंतेतेनिर्णीयंतेचयेनवा ॥ ३७॥ एवंरूपस्यमेलग्नंनूनमलमकारणम् ॥ सकारणंवाहमितियत्पदंचनवेद्म्यहम् ॥ ३८ ॥ असदेत दनात्मीयप्रमार्ष्टुंमलमात्मन ॥ मुनेयदानशक्नोमितेनतप्येसुदारुणम् ॥ ३९ ॥ ॥कुंभउवाच॥ ॥ब्रूहिकिंतन्महायाहोलग्नंतवमलम हत् ॥ स्थितोसियेनसंसारीसतावाप्ययवासता ॥ ४० ॥ ॥शिखिध्वजउवाच॥ ॥चित्तद्रुमस्ययद्बीजमहंभावश्चमेमलम् ॥ तत्त्वत्कु नजानामित्यक्तत्यक्तमुपैतिमाम् ॥ ४१ ॥ ॥कुंभउवाच॥ ॥कारणाज्जायतेकार्ययत्तत्सर्वत्रसंभवेत् ॥ अन्यत्त्वसदिवद्राभदृष्टमेतन्न विद्यते ॥ ४२ ॥ कारणाज्जायतेकार्यमहंभावाद्भवांकुर ॥ इतिकारणमन्विष्यकथयस्वममाधुना ॥ ४३ ॥ ॥शिखिध्वजउवाच॥ ॥ मुनेहमितिदोषस्यवेदनंवेद्मिकारणम् ॥ तद्यथापशमंयातितन्मेवदमुनीश्वर ॥ ४४ ॥ चितश्चेत्योन्मुखत्वेनदु स्वायायमहंस्थित ॥ चेत्यो पशमनंब्रूहिमुनेतदुपशांतये ॥ ४५ ॥

लतदुच्छेदोपायंचवदेत्याशय ॥४१॥ तत्रसत्यस्यकू टस्थत्वाकारणतानसंभवत्येव असत्यस्यतुकारणतोक्तिरसत्येवकारणेकार्यमुत्पन्नमित्यर्थेपर्यवसितासतीकार्यस्यासत्यतामेवापादयतीत्याशयेनैक्यपर्यवसितेतिरहस्यंतद्बुद्ध्यनुसा रेणैवबोधयिष्यन्कुंभोलोकप्रसिद्धानुरूपमहंकारणत्वस्वबुद्ध्यान्विष्यकथयेत्याह ॥ कारणादितिद्वाभ्याम् ॥ अन्यत्तुकारणविभिन्नजातकार्यद्विपद्राभमसदेव यतएतत्तस्य गूढदृष्टेमन्नविद्यतइत्यर्थ ॥ ४२ ॥ यथाअहंभावात्कारणात्मनआविलक्षणोभवांकुर कार्यजायतेइतिएवंविधमेवाहंभावस्यापिकारणत्वबुद्ध्याऽन्विष्यममकथयस्वेत्यर्थ ॥ ४३ ॥ एवंपृष्टोराजाचिरंस्वबुद्ध्यान्विष्यासतिदेहाद्याकारवेदनेतत्राहंताभिमानायोगात्तद्वेदनमेवतत्कारणमितिनिश्चित्यप्रत्युवाच ॥ मुनेइति ॥ ४४॥ चितश्चेत्योन्मुखत्वे नहेतुनाअयदेहादिरहंभावेनस्थित सन्दु स्वायसंपन्नोऽतश्चेत्यदेहादिवेदनचितःसंवेदनाभावेपिहेतुरित्यभिप्रेत्यतदुपशांतयेचेत्योपशमनोपायंब्रूहीत्याह ॥ चेत्येति ॥ ४५ ॥

यदिवेदनस्यवेद्योन्मुखत्वेवेद्यमेवकारणमितिकारणज्ञोसितर्हितत्स्वाभिप्रेतमाशुवद ॥ ततस्त्वदुक्त्यनंतरत्वदभिप्रेतंकारणमकारणमेवयेनक्रमेणसंपद्यतेतंक्रमंत्वांबोधयिष्यामी त्यर्थ. ॥ ४६ ॥ पृष्टमेवार्थंस्फुटीकर्तुंपुनरनुवदति ॥ वेद्येति ॥ सामान्यतोवेद्यवेदनरूपस्यविशेषतश्चेत्यसंचेतनस्यमिथ्यात्वादकारणकारणत्वाक्षममेववेद्यकारणतांयातमि तियत्तवाभिप्रेततद्वदेत्यर्थः ॥ ४७ ॥ शिखिध्वज पृष्टस्वाभिप्रेतस्फुटमाह ॥ चेत्येति ॥ देहादिर्वाह्याध्यात्मिकपदार्थसत्ता ॥ ४८ ॥ वेदनस्यदेहादिसत्ताकथंकारणंतत्राह ॥ शरीरेति ॥ यतोवेदनशरीरादिवस्तुसत्तयानिमित्तभूतयास्वयमपिमूषानिषिक्तधातुद्रवइवशरीराद्याकारेणोदेति ॥ अमूर्तेवेदनेमूर्तदेहाद्याकारतायावास्तवत्वायोगाद्विशिन

कुंभउवाच॥ ॥कारणंकारणज्ञोसिवेदनस्यवदाशुमे॥ततस्त्वांबोधयिष्यामिकारणाकारणक्रमम्॥ ४६ ॥ वेद्यवेदनरूपस्यचेत्यसंचेतनस्यमे॥ अकारणंकारणतांयद्यातंतवतद्वद॥ ४७॥ ॥शिखिध्वजउवाच॥ ॥चेत्यचेतनरूपस्यवेद्यसंवेदनाकृतेः॥ इयंपदार्थसत्तेहदेहादिःकारणंमुने॥ ४८ ॥शरीरादितयोदेतिवेदनंवस्तुसत्तया॥ असत्याभासयास्पंदोयथापवनलेखया॥ ४९ ॥ असत्तांवस्तुसत्तायानावगच्छाम्यहंयथा॥ अहंत्ववेदनंचित्तबीजंसमुपशाम्यति ॥ ५० ॥ ॥कुंभउवाच॥ ॥विद्यतेयदिदेहादिवस्तुसत्तातदस्तिते॥ अभावाद्देहसत्तादेःकिंनिष्ठंतववेदनम् ॥ ५१ ॥ ॥शिखिध्वजउवाच॥ ॥यस्योपलभ्यतेकिंचित्स्वरूपंकलनात्मकम्॥ असद्रूपंकथंतस्यात्प्रकाशःस्यात्कथंतमः॥ ५२ ॥हस्तपादादिसंयुक्तःक्रियाफलविलासवान्॥ सदानुभूयमानोयंदेहोनास्तिकथंमुने॥ ५३॥ ॥कुंभउवाच॥ ॥कारणंयस्यकार्यस्यभूमिपालनविद्यते॥ विद्यतेनेहतत्कार्यंतत्संवित्तिस्तुविभ्रमः॥ ५४॥ कारणेनविनाकार्यंशरीरंनकदाचन॥ विद्यतेयस्यनोबीजंतद्द्रव्यंक्केवजायते॥ ५५॥ अकारणंतुयत्कार्यंसदिवाग्रेनुभूयते ॥ तद्द्रष्टुर्विभ्रमाद्विद्धिमृगतृष्णाजलोपमम्॥ ५६॥ अविद्यमानमेवत्वंविद्धिमिथ्याभ्रमोदितम्॥ नातियत्नवतोप्येतन्मृगतृष्णांबुलभ्यते॥५७॥ ॥शिखिध्वजउवाच॥ ॥असतोद्वींदुविंबादेर्नयुक्तंकारणेक्षणम्॥ वंध्यातनयसर्वांगमंडनंकस्यराजते॥ ५८॥

ष्टि ॥ असत्याभासयेति ॥ ४९ ॥ यथाचित्तबीजमहंत्ववेदनंसमुपशाम्यतितथादेहादिवस्तुसत्तायाअसत्त्वनावगच्छामि अतस्तदसत्त्वंयथावगम्यतेतथोपदिशेतिभावः ॥५०॥ एवपृष्टःकुंभोवेदनस्यविषयाकारेणोत्पत्तिभ्रमवारणायदेहादिदृश्यासत्त्वप्रतिजानीते ॥ विद्यतेइति ॥ देहादिवस्तुसत्तायदिविद्यतेतत्तर्हिनेतवाभिमतंवेदनस्यतन्निमित्ततदाकारत्वंस्यात्तदेवदुर्लभमितिवेदनंकिंनिष्ठंकिंविषयंनिर्विषयमेवेत्यर्थः ॥ ५१ ॥ प्रत्यक्षमुपलभ्यमानस्यदेहादेःकथमपलापइतिराजापृच्छति ॥ यस्येति ॥ स्वस्वेनोपलभ्यमानस्यासत्त्वप्रतिज्ञाविरुद्धेतिदृष्टांतेनाप्याह ॥ प्रकाशइति ॥५२॥५३॥ नोपलंभनमात्रेणदृश्यसत्तानिर्णयः भ्रांतोपलंभेषुव्यभिचारात् किंतुसत्सुकारणेषुयस्यकार्यस्योपलंभस्तस्यसत्त्वम् तानिचास्यनसतीत्याह ॥ कारणमितिचतुर्भिः ॥ ५४ ॥५५॥५६॥५७॥ तर्हिकिमसौदेहादिर्वंध्यापुत्रदेहादिवदत्यंतासन्नेवस्यादितिराजाशंकते ॥ असतइति ॥ ५८॥

अशरीरशरीरेष्वनवस्थेष्ववस्थितमित्यादिश्रुतेस्तथैवविद्वदनुभवात्कारणानिरूपणाच्चेष्टापत्तिरेवेयमितिकुंभआह ॥ कारणेनेति॥५९॥ऐतिसानुमानागमोक्त्यनुगतसस्थानसाम्य लिंगादिनापितास्यकार्यंनिर्णीत‑अकथमपलप्यतइतिराजाशंकते ॥ हस्तेति ॥ ६० ॥ तस्याप्यसत्त्वेतुल्योन्यायइतिगूढाभिसंधिस्तदेवोत्तरपुनर्वर्णयति ॥ कारणाभावतइत्या दिना ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ गूढाभिसंधिमजानानाराजाशंकते ॥ पितामहानामिति ॥ आद्य पितामहोहिरण्यगर्भः ॥ सहिसूक्ष्मभूतलिंगसमष्ट्यात्मापुत्रपितृपिता महादिसर्वव्यष्टिसमष्टिस्थूलानामुत्पत्तौकारणंकिंतस्यापीत्यर्थ ॥ पूर्वेपांप्रजापतीनामनुमरीच्यादीनापूर्वस्यसर्वकार्येभ्य पूर्वस्यप्रथमस्यवाउत्पत्तौ ॥ ६५॥ तस्यापिकार णदुर्वचमित्यसत्वेतुल्योन्यायइतिगूढाभिसंधिरेवोत्तरमाह ॥ आद्यस्यापिना ॥ यथाकारणाभावेकस्यचिदपिभावोनेतिनित्यनियमस्तथासोपिनास्त्येवेत्यर्थ ॥ ६६ ॥ ननुयोवे

कुंभउवाच॥ ॥कारणेनविनाकार्यंशरीराद्यस्यिपञ्जरम्॥ अविद्यमानमेवेदविद्धिसंभवतोनृप॥५९॥ ॥शिखिध्वजउवाच॥ ॥ह स्तपादादियुक्तस्यशरीरस्यमुनीश्वर॥ नित्यमालक्ष्यमाणस्यपिताकस्मान्नकारणम्॥६०॥ ॥कुंभउवाच॥ ॥कारणाभावतोराज न्पितानामनविद्यते॥ असतोयत्तुसंजातमसदेवतदुच्यते॥ ६१ ॥ पदार्थानांचकार्याणांकारणंबीजमुच्यते॥ संभवत्यंगजगतिनबी जेनविनांकुर ॥६२॥ तस्मान्नकारणंयस्यकार्यस्येहोपपद्यते॥ बीजाभावेहितन्नास्तितत्संवित्तिस्तुविभ्रम ॥६३॥ अवश्यखलुयन्ना स्तिनिर्बीजंतन्मतिभ्रम ॥द्रौढुत्वमरुभूम्यबुवध्यापुत्रदशासमम् ॥ ६४॥ ॥शिखिध्वजउवाच॥ ॥पितामहानांपुत्राणांपितॄणांच जगत्रये॥ आद्य पितामह कस्मात्पूर्वोत्पत्तौनकारणम्॥६५॥ ॥कुंभउवाच॥ ॥आद्य पितामहोय स्यात्सोपिनास्त्येवभूपते॥ का रणाभावतोनित्ययदाभावोनकस्यचित् ॥ ६६ ॥ कारणस्यस्वबीजस्यनित्याभावात्पितामह ॥ अन्य सदृश्यमानोपिभ्रमादन्योनवि द्यते॥६७॥ मृगतृष्णांबुवद्भ्रांतिरूपएवावभासते॥ पितामहाद्यकारित्वमपितस्यभ्रमात्मकम् ॥ ६८॥ पितामहादेरतस्यमिथ्याप्रत्य यत स्थिति ॥ घनातपनिरस्तैवमार्जयिष्याम्ययेतरत्॥६९॥

वानामप्यस्योद्भवस्यविश्वाधिकोस्त्यामहर्षे ॥ हिरण्यगर्भपरपतजायमानसनोदेव शृणुयास्त्वस्यासधुनक्तीत्यादिमयवर्णेपुतदुत्पादकोमायमानतकपादस्यापस्यन्नीश्वरत त्कारणप्रसिद्धएवसकथमपलप्यतइत्याशंकापरिहरणगूढाभिसंधिमुद्घाटयति ॥ कारणस्येति ॥ सत्यमसीश्वर परमात्मा तथापितेममायपात्वात्मनिभेदकस्यनयाममान्माय पान्योदृश्यमानोपिसपितामहस्तस्मादन्योनविद्यते नखुनस्तामसत्यस्यविवर्तस्यापरिणामितयाअकारणत्वस्यवक्ष्यमाणत्वात्परिशेषान्मायाशएवजडस्तत्कारणमाप्यस्तस्य चाविद्यारूपस्यबीजस्यकारणस्यनित्योदितविद्याबाधितत्वेनेश्वरेनित्यमेवाभावादित्यर्थ ॥ ६७ ॥ एतेनपितामहस्यभुवनादिसर्गाद्यक्रियाकारितापतिभासोपिव्याख्यातइ त्याह ॥ मृगतृष्णेति ॥ ६८ ॥ इत्थमुक्तयुक्त्यानपितामहादेः स्वशरीरानस्यैतस्यकार्यपरंपराप्रबंधस्यमिथ्येतियौक्तिकप्रत्ययतोघनासत्यस्येनात्पतदृढीकृतास्थितिर्निदर्शीव ॥ अथइतरच्चतिभासमात्रमवशिष्टांशमपितत्त्वसाक्षात्कारपर्यंतेनोपदेशेनमार्जयिष्यामीत्यर्थ ॥ ६९ ॥

उक्तमेवार्थंसंगृह्योपसंहरति॥ तस्मादिति॥ हेभूमिपतस्माच्चिद्व्यतिरिक्तस्योक्तयुक्त्याअसत्वाच्चिदेवायदेवदेव.प्रागुक्तईश्वरोहिरण्यगर्भादिलक्षणोपि
तितदात्माच्चिदात्मकतयाआत्मन्येवकचतिनान्यदणुमात्रमपिसंपादयतिसपश्यतेवा ॥ तेनस्वयमात्मनाआत्मैवस्वरूपःपद्मजइत्यादिनामरूपकल्पनेनप्रोक्तःसर्वाणिरूपाणिविचि
त्यधीरोनामानिकृत्वाभिवदन्यदास्तेइत्यादिश्रुतिभिः इतिएवपर्यालोचनेइदंसमस्तंद्वैतंशांतब्रह्मैवेत्यर्थः ॥ ७० ॥ ॥इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०चतुर्नवतितमःसर्गः
॥९४॥ ॥ ७ ॥ ॥ घनतातानवेनात्राविद्योपशमनक्रमः ॥ शिखिध्वजस्यबोधेनविश्रांतिश्चोपवर्ण्यते ॥१॥ मृगतृष्णाबुवद्भ्रांतिरूपएवावभासतइतियदुक्तंतत्रमृगतृष्णादेःस्ना
नपानाद्यर्थक्रियासामर्थ्याद्यदर्शनान्मज्जनमरणादिदुःखकारणत्वादर्शनाच्चविषमोदृष्टांतइतिराजाशंकते॥ आब्रह्मेति ॥ तत्तर्हिअर्थक्रियासमर्थोदुःखकारणंचायंकथमित्य
न्वयः ॥१॥ सत्यसंकल्पभावनादृढीकृतस्यमिथ्यार्थस्यार्थक्रियासामर्थ्यंदुःखकारणत्वंचदैवासुरमायानिर्मितशस्त्रास्त्रहस्त्यश्वसेनादेःप्रसिद्धमेवकिंवाच्यंजगदीश्वरमायानिर्मित
स्यप्रपंचस्येत्याशयेनोत्तरमाह ॥ एवमिति ॥ अस्यसर्गात्मकस्यजगद्भ्रमस्यप्राणिकर्मोपभोगार्थत्वात्एवत्वदुक्तप्रकारमर्थक्रियासामर्थ्यंदुःखादिकारणत्वंचास्तिसत्यसंकल्प

तस्माच्चिदात्मकतयात्मनिचित्ततोयंनित्यंस्वयंकचतिभूमिपदेवदेवः॥ तेनैवपद्मजइतिस्वयमात्मनात्माप्रोक्तःस्वरूपइतिशांतमिदंसम
स्तम्॥७०॥ ॥इत्यार्षेवा०वा०दे०मो०नि०पू०चू०शिखिध्वजाववोधनंनामचतुर्नवतितमःसर्गः॥९४॥ ॥ ७ ॥ ॥शिखिध्वजउ
वाच॥ ॥आब्रह्मस्तंबपर्यंतंयद्ययंभासतेभ्रमः॥ अर्थक्रियासमर्थश्चतत्कथंदुःखकारणम्॥१॥ ॥कुंभउवाच॥ ॥एवंजगद्भ्रमस्या
स्यभावनंतावदाततम्॥ शिलीभूतस्यशीतेनसलिलस्येवरूक्षता॥२॥ अज्ञानंशिथिलीभूतमेवंनष्टंविदुर्बुधाः॥ ननाशेनविनादेतिपूर्व
संस्थानविच्युतिः॥ ३॥ तनुत्वंसर्वबोधस्ययत्तदेवहिकारणम्॥ सर्गोपशमसंपत्तौप्रतिपन्नेपरेपदे॥४॥ तानवंदृश्यतेयस्यतस्यानुक्रम
तःस्वयम्॥ पूर्वसंस्थानविगमात्प्रशमोप्युपपद्यते॥५॥ अनेनैवक्रमेणैवंत्वमादिपुरुषोनृपः॥भ्रमाकारोदयंविद्धिमृगतृष्णांबुवत्स्थित
म्॥६॥ एषापितामहाभावेप्यसतीभूतसंततिः॥ नकदाचनतत्सिद्धंयदसिद्धेनसाध्यते॥७॥ अयंभूतोपलंभोहिमृगतृष्णांबुवोदितः॥
विचाराद्विलयंयातिशुक्तौरजतधीरिव॥८॥ कारणाभावतःकार्यमभूत्वाभवतीतियत्॥ मिथ्याज्ञानादृतेतस्यनरूपमुपपद्यते॥ ९॥

स्येश्वरस्यभावनमेवतत्तदर्थक्रियायात्मनाआततम् ॥ यथाशीतेनशिलीभूतस्यसलिलस्यचिरकालेनस्फटिकादिभावेनपरिणामाद्रूक्षतापीठपात्राद्यर्थक्रियासामर्थ्यमाततंत
द्वदित्यर्थः ॥ २ ॥ अतएवमूलाज्ञानस्यज्ञानाभ्यासपरिपाकक्रमेणशिथिलीभावेजगतःसूक्ष्मतापत्तिक्रमादेवसहाज्ञानेननाशइत्याह ॥ अज्ञानमिति ॥ अज्ञाननाशंविनाजग
त्संस्थानबाधोनास्तीत्याह ॥ नेति ॥ ३ ॥ अज्ञानशिथिलीभावेचनिरोधाभ्यासेनबाह्यधीवृत्तितानवंकारणमित्याह ॥ तनुत्वमिति ॥ तत्त्वज्ञानोत्पत्तिक्रमेणात्यंतिकसर्गोपश
मसंपत्तौकारणमित्याह ॥ सर्गेति ॥ प्रतिपन्नेसाक्षात्कृतेसति ॥ ४ ॥ अतएवलोकेपिअपक्षयापरपर्यायतानवपूर्वकएवस्थूलभावानांविनाशःप्रसिद्धइत्याह ॥ तानवमिति ॥ य
स्यदेहादेः ॥ प्रशमोनाशः ॥ ५ ॥ एवंदर्शितप्रकारेणअज्ञानशैथिल्यक्रमेणजगद्बाधादेवतवनित्यसिद्धपूर्णतालक्षणगुरुषस्वभावस्थितिसिद्धिरित्याह ॥ अनेनेति ॥ मृगतृष्णां
बुवद्भ्रांतिरूपएवावतिष्ठतेइतिप्रागुक्तजगत्स्थितिरप्येवंरीत्यैवबोद्धव्येत्याह ॥ भ्रमाकारोदयमिति ॥ ६ ॥ शंकोत्तरमुपसंहृत्यप्रस्तुतमेवनिगमयन्नाह ॥ एषेति ॥ ७ ॥ तस्यफल
दर्शयति ॥ अयमिति ॥ ८ ॥ अतएवजगतोभातिरेवस्वरूपंनान्यदित्याह ॥ कारणेति ॥ ९ ॥

अतएवमिथ्यात्विदर्शनार्थक्रियया नि स्वरूपमामेवापपत्तइत्याह ॥ मिथ्यादृष्टीति ॥ १० ॥ तर्हिपितामहस्यनिर्विशेषब्रह्मविकृतोनकारणंमयपरिणामित्वेनतस्यानित्यता पत्तिः कमिकसवपरिणामानुदर्शिवस्तोदेवजातिवत्तस्यमित्यत्वोपपत्तेरितिराजाशंकते ॥ सपूरिति ॥ ११ ॥ कुम्भःश्रुतियुक्त्यनुभवविरोधान्मैवमित्याह ॥ हेतुत्वेति ॥ तदेतद्ब्रह्मापूर्वमनपरमितिश्रुत्यापूर्वत्वलक्षणहेतुत्वस्यापरत्वलक्षणकार्यत्वस्यचनिषेधान्नेहनानास्तिकिंचनेतिश्रुत्याद्वैतमात्रनिषेधात्सगोसयपुरुषइत्यादिश्रुतेश्चासुरस्यायघटनात् कूटस्थस्यपरिणामायोगाच्चसवमपत्वातिर्मतामात्माशुद्धब्रह्मनकार्यंनापिकारणमित्यर्थः ॥ १२ ॥ कारकांतरासिद्धस्तत्प्रयुक्तत्वात्तम्यलक्षणकर्तृत्वत्वस्यदूरनिरस्तमित्याह ॥ अकर्त्रिति ॥ प्रयाज्यकर्तुरसिद्धौप्रयोजककर्तृत्वमप्यस्यदुर्लभमितिद्योतनायाकर्त्रिति ॥ अकारणमितिमित्तशून्यमबीजकमुपादानशून्यम् ॥ १३ ॥ निर्धमकल्याद्वैतब्रह्मप्रकार

मिथ्यादृष्टिप्रेक्षितंतुनकदाचनविद्यते॥ मृगतृष्णांभसाकेनघटकापरिपूरिता ॥ १० ॥ ॥ शिखिध्वजउवाच ॥ ॥ सपूरायस्यपरमब्रह्मकस्मान्नकारणम्॥ अनंतमजमव्यक्तमजरंशांतमच्युतम्॥ ११॥ ॥ कुंभउवाच॥ ॥ हेतुत्वाभावतोब्रह्मकार्यत्वाभावतस्तथा॥ अद्वैतेनातिगतात्मानचकार्यंनकारणम्॥ १२॥ अकर्तृकर्मकरणमकारणमबीजकम्॥ अप्रतर्क्यमविज्ञेयंब्रह्मकर्तृकथंभवेत्॥ १३॥ अकारणात्वात्कार्यत्वरहितंतज्जगद्भवेत्॥ अद्वैतैक्यमनापन्नंतदाद्यमुपलंभनम्॥ १४॥ अप्रतर्क्यमविज्ञेयंयच्छिवंशांतमव्ययम्॥ तत्कथंकस्यकेनेवकर्त्रभोक्तृकदाभवेत्॥ १५॥ अतोनेदंकृतंकिंचिज्जगदादिनविद्यते॥ नकर्तासिनभोक्तासिसर्वंशांतमजंशिवम्॥ १६ ॥ कारणाभावत कार्यंनकस्यचिदिदंजगत्॥ अकारणत्वात्कार्यत्वंभ्रमाद्दृष्टिस्त्विदंजगत् ॥ १७ ॥ अकार्यत्वाच्चनास्त्येतत्सर्गइत्यनविद्यते॥ यदानकस्यचित्कार्यंकारणस्यजगत्तदा॥ १८॥ पदार्थाभावससिद्धिस्तत्सिद्धौकस्यवेदनम्॥ एवंतुवेदनाभावेनास्त्यहंत्वस्यकारणम्॥ १९॥ अतःशुद्धोविमुक्तोसिकैवोक्तिर्बंधमोक्षयो ॥ ॥ शिखिध्वजउवाच॥ ॥ शुद्धोस्मिभगवन्युक्तियुक्तमुक्तंत्वयोत्तमम्॥ २०॥ कारणाभावत कर्तृनदंब्रह्मेतिवेद्म्यहम्॥ कर्त्रभावाज्जगन्नास्तितेननास्तिपदार्थदृक्॥ २१ ॥ नातभ्रिंत्तादितद्द्वाजनातोहवादिकिंचन॥ एवंस्थितेविशुद्धोस्मिविबुद्धोस्मिशिवोस्मिवा॥ २२॥

मत्वाकार्यत्वलक्षणधर्माभ्यामपरिहितभवेदितिहेतो कार्यकारणात्मकजगतसम्यमितिनिर्विशेषभावसिद्धिरद्वैतजगदद्वैतैक्यलक्षणेनवस्तुकृतपरिच्छेदेनआद्यलक्षणैर्देशकालकृतपरिच्छेदैश्चरहितसदाद्यमुपलंभनचिदेकरसब्रह्मैवसम्यमित्यपिसंभाव्य ॥ तदाकजगद्भावकार्यकारणतायेतिभाव ॥ १४ ॥ इत्थमेवतस्यजीवभावभ्रांतिप्रसंजितेकर्तृत्वभोक्तृत्वेअपिनिरसनीयेइत्याह ॥ अप्रतर्क्यमिति ॥ चतुर्भि किंवतैःप्रकारकर्मकरणकालानामसिद्धि सूच्यते ॥ १५ ॥ फलितमाह ॥ अतइत्यादिना ॥ १६ ॥ १७ ॥ उपक्रांतप्रस्तुतापयामितयास्मारयति ॥ यदेति ॥ १८ ॥ प्रस्तुतंनिगमयति ॥ एवंत्विति ॥ १९॥ एवमहंतानिरासोपायमुपदिश्यपरिशिष्टयात्मतत्त्वमनुभावयति ॥ अतइति ॥ उपदिष्टार्थस्यानुभवेनानुमोदनानोराजायुक्तमतत्वयापदिष्टमित्यनुवदति ॥ शुद्धोस्मीत्यादिना ॥ २० ॥ पदार्थदृक्नास्तदृष्टि ॥ २१ ॥ २२ ॥

इत्थंत्वदुपदिष्टयुक्त्यासर्वपदार्थानांविमर्शेनवेदनादध्यारोपेअहमादिविवेकेनापवादेअहमेतंदृश्यजातमसन्नास्त्येवेत्यव चित्स्वरूपात्परमन्यच्चेत्यंनकिंचिदितित्वयाहंबोधितः इत्थंत्वदुपदिष्टयुक्त्यासर्वपदार्थानांविमर्शेनवेदनादध्यारोपेअहमादिविवेकेनापवादेअहमेतंदृश्यजातमसन्नास्त्येवेत्यव भासतेइतिपरेणान्वयः ॥ एतेनसर्वद्वैतबाधेनखकोशवत्शांतनिर्विक्षेपमासे ॥ २३ ॥ तामेवस्थितिमभिनयन्नुपसंहरति ॥ जगदितिद्वाभ्याम् ॥ देशदिक्कालकलाक्रियौघैःसहि ताजगत्पदार्थप्रविभागदृष्टिर्ममचिरेणकालेनशांता ॥ अहोइत्याश्चर्ये ॥ तथाचशांतमव्ययात्मनिर्विकारब्रह्मैवस्थितपरिशिष्टमित्यर्थः ॥ २४ ॥ परितःपूर्णभावेनस्थितोस्मि ॥ अहमेवतिष्ठामित्वमपिस्वप्रत्यगेकरसोयथास्थितात्मातिष्ठेति अभयत्वागच्छताद्याज्ञवल्क्ययोनोभगवन्नभयंवेदयसेइतिजनकोक्तिवत्कुंभप्रतिराजोक्तिः ॥ एवंस्थितौत्वदा त्मैवाहंशुभपरमपुरुषार्थरूपंपावनंशुद्धमौनंवागगम्यशिवंनिरतिशयसुखमेवसदास्मीत्यर्थः ॥ २५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०पंचनवतितमःसर्गः ॥ ९५ ॥

नमोमत्त्वंपरंचेत्यंनकिंचिदितिबोधितः ॥ पदार्थवेदनादित्थमसदेवावभासते ॥ अहमाद्यंतमेतेनशांतमासेखकोशवत् ॥ २३ ॥ जगत्प दार्थप्रविभागदृष्टिःसदेशदिक्कालकलाक्रियौघा ॥ अहोनुकालेनचिरेणशांताब्रह्मैवशांतंस्थितमव्ययात्म ॥ २४ ॥ शाम्यामिनिर्वामिप रिस्थितोस्मिनयामिनोदेमिनचास्तमेमि ॥ तिष्ठामितिष्ठस्वयथास्थितात्माशिवंशुभंपावनमौनमस्मि ॥ २५ ॥ ॥ इ०वा०वा०दे० मो०नि०पू०चू०शिखिध्वजविश्रांतिर्नामपंचनवतितमःसर्गः ॥ ९५ ॥ ॥ ७१ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इतिब्रह्मणिविश्रांति मवाप्यसशिखिध्वजः ॥ मुहूर्त्तमासीत्संशांतमनानिर्वातदीपवत् ॥ १ ॥ निर्विकल्पसमाधानपरेणाशुविविक्षितम् ॥ स्वलीलयेतिकुंभेन झटित्येवप्रबोधितः ॥ २ ॥ ॥ कुंभउवाच ॥ ॥ राजन्नज्ञाननिद्रातःप्रबुद्धोसिशिवःस्थितः ॥ कार्यंनास्तमयेनैवनचानस्तमयेनते ॥ ३ ॥ सकृदेवविभातात्मानष्टानिष्टपदात्मकः ॥ कलाकलननिर्मुक्तोजीवन्मुक्तोंगसांप्रतम् ॥ ४ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ कुंभेनबोधिस्त्वे वंसबभूवावबोधवान् ॥ विनिर्गतोरराजोच्चैर्महामोहसमुद्रकात् ॥ ५ ॥

प्रतिबुद्धस्यराज्ञोत्रदृश्यसत्तावमार्जनम् ॥ यथाभवतिनिःशेषतथाकुंभेनवर्ण्यते ॥ १ ॥ अखंडब्रह्माकारवृत्त्युदयेनसम्यक्शांतबाह्यवृत्तिप्रशमनोपलक्षितंमनोयस्यतथाविधः सन्निर्वातदीपवन्निश्चलआसीदित्यर्थः ॥ १ ॥ अथयदातेनराज्ञाअखंडाकारवृत्तिलक्षणविकल्पमप्यवधूयक्षीराब्धिपतितोदकबिंदुवन्मनसोब्रह्मीभावमेवापाद्यब्रह्मण्येकरस्ये नविविक्षितप्रवेष्टुमभिमुखीभूततदातस्यइतिएवंरूपामवस्थामाशुउपलक्ष्यकुंभेनवक्ष्यमाणदृश्यमार्जनोपायादिविवक्षयासझटित्येवप्रबोधितइत्यर्थः ॥ २ ॥ ननुसर्वदृश्यानाम खंडाकारवृत्तेरप्यस्तमयेननिरतिशयानंदसमुद्रेविविक्षुरहंकिमितित्वयाव्युत्थापनेनविघ्नितःपुनस्तन्ममदुर्लभमितिराज्ञोविवक्षामभिलक्ष्यकुंभउवाच ॥ राजन्निति ॥ सत्यज्ञाने तद्दुर्लभं नष्टेत्वज्ञानेसर्वदृश्यास्तमयोस्तुमावासकृद्विभाततत्सदैवानावृतसुलभमेवेतिभावः ॥ ३ ॥ ४ ॥ ५ ॥

१ मूलेतिष्ठ स्वयथास्थितात्मेतिच्छेदः ॥ स्वेत्यादिःकर्मधारयः ॥

प्युत्थानकालेपिदृश्यस्यासत्तामेवपश्यन्लीलयाअभिनवस्यस्वबोधस्यचिरपरिपक्वकुंभबोधसद्भावपरीक्षालीलया ॥ ६ ॥ ७ ॥ नउच्छ्वसितस्तस्मिन मरुटीभूतआत्मास्वरूप
मस्यतथाविधेअविचारतदृनियामम् ॥ प्रतीयतइतिप्रत्ययोयःप्रतीतिःअस्ययोबोधस्त्वकुत कस्मान्निमित्तादालंबनाद्वेत्यर्थ ॥ किंसतउतासत ॥ आद्येविकारबाधयोरयोग ॥
द्वितीयसत्त्वेनप्रतिभासानुपपत्तिरितिभाव ॥ ८ ॥ एवंपृष्ट कुंभस्तदुभयमध्यासेनोपपादयिष्यन्प्रश्नमुपपन्नत्वेनप्रष्टारंचवक्ष्यमाणार्थग्रहणसामर्थ्येनप्रशंसति ॥ साध्विति ॥
मागुपदिष्टमात्मतत्त्वमवाप्यनिरस्ताज्ञानावरणत्वात्स्वरसप्रकाशसेवोभवे ॥ राजसेवाथभास्करइतिपाठेनुइवार्थेवाशब्द ॥ अथतत्त्वबोधानंतरराहुनिर्मुक्तभास्करइवराजसे
इत्यर्थ ॥ ९ ॥ तमध्याससामग्रीदर्शयितुमारोप्यसंस्कारसहकृताज्ञानशबलमधिष्ठानदर्शयिष्यन्पूर्वसर्गप्रलयदर्शयति ॥ यदिदमिति ॥ १० ॥ तत्परिशिष्टमधिष्ठानदर्शयति॥
ततइत्यादिना ॥ ११ ॥ यत्परमयास्वतत्त्वसाक्षात्कारधियायुक्तसदकोदितमत्यच्छभवतीतिपरेणान्वय ॥ १२ ॥ १३ ॥ आसमंतात्पूर्णोदितयासंविदास्वबोधेनआपूर्णम्

विश्रांतधी क्षणेनैवपश्यन्दृश्यस्यवस्तुन ॥ असत्तामेवमुक्तात्मालीलयासमुवाचह ॥ ६ ॥ ॥ शिखिध्वजउवाच ॥ ॥ ज्ञातप्रायमपी
दंतुयत्पृच्छामितदुच्यताम् ॥ भूयोनिपुणबोधायममानंदमोदद ॥ ७ ॥ शिवेशांतिनिराभासेपदेनुच्छ्वसितात्मनि ॥ द्रष्टृदर्शनदृश्यास्यो
विश्वात्मप्रत्यय कुत ॥ ८ ॥ ॥ कुंभउवाच ॥ ॥ साधुपृष्टंमहाराजराजसेवाथभास्वर ॥ एतदेवहितेशिष्टंज्ञातुयत्तदिदंशृणु ॥ ९ ॥ य
दिदंदृश्यतेकिंचिज्जगत्स्थावरजंगमम् ॥ सर्वंसर्वप्रकारांढ्यंकल्पांतेतन्विनश्यति ॥ १० ॥ तत स्तिमितगंभीरंनतेजोनतमस्ततम् ॥ महा
कल्पविलासांतेसत्सारमवशिष्यते ॥ ११ ॥ चिन्मात्रममलंशांतमाभातपरमनभ ॥ समस्तकलनोन्मुक्तयुक्तंपरमयाधिया ॥ १२ ॥
यदेकोदितमत्यच्छशांतमाततमुज्ज्वलम् ॥ परमात्मात्मकतेजस्तिमितज्ञप्तिमात्रकम् ॥ १३ ॥ अप्रतर्क्यमविज्ञेयसमाशिवमनिंदित
म् ॥ ब्रह्मनिर्वाणमापूर्णमापूर्णोदितसंविदा ॥ १४ ॥ अणीयसामणीयश्चस्थविष्ठंचस्थवीयसाम् ॥ गरीयसांगरिष्ठंचश्रेष्ठंचश्रेयसामपि
॥ १५ ॥ ईदृगतत्परंसूक्ष्मंतस्याग्रेयदिदंनभ ॥ अणोःपार्श्वेमहामेरुरिवस्थूलात्मलक्ष्यते ॥ १६ ॥ ईदृशतत्परस्थूलंयस्याग्रेयदिदंजगत् ॥
परमाणुवदाभातिक्वचिदेवनभातिच ॥ १७ ॥ विश्वात्मकचनंनामपदंमंभववेधस ॥ तदहंवेदनविद्धिविराडात्माजगत्स्थितम् ॥ १८ ॥
वातस्पंदवातस्पंदस्ययथाभेदोनविद्यते ॥ शून्यत्वखत्वोपमयोश्चिन्मात्राहंत्वयोस्तथा ॥ १९ ॥

॥ १४ ॥ १५ ॥ अणीयसाम
णीयइत्यनदृष्टांतेनस्फुटयति ॥ ईदृशमिति ॥ पृथिव्यपेक्षयाउत्तरोत्तरंसूक्ष्मतरत्वेनप्रसिद्धेभ्योपिपरमसूक्ष्मत्वेनप्रसिद्धमपीदंनभ ॥ १६ ॥ स्थविष्ठंचस्थवीयसामित्येतदपि
तथास्फुटयति ॥ ईदृशमिति ॥ १७ ॥ इदंनोमायाशबलपदेअधिष्ठानप्राक्तनजगत्संस्कारोद्बोधादुद्भूततत्प्राणिकर्मानुसारियदध्यासेनविश्वात्मकचनतदेव स्व वासुदेवस्त
स्मात्संभवोयस्यतथाविधस्यवेधसोहिरण्यगर्भस्यअहंवेदनमहंभावलक्षणज्ञानाध्यासंविद्धि ॥ तच्चविषयत्वेनजगत्स्थितंतदेवविराडात्माविषयाध्यासइत्यर्थ ॥ १८ ॥ अध्या
सपक्षेचाधिष्ठानसत्तयैवकार्यकारणोभयसत्त्वनिर्वाहात्तयोःस्वसत्त्वेनप्रतीतिज्ञानेनबाधस्यसत्कीटस्थस्यचमानुपपत्तिरित्यभिप्रस्याध्यस्तस्याधिष्ठानादपृथक्सत्त्वदृष्टांतमाह ॥ वा
तस्येति ॥ आद्यसर्गाध्यासद्वितीयतादात्म्याध्यासेदृष्टांत ॥ वात.स्वतत्त्वनिरपेक्षत्वादधिष्ठानदृष्टांतौ ॥ स्वरं शून्यत्वचरोपमतियोगिसापेक्षत्वादध्यस्तदृष्टांतौ ॥ १९ ॥

असत्कार्यवादिमतानुप्रवेशोमाभूदित्यधिष्ठानसत्तयैवकार्यस्यब्रह्मणित्रैकालिकसत्त्वमपिदृष्टांतेनदर्शयन्विशेषमाह ॥ जलेइति ॥ देशकालाभ्यामतोपरिच्छेदोयस्मिन् ॥ ज
लस्यातरालिककारणत्वाज्जलकारणेनैवसकारणम् ॥ ब्रह्मणोमूलकारणत्वादकारणम् ॥२०॥२१॥ श्रेष्ठंचश्रेयसामपीत्येतदप्यध्यासेनैवस्फुटयति ॥ ईदृशमिति ॥ जगदेवरा
ज्यंयस्यतज्जगद्राज्यमहाराजभूतमद्ब्रह्मेतिवरिष्ठश्रेष्ठमित्यर्थः ॥ यतोजगदध्यस्तत्वात्तृणलववत्तुच्छमतोनद्वैतमद्वैततदित्यर्थः ॥२२॥ तस्यैवसर्वाधिष्ठानत्वात्तत्सत्तयैवजगतःसत्ता
लाभइत्याह ॥ ईदृशमिति ॥२३॥ एकातचिच्चिन्मात्रस्वरूपम् ॥ कातनिरुपाधिकप्रेमपदम् ॥ अद्विताद्वितीयासहिष्णुतातद्वशाद्यावत्त्वाभावादेकत्वसख्यायाएवद्वितीयत्वापत्ते
श्चएकमेकत्वसख्यावदपिन ॥२४॥ आसमतात्पूर्णम् ॥२५॥ चक्षुरादिभिरदृश्यत्वात्करादिभिरलभ्यत्वाच्चनकार्यज्ञानकर्मप्रयुक्तातिशयानास्पदंनापिकारणज्ञानकर्मनिर्वर्तक

जलेऽस्तिदेशकालांतेयथोर्म्यादिसकारणम् ॥ परेऽस्तंदेशकालांतेतथाजगदकारणम् ॥ २० ॥ हेम्न्यस्तिदेशकालांतेकटकादिसकारणम् ॥ ब्रह्मण्यदेशकालांतेतथाजगदकारणम् ॥ २१ ॥ ईदृशंतद्वरिष्ठंचजगद्राज्यंतदक्षतम् ॥ नद्वैतममलंशांनंजगत्तृणलवायते ॥ २२ ॥ ईदृशंतत्परंश्रेयस्तस्मिन्सतियदीश्वरे ॥ जगत्पदार्थसार्थश्रीःसासत्तामेतिवेदनात् ॥ २३ ॥ तत्सारमेकमेवेहविद्यतेभूपतेततम् ॥ एकमेकांतचित्कांतंनैकमप्यद्वितावशात् ॥ २४ ॥ तस्माद्वितीयाकलनाकाचिन्नामनविद्यते ॥ आत्मतत्त्वमलंभातंतदेवापूर्णमक्षयम् ॥ २५ ॥ संस्थितंसर्वदासर्वंसर्वाकारमिवोदितम् ॥ अदृश्यत्वादलभ्यत्वान्नतत्कार्यंनकारणम् ॥ २६ ॥ प्रत्यक्षादेरगम्यत्वात्किमप्येवतदुत्तमम् ॥ सर्वंसर्वात्मकंसूक्ष्ममच्छानुभवमात्रकम् ॥ २७ ॥ आख्यानाख्यास्वरूपस्यनिराभासप्रभादृशः ॥ सतोवाप्यसतोवाथकथंकारणताभवेत् ॥ २८ ॥ यद्वैनकस्यचिद्बीजमनाख्यत्वान्नकारणम् ॥ नकिंचिज्जायनेतस्मात्प्रमाणादिततात्मनः ॥ २९ ॥ अकर्तृकर्मकरणंसत्यंचिद्घनमक्षतम् ॥ आत्मरूपमनाभासंस्वयंवेदनमक्षतम् ॥ ३० ॥ तस्मान्नजायतेकिंचित्परस्माद्ब्रह्मणामुने ॥ कथंकिलभ्यतेकेनयथोर्म्यादिसकारणम् ॥ ३१ ॥

मित्यर्थः ॥२६॥ किमपिप्रत्यक्षादिलौकिकमानसिद्धार्थविलक्षणमेवस्वानुभवैकगम्यंतदुत्तमंनिरतिशयानंदस्वरूपंस्वयमेवसर्वंसर्वस्यात्मासर्वेचास्यात्मानइतिसर्वात्मकम् ॥२७॥
व्यवहारदृष्टौआख्यानाख्यास्वरूपस्यशब्दतदर्थसर्ववस्तुस्वरूपस्यव्यक्ताव्यक्तस्वरूपस्यवास्वस्यस्वंप्रत्येवकथकारणताभवेत् ॥ परमार्थदृष्टौतुनिराभासप्रभादृशःनिराभासप्र
भाभिन्नदृङ्मात्रस्वभावस्याद्वयस्यकथकारणताभवेत् ॥ किंचव्यवहारेअद्वयमसत्द्वैतंसत् ॥ परमार्थेत्वद्वयसत्द्वैतमसत् ॥ नहिसदसतोरपिकेनचित्परस्परकार्यकारणतावक्तुश
क्येत्यर्थः ॥२८॥ प्रमाणादिमानमेयमित्यात्मकजगन्नजायतेव्यवहारेआत्मनएवतदात्मत्वात् ॥ नह्यात्माआत्मनोजायतइत्यर्थः ॥२९॥३०॥ तथाचाध्यासपक्षेनकस्यचिज्जन्मा
दिविक्रियेतिकौटस्थ्यमेवसिद्धमित्युपसहरति ॥ तस्मादिति ॥ यत्सकारणमूर्म्यादिमयोक्ततदपिविमर्शेजलातिरिक्तकथलभ्यतेकिवालभ्यतेनाकिंचिन्नकथचिदित्यर्थः ॥३१॥

१ अस्तंदेशकालांतेइत्यपिपाठ.

म्पृयानकालविदरपस्याससामवपश्यमलीलयाअभिनवस्यस्वबोधस्यचिरपरिचककुंभबोधसभावपरीक्षालीलया ॥ ६ ॥ ७ ॥ नउल्लसितस्तस्यत प्रकटीभूतआत्मास्वरूप
यस्यतथाविधअविचारतइतियावत् ॥ प्रतीयतइतिप्रत्ययोर्थःप्रतीतिःप्रत्ययोबोधश्चकुत कस्मान्निमित्तादालंबनाद्वेत्यर्थ ॥ किसतउतासत ॥ आपविकारसाधयोरयोग ॥
द्विर्भावसतस्तनमतिभासानुपपत्तिरितिभाव ॥ ८ ॥ एवपृष्ट कुंभस्तदुभयमध्यासेनोपपादयिष्यन्प्रश्नमुपपन्नत्वेनमष्टारचवक्ष्यमाणार्थग्रहणसामर्थ्येनप्रशंसति ॥ साध्विति ॥
भागुपदिष्टमात्मतत्त्वमवाप्यनिरस्ताज्ञानावरणत्वाद्भास्वरस्सन्राजसेशोभसे ॥ राजसेवायभास्करइतिपाठन्दुरार्थेवाशब्द ॥ अथतत्त्वबोधानंतरराहुनिर्मुक्तभास्करइवराजस
इत्यर्थ ॥ ९ ॥ तथाध्याससामर्थ्यदर्शयितुमाराप्यसंस्कारसहकृताज्ञानशबलमधिष्ठानंदर्शयिष्यन्पूर्वसर्गप्रलयंदर्शयति ॥ यदिदमिति ॥ १० ॥ तत्परिशिष्टमधिष्ठानंदर्शयति॥
ततइत्यादिना ॥ ११ ॥ यत्परमयास्वतत्त्वसाक्षात्कारधियायुक्तसदकोदितमस्यच्छभासतीतिपरेणान्वय ॥ १२ ॥ १३ ॥ आसमंतात्पूर्णोदितयासंविदास्वबोधेनआपूर्णम्

विश्रांतधी क्षणेनैवपश्यन्दृश्यस्यवस्तुन ॥असत्तामेवमुक्तात्मालीलयासमुवाचह॥६॥ ॥शिखिध्वजउवाच॥ ॥ज्ञातप्रायमपी
दंतुयत्पृच्छामितदुच्यताम्॥भूयोनिपुणबोधायममानंदमोदद॥७॥शिवेशांतेनिराभासेपदेनुल्लसितात्मनि॥द्रष्टृदर्शनदृश्यास्यो
विश्वात्माप्रत्यय युत ॥८॥ ॥कुंभउवाच॥ ॥साधुपृष्टंमहाराजराजसेवायभास्वर ॥एतदेवहितेशिष्टंज्ञातुंयत्तदिदंशृणु ॥९॥य
दिदंदृश्यतेकिंचिज्जगत्स्थावरजंगमम्॥सर्वंसर्वप्रकारांतंकल्पांतेनहिनश्यति॥१०॥ तत स्तिमितगंभीरंनतेजोनतमस्ततम् ॥महा
कल्पविलासांतिसत्सारमवशिष्यते॥११॥चिन्मात्रममलंशांतमाभातपरमनभ ॥समस्तकलनोन्मुक्तयुक्तपरमयाधिया ॥ १२ ॥
यदकोदितमत्यच्छंशांतमाततमुज्वलम्॥परमात्मात्मकतेजस्तिमितंज्ञप्तिमात्रकम् ॥ १३ ॥ अप्रतर्क्यमविज्ञेयसमंशिवमनिंदित
म्॥नष्टनिर्वाणमापूर्णमापूर्णोदितसंविदा॥१४॥अणीयसामणीयश्चस्थविष्ठंचस्थवीयसाम्॥गरीयसांगरिष्ठंचश्रेष्ठंचश्रेयसामपि
॥१५॥ईदृशंतत्परसूक्ष्मंतस्याग्रेयदिदंनभ ॥ अणो पार्श्वेमहामेरुरिवस्थूलात्मलक्ष्यते॥१६॥ईदृशंतत्परस्थूलंयस्याग्रेयदिदंजगत्॥
परमाणुवदाभातिकचिंदेवनभातिच॥१७॥विश्वात्मकचननामपदंभवबेधस ॥तदहंवेदनंविद्धिविराडात्माजगत्स्थितम्॥१८॥
वातस्यवातस्पंदस्ययथाभेदोनविद्यते॥शून्यत्वखत्वोपमयोश्चिन्मात्राहंत्वयोस्तथा॥१९॥

॥ १४ ॥ १५ ॥ अणीयसाम
णीयइत्यतद्दृष्टांतेनस्फुटयति ॥ ईदृशमिति ॥ पृथिव्यपक्षयाउत्तरोत्तरसूक्ष्मतरत्वेनप्रसिद्धेभ्योपिपरमसूक्ष्मत्वेनप्रसिद्धमपीवनभः ॥ १६ ॥ स्थविष्ठंचस्थवीयसामित्येतदपि
तथास्फुटयति ॥ ईदृशमिति ॥ १७ ॥ ईदृशमायाशबलपदेअधिष्ठानमात्रेनजगत्संस्कारोद्बोधादुद्भूतसर्वप्राणिकर्मानुसारियदध्यासेनविश्वात्मकचनंतदेव अ वासुदेवस्त
स्मात्प्रभवोयस्यतथाविधस्यवेधसोहिरण्यगर्भस्यअहमेवनमहाभावलक्षणज्ञानाध्यासंविद्धि ॥ तथाविपर्ययत्वमजगत्स्थितंतदेवविराडात्माविषयाध्यासइत्यर्थ ॥ १८ ॥ अध्या
सपक्षेवाधिष्ठानसत्त्वयैवकार्यकारणोभयसत्त्वनिर्वाहात्तयो सत्त्वेनप्रतीतेर्ज्ञानेनबाधस्यसत्कीटस्थ्यस्यचानुपपत्तिरित्यभिप्रत्याध्यस्तस्याधिष्ठानादपृथक्सत्त्वेदृष्टांतमाह ॥ वा
तस्येति ॥ आप समष्टिगाध्यासद्वितीयस्तरीयाध्यासेदृष्टांत ॥ वात स्वत्वचनिस्पंदत्वादधिष्ठानदृष्टांती ॥ स्वत शून्यत्वचअहंत्वयोगिसापेक्षत्वादध्यस्तदृष्टांती ॥ १९ ॥

असत्कार्यवादिमतानुप्रवेशोमाभूदित्यधिष्ठानसत्तयैवकार्यस्यब्रह्मणित्रैकालिकसत्त्वगपिदृष्टांतेनदर्शयन्विशेषमाह ॥ जलेइति ॥ देशकालाभ्यामतौपरिच्छेदौयस्मिन् ॥ ज
लस्यांतरालिककारणत्वाज्जलकारणेनैवसकारणम् ॥ ब्रह्मणोमूलकारणत्वादकारणम् ॥२०॥२१॥ श्रेष्ठंचश्रेयसामपीत्येतदप्यध्यासेनैवस्फुटयति ॥ ईदृशमिति ॥ जगदेवरा
ज्यंयस्यतज्जगद्राज्यमहाराजभूतमद्ब्रह्मेतिवरिष्ठश्रेष्ठमित्यर्थ ॥ यतोजगदध्यस्तत्वात्तृणलववत्तुच्छमतोनद्वैतमद्वैततदित्यर्थ ॥२२॥ तस्यैवसर्वाधिष्ठानत्वात्तत्सत्तयैवजगतःसत्ता
लाभइत्याह॥ईदृशमिति ॥२३॥ एकांतचिच्चिन्मात्रस्वरूपम् ॥ कांतनिरुपाधिकप्रेमपदम् ॥ अद्विताद्वितीयासहिष्णुतातद्वशाद्यावत्त्याभावादेकत्वसंख्यायाएवद्वितीयत्वापत्ते
श्चएकमेकत्वसंख्यावदपिन ॥२४॥ आसमतात्पूर्णम् ॥२५॥ चक्षुरादिभिरदृश्यत्वात्करादिभिरलभ्यत्वाच्चनकार्यज्ञानकर्मप्रयुक्तातिशयानास्पदनापिकारणज्ञानकर्मनिर्वर्तक

हेम्न्यस्तिदेशकालांतेकटकादिसकारणम् ॥ परेऽस्तंदेशकालांतेतथाजगदकारणम् ॥ २० ॥ जलेऽस्तिदेशकालांतेयथोर्म्यादिसकारणम् ॥ ब्रह्मण्यदेशकालांतेतथाजगदकारणम् ॥ २१ ॥ ईदृशंतद्वरिष्ठंचजगद्राज्यंतदक्षतम् ॥ नद्वैतममलंशांतंजगत्तृणलवायते ॥ २२ ॥ ईदृशंतत्परंश्रेयस्तस्मिन्सतियदीश्वरे ॥ जगत्पदार्थसार्थश्रीःसासत्तामेतिवेदनात् ॥ २३ ॥ तत्सारमेकमेवेहविद्यतेभूपतेततम् ॥ एकमेकांतचित्कांतंनैकमप्यद्वितावशात् ॥ २४ ॥ तस्माद्द्वितीयाकलनाकाचिन्नामनविद्यते ॥ आत्मतत्त्वमलंभातंतदेवापूर्णमक्षयम् ॥ २५ ॥ प्रत्यक्षादेरगम्यत्वात्किमप्येवतदुत्तमम् ॥ अदृश्यत्वादलभ्यत्वान्नतत्कार्यंनकारणम् ॥ २६ ॥ संस्थितंसर्वदासर्वंसर्वाकारमिवोदितम् ॥ सर्वंसर्वात्मकंसूक्ष्ममच्छानुभवमात्रकम् ॥ २७ ॥ आख्यानाख्यास्वरूपस्यनिराभासप्रभादृशः ॥ सतोवाप्यसतोवाथकथंकारणताभवेत् ॥ २८ ॥ यद्बीनकस्यचिद्बीजमनाख्यत्वान्नकारणम् ॥ नकिंचिज्जायतेतस्मात्प्रमाणादिततात्मनः ॥ २९ ॥ अकर्तृकर्मकरणंसत्यंचिद्घनमक्षतम् ॥ आत्मरूपमनाभासंस्वयंवेदनमक्षतम् ॥ ३० ॥ तस्मान्नजायतेकिंचित्परस्माद्ब्रह्मणामुने ॥ कथंकिंलभ्यतेकेनयथोर्म्यादिसकारणम् ॥ ३१ ॥

मित्यर्थः॥२६॥किमपिप्रत्यक्षादिलौकिकमानसिद्धार्थविलक्षणमेवस्वानुभवैकगम्यतदुत्तमनिरतिशयानदस्वरूपंस्वयमेवसर्वंसर्वस्यात्मासर्वेचास्यात्मानइतिसर्वात्मकम्॥२७॥
व्यवहारदृष्टौआख्यानाख्यास्वरूपस्यशब्दतदर्थसर्ववस्तुस्वरूपस्यव्यक्ताव्यक्तस्वरूपस्यवास्वस्यस्वंप्रत्येवकथकारणताभवेत् ॥ परमार्थदृष्टौतुनिराभासप्रभादृश निराभासप्र
भाभिन्नदृङ्मात्रस्वभावस्याद्वयस्यकथकारणताभवेत् ॥ किंचव्यवहारेअद्वयमसत्द्वैतसत् ॥ परमार्थेत्वद्वयसत्द्वैतमसत्॥ नहिसदसतोरपिकेनचित्परस्परकार्यकारणतावक्तुश
क्येत्यर्थ ॥२८॥प्रमाणादिमानमेयमित्यात्मकजगन्नजायतेव्यवहारेआत्मनएवतदात्मत्वात् ॥ नह्यात्माआत्मनोजायतइत्यर्थ ॥२९॥३०॥तथाचाध्यासपक्षेनकस्यचिज्जन्मा
दिविक्रियेतिकौटस्थ्यमेवसिद्धमित्युपसहरति ॥ तस्मादिति ॥ यत्सकारणमूर्म्यादिमयोक्ततदपिविमर्शेजलातिरिक्तंकथलभ्यतेकिवालभ्यतेनकिंचिन्नकथंचिदित्यर्थ ॥ ३१॥

१ अस्तदेशकालांतेइत्यपिपाठ,

त्पृथिव्यामिवासौपृथ्व्यांबभूवत्यादिश्रुतेरंतर्यामिभ्रात्रैवतस्यपृथिवीशरीरय·पृथिवीमंतरोयमयत्येषतआत्मां

सस्थिति प्रश्नार्हैतिशेष· ॥ ४४ ॥ ननुयदिपृथिव्यादयोनसत्येवतर्हिकथंय पृथिव्यांतिष्ठन्पृथिव्याआंतरोयंपृथिवीनवेदयस्यपृथिवीशरीरय·पृथिवीमंतरोयमयत्येषतआत्मां

तर्याम्यमृनइत्यादिश्रुतेरनर्यामिणेश्वरेणप्रेर्यमाणाएवसर्वेभावा स्वस्वकार्येचमत्कुर्वंतीतिवैदिकसिद्धांतस्तत्राह ॥ यन्मयाएवेति ॥ मायाशबलेश्वरमया सर्वेभावास्तेनमायाशब

लेश्वरेणैवमाययैवमिथ मामथ्यात्मनामेलनायसप्रेरिता सत पचभूतात्मकेपिदेहमायिकमेवतत्तत्कार्यचमत्कारकुर्वंति ॥ यथामिथुनानिस्त्रीपुंसयुग्मानियौवनेकाममयानिकामे

नप्रेरितानिपरस्परसभोगेनपुत्राद्युत्पादनेनचमत्कुर्वंति ॥ यथावाबीजानिभूस्थानिवर्षोदकेनप्रेरितान्यकुरोदयाच्चमत्कुर्वंतितद्वदितिपरेणान्वयः ॥ ४५ ॥ तथाआवृतचिन्मा

त्रमेवचिन्मात्रेणमायिकेननानात्मनैवनानेवभूत्वाअवधीयतेतत्तत्कार्यरूपेणपरिच्छिद्यते ॥ ४६ ॥ यथातदेवचिन्मात्रस्वात्मज्ञानात्मनास्वेनैवव्याप्तंपारमार्थिकात्मनाचम

त्कुरुतेतद्वत्ब्रह्मणएवब्रह्मभूतसर्गात्मनामायिकचमत्कारेतस्यैवतत्त्वज्ञानेनपारमार्थिकस्वरूपावाप्तिचमत्कारेच पूर्णमद·पूर्णमिदंपूर्णात्पूर्णमुदच्यते पूर्णस्यपूर्णमादायपूर्णमेवा

तथाजगदहंभावंविनानेशस्यसंस्थितिः॥ अकारणत्वान्नास्तीदंब्रह्मैवेत्थंविजृंभते॥ ४४॥ अजृंभमाणमेवेदंजगत्त्वेनेवसंस्थितम्॥ य

न्मयाएवतेनैवमिथःसंप्रेरिताशयम्॥ ४५॥ चमत्कुर्वंत्यमीभावाःपंचकेमिथुनौघवत्॥ चिन्मात्रएवचिन्मात्रंचिन्मात्रेणावधीयते॥ ४६॥

नानात्मनैवनानेवस्वात्मज्ञानात्मनात्मवत्॥ पूर्णात्पूर्णान्युद्धरंतिपूर्णात्पूर्णानिचक्रिरे॥ ४७॥ भवंतिपूर्णात्पूर्णानिपूर्णमेवावशिष्यते॥

चिन्मात्रमेवकचतियच्चिन्मात्रमयात्मनि ॥ ४८ ॥ अकचित्वैवतन्नामकचितंसर्गवेदनम्॥ अहंचिताचिदेवादौभवतीवस्वयंततः

॥ ४९ ॥ अभवंत्येवरूपंस्वमत्यजंतीनिरामयम्॥ तेजोमयमनाद्यंतंमनोरूपमनंतकम्॥ ५० ॥ सम्राट्संसारमाभासिभवतीवस्वयंव

पुः॥ पश्यत्यथसदेवेदंस्वरूपत्वात्सदेववा॥ भावनाद्भूततामेतिदृश्यंभवतिचक्षणात्॥ ५१ ॥

वशिष्यतइतिश्रुतिमर्थंतउदाहरति ॥ पूर्णादिति ॥ प्रलयेवासनामात्रशेषेणसर्वोपाधिप्रलयेमायाशबलेब्रह्मण्यप्ययप्राप्ताजीवाःकल्पादौभोजकादृष्टपरिपाकेपुनःस्वस्वव्यष्टि

समष्ट्युपाधीन्सर्गेणयदुद्धरंतितत्पूर्णादपरिच्छिन्नाद्ब्रह्मण·कारणात्पूर्णान्यपरिच्छिन्नब्रह्मरूपाण्येवकार्याणिमाययोद्धरति ॥ स्थितिकालेचयदवातरकार्यजातमैहिकामुष्मिक

भोगमोक्षसाधनानिचक्रिरेतदपिपूर्णादेवपूर्णान्येवचमाययाचक्रिरे ॥ ४७॥ ततोयत्तत्त्वज्ञानान्मुक्ताभवंतितदपिपूर्णादेवमायापगमात्पूर्णानिभवति ॥ सहभेदभ्रमेणमायापगमे

पूर्णमेवावशिष्यतइतिश्रुतेस्तात्पर्यार्थइतिभाव· ॥ यच्चिन्मात्रमयात्मनिसर्गवेदनकचितंतच्चिन्मात्रेचिन्मात्रमेवाकचित्वैवकचितनामेत्यत्रान्वयः ॥ ४८ ॥ अहप्रत्यगात्मरूपा

चिदेवसर्गादौस्वरूपमत्यजत्येवाभवत्येवस्वतश्चितास्वयमेवानतकमनोरूपंभवतीव ॥ ४९ ॥ ५० ॥ ततःस्थौल्यकल्पनेनाभासिसत्स्वयमुव·सम्राट्संसारविराड्भावेनससरण

रूपभवतीव ॥ अथव्यष्टिजीवभावेनेदजगद्भ्रांत्यासदेवपश्यतिपरमार्थतोधिष्ठानसदेववाजगतिपश्यतितदर्शनभ्रांतिरित्यर्थः ॥ भूतताचतुर्विधभूतग्रामताम् ॥ ५१ ॥

उत्तमुपपादयति ॥ शांतमिति ॥ एवमुक्तरीत्याशांतस्वभावत शब्दार्थाभ्यांनामरूपाभ्यांमुक्तमतएवाव्यपदेश्यस्वप्रकाशोयोनुभवस्तदात्मतत्त्वमेकवस्तुनिजचमत्करणमायात
रवलोकरूपसन्जगत्प्रसररूपतयाजगदिवभूत्वास्थितमित्यर्थ ॥ ५२ ॥ ॥ इतिश्रीवासिष्ठम॰तात्पर्यप्र॰नि॰पू॰षण्णवतितम सर्ग ॥ ९६ ॥ ॥ ७ ॥ ॥ पूर्वप्राका
रणदृश्यंनजातमितिमार्जितम ॥ विमाज्यतप्रयत्ननदृश्यवेदनतावित ॥ १ ॥ दृश्यविरामितमश्लोकोक्तसमुद्रतरंगदृष्टांतस्तदर्थांतरवैषम्यवद्दृश्यमार्जनोपयोगितयोपपादित
इदानीमर्कविंशतितमश्लोकोक्तहेमकटकदृष्टांततदर्थांतरवैषम्यवतथैवोपपादनीयमितिवक्तुंकुंभोनुवदति ॥ हेम्नीति ॥ १॥२ ॥ अस्तुदृश्यासत्त्वतदसत्त्वेशुद्धचितस्तद्वदनस्वरूप
मापनीति कथमितिराजापृच्छति ॥ शिवइत्यादिना ॥ ३ ॥ नभोचित्तसंसारालोकस्यतदध्यस्तगंधर्वनगरादिप्रकाशस्वरूपमाप्नतीतिवत्तवित्याशयेनकुंभउत्तरमाह ॥ विस्तार
मिति ॥ विस्तायतइतिविस्तारस्तदधिष्ठानसम्यक्प्रमेवतस्यसाध्यस्तस्यसंवेदनसंवित्प्रथेवमिथमि ॥ अतएवतदध्यस्तभुवनतन्मात्रमधिष्ठानसन्मात्रमेवेतितदेवजगद्वपुर्ध्यपदिश्यत
इत्यर्थ ॥ ४ ॥ अथविज्ञानवादीभुवनादिरूपोपआंतरविज्ञानपरिणामएवसदस्यादासार्थवदवगम्यतइतिमन्यत ॥ गौतमकणादकपिलपतंजलिप्रभृतयोबाह्यार्थं पृथिव्यादि

शांतजगव्यसररूपतयास्वभावशब्दार्थमुक्तमिदमव्यपदेश्यमेकम् ॥ वस्तुस्थितनिजचमत्करणावलोकरूपजगत्स्वरहितानुभवात्मत
त्वम॥५२॥ ॥इ॰वा॰वा॰दे॰मो॰नि॰पू॰चू॰शिखिध्वजावबोधननामषण्णवतितम सर्ग॥ ९६॥ ॥७॥ ॥कुंभउवाच॥ ॥
हेम्न्यस्तिदेशकालादेरित्थंजन्यजनिक्रम ॥ नकिंचिज्जायतेशांतान्नकिंचित्प्रविलीयते॥ १ ॥ स्वसत्तायांस्थितब्रह्मनबीजंनचकारणम्॥
शुद्धानुभवमात्रतत्तस्मादन्यन्नविद्यते ॥ २॥ किंचिज्जगदहंतादितदेवानंतमस्तिहि॥ ॥शिखिध्वजउवाच॥ ॥शिवेजगदहंतादिमु
नेनास्तीतिवेद्म्यहम् ॥ ३ ॥ सर्गवेदनमाभातिकथमेतद्वदाशु मे॥ ॥कुंभउवाच॥ ॥विस्तारवेदनायत्तत्संविदिवतिष्ठति॥ ४॥ तत्त
द्भुवनमत्यच्छंतत्तन्मात्रजगद्वपु ॥ नविज्ञानमयोर्यास्तिनचात्योनापिशून्यता॥ ५॥ वेदनामात्रसारत्वाद्यथाचित्सारउच्यते॥ द्रवत्व
सलिलस्यैवचिदचित्त्वमकारणम् ॥६॥ स्वात्मनीशमनततथास्थितमवस्थितम् ॥ प्रतियोगिव्यवच्छेदाभावत सत्वभावयो ॥ ७॥

पचभूतमयपरमार्थभूतास्तीति ॥ माध्यमिकस्तुशून्यमवबासाभ्यंतरयासमाहकभावेनसर्वस्यामथतेनवस्तुभूतंकिंचिदस्तीति मन्यतान्यपाकुर्वन्नाह ॥ नविज्ञानमयइति॥५॥
तत्कुतस्तत्राह ॥ वेदनेति ॥ सर्वेषांचाविनाकल्पना सत्यविज्ञानापामुपपद्यतेनासत्यामितिनतस्याशून्यताक्षणिकताजन्यताविनाशितापरिणामित्वंकिंचित्कुशक्यतइतिसे
वसारइत्यर्थ ॥ यथाचिद्रसारस्तथाउच्यतेउपपादयतमणुदृष्टांत यथाद्रवत्वसलिलस्यरसस्तद्वत्सर्ववस्तूनांचितम्यसार ॥ यदिचैतन्यमात्रवस्तुनस्यात्तर्हिसाधकाभावात्सर्व
जगदस्तिनास्तीतिव्यपदेशानर्हंकस्याचिदितिविभाव्यतामितिभाव ॥ एवरसभूतायाश्चित अचित्त्वमकारणनकारणैर्निरूपयितुंशक्यम ॥ ६ ॥ त्वयावातस्याजमव्ययताकथ
मुपपादनीयमितिचत्तत्राह ॥ स्वात्मनीति ॥ मचिद्रूपस्वात्मनिजगदाकारेणप्रथनेपरमार्थचिन्मात्ररूपेणवापयनईशत्वमायथासमर्थमतस्तथासाविषयनिरविषयायथास्थितत
थैवप्रतीत्याप्यवस्थितमित्यर्थ ॥ यदितस्वच्छास्वच्छोभयभावस्थितिसमर्थतर्हितस्यस्वच्छभावैकव्यवस्थताकुतस्तत्राह ॥ प्रतियोगीति ॥ सत्वमात्मस्यस्वभावोहिस्वच्छ
भाव असत्त्वभावस्तुतद्विरुद्धभाव सयदिस्वविरोधिनसत्त्वस्यव्यवच्छेदकुर्यान्नकुर्याद्वा द्वेधापिस्वयमसिद्ध्यतीतिसत्त्वतद्विरुद्धभावयोप्रतियोगिव्यवच्छेदाभावादसत्त्वभा
याअसत्त्वात्सत्त्वैकवस्तुनिस्वच्छभावैकव्यवस्थतासिद्धेत्यर्थ ॥ ७ ॥

॥यदीति ॥ चित्कौटस्थ्याद्वयत्वादिपरश्रुतिवि

ननुअस्वच्छभावस्यात्यतापलाप किमर्थक्रियते स्वच्छचिद्रूपमेवास्वच्छजगद्भावकारणतापत्तियोग्यमितिकुतोनकल्प्यतेतत्राह ॥ नचेति ॥ १० ॥ उत्थितमिव ॥ ११ ॥ तर्ह्यसत्त्वकारण
द्वदनुभवविरोधात्तथानकल्प्यतइतिभाव. ॥ ८ ॥ ९ ॥ चिदभ्यासपक्षविनासर्गस्योपायांतरेणोपपत्तिरेवनास्तीत्याह ॥ नचेति ॥ कार्यमिति ॥ १२ ॥ यदिसन्मात्रैकरसतर्हिकथजगच्चिज्जडरूपेणसद्रूपेणचद्वित्वैक्याद्यात्मकप्रतीयतेतत्राह ॥ व्योमपुष्पवदिति॥
कमेवेदजगदितियदृच्छावादिपक्षनिरस्यति ॥ कार्यमिति ॥ १२ ॥ तस्यचिद्रूपमेवब्रह्मकारणम् ॥ नचचिद्रूपैक्येइदकार्यमिदकारणमितिविभाजकाभाव. जन्मनाशयोरेव
खपुष्पवज्जद्दाशोविकल्पमात्रमित्यर्थः ॥ अस्तुतर्हिचिद्रूपमेवजगत् ॥ तस्यचिद्रूपमेवब्रह्मकारणम् ॥ नचचिद्रूपैक्येइदकार्यमिदकारणमितिविभाजकाभाव. जन्मनाशयोरेव
विभाजकत्वोपपत्तेस्तत्राह ॥ वस्त्विति ॥ नवाघटपटादिजागतवस्तुज्ञंचिद्रूपमुपपद्यते ॥ कुत. नाशैकनिष्ठत्वान्नाशनियतत्वात्॥चितोहिनाशोनचितासिध्यति ॥नाशकालेचि

असत्वात्तेनपरमेस्वच्छभावव्यवस्थता॥यदिकारणतापत्तियोग्यंशांतंपदंभवेत्॥८॥अनिंगितमनाभासमप्रतर्क्यंकथंभवेत्॥ अतो
नकारणंनैवबीजंब्रह्मकदाचन॥९॥कार्यस्यकस्यचिन्नामतेनसर्गोनविद्यते॥ नचान्यथोपपत्तिर्हिसर्गस्यास्योपपद्यते ॥१०॥ चिन्मा
त्रकाद्दतेतस्माज्जडसर्गोनविद्यते ॥ यदिदंदृश्यतेकिंचित्तच्चिद्घनमिवोत्थितम् ॥ ११ ॥ अहंभावजगच्छब्दशब्दार्थरसरंजनम्॥ कार्यं
नकारणाभावात्पदार्थैतूपपद्यते ॥ १२ ॥ द्वित्वैक्याद्यात्मकंव्योमपुष्पवत्स्वानुभूतितः॥ वस्तुनाशैकनिष्ठत्वान्नवाज्ञमुपपद्यते॥ १३॥
उपलंभकरोनाशोजन्मनस्तस्यवाकुतः॥ अथचैनंसदासंतंनित्यंनष्टंचवेत्सिवा॥ १४॥ पदार्थौघंतदेवेत्थमेकरूपेपिकिंव्यथा॥ उपलं
भस्तुयश्चायमेषाचित्तचमत्कृतिः॥१५॥ चित्तत्वमात्रसत्तास्तिद्वित्वमैक्यंचनास्त्यलम्॥ अतःपदार्थसत्तायाअभावेसतिभूपते॥१६॥
असंभवाद्भावनस्यनाहंताभावनास्तिते॥ अहंभावासंभवतश्चित्तमन्यत्किमुच्यते॥१७॥

तःसत्वेनाशोक्तेर्निर्विषयत्वात् ॥ नापिजडेन तस्यसिद्धावप्यसमर्थत्वादित्यर्थ. ॥ १३ ॥ यदितुचितोनाशोचिद्रूपएवस्वपरप्रथायामन्यनिरपेक्षइतिकश्चिद्ब्रूयात्तत्राप्याह ॥
उपलभकरइति ॥ चिद्रूपःसविन्नाश.स्वजन्मनस्तस्यस्वप्रतियोगिनोवाउपलंभकरःप्रकाशक कुतः नहिस्वोत्पत्तिस्तत्पूर्वकालिकप्रतियोगिचिद्वानाशेनोपलब्धुशक्यते ॥
नचतदुभयानुपलभेतस्यनाश स्वयमुत्पन्नइत्यनुभवितुशक्यम् ॥ नचसाक्षिणातदुभयानुभवश्चितश्चिद्विषयत्वायोगादतस्तद्वयोत्पत्तिनाशयोर्जगतश्चजाड्यमेवेतिभावः ॥ ए
वजगतोजाड्यसिद्धेकारणानिरूपणादकारकोत्पत्तौसदैवजन्मस्यान्नित्यचनाशःस्यादुभयोरपिनिवारकाभावात् ॥ हेत्वभाववादिनूयदिनिष्प्रमाणकमनुभवविरुद्धमपीत्थमे
वनित्योत्पत्तिनाशस्वभावमिदजगदितिवेत्सिअभ्युपगच्छसि ॥ १४ ॥ तर्हिश्रुतिविद्वदनुभवसिद्धेअखडचिदेकरूपेतस्मिन्नभ्युपगम्यमानेतवकिंव्यथाकिमर्थपीडेत्यर्थः ॥ न
नुयदिसर्वचिदेकरसतर्हिकथचिदचिद्विविधोपलभस्तत्राह ॥ उपलंभस्त्विति ॥ १५ ॥ तर्हिचिदन्यच्चित्तमेवद्वितीयस्यात्तत्राह ॥ अतइत्यादिना ॥ १६ ॥ १७ ॥

भिन्नत्वाज्जीवब्रह्मभेदभिन्नचिद्दृश्यचितादृश्यवेदननाद्रूपभेदभ्रमनास्ति ॥ १८ ॥ शुद्धचिद्रूपे सर्वथाह्यभानकदापिजडपदार्थानामसिद्धेस्तद्भावनामयुक्तमहमितिजीवरूपमपिविना स्यवेनिश्चयमात्मैवपरिशिष्यतइत्यर्थः ॥ १९ ॥ नादृशात्मैवसत्यज्ञानमनन्तंब्रह्म नित्यविज्ञानमानन्दंब्रह्म ब्रह्मैवेदंविश्वमिदंवरिष्ठमित्यादिसर्ववेदार्थस्तद्भावनादेवतदनुभवाच्चि त्तस्य ॥ तादृशचिन्तनतदनुभवात्मिकाअवस्थाकारस्त्वित्ति सर्वथाचित्त्वासम्यपरिशिष्येतेत्याशङ्क्याह ॥ चेतितेति ॥ ब्रह्मचिन्तनयाचेतितब्रह्मार्थैकसत्यत्वाच्चितादिवृत्तिरपिस्वेन्द्र बाधनवाप्यनइतिनब्रह्मातिरिक्तपरिशेषप्रसक्तिरित्यर्थः ॥ २० ॥ उक्तमर्थंफलेनोपसंहरति ॥ तेनेति ॥ तेनसर्वबाधनत्वं ब्रह्मैवासि तद्ब्रह्म अशेषमनेकमेकमेवसंपन्नसर्वजगद्भासनच्छू न्यमपि नयनिभासरूपाचिदपियथास्थितमविकृतमस्वैवेतिनिरामयतत्त्वावशिष्टमित्यर्थः ॥ २१ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशे नि० पू० सप्तनवतितमः सर्गः ॥ ९७ ॥ चित्तनाम्नोनिरोधस्यदर्शकाकारायविस्तरात् ॥ चेत्यासत्त्वादचित्तत्वमूर्ध्वेऽत्रतिवर्ण्यते ॥ १ ॥ ननुआलोकेसन्निरूपादेरिवसत्त्वेचित्ते चित्तस्तब्धस्यस्यबाधयथादृश्यनेनास्ति ॥ तत्र

इतिचित्तमहद्रूपनास्त्यतोनचचित्तता ॥ निर्वासनशांतमनामौनीपरनभोमय ॥ १८ ॥ सदेहोवाविदेहोवाभावस्थोप्यचलोपम ॥ सर्वथाशुद्धचिद्रूप पदार्थाभावसिद्धित ॥ १९ ॥ भावनाभावतश्चित्तनास्त्येवाहमितिस्वयम् ॥ एवंब्रह्मेतिवेदार्थभावनादनुभूतित ॥ चेतितार्थैकसत्यत्वाच्चितानामक्वविद्यते ॥ २० ॥ तेनासिनिर्मलमकारणमादिमुक्तंब्रह्मशाश्वतमशेषमनेकमेकम् ॥ शून्यनिरामय मसत्सदनादिमध्यसर्वंजगच्चिदपिब्रह्मयथास्थिततत् ॥ २१ ॥ ॥ इ० वा० वा० दे० मो० नि० पू० चू० शिखिध्वजप्रबोधननामसप्तनव तितमः सर्गः ॥ ९७ ॥ ॥ ७ ॥ ॥ शिखिध्वजउवाच ॥ ॥ चित्तनास्तीतिमेबोधोयथायुक्त्यास्फुटंभवेत् ॥ तामन्यामथवाब्रूहियुक्ति निपुणमया ॥ १ ॥ ॥ कुंभउवाच ॥ ॥ चित्तनास्त्येवहेराजन्कदाचित्किंचनक्वचित् ॥ यद्दृढंचित्तवद्भातितद्ब्रह्माभिधमव्ययम् ॥ २ ॥

इतिचित्तप्रवाकारवृत्तिकवाध्यनतोहिदीपनाशवदपुनराप्यप्रामम ॥ किंचसचित्ताएवसचेतनाअचित्तास्तुचेतनालोकप्रसिद्धास्तयदिजीवन्मुक्तानष्टचित्तास्तर्हिस्तवादिवदचेत ना भवेयुः ॥ नचतथादृश्यत ॥ किंचसनिश्चित्तनिरतिशयानन्दलक्षण परमपुरुषार्थं शास्त्रफलमनुभवितुशक्यनास्ति ॥ नचाननुभूयमान कश्चित्पुरुषार्थोनामभवति ॥ किं च ब्रह्माकारचित्तमपचित्तबाधतअप्यहा ॥ नाद्य ॥ स्वात्मनिक्रियाविरोधात् ॥ नहिरासबहुन्यपि स्वात्मानमवगुशक्नोति ॥ नद्वितीय ॥ तदाप्यस्यजगतस्तद्वाधकत्वायोगा त् ॥ चित्तस्यचत्रिरक्तस्पष्टाकेबाधकत्वाप्रसिद्धसुन्दोपसुन्दन्यायानवतारात् ॥ प्रमाणस्त्वनादे सवसाधकत्वमेवनबाधकत्वमितिचित्तबाधोनिरर्थकोदुष्कर.प्रमानुभवपराहतश्चे स्याशाशङ्कानिरासनबोधदार्ढ्यकामोराजापृच्छति ॥ चित्तमिति ॥ तामागुक्तामेवयुक्तिविशदीकृत्यब्रूहि ॥ अथवातस्यांतदुपयुक्तांमदीयसर्वाशङ्कानिवारणसमर्थांचयुक्ति मदीत्यर्थ ॥ निपुणरदम ॥ १ ॥ तत्रसर्वशापपरिहारेणचित्तबाधोपपादिकायुक्तिमकुंभश्चित्तासत्त्वतदधिष्ठानब्रह्मनामसत्यप्रतिजानीते ॥ चित्तमिति ॥ कदाचित्कालेक चिद्देशेकिंचिदन्यात्मनाचचित्तनास्ति ॥ २ ॥

तांयुक्तिमाह ॥ अतइति ॥ यत.सर्वंचित्तादिजगदज्ञानात्मकंज्ञानेनाज्ञानबाधेनहेतुनानविद्यतेअतोहेतोरित्यर्थः ॥ अयंभावः ॥ भवेदयंस्वात्मनिक्रियाविरोधोयद्यज्ञानबाधा च्चित्तादिबाधोन्यःस्यात् ॥ अज्ञानबाधएवतुसर्वंतत्कार्यंतत्सबधावरणविक्षेपादिसर्वंनिवृत्तिरूपस्तस्मिन्सतिचित्तनास्त्येवेतिप्रतिज्ञातार्थोऽर्थसिद्धएव ॥ अतएवनपुनराध्यादि दोषप्रसक्तिरज्ञानस्यैवसर्वाध्यप्रयोजकस्यापगमात् ॥ स्वप्रकाशपूर्णानंदपरिशेषेणनिरतिशयपुरुषार्थसिद्धेश्च ॥ नचचित्ताधीनाचेतनताकित्वभिव्यक्तचिदधीनासाचजीव न्मुक्तेषुचित्तनाशेप्यस्त्येवेतिनाचेतनत्वप्रसंगः ॥ नचचित्तनाशेतत्कृताचिदभिव्यक्तिरपैति ॥ अनभिव्यक्तेरज्ञानावरणकृतत्वेनतदपगमेचितोभिव्यक्तेःस्वाभाविकत्वेनानपाया त् ॥ नहिवायुनाघनापसारणेनकृतासूर्याभिव्यक्तिःशरदिवायूपरमेऽपैतीतिसर्वदोषपरिहारइति ॥ ३ ॥ प्रथमप्रतिज्ञासमर्थितांनिगमय्यद्वितीयामुपादत्ते ॥ नास्त्येवेति ॥ त त्समर्थनाय यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदितिश्रुतिंप्रमाणयति ॥ केनेति ॥ ४ ॥ ननिरोधोनचोत्पत्तिर्नबद्धोनचसाधकइतिश्रुतिरपितत्प्रमाणमित्याशयेनाह ॥ महाप्र लयेति ॥ महाप्रलय.प्राकृतस्तदुत्तरेपुराणादिप्रसिद्धेसर्गादौयदिनोदितमेवतर्हिचित्तनास्त्येवेतिप्रतिज्ञावाक्येत्वयाकथयच्चेदचित्तवद्वार्तातिनिर्देश.कुतस्तत्राह ॥ निर्देशस्त्विति

अतोऽज्ञानात्मकंयत्तज्जगदेवनविद्यते॥ तत्राहंत्वंतदित्यादिकल्पिताःकलनाःकुतः॥३॥ नास्त्येवजगदेवेदंयच्चेदंकिंचनोदितम्॥ ब्रह्मै वास्तीहसकलंकेनतद्बुध्यतेकथम्॥ ४॥ महाप्रलयसर्गादावेवेदंनोदितंजगत्॥ निर्देशस्त्विदमित्यत्रत्वद्बोधायमयाकृतः॥ ५॥ उपादा नात्मकादीनांकारणानामभावतः॥ अकारणंचभावानामशेषाणांत्वसंभवात्॥ ६॥ एवमज्ञानबुद्ध्यात्मजगत्तस्मान्नविद्यते॥ तस्मा द्यदिदमाभातिभासनंब्रह्मनेतरत्॥ ७॥ अनाख्येनाकृतौदेवेकरोतीदमितित्वसत्॥ भाषितंनोपपत्त्यात्मनसत्यंनानुभूयते॥ ८॥ अना ख्योप्रतिघःस्वात्मानिराकारोयईश्वरः॥ सकरोतिजगदितिहासायैववचोऽधियाम्॥ ९॥ अनेनैवप्रयोगेणराजंश्चित्तंनविद्यते॥ जग देवनसत्साधोकुतश्चित्तादितद्गतम्॥ १०॥ चेतोहिवासनामात्रंवास्येतुसतिवासना॥ वास्यंजगत्तदेवासदतश्चित्तास्तिताकुतः॥ ११॥ यदिदंकचतिब्रह्मस्वयमात्मात्मनात्मनि॥ कृतंतस्यैवतेनैवचित्तमित्यादिनामकम्॥ १२॥

॥ ५ ॥ पूर्वोक्तयुक्तिरप्येतत्साधनसमर्थेत्या शयेनाह ॥ उपादानेति ॥ ६ ॥ द्वितीयप्रतिज्ञानिगमयति ॥ तस्मादिति ॥ ७॥ ननुयदिसर्गादिनास्त्येवतर्हितदात्मानंस्वयमकुरुतएकोवशीसर्वभूतांतरात्मा एकंबीजंबहुधायः करोति कर्त्ताभोक्तामहेश्वरइत्यादिश्रुतिस्मृतिवादानाकागतिरितिचेन्नेहनानेतिश्रुत्यपेक्षितनिषेध्यसमर्पणेनाद्वैतव्युत्पादनार्थवादत्वेनगतिर्नतत्त्वार्थतेत्याशयेनाह ॥ अनाख्ये इति ॥ अनाख्येनामरहितेअनाकृतौरूपरहितेयुक्तिशून्यत्वान्नोपपत्त्यात्मनिष्कलंनिष्क्रियमित्यादितात्त्विकश्रुतिविद्वदनुभवबाधितत्वान्नसत्यलौकिकैरपिनानुभूयते ॥ ८ ॥ शीतवातादिप्रतिघातवारणायगृहादिनिर्माणप्रसिद्धम् ईश्वरस्त्वप्रतिघःकरोतीतिअधियांतात्पर्यशून्यानामर्थवादानासर्वज्ञस्यतथाचेष्टोक्तिर्हासायैवेत्यर्थः ॥ ९ ॥ एवंजगत्स र्गासिद्धौप्रतिज्ञातार्थसिद्धिरित्याह ॥ अनेनैवेति ॥ यदाजगदेवनसत्तदातदंतर्गतचित्तादिकुत.सदित्यर्थः ॥ १० ॥ जगदसत्वेविषयासत्त्वादपिचित्तासत्त्वसिद्धिरित्याह ॥ चेतो हीति ॥ वास्येवासनाकर्मणिविषये ॥ ११ ॥ तर्हिचित्तादिव्यवहारस्यकोविषयइतिचेन्मायोपहितब्रह्मैवेत्याह ॥ यदिदमिति ॥ नाम्नासंघोनामकम् ॥ १२ ॥

पतोहिवासमामामभिमि श्लोकव्याचष्टे ॥ जगदिति ॥ दृश्यंवास्यमितिदर्शनानुसारिणीवासनेतिघोतनार्थम ॥ कारणाभावतइतिविषयबाधेनिर्विषयवासनास्थित्ययोगादिति
भाव ॥ १३ ॥ यदिदकचतीति श्लोकमपिपरमार्थदृशातत्फलवर्णनपरतयाव्याचष्टे ॥ अतइति ॥ १४ ॥ मायातत्त्वदृशाविव्याचष्टे ॥ यत्किंचिदिति ॥ परमाकाशरूपेपि
दादर्शेयत्किंचिदनिर्वचनीयमायारूपम् ॥ इयदस्यम ॥ १५॥ अरोपानर्थकारिणीअहंजगदित्येपामतिपत्तिर्मेतत्साक्षिणोममस्वप्नवन्मिथ्यैवाभाति नूननिश्चयेनेत्यर्थः॥१६॥
॥ १७ ॥ १८ ॥ यदिनोत्पन्नतर्हिजमदनादिनित्यमेवास्तिकमस्यामभाह ॥ लोकेति ॥ दृश्यस्यवस्तुनःअनादित्वजन्मादिविक्रियारहितत्वमाकीदृश्यवालोकतोवाशास्त्रतोवा
स्वानुभवतोपिवानोपपद्यतइतिपरेणान्वयः ॥ १९ ॥ साकारस्यस्थूलस्यप्रतिघातयोग्याकृतेश्चास्यजगतोलोकशास्त्रानुभूतिभि सिद्धामहाप्रलयादयोऽवुक्रमेणाप्रलयांताचि

जगद्दृश्यमिदंवास्यतदेवोत्पन्नमेवनो॥ कारणाभावतःपूर्वमेवातश्चित्तताकुत ॥१३॥ अतश्चिद्व्योममात्रात्मपरमाकाशनामकम्॥
स्फारवेदनमेवेदंकचत्यस्तिकुतोजगत् ॥ १४ ॥ यत्किंचित्परमाकाशइयत्कचकचायते ॥ चिदादर्शेनजातत्वान्नचित्तंनोजगत्क्रिया
॥१५॥ अहंत्वंजगदित्येषाप्रतिपत्तिर्नवास्तवी ॥ मिथ्यास्वप्नइवाभातिनूनमेऽशेषकारिणी ॥ १६ ॥ वास्यस्यजगतोऽभावाद्यतोना
स्त्येववासना॥ अतस्तदात्मकंचित्तंकीदृशंककुतःकथम्॥१७॥ अप्रबुद्धैरवगतंचित्तदृश्यमिदंजगत्॥ असच्चित्तनिराकारपूर्वमुत्पन्न
मेवनो॥१८॥नोत्पन्नकारणाभावात्सर्गादावेवसर्वदा॥लोकशास्त्रानुभवतोनचदृश्यस्यवस्तुन ॥१९॥ अनादित्वमजत्ववास्थैर्य
वाप्युपपद्यते॥साकारस्यास्यजगतःस्थूलस्यप्रतिघाकृते. ॥ २० ॥ समस्तकारणाभावाल्लोकशास्त्रानुभूतिभि ॥युज्यतेचनिराकर्त्तुंन
महाप्रलयादय ॥२१॥शास्त्रानुभववेदापसिद्धांतेऽन्यथापिवा॥ प्रलयाश्चनसतीतिवक्त्युन्मत्तकएवच ॥ २२॥ लोक शास्त्राणिवे
दाश्चप्रमाणंयस्यनोमतेः॥असन्मोल्यतिमूढःससज्जनजनसंश्रयेत्॥२३॥ नचसप्रतिघस्यास्यदृश्यस्याप्रतिघक्वचित्॥ कारणंभवितुंश
क्तसाकारस्यनिराकृति॥२४॥इत्यमालक्ष्यमाणतत्तदेवसततमुने॥ नयनार्थक्रियाकारिभवेन्नेत्यमिदंजगत्॥ २५॥

कारानिराकर्तुंयुज्यतेनिराकरणोपपादकसमस्तकारणाभावादित्यन्वयः ॥ २० ॥ २१ ॥ २२ ॥ लोकवेदमर्यादोल्लंघनेशिष्टैर्बहिष्कार्यतैवस्यादित्याह ॥ लोकइति ॥ अ
सन्मःकेवललोकमात्राश्रयेण्यश्चार्वाकोप्यतिमूढः॥ २३ ॥ तर्हिश्रुत्युक्तब्रह्मकारणतापक्षएवाभ्युपगम्यतांतत्राह ॥ नचेति ॥२४॥ निराकारब्रह्मकारणकत्वंवादिभ्यास्तुभु
तसदनन्यत्वमारंभसमरंभादिभ्यइत्यादिनाबादरायणन्यायेनजगतोब्रह्मताच्चिकस्वभावतायामेवतात्पर्यमितिभावःकमेव ॥ इत्थंब्रह्मभावतयाआलक्ष्यमाणजगद्व्यवहारेमूलत्वा
नयनार्थक्रियासमर्थंभवत्येवेतिनलोकविरोध ॥ परमार्थतोब्रह्मीभूतमेवेतिनमूलदृष्टिप्रसिद्धरूपमप्योनमेववि रोधोपीत्याशयेनाह ॥इत्थमिति॥इत्थमप्रसिद्धरूपम् ॥ २५ ॥

इदानींसर्वसर्गश्रुतीनांनेतिनेतीत्यादितन्निराकरणश्रुतीनांचतात्पर्यपिंडीकृत्योपसंहरति॥ तस्मादित्यादित्रिभिः ॥ पूर्वात्पूर्वंचतन्निरंशंचतस्येतिपूर्वात्पूर्वनिरंशतः॥षष्ठ्यंतात्सार्वविभक्तिकस्तसिः ॥ २६ ॥ सर्वरूपस्यपूर्णस्वभावस्यब्रह्मण.स्वतोविनैवशास्त्रंयदात्मकचनंतत्स्वकवपुःस्वरूपमेवसर्गप्रलयरूपधृक्जगदिवक्षणंयावदज्ञानकालज्ञातमितिसर्वसृष्टिश्रुतीनामर्थः ॥ तदेवस्वरूपक्षणातरेतत्त्वमस्यादिशास्त्रमनुसृत्यबुद्धंसद्ब्रह्मैवनिर्गतद्वैतात्मनिस्वभावेआस्तेइतिनेतिनेतीत्यादिद्वैतनिषेधश्रुतेस्तात्पर्यार्थइतियोज्यम् ॥ २७॥२८ ॥ अतोयथास्थितंव्यअतःशास्त्रीयबोधात् ॥ २९ ॥ एवंज्ञातसर्वंजगत्प्रशांतंसन्निरालंबनिराधारमजयथास्थितसद्ब्रह्मैव ॥ इदमज्ञदृष्टरूपंतुअत्यंतासत्वान्नानाअनानापिचन ॥

तस्मादिदंनिरंशस्यचिद्व्योम्नोप्रतिघाकृतेः॥ निराकृतेरनंतस्यपूर्वात्पूर्वनिरंशतः॥ २६ ॥ ब्रह्मणःसर्वरूपस्यशांतस्यात्तस्ययत्सममू॥स्वतएवात्मकचनंसर्गप्रलयरूपधृक्॥ २७॥ स्वकंवपुश्चतेनैवज्ञातंजगदिवक्षणात् ॥ क्षणांतरानुबुद्धंसद्ब्रह्मैवास्तेनिरात्मनि ॥ २८ ॥ ब्रह्मैवेदमतःसर्वंकचिन्नजगदादिधीः॥ क्वचित्तादिक्वचित्तादिकद्वैतैक्यादिकल्पना ॥ २९ ॥ सर्वंनिरालंबमजंप्रशांतमनादिरित्यात्मयथास्थितंसत्॥ इदंतुनानेवनचाप्यनानायथास्थितंतिष्ठसुकाष्ठमौनम् ॥ ३० ॥ ॥इत्यार्षेवा० वा० दे० मो० नि० पू० चू० शिखिध्वजावबोधनंनाम अष्टनवतितमःसर्गः॥ ९८॥ ॥ ५ ॥ ॥शिखिध्वजउवाच॥ ॥नष्टोमोहःस्मृतिर्लब्धात्वत्प्रसादान्महामुने॥ स्थितोस्मिगतसंदेहोविश्रांतमतिरात्मवान् ॥ १ ॥ ज्ञातज्ञेयोमहामौनीतीर्णमायामहार्णवः ॥ शांतोहमनहंरूपोज्ञःस्थितोस्मिनिरामयः ॥ २ ॥ अहोनुसुचिरंकालंप्रभ्रांतोहंभवांबुधौ॥ स्थानमक्षयमक्षुब्धमधुनाप्राप्तवानहम् ॥ ३॥ एवंस्थितेमुनेनास्तिसाहंतादिजगत्त्रयम्॥ मूर्खबुद्धमिदंभातियत्तद्ब्रह्मेतिवेद्म्यहम्॥ ४ ॥ ॥कुंभउवाच॥ ॥ जगदेवनयत्रास्तेतत्राहंत्वंविभासनम्॥ इत्थमंबरसंसारककुतःकीदृशःकथम्॥ ५॥ यथास्थितव्यवहृतिर्मौनीशांतमनामुनिः॥ सौम्यार्णवोदरावर्त्तपरिस्पंदवदास्वभो॥ ६॥

वहरंस्त्वत.सुकाष्ठमौनोवागादिव्यापारशून्यस्तिष्ठेत्यर्थः ॥ ३० ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० पू० अष्टनवतितमःसर्ग. ॥ ९८ ॥ ॥ ५ ॥ ॥ प्रबुद्धोपिनरेंद्रोत्रभूयःकुंभेनबोध्यते ॥ स्थूणानिखननन्यायाद्बोधोस्यसुदृढोस्त्विति ॥ १ ॥ एवंबोधितोराजाउपदेशजन्यज्ञानेनसर्वसंदेहादिबीजंस्वाज्ञानंनष्टमित्यभिलप्यदर्शयति ॥ नष्टइत्यादिना ॥ विस्मृतात्मनःसाक्षात्कारएवस्मृतिरित्युच्यते ॥ १ ॥ २ ॥ ३ ॥ मूर्खबुद्धमिदंसाहंतादिजगत्त्रयंनास्ति ॥ ४ ॥ कुंभस्तदुक्तमेवानुमोदमानउवाच ॥ जगदेवेत्यादि ॥ अंबरससारोगंधर्वनगरव्यवहारः ॥ किंदृत्तान्यधिकरणनिमित्तदृष्टांतप्रकारप्रतिक्षेपार्थानि ॥ ५ ॥ सौम्यार्णवोदरेप्रशांतोयआवर्त्तपरिस्पंदस्तद्वदास्वतिष्ठ ॥६ ॥

१ पूर्वादित्यस्यैकदेशान्वयेनित्यसापेक्षत्वात्समासः ॥ अथवापंचम्यलुकूछादसः २ पुंस्त्वमार्षम्

शब्दाथात्मशब्दार्थस्वरूपतुनभोमयशून्यमेव ॥ ७॥ चिच्चमत्कृतिनामकयदात्मरूपनभसरेवकचकचायतेस्वयाकचच्येनदीप्यते ॥ ८॥ यथानमसिअवादमुक्तीरत्नेंद्रनीलक टाहाकारसन्निवेशदृष्टेर्विवेकदृशाशांतीतथामसौराळोककचनमसूयतर्थविस्यथ ॥ ९॥यथासमस्त्यहंकारास्मास्वयंभू संकल्पमात्रतयास्वयंभ्वस्यहंकारोपि ॥ एतौसमष्टिम्य ष्टिबंधसम्मोक्षमेत्येतौतदभिमानतत्परित्यागवेदनायत्तौ ॥१०॥ तदेवस्पष्टमाह ॥ अहमित्येवेति ॥ ११ ॥कोसौमोक्षस्तमाह ॥ यदिति ॥ सदापर्यायेणसतांबंधमोक्षसंकल्पा नांसाक्षिभूतस्वरूपवेदनतदेवसद्ब्रह्मकेवलत्वंकैवल्यपदकथ्यमइत्यर्थ ॥ १२ ॥ सिद्धिर्मोक्ष ॥ आपदोबंध ॥ सत्यमहमेवानहमितिशुद्धकैवल्यात्मबोधवाम्भव ॥ १३ ॥ शु

ब्रह्मरूपमिदंशांतमित्यमस्तियथास्थितम् ॥ अहंजगदिदंचेतिशब्दाथात्मनभोमयम ॥ ७ ॥ इदमाद्यंतरहितसर्वसंसारनामकम् ॥ चि च्चमत्कृतिनामात्मनभ कचकचायते ॥ ८ ॥ सन्निवेशदृश शांतौतदस्तिकनकंयथा ॥ जगदाद्यर्थसशांतौब्रह्मैदंविद्यतेतथा ॥ ९ ॥ यथा स्वयंभू संकल्प स्वयंनामतयैवहि ॥ एतौस्ववेदनायत्तौबंधमोक्षौव्यवस्थितौ ॥ १० ॥ अहमित्येवसंकल्पोबंधायातिविनाशिने ॥ नाह मित्येवसंकल्पोमोक्षायविमलात्मने ॥ ११ ॥ यद्बंधमोक्षसंकल्पशब्दार्थानांसदासताम् ॥ स्वरूपवेदनतत्सत्केवलत्वंचकथ्यते ॥ १२ ॥ अनहंवेदनसिद्धिरहंवेदनमापद ॥ सोहमेवानहमितिशुद्धबोधोभवात्मवान् ॥ १३॥ असंकल्पनमात्रेणसम्यग्ज्ञानोदयात्मना ॥ संक ल्प क्षीयतेसिद्धस्वयमेवासदात्मक ॥ १४॥ अप्रतर्क्यस्वरूपेहिनास्तिकारणताशिवे ॥ कारणाभावत कार्यपदार्थोपिनविद्यते ॥ १५॥ पदार्थाभावसंसिद्धौवेदननोपपद्यत ॥ कारणाभावतोनित्यमहंभावस्यनोदय ॥ १६॥ अहंभावानुदयत संसार कस्यकीदृश ॥ संसारा भावत सर्वंपरमेवावशिष्यते ॥ १७॥ यदिदंभासतेतत्तत्परमेवात्मनिस्थितम् ॥ परंपरेपरापूर्णसममेवविजृंभते ॥ १८ ॥ तेननिस्तिमि तसर्वंशिलाकीर्णमिवाचलम ॥ चिद्धिरश्मिमयाकारमिवब्रह्मजगत्स्थितम् ॥ १९ ॥

द्धस्योबंधसंकल्पक्षयात्सिद्ध्यतीत्याह ॥ असंकल्पनेति ॥ १४ ॥ शुद्धस्यकारणत्वासंभवात्स्यपदार्थाभावस्तदभावमिथ्यात्वसंकल्पक्षय संकल्पनाशादहंभावक्षयस्तत्क्षया ज्जीवभावादिसंसारक्षयस्ततश्चब्रह्ममात्रावशेषइतिक्रममाह ॥ अप्रतर्क्यइतिचिभि ॥ १५॥ १६ ॥ १७ ॥ भागपिचदिदंजगदाकारेणभासतेतत्परमार्थतोब्रह्मैवतथास्थितंतस्वबो धेनघनापूर्णकिंतुपरेस्वभावेस्थितंपरमेवपरेणापूर्णसमस्वरूपमेवविजृंभतेप्रकटीभवति ॥ १८ ॥ तेनसर्वैकरूपत्वेनहेतुना ॥ वज्रशिलयाकीर्णनिबिडितवज्रशिलोदरमिवाचल दृढम् ॥ तथचब्रह्मजगत्स्थिततद्रूपमचिरश्मिमयमर्हाकाराकारसहस्रमिव ॥ १९ ॥

मुक्तौतर्हिकथस्थितंतदाह ॥ पुरइति ॥ सदेवसददर्शनादसन्मयम् ॥ २० ॥ कथंतर्हिचलेजगत्स्पंदप्रत्ययस्तत्राह ॥ छायेति ॥ यथावज्रशिलोदरेप्रतिबिंबपुरुषोऽस्पंदमानए
वस्पदतेतद्वत्स्पदि ॥ २१ ॥ सम्यग्ज्ञानप्रबोधस्योदयेबाह्यारूपालोकाआतरामनस्काराश्चनीरसानिःसाराइत्यागमप्रमाणजास्थिरभावनाभवतितामेवनिर्वाणहेतुत्वान्निर्वा
णविदु ॥ २२ ॥ जगच्छब्दार्थरहितयःपश्यतिसपश्यतीतियदुक्तंतद्दृष्टान्तैर्विवृणोति ॥ यथेति ॥ खगत प्रकाशोयथादीपाद्याकारसन्निवेशविनास्तियथावाकटकादिसन्निवे
शनिर्मुक्तहेमास्तितथाजगदप्यसन्निवेशब्रह्मास्तीतिसभावनीयमित्यर्थ ॥ २३ ॥ रूपालोकमनस्काराइत्येतदपिविवृणोति ॥ नीरसाइति ॥ ब्रह्मरूपिणोबोधाद्ब्रह्मभूतस्यजग
तोजगत्प्रत्ययकारिणोरूपालोकमनस्कारानीरसाःकोर्थ असदाभासाभवतीत्यर्थः ॥ २४ ॥ यथाबहून्यपितरंगादीनिसमुद्रेऊर्मिशब्दार्थरहितमंबुमात्रंभवतितथाबहून्यपिव
स्तूनिज्ञानोदयेनिसर्गवद्ब्रह्मैकमेवभवतीत्यर्थ ॥ २५ ॥ सर्गशब्दार्थभेदबाधेसर्गपरब्रह्मणोरैक्यमेवेतिव्यतिहारेणदृढयति ॥ सर्गएवेति॥हियस्मात्एषएवसर्वंखल्विदंब्रह्मेत्यादिश्रौत

पुरःसंकल्पकेनष्टेसंकल्पनगरस्ययत्॥ रूपंतद्विद्धिजगतःखादच्छंसदसन्मयम्॥ २०॥ छायापुरुषवत्स्पंदिशांतंनिर्मननंजगत्॥ जगच्छ
ब्दार्थरहितंयःपश्यतिसपश्यति॥ २१॥ रूपालोकमनस्कारानीरसागमभावना॥ सम्यग्ज्ञानावबोधस्यनिर्वाणंवैविदुर्बुधाः॥ २२॥ यथा
स्तिवातोनिःस्पंदोयथास्तिखगतोपिवा॥ यथाहेमासन्निवेशमस्तिब्रह्मजगत्तथा॥ २३॥ नीरसाअसदाभासाजगत्प्रत्ययकारिणः॥ रूपा
लोकमनस्काराःसंतीमेब्रह्मरूपिणः॥ २४॥ ऊर्मिशब्दार्थरहितंयादृगंबुबहून्यपि॥ सर्गशब्दार्थरहितंतादृग्ब्रह्मनिसर्गवत्॥ २५॥ सर्गएव
परंब्रह्मपरंब्रह्मैवसर्गदृक्॥ सर्गशब्दार्थरहितोवाक्यार्थस्त्वेषशाश्वतः॥ २६॥ ब्रह्मशब्दार्थसंपत्तौसर्गशब्दार्थधीःकृता॥ सर्गशब्दार्थसंसि
द्धौब्रह्मशब्दार्थधीःकृता॥ २७॥ समस्तशब्दशब्दार्थभावनाभावनोदयम्॥ शुद्धंतिष्ठतिचिद्व्योमब्रह्मशब्देनकथ्यते॥ २८॥ सम्यग्दर्शन
संसिद्धावुभयोरप्यवेदने॥ यच्छिष्टमजरंशांतंततोवाग्विनिवर्त्तते॥ २९॥ संशांतसर्वात्मकवेदनौघमस्तीदमेकात्मकस्वस्वरूपम्॥ यथा
स्थितंसर्वजगत्स्वरूपंपाषाणरूपंचपरंज्ञरूपम्॥ ३०॥ ॥ इ० वा० वा० दे० मो० नि० पू० चू० शिखिध्वजावबोधनंनामनवनवतितमः
सर्गः॥ ९९॥ ॥ ७॥ ॥ शिखिध्वजउवाच॥ ॥ एवंचेत्तन्ममहाबुद्धेयादृशंकारणंपरम्॥ कार्यंतादृशमेवेदंजगदित्येववेद्म्यहम्॥ १॥

वाक्यार्थः ॥ २६ ॥ बृहणाद्ब्रह्मेतिब्रह्मशब्दस्यार्थसंपत्तावेवसर्गशब्दार्थधीर्लोकेकृता एवंसर्गोनामरूपयोर्विसर्गस्त्यागइतिसर्गशब्दार्थसंपत्तौत्रिविधपरिच्छेदनिवृत्तेर्बृह
धात्वर्थानुसारिब्रह्मशब्दार्थताकृतेत्यनयोरेकार्थतैवेत्यर्थः ॥ २७ ॥ ब्रह्मशब्दस्यतर्हिशब्देवस्तुनिकथंप्रवृत्तिस्तत्राह ॥ समस्तेति ॥ अल्पस्यापिपरिच्छेदस्याभ्युपगमेबृहधात्व
र्थसंकोचापत्तेरशब्दशब्देनेवतादृशमेवब्रह्मशब्देनकथ्यतइत्यर्थः ॥ २८ ॥ अथवाजगच्छब्दस्येवब्रह्मशब्दस्यापिवाच्यार्थवदनोत्तरलक्षणयाअखंडार्थसम्यग्दर्शनसंसिद्धौ
यच्छिष्टवस्तुततोब्रह्मशब्दादिवागपिनिवर्त्ततइत्यर्थः ॥ २९ ॥ हेराजन्इदंसर्वंजगत्स्वरूपयथास्थितंयदस्तितदप्यतिदृढत्वाद्वज्रपाषाणरूपंपरब्रह्मस्वरूपमस्त्येव ॥ यदापीदंजग
दज्ञानेनसंशांतसर्वात्मकवेदनौघसंपन्नंतदापिएकात्मकस्वस्वरूपंसदस्त्येवेतिब्रह्मजगतोरैक्यैवसत्तेतिनकस्याप्यसत्त्वमित्यर्थः ॥ ३० ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि०
पू० नवनवतितमःसर्गः ॥ ९९ ॥ ॥ ७ ॥ ॥ वार्यतेब्रह्मवत्सत्त्वंजगतोब्रह्मसत्तया ॥ जन्मादिविक्रियाऽस्पृष्टब्रह्मैवसदितीर्यते ॥ १ ॥ यदिब्रह्मजगतोरैक्यैवसत्तातर्हितयासत्त
याब्रह्मेवजगदपिपरमार्थसत्यंकिंनस्यात् मिथ्यावस्तुनोहिकारणदुर्निरूपं सत्यस्यतुसत्यब्रह्मैवकारणंसंभवतितुल्यत्वादितिराजाशंकते ॥ एवंचेदिति ॥ १ ॥

सत्यमायाशबलशुद्धस्यसत्तैवममसत्ताकजगतःकारणभवेत् ॥ यत्तु निर्गुणपरसत्तानुपजीविअद्वयत्वात्पूर्वकालाभावेनपूर्ववृत्तित्वशून्यनिर्विकारत्वतस्मात्कार्यकुतोभवे
यनतस्ममसत्ताकस्यादित्यथ ॥२॥अस्तुतर्हितमस्थितमायाशबलमेवजगत कारणमितिचेत्तत्राह ॥ नेहेति ॥इहनिर्विशेषेमायाशबलकारणतत्कार्यजगच्चनास्ति ॥ मायाद
र्शनमायातच्छबलतत्कार्याणांसद्भावोपगमात्परमार्थदृष्ट्यातुसर्वमिवजगच्छांतमजमेवेत्यथ ॥ तथाचोक्तवार्तिके ॥ अविद्यास्तीत्यविद्यायामेवासित्वाप्रकल्प्यते ॥ ब्रह्मद
ृष्ट्यात्वविद्येयनकथचनयुज्यतइति ॥ ३ ॥ अजातेनपक्षादस्यपक्षत्तिरित्याह ॥ जायतइति ॥४॥ कुतोनजायतेतत्राह ॥ बीजमेवेति ॥ तत्रबीजाभावेऽपितर्केणबीजाकिनस्या
त्तत्राह ॥ अप्रतर्क्यमिति ॥५॥कुतस्तत्रबीजादिहेतुत्वाभावइत्यपेक्षमाणसिद्धमनुचितदेशकालाभावादित्याह ॥ देशेति ॥ तर्हिप्रमाणगोचरत्वमेवतत्रहेतूपादानकारणगोचरास्तुन वि
रोधादित्याह ॥ अकर्त्रिति ॥ यस्यप्रमाणस्याकर्तृकर्माविकारकमात्रविरोधिब्रह्मविषयत्वेनहेतूपादानकारणयोःप्रमाजायतइतिकथमत्रकुंशक्यमित्यर्थ ॥ ६ ॥ ७ ॥ अत

॥ कुंभउवाच ॥ ॥ यन्नकारणतातस्यकार्यतन्नुपपद्यते ॥ यन्नकारणमेवादौतस्मात्कार्यकुतोभवेत् ॥ २ ॥ नेहास्तिकारणकिंचिन्नच कार्यकदाचन ॥ विद्यमानमिदसर्वसर्वशांतमजंजगत् ॥ ३ ॥ जायतेकारणात्कार्ययत्तत्कारणवद्भवेत् ॥ यन्नजायतएवेहतस्मिन्सद्दशताकुत ॥ ४ ॥ बीजमेवनयस्यास्तितत्कथवदजायते ॥ अप्रतर्क्यमनाख्यचयत्तस्यकेवबीजता ॥ ५ ॥ देशकालवशात्सर्वहेतुमत प्रमाणगा ॥ अकर्तृब्रह्मविषय प्रमाकारणयोःकथम् ॥ ६ ॥ अकर्तृकर्मकरणनास्तिकारणताशिवे ॥ तस्मात्तत्कारणनास्तिजगच्छ ब्दायवेदनम् ॥ ७ ॥ ब्रह्मैवत्वस्वरूपसत्यस्थितधारयस्वतत् ॥ असम्यग्दर्शिविषयतदेवजगदाश्रितम् ॥ ८ ॥ चिन्मात्रमजरशांतयदेक तत्प्रमीयते ॥ तेनैवायजगद्ब्रह्मसच्छांतबुध्यतेवपु ॥ ९ ॥ अन्ययैवचयोभावश्चेतस पृथिवीपते ॥ सएवनाश कथित स्वानुभूतश्चपंहि ते ॥ १० ॥ चित्तनाशस्वभावतद्धिविनाशात्मकनृप ॥ क्षणनाशोयत कस्यचित्तशब्देनकथ्यते ॥ ११ ॥ असकल्पनमात्रेणसम्यग्ज्ञानो दयात्मना ॥ सकल्पःक्षीयतेसिद्धेस्वयमेवासदात्मक ॥ १२ ॥ नाथैवांगीकृताभाव यदिविश्वहिकथ्यते ॥ विद्यमानकथतस्यान्नुता मरसेक्षण ॥ १३ ॥ हस्तावुत्क्षिप्यचोब्रूतेशूद्रोस्मीतिस्वशागिरा ॥ कथसविप्रोभवतिविप्रत्वत्वस्यकीदृशम् ॥ १४ ॥ विदत्तधातुरत्युच्चैर्म तोस्मीतिविरौतिय ॥ सतिमेवागतविद्धिजीवनतस्यसभ्रम ॥ १५ ॥

एवत्वत्स्वरूपशुद्धाकाशकल्पयन्निर्विशेषवस्तुतदेवाह ॥ मतितस्वदृशात्तद्विधारयस्वनाम्यादृशम् ॥ असद्दृशाचतदेवजगद्रूपेणाश्रितमित्यथ ॥ ८ ॥ चिन्मात्रप्रमयैवजगद्ब्रह्मभावेन
सपश्यत अतस्त्वाकारमनोभास्याच्चब्रह्मजगदाकारणेत्याह ॥ चिन्मात्रमितिद्वाभ्याम् ॥ ९ ॥ नाशोमनसःस्वरूपहानि ॥ १० ॥ तदस्फुटमाह ॥ चित्तमिति ॥ सःक्षणमात्रमपिस्वरूप
विस्मरणरूपानाश कल्पकालविस्तृतचित्तशब्दमाख्यतइत्यर्थ ॥ ११ ॥ तत्रचित्तमसंकल्पमर्पयसितत्वज्ञानेननश्यतीत्याह ॥ असकल्पनेति ॥ १२ ॥ अस्तुसकल्पनाशस्तथा
पिविश्वकथनिर्वर्तइतिचन्मिथ्यात्वाभ्यतिविशतिपरमात्मन्यकीभवतिनचस्वतत्रतयाचतिष्ठतइतिविश्वमितिमिव्याममिवचनमभिमेत्याह ॥ नार्थैवेति ॥ यत्राधिष्ठानेवाधेनविश
नितस्यमानकथस्यादित्यर्थः ॥ १३ ॥ तमलोकवत्तमप्रमाणयति ॥ हस्ताविति द्वाभ्याम् ॥ १४ ॥ सन्निपातेनविकृताःकुपिताधातवोयस्यतथाविधःसमृत्स्विकिमस्मीतिवदति ॥ १५ ॥

१ मतमितिपाठेपिमतिरित्येवार्थः । २ पर्यवसितत्वज्ञानेनेत्यधिकचित्पाठः ।

तदिति ॥ तस्याज्ञानव्यतिरिक्तस्वरूपा भ्रा ॥ भ्रांतिपुंजरूपमेवतर्हिनत्सदस्तुनेत्याह ॥ भ्रमाकृतीति ॥ १६ ॥
चित्तायस्तीत्यनुभवस्यतर्हिकागतिरितिचेद्भ्रांतित्वमेवेतिदृष्टांतैराह ॥ भ्रमाकृतीति ॥ १६ ॥ भ्रांतिपुंजरूपमेवतर्हिनत्सदस्तुनेत्याह ॥ तदिति ॥ तस्याज्ञानव्यतिरिक्तस्वरूपाभा
चित्तायस्तीत्यनुभवस्यतर्हिकागतिरितिचेद्भ्रांतित्वमेवेतिदृष्टांतैराह ॥ ज्ञानबाध्यत्वान्नाज्ञानात्मनापिसत्यतासिद्ध्यतीत्यर्थः ॥ उक्तदृष्टांताभ्यामुपपादयति ॥
वादित्यर्थ ॥ १७ ॥ १८ ॥ अज्ञानात्मनैवतर्हिचित्तादिसत्यमस्तुतत्राह ॥ अज्ञानेति ॥ ज्ञानबाध्यत्वान्नाज्ञानात्मनापिसत्यतासिद्ध्यतीत्यर्थः ॥ उक्तदृष्टांताभ्यामुपपादयति ॥
वादित्यर्थ ॥ १७ ॥ १८ ॥ अज्ञानात्मनैवतर्हिचित्तादिसत्यमस्तुतत्राह ॥ अज्ञानेति ॥ अप्यर्थेएवकार ॥ तर्हिकिमस्तितदाह ॥ संविदिति
जलज्ञानमित्यादिना ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ यावत्सकलम् ॥ २३ ॥ अहंकारादिसंयुतकिंचिद्देहादि ॥ अप्यर्थेएवकार ॥ तर्हिकिमस्तितदाह ॥ संविदिति

तत्कथंकिलनामस्यात्सत्यंभ्रमभरात्मक
भ्रमाकृतियदस्तीहदृश्यतेऽलातचक्रवत् ॥ मृगतृष्णाद्विचंद्रादिबालवेतालकादिवत् ॥ १६ ॥ तत्कथंकिलनामस्यात्सत्यंभ्रमभरात्मक
म् ॥ अज्ञानभ्रांतिरेवांतश्चित्तमित्येवकथ्यते ॥ १७ ॥ अज्ञानमुच्यतेचित्तमसत्सदिवसंस्थितम् ॥ असंवेदनमज्ञानंज्ञानंसंवेदनंभवेत्
॥ १८ ॥ अज्ञानसत्वसंवित्तेर्ज्ञानात्संवेदनात्क्षयः ॥ जलज्ञानंमुधाभ्रांतिःसाधोमरुमरीचिषु ॥ १९ ॥ नैतज्जलमितिज्ञानात्संवित्तेःप्रवि
लीयते ॥ इदंचित्तमितिप्रौढंयदज्ञानमलंहृदि ॥ २० ॥ नास्तिचित्तमितिज्ञानात्तत्समूलंविनश्यति ॥ यथारज्ज्वांभुजंगत्वमज्ञानभ्रमसंभ
वम् ॥ २१ ॥ नसर्पोयमितिज्ञानाद्धृदिरूढात्प्रणश्यति ॥ तथात्मनिमनोभूतमज्ञानभ्रमसंभवम् ॥ २२ ॥ चित्तंनास्तीतिविज्ञानाद्धृदिरूढा
द्विनश्यति ॥ चित्तंमनोहमित्यंतर्यावदज्ञानसंभवम् ॥ २३ ॥ नचित्तमस्तिनोचैवमहंकारादिसंयुतम् ॥ किंचिदेवजगत्यस्मिन्संविदेकांत
निर्मला ॥ २४ ॥ तयासंकल्पचित्तादिकृतमासीद्विमूढया ॥ अद्यासंकल्पतःसर्वपरित्यक्तंप्रबुद्धया ॥ २५ ॥ संकल्पेनयदायातित्वसंकल्पे
नगच्छति ॥ पवनेनमहाबाहोज्वालाजालमिवानले ॥ २६ ॥ आत्मतत्त्वैकघनयाततयाब्रह्मसत्तया ॥ जगत्सर्वमितिव्याप्तंसमुद्रइववा
रिणा ॥ २७ ॥ नाहमस्मिनचान्योस्तिनत्वंनैतेनचित्तकम् ॥ नेंद्रियाणिनचाकाशमात्मात्वेकोस्तिनिर्मलः ॥ २८ ॥ घटाद्याकाररूपेणस
एवायंविलोक्यते ॥ इदंचित्तमयंचाहमितिकैवकुकल्पना ॥ २९ ॥ नजायतेनम्रियतेकिंचिदस्मिञ्जगत्रये ॥ केवलोयंचिदुल्लासःसदस
द्भावनात्मना ॥ ३० ॥ सर्वमात्मापरंब्रह्मसकृत्प्रकटमाततम् ॥ द्वित्वैकत्वेनविद्येतेनभ्रांतिर्नचसंभ्रमः ॥ ३१ ॥ सर्वेंद्रियगणाकारेसन्ने
वासिसखेततः ॥ नदह्यसेमहाबुद्धेनचक्वचनलिप्यसे ॥ ३२ ॥ नतेविनश्यतिसखेनचकिंचिद्विवर्धते ॥ निर्मलाकाशरूपस्यकैवल्यानंत
रूपिणः ॥ ३३ ॥ इच्छानिच्छात्मिकेशक्तीयेतरापित्वमेवच ॥ नत्वंशुव्यतिरेकेणशशांकउपलभ्यते ॥ ३४ ॥

॥ २४ ॥ २५ ॥ २६ ॥ व्याप्तमस्तम् ॥ २७ ॥ कथमस्ततदाह ॥ नाहमिति ॥ २८ ॥ तर्हिजीवन्मुक्तैर्घटाद्याकारेणकिमवलोक्यतेतत्राह ॥ घटादीति ॥ २९ ॥ ३० ॥ स
भ्रमोमरणादिभयम् ॥ ३१ ॥ सर्वस्मिन्निंद्रियगणेतद्ग्राह्यवक्ष्याद्याकारेचसन्नेवसन्मात्रस्वरूपस्त्वमसि ॥ अतोदाहहेतुभिराध्यात्मिकादिभावैर्नदह्यसे ॥ ३२ ॥ ३३ ॥ इतरा
क्रियाशक्तिरपित्वमेव ॥ अतस्तवेष्टमनिष्टंकर्तव्यंचनास्तीत्यर्थद्योतनायचकारः ॥ अंशवःकलास्तद्व्यतिरेकेण ॥ ३४ ॥

मिभिरजर्वर्जन्मरहितं विपरिणामानिरस्यंते॥ ईदंकरूपमित्यनेनान्येविकारा ॥ सकृद्विलसस्वरूपभातम ॥ कल्पाप्रमाणेमस्वस्वरूपपरिचयस्तदाभ्यालीलायस्यतथाविधसन्
सम्मात्रतयाउदितम ॥ आद्यसर्वम्यवहारेभ्यःप्राक्सिद्धमवस्तुतत्त्वेवास्मतत्त्वमित्यर्थ ॥ ३५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू शततम सर्ग ॥ १० ॥ ॥ ५ ॥
ज्ञानदार्ढ्यनरात्रोऽप्रवर्ण्यतेस्तत्कृत्यता ॥ जीवन्मुक्तावपिचित्तत्वस्थितिरित्तस्यस्यपेर्यते ॥ १ ॥ परिणत पूर्वभावविहायनन्नात्मप्राप्त ॥ १ ॥ शिलातलादुत्कीर्णप्रतिमाविरिव
॥ २ ॥ ३ ॥ निर्विकल्पानोयोगिनाशोभनतल्पभूतेनिरतिशयानन्दपदे ॥ ४ ॥ ५ ॥ महाविभवोनिरतिशयानन्दलक्षणाभूमिका ॥ समस्यहैरण्यगर्भानंदानस्यपिरयानन्दजा

अजमजरमनाद्यजस्वभावसकृदमलंविलसत्सदेकरूपम् ॥ विगलितकलनकलाख्यलीलसकृदितमाद्यमजतदात्मतत्त्वम् ॥ ३५ ॥
इत्यार्षेवा०वा०द०मो०नि०पू०चू० शिखिध्वजपरमावबोधननामशततम सर्ग ॥१००॥ ॥५॥ ॥श्रीवसिष्ठउवाच॥ ॥इतिकु
भवचोराजाभावयन्नदकृत्रिमम् ॥स्वयमात्मपदेतस्मिन्क्षणपरिणतोभवत्॥१॥बभूवामीलितमनोलोचन शांतवाङ्मुनि ॥शिलात
लादिवोत्कीर्णोनिस्पंदावयवाकृति ॥२॥ ततोमुहूर्तमात्रेणप्रबुद्धस्फुरितेक्षणम् ॥तमुवाचमहाबाहोचूडालाकुंभरूपिणी॥३॥ ॥कुंभ
उवाच॥ ॥कच्चिदस्मिन्पदेस्फारेशुद्धेविततनिर्मले॥सुतल्पेनिर्विकल्पानांसुखविश्रांतवानसि॥४॥कच्चिदत प्रबुद्धोसिकच्चिद्भ्रांतिस्त्व
योज्झिता॥कच्चिज्ज्ञेयपरिज्ञातदृष्टव्यमेववा॥५॥ ॥शिखिध्वजउवाच॥ ॥भगवंस्त्वत्प्रसादेनमहाविभवभूमिका॥महतीपद
वीदृष्टासर्वस्योर्ध्वेस्थितामया॥६॥सतांविदितवेद्यानामहोयतमहात्मनाम्॥अपूर्वंकामृतमय सग सारफलप्रद ॥७॥जन्मनापिम
यालब्धंयन्नामननमहामृतम्॥तदद्यत्वत्समासंगात्तेनैवासादितंस्वयम्॥८॥अनंतमाद्यममृतचैतत्कमललोचन॥कथनासादितमभूत्पू
र्वमात्मपदमया॥९॥ ॥कुंभउवाच॥ ॥मनस्युपशमंयातेत्यक्तभोगैषणेस्थिते॥कषायपाकेनिर्वृत्तेसर्वेंद्रियगणस्यच॥१०॥यांतिचे
तसिविश्रांतिंविमलादेशिकोक्तय ॥यथासितांशुकेशुद्धेबिंदव कुंकुमांभस ॥११॥कषायाणामनंतानांसंस्थितानांशरीरके ॥स्ववास
नास्वरूपाणामद्यपाकस्तवोदित॥१२॥देहान्मलानिसर्वाणिकालेनकमलेक्षण॥साधोवृक्षात्फलानीवपाकेनविगलंत्यध ॥१३॥

तस्योर्ध्वमुत्कर्षकाष्ठायांस्थिता ॥ ६ ॥ सतेनिहृर्षे ॥ अपूर्वमनादौसंसारेकदाप्यननुभूतत्वेकामृतनिरतिशयानन्दत्वमधुर अतएवसारफलप्रद ॥ ७ ॥ सामान्योक्तविशिष्यवि
वृणोति ॥ जन्मनेति ॥ तेनमहामृतस्वरूपभूतेनैवमयाअनायासेनासादितम् ... समासंगात्स्वयमेवअनायासेनासादितम् ॥ ८ ॥ ९ ॥ पूर्वंचित्तकषायपाकाभावान्नासादि
तमिदानींनुनप्रमातत्त्वंपाकादासादितमित्याशयेनकुंभउत्तरमाह ॥ मनसीत्यादिना ॥ सर्वेंद्रियगणस्यचाम्मनसश्चभोगलक्षणकषायाणांपाकेनिवृत्तेसति ॥ यथाचस्मृति ॥
कषायपक्ति कर्माणिज्ञानंतुपरमागति ॥ कषायेकर्मभि पक्वेततोज्ञानंप्रवर्तते ॥ १ ॥ ११ ॥ ॥ १२ ॥ देहाल्लिंगदेहात् ॥ मलानिरागादिकषाया पापानिच ॥ १३ ॥

बिसेमृणालरूपेधानुष्कपरिकल्पितेलक्ष्ये ॥ १४ ॥ १५ ॥ ज्ञानार्थासकथामुपदेशतात्पर्येणावधारितवानसीतिशेषः ॥ उपदिष्टार्थानांत्वदिधारणात्सोपदेश· ॥ प्रबुद्धवांस्तत्फ लसाक्षात्कारज्ञानवान्जातोसीत्यर्थ ॥ १६ ॥ १७ ॥ तवाज्ञानमद्यमध्याह्नकालेक्षीणमितिमयाज्ञातमित्याह ॥ यावदिति ॥ १८ ॥ इदानीमद्यतनदिनस्योत्तरभागे ॥ त्व दयात्सपरित्यक्तेचेतसिक्षयमागतेसति ॥ १९ ॥ अचित्ततयानिःस्वरूपताबुद्ध्या ॥ २० ॥ दृष्टेःपरमात्माभिव्यक्ते· ॥ २१ ॥ आलम्व्यन्योन्याध्यासात्सदसत्तामयत्वमेवहि

वासनात्मसुयातेपुमलेपुविमलंसखे ॥ यद्वक्तिगुरुरंतस्तद्विशतीषुर्यथाबिसे ॥ १४ ॥ कषायपाकेसंपन्नेत्वंमयाद्यविबोधितः ॥ तेनाद्यै वतवाज्ञानक्षयोजातोमहामते ॥ १५ ॥ अद्यपक्वकषायस्त्वमद्यैवज्ञानसंकथाम् ॥ अद्येहसोपदेशस्त्वमद्यैवासिप्रबुद्धवान् ॥ १६ ॥ शुभाशुभानांसर्वेषांकर्मणामद्यसंक्षयः ॥ सत्संगव्यपदेशेनतवनिष्पत्तिमागतः ॥ १७ ॥ यावदस्यदिनस्यैषपूर्वभागोमहीपते ॥ ताव च्चेतोहंममेतितवाज्ञानंबभूवह ॥ १८ ॥ इदानींमद्वचोबोधाच्चेतसिक्षयमागते ॥ त्वदयात्संपरित्यक्तेसंप्रबुद्धोसिभूपते ॥ १९ ॥ त्वदिया वन्मनःसत्तातावदज्ञानसंस्थितिः ॥ चित्तेचित्ततयात्यक्तेज्ञानस्याभ्युदयोभवेत् ॥ २० ॥ द्वित्वैकत्वदृशौचित्तंतदेवाज्ञानमुच्यते ॥ एत योर्यौलयोदृष्टस्तज्ज्ञानंसापरागतिः ॥ २१ ॥ प्रबुद्धोसिविमुक्तोसित्यक्तंचित्तंत्वयानृप ॥ सदसत्तामयत्वंहित्वयात्यक्तमसत्पदम् ॥ २२ ॥ वीतशोकोनिरायासोनिस्संगोनन्यआत्मवान् ॥ महोदयोमुनिर्मौनीस्वरूपेतिष्ठनिर्मले ॥ २३ ॥ ॥ शिखिध्वजउवाच ॥ ॥ एवंहिभग वन्जंतोर्मूर्खस्यैवास्तिचित्तभूः ॥ प्रबुद्धस्यनतज्ज्ञस्यचित्तंनामकिलप्रभो ॥ २४ ॥ जीवन्मुक्तास्तदेतेहिविहरंतिकथंवद ॥ अविद्यमान मनसोयुष्मदाद्यास्तथानराः ॥ २५ ॥ इतिमेकथयाशेषमन्यैःस्ववचनांशुभिः ॥ हार्दंतमोमेनिपुणमेवंप्रायैःप्रमार्जय ॥ २६ ॥ ॥ कुंभ उवाच ॥ ॥ यथावदसितत्त्वज्ञतत्तथैवहिनान्यथा ॥ चित्तंहिजीवन्मुक्तानांनास्त्यंकुरइवाश्मनाम् ॥ २७ ॥ पुनर्जननयोग्यायावास नाघनवासना ॥ साप्रोक्ताचित्तशब्देननसातज्ज्ञस्यविद्यते ॥ २८ ॥ ययावासनयातज्ज्ञाविहरंतीहकर्मसु ॥ तांत्वंसत्वाभिधांविद्धिपुन र्जननवर्जिताम् ॥ २९ ॥ जीवन्मुक्तामहात्मानःसत्वस्थाःसंयतेंद्रियाः ॥ विहरंतिगतासंगंनचित्तस्थाःकदाचन ॥ ३० ॥

चित्तनामतदेवअसतोजगत·पदकल्पनास्थानम ॥ २२ ॥ २३ ॥ चित्तेत्यक्तेजीवन्मुक्तानांकेनातःकरणेनव्यवहारसिद्धिरितिप्रष्टुराजापीठिकांरचयति ॥ एवंहीति ॥ यदीत्य र्थेकिलशब्द ॥ २४ ॥ प्रष्टव्याशदर्शयति ॥ जीवन्मुक्ताइति ॥ तर्त्तर्हि ॥ २५ ॥ अन्यैर्दुर्वचमितिशेषः ॥ अन्यैःप्रसिद्धसूर्याद्यंशुविलक्षणै.स्ववचनांशुभिःप्रसिद्धतमोविल क्षणहार्दतम प्रमार्जयेतिवा ॥ २६ ॥ २७ ॥ २८ ॥ यथाभर्जितावितुन्नाश्वलाजानव्रीह्यादिशब्दवाच्यानाप्यंकुरादिजननक्षमास्तद्वत्तत्त्वज्ञानभर्जितनिरावरणसत्वंनमन·श ब्दवाच्यनापिपुनर्जन्मसमर्थमित्यर्थः ॥ २९ ॥ जीवन्मुक्तव्यवहाराभासेतदेवकरणाभासइत्याह ॥ जीवन्मुक्ताइति ॥ ३० ॥

---

१ वितुषाइत्यपिपाठ.

॥३१॥३२॥ तथापिसत्ववत्तादेवयावज्ज्ञावव्यवहारमेतस्यसीत्याशयेनाह ॥ सत्ववानसीति ॥ ३३॥ ३४ ॥ त्वयापाक्रिम्कीर्धितोयोमहात्याग सस्वरूपचित्तयत्समुज्झितमयभे बेत्यर्थः ॥ ३५ ॥ चित्तत्यागेतपोदानादिसर्वकर्माण्यतर्भूतानितत्फलेषचित्तस्वर्गापवर्गादितत्फलान्यतर्भूतानीत्याशयेनाह ॥ स्वर्गेति ॥ प्रबुद्धामेधाउपदिष्टार्थधारणायस्या स्तयाविधयाअतएवपरमबोधवत्याधियाकतश्चित्तत्यागएवस्वर्गापवर्गवित्तादिरित्यर्थ ॥ ३६ ॥ तपआदिफलेतुनज्ञानफलमतर्भवतीत्याशयेनाह ॥ तपोनामेति ॥ यघतो मनस्सामरूपसमतायासकाशाद्यागतपनज्ञानफलंमोक्षसुखसयातिशयनिर्मुक्तमित्यर्थः ॥ ततआगतत्स्यर्थेमयद्रूपेतिमयट् ॥ ३७ ॥ नससत्येअनित्येचसत्यस्यशाश्वतस्य घातभावेसभावनापीत्याशयेनाह ॥ तदिति॥ तज्ज्ञानफलसतत्सत्यम वसतीनिवस्तुशाश्वतंच तास्वर्गादिकिंचिन्नतुसत्यंभगुरच ॥ भावाभावैराविर्भावतिरोभावैरुपारूढमाक्रा

मूढंचित्तचित्तमाद्य प्रबुद्धसत्वमुच्यते ॥ अप्रबुद्धाहिचित्तस्या सत्वस्यात्तुमहाधिय ॥ ३१ ॥ भूय प्रजायतेचित्तसत्वभूयोनजायते ॥ अप्रबुद्धस्यबंधोस्तिनप्रबुद्धस्यभूपते॥३२॥सत्ववानसिसजातोमहात्यागीस्थितोभवान्॥ अशेषेणत्वयाचित्तत्यक्तमधेतिविद्म्यहम् ॥ ३३ ॥ समस्तवासनोन्मुक्तोराजन्नद्यैवराजसे ॥ आकाशसाम्यमायातमन्येतवमुनेमन ॥ ३४ ॥ शमप्राप्तोसिपरमसिद्धं स्मसम स्थिति ॥ अर्याहिसमहात्याग सर्वंयत्तत्समुज्झितम् ॥ ३५ ॥ स्वर्गापवर्गवित्तादितपोदानफलान्यपि ॥ प्रबुद्धमेधयासाधोधियापरम बोधया ॥ ३६ ॥ तपोनामकियन्मात्रद्‌ दुःखक्षयकरंभवेत् ॥ क्षयातिशयनिर्मुक्तयत्सुखसमतामयम् ॥ ३७ ॥ तत्सत्तद्वस्तुतत्किंचिन्नतु स्वर्गादिभगुरम् ॥ भावाभावैरुपारूढस्थिताधिगतवेदनम् ॥ ३८ ॥ स्वर्गोनामकिमानद सोपिसंदेहसंस्थित ॥ अप्राप्तस्वात्मसंसिद्धे क्रियाकांडशुभोभवेत् ॥ ३९ ॥ येननासादितहेमरीतिंकिंसपरित्यजेत् ॥ चूडालादिसमामगाद्ध्वेवज्ञात्वसुखेनते ॥ ४० ॥ तत्किमत्र मनयेस्मिन्निमग्नस्त्वतपोमये॥ आश्रमादिविकल्पांशसाध्यस्याद्यकुकर्मण ॥ ४१ ॥

तपूर्वोत्तरकालयोरदृष्टस्थितमत्तमानमेवाधिगतवेदनमामदर्शनेतत्परमवित्यर्थः ॥ ३८ ॥ तुच्छबहुआयासलभ्यत्वस्वर्गादितुच्छसुखमज्ञानामेवबहुमननतस्वधियामित्याशयेना ह ॥ स्वर्गइति ॥ स्वर्गोनामेतिकिमानदस्तुच्छसुखम् ॥ किंरूपेइतिसमास ॥ अवर्जनीयधर्मकीर्तनावत्यापराधसहस्रनाश्यत्वात्संदेहसस्थित ॥ ३९ ॥ ज्ञानदौर्लभ्यादज्ञानी युक्तएवतुच्छसमोविपर्ययइत्याशयेनाह ॥ येनेति ॥ रीतिपित्तलम् ॥ नचतुज्ञानमाकुतुर्लभमभूत्तथापित्वयैवतपःक्लेशोनिमग्नइत्याह ॥ चूडालेति ॥ ४० ॥ आश्रमोमानम स्यामम ॥ आदिपदात्तत्साम्यवयस्तद्दुचितकर्माधिकारनिर्वाहकविशेषणान्तराणिच॥ तदभिमानतत्साधनचिंतादिविकल्पविक्षेपांशसहस्रसाध्यस्यमधकत्वात्फलतोपिकुत्सि तस्यकर्मण तदवधिनिकृच्छ्रचांद्रायणादिनपःक्लेशामयुरेअनर्थेत्वमग्नपर्यतकिमर्थनिमग्न. ॥ ४१ ॥

स्वर्गादिमहासुखहेतोस्तपस कथमनर्थत्वतत्राह ॥ आद्यंताविति ॥ भोसुमतेयतोस्यतपसआदिभागआचरणावस्थाअंतभाग फलक्षयावस्थाचदु खरूपावेव मध्येस्वर्गादिभो
गावस्थायामेवसुखस्मकिल ॥ तर्हिकिमयाकृतंतपोव्यर्थमेवनेत्याह ॥ यतइति ॥ यतस्तपसैवतेचित्तकषायपाकात्प्रतत्त्वबोधसमयोजातः अतोहेतो सर्वैतपोरूपावि
कल्पाशायस्मिन्नविकल्पेतत्त्वज्ञानेपरिणमतितत्फलेनैवफलवतोपिचभवति ॥ ४२ ॥ तत्रज्ञानेबद्धपद.स्थिरोभव ॥ विविदिषंतियज्ञेनदानेनतपसेत्यादिश्रुतेस्तत्फलेनैवतेतपस.
साफल्यमितिभाव ॥ज्ञानफलचिद्योमलाभेनसर्वमेवलब्धम् ॥ सर्वस्यजगतस्ततएवोद्भवस्थितिलयश्रुतेरित्याशयेनाह ॥ चिद्योम्नइति ॥ ४३ ॥ यद्यपिकार्यमिष्टमकार्यमनिष्टं
चसर्वमपिब्रह्मसमुद्रविदवएवतथापितुच्छत्वात्तत्सर्वंवध्यनिष्फलमेवातस्तत्त्यक्त्वापूर्णसमुद्रस्थानीयनिर्विशेषमेवसमाश्रयेत्याह ॥ इदमिति ॥ ४४ ॥ परमप्रेमास्पदत्वान्निरति
शयानदरूपस्यस्वस्यइष्टांतरप्रार्थनापेक्षयातादृशस्वलाभप्रार्थनमेववरमित्याशयेनाह ॥ इष्टमिति ॥ यथाऽलब्धदयितयास्त्रियालब्धव्यदयितप्रतिमेइष्टप्रार्थयस्वेत्यन्यत्प्रार्थ्य

आद्यंतावस्यसुमतेमध्यएवसुखंस्मभोः॥यतस्तेसमयोजातोयस्मिन्परिणमंतिच ॥४२॥ तपोरूपाविकल्पांशास्तत्रबद्धपदोभव ॥ चि
द्योम्नोनभसोत्यच्छात्सर्वेभावाःसमुत्थिताः ॥ ४३ ॥ तथैवपरिदृश्यंतेतत्रैवविलयंगताः ॥ इदंकार्यमिदंनेतिसंकल्पाब्रह्मबिंदवः ॥ ४४ ॥
वंध्यंशिखिध्वजत्यक्त्वापूर्णमेवसमाश्रय ॥ इष्टंमेप्रार्थयस्वेतियथैवप्रार्थ्यतेसखे ॥ ४५ ॥ स्त्रियातथैवसकथंदयितःप्रार्थ्यतेस्वयम् ॥
संकल्परचितानेतान्भावानापदभासुरान् ॥ ४६ ॥ गृह्णंतिनमहात्मानःप्राज्ञाजलरवीनिव ॥ स्वर्गमोक्षादिफलदंयत्किंचित्सर्वमेवतत्
॥ ४७ ॥ त्यक्त्वासमसमाभासोयोस्यसावेववैभव ॥ सत्त्वंसत्त्वेननाशेननास्यंहिविगतस्पृहः ॥ ४८ ॥ पदार्थौघमिमंगृह्णंस्तिष्ठास्पंदित
चित्तभूः ॥ अपरिस्पंदचित्तस्यसंसृतिर्नेहधावति ॥ ४९ ॥ पौरुषप्रभवासाधोविपत्तिर्हिमतौयथा ॥ यानियानीहदुःखानिप्रस्फुरंतिजग
त्रये ॥ ५० ॥ चेतश्चापलजान्येवतानितानिमहीपते ॥ स्थिरंशांतंगतस्पंदंयस्यचित्तमचापलम् ॥ सदैवसमहानंदीसाम्राज्यस्यसभाज
नम् ॥ ५१ ॥ अथचेतसितत्त्वज्ञस्पंदास्पंदौत्वमेकताम् ॥ नीत्वातिष्ठयथाकाममैक्यमागत्यशाश्वतम् ॥ ५२ ॥

नेतथैवस्वयदयितएवकथनप्रार्थ्यते तस्मिन्स्वाधीनतयालब्धेतदधीनलब्धव्यांतराणास्वतएवलाभादितिभावः ॥ ४५ ॥ अंगीकृत्यात्मातिरिक्तेष्टानापुरुषार्थत्वलब्धत्वादेवाप्रा
र्थनीयत्वमुक्तम् ॥ वस्तुतस्तुतेषातत्त्वज्ञदृशातुच्छत्वादग्राह्यत्वमेवेत्याह ॥ संकल्पेति ॥ आपदइवअभासुरानरमणीयान् ॥ ४६ ॥ जलरवीन्प्रतिबिंबानिव ॥ज्ञानलाभान
तरस्वर्गादिसाधनानीवापवर्गसाधनान्यपिहेयान्येवेत्याशयेनाह ॥ स्वर्गेति ॥ ४७ ॥ सर्वपदार्थेषुसदशःसत्वेनैवग्राह्य.असदशस्तुनित्यनष्टत्वेनैवग्राह्यश्चित्तचाचल्यंविनेत्याह.॥
सत्वमिति॥ ४८ ॥ अस्पंदितचित्तभूरित्युक्तेःप्रयोजनमाह ॥ अपरिस्पंदेति ॥ नधावतिनप्राप्नोति ॥ यथास्वाभाविकप्रवृत्तिलक्षणपुरुषापराधप्रभवाविपत्तिर्मतौविवेकज्ञानो
दयेसतिनप्राप्नोतितद्वदित्यर्थः ॥ ४९ ॥ ५० ॥ सम्यग्भग्नावरणतयाराजतइतिसम्राट्साक्षात्कृतआत्मातद्भावस्यभाजनमित्यर्थः ॥ ५१ ॥ स्पंदास्पंदौतत्साक्षिमात्रतादर्श
नेनैकतानीत्वासाक्षिणमपिब्रह्मात्मैक्यमागत्यप्राप्यभूमानंदभावेनयथाकामपूर्णकामतयातिष्ठेत्यर्थः ॥ ५२ ॥

शिखिध्वजउवाच॥ ॥ कथमैक्यविबोधात स्पन्दास्पन्दाविमावुभौ ॥ सर्वसंशयविच्छेदकारिन्नेतद्वदाशु मे॥५३॥ ॥कुम्भउवाच॥
एकंवस्तुजगत्सर्वंचिन्मात्रवारिवांबुधि ॥तदेवस्पंदतेधीभिःशुद्धवारीववीचिभिः॥५४॥ब्रह्मचिन्मात्रममलसत्वमित्यादिनामकम्॥
यद्भातंतदिदंमूढा पश्यत्यगजगत्तया॥५५॥चित्स्पंदएवसर्वस्वसर्गेतस्माद्विसत्तिः॥परिस्पंदोहिविंध्यादिशब्दस्यदसमपरम्॥५६॥
चित सएवचत्स्पंदत्वयास्पदश्चभावित ॥एकरूपतयानामतन्नेदममलंशिवम्॥५७॥सर्गश्चित्स्पंदमात्रात्मासम्यग्दृष्टौविलीयते॥
उदेत्यसम्यग्दृष्टीनांरज्ज्वांसर्पभ्रमोयथा॥५८॥सस्पंदाचित्तदभिधानि स्पंदात्वियमातता॥तुर्यातीतपदारूढावाचावक्तुनपार्यते॥५९॥
शास्त्रसज्जनसंपर्कसतताभ्यासयोगतः ॥कालेनामलतांयातेचेतसींदाविबोदिता॥६०॥एतत्केवलमाभातंस्वानुभूतिभिराततम्॥क
थ्यतस्वानुभूतंपुंस्त्वयस्वरूपमात्मना॥६१॥प्राप्तासिसारस्वमनादिमध्यमत्रैवतिष्ठस्वपदेनिविष्ट॥नोरूपनिर्भेदमहाचिदात्माजातोसि
माधोगवलुर्वीतशोक॥६२॥ ॥इत्यार्षेवा०वा०दे०मोक्षोपायेषु०निर्वाणप्रकरणेपू० चूडालोपाख्यानेशिखिध्वजबोधननामैका
धिकशततम सर्ग ॥१०१॥ ॥७॥ ॥७॥

नच्छ्रिनमाह ॥ सगइति ॥ यत स असम्यग्दृष्टीनाभास्याउदेति ॥ ५८ ॥ तदभिधासगाभिधा ॥ निर्यत्तानुतुर्यातीतपदारूढा ॥ ५९ ॥ कदातयोबिताभवतितदाह ॥ शास्त्रे
ति ॥ यथावस्तुविविमिरदापक्षपणामलतायामेनित्यसिद्धैवपर्यंकाउदितातद्वत् ॥ ६० ॥ यद्दिवाचावक्तुनपार्यतेर्तोहिकथत्वयामादृशोपुकथ्यतेतमाह ॥ एतदिति ॥ स्वमनुभू
तपेलयाविधेपृस्वानुभूतिभिर्व्यवस्वयंकथ्यतेलाचन्द्रस्यत्यथ ॥ ६१ ॥ त्वमपिस्वानुभूतिप्राप्तोस्येवतमन्दूषसास्थैर्यमात्मकुर्वित्याह ॥ प्राप्तोसीति ॥ भदकवहाद्रिरूपाणाम
भावाद्वरसदेहवनिर्भेद अतएवमहाश्चरात्माजातस्त्वबोधाधानुभूतोसितमएवपानशोकस्तमकोमोह मं शोक एकत्वमनुपश्यतदतिश्रुतेरितिभाव ॥ ६२ ॥ ॥ इतिश्री
वा०सिष्ठम०मोक्षपकाशनिर्वाण पू०एकोत्तरशततम सर्ग ॥ १०१ ॥ ॥७॥ ॥७॥ ॥७॥

आमन्त्र्यांतर्हितेकुंभेविस्मितस्यमहीपतेः ॥ चिरंविमृश्यविश्रांतिःसमाधाविहवर्ण्यते ॥ १ ॥ यथेदंसर्वमुत्थितमित्यध्यारोपेणयथाचप्रविलीयतइत्यपवादेनचसर्वंपूर्णंब्रह्मतत्त्वं तेमयाकथितम् ॥ १ ॥ गुरुशास्त्राभ्यांश्रुत्वास्वीयविचारेणमत्वाचसम्यग्बुद्ध्वासाक्षाद्दृष्टेआवरणभंगात्स्पष्टेपरेपदेकदाचित्समाधिप्राधान्येनकदाचिद्व्यवहारेणचयथेच्छसित थातिष्ठ ॥ २ ॥ स्वर्गमिंद्रसभाम् ॥ ३ ॥ ४ ॥ एषामदुपदिष्टैव ॥ ५ ॥ सप्रणामप्रतिवचनात्पूर्वमंतर्धानम् ॥ साध्वीभिर्भर्तृकृतनमस्कारस्याग्राह्यत्वात् ॥ ६ ॥ स्वप्नादिप्रतिभा नगतंधनादिवस्तु ॥ अतेजागरे ॥ ७ ॥ चित्रमाश्चर्यम् ॥ ८ ॥ चिरोदयसदाप्रभातशाश्वताभ्युदयवाब्रह्म ॥ ९ ॥ कालयुक्त्याभाग्योदयसमययोगेन ॥१०॥११॥१२॥ इयंसा

कुंभउवाच ॥ ॥इतितेकथितंसर्वंशिखिध्वजमहीपते ॥ यथेदमुत्थितंसर्वंयथाचप्रविलीयते ॥ १ ॥ एतच्छ्रुत्वाचबुद्ध्वाचमत्त्वाचमुनिना यक ॥ यथेच्छसितथातिष्ठदृष्टेस्पष्टेपरेपदे ॥ २ ॥ स्वर्गंगच्छाम्यहंपर्वकालेस्मिन्नारदोमुनिः ॥ ब्रह्मलोकात्समायातोभवत्यमरसंसदि ॥ ३ ॥ नमांपश्यतिचेत्तत्रतत्कोपमुपगच्छति ॥ नोद्वेजनीयाभव्येनगुरवोहिकदाचन ॥ ४ ॥ त्यक्तसंकल्पलेखेननकिंचिदभिवांछता ॥ त्वयासदैववस्तव्यंदृष्टिरेषैवपावनी ॥ ५ ॥ ॥श्रीवसिष्ठउवाच ॥ ॥इतियावत्प्रतिवचःपुष्पहस्तःशिखिध्वजः ॥ प्रणामायददात्येषताव दंतर्धिमाययौ ॥ ६ ॥ प्रतिभानगतंवस्तुयथैवांतेनदृश्यते ॥ नदृष्टवांस्तथाकुंभमग्रेराजाशिखिध्वजः ॥ ७ ॥ गतेकुंभेमहीपालःपरंविस्म यमाययौ ॥ तमेवाचिंतयंश्चित्रंचित्रार्पितइवाभवत् ॥ ८ ॥ इदंसंचिंतयामासचित्रंविलसितंविधेः ॥ यत्कुंभव्यपदेशेनबोधितोस्मिचिरो दयम् ॥ ९ ॥ क्वनारदसुतःकुंभःक्वाहंनामशिखिध्वजः ॥ केवलंकालयुक्त्यैवसोहंसंपरिबोधितः ॥ १० ॥ अहोनुसम्यक्कथितंदेवपुत्रेणयु क्तिमत् ॥ अहोनुसंप्रबुद्धोस्मिमोहनिद्राकुलश्चिरात् ॥ ११ ॥ क्वाहमासंविनिर्मग्नःक्रियाजालकुकर्दमे ॥ इदंकार्यमिदंनेतिमिथ्याविभ्रम चक्रके ॥ १२ ॥ अहोनुशीतलाशुद्धाशांतेयंपदवीनिजा ॥ रसायनोद्भवाकारासत्वंशीतयतीहमे ॥ १३ ॥ शाम्यामिपरिनिर्वामिसुख मासेचकेवलम् ॥ तृणाग्रमपिनेच्छामिसंस्थितोस्मियथास्थितम् ॥ १४ ॥ एवंसंचिंतयन्राजानूनंनिर्वासनाशयः ॥ शैलादिवसमुत्की र्णोमौनमेवावतस्थिवान् ॥ १५ ॥ तस्मिन्नेवततोमौनेनिःसंकल्पेनिराश्रये ॥ प्रतिष्ठांनिश्चलांप्राप्यसतस्थौगिरिशृंगवत् ॥ १६ ॥ सतत्र संशांतभयोऽचिरेणचिरेणविश्रांतमतिःसमात्मा ॥ चिरेणसंप्राप्तनिजामलात्मायोगेनसुष्वापततोदितात्मा ॥ १७ ॥ ॥ इ० वा० वा० दे० मो० नि० पू० चू० शिखिध्वजसमाधानंनामद्व्यधिकशततमःसर्गः ॥ १०२ ॥ ॥ ६१ ॥

क्षात्कृतात्मरूपासाम्राज्यपदवी ॥ सत्वनिर्वासनंम न ॥ १३ ॥ तेनैवस्वस्यपूर्णकामतामाह ॥ शाम्यामीति ॥ १४ ॥ शैलात्समुत्कीर्णःप्रतिमादिरिवमौनवागादिचेष्टारहितयथास्यात्तथासमाहितोवतस्थिवान् ॥ छादसत्वाल्लि ट्कसु ॥ १५ ॥ मौनेमुनिकर्मणिसमाधौ ॥१६॥ सराजातत्रसमाधौसप्राप्तनिजामलात्मासन्समात्मासमरसःसन्चिरेणविश्रांतमतिर्भूत्वाअचिरेणसद्यएवसशांतभयःसन्चि रंकालानुवृत्तेनयोगेनअदितात्माअखंडितस्वभावःसुष्वापसुषुप्तइवविशश्रामेत्यर्थः ॥ १७ ॥ ॥इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाण० पू० द्व्युत्तरशततमःसर्गः ॥ १०२ ॥

चूडालाया परगत्वाम्मद्देणपुनरागम ॥ यत्नावृत्थापनरीसलत्त्वालापध्ववर्ण्यते ॥ १ ॥ एवमुक्तरीत्याशिखिध्वजोराजानिर्विकल्पसमाधानात्काष्ठकुड्योपमस्थितिरभूदिति
शप ॥ चूडालोक्तवृत्तांतमितियावत् ॥ १ ॥ ततारपुत्रम ॥ २ ॥ देवपुत्राकृतिकुंभवेषम ॥ शिखिध्वजशरीरसत्पमाकारजपाह ॥ ३ ॥ स्वपकर्मराजकार्यप्रजानुरंजनमित्यर्थ ॥४॥
कुंभनारदवम ॥ ५ ॥ समुत्कार्णप्रतिमाकारनिर्मितद्रुमकाष्ठमिवनिश्चलम ॥ ६ ॥ अयराजा ॥ ७ ॥ इदानींप्रारब्धकर्मशेषकालेवेहत्यागंकिकिमर्थंकरोतिनकरोत्वित्या

श्रीवसिष्ठउवाच॥ ॥ निर्विकल्पसमाधानात्काष्ठकुड्योपमस्थिति ॥ एवशिखिध्वजोराजाचूडालामधुनाशृणु ॥ १ ॥ शिखिध्वजत
भत्तारकुंभवेषणतेनसा ॥ प्रयोध्यांतर्धिमागत्यततारतरसानभ ॥ २ ॥ देवपुत्राकृतिंत्यक्त्वाभिजहौमायाविनिर्मिताम् ॥ विदग्धमुग्धमा
कारंक्षणजग्राहसुंदरम् ॥ ३ ॥ नभसास्वपुरप्रापविवेशांतःपुरक्षणात् ॥ दृष्ट्वाथभूवलोकस्यनृपकर्मचकारच ॥ ४ ॥ वासरत्रितयेनाथ
पुनरधरमत्यसा ॥ यभूवकुंभोयोगेनशिखिध्वजवनययौ ॥५॥ तथातत्रैवतभूपमपश्यद्वनभूमिगा ॥ निर्विकल्पसमाधिस्थसमुत्कीर्ण
मिवद्रुमम् ॥६॥ अद्यानुखलुभोदिष्ट्याविश्रांतोयमिहात्मनि ॥ स्थित स्वस्य सम शांतइत्युवाचपुनःपुन ॥ ७॥ तदेनतावदेतस्माद्बोधया
मिपरात्पदात् ॥ इदानीमेवकिंदेहत्यागमेषकरोतिवै ॥८॥ किंचित्कालस्फुरत्वेपराज्येनविपिनेनवा ॥ममैवगमिष्यावस्त्यक्तदेहाविमौ
समौ ॥ ९ ॥ तस्यापदेशोविषम परिणामनगच्छति ॥ अनेनाभ्यासयोगेनतावदाबोधयाम्यहम् ॥ १० ॥ इतिसंचिंत्यचूडालासिंहनाद
चकारसा ॥ भूयोभूय प्रभोरग्रेवनेचरभयप्रदम् ॥ ११ ॥ नचचालशिलेवासौयदानादेनतेनस ॥ भूयोभूयःकृतेनापितदासातव्यचाल
यत् ॥ १२ ॥ चालित पातितोप्येषयदानबुबुधेनृप ॥ तदासचिंतयामासचूडालाकुंभरूपिणी ॥ १३ ॥ अहोपरिणत साधु स्वपदेभग
वानयम् ॥ तदेनहिकयायुक्त्यासांप्रतबोधयाम्यहम् ॥ १४ ॥ अथवैनंमहात्मानंकिमर्थंबोधयाम्यहम् ॥ विदेहबोधमासाद्यतिष्ठत्वेषय
थासुखम् ॥ १५ ॥ अहमप्यगनादेहमिमत्यक्त्वापरपदम् ॥ अपुनर्जननायैवगच्छामीहहिकिंसमम् ॥ १६ ॥

शय ॥ ८ ॥ विपिनभोग्यकमक्षयपर्यंतविपिनेनवा ॥ समतुल्यकालमसमौतुल्यस्वभावौगमिष्याव ॥ कैवल्यमितिशेष ॥ ९ ॥ उपदेशःप्राक्प्रयाकृत परिणामसप्तमभू
मिकावस्थितिपर्यंतपारंवाकनगच्छतिदइदानीमववेहस्यामे ॥ तथापजीवन्मुक्तिसुखानुभवायमप्ययमबोध्यइतिभाव ॥ १० ॥ प्रभाग्रेतु ॥ ११ ॥ पाणिसपेषणाचालयत्
॥ १२ ॥ १३ ॥ सप्तमभूमिकानुप्रवेशपर्यंतपरिणत ॥ अहोशब्दाश्चर्ये ॥ तथापितस्योपदेशोविषम परिणामनगच्छतीतिमदीयसभावनावद्यैवेतिभाव ॥ १४ ॥ अतएवाह ॥
अयवेति ॥ विदेहमिहनु ॥ १५ ॥ समसंहंगच्छामि इहजीवनेकिमधिकसुखमितिशेष ॥ १६ ॥

महामतिरित्यनेनावश्यभोक्तव्यतदीयप्रारब्धकर्मशेषमपिसास्वमत्यादृष्टापुनःसंचिंतयामासेतिसूचनाय ॥ १७ ॥ सत्वंनिर्वासनंमनस्तस्यसंस्कारलेशात्मनाशेषोयदिहृदवरे प्रारब्धावशेषितमायालेशोपहितेहार्देब्रह्मण्यस्ति ॥ १८ ॥ कालेनतदुद्भवसमयेन ॥ यथावसनारंभेद्रुमेमूलकोशेमूलप्रदेशेयोभौमोरसस्तस्मिन्सूक्ष्मभावेनालीनभाविपुष्पजालमिवसत्वशेषोयद्यस्तीतिपूर्वेणान्वयः ॥ १९ ॥ तर्हिमत्प्रबोधितोयजीवन्मुक्तःसन्नेवमहमिवविहरन्भवत्येव ॥ अथयदिसत्वशेषस्यापिवाधान्मुक्तोभवतितत्तर्हिहमपिसममनेनसाकमेवमुक्तिंगच्छामि॥ २०॥ स्पर्शेनदेहोष्मलिंगेनवक्ष्यमाणलिंगेनपतिजीवतीतिसाशंकमालोक्यसबोधहेतूदयनेसत्वशेषंव्यबुध्यत अस्यहृदिसत्वशेषोस्त्येवेत्यवाच

इतिसंचिंत्यदेहंस्वंत्यक्तुमभ्युद्यतासती॥ पुनःसंचिंतयामासचूडालासामहामतिः॥ १७॥ आलोकयामिचैतावदेनंदहंमहीपतेः॥ यद्यस्यसत्त्वशेषोस्तिबोधबीजंहृदंतरे॥ १८॥ तत्कालेनैपभगवान्संप्रबोधमुपैष्यति॥ मूलकोशरसालीनंपुष्पजालमिवद्रुमे॥ १९॥ तदेवंविहरन्जीवन्मुक्तएवभवत्यलम्॥ मुक्तोभवत्यथयदिमन्येगच्छामितत्समम्॥ २०॥ इतिसंचिंत्यचूडालास्पर्शनेननयेनच ॥ पतिमालोक्यसाशंकमुवाचवरवर्णिनी॥ २१॥ अस्त्येवसत्वशेषोस्यहृदिसंबोधकारणम्॥ संबोधहेतूदयनंसत्वशेषंव्यबुध्यत॥ २२॥ ॥ श्रीरामउवाच॥ ॥ भृशंसंशांतचित्तस्यकाष्ठलोष्टसमस्थितेः॥ सत्वशेषःकथंब्रह्मन्ज्ञायतेध्यानशालिनः॥ २३॥ ॥ श्रीवसिष्ठउवाच॥ प्रबोधकारणंयस्यदुर्लक्ष्याणुवपुर्हृदि॥ विद्यतेसत्वशेषोंतर्बीजेपुष्पफलंयथा॥ २४॥ चित्तस्पंदवियुक्तस्यतस्यास्पंदितसंचितः॥ द्वित्वैकत्वविहीनस्यसमस्याचलसंस्थितेः॥ २५॥ कायःममसमाभोगानग्लायतिनहृष्यति॥ नास्तमेतिनचोदेतिसममेवावतिष्ठते ॥ २६ ॥ द्वित्वैकत्वादियुक्तस्ययस्यप्रस्पंदतेमनः॥ तस्यदेहोन्यतामेतिनास्पंदस्यकदाचन॥ २७॥ चित्तस्पंदोहिसर्वेषांकारणंजगतःस्थितेः॥ रामभावविकाराणांकुसुमानांयथामधुः॥ २८॥ अस्मिन्प्रयास्यतोदेहेचेतसोहिमुहुर्मुहुः ॥ हर्षःकोपोनसंमोहोवशमेतिरघूद्वह॥ २९॥

चेतिपरेणसहान्वयः ॥ २१ ॥ २२ ॥ स्पर्शनेननयेनचेतियदुक्तत्तत्रनयशब्दार्थजिज्ञासूरामःपृच्छति ॥ भृशमिति ॥ २३ ॥ देहेवृद्धिविपरिणामापक्षयादिविकारानुदयःसत्वशेषेलिंगमित्युत्तरवक्तुर्लिंग्यमनुवदति ॥ प्रबोधेतिद्वाभ्याम ॥ २४ ॥ द्वित्वैकत्वविहीनस्यनिर्विकल्पस्य ॥ २५ ॥ ग्लायतिग्लानिगच्छति ॥२६ ॥ अन्यस्यतुतद्वैपरीत्यमित्याह ॥ द्वित्वैकत्वादीति ॥ २७ ॥ तत्कुतस्तत्राह ॥ चित्तस्पंदइति ॥ जगतःस्थितेर्व्यवहारस्यहेतुभूतानासर्वेषांभावविकाराणांकारणम् ॥ २८ ॥ अतएवपुनर्जन्मबीजसत्वेस्माद्देहाद्देहांतरंप्रयास्यतश्चेतसोमुहुर्मुहुर्यत्नेननिगृह्यमाणोपिहर्षःकोपःसमोहश्चनवशमेतिननिग्रहीतुशक्यते ॥ तदेवपुनर्जन्मावश्यभावेलिंगमित्यर्थः ॥ २९ ॥

चित्तेइत्यादिविकारशोकानुकार्यपिविकारानिवर्तनइत्याह ॥ चित्तइति ॥ सत्त्वेननिर्वासनचित्तेनवर्जित अप्रतिबन्धनेनत्यक्त ॥ तथापिचित्तेनाहृतयापरिग्रहएवदेहेइत्याह विकारहेतुरितिभाव ॥ १ ॥ देहजरावलिनादिरोगोपरामादिरापश्चनदृश्यत ॥ ३१ ॥ कियत्कालजीवन्मुक्तेःसत्त्वमुपलभ्यतइतिचेत्प्रारब्धशेषक्षयेणतत्प्रशमपर्यन्तमित्याह ॥ सत्त्व ॥ सत्त्वनिभासिकत्वस्य मायिमूल्यम् ॥ कालाचारत्वापक्षयकालान् ॥ ३२ ॥ सत्त्वस्यापिक्षयेनुमतोदेहोविलीयतइत्याह ॥ देहेइति ॥ मोचित्तमित्यप्रमरणा भिप्रायम ॥ नापक्षस्वभिन्नमरणाभिप्रायम् ॥ पक्वत्वेनमरणन ॥ ३३ ॥ शिखिध्वजदेहेनुभवनमानितयादर्शनात्याह ॥ शिखिध्वजस्येति ॥ तेजसाऊष्मणा ॥ ३४ ॥

चित्तप्रशममायातेशायोय सत्त्ववर्जित ॥ याघतेनापरस्येवतस्यभावविकारम् ॥३०॥ वीच्यादिनयथोदेतिसमायाजलसंतते ॥तथा नदृश्यतेदेहेप ममायामन्यसतते ॥३१॥ सत्त्वस्यानुपलम्भोस्तिनतस्योपशमाहते ॥ यावद्धातिसमतत्त्वकालाच्छाम्यतिकेवलम् ॥ ३२॥ देहयस्मिंस्तुनोचित्तनापिसत्त्वचविद्यते ॥ सतापेहिमवद्धामपक्वत्वेनविलीयते ॥ ३३॥ शिखिध्वजस्यदेहोसौनिश्चित्तस्तेजसार्जित ॥स त्वांगेनचसयुक्तस्तेननग्लानिभाजनम् ॥३४॥ ततयाभूतमालोक्यभर्तुर्देहवरांगना ॥ अनुज्झितवतीदेहचिंतयामाससत्वरम् ॥३५॥ चित्तत्वसवगशुद्धप्रविम्याधाधयाम्यहम् ॥ भविष्यद्बोधनक्षातमयतत्रदिसास्थिता ॥ ३६ ॥ नबोधयामियद्येनचिरात्तद्बुध्यतेस्वयम् ॥ विमेकवावतिष्ठइमित्येवबोधयाम्यहम् ॥३७॥ इतिसंचिंत्यचूडालादेहकरणपंजरम् ॥संत्यज्यप्रापचित्तत्वंस्थितिमापतवर्जिते ॥३८॥ तत्रसाचेतनास्पदंत्वासत्त्ववत प्रज्ञा ॥ स्वविवेशपुनर्देहस्वनीडमिवपक्षिणी ॥ ३९ ॥ कुब्जाकृतिरथोत्थायनिविशाकुसुमस्थले ॥ सा मगातुप्रवृत्तासाभ्रमरीवदनि स्वना ॥४०॥ तसामस्वनमाकर्ण्यचित्सत्त्वगुणशालिनी ॥ बुबुधेभूपतेर्देहवसतइवपद्मिनी ॥ ४१ ॥ दृश विकासयामासततोदाकइवाब्जिनीम् ॥ गृहीतसत्त्वसंपत्ति शिखिध्वजमहीपति ॥ ४२॥

प्रथमसमाधायपत्नीनमनुत्थापत्त ॥ ततपत्यादिना ॥ स्वदेहमनुज्झितवतीसती ॥ ३५ ॥ चित्तत्वप्रागुक्तलक्षणब्रह्मतदायकायप्रवेशेनप्रविश्यतमतत्त्वभावेसंस्थितासतीचिरका लनभविष्यद्बोधनकालमप्रतिबस्बोधयामीति ॥ ३६ ॥ ननुचिरणसत्वयमेवबुध्यतांकिंबोधनत्वरयातमाह ॥ नेति ॥ राज्यपालनेनियम्काइनभर्तृसमाधिस्यातुराक्ता भ्यु न्विनापस्थानिनमकांक्ष्यस्यस्थानुशकामीतिभाव ॥ ३७ ॥ स्वदेहसंत्यज्यतदेहप्रविश्यतदीयेहादिब्रह्मजक्षणेचित्तस्वेस्थितिमापेत्यथ ॥ ३८ ॥ तपनिर्विकल्पसमाधिना क्षीरादकवदकरसीभूतायाभ्ननायात्सर्वीयचित्तमात्रसवलितबुद्ध पृथग्भवनानुकूलस्पन्दम ॥ ३९ ॥ ४० ॥ चित्सुचित्तमासस्त्वचितराजबुद्धि शिखिध्वजादभ्यासस्कारो द्वापेनमानसापादृढत्वाभ्यासाबुबुधे ॥ ४१ ॥ तांसमाधिनिमीलिताम् ॥ ४२ ॥

गायनमित्यशित्यात्वाभावश्छांदस' ॥ परेण दिव्येन वपुषा युक्तमपरं सामवेदमिवेत्युत्प्रेक्षा ॥ ४३ ॥ कुसुमं पुष्पांजलिम् ॥ अनेमतपःप्रभावात्याक्संचितपुण्याणामम्लानतागम्य ते ॥ ४४ ॥ दिष्ट्यास्वभाग्योदयेनउदिता पुनर्दर्शनाभ्युदयफलस्मृतिगोचरतांगताः ॥ अथवाकिमद्भाग्यचिंतया महांतःस्वतएवपरानुग्रहोद्यताइत्याशयेनाह ॥ केनामेति ॥ ४५ ॥ मदुक्तकारणनचेदिहागमनेद्वितीयकिंकारणंभवेत्संभावितंतद्ब्रूहीत्यर्थः ॥ ४६ ॥ त्वयैवसमंसाकम् ॥ स्थानत्वामेवस्मरदितियावत् ॥ ४७ ॥ अतएवरम्येपिस्वर्गेसा

अपश्यत्कुंभमग्रस्थंसामगायनतत्परम् ॥ परेणवपुषायुक्तंसामवेदमिवापरम् ॥ ४३ ॥ अहोवतवयंधन्याःपुनःप्राप्तोमुनिःस्वतः ॥ इत्येवोदाहरन्राजाकुंभायकुसुमंददौ ॥ ४४ ॥ दिष्ट्योदिताःस्मोभगवंस्तवचेतसिपावने ॥ केनामवामहासत्वाःप्रसादेष्वंगनोस्थिताः ॥ ४५ ॥ अस्मत्पवित्रीकरणमेवागमनकारणम् ॥ नचेत्किंचागमेब्रूहिद्वितीयंकारणंभवेत् ॥ ४६ ॥ ॥ कुंभउवाच ॥ ॥ यतःप्रभृतियातोस्मित्वत्सकाशादनिंदितः ॥ ततःप्रभृतिचेतोमेत्वयैवेहसमंस्थितम् ॥ ४७ ॥ रम्येस्वर्गेनतिष्ठामिसमीपेतवसांप्रतम् ॥ अभीष्टमुद्यदेवांगरम्याणांतत्पुरःस्थितम् ॥ ४८ ॥ त्वादृशोबंधुराप्तश्चसुहृन्मित्रंतथासखा ॥ विश्वास्योवापिशिष्यश्चमन्येजगतिनास्तिमे ॥ ४९ ॥ ॥ शिखिध्वजउवाच ॥ अहोनुफलितंपुण्यपादपैर्नःकुलाचले ॥ यस्माद्भवानसंगोपिवांछत्यस्मत्समागमम् ॥ ५० ॥ इदंवनमिमेवृक्षाभृत्योयमहमादृतः ॥ रोचतेतेनचेत्स्वर्गस्तदिहस्थीयतांप्रभो ॥ ५१ ॥ भवद्वितीर्णयायोगयुक्त्याविश्रांतवानहम् ॥ यथासाधोतथामन्येस्वर्गेविश्रमणंकुतः ॥ ५२ ॥ तामेवसंस्थितिंस्वच्छामवलंब्यप्रकाशिनीम् ॥ विहरेहयथाकामंस्वर्गेभूमितलेतथा ॥ ५३ ॥ ॥ कुंभउवाच ॥ ॥ परेपदेमहानदेकच्चिद्विश्रांतवानसि ॥ इदंभेदमयंदुःखंकच्चित्संत्यक्तवानसि ॥ ५४ ॥ कच्चिदापातरम्येभ्यःसंकल्पेभ्योरतिर्भृशम् ॥ निर्मूलतांगताराजन्भोगनीरसमेवते ॥ ५५ ॥ हेयादेयदशातीतंशांतंशमसमस्थिति ॥ यथाप्राप्तेष्वनुद्वेगंकच्चित्तवमनःस्थितम् ॥ ५६ ॥ ॥ शिखिध्वजउवाच ॥ ॥ त्वत्प्रसादेनभगवन्दृष्टादृश्यातिगागतिः ॥ प्राप्तःसंसारसीमांतोलब्धोलब्धव्यनिश्चयः ॥ ५७ ॥ चिरादतिचिरेणैवविश्रांतोस्मिनिरामयः ॥ लब्धंलब्धव्यमखिलंतमःसंश्चिरसंस्थितः ॥ ५८ ॥ नोपदेष्टव्यमस्माकंकिंचिदप्युपयुज्यते ॥ सर्वत्रैवातितृप्तोस्मिसंस्थितोस्मिगतज्वरः ॥ ५९ ॥

प्रतनतिष्ठामिकिंतुतवसमीपेतिष्ठामि ॥ हेअंगयतोबहूनामपिरम्याणांमध्येचित्तस्ययदेवाभीष्टंभवतितत्उद्यत्उद्योगप्राप्यमेवसत्पुरःस्थितंभवतिनोद्योगंविनेतित्वद्दर्शनोद्योगवशादेवममागमनमित्यर्थ' ॥ ४८ ॥ मयिकोवातेप्रीतिहेतुरतिशयस्तत्राह ॥ त्वादृशइति ॥ ४९ ॥ कुलाचलेअस्मिन्मदरे ॥ ५० ॥ मत्प्रीत्यातेस्वर्गोनरोचतेचेत्तत्तर्हिइहमत्सन्निधौ ॥ ५१ ॥ ममापित्वद्वितीर्णसमाधिसुखतृप्तस्यस्वर्गेवांछानास्तीत्याह ॥ भवद्वितीर्णयेति ॥ वितीर्णयादत्तया ॥ ५२ ॥ तांमत्समुपदिष्टामेवभूमानंदसंस्थितिमवलंब्य ॥ प्रकाशिनींस्वप्रकाशाम् ॥ ५३ ॥ ५४ ॥ ५५ ॥ शमेनसमस्थिति ॥ ५६ ॥ ५७ ॥ चिरादद्यकालोत्तरम् ॥ अतिचिरेणदिनत्रयपर्यंतम् ॥ ५८ ॥ ५९ ॥

अथात्मनामभिरिशाप ॥ तथामसत्यनिशासममन स्वस्यात्मनएवपरत्वमाश्रितम ॥ ६० ॥ यदित्वरम्यत्किंचनेनधास्तितर्हित्वकीदृशोवशिष्टस्तमाह ॥ नि सस्वेतिरिति ॥ स्पष्ट म ॥ ६१ ॥ ॥ इतिश्रीवासिष्ठ तात्पर्यप्रकाशेनि०प्र०पू त्र्यधिकशततम सर्ग ॥ १०३ ॥ ॥ ५ ॥ ॥ कुंभस्यरममोराज्ञासभोगेच्छाभवण्यते ॥ स्वगापदशात्पूर्या नविपण्णपुनरागम ॥ १ ॥ इत्युक्तप्रकाराभिरात्मनीत्यध्यात्मविचित्राभि कथाभि परस्परसंवदनावितिशेष ॥ १ ॥ सरसानिस्निग्धानिसारसानिपद्मानिपक्षिमिथुनानिचय स्मिन् नरनभानस्तापिनि पस्मूलादिनाअवनरक्षकथ प्रसिद्धएवेदनवनेचनेश्वतिशेष ॥ २ ॥ तेनजीवन्मुक्तप्रसिद्धेनाचारेण ॥ वनेमहारण्ये ॥ काननवीथिषुअवांतरवनप

ज्ञातमज्ञातमप्राप्तत्यक्तत्यक्तव्यमाश्रितम् ॥ तत्त्वपरत्वसर्वमेस्वस्यैवास्तिनकिंचन ॥ ६० ॥ नि संस्थतिर्विगतमोहभयोविरागोनित्यो दितममममाशयसवसौम्य ॥ सवात्मक सकलसंकलनावियुक्तआकाशकोशविशदस्सममास्थितोस्मि ॥ ६१ ॥ ॥ इत्यार्पेवा० वा०द०मा०नि०पू०चू०कुंभपुनरागमननामत्र्यधिकशततम सर्ग ॥ १०३ ॥ ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इत्य ध्यात्मविचित्राभि कथाभिस्तौपरस्परम् ॥ आसातेवेधवेत्तारौमुहूर्तंत्रितयवन ॥ १ ॥ ततउत्थायकस्मिंश्चित्सानौसरससारसे ॥ मरोव रेवनेचेवविहृतौनदनेवने ॥ २ ॥ तनाचारेणताभिश्चकथाभिस्तौवनेतत ॥ नीतवतौदिनान्यष्टौतासुकाननवीथिषु ॥ ३ ॥ ॥ अथकुंभ उवाचान्यद्दनयावांगिराविति ॥ तदोमितिनृपोमत्वातावुत्तौप्रविचेरतु ॥ ४ ॥ वनान्यनेकरूपाणिजंगलानितटानिच ॥ सरांसिगुल्मजा लानिशृंगाणिगहनानिच ॥ ५ ॥ नदीदेशांस्तथाग्रामान्नगराणिवनानिच ॥ मंजुघोषान्गिरीन्कुंजांस्तीर्थान्यायतनानिच ॥ ६ ॥ सममे वममदेहासमवेतौस्थितावुभौ ॥ समसत्वौसमोत्साहौर्गसतौतस्युतु सदा ॥ ७ ॥ आनर्चतु पितृन्देवान्बुभुजातेचराघव ॥ समंतमेच मिनचसमपुद्दायभृवतु ॥ ८ ॥ तमालवनखंडेषुमंदारगहनेषुच ॥ दंपतीस्निग्धहृदयौसुहृदौतौविरेजतु ॥ ९ ॥ इदंगेहमिदनेतिविकल्प पटनामन ॥ नजहारतयोरामवात्येवविधुधाचलम् ॥ १० ॥ विचेरतुस्तौसुहृदौक्वचिद्धूलिविधूसरौ ॥ क्वचिच्चंदनदिग्धांगौक्वचिद्ध स्मानुरंजितौ ॥ ११ ॥ क्वचिद्दिव्यांबरधरौचित्रांबरधरौक्वचित् ॥ क्वचित्पल्लवसंछन्नौक्वचित्कुसुममंडितौ ॥ १२ ॥

निःभरच ॥ मनरिनाटचमपिनकथंचासइत्यनिकनामुच्यत ॥ ३ ॥ ओमित्यभिमती ॥ नृपस्येवकुंभस्याप्यर्थसिद्धावभुनास्यस्वस्पुभयकतृकचरितसमानकमूकतामाश्रित्यमत्वे विप्रामन्त्यपनिर्देश ॥ ४ ॥ ५ ॥ ६ ॥ समवर्तासमुदितौसतौचित्तस्यापिसममेवस्थितौ शसतौपरस्परानुभवकथयमौ ॥ ७ ॥ सिक्तमलादेशीतलप्रदेशेषेतिपाठम् ॥ ८ ॥ ९ ॥ भनिमनस्थितिलक्षणमाह ॥ इदमिति ॥ विकल्पकल्पनातयामनानजहार ॥ १० ॥ प्रियाप्रियविकल्पोपितयोर्नाभूदित्याह ॥ विचेरतुरित्यादिना ॥ ११ ॥ १२ ॥

१ आद्यानामत्यपिकाचत्पाठ

सत्वेननिर्वासनचित्तेनोदात्ततयाउत्कृष्टतया ॥ १३ ॥ अथकेवलमित्रभावेनपरस्परोपभोजकप्रारब्धभोगोत्तरकालदंपतिभावोपभोजकप्रारब्धोद्भवकाले ॥ १४ ॥ कामेन अज्ञधर्मेणरागेणनवंचिता ॥ १५ ॥ यथाप्राप्तभोगप्रतिअतिष्ठतांअनिवृत्तगतीनाम् ॥ एकस्याभोगनिवृत्तावेवाग्रहोनिर्बंधस्तदात्मिकायावृत्तिः सामूढतैव ॥ १६ ॥ अधर्मरोग श्रमादिहेतुभ्योभोगेभ्योलोकत्रयहायनिवर्त्तितव्यमेवअत्रनुनतस्मक्तिरित्याशयेनाह ॥ निजइति ॥ एवंसर्वसामग्रीसत्वेपियास्वभर्त्तारंनकामवतीसाअजीवन्मुक्ताचेद्भर्त्रुपभो

दिनैःकतिपयैरेवसमचित्ततयातया ॥ सत्वोदात्ततयाचैवराजाकुंभवदाबभौ ॥ १३ ॥ अथतंसुरगर्भाभंचूडालासाशिखिध्वजम् ॥ दृष्ट्वाशोभामुपगतंचिंतयामासमानिनी ॥ १४ ॥ अयंपतिरदीनात्मारम्याश्चवनभूमयः ॥ इयंस्थितिरनायासायानकामेनवंचिता ॥ १५ ॥ जीवन्मुक्तधियांभोगंयथाप्राप्तमतिष्ठताम् ॥ एकाग्रहात्मिकातुच्छामूढतैवोदिताभवेत् ॥ १६ ॥ निजःपतिरुदारात्मानिराधिश्चनवंवयः ॥ गृहाणिपुष्पजालानिसाहतायानकामिनी ॥ १७ ॥ वनपुष्पलतागेहेस्वायत्तेभर्तरिप्रिया ॥ रमतेयाननिर्दुःखासाहतैवदुरंगना ॥ १८ ॥ रम्यंविवाहितंकांतंपतिमासाद्यनिर्जने ॥ स्त्रीसतीयानरमतेनांधिगस्तुदुरंगनाम् ॥ १९ ॥ समुज्झतायथाप्राप्तमपिवेद्यविदासदा ॥ अनिंद्यंसमुदारार्थंकिंतज्ज्ञेनकृतंभवेत् ॥ २० ॥ तत्किंचिद्रचयाम्याशुप्रपंचंप्रेक्षयावने ॥ येनायंभूपतिर्भर्त्तारमतेमयिमानदः ॥ २१ ॥ इतिसंचिंत्यचूडालाकुंभवेषधरापतिम् ॥ प्राहकाननगुल्मस्थाकोकिलंकोकिलायथा ॥ २२ ॥ ॥ कुंभउवाच ॥ ॥ चैत्रमासस्यशुक्लोयंप्रतिपद्दिवसोमहान् ॥ अद्यास्थानंमहारंभंस्वर्गेभवतिवैहरेः ॥ २३ ॥ सन्निधानंमयातत्रकर्तव्यंपितुरग्रतः ॥ यथास्थिताहिनियतिर्नसंत्याज्याकदाचन ॥ २४ ॥ प्रतिपालयितव्यंमेत्वयेहचवनावनौ ॥ क्रीडतानवपुष्पायांसमुद्वेगमगच्छता ॥ २५ ॥ आगच्छामिदिनांतेद्यनिर्विकल्पंनभस्तलात् ॥ सर्गादतितरामेवत्वत्संगोममतुष्टये ॥ २६ ॥ इत्युक्त्वामंजरींकुंभोददौमित्रायकौसुमीम् ॥ प्रीतयेस्वामिवप्रीतिंकांतांनंदनवृक्षजाम् ॥ २७ ॥

गविघातपापेनहता जीवन्मुक्ताचेल्लोकसमहभागप्रयुक्तनिंदादिनाहतेत्यर्थः ॥ १७ ॥ उक्तमेवस्पष्टमाह ॥ वनेति ॥ १८ ॥ १९ ॥ अनिंद्यस्वउदारार्थंभोगंसमुज्झताकिंकिमधिकफलंकृतभवेत् ॥ नकिंचिदित्यर्थः ॥ २० ॥ प्रेक्षयास्वप्रज्ञया ॥ मयिरमतेरतिसुखलभते ॥ २१ ॥ २२ ॥ आस्थानदेवर्षिसभामेलनम् ॥ हरेरिंद्रस्य ॥ २३ ॥ पितुर्नारदस्य ॥ २४ ॥ प्रतिपालयितव्यमेआगमनमासायंप्रतीक्षितव्यम ॥ २५ ॥ निर्विकल्पआगमनपाक्षिकत्वरहितंनियतमितियावत् ॥ २६ ॥ कातामनोहरा नंदनवृक्ष.कल्पतरुस्तज्जांमंजरीम ॥ २७ ॥

शरन्मुखपयोदोनिजलमपलहृत् ॥ २८ ॥ घनवातेनविसारिप्रसरणशीलपुष्पांजलिम् ॥ पदसंस्कारपक्षेनपुंसकलिंगसर्वनामेतिभागेबप्रवृत्तमतरगनपुंसकलिंगपविशेषसंबधे पिननिवर्त्तते ॥ तथाचाचार्त्तमहाभाष्येशक्यचानेनश्वमांसादिभिरपिक्षुत्प्रतिहन्तुमनियमः क्रियतेपथपथनस्यादकृत्याद्गतीति ॥ हिमकालेभवोहैम ॥२९॥ आदर्शनदृष्टिप्रसर याम्यदेशावधि ॥ अमंमघम ॥ ३० ॥ स्वभूशालारूपम् ॥ आययौआप ॥ ३१ ॥ स्फुरत्पताकमतएवमंजरित संजातमंजरीकआकार संस्थानयस्यतथाविधकल्पवृक्षोप मम ॥ ३२ ॥ ३३ ॥ यथावृक्षात्फलपुष्पव्रापततितद्वत् ॥ ३४ ॥ तस्यागृहसन्निधौमुखंश्यामघुतिचकार ॥ श्यामायौवनमध्यस्थाचूडाला ॥ ३५॥ आदृत सादर ॥३६॥ वि

आगंतन्यत्वयाशीघ्रमेववदतिभूपतौ ॥ पुप्लुवेयवनाद्व्योमशरन्मुखपयोदवत् ॥ २८ ॥ पुष्पांजलिंजहौव्योमव्रजन्कुसुमदामजम् ॥ विसारिवनवातनहिमंहैमइवांबुद ॥२९॥ शिखिध्वजोव्रजंतनददर्शाऽऽदर्शनंनदा ॥ उन्निद्रोऽद्रययायद्दींधीमद्वीतिर्हिकुस्त्यजा ॥३०॥ शिखिध्वजदृगामतेव्योम्निकुंभवपुर्जहौ ॥ शांतावर्त्तेववारिश्रीर्मुग्धास्वरूपमाययौ ॥ ३१ ॥ प्रापमंजरिताकारकल्पवृक्षोपमपुरम् ॥ स्फुरत्पताकमात्मीयस्वर्गंरम्यदिव पथा ॥३२॥ अत पुरमदृश्यैवविवेशललनाकुलम् ॥ मधुमासमहालक्ष्मीलसद्वनमिवद्रुमम् ॥३३॥ राजकार्याणिसर्वाणितत्रसपाद्यसत्वरम् ॥ शिखिध्वजस्यपुरत पपातफलपुष्पवत् ॥ ३४ ॥ तत्रकोलद्युतिमुखंचकाराखिन्नमानसा ॥ इक्षुसनाद्दारमिवश्यामाखिन्नमिवांबुजम् ॥ ३५ ॥ तंदृष्ट्वाताद्दशाकारसमुत्तस्थौशिखिध्वज ॥ बभूवखिन्नचेताश्चसमुवाचेदमादृत ॥ ३६ ॥ देवपुत्रनमस्तेस्तुविमनाइवलक्ष्यसे ॥ कुंभस्त्वत्यजसरंभमिदमासनमास्यताम् ॥ ३७॥ सतोविदितवेद्यायेतेहिहर्षविषादजाम ॥ नाश्रयतिस्थितिंस्वस्था पद्माइवजलार्द्रताम् ॥ ३८॥ ॥श्रीवसिष्ठउवाच॥ ॥तेनक्ष्मापतिनेत्युक्तेकुंभआहासनेविशन् ॥ गिरा विषण्णयाशीर्णवंशस्वनसमानया ॥ ३९ ॥ यावद्देहमवस्थासुसमचित्ततयैवये ॥ कर्मेंद्रियैर्नतिष्ठतिनतेतत्त्वविद शठा ॥ ४० ॥

मना खिन्नमनाइवलक्ष्यसे ॥ मस्वम्लानिर्लिंगेमेत्यर्थ ॥ सरंभलक्षणयामनस्तापम ॥ ३७ ॥ ३८ ॥ बाष्परुद्धकंठत्वाच्छीर्णवंशस्वनसमानया ॥ ३९ ॥ विदितवेद्याः पुरुषा हर्षविषादजांस्थितिंनाश्रयंतीतियदुक्तंतथकर्मविशेषविषयंकुंभउवाच ॥ यावद्देहमिति ॥ ज्ञानप्रयुक्तसमचित्ततानांतरीयकर्मेंद्रियचेष्टानिरासरेवज्ञानिनोलक्षणमितित च्छून्यादमनस्कविदोनसमचित्तत्वपिप्रारब्धकर्मप्रयुक्तकर्मेंद्रियचेष्टोद्भवमाप्यपराधेनेत्याशय ॥ ४ ॥

1 म्लानपुष्पांजलिकपिपाठ

वालतयासमचित्तत्वाभावेनैवहठाद्गृहीताभ्यस्ततत्तत्कर्मेंद्रियनिग्रहावस्थाभ्यःपलायंतेच्यवंतेअज्ञानस्वभावादेवेतिवैषम्यमित्यर्थः ॥४१॥
अतत्त्वज्ञेषुतुनतथेत्याह ॥ येहीति॥ बालतयासमचित्तत्वाभावेनैवहठाद्गृहीताभ्यस्ततत्तत्कर्मेंद्रियनिग्रहावस्थाभ्यःपलायंतेच्यवंतेअज्ञानस्वभावादेवेतिवैषम्यमित्यर्थः ॥ दशाकर्मेंद्रियहर्षग्लान्यादिदशाभवत्येवेतिशेषः ॥ तदे
प्रारब्धप्रयुक्तानुकर्मेंद्रियहर्षग्लानिदशायावद्देहभाविनीज्ञान्यज्ञानिनोस्तुल्यैवेत्याशयेनसदृष्टांतमाह ॥ यावदिति ॥ दशाकर्मेंद्रियहर्षग्लान्यादिदशाभवत्येवेतिशेषः ॥ ४२ ॥ तथाचचित्तसाम्येनदेहदशादुःखानांसमाधिवशाद
वन्यतिरेकमुखेनद्रढयति ॥ यद्गति ॥ तथाचज्ञानिनोपिदेहदशानतिलघनमेवेतिममापितदनुवर्त्तननदोषायेतिभावः ॥ ४३ ॥ विजानताऽतत्त्वविदायावद्देहकर्मेंद्रियैःसर्वासुदशासुयथासदाचारमेवस्थातव्यन
दर्शनमेवतत्परित्यागोनहठात्कर्मेंद्रियनिग्रहेणसहनमितिनिष्कर्षइत्याह ॥ एषइति ॥ ४२ ॥ विजानतातत्त्वविदायावद्देहकर्मेंद्रियैःसर्वासुदशासुयथासदाचारमेवस्थातव्यन
तुसदाचारउल्लंघ्यइत्येतावानेवनियम ॥ बुद्धींद्रियैर्मनआदिभिस्तुसदासाम्येनैवभाव्यनतुकदाचिदपिवैषम्येणेत्यर्थः ॥ ४४ ॥ कर्मेंद्रियैरनिषिद्धदेहावस्थानुवर्तनंब्रह्मादिसर्व

येह्यतत्त्वविदोमूढाराजन्बालतयैवते ॥ अवस्थाभ्यःपलायंतेगृहीताभ्यःस्वभावतः ॥ ४१ ॥ यावत्तिलंयथातैलंयावद्देहंतथादशा ॥ योनदेहदशामेतिसच्छिनत्त्यसिनांबरम् ॥ ४२ ॥ एषदेहदशादुःखपरित्यागोत्यनुत्तमः ॥ यत्साम्यंचेतसोयोगान्नतुकर्मेंद्रियास्थितेः ॥ ४३ ॥ यावद्देहंयथाचारंदशास्वंगविजानता ॥ कर्मेंद्रियैर्हिस्थातव्यंनतुबुद्धींद्रियैःक्वचित् ॥ ४४ ॥ परमेष्ठिप्रभृतयःसर्वएवोदिताश्रयाः ॥ देहावस्थासुतिष्ठंतिनियतेरेषनिश्चयः ॥ ४५ ॥ अज्ञतत्त्वज्ञभूतानिदृश्यजातमिदंहियत् ॥ तत्सर्वमेवनियतिंधावत्यंबुयथांबुधिम् ॥ ४६ ॥ तज्ज्ञाबुद्ध्यादिसाम्येनपाण्यादिचलनेनच ॥ नियतिंयापयंतीमांयावद्देहमखंडिताम् ॥ ४७ ॥ अज्ञास्तुसर्वक्षोभेणसुखदुःखदशाहताः ॥ नियतिंयापयंत्यंगदेहलक्षैर्विखंडिताम् ॥ ४८ ॥ इत्थंसुखेपुनर्दुःखदशासुचेत्थंस्थातव्यमित्यधिगतंयदिहांगजीवैः ॥ अज्ञज्ञभूतनिवहस्फुरितस्तदेवंदुर्लंघ्यएषनियतोनियतेर्विलासः ॥ ४९ ॥ ॥ इ० वा० वा० दे० मो० नि० पू० चू० जीवन्मुक्तव्यवहारप्रतिपादनंनामचतुरधिकशततमःसर्गः ॥ १०४ ॥ ॥ ७ ॥ ॥ शिखिध्वजउवाच ॥ ॥ एवंस्थितेमहाभागकथमुद्वेगमीदृशम् ॥ लब्धवानसिदेवोपिवदवेद्यविदांवर ॥ १ ॥

जीवन्मुक्तेषुप्रसिद्धमेवेत्याह ॥ परमेष्ठीति ॥ नियतेःप्रारब्धकर्मनियतेः ॥ अन्यथातद्भोगासिद्धेरितिभावः ॥ ४५ ॥ प्रारब्धकर्मनियतिलंघनंतत्त्वज्ञैरज्ञैर्वाकैश्चिदपिकर्तुंनशक्यमित्याह ॥ अज्ञेति ॥ ४६ ॥ तर्हिकितज्ज्ञाज्ञयोःसाम्यमेवनेत्याह ॥ तज्ज्ञाइति ॥ यावद्देहमुपात्तैकदेहपातपर्यंतम ॥ ४७ ॥ अज्ञास्तुनतथेत्याह ॥ अज्ञास्त्विति ॥ ४८ ॥
प्रारब्धनियतिस्वरूपमभिनीयदर्शयंस्तस्याःसर्वैर्दुरुल्लंघ्यतामुक्तामनूद्योपसहरति ॥ इत्थमिति ॥ नन्वंगइतिराजसंबोधने ॥ अनेनप्राणिनाअस्मिन्जन्मनिइत्थंसुखेषुस्थातव्यं
दुःखदशासुचेत्थंस्थातव्यमितिर्जीवैःस्वस्वकर्मानुसारेणयथादृशललाटाक्षरमधिगतंप्राप्तंतत्तद्विषयेअज्ञेषुज्ञेषुवाभूतनिवहेषुतथैवस्फुरितोनियतएषनियतेःप्रारब्धकर्मणोविला
सएवंप्रागुक्तरीत्यादुरुल्लंघ्यइत्यर्थः ॥ ४९ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० पू० चतुरुत्तरशततमःसर्गः ॥ १०४ ॥ ॥ ७ ॥ ॥ कुंभेननिशिदुर्वासःशापात्स्त्रीत्वा
निरुप्यते ॥ परस्परसमाधानैःप्रीतयोश्चतथास्थितिः ॥ १ ॥ एवंनियत्यनुसारेणस्थितेजीवकदेवत्वदेवोपिसन्नीदृशविषादनिमित्तमुद्वेगकथंलब्धवानस्तद्वदेत्यर्थः ॥ १ ॥

॥२॥ घनजडस्पमिति विशेषणनपुंसकत्वमार्षम् ॥ दृशोप्यमुरोमुक्तदृष्टि समुपयथातानयमायामितद्वत्॥३॥पृच्छतासुहृदानिमित्तेन ॥ स्वच्छमार्थमुपगतेनेतिसुहृदोपिविशेषणम ॥ ४ ॥ ५ ॥ पिप्रासहतिशेष ॥ ६ ॥ वहामिमवहाप्यस्यानिलस्यस्वानुकूलेवर्त्मनितत्प्रवाहेणैववहामियावदभिमतदेशामित्यथ ॥ ७ ॥ अथमदभिमतदेशप्राप्त्यनतरते नमदप्रापउसमानाभानरक्नवत्मनाएकमगत अहत्यम्यनवत्मनाआगच्छामि ॥ सागरापतिताकृति समुद्रप्लवमानइवेत्यर्थ ॥ ८ ॥ ९ ॥ शीकरधाराभिर्धौतिक्षालितमगच

॥ शुभउवाच॥ ॥शृणुकायमिदचित्तमदीयवसुधाधिप॥ कथयामितवाशेषसर्गेयद्वृत्तमद्यमे॥ २॥ सुहृद्यावेदितदुःखपरमायाति तानवम् ॥ घनजडस्पणमपिमुक्तदृष्टिरिवांबुद ॥ ३॥ सुहृदापृच्छतासाधुचेतोयातिप्रसन्नताम् ॥ स्वच्छतोपगतेनाशुकतकेनजल यथा॥ ४॥ अहतावदितोयातोभवतेपुष्पमजरीम्॥ दत्वागगनमुल्लंघ्यसप्राप्तस्त्रिविष्टपम्॥ ५॥ तत पित्रामहेंद्रस्यसभास्थानेयथा क्रमम्॥ स्थित्वोत्थायतयोत्थानकालेपित्राविसर्जित ॥६॥ इहागतुमहत्यक्त्वास्वर्गसप्राप्तवान्नभ ॥ दिवाकरहयै सार्धवहाम्यनिलव त्मनि॥ ७॥ अयेयन्नगतोभानुरेकेनान्येनवर्त्मना॥ आगच्छाम्यहमाकाशसागरापतिताकृति ॥८॥ अथाभ्रवारिपूर्णानांमेघानांम ध्यवत्मना ॥ अपश्यमुनिमायांतमहद्दुर्वाससजवात्॥ ९॥ पयोधरपटच्छन्नविद्युद्वलयभूषितम्॥ अभिसारिकयातुल्यंधाराधौतांग चन्दनम् ॥ १० ॥ स्थितास्तुतरुसुच्छायामापगांवसुधातले॥ वेगेनाभिसरततातपालक्ष्मीमिवप्रियाम्॥ ११॥ तस्यकृत्वानमस्कारमु क्तंवहतामया॥ मुनेनालाभवसस्त्वमभिसारिकयासम ॥१२॥ इत्याकर्ण्यमुमोचासौमयिमानदशापकम् ॥ स्तनकेशवतीकांता हावभावविलासिनी ॥ १३॥ गच्छाननदुरुक्ते नरात्रौयोपाभविष्यसि ॥ इतिश्रुत्वाऽशुभवाक्यमुत्थितजजरद्विजात्॥ १४॥ विस्मृता मिमनाग्यावत्तावदंतर्हितामुनि ॥इत्युद्वेगमना साधोसप्राप्तोहनभस्तलात्॥१५॥ एतत्तेकथितंसर्वंसपन्नोस्मिनिशांगना॥ अतिवा ह्यदिनानिपुत्रीत्वमेतन्मयाक्यम्॥१६॥ योपित्जनवतीरात्रौवक्तव्यंकिंमयापितु ॥संस्तौभवितव्यानामहोनुविपमागति ॥१७॥

स्तनममरागायस्यतम् ॥ १० ॥ वसुधातलस्थितामतएवशोभनातीरुहतरुसुच्छायायस्यास्तथाविधाम स्वस्यप्रियातपोलक्ष्मीमिवस्थितामापगामगांप्रतिसंध्यामदनकालात्य यामाभूरितिवगनाभिसरतम् ॥ आपयामितिपाठनुपातपोलक्ष्मीलक्ष्मांप्रियांभार्यांवसुधातलेआपगापतामभिमुखीकृत्यसरतमित्युत्प्रेक्षा ॥ ११ ॥ अभिसारिकयातमिस्रा भिसारिकयात्यसमारप्यसइतिमयाउक्तम ॥ १२ ॥ १३ ॥ अशुभमितिच्छेद ॥ जजराद्वृद्धाद्विजादुर्वाससः ॥ १४ ॥ इत्युक्तनिमित्तउद्वेगोयस्यतथाविधमनोयस्य॥१५॥ कपमतिमासयापयितुशक्यम ॥ १६ ॥ पितुःअपदतिशेष ॥ १७ ॥

मदपहारेणममअपहरणाय ॥अ यूनामामिषनागृध्रामिषन्यायेनकलहविषयताम् ॥ तमेवन्यायप्रसक्तंस्पष्टयति ॥ कष्टमिति ॥ अधुनेतिश्वःपरश्वस्तनसन्निहितकालोक्तिः ॥ ध्ययनेनवसतीतिवतफलस्यापिहेतुत्वविवक्षयातृतीया ॥ १८ ॥ १९ ॥ मुनिस्थितौचित्तसमाधाने ॥ २० ॥ २१ ॥ यथाप्रारब्धमागतंस्त्रीत्वंमत्तोन्योऽयंदहएवानुभविष्यति तेनासंगचिन्मात्रात्मनोममकाक्षतिरित्यर्थः ॥ राजापितदुक्तमनुमोदमानआह ॥ परिदेवनयेत्यादिना ॥ २२ ॥ २३ ॥ देहिनोदेहोपलक्षितचिदात्मन.कार्याणामवश्यसंपाद्या नाप्रारब्धफलानाविषयेअखेदार्हस्त्वमपियदिखिद्यसेतर्हिअन्येषामविवेकप्रयुक्तखेदचिकित्सायात्वमिवआगमभूषणःशास्त्रतत्त्वानुभावनकुशलःउपायश्चिकित्सकःकइव

अहमप्यद्ययद्वैवाघूनामामिषतांगतः॥ कष्टंमदपहारेणकलहोजायतेधुना॥ १८॥ दिविदेवकुमाराणांकामाकुलधियामिह॥ गुरुदेव द्विजातीनांलज्जापरवशात्मना ॥ १९॥ कथमग्रेमयासम्यग्वस्तव्यंयामिनीस्त्रिया॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इत्युक्त्वाक्षणमेकंसातू ष्णींस्थित्वामुनिस्थितौ॥ २०॥ धैर्यमाश्रित्यकुंभोत्रपुनराहरघूद्वह॥ किमज्ञइवशोचामिकिंममक्षतमात्मनः॥ २१॥ यथागतमयंदे होमत्तोन्योनुभविष्यति॥ ॥ शिखिध्वजउवाच॥ ॥ परिदेवनयाकोर्थोदेवपुत्रतथैतया॥ २२॥ यदायातितदायातुदेहस्यात्मानलि प्यते॥ कानिचिद्यानिदुःखानिसुखानिविहितानिच॥ २३॥ तानिसर्वाणिदेहस्यदेहिनोनतुकानिचित्॥ यदित्वमपिकार्याणामखेदार्हो पिखिद्यसे॥ २४॥ तदन्येषामुपायःस्यात्कइवागमभूषणः॥ खेदेखेदोचितंवाच्यमितिकिंचित्त्वमुक्तवान्॥ २५॥ इदानींसमतामेत्य तिष्ठाखिन्नोयथास्थितम्॥ ॥ श्रीवसिष्ठउवाच॥ ॥ तावेवमादिभिर्वाक्यैरन्योन्याश्वासनंस्वयम्॥ २६॥ कृत्वास्थितौवनस्निग्धौसु हृदौखेदिनौमिथः॥ अथार्कोप्यस्यकुंभस्यस्त्रीत्वमुत्पादयन्निव॥ २७॥ जगामास्तंजगद्दीपोदीपःस्नेहक्षयादिव॥ व्यवहारभरैःसार्धप द्याःसंकोचमाययुः॥ २८॥ मार्गाश्चपथिकैःसार्धंपांथस्त्रीहृदयानिच॥ दाशवद्विहगान्सर्वान्कुर्वदेकत्रसंचितान्॥ २९॥ तारकारत्न जालाढ्यंभुवनंसाम्यतांययौ॥ खंहसदिवताराढ्यंविकासिकुमुदाकरम्॥ ३०॥

शरणस्यान्नकश्चिदित्युत्तरेणान्वयः ॥ २४ ॥ नायंतवखेदःकिंतुखेदोचितोक्तिमात्रंलोकाचारानुवर्णनायेत्याह ॥ खेदेइति ॥ २५ ॥ २६ ॥ अथमिथआश्वासनानंतरम ॥ २७ ॥ २८ ॥ मार्गास्तमोभिःसंकोचमस्फुटतामाययुः ॥ पाथस्त्रीहृदयानिपथिकाश्चवियोगशोकतमोभिरित्यर्थः ॥ दाशाःसमुद्रद्वीपस्थकैवर्त्ताः ॥ तेहिपक्षिणोपिजा लैर्भ्रंतिमत्स्यानपिरत्नान्यपिसंचिन्वतितद्वद्विद्यमानमूर्ध्वाधोभुवनद्वयपक्षिसंग्रहेणतारकारत्नजालाढ्यतयाचपरस्परसाम्यतांसममेवसाम्यंस्वार्थेष्यञ् ॥ समतांययावित्यर्थः ॥ २९ ॥ उन्मादंचक्राङ्गानाभमद्भ्रमराणांचपेटकंखंदंकर्तृविकासिकुमुदाकरहसदिवस्थितंताराढ्यंखंकर्मययौ ॥ ३० ॥

॥ ३१ ॥ वदयित्वा वदित्वा ॥ स्वार्थेणिच् ॥ छिपाइवर्णणमपु अभ्याहरन्आविष्कुर्वन् ॥ ३२ ॥ गलदक्षरसगद्गदमितियावत् ॥ ३३ ॥ नेपुरइतिशेष ॥ ३४ ॥ प्रस्फुरत्तार
कामालाशब्दप्रमानविशेषणादुपमेया शिरोरुहाभिमुक्ताविमालासहिताइतिगम्यते ॥ ३५ ॥ अवराणिवस्त्राणि ॥ ३६ ॥ माल्यानिविविधानिदेहादेवजायंतेइत्युत्तरया

पयावुन्नादचक्राकुम्भमङ्गमरपेटकम् ॥ सुद्धदोतावथोत्थायसंध्यामुपनिशाकराम् ॥ ३१ ॥ वदयित्वातथाकृत्वाजप्यंगुल्मांतरेस्थि
तौ ॥ तत कुम्भःशनैस्लक्ष्णमभ्याहरन्वपु ॥ ३२ ॥ शिखिध्वजंपुर सस्थप्रोवाचगलदक्षरम् ॥ पतामीवस्फुरामीवद्रवामीवांगयष्टिभि
॥ ३३ ॥ लज्जयेवचसेराजन्मन्येस्त्रीत्वंव्रजाम्यहम् ॥ पश्येमेपरिवर्धतेराजन्ममशिरोरुहा ॥ ३४ ॥ प्रस्फुरत्तारकामालादिनांततिमिराइ
व ॥ पश्यमेममजायेतेप्रोन्मुखावुरसिस्तनौ ॥ ३५ ॥ कोरकाविवपद्मिन्यावसतेगगनोन्मुखौ ॥ आगुल्फमेवलंयानिसपद्यतेंवराणिमे
॥ ३६ ॥ देहादेवसखेपस्यस्त्रियाइवशनैशनै ॥ भूषणान्युत्तरमानिमाल्यानिविविधानिच ॥ ३७ ॥ पश्येमान्यगजायंतेस्वांगेभ्योवृक्षपु
ष्पवत् ॥ पश्यायंस्वयमेवायचन्द्रांशुकरशोभन ॥ ३८ ॥ मूर्धिपट्टांशुकोजातोनीहारोद्राविवागमे ॥ सर्वाणिकांतालिंगानिजातानि
ममसानद ॥ ३९ ॥ हाधिक्कष्टविपादोमेकिंकरोम्यंगनास्म्यहम् ॥ हाधिक्कष्टमहासाधोस्थितएवाहमंगना ॥ ४० ॥ सविदानुभवाम्यत
नितयजघनेत्विमे ॥ विपिनेकुम्भइत्युक्तातूर्ष्णीसिन्नोमभूवह ॥ ४१ ॥ राजापिचतमालोक्यतथैवासीद्विपण्णधी ॥ मुहूर्तमात्रेणोवाच
शिखिध्वजइदंवच ॥ ४२ ॥ कष्टंसोयमहासत्व सपन्नावरवर्णिनी ॥ साधोविदितवेद्यस्त्वजानासिनियतेर्गतिम् ॥ ४३ ॥ अवश्यभा
विन्यर्थेस्मिन्माखिन्नहृदयोभव ॥ आपतंतिदशाज्ञानांलासुधियादेहमात्रके ॥ ४४ ॥ नचेतस्यधियांत्वेताश्चित्तंयांतिनदेहकम् ॥ ॥ कु
म्भउवाच ॥ ॥ एवमस्त्वनुतिष्ठामियामिनीस्त्रीत्वमात्मन ॥ ४५ ॥ नखेदमनुगच्छामिनियतिःकेनलंघ्यते ॥ इतिनिर्णीयतौखेदतनी
त्वातनुतामिव ॥ ४६ ॥

म्यप ॥ ३७ ॥ स्वांगेभ्य शाखादिभ्य ॥ ३८ ॥ पट्टांशुक पावकम ॥ एवमाच्छादितमपेशेष्वपिलिंगविनिमय सपन्नइतिशेषमित्याशयेनाह ॥ सर्वाणीति ॥ ३९ ॥ स्थित
सिद्ध ॥ ४० ॥ इत्युक्ताकुम्भोविपिनेतूर्ष्णीबभूवइत्यन्वय ॥ ४१ ॥ ४२ ॥ ४३ ॥ सुधियांनत्वचिपदिशेषु हमात्रकेआपतंतिचेतसिन ॥ ४४ ॥ अधियामज्ञानांतुएतादशाश्चित्तम
पियास्यनायोनिमेदेहमात्रकमित्यर्थ ॥ अनुतिष्ठामिअनुभवे ॥ ४५ ॥ ४६ ॥

१ ज्ञानसिद्धमित्यादि

राजाकुंभविपत्तिचिंतयाराज्ञीतुनृपसंगमोत्कंठयानिद्राभावाच्चिरेणनिशांनीतवंतौ ॥ युवत्याइदंयौवनंवपुरुत्सृज्य ॥ भस्याढेतद्धितइतिपुंवद्भावेअग्नित्यणिप्रकृतिभावान्नटिलो प. ॥ ४७ ॥ पूर्वेद्युस्तनकुंभाभः ॥ ४८ ॥ कुमारीधर्मिणीअनूढाचारा ॥ ४९ ॥ कथंकथमर्थविजहारतदाह ॥ कैलासेति ॥ कैलासादीनासानुपुप्रस्थेषुअविस्खलितोयोग वलेनगमागम कातयोगेनगमागमश्चयस्यास्तथाविधासाचूडालायथेच्छस्वाभिमतानुसारेणभवतावर्तनशीलेनप्रियेणसार्धस्त्रग्दामहारवलितासतीयथेच्छंविजहारेतिपुनरप्या

एकतल्पेनिशांतूर्ष्णींनीतवंतौचिरेणताम् ॥ अथप्रभातेतत्स्त्रैणंवपुरुत्सृज्ययौवनम् ॥ ४७ ॥ बभूवकुंभःकुंभाभःकुचप्रोज्झितमूर्तिमा न् ॥ इतिसाराजमहिषीचूडालावरवर्णिनी ॥ ४८ ॥ कुंभत्वमास्थिताभर्तुःपश्चात्स्त्रीत्वमुपागता ॥ विजहारवनांतेषुकुमारीधर्मिणीनि शि ॥ कुंभरूपधराचाङ्किभर्त्रामित्रेणसंयुता ॥ ४९ ॥ कैलासमंदरमहेंद्रसुमेरुसह्यसानुष्वविस्खलितयोगगमागमासा ॥ साकंप्रियेण सुहृदाभवतायथेच्छंस्रग्दामहारवलिताविजहारनारी ॥ ५० ॥ ॥ इ० वा० वा० दे० मोक्षोपायेषुनि० पू० चूडालोपाख्यानेकुंभस्यस्त्रीत्व लाभोनामपंचाधिकशततमःसर्गः ॥ १०५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ ततःकतिपयेष्वेवदिवसेषुगतेषुसा ॥ इदंप्रोवाचभर्त्तारंकुंभरू पधरासती ॥ १ ॥ राजन्राजीवपत्राक्षममेदंवचनंशृणु ॥ निशायांप्रत्यहंतावत्स्थितएवाहमंगना ॥ २ ॥ तदिच्छाम्यंगनाधर्मंनिपुणीक र्तुमीदृशम् ॥ भर्त्रेकस्मैचिदात्मानंविवाहेनददाम्यहम् ॥ ३ ॥ तद्भवानेवमेभर्त्तारोचतेभुवनत्रये ॥ गृहाणमांविवाहेनभार्यात्वेनिशिस र्वदा ॥ ४ ॥ अयत्नोपनतंसाधोप्रियेणसुहृदासह ॥ स्त्रीसुखंभोक्तुमिच्छामिमामेविघ्नकरोभव ॥ ५ ॥ क्रमप्रवृत्तमासृष्टेःसुखंसाध्यंम नोरमम् ॥ प्रकृतंकुर्वतःकार्यंदोषःकइवजायते ॥ ६ ॥ इच्छानिच्छेफलेत्यक्त्वासमंतात्सर्ववस्तुषु ॥ वयंनसेच्छानानिच्छाःकुर्मस्तेनेदमी प्सितम् ॥ ७ ॥ ॥ शिखिध्वजउवाच ॥ ॥ कृतेनानेनकार्येणनशुभंनाशुभंसखे ॥ पश्यामितन्महाबुद्धेयथेच्छसितथाकुरु ॥ ८ ॥ सम तांसंप्रयातेनचेतसेदंजगत्त्रयम् ॥ स्वरूपमेवपश्यामियथेच्छसितदाचर ॥ ९ ॥ ॥ कुंभउवाच ॥ ॥ यद्येवंतन्महीपाललग्नमद्यैवशोभ नम् ॥ राकेयंश्रावणस्यास्यत्वद्यःसर्वंगणितंमया ॥ १० ॥

काक्षयान्वयः ॥ ५० ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाण० पू० पचोत्तरशततम.सर्गः ॥ १०५ ॥ ॥ ७ ॥ ॥ वर्ण्यतेत्रमहेंद्राद्रौविवाहोग्निपुरस्कृतः ॥ तयोर्गुह्यायासौवर्ण्यापुष्पतल्पेचसगमः ॥ १ ॥ साचूडाला ॥ १ ॥ २ ॥ निपुणीकर्त्तुंसफलीकर्त्तुम् ॥ ददामिअचिरादेवदास्यामि ॥ ३ ॥ ४ ॥ प्रत्याख्यानेनविघ्नकरोमाभव ॥ ५ ॥ आसृष्टेःसृष्टिकालमारभ्यदेवर्ष्यादिषुअध्ययावत्क्रमप्रवृत्तसुखमनायासमेवसाध्यंप्रकृतप्रस्तुतविवाहकार्यंइच्छानिच्छेतत्फलेचत्यक्त्वाकुर्वतस्तेकइवदोषोजायतइत्य न्वयः ॥ वयंआवाम् ॥ अस्मदोद्वयोश्चेतिबहुवचनम् ॥ ६ ॥ ७ ॥ तत्तस्माद्धेतोः ॥ ८ ॥ स्वरूपंस्वात्मभूतमेवानुपश्यामि ॥ ९ ॥ द्यःपूर्वेद्युरेवमयाविवाहलग्नादिसर्वंगणितम् ॥ १० ॥

अम्यपाविवाह ॥ द्यावेगोधपविधिनेतिभाव ॥ ११ ॥ मणिमयकवरलक्षणेमदिरे ॥ १२ ॥ विवाहोत्सवाथितनरनारीगण्यस्यानीयतयावृक्षलताविसपत्तिदर्शयति ॥ पुष्प
भारेति १३ ॥ परिपश्यतुविवाहत्स्वमितिशेष ॥ १४ ॥ १५ ॥ १६ ॥ रमसयुतेसानौसमेशुभेआभिरद्यतिशेष ॥ समालभनदेवताभिमवनाविपूजनतदर्थानापुष्पाणाम् ॥
॥ १७ ॥ अपरेअजिरइतिवचनात्पूर्वमप्यभिरेइतिगम्यते ॥ कालेनभोजकसुकृतपरिपाककालेन ॥ १८ ॥ १९ ॥ मगलदधिदूर्वाक्षतसिद्धार्थाविनयपूर्वकम् ॥ २० ॥ २१ ॥

रात्रावथोदितेचंद्रेपरिपूर्णकलामले॥ जन्यत्रोनौमहायाहोद्वयोरेवभविष्यति॥ ११ ॥ महेंद्राद्रिशिरःशृंगसानावथमनोरमे ॥ रत्नदीप
प्रकाशाढ्येमणिकंदरमंदिरे॥ १२ ॥ पुष्पभारानतोत्तुंगवृक्षराजिविराजिते॥ वनपुष्पलतालास्यनारीनृत्यमनोहरे ॥ १३॥ निशिध्यो
मगतास्ताराभर्त्रापूर्णेंदुनामह॥ आवयोःपरिपश्यतुकर्णांतागतलोचन॥ १४॥ उत्तिष्ठात्मविवाहार्थंकुर्व काननकोटरात् ॥ राजश्चंद
नपुष्पादिसंभाररत्नसंयुतम्॥ १५॥ इत्युक्त्वाकुंभउत्थायसहतेनमहीभृता॥ कुसुमावचयचक्रेतथारत्नादिसंचयम्॥ १६ ॥ ततोमुहूर्त
मात्रेणरत्नसानौसमेशुभे॥ समालभनपुष्पाणांताभ्यांवैराशयः कृता ॥ १७॥ हारांबरमणींद्राद्दिराशयस्त्वपरेजिरे ॥ सौभाग्यस्येव
पामेनकोशाः कालेनसंभृता ॥१८॥ तथाजन्यत्रसंभारंकृत्वाकांचनकंदरे॥ ययतुस्तौमहामित्रेस्नातुंमंदाकिनींनदीम्॥ १९ ॥तत्रैनंस्ना
पयामासमहाराजमहादरात्॥ गजकुंभोपमस्कंधंकुंभोमंगलपूर्वकम् ॥ २० ॥ भविष्यद्दयितारूपांभविष्यद्दयितोंगनाम्॥ चूडालां
स्नापयामासकुंभरूपधरांप्रियाम्॥ २१॥पूजयामासतु स्नातौतत्रदेवपितॄन्मुनीन्॥यथाक्रियाफलेनिच्छौक्रियात्यागेतथैवतौ॥ २२॥
नित्यस्नानरसावुभौव्यवस्थायांजगत्स्थिते ॥ चक्रातेभोजनंभव्यंतावन्योन्यसमीहितम्॥ २३॥ कल्पवृक्षदुकूलानिपरिधायसितानि
तौ॥ फलानिभुक्त्वाजन्यग्रस्थानमाययतु क्रमात् ॥ २४॥ एतावताथकालेनतयोर्जन्यत्रसोत्कयोः ॥ प्रियंकर्तुमिवास्तार्द्रिद्रागित्येवा
विशद्रविः ॥ २५॥ अथसंध्याक्रमेवृत्तेकृतजप्याघमर्षणे॥ विवाहदर्शनायैवताराजालेसमागते ॥ २६॥ मिथुनैकसखीयामाकुमु
दोत्करहासिनी॥ प्रालेयजालप्रकरविकिरंतीसमाययौ॥ २७॥

क्रियाफलानिच्छोस्तयोःकथपूजाप्रसक्तिस्तत्राह ॥ यथेति ॥ तथैवक्रियात्यागेप्यनिच्छौ ॥ २२ ॥ अन्योन्यसमीहितसिद्धिबलकल्पितान्यादेर्भोजनम् ॥ २३ ॥ फलानिक
ल्पवृक्षफलानि ॥ जन्यग्रस्थानंवेदिमूलम् ॥ क्रमात्शास्त्रोक्तक्रमात् ॥२४॥२५॥ संध्याक्रमेसंध्यावंदनविधौ ॥२६॥ मिथुनानांप्रीतिकरत्वादेकसखीयामात्रियामा ॥२७॥

पद्मोद्भवोब्रह्मा ॥ २८ ॥ मृगजैःकस्तूरीपौष्कलकादिभिः ॥ कुंकुमैः काश्मीरैः ॥ २९ ॥ कल्पलतोद्भूतैरंशुकैर्वस्त्रैः ॥ स्रग्भिरुद्दामैरुत्कृष्टशोभैरवतंसैः रत्नगुच्छाद्युत्तंसैः ॥ मा
ल्यैः कंठादिमाल्यैर्विविधभूषणोचितैः ॥ ३० ॥ मौलिपदेनचूडामणिर्लक्ष्यते ॥ इंदुरूपिणाचंद्रसदृशेन ॥ ३१ ॥ वधूचितविलासवान् ॥ ३२ ॥ कामायकामरूपायवराय
॥ ३३ ॥ अतएवकामत्वेनैवभर्त्तारंकल्पयित्वामनस्याह ॥ इयमिति ॥ ३४ ॥ अग्रस्थेगहनेवनवेदिदेशेस्थितम् ॥ ३५ ॥ सस्नेहसानुरागम् ॥ ३६ ॥ लसंतंशोभमानपतिम्

रत्नदीपान्बहून्सानौकुंभःसम्यगयोजयत् ॥ ज्योतींषींद्वर्कयुक्तानिपद्मोद्भवइवांबरे ॥ २८ ॥ भूषयामासराजानंस्त्रीत्वंगच्छन्निशागमे ॥ चंदनागुरुकर्पूरपूरैर्मृगजकुंकुमैः ॥ २९ ॥ हारकेयूरकटकैस्तथाकल्पलतांशुकैः ॥ स्रगुद्दामावतंसैश्चमाल्यैश्चविविधोचितैः ॥ ३० ॥ तथाकल्पलतागुच्छैर्मंदारैःपारिजातकैः ॥ संतानैर्बकुलैश्चमौलिनाचेंदुरूपिणा ॥ ३१ ॥ एतावताथकालेनवधूत्वंकुंभआययौ ॥ घनस्तनभराक्रांतोबभूवाशुविलासवान् ॥ ३२ ॥ इदंसंचिंतयामाससंपन्नोयमहंवधूः ॥ कामायात्मामयादेयःकार्यंकालोचितंकिल ॥ ३३ ॥ इयमस्मिवधूःकांताभर्त्तात्वंमेपुरःस्थितः ॥ गृहाणकाममामेहिकालोयंतवलच्छय ॥ ३४ ॥ इतिसंचिंत्यभर्त्तारमग्रस्थगहनस्थितम् ॥ उद्यंतमिवादित्यंरतिःकाममिवाभ्यगात् ॥ ३५ ॥ अहंमदनिकानामभार्यास्मितवमानद ॥ पादयोस्तेप्रणामोयंसस्नेहंक्रियतेमया ॥ ३६ ॥ इत्युक्त्वासानवद्यांगीलज्जावनमितानना ॥ लोलालकेनशिरसाप्रणनामलसत्पतिम् ॥ ३७ ॥ उवाचेदंचहेनाथत्वंमांभूषयभूषणैः ॥ क्रमेणाग्निंचसंज्वाल्यमत्पाणिग्रहणंकुरु ॥ ३८ ॥ राजसेतितरांराजन्मांकरोषिस्मरातुराम् ॥ रतेर्विवाहेमदनमभिभूयाधितिष्ठसि ॥ ३९ ॥ इंदोरिवांशुजालानिराजन्माल्यानितानिते ॥ मेरुगंगाप्रवाहाभांधत्तेहारस्तवोरसि ॥ ४० ॥ मंदारकुसुमप्रोतैःकुंतलैर्नृपराजसे ॥ कनकाब्जमिवोल्लोलैर्भृंगैःखचितकेसरैः ॥ ४१ ॥ रत्नांशुजालैःकुसुमैःश्रियास्थैर्येणतेजसा ॥ रत्नस्थानंविभोमेरुमभिभूयावतिष्ठसे ॥ ४२ ॥ एवमादिवदंतौतौभविष्यन्नवदंपती ॥ प्रच्छन्नपूर्वदांपत्यौमिथस्तुष्टौबभूवतुः ॥ ४३ ॥

॥ ३७ ॥ संज्वाल्यहुत्वाभ्यर्च्यच ॥ ३८ ॥ रतेर्विवाहेप्रसिद्धमदनंस्वशोभयाभिभूयेत्यर्थः ॥ ३९ ॥ तांशोभामेववर्णयति ॥ इंदोरित्यादिना ॥ तवोरसिस्थितोहारोमेरौप्रसिद्धस्यगंगाप्रवाहस्यआभाशोभाधत्ते ॥ ४० ॥ खचितकेसरैर्घटितकिंजल्कैः ॥ ४१ ॥ रत्नांशुजालैरित्यादीनिराजमेरुसाधारण्येनयोज्यानि ॥ ४२ ॥ वदंतौतौइत्युक्त्याराज्ञापितस्याःशोभावर्णितेतिगम्यते ॥ ४३ ॥

संभोगकालसान्निध्यस्तने.स्मयमानमुखौ ॥ ६० ॥ विवाहव्यापारेणाद्यःप्रहरोतिक्रांतइतिसूचयन्नाह ॥ एतस्मिन्निति ॥ चतुर्भागंचतुर्थभागम् ॥ ६१ ॥ तस्मिंस्तल्पेकरानृसं चारयामास ॥ यथाकामुकस्यदृष्टिर्ललनाछिद्रद्रष्टुमभित करान्स्वकिरणान्प्रसारयतितद्वत् ॥ ६२ ॥ ६३ ॥ सगमसुमुहूर्त्तकप्रतीक्षमाणावितिशेषः ॥ काचनमयींकंदरांगुहा विविशतु ॥ ६४ ॥ चद्रस्याप्यदृश्यत्वाद्गुमा ॥ तत्रतल्पददर्शतुः ॥ तदेववर्णयति ॥ कल्पितमित्यादिसार्धत्रयेण ॥ ददर्शतुरितिकित्यतुसिगुणश्छादसः ॥ ६५ ॥ ग्लानिवर्जितै रम्लानैः ॥ ६६ ॥ शोभनेनशय्याप्रमाणेनोच्चैकैरुन्नतैः ॥ मदनिकासत्यसकल्पेनसमै कुसुमैर्निर्मितैर्दीर्घशय्याकारेणदीर्घीभूतेंदुबिंबप्रतिमैःपुष्पै.परितोव्याप्तमितिपूर्वत्रान्वयः

भार्यावरौसमंतुष्टौकरौतत्यजतुःक्रमात् ॥ स्मयमानमुखौकांतौचंद्राविवनवोदितौ ॥ ६० ॥ पूर्वोपरचितेपुष्पतल्पेविविशतुर्नवे ॥ एत स्मिन्नंतरेचंद्रश्चतुर्भागंनभस्तलात् ॥ ६१ ॥ शनैराक्रमयामासशोभांद्रष्टुमिवानयोः ॥ तस्मिंश्चललनाछिद्रंद्रष्टुंदृष्टिरिवाभितः ॥ ६२ ॥ लोलःसंचारयामासकरानिंदुर्लतागृहे ॥ तैस्तैर्नवकथालापैरिंदावभ्युदितेत्वथ ॥ ६३ ॥ तावासांचक्रतुःकांतौदंपतीसुमुहूर्त्तकम् ॥ अ थोत्थायज्वलद्रत्नदीपांकांचनकंदराम् ॥ ६४ ॥ स्वयंपूर्वोपरचितांगुमांविविशतुःप्रियौ ॥ ददर्शतुर्नवंतत्रतल्पंकुसुमकल्पितम् ॥ ६५ ॥ परितोव्याप्तमुत्कीर्णैर्हेमपंकजराशिभिः ॥ मंदारादिभिरन्यैश्चपुष्पैर्ग्लानिविवर्जितैः ॥ ६६ ॥ उच्चकैःसुप्रमाणेननिर्मितैःकुसुमैःसमैः ॥ दीर्घेंदुबिंबप्रतिमैस्तुषारस्थलशीतलैः ॥ ६७ ॥ क्षीरोदजलधाराभंज्योत्स्नासंपिंडसुंदरम् ॥ प्रतिबिंबमनंगस्यनतंभित्ताविवस्थितम् ॥ ६८ ॥ सुगंधमुन्नतंकांतंचिरादन्यतयोत्थितम् ॥ मिथुनंपुष्पराशौतन्न्यषीदत्परितोऽमले ॥ तस्मिन्समसमाभोगेक्षीरोदेमंदरोयथा ॥ ६९ ॥ तैस्तैर्मिथःप्रणयपेशलवाग्विलासैस्तत्कालकार्यसुभगैःप्रणयोपचारैः ॥ सत्कांतयोर्नवनवेनतयोःसुखेनदीर्घामुहूर्तइवसार जनीजगाम ॥ ७० ॥ ॥इत्यार्षेवा०वा०दे०मो०नि०पू०चू०लीलाविवाहोनामषडुत्तरशततमःसर्गः ॥ १०६ ॥ ॥ छ ॥

॥ ६७ ॥ पुनस्तल्पमेवविशिनष्टि ॥ क्षीरोदेत्यादिना ॥ नतंसंक्रांतम ॥ ६८ ॥ चिरात्राज्यत्यागकालादारभ्यअन्यतयाअदंपतित्वेनभ्रांत्याउदिततन्मिथुनंस्त्रीपुंसद्वंद्वंपुष्पराशौ तस्मिंस्तल्पेन्यषीदत् ॥ उपभोगेनतल्पोपमर्दकत्वान्मंदरदृष्टांतः ॥ ६९ ॥ तयो सत्कांतयोस्तैस्तैर्लोकोत्तरैःप्रणयपेशलवाग्विलासैस्तत्कालोचितपरिरंभणादिकार्यसुभगैर्गंधमा ल्यतांबूलार्पणादिप्रणयोपचारैर्नवनवेनसंभोगसुखेनदीर्घासारजनीमुहूर्त्तमिवजगाम ॥ ७० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०षडुत्तरशततमःसर्गः ॥ १०६ ॥

१ अनतस्येतिवाक्वचित्पाठः

नानागिरिविहारादिलयामार्येप्रदर्शनम् ॥ असक्तिपरीक्षार्थंस्वर्गाज्ञानाविषर्यते ॥ १ ॥ रंगेणरजकद्रव्येण ॥ १ ॥ देवसदृशभोगाभ्यत्वाद्देवदंपती ॥ २ ॥ ३ ॥ यामिन्यांरा त्रौ ॥ श्लिष्टौयुक्तौ ॥ ४ ॥ ५ ॥ ससादय समपर्यता ॥ ६ ॥ प्रियेनिद्रांगतवतिस्वनगरगत्वेतिशेष ॥ ७ ॥ ८ ॥ कस्मिन्कालेकियत्कालंस्थितस्तत्राह ॥ मासमित्यादिना ॥ पूजितौमरालौ ॥ ९ ॥ हस्तलभ्यान्युदितानिउद्गतानिक्षुत्तृषारोगजरापहारित्वादमोघानिफलकुसुमकिसलयादीनियेषांतथाविधैर्मंदारैर्वनमालितेसजातवनमाले ॥ शुक्ति

श्रीवसिष्ठउवाच॥ ॥अथसूर्यास्यरंगेणरजितेभुवनोदरे॥ शिखिध्वजांगनाप्रातर्मंदनीकुंभतांययौ॥१॥एवमहेंद्रदयाँतावुभौकुंभशि खिध्वजौ॥स्वयंविधाहितावैष्टसपत्नौदेवदंपती॥२॥ विलेसतुर्विचित्रासुप्रत्यहंवनराजिषु॥प्रपक्कफलभारासुपुष्पपल्लविनीषु ॥३॥ दिवाप्रीततरौमित्रेयामिन्यामिष्टदंपती॥ प्रभादीपाविवश्लिष्टौनवियुक्तौबभूवतु ॥४॥ रेमातेवनकुंजेषुगुहासुचमहीभृताम्॥ तमा लजालखंडेषुमंदारगहनेषुच॥५॥ सत्यदर्दुरकैलासमाहेंद्रमलयेषुच॥ गंधमादनविंध्याद्रिलोकालोकतटेषुच॥६॥ दिनेस्मिंस्मिस्मिं गत्वानिद्रांगतवतिप्रिये॥ चूडालाराजकार्याणिकृत्वास्वभ्यायर्यौपुन ॥ ७॥ तौदिवासुहृदौमित्रेदंपतीकुंभभूमिपौ॥ नानाकुसुमसं वीतौतस्यतुमुदितौमिथ ॥८॥ मासमेकंमहेंद्राद्रौरम्येसरलसकुले॥ रत्नकुड्येगुहागेहेपूजितौसुरकिंनरे ॥ ९॥ हस्तलभ्योदितामोघमं दारवनमालिते॥ एवंशुक्तिमत पृष्ठेपक्षकल्पलतागृहे॥ १०॥ मासद्वयपक्षवतोगिरेर्दक्षिणदिक्तटे॥ पारिजातवनेदेवपुष्पस्तबकमंडपे ॥ ११॥ जंबूखंडतलेमेरोः पादेजंबूनदीतटे॥ जांबूनदमयेमासंजंबूफलरसासवे ॥ १२॥ दशोत्तरकुरूणांचमंडलेदिवसानितौ॥ को सलेपूत्तरस्येषुसमाविंशतिवासरान्॥ १३॥ एवमन्येषुदेशेषुविचित्रेषुमहीभृताम्॥ स्थितवंतौमहाभागौसुहृदौनिशिदंपती॥ १४॥ ततोयातेषुमासेषुशनैः कतिपयेषुसा॥ चूडालाचिंतयामासदेवपुत्रकरूपिणी ॥ १५॥ सुरूपभोगभारेणपरीक्षेहंशिखिध्वजम्॥ मा कदाचनचेतोस्यभोगेषुरतिमेष्यति॥ १६॥

मत-पर्वतविशेषस्यपृष्ठे ॥ १० ॥ पक्षवतोगिरेर्मैनाकस्य ॥ देवयोग्येपुष्पस्तबकमंडपे ॥ ११ ॥ मेरोर्दक्षिणपार्श्वेजंबूद्वीपकेतुर्जंबूवृक्षःप्रसिद्धस्तस्यतलेजंबूनदस्तटतलेतस्यतु रितिसर्वमानुषग ॥ जंबूफलानांगजप्रमाणानांरसलक्षणैरासवैःपेयैः सेवितौर्मध्यजरामयादिनिर्मुक्तस्थिरयौवनादितिपुराणप्रसिद्ध्यनुसारेणाध्याहार्यम् ॥ १२ ॥ उत्तरकुरू णांमंडलेदशदिवसानिनीतवन्तौ ॥ १३ ॥ १४ ॥ १५ ॥ परीक्षेपरीक्षिष्ये ॥ वर्तमानसामीप्याल्लट् ॥ रतिमासक्तिम् ॥ परीक्षणादृढीकृतानासक्तिरयंकदाचिदपिभोगेषुर तिमाएष्यतिनैष्यत्येवस्याय ॥ १६ ॥

सुरैरप्सरोभिश्चसहवर्तमानंहरिमिंद्रम् ॥ १७ ॥ यथावत्यथाशास्त्रमर्घ्यपाद्याद्युपचारैः ॥ १८ ॥ अभ्यागमलक्षणाकदर्थनाश्रमः किंकिमर्थंकृतायथायत्नकारेणप्रयोजनेनेनत त्प्रयोजनवक्तुमर्हसीत्यर्थः ॥ १९ ॥ खात्स्वर्गात् ॥ २० ॥ त्वद्गुणश्रवणप्रयुक्तमाश्चर्यविस्मयोयेषांयासांचदेवाश्चतदंगनागणाश्चदेवांगनागणाः ॥ २१ ॥ गगनगमनशक्तिशू न्यस्यमेकथंस्वर्गेआगमनतत्राह ॥ पादुकेति ॥ अथसिद्धतरविमानदिव्याश्वाद्यपिच ॥ २२ ॥ तेनत्वदाह्वानप्रयोजनेन ॥ २३ ॥ प्रत्याख्यानत्वदिस्थमालक्ष्याह ॥ विमान

इतिसंचिंत्यचूडालामाययाविपिनावनौ ॥ आगतंदर्शयामाससमुराप्सरसंहरिम् ॥ १७ ॥ इंद्रमभ्यागतंदृष्ट्वापरिवारसमन्वितम् ॥ यथावत्पूजयामासवनसंस्थःशिखिध्वजः ॥ १८ ॥ ॥ शिखिध्वजउवाच ॥ ॥ आत्मनाकिंकृतादूरादभ्यागमकदर्थना ॥ देवराजयथातन्मेप्रसादाद्वक्तुमर्हसि ॥ १९ ॥ ॥ इंद्रउवाच ॥ ॥ इमेवयमिहायातास्त्वद्गुणातिशयेनखात् ॥ त्वदिलग्नेनसूत्रेणखगावनगताइव ॥ २० ॥ उत्तिष्ठस्वर्गमागच्छतत्रसर्वेत्वदुन्मुखाः ॥ त्वद्गुणश्रवणाश्चर्याःस्थितादेवांगनागणाः ॥ २१ ॥ पादुकागुटिकाखड्गरसादीदमथापिच ॥ गृहीत्वासिद्धमार्गेणस्वीकुरुस्वर्गमंडलम् ॥ २२ ॥ आगत्यविविधाभोगास्त्वयाविबुधसद्मनि ॥ जीवन्मुक्तेनभोक्तव्यास्तेनत्वामहमागतः ॥ २३ ॥ विमानयंतिसंप्राप्तांनतिरस्करणैःश्रियम् ॥ नाभिवांछंतिनप्राप्तांत्वादृशाःसाधुसाधवः ॥ २४ ॥ अविघ्नमागतेनाद्यसुखंविहरतात्वया ॥ स्वर्गःपवित्रतांयातुहरिणेवजगत्त्रयम् ॥ २५ ॥ ॥ शिखिध्वजउवाच ॥ ॥ सर्वंस्वर्गसमाचारंवेद्मिदेवाधिनायक ॥ किंतुसर्वत्रमेस्वर्गोनियतोनतुकुत्रचित् ॥ २६ ॥ सर्वत्रैवहितुष्यामिसर्वत्रैवरमेप्रभो ॥ अवांछनत्वान्मनसःसर्वत्रानंदवानहम् ॥ २७ ॥ नियतंकिंचिदेकत्रस्थितंस्वर्गकमीदृशम् ॥ शक्रगंतुंनजानामित्वदाज्ञांनकरोम्यहम् ॥ २८ ॥ ॥ शक्रउवाच ॥ ॥ साधोविदितवेद्यानांपरिपूर्णधियांसमम् ॥ सज्जनाचरितंयुक्तंमन्येभोगोपसेवनम् ॥ २९ ॥

यतीति ॥ २४ ॥ बलिद्वारपालनायषड्गर्भाहरणायचपातालेपिहरेर्विहारप्रसिद्धेर्जगत्त्रयमिति ॥ २५ ॥ स्वर्गसमआचारःसुखविहरणयस्मिंस्तथाविधम ॥ स्वर्गेणसमंसुखमाचरतीत्यणतवा ॥सर्वदेशं॥तथावेदनेहेतुस्त्वयिकोविशेषइतिचेत्तमाह ॥ किंत्विति ॥ मदभिमतःस्वर्गोभूमात्मैव सचसर्वत्रैवेतिभावः ॥ नियतःपरिच्छिन्नः ॥ २६ ॥ पूर्णकामत्वादपिमेसर्वत्रसुखमित्याह ॥ सर्वत्रेति ॥ २७ ॥ तुच्छस्वर्गस्वर्गकगतुनजानामिनसभावयामि ॥ तथाचासभाव्यविषयेआज्ञापनतवैवानुचिननतुममतदकरणमपराधइतिभावः ॥ २८ ॥ पूर्णधियाभोगोपसेवनभोगानुपसेवनचसमम् ॥ तत्रापिभोगोपसेवनसज्जनैःप्रारब्धक्षयायाचरितमतस्तद्युक्तमन्येइत्यर्थः ॥ २९ ॥

१ कचिदित्यपिपाठः

देवेशे एवं पुनः प्रोक्तवत्यपि स्वर्गं गतुमनिच्छया त्वयि तूष्णीं स्थिते सति एष एवंविधो निरपेक्षस्त्वयि तत्सह इमित किं नापयामि असपच्चागमनप्रयोजनस्य ममापयानमेव युक्तमिति हरि रि
द्र स्वेदसूपयन्पाकमयान् ॥ ३० ॥ अहमद्यैव न स्वर्गमागच्छामि किंतु पुनराराध्येषु मितिदिन कालेनमागिबत्वहरिनिबर्हणाद्दिप्रयोजनार्थमागमिष्यामीत्याशयेनार्थोक्त्या शिखिध्व
जवदतिसन्निहेकुभते राजाभिमेत पुनराराध्यमामिलक्षणकल्याणमस्तिति कुभमतिवदन्नतर्धिमतर्धानमायया हरि ॥ ३१ ॥ इंद्रे अंतर्धिमागते तेन त्रिदशेशेन युक्तत्रितीयं वैवदरमपि
क्षणादस्यमभूत् ॥ यथा वारिनिधौ वाते प्रशांते सति स्फुरति व्याकुलानि मकरफनफणींद्रवानि यस्मिंस्तथाविध कल्लोलराशिरप्यदृश्यो भवति तद्वदित्यर्थ ॥ ३२ ॥ ॥ इति
श्रीवासिष्ठम० तात्पर्यप्रकाशानि० पू० सप्तोत्तरशततम सर्ग ॥ १०७ ॥ ॥ ५ ॥ ॥ इंद्रक्रोधपरीक्षार्थीं पिगसगश्च मायया ॥ राज्यामदर्शिते राज्ञे निजरूपवधाकृत

देवेशेप्रोक्तवत्येवंतूष्णीमेवस्थितेनृपे ॥ किमितोनापयास्येपत्वमितिप्रोक्तवान्हरि ॥ ३० ॥ नाहमद्यैवकालेनवदतीतिशिखिध्वजे ॥
कल्याणतेस्तुकुंभेतिवदन्नतर्धिमाययौ ॥ ३१ ॥ तदेववदमखिलत्रिदशेशायुक्तत्रक्षणादलमदृश्यमभूत्रितीयम् ॥ कल्लोलराशिरिववा
रिनिधौप्रशांतवातेस्फुरन्मकरफेनफणींद्रवदम् ॥ ३२ ॥ ॥ इ० वा० वा० दे० मो० नि० पू० च० शक्रगमननामसप्तोत्तरशततमःसर्ग
॥ १०७ ॥ ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ तांमायांशममानीयचूडालासमचिंतयत् ॥ दिष्ट्याभोगेन्द्रयानायक्रियतेव
सुधाधिप ॥ १ ॥ शांत समसमाभोगएवंशक्रसमागमे ॥ असरंभमहेलंचकृतवान्व्यावहारिकम् ॥ २ ॥ भूयएवप्रपंचेनविम्रशाम्येव
सादरम् ॥ रागद्वेषप्रधानेनकेनचिद्बुद्धिहारिणा ॥ ३ ॥ इतिसंचिंत्यसाराद्रावैदावभ्युदितेवने ॥ गृहीतमगनारूपकांतामदनिकासती
॥ ४ ॥ वातेवहतिफुल्लाढ्येमधुरामोदमांसले ॥ संध्याजप्यपरेनद्यास्तीरसंस्थेशिखिध्वजे ॥ ५ ॥ सतानकलतागेहंनीरंध्रेपुष्पगुच्छके ॥
शुद्धांतंवनदेवीनांप्रविवेशमदान्विता ॥ ६ ॥ तत्रसकल्पितेपुष्पशयनेमाल्यमालिता ॥ कंठेसकल्पितंकांतंविगमादायसास्थिता ॥ ७ ॥

॥ १ ॥ तामिंद्रागमनरूपां मायां शममानीय उपसंहृत्य ॥ क्रियते वशीक्रियते ॥ १ ॥ सदाविक्रियाशून्यत्वात्समेन आकाशादिना समश्चाभोगो मुखाद्यवयवस्थितिर्यस्य ॥ अ
संरंभमसाध्वसमहेलं च व्यावहारिकमर्घ्यपाद्यादिना पूजनमुचितोक्त्यादि च कृतवान् ॥ २ ॥ अप्यर्थे एवकार ॥ केनचिद्रागद्वेषप्रधानप्रपंचेन बुद्धिहारिणा बुद्धिक्षोभकेण ॥ ३ ॥
गृहीतमदनारूपमिति पदच्छेद कंठसकल्पितकांतमिति चतुर्थे संबंध ॥ ४ ॥ फुल्लाढ्यपुष्पिततरुलतासंपन्ने वाते मलयानिले वहति सति नीरंध्रे पुष्पगुच्छकैरुपलक्षितवनदेवीनां शुद्धां
तं सतानकलतागेहं प्रविवेशेति परेणान्वय ॥ ५ ॥ ६ ॥ तत्र माल्यैर्मालिता अलंकृता सती मायया संकल्पितमनुरूपं युवानं मदनारूपमदनानामिव अनुरूपं दिव्यसनपोद्दशवा
पाकृतिरूपयस्य तथाविधमत एव उन्मुलाच्छिखिध्वजात्कांतं मनोहरतमं विगं विटं कंठे गृहीत्वा आदाय सा स्थितेत्यन्वय ॥ ७ ॥

१ ज्ञातस्यपिपाठ

जप्यातेशिखिध्वजःसंध्याजप्यस्थानात्कुंजादागत्यमदनिकामन्विष्यकल्पलतागेहेमदनिकांतत्कंठेमनोरमंखिगंचददर्श ॥८॥खिगंविशिनष्टि ॥ कुंतलेत्यादिना ॥ मदनिकाकुंतलैस्वकुंतलैश्चावलितस्कंधम् ॥ समालब्धलिप्तम् ॥ शयनेआवृत्यापरिवर्त्तनेननिष्पेषेणचपर्याकुलितःशेखरचूडावधोयस्यतम् ॥९॥ आकुंचनाद्द्विगुणाकारेवालावाहूलक्षणे उपधानकेउपबर्हेसंसक्तश्रवणादिचतुष्टययस्य ॥ १० ॥ मिथुनस्त्रीपुंसद्वंद्वम ॥ ११ ॥ अगानालग्नसश्लेषस्तच्छलेन अर्पयतआसजयत् ॥ १२ ॥ परस्पराभ्युन्मुखम ॥१३॥

आगत्यान्विष्यकुंजात्सप्रददर्शशिखिध्वजः ॥ लतागेहेमदनिकांकंठेखिंगंमनोहरम् ॥८॥ कुंतलावलितस्कंधंसमालब्धंचचंदनैः ॥ शयनावृतिनिक्षेपपर्याकुलितशेखरम् ॥ ९ ॥ हेमाभेद्विगुणाकारवालाबाहूपधानके ॥ संसक्तश्रवणापांगकपोलतलकुंतलम् ॥ १० ॥ मिथुनंतद्ददर्शाथमिथःप्रहसिताननम् ॥ अन्योन्यवदनासक्तंछन्नंकल्पलतांशुकैः ॥ ११ ॥ आलोलमाल्यशयनंमदनातुरमाकुलम् ॥ अंगलग्नच्छलेनात्मरागमन्योन्यमर्पयत् ॥ १२ ॥ अभ्युन्मुखंसमानंदमुद्दाममदमंथरम् ॥ परस्पराहतंपुष्पैर्वक्षोभ्यांपीडितस्तनम् ॥ १३ ॥ तदालोक्याविकारेणचेतसालंतुतोपसः ॥ अहोसुखंस्थितौखिंगावित्याहसशिखिध्वजः ॥ १४ ॥ तिष्ठतांगयथाकामंसुखंखिंगौयथास्थितम् ॥ विघ्नंमाकरवंभीतावित्युक्त्वानिर्जगामसः ॥ १५ ॥ ततोमुहूर्त्तमात्रेणप्रपंचंतमुपेक्ष्यसा ॥ निर्ययौदर्शयंतीस्वंरतिफुल्लाकुलंवपुः ॥ १६ ॥ उपविष्टंददर्शैनंनृपंहेमशिलातले ॥ समाधिसंस्थमेकांतमनाग्विकसितेक्षणम् ॥ १७ ॥ तंप्रदेशमुपागम्यलज्जावनमिताननना ॥ तूष्णीमासीत्क्षणंखिन्नाम्लानामदनिकांगना ॥ १८ ॥ क्षणाच्छिखिध्वजोध्यानाद्विरतस्तामुवाचह ॥ अत्यंतमधुरंवाक्यमिदमक्षुब्धयाधिया ॥ १९ ॥ तन्विकिंशीघ्रमेवत्वंविघ्नितानंदमागता ॥ आनंदायैवभूतानियतंतेयानिकानिचित् ॥ २० ॥ भूयस्तोपयतंगच्छकांतंप्रणयवृत्तिभिः ॥ परस्परेप्सितस्नेहोदुर्लभोहिजगत्त्रये ॥ २१ ॥ अहमेतेनचार्थेननोद्वेगंयामिमानिनि ॥ यद्यदिष्टतमंलोकेतत्तदेवंविजानता ॥ २२ ॥ अहंकुंभश्चतन्वंगिवीतरागाविहेतरा ॥ दुर्वासःशापजावालात्वंयदिच्छसितत्कुरु ॥ २३ ॥

अविकारेणक्रोधविकाररहितेन ॥ १४ ॥ स्वदर्शनाद्भीतौतौप्रतिहेअंगयथाकामंतिष्ठततिष्ठतम् ॥ अहंविघ्नंमाकरवदित्युक्त्वानिर्जगाम ॥ १५ ॥ तंमायाप्रपंचमुपेक्ष्यउपसृत्येतियावत् ॥ रत्याविटसंभोगेनफुल्लविकसितमाकुलंच ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ यानिकानिचितसर्वाणीत्यर्थः ॥ २० ॥ परस्परमीप्सितःअकृत्रिमइतियावत् ॥ ॥ २१ ॥ विजानतापुंसाययदिष्टतमतत्तदेवत्वादृशमेवपरोपभोग्यमितिज्ञेयमितिशेषः ॥ २२ ॥ नचत्वदपराधेनममकुंभेअविस्रंभइत्याशयेनाह ॥ अहमिति ॥ त्वंकुंभादितरेवेतिशेषः ॥ अतोयदिच्छसितन्निःशंकंकुरु ॥ २३ ॥

॥२४॥ अननअस्मिप्रार्थितमिरोप ॥२५॥ अबलापत्याऊढातत्पारमन्यारस्वातंत्र्यबलहीना॥कुमारीअनूढाथातरुणीएकांतेजारमाप्यरते रोधनप्रतिषधनकरोत्येष ॥ अयमी
स्वभावइत्यथ ॥ परिखिगमपरिष्वक्तआरेणतुंवचास्सपम्परतिविमनस्वेअगेवेहेमनःप्राणादीनांविनिवेशितम्॥ भावेक्त ॥स्थैर्यनकरोति ॥ तरलतरमनःप्राणाभूत्वासतप्यतइत्यर्थ
॥ २६ ॥ क्षीणादिपुवशीकारसमर्थसौंदर्याद्याप्यएवैकपुंसामसमागमेहतुनाम्य ॥ यदिस्त्रिय पुवशीकारसमर्थासुदरतांयाता भामाएकांतेषपुंसांपुरोभवतितदातासामसगमेन
कश्चिद्वदु ॥ नम्बग्निसाक्षिकतयाविवाहितस्यभर्तुमन्यु शास्त्रीय परपुरुषसगमनिषेधोअनापद्यबलक्षणआक्रद स्वपातिव्रत्यभगश्चविवेकदृशापर्यालोच्यमानाआरासगमेहे

मदनिकोवाच॥ ॥एवमेषमहाभागस्त्रीस्वभावोहिचंचल ॥कामोत्यष्टगुण स्त्रीणांनकोपकर्तुमर्हसि ॥ २४॥ अबलाहमनेनास्मिरा
त्रौगहनकानने॥त्वयिसध्याजपपरेकिंकरोमिवराकिका ॥ २५॥ अबलावाकुमारीवाजारनरतिरोधनम्॥ करोतिपरिखिगेननागे
खेविनिवेशितम्॥ २६॥ स्त्रिय सुदरतांयाता पुर पुसामसंगमे॥मन्युर्निषेधआक्रद सतीत्वंकिंकरिष्यति॥२७॥ अबलास्त्रीतथाबाला
मूढाहमपराधिनी॥क्षंतुमर्हसिनाथत्वक्षमावतोहिसाधव ॥२८॥ ॥शिखिध्वजउवाच॥ ॥मन्युर्ममनबालेंतर्विद्यतेखइववद्रुम ॥
केवलसाधुनिधत्वान्नेच्छामित्वामहवधूम्॥२९॥सुहृत्त्वेनवनांतेषुपूर्ववत्सुखमंगने॥ वीतरागतयानित्यसममेवरमावहे॥ ३०॥
श्रीवसिष्ठउवाच॥ ॥एवसमतयातत्रस्थितेतस्मिन्शिखिध्वजे॥चूडालाचिंतयामासतत्सत्वेनोदिताशया ॥ ३१॥ अहोवतपरसा
म्यभगवानयमागत ॥वीतरागतयाऽक्रोधोजीवन्मुक्तोवतिष्ठते॥ ३२॥ नैनहरतितेभोगानमहत्योपिसिद्धय ॥ नसुखानिनदु खानि
नापदोनचसपद ॥ ३३॥ चिंतिता सकलाएकप्रयात्येनमनिंदिता ॥मन्येमहर्धय कांतानारायणमिवापरम्॥ ३४॥ आत्मवृत्तांतम
खिलतमेनस्मारयाम्यहम्॥ कुभरूपमिदत्यक्त्वाचूडालैवभवाम्यहम्॥ ३५॥ इतिसचित्यचूडालाचूडालावपुरक्षता॥ दर्शयामासत
त्राशुत्यक्त्वामदनिकावपु ॥ ३६॥ तस्मान्मदनिकादेहाच्चूडालानिर्गतवसा॥ यभावस्यपुरोयुक्तानिगतवसमुद्गकात्॥ ३७॥

तव किंनस्पुसभाह ॥ मन्युरिति ॥ प्रबलतररतिरागबाधितास्तेनआरसगनिरोद्धुंसमर्थाइतिभाव ॥२७॥ अतएवक्षमापयामीत्याशयेनाह ॥ अबलेति ॥ २८ ॥ खेआकाशे
द्रुमइव ॥ वधूंभार्यानिच्छामि ॥ २९ ॥ ३० ॥ तस्यसत्वेनरागद्वेषवासनाशून्यतयापरीक्षितचित्तेन ॥ उदिताशयात्दृष्टा ॥३१॥ अक्रोधइतिच्छेद ॥३२ ॥ तेइष्टमार्थिताभो
गाःसिद्धयश्च ॥ ३३ ॥ चिंतितामदभिप्रेता सकलाजीवन्मुक्तलक्षणभूता शांतिसमाधेयस्याविरूपाअनिंदितामहर्धयएकमेनप्रयातिप्राप्नुवतिआश्रयतीतियावत्॥ ३४ ॥
तमेवगुणविशिष्टमात्मवृत्तांतस्मारणयोग्यभूतमेनमतिस्मारयामि ॥ ३५॥ ३६ ॥ मुक्तायागधारणायतीसमुद्गकात्सपुटकान्निर्गतेव ॥ ३७ ॥

प्रणयेभर्तृचित्तानुरजनेपेशलाचतुराम् ॥ दयितापूर्वंदयिताम् ॥३८॥ माधवेवसंतेसमुदितांपद्मिनींकमलिनीमिव ॥ अथवासमुदितासमुद्रादाविर्भूतांवामाधवस्यविष्णोः पद्मि नीपद्महस्ताश्रियमिव ॥ रामावतारावसानेरामस्यविष्णुभावेप्राक्सीतात्वेनभूमितलप्रविष्टाततोभूमितलात्पुनरुपगताश्रियमिवरत्नसपुटकात्प्रकटितारत्नश्रियमिवचनृपोनि जादयिताचूडालापरिददर्शपुरोददर्शेत्यर्थः ॥ ३९ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०अष्टोत्तरशततम सर्गः ॥ १०८ ॥ ॥ ७ ॥ ॥ दृष्ट्वापृष्टवान्नृपोध्यानाद्बुद्धा सर्वंसुविस्मितः ॥ तुष्टःप्रशस्यचूडालामालिंग्याचानयन्निशाम् ॥ १ ॥ इदवक्ष्यमाणम् ॥१॥ कुंभादिरूपेणत्वमेवकिमिहासि कियत्कालकिमर्थंवाइहमत्सन्निधौतिष्ठसि ॥ य

तांददर्शानवद्यांगींपुनःप्रणयपेशलाम् ॥ कांतांमदनिकामेवचूडालांदयितांस्थिताम् ॥ ३८ ॥ समुदितामिवमाधवपद्मिनीमुपगता मिवभूमितलाच्छ्रियम् ॥ प्रकटितामिवरत्नसमुद्गकात्परिददर्शनिजांदयितांनृपः ॥ ३९ ॥ ॥ इत्यार्षेवा०वा०दे०मो०नि०पू०चू० चूडालास्वरूपदर्शनंनामअष्टोत्तरशततमःसर्गः ॥ १०८ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अथतांदयितांदृष्ट्वाविस्मयोत्फुल्ललो चनः ॥ शिखिध्वजउवाचेदमाश्चर्याकुलयागिरा ॥ १ ॥ कात्वमुत्पलपत्राक्षिकुतःप्राप्तासिसुंदरि ॥ किमिहासिकियत्कालंकिमर्थमिह तिष्ठसि ॥ २ ॥ अंगेनव्यवहारेणस्मितेनानुनयेनच ॥ ममजायाविलासेनतत्कलेवोपलक्ष्यसे ॥३॥ ॥ चूडालोवाच ॥ ॥ एवमेवप्रभो विद्धिचूडालास्मिनसंशयः ॥ अकृत्रिमेणदेहेनलब्धोस्यद्यमयास्वयम् ॥ ४ ॥ कुंभादिदेहनिर्माणैस्त्वांबोधयितुमेवमे ॥ प्रपंचःशतशा खल्वमिहयातोवनांतरे ॥ ५ ॥ यदाराज्यंपरित्यज्यमोहेनतपसेवनम् ॥ त्वमागास्तत्प्रभृत्येवत्वद्बोधायाहमुद्यता ॥ ६ ॥ अनेनकुंभदेहेन मयैवत्वंविबोधितः ॥ कुंभादिदेहनिर्माणंत्वांबोधयितुमेवमे ॥ ७ ॥ माययानतुकुंभादिकिंचित्सत्यंमहीपते ॥ अथोविदितवेद्यस्त्वंध्या नेनैतदखंडितम् ॥ ८ ॥ सर्वंपश्यसितत्त्वज्ञध्यानेनाश्ववलोकय ॥ अथचूडालयेत्युक्तोबद्धापरिकरंनृपः ॥ ९ ॥ आत्मोदंतंविशेषेणध्याने नामलमैक्षत ॥ अभिराज्यपरित्यागाच्चूडालादर्शनावधि ॥ १० ॥ सर्वंमुहूर्त्तध्यानेनचात्मोदंतंददर्शसः ॥ आराज्यसंपरित्यागाद्वर्त्तमा नक्षणक्रमम् ॥ ११ ॥

यद्यपिकुंभस्थितिकालप्रमाणंजानात्येवतथाप्यस्याबेषां तरेणकुंभागमनात्प्रागपिस्थितिसंभावनात्कियत्कालमितिप्रश्नः ॥२॥ अंगेनअवयवसंस्थानेनतच्चेष्टालक्षणव्यवहारेणअनुनयेनप्रेमवाक्प्रबंधशैल्याममजायायाश्चूडालाया प्रसिद्धेनविलासेनतस्याःकलामूर्त्तिरिवउपलक्ष्यसेदृश्यसे ॥ ३॥ अकृत्रिमेणसहजेन ॥ ४ ॥ ५ ॥ तत्प्रभृतितदाप्रभृत्येव ॥ ६ ॥ ७ ॥ सत्यमकाल्पनिकम् ॥ ध्यानेनप्रागुक्त योगधारणया ॥ ८ ॥ पश्यसिद्रक्ष्यसि ॥ परिकरतादृशधारणानुकूलासनादि ॥ ९ ॥ अभिउपरि ॥ १० ॥ आवर्त्तमानक्षणक्रममितिअत्राप्याङनुकृष्यते ॥ ११ ॥

---

१ आराज्येत्यपिपाठ.

॥ १२ ॥ पुलकोज्वलतांगतौबाहूविसार्यप्रसार्यआलिलिंगेतिपरेणान्वय ॥ गलद्गलच्छिथिलंभवत्स्रवत् ॥ चत्वारिक्रियाविशेषणानि ॥१३॥ भावशब्देनाभाभिव्यक्तपरस्परानुरागलक्षण स्थायिभाव ॥ योयादृशोवाचामगोचर परमानंदरूप शृंगाररसोबभूवसवासुकिजिह्वाभिरपिवक्तुंनशक्यतइत्यन्वय ॥ १४ ॥ दिविस्थौचंद्रसूर्याविमायामिवमिलत्तनूपंकेनाद्रमृदाकृताविव ॥ १५ ॥ शैलीएकशिलासमुत्कीर्णपरस्परालिंगितमूर्तीद्वयश्लिष्टौमिलितौचिरमास्ताम् ॥१६॥ आनंदातिशयेनमनसोजडीभावेनतत्सद्भावव्यंजकलिमार्दर्शनाच्छून्यहृदयोपमौ ॥ १७॥ लक्ष्येलोचनस्थैर्यहेतोर्मनसोजडीभावादेवालक्षस्थितलोचनंयथास्यात्तथाआस्ताम् ॥ प्रणयपेशलंयथास्यात्तथाकांतांप्रतिउवाचे

सर्वमालोक्यभूपालोविरराम समाधित ॥ समाधिविरतोहर्षविकासिनयनांबुज ॥ १२ ॥ विसार्यतरसाबाहूपुलकोज्वलतांगतौ ॥ गलद्गघनस्नेहमुच्चद्बाष्पस्फुरत्स्पृहम् ॥ १३ ॥ आलिलिंगचिरकांतानकुलोनकुलीमिव ॥ तयोरालिंगनेतस्मिंस्तत्रभावोबभूवय ॥ ॥ १४ ॥ नसवासुकिजिह्वाभिर्वक्तुंहर्षेणशक्यते ॥ दिविस्थाविवपंकेनकृताविवमिलत्तनू ॥ १५ ॥ शैलाविवसमुत्कीर्णौश्लिष्टावास्ताचिरप्रियौ ॥ मुहूर्त्तंनगलद्हर्षजलौपुलकपीवरौ ॥ १६ ॥ बाहूविश्लथयतामीपन्निन्यतुस्तौशनै प्रियौ ॥ अमृतापूर्णहृदयौसशून्यहृदयोपमौ ॥ १७॥ उन्मुक्तभुजमास्तांतावलक्षस्थितलोचनम् ॥ घनानंदक्षणस्थित्वातूर्ष्णींप्रणयपेशलम् ॥ १८ ॥ कांतांचिबुकसलग्नकरप्रोवाचभूपति ॥ अत्यंतमधुरस्निग्ध कांत स्वकुलयोपिताम् ॥ १९ ॥ पुण्यश्चरतिनिष्पद स्वादुनामामृतादपि ॥ कियत्प्रमाणस्तन्वंग्या त्वयाबालेंदुमुग्धया ॥ २० ॥ अनुभूतश्चिरक्लेशोभर्त्तुरर्थेनदारुण ॥ एवंदुरुत्तरात्तस्मात्संसारकुहरादहम् ॥ २१॥ उत्तारितोययाबुद्ध्या साहिकेनोपमीयते ॥ अरुंधतीशचीगौरीगायत्रीश्री सरस्वती ॥ २२ ॥ समस्ता पेलवायंतेतवतन्व्यागुणश्रिया ॥ धी श्री कांति क्षमामैत्रीकरुणाद्यासुसुंदरि ॥ २३ ॥ कांतास्वाकारकांतासुप्रथमेवाभिलक्ष्यसे ॥ परेणाध्यवसायेनत्वयाहमवबोधित ॥ २४ ॥ केनप्रत्युपकारेणपरितुष्यतितेमन ॥ मोहादनादिगहनादनंतगहनादपि ॥ २५ ॥ पतितंव्यवसायिन्यस्तारयतिकुलस्त्रिय ॥ शास्त्रार्थगुरुमंत्रादि तयानोत्तारणक्षमम् ॥ २६ ॥

तिपरेणान्वय ॥१८॥१९॥ रतिनिष्पंदोऽनुरागरसोऽत्यंतमाधुर्यादिविशेषणचतुष्टयविशिष्ट कियत्प्रमाणोविस्तीर्णइतियावत् ॥२०॥ भर्त्तुरर्थेनपुरुषार्थसिद्धिप्रयोजनेनहेतुना ॥२१॥ ययाभवदुद्धेइबुद्ध्या ॥ साबुद्धि ॥ २२ ॥ धी श्रीरित्याद्यारक्षकन्याआकारेणसौंदर्येणकांतासुस्त्रीषुप्रथमाप्रसिद्धास्तास्वपित्वंप्रथमाश्रेष्ठासतीवाभिलक्ष्यसेइतिपरेणान्वय ॥२३॥२४॥ स्वार्थायात्मन केनप्रत्युपकारेणपरितुष्यति ॥ येनतुष्यतितादृशःप्रत्युपकारोदुर्लभइतिभाव ॥२५॥ शास्त्रार्थैस्त्वाबिरतिशयोत्कि भवसागरा ॥२६॥

॥ २७ ॥ २८ ॥ निरिच्छाया कृतकृत्यायास्तेप्रत्युपकारेऽहमसमर्थइत्याह ॥ निरिच्छायाइति ॥ २९ ॥ कुलांगनांमन्येत्वामितिशेषः ॥ लोकेप्रसिद्धा सर्वाकुलांगनास्त्वयाऽधुनाजिताइतिशेष ॥ ३० ॥ नारीणांसौजन्यादिगुणोत्कर्षचर्चासुप्रथमव्यपदेश्याभविष्यसि ॥ ३१ ॥ स्वापेक्षयागुणजालैरतिशायिनीत्वांनिर्मितवतोधातुर्विषयेप्रकुपिताइ

यथैताःस्नेहशालिन्योभर्तॄणांकुलयोषितः॥ सखाभ्रातासुहृद्भृत्योगुरुर्मित्रंधनंसुखम्॥ २७॥ शास्त्रमायतनंदासःसर्वंभर्तुःकुलांगनाः सर्वदासर्वयत्नेनपूजनीयाःकुलांगनाः॥ २८॥ लोकद्वयसुखंसम्यक्सर्वंयासुप्रतिष्ठितम्॥ निरिच्छायाःप्रयातायाःपारंसंसारवारिधेः॥ २९॥ कथमस्योपकारस्यकरिष्येतेप्रतिक्रियाः॥ मंन्येकुलांगनांलोकेलोकेसर्वास्त्वयाधुना॥ ३०॥ नारीसौजन्यचर्चासुव्यपदेश्याभविष्यसि॥ त्वांनिर्मितवतोधातुर्गुणजालातिशायिनीम्॥ ३१॥ मन्येप्रकुपितानूनमरुंधत्यादिकाःस्त्रियः॥ सतीत्वंरूपसौजन्यगुणरत्नसमुद्गिके॥ ३२॥ एहिमेत्वद्गुणोत्कस्यपुनरालिंगनंकुरु॥ ॥श्रीवसिष्ठउवाच॥ ॥इत्युक्त्वामृगशावाक्षींचूडालांतांशिखिध्वजः॥ ३३॥ आलिलिंगपुनर्गाढंनकुलोनकुलीमिव॥ ॥चूडालोवाच॥ ॥देवशुष्कक्रियाजालपरेत्वय्याकुलात्मनि॥ ३४॥ भूयोभूयोभृशमहंत्वदर्थंदुःखिताभवम्॥ तेनत्वदवबोधात्मास्वार्थएवोपपादितः॥ ३५॥ मयातदत्रकिंदेवकरोपिममगौरवम्॥ ॥शिखिध्वजउवाच॥ ॥त्वयायथावरारोहेस्वार्थःसंपाद्यतेशुभः॥३६॥ तमिदानींतथासर्वाःसाधयंतुकुलांगनाः॥ ॥चूडालोवाच॥ ॥बुध्यसेकांतविश्रांतोजगज्जालतटेविभो॥ ३७॥ अद्यतंप्राक्तनंकिंचिन्मोहंसमनुपश्यसि॥ इदंकरोमिनेदंतुप्राप्नोमीदमितिस्थितिम्॥३८॥ अंतर्हससितांकच्चिद्दशापेलवतांधियः॥ तास्तुच्छतृष्णाकलनास्ताःसंकल्पकुकल्पनाः॥ ३९॥ त्वयिनाद्यावलोक्यंतेदेवव्योम्नीवपर्वताः॥ किंत्वमद्यांगसंपन्नःकिंनिष्ठोसिकिमीहसे॥ ४०॥ कथंपश्यसिपाश्चात्यंदेहचेष्टाक्रमंविभो॥ ॥शिखिध्वजउवाच॥ ॥सुमनःपूर्णनीलाब्जमालासारविलोचने॥ ४१॥

त्यन्वय.॥ त्वमेवसतीपतिव्रता ॥ ३२ ॥ ३३ ॥३४ ॥ ३५ ॥ ३६ ॥ साधयत्वित्याशीःकाकुर्वा ॥ साधयितुनशक्नुवतीत्यर्थ. ॥ जगल्लक्षणस्यजालस्यतटेपरावधौविश्रांत. सस्तत्त्वतोबुध्यसेकच्चिदितिव्यवहितेनान्वयः ॥ ३७ ॥ तंप्राक्तनंपयोव्रतोपवासादिमोहंकिंचित्तुच्छसमनुपश्यसिकच्चित् ॥ ३८ ॥ धियःअपक्वदशयापेलवतांकोमलताम् ॥ ३९ ॥ ४० ॥ कथकीदृशंकिंसत्यमुततुच्छमित्यर्थ ॥ सुमनोभि.पूर्णानीलाब्जमालासरतःसादृश्यादनुसरतस्तथाविधेविलोचनेयस्यास्तथाविधेहेचूडाले ॥ ४१ ॥

१ मन्येकुलागनालोकेजिता सर्वाइत्यपिपाठोदृश्यतेपरतुनायटीकाकारसमतइतिभाति

मदद्वन्द्वात्मनुग्रात्मन सात्मनोहस्यविवकस्यस्मरणस्ययायस्ययस्यात प्रकाशकतयास्थितात सस्यतस्यात अहमपि उपपरमसमीपभूतमत्यगात्मतयाआस्थित ॥तथाचे
दानींत्वदपायापासिनयैवाहमपरमार्थानिस्तानुभवनेवममापिस्थितिसातव्यत्यथ ॥ तामेवदशामुपदर्शयति ॥ निरीहइत्यादिना ॥ ४२ ॥ अर्थरूप परमार्थसत्स्वरूप अनहमि
ति ॥ अहमहमित्याकारस्सारस्वतनयाहमेवाहंभूत्वास्थितइत्यथ ॥अहमत्यक्तमनचित्तैकसम्यधिष्ठितस्तानिरतिशयानंददशामुपयातोस्मियांमयमसहसर
स्विरलिरयच्चरसाहरिहरादयमहाप्रभावाअपितमतिपद्यतिननिरंतरमनुशकुवंति ॥ तस्यहनदशाभ्रनामूल्याइराते आत्मासेपांसमवर्तानिमुते ॥ अहमस्यात्मनोत्सापनाघटना

त्यमेव यस्य यस्यांतस्तस्याहमुपास्थित ॥ निरीहोस्मि निरंशोस्मि नभःस्वच्छोस्मि निस्पृह ॥ ४२ ॥ शांतोहमर्थरूपोस्मि चिरायाहम
हम्स्थित ॥ तां दशामुपयातोस्मि यतश्चित्तैकवर्त्मनि ॥ ४३ ॥ प्रतिपद्यति सहस्रानयादि हरिहरादय ॥ नकिंचिन्मात्रचिन्मात्रनिष्ठोस्मि स्व
स्थ आस्थित ॥ ४४ ॥ भ्रमणाद्विमुक्तोस्मि संसारेणालिलोचने ॥ नतुष्टोस्मि नखिन्नोस्मि नायमस्मि नचेतरत् ॥ ४५ ॥ नस्थूलोस्मि
नसूक्ष्मोस्मि सत्यमस्मि च सुंदरि ॥ तेजोथियाव्ययातेन जित्वावपतितेनच ॥ ४६ ॥ क्षयातिशयमुक्तेन प्रकाशेनास्मि वैसम ॥ शांतो
स्मि साम्यनतास्मि स्वस्थोस्मि विगताशय ॥ ४७ ॥ परिनिर्वाण एवास्मि सदृशोस्मि पतिव्रते ॥ यत्तदस्मि तदेवास्मि वक्तुं शक्तोस्मि नेतरत्
॥ ४८ ॥ तरंगतरलापांगे गुरुस्त्वमनघोसि ते ॥ प्रसादेन विशालाक्ष्या स्तीर्णोस्मि भवसागरात् ॥ ४९ ॥ पुनर्मलं न गृह्णामि शतध्मातसुव
र्णवत् ॥ शांत स्वस्थ मृदु यत्तो वीतरागो निराशधी ॥ ५० ॥ सर्वातीत सर्वगश्च खमिवायमहं स्थित ॥ ॥ चूडालोवाच ॥ ॥ एवं स्थिते
महानंत्वप्राणेशद्य प्रिय ॥ ५१ ॥ किमिदानीं प्रभो गृह्णीराचतेते महामते ॥ ॥ शिखिध्वज उवाच ॥ ॥ प्रतिषेधं न जानामि न जाना
म्यभिवाछितम् ॥ ५२ ॥ यदाचरसि तन्नित्यं कदाचिद्दयितत्त्वया ॥ यद्यन्मतं ते सफलं तथास्त्वविफलं प्रिये ॥ ५३ ॥ नकिंचिदनुसंधातुं जा
नाम्यपरसुंदर ॥ यदवेषि विजानासि तं तं कुरु सुंदरि ॥ ५४ ॥

च नभाव ॥ ४१ ॥ ४४ ॥ अर्थरूप कायवण ॥ इतरत्कारणम् ॥ ४५ ॥ सत्यमबाधितवस्तु ॥ तेजोथियावासुपादिमलादहि मयातेनजित्वापतितेनचनभोमाभविसारि
णावकाशनाशापन ॥ ४६ ॥ जगत सर्वमस्यनिरस्यसाम्यनतास्मि ॥ विगताशयानिमनस्क ॥ ४७ ॥ हेपतिव्रते ॥ सतीयतेइत्निपाठसतीनोयन मिममतयस्याइतिमुत्स्वस्या
र्थमिदमहम्‌ताप ॥ अथवास्यात्मस्वरूपनिष्ठाटक्षणप्रतसदृशस्तुन्यशीलाभक्तास्मीत्यर्थ ॥ ४८ ॥ ४९ ॥ शतवारध्मातमग्रीशोधितयस्तुवर्णतद्वत ॥ यत्त स्वरूपनिष्ठा
यामन्वापुन ॥ निराशाविषासनाधीयस्य ॥ ५० ॥ ५१ ॥ इदनरामतइतिप्रतिषिध्यतइतिप्रतिषध ॥ कर्माणिधर्मा ॥ ननजानामि ॥ ५२ ॥ कदाचित्मुख्यमकाले ॥ मत
माप्रदत्त ॥ ५३ ॥ अपरमात्मापविनारदेवीराक्षीम्यपूर्णतामुदर ॥ जानासिपसम्यतयविशेष ॥ ५४ ॥

धारयिष्यामिइदिसमतास्मीतियावत् ॥ गलितमिष्टइच्छातद्विषयजातयस्मात्तथाविधेनइष्टग्रहणमनिष्टस्याप्युपलक्षम ॥ ५५ ॥ ५६ ॥ आहर्तुमाचरितुम् ॥ ५७ ॥ एषणरा ज्यभोगाद्यपेक्षणम् ॥ ५८ ॥ तत्रोपपत्तिमाह ॥ यदिति ॥ यद्यस्मात्कारणात्प्राणानाचक्षुरादीनामुख्यप्राणस्यचस्वस्वोचितविषयान्वेषणेसत्यत्रपरमात्मनिकोतिशयः ॥ न निष्क्रियासंगचिन्मात्रभूतोहितत्त्ववि चाज्ञानामिवतत्त्वविदोत.करणदेहेंद्रियादितादात्म्याध्यासोस्तियेनेंद्रियाणाविषयभोगाभ्यासेनमालिन्येआत्मनोपिमालिन्यप्रसक्तिः ॥ त्कोभोगानभ्यसतेनकश्चिदित्यर्थ ॥ अस्यतेर्विकरणपदव्यत्ययश्छादसः ॥ तस्मात्प्रारब्धभोगमात्रेणतदभ्यासव्यसनमालिन्याप्रसक्तेस्तद्भोगादौतद्भोगातेमध्येतदंतरालेचवयं

तदेवधारयिष्यामिप्रतिबिंबंयथामणिः ॥ चेतसागलितेष्टेनयथाप्राप्तमनिंदितम् ॥ ५५ ॥ नस्तौमिनचनिंदामियदिच्छसितदाचर ॥ ॥ चूडालोवाच ॥ ॥ यद्येवंतन्महाबाहोसमाकर्णयमन्मतम् ॥ ५६ ॥ आकर्ण्यजीवन्मुक्तात्मंस्तदेवाहर्तुमर्हसि ॥ सर्वत्रैक्यावबोधेन मौर्ख्यक्षयभुवान्विताः ॥ ५७ ॥ निरिच्छास्तावदाकाशविशदाःसंस्थितावयम् ॥ यादृगेषणमस्माकंतादृशंतदनेषणम् ॥ ५८ ॥ यत्प्रा णानैषणेकोत्रचिन्मात्रोभ्यसतेहिकः ॥ तस्मादाद्यंतमध्येपुयेवयंपुरुषोत्तम ॥ ५९ ॥ शेषमेकंपरित्यज्यतएवेमेस्थितावयम् ॥ राज्येन सांप्रतेनेमंकालंनीत्वाक्रमेणवै ॥ ६० ॥ विदेहतांप्रयास्यामःप्रभोकालेनकेनचित् ॥ ॥ शिखिध्वजउवाच ॥ ॥ वयमाद्यंतमध्येषुकी दृशास्तरलेवद ॥ ६१ ॥ शेषमेकंपरित्यज्यतिष्ठामःकथमेववा ॥ ॥ चूडालोवाच ॥ ॥ वयमाद्यंतमध्येपुराजानोराजसत्तम ॥ ६२ ॥ मोहमेकंपरित्यज्यभवामःपुनरेवते ॥ त्वएवनगरेराजाभवत्वंस्वासनेस्थितः ॥ ६३ ॥ ललामानतुकांतानांमहिषीतेभवाम्यहम् ॥ सन्त पामत्तवास्तव्यानृत्यन्नवनवांगना ॥ ६४ ॥ सपताकाध्वनत्तूर्यापुष्पप्रकरिणीपुरी ॥ लसद्वल्ल्यासमंजर्यारणत्पुष्पालिमालया ॥ ६५ ॥ मधुमासलतालक्ष्म्याचिराद्भवतुसासमा ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इतिचूडालयाप्रोक्तोविहस्यसशिखिध्वजः ॥ प्रोवाचमधुरंवाक्य मक्षुब्धंविगतज्वरः ॥ ६६ ॥ एवंचेत्तद्विशालाक्षिस्वायत्तानखिविष्टपे ॥ सिद्धभोगश्रियस्तासुनिवसामिनकिंप्रिये ॥ ६७ ॥

येयत्स्वभावास्तेतत्स्वभावाएवप्रारब्धशेषमेकभोगेनपरित्यज्यक्षपयित्वास्थितानतुकिंचिदन्यथाभूताअन्येवाभविष्यामइत्यर्थः ॥ ५९ ॥ इममायु.शेषरूपंकालम् ॥ ६० ॥ तस्मादाद्यतमध्योप्वित्यस्यार्थांतरमपिसंभावयस्तज्जिज्ञासमानोराजापृच्छति ॥ वयमिति ॥ ६१ ॥ तदभिप्रायानुसारेणैवचूडालापितदर्थंवर्णयति ॥ वयमिति ॥ ६२ ॥ तत्रशेषशब्दस्यार्थांतरमाह ॥ मोहमिति ॥ ६३ ॥ कातानामतःपुरस्त्रीणाललामोभूषणभूताभवामिभविष्यामि ॥ मत्ताहृष्टावास्तव्या.पुरवासिनोयस्याम् ॥ एतदादीनिपुरी विशेषणानिमधुमासलतालक्ष्मीसाम्योपपादकानि ॥ ६४ ॥ ६५ ॥ ६६ ॥ यदितेमयासहभोगेच्छास्तितर्हिइंद्रेणप्रार्थितादिव्यभोगाएवभुज्यंताकिमानुषैरितिराजाह ॥ एवचेदिति ॥ ६७ ॥

॥६८॥६९मिथुनद्वंद्वं॥७० ॥७१॥ यथास्थानयथास्थितम्॥ ७२॥ चिरदंपत्योःप्राचीनजायापत्यो ॥ ७३॥ दिनाचारसायंसंध्याम्॥ सायंसंध्यांसभास्करामित्युक्ते दिनाचारता॥ परस्परंसिनक्षभागायसोत्कंठावपिनिवासनत्वादनुत्कंठौ ॥ ७४॥ ७५॥ तत्परस्परानुभवसिद्धभोगमोक्षसुखंस्वयंप्रणयवाक्यविलासगर्भंयथास्यात्तथाआश

चूडालोवाच॥ ॥नराजन्ममसंभोगेषुवांछानापिविभूतिषु॥ स्वभावस्यवशादेवयथाप्राप्तेनमेस्थिति ॥६८॥ नसुखायममस्वर्गोनराज्यनापिचक्रिया॥ यथास्थितमविक्षुब्धंतिष्ठामिस्वस्थचेष्टिता॥६९॥ इदंसुखमिदंनेतिमिथुनेक्षयमागते॥ सममेवपदेशांतेतिष्ठामीहयथासुखम्॥७०॥ ॥शिखिध्वजउवाच॥ ॥युक्तमुक्तंविशालाक्षित्वयैतत्समयाधिया॥ कोवाथ किलराज्यस्यग्रहेत्यागेपिवाभ्रवेत॥७१॥ सुखदुःखदशाचिंतात्यक्त्वाविगतमत्सरम्॥ यथाप्राप्तस्थानमेवेमौतिष्ठाव स्वस्थतांगतौ॥ ७२॥ इतितत्रकथालापकथनेन तयोर्द्वयोः॥ कांतयोश्चिरदंपत्योर्वासरस्तनुतांययौ॥ ७३॥ अथोत्थायदिनाचारंयथाप्राप्तमनिंदितौ॥ सोत्कंठावप्यनुत्कंठौचक्रतुः कार्यकोविदौ॥ ७४॥ स्वगसिद्धिमनाहत्यतस्थतु पूर्णचेतसौ॥एकस्मिन्नेवशयनेतैस्तैः प्रणयचेष्टितैः ॥साव्यतीयायरजनीतयोर्जीवद्विमुक्तयोः ॥ ७५॥ तद्भोगमोक्षसुखमुत्तमयोः स्वयमाशंसतोःप्रणयवाक्यविलासगर्भम्॥ उत्कंठतांप्रणयिनोर्धियमानयंतीदीर्घामुहूर्तवदसौरजनीजगाम ॥ ७६॥ ॥इ०वा०वा०दे०मो०नि०पू०चू०चूडालाप्रकटीकरणंनामनवाधिकशततमः सर्गः ॥ १०९॥ श्रीवसिष्ठउवाच॥ ॥ततः समुदितेसूर्येवितमस्यंबरेस्थिते॥ समुद्गकादिवजगन्मणौतस्मिन्विनिर्गते॥ १॥ विकसत्यरुणोपांतेचक्षुषीवांबुजाकरे॥ आचारेष्विवलोकेषुप्रसृतेष्वकरश्मिषु॥२॥ दंपतीतौसमुत्थायकृतसंध्याक्रमौस्थितौ॥ पद्मासनेस्वदुःस्निग्धेकांतौकांचनस्फरे॥३॥ अथोत्थायाथचूडालारत्नकुंभपुर स्थितम्॥ कातासंकल्पयामासपूर्णंसप्ताब्धिवारिभिः ॥ ४॥ तेनमंगलकुंभेनतपूर्वाभिमुखंस्थितम्॥ भार्याभर्तारमेकांतेस्वराज्येऽभिषिषेचसा॥ ५॥

सता कथयंतोरलयोःधियमुत्कंठनांसोत्कंठतामानयंतीआपयंतीरजनीदीर्घापिमुहूर्तवत्जगामेत्यर्थः ॥ ७६॥ ॥इ०वासि०ता०म०नि०पू०नवोत्तरशततमः सर्गः ॥ १०९॥ सदसत्कर्मसंग्येनमत्रेनस्वपुरगतौ॥ तौरुत्वाद्यचिरराज्यविमुक्ताविति वर्ण्यते ॥ १॥ समुद्गकात्संपुटाज्जगत्प्रकाशकमणाविवसमुदितेसूर्येवितमस्यंबरेस्थितेसति ॥ १॥ जनानामाचारेष्विवसुर्बांबुजाकरविकसन्निर्गम ॥ २॥ ३॥ सप्ताब्धिवारिभिःपूर्णंपुर स्थितरत्नकुंभराज्याभिषेकायसंकल्पयामास ॥ ४॥ भर्तारम् ॥ ५॥

सकल्पमात्रेणोपगतेस्वयोग्यविष्टरेसिंहासने ॥ ६ ॥ मौनंमुनियोग्यमिदंशांतंतेजउत्सृज्यशासनयोग्यमिंद्रादीनांतेजोभर्तुमर्हसि ॥ ७ ॥ ८ ॥ पट्टाभिषेकाभावात्प्रतीहारप दद्वारपालस्थानतत्रविनयात्तिष्ठतीम् ॥ देवीपदेकृताभिषेकास्थाने ॥ ९ ॥ १० ॥ योगसिद्धातवसत्यसंकल्पात्संभवम् ॥ भूषणालंकारशस्त्रास्त्रादिभिर्महाविभवंबद्धक्षौहिणी

संकल्पोपगतेहैमेस्वभिषिक्तंस्वविष्टरे॥ स्थितंप्रोवाचतन्वीसाचूडालादेवरूपिणी॥६॥ केवलंमौनमुत्सृज्यतेजःशांतमिदंप्रभो॥ अष्टानांलोकपालानांतेजस्त्वंभर्त्तुमर्हसि॥ ७॥ चूडालयेतिसंप्रोक्तोवनेराजाशिखिध्वजः॥ वदन्नेवंकरोमीतिमहाराजत्वमाययौ॥ ८॥ अथप्रतीहारपदेतिष्ठंतीमाहमानिनीम्॥ अद्यदेवीपदेराज्ञींत्वांकरोम्यभिषेकिनीम्॥ ९॥ इत्युक्त्वासरसिस्नाप्यमहादेवीपदेतथा॥ अभिषिक्तांनृपःकृत्वासतामाहनिजांप्रियाम्॥१०॥प्रियेकमलपत्राक्षिक्षणात्संकल्पसंभवम्॥ महाविभवमुद्दामसैन्यमाहर्त्तुमर्हसि॥११॥ इतिकांतवचःश्रुत्वाचूडालावरवर्णिनी॥ सैन्यंसंकल्पयामासप्रावृड्घनमिवोद्धटम्॥ १२॥ सैन्यंददृशतुस्तत्तौवाजिवारणसंकुलम्॥ पताकापूरिताकाशंनीरंध्रीकृतकाननम्॥ १३॥ तूर्यारवध्वनच्छैलगुहागहनकोटरम्॥ मौलिरत्नमहोद्योतविचूर्णिततमःपटम्॥ १४॥ तत्रगंधद्विपवरेकृतपार्थिवमंडले॥ रक्षितेदृष्टसामंतैरारूढौनृपदंपती॥ १५॥ ततःशिखिध्वजोराजामहिष्यासममिष्टया॥ पदातिरथसंबाधंकर्षन्नतिबलोबलम्॥ १६॥ चचालाचलचालिन्यासेनयासततोवनात्॥ भिंदन्निवरसाशैलंवात्ययेवाशुभौमया॥ १७॥ तस्मान्महेंद्रशैलेंद्राच्चलितःसमहीपतिः॥ पथिपश्यन्गिरीन्देशान्नदीर्ग्रामान्सजंगलान्॥ १८॥ दर्शयन्स्वप्रियायास्तमात्मवृत्तांतसंचयम्॥ प्रागल्पेनैवकालेनस्वांपुरींस्वर्गशोभनाम्॥ १९॥ तत्रतेतस्यसामंतास्तदागमनमादृताः॥ विविदुर्जयशब्देननिर्जग्मुश्चोदिताशयाः॥ २०॥ एकनांसंप्रयातेनतारतूर्यनिनादिना॥ बलद्वयेनतेनासौविवेशनगरंनृपः॥ २१॥ लाजपुष्पांजलिव्रातैराटृष्टःपौरयोषिताम्॥ वणिग्मार्गमसौपश्यन्परंपरमनुत्तमम्॥ २२॥

परिमाणैरुद्दामम् ॥ ११ ॥ १२ ॥ नीरध्रीकृतंनिरवकाशीकृतंकाननंयेन ॥ १३ ॥ तूर्यारवैःप्रतिध्वनंतःशैलगुहागहनकोटरायस्य ॥ १४ ॥ यन्मदगंधमन्येद्विपानसहंतेसगंधद्विपः ॥ १५ ॥ बलंसैन्यम् ॥ १६ ॥ भौमयाभूस्थया ॥ १७ ॥ १८ ॥ तत्प्राक्तनमात्मनःस्वस्यशाङ्गराग्निर्गतस्यमार्गेजानपदैःसहवृत्तंवृत्तांतसंचयम् ॥ १९ ॥ सामंतास्तत्तद्देशाधिपत्येनिरूपितामन्त्रिणः ॥ उदिताशया सोत्कंठाः ॥ २० ॥ २१ ॥ लाजाजलीनांपुष्पाजलीनांचव्रातैः ॥ परंपरमुत्तरोत्तरम् ॥ २२ ॥

॥१८॥१ रूस्यानभपलर्कैलासमिवोच्छ्रितस्थितम ॥२२॥ तैलोकैशाखपसिद्धैरधिष्ठाप्तरांखवीणाछमचामरादिभिर्दपयोर्म्यैर्मंगलैःसंयुतम् ॥२४॥ अंतःपुरेस्वानिस्वामि
त्व समाधिभोगादीनि ॥२५॥ देहधारणाद्विरतोविदेहकैवल्यसुखेप्रतिष्ठितोऽभूदित्यर्थः ॥२६॥ एतदेवस्पष्टमाह ॥ देहमिति ॥ इतिअनयामामुक्तरीत्या ॥२७॥ राज्यकृत्वासमया
चूडालयासहआरमप्यभासमतामकर्मादयित्वापि ॥२८॥ भुक्तेभुभोगेपुनीरागाबुद्धिर्यस्य समेभ्योविसमादृष्टिर्यस्य सआर्य शिखिध्वजइतिवर्णितप्रकारेणबोधेनकामलक्षण
मृत्युमितारशिखिरिनूपलक्षितवर्षसहस्राणिजम्बूद्वीपएकराअस्यभावऐकराज्यचकार ॥ २९ ॥ पूर्वार्धेनशिखिध्वजस्थितिमनूपतारामायकर्तव्यमतयोत्तरार्धेनोपदिशति ॥

पताकाध्वजसधार्धमुक्ताजालमनोरमम् ॥ नृत्यगेयपरस्त्रीकंस्वभूमावचलस्थितम् ॥२३॥ प्रविश्यायगृहंतेत्रै सयुतम्पमंगलैः ॥सम्य
क्समानयामासप्रणतप्रकृतिव्रजम् ॥२४॥ पुरोत्सवंस्थशंकृत्वादिनसप्तकमुत्तमम् ॥ अकरोद्राजकार्याणिस्वानिस्वांतःपुरेनृप ॥२५॥
दशवर्षसहस्राणिराज्यकृत्वामहीतले ॥ सहचूडालयारामविरतोदेहधारणात ॥ २६ ॥ देहमुत्सृज्यनिर्वाणमस्नेहइवदीपक ॥ अपुनर्ज
न्मनेरामजगामेतिमहामति ॥ २७॥ दशवर्षसहस्राणिसमदृष्टितयातया ॥ राम्यतयारमय्यापिनिर्वाणपदमाप्तवान् ॥ २८ ॥ विगत
भयविषादोमानमात्सर्यमुक्तःप्रकृतसहजकर्माभुक्तनीरागबुद्धि ॥ इतिसमसमदृष्टिर्मृत्युमार्योथजित्वादशशिशिरसहस्राण्येकराज्य
चकार ॥२९॥ भुक्त्वाभोगाननेकान्भुविसकलमहीपालचूडामणित्वेस्थित्वावैदीर्घकालपरमसतपदप्राप्तवान्सत्वशेष ॥ एवरामागतं
त्वमरतमनुसरन्कायजातंविशोकस्तिष्ठोत्तिष्ठस्वयंवाप्रसभमनुभवन्भोगमोक्षादिलक्ष्मी ॥ ३० ॥ ॥ इ० वा० वा० दे० मो० नि० पू०
चू० शिखिध्वजनिर्वाणंनामदशोत्तरशततमःसर्ग ॥ ११० ॥ ॥ ५ ॥ ॥ चूडालोपाख्यानसमाप्तम् ॥ ॥ श्रीवसिष्ठउ
वाच ॥ ॥ एतत्तेसर्वमाख्यातंशिखिध्वजकथानकम् ॥ अनेनगच्छन्मार्गेणनकदाचनखिद्यसे ॥ १ ॥ एतांदृष्टिमवष्टभ्यरागद्वेषविना
शिनीम् ॥ नित्यंनीरागयाबुद्ध्यातिष्ठावष्टभ्यतत्पद ॥ २॥

भुक्त्वेति ॥ सशिखिध्वजोदीर्घकालंभुविसकलमहीपालानांचूडामणित्वेस्थित्वाअनेकान्भोगान्भुक्त्वाअशेषमजरपरंपदसत्त्वसम्प्राप्तःक्षेपःसम्प्राप्तवान् ॥ हेरामत्वमपिआ
गतमारब्धप्राप्तमरतकायजातमनुसरन्विशोकःसमाधौतिष्ठ ॥ अथवास्वयंप्रसभभोगमोक्षप्रदानलक्ष्मीरनुसरन्व्युत्तिष्ठव्युत्थितस्तिष्ठ तवसमाधिव्युत्थानयोर्नफलभेदोस्तीत्य
र्थ ॥ ३० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०दशोत्तरशततमःसर्ग ॥ ११० ॥ ॥ ५ ॥ ॥ राज्ञ्याराजेवपिप्राप्तसर्वस्त्वस्यास्तितःकथ ॥ अंतेइत्का
रस्त्यामात्पूर्णोगुरिमिवर्ण्यते ॥ १ ॥ अनेनमार्गेणगच्छन्नखिद्यसेनिरंतरमात्मसेरोप्रविष्यसि ॥ १ ॥ बुद्ध्याअवष्टभ्यपरमार्थतयादृढमवलंबितस्पूर्णनिश्चयेन ॥ २ ॥

१ अस्यशिखिध्वजाख्यानस्यनापिव्यवहारः

भोगमोक्षमयस्त्वचुर ॥ ३ ॥ शिखिध्वजस्यप्रसिद्धेनसर्वत्यागक्रमेणैवकचोपियथाबोधमवाप्तवांस्तथात्वमपिबुध्यस्व ॥ ४ ॥ समासेनसाकल्येन ॥ ५ ॥ ६ ॥ बालभावात्समुत्तीर्णोनिर्गतोयौवनप्राप्तमात्रइतियावत् ॥ पदपदार्थज्ञःसर्वविद्यास्थानेपुनिष्णातस्तत्त्वमसिवाक्यगोचरपदपदार्थज्ञश्च ॥ ७॥ जीवएवतंतुरिवस्वबंधसहस्रकरोयस्यतथाविधेनजतुनामादृशेन ॥ ८ ॥ उड्डीयतेशीघ्रनिर्गम्यतइतियावत् ॥ अतिवैराग्यदार्ढ्यात्त्यक्तविषयेपश्चात्तापोद्वेगरहितंयथास्यात्तथाकृतेनसर्वत्यागेन ॥ ९ ॥ १० ॥ महाशयाः

यथाशिखिध्वजोराज्यंकृतवानेवमीदृशम् ॥ रामव्यवहरन्राज्येभोगमोक्षमयोभव ॥ ३ ॥ शिखिध्वजक्रमेणैवयथाबोधमवाप्तवान् ॥ कचोबृहस्पतेःपुत्रस्तथाबुध्यस्वराघव ॥ ४ ॥ ॥ श्रीरामउवाच ॥ ॥ बृहस्पतेर्भगवतःपुत्रोसौभगवान्कचः ॥ यथाप्रबुद्धोभगवन्समासेनतथावद ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ शृणुराजन्कथांश्रीमाञ्छिखिध्वजवदेवसः ॥ प्रबोधंपरमंयातोदेवदेशिकजःकचः ॥ ६ ॥ बालभावात्समुत्तीर्णःसंसारोत्तरणोन्मुखः ॥ कचःपदपदार्थज्ञोबृहस्पतिमभाषत ॥ ७ ॥ ॥ कचउवाच ॥ ॥ भगवन्सर्वधर्मज्ञ कथंसंसृतिपंजरात् ॥ अस्मान्निर्गम्यतेब्रूहिजंतुनाजीवतंतुना ॥ ८ ॥ ॥ बृहस्पतिरुवाच ॥ ॥ अनर्थमकरागारादस्मात्संसारसागरात् ॥ उड्डीयतेनिरुद्वेगंसर्वत्यागेनपुत्रक ॥ ९ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इत्याकर्ण्यकचोवाक्यंपितुःपरमपावनम् ॥ सर्वमेवपरित्यज्य जगामैकांतकाननम् ॥ १० ॥ बृहस्पतेस्तद्गमनंनोद्वेगायबभूवह ॥ संयोगेचवियोगेचमहांतोहिमहाशयाः ॥ ११ ॥ अथवर्षेषुजातेषु त्रिषुपंचसुसोनघ ॥ पुनःप्रापमहारण्येकस्मिंश्चित्पितरंकचः ॥ १२ ॥ परिपूज्याभिवाद्यैनंसमालिंगितपुत्रकम् ॥ अपृच्छद्वाक्पतिंभूयः सकचःकांतयागिरा ॥ १३ ॥ ॥ कचउवाच ॥ ॥ अद्येदमष्टमंवर्षंसर्वत्यागःकृतोमया ॥ तथापितातविश्रांतिंनाधिगच्छाम्यनिंदिताम् ॥ १४ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ एवमार्तवचस्तस्मिन्कचेवदतिकानने ॥ सर्वमेवत्यजेत्युक्त्वावाक्पतिर्दिवमुद्ययौ ॥ १५ ॥ गतेतस्मिन्कचोदेहाद्वल्कलाद्यप्यथात्यजत् ॥ गतेंद्वभ्रार्कतारेणशरद्व्योमासमोभवत् ॥ १६ ॥ पुनर्वर्षत्रयेणैषकस्मिंश्चित्काननांतरे ॥ तत्याजांबुदवर्षादिशरदीवनभस्तलम् ॥ १७ ॥

मेरुवत्स्थिराशयाः ॥ ११ ॥ त्रिषुपंचसुचवर्षेषुअष्टास्वित्यर्थः ॥ तच्चित्तपरिपाकतारतम्यंविज्ञायशेषंत्याजयितुमागतंपितरंप्रापेत्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥ दिवमाकाशम् ॥ १५ ॥ गतेंद्विति ॥ सन्निहितसूर्योदयकालिकशरद्व्योमेतियावत् ॥ १६ ॥ पुनरित्याद्यर्धमुत्तरश्लोकेदूयमानमनाइत्यत्रप्राग्योज्यम् ॥ कथंचशरद्व्योमासमोभवत्तत्राह ॥ तत्याजेति ॥ क्वचिद्गिरिगुहाश्रयेणाबुदवर्षादितत्याजपरिजहार ॥ १७ ॥

शरदारीनुफषिद्विमेतपूर्वासएवदूयमानमनाएयपुनर्वर्षपयेणाकस्मिश्चित्काननांतरेतमेवपितरगुरुमागतमाप ॥ १८ ॥ १९ ॥ वेणुलताद्य ॥ आदिपदात्कमंडलुगृहस्यजिनादयपि ॥२ ॥२१॥ अग्निपपअग्निष्टमान् ॥२२॥ यदानपेरनदृष्टवान् ॥ चित्तस्यत्वाग्वेषणविशारारूढायाःआकृष्चित्तास्यानेभपचनादितिभाव ॥ पितरधियायमौचिततिकानितिया मन् ॥२३॥ ननुभिपुरवाह्यास्तराणामिवदेहेंद्रियविषयस्यामावेषचित्तत्याग-सेस्स्यतितमाह ॥ पदार्थेति ॥ तदेतत्पदार्थस्वदेहादिर्किंचित्तस्यकमाषित्तस्यादिस्यनिर्मयादनागस्क चित्तनिलपनापराधशून्यदहादिस्पर्धीकित्यजामित्यागास्यनोचितइत्यर्थ ॥२४॥२५॥२६॥२७॥ चित्तचित सोक्षिणाचित्तपृथक्कृत्यजानतोजीवन्मुक्तजना ॥२८॥ हेमयाम्रि

उवासैकोदिग्गतेपुशांतशून्यवपु श्वसन् ॥ दूयमानमना प्रापतमेवपितरगुरुम् ॥१८॥ कृतपूजाक्रमौभत्त्यासमालिंगितपुत्रकम् ॥ अपृच्छत्सपचासूय खेदगद्गदयागिरा ॥ १९ ॥ ॥ कचउवाच ॥ ॥ तातसर्वपरित्यक्तकर्थावेणुलताद्यपि ॥ तथापिनास्तिविश्रांति स्वपदे श्विचरोम्यहम् ॥ २० ॥ ॥ बृहस्पतिरुवाच ॥ ॥ चित्तसर्वमितिप्राहुस्तत्त्यक्त्वापुत्रराजसे ॥ चित्तत्यागविदु सर्वत्यागसवविदोजना ॥ २१ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इत्युक्त्वावाक्पति पुत्रपुष्पुवेतरसानभ ॥ अन्वियेषकचश्चित्तपरित्यक्तुमखिन्नधी ॥ २२ ॥ चिंतयन्नप्यसौचित्तनयदावेदकानने ॥ तदाचिंतयामासधियैवपितरययौ ॥ २३ ॥ पदार्थस्वदेहादिनचित्तमितिकथ्यते ॥ तदेतत्किक्कवाध्यर्थीनिरागस्कत्यजाम्यहम् ॥ २४ ॥ पितु सकाशगच्छामिज्ञातुचित्तमहारिपुम् ॥ ज्ञात्वातत्संत्यजाम्याशुततस्तिष्ठामिविज्वर ॥ २५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इतिसंचिंत्यसकचउज्जगामत्रिविष्टपम् ॥ वाक्पतिंप्राप्यसस्नेहवर्वदेप्रणनामच ॥ २६ ॥ अपृच्छच्चैनमेकांतेकिंचित्तभगवन्वद ॥ स्वरूपंब्रूहिचित्तस्ययेनतत्संत्यजाम्यहम् ॥ २७ ॥ ॥ बृहस्पतिरुवाच ॥ ॥ चित्तनिजमहंकारविदुश्चित्तविदोजना ॥ अतयायमहंभावोजतोसच्चित्तमुच्यते ॥ २८ ॥ ॥ कचउवाच ॥ ॥ त्रयस्त्रिंशन्महाकोटिप्रमाणस्यमहामते ॥ गुरोगीर्वाणवृंदस्यकथमेतद्देतिमे ॥ २९ ॥ मन्येस्यदुष्करस्त्यागोनसिद्धिमुपगच्छति ॥ कथमेषकिलत्यक्तुंशक्यतेयोगिनांवर ॥ ३० ॥ ॥ बृहस्पतिरुवाच ॥ ॥ अपिपुष्पावदलनादपिलोचनमीलनात् ॥ सुकरोहंकृतेस्त्यागोनक्लेशोत्रमनागपि ॥ ३१ ॥ यथेतदेवतनयतथाशृणुवदामिते ॥ अज्ञानमात्रसंसिद्धंवस्तुज्ञानेननश्यति ॥ ३२ ॥

यस्त्रिंशन्महाकोटिप्रमाणस्यगीर्वाणवृंदस्यगुरो हेमहामतेबृहस्पतेअहंभावएवचित्तमित्येतत्कथमेतन्मेवद ॥ अहंकारस्यलोकेआत्मतयैवप्रसिद्धेस्तस्यागेआत्मत्यागापत्त्यानिराशत्तिरितिभाव ॥ २९ ॥ नाप्यात्मनस्त्यागोपायसंभवत्यदेयस्वभावत्वादित्याशयेनाह ॥ मन्येइति ॥ ३० ॥ सत्यमतत्साक्ष्यपरिचयेतत्त्यागोदुष्करःपरिचितेतुसाक्षिणिपुष्पावदलनादपिसुकरइत्याशयेनबृहस्पतिरुत्तरमाह ॥ अपीति ॥ ३१ ॥ अज्ञानयुक्तसाक्ष्यपरिचयलक्षणोमोहस्तन्मात्रसिद्धमहंकारादिवस्तु तच्चज्ञानेनतत्परिचयमात्रेण ॥ ३२ ॥

१ साक्षिणश्चित्तपृथक्कृत्येत्यपेक्षितमितिभाति

बालकस्पितवेतालवद्वस्तुऽसन्नेवसन्निवसंपन्नोऽज्ञदृष्ट्यास्थित ॥ ३३ ॥ तथाहंकृतिरपिमिथ्यास्फुरतीत्यन्वय ॥ ३४ ॥ नचसदसन्निविशेषः ॥ ३५ ॥ सर्वप्रपंचमिथ्यात्वेकिं विद्यतेतदाह ॥ एकमिति ॥ सर्वमिथ्यात्वेपितद्वेदनविद्यते ॥ तदविद्यमानताया साधकाभावादेवासिद्धेरितिभावः ॥ ३६ ॥ तदसत्वेजगत्प्रथानुपपत्तेरपितदस्तीत्याह ॥ सर्वत्रेति ॥ अविवेतिशेष ॥ ३७ ॥ तत्रदृग्दृश्ययोर्मध्येअयमहंकार क कुतोनिमित्तात्कथदृग्दृश्यमेलनात्प्रकारांतरेणवाउत्थित उभयविलक्षणस्वभावस्यास्योद्भवएवदुर्वचइत्याह ॥ क्वेति ॥ रजोराशि शुष्कपांसुनिचय ॥ ३८ ॥ अयदेहादि सपित्रादिनोजातोहम ॥ दिक्कालाभ्याविवशीकृतवृद्ध्यपक्षयादिनापरिणमितम् ॥ ३९ ॥ तर्ह्यहंकस्तत्राह ॥ दिगिति ॥ सर्वार्थमयसर्वपदार्थविकारात्मनाभासमानवस्तुतस्त्वपारार्थ्याद्द्वयत्वाच्चैकार्थम् ॥ ४० ॥ सर्वार्थमयमित्यस्यसर्वपदार्थसारभूतमित्यर्थांतरंसदृष्टांतदर्शयन्प्रकृ

वस्तुतोनास्त्यहंकारःपुत्रमिथ्याभ्रमोयथा॥असन्सन्निवसंपन्नोबालवेतालवत्स्थितः॥३३॥ यथारज्ज्वांभुजंगत्वंमरावंबुमतिर्यथा॥ मिथ्यावभासःस्फुरतितथामिथ्याप्यहंकृतिः॥३४॥ असदेवयथाद्वित्वंमोहादिंदौविलोक्यते॥ तथास्फुरत्यहंकारोनसत्योवाप्यसन्नच ॥३५॥ एकमाद्यंतरहितंचिन्मात्रममलांतरम्॥ खादप्यतितरामच्छंविद्यतेसर्ववेदनम्॥ ३६ ॥ सर्वत्रसर्वदासर्वप्रकाशंसर्वजंतुषु ॥ तदेवैकंकचत्यंबुविलोलास्वब्धिवीचिषु॥ ३७ ॥ अत्रकोयमहंभावःकुतोवाकथमुत्थितः॥ क्वाप्सुजातोरजोराशिःक्वानलादुत्थितंजलम्॥ ३८ ॥ अयंसोहमितिव्यर्थंप्रत्ययंत्यजपुत्रक ॥ तुच्छंपरिमिताकारंदिक्कालविवशीकृतम् ॥ ३९ ॥ दिक्कालाद्यनवच्छिन्नंस्वच्छंनित्योदितंततम्॥ सर्वार्थमयमेकार्थंचिन्मात्रममलंभवान्॥ ४० ॥ फलकुसुमदलानांसर्वदिक्संस्थितानांरसइवजगतांत्वंसंस्थितःसर्वदैव॥ विमलतरचिदात्मानित्यमेवास्यनंतःकइवकचतवाहंनिश्चयोभावमूर्त्तेः॥ ४१॥ ॥इ० वा० वा० दे० मो० नि० पू० कचोपाख्यानेकचप्रबोधोनामैकादशोत्तरशततमःसर्गः॥ १११ ॥ ॥ ५ ॥ ॥श्रीवसिष्ठउवाच॥ ॥इतिप्राप्यपरंयोगमुपदेशमनुत्तमम्॥ जीवन्मुक्तोबभूवासौततोदेवगुरोःसुतः ॥ १ ॥

तनिगमयति ॥ फलेति ॥ सर्वदिक्षुसंस्थितानाफलानाकुसुमानांदलानांपर्णानाचकारणीभूत सारभूतश्चतरोरतर्गतोरसइवत्वंसर्वजगतांकारणीभूतःसारभूतश्चांतःसर्वदैवसंस्थितोविमलतरोनतश्चिदात्मैवनित्यमसि ॥ हेकचभावमूर्त्तेरखंडाद्वयसन्मात्रस्वरूपस्यतवायपरिच्छिन्नोहंनिश्चयःकइवनकश्चिदित्यर्थः ॥ अथवासर्वदिक्संस्थितानांफलकुसुमादीनामैकरस्यमापन्नोरसोमध्विवसर्वजगतासारभूतनिरतिशयानदरूपःसस्थितइत्यर्थः ॥ अतःसर्वदैवत्वमनंतोविगतमायामलश्चिदात्मैवासीत्यादिप्राग्वत् ॥ ४१ ॥ ॥ इति श्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वा० पू० एकादशोत्तरशततमःसर्गः ॥ १११ ॥ ॥ ५ ॥ ॥ कचाख्यानप्रबुद्धस्यरामस्यप्रश्नतोत्रहि ॥ मिथ्यापुरुषकाख्यानरक्षणमुदीर्यते ॥ १ ॥ युज्यतेअखंडैक्येनावधार्यतेप्रत्यगात्मापरमात्मनायेनसयोगस्ततथाविधमुपदेशम् ॥ १ ॥

नपात्वपविश्व ॥ २ ॥ मैनमिति ॥ मिथ्यात्वबुद्धाउपेक्षणमेवतस्यागोनसत्वनिवसकयमसापेक्षइतिभाव ॥ ३ ॥ यमेनतवनिमारणेकयमरणजन्मभयनिर्मोक्षस्तमाह ॥ असभवतीति ॥ शमतननअसमासतमपी ॥ ननुकामकर्मवासनारूपबीजबलान्मरणजन्मभीकुतोनस्यात्तत्राह ॥ नभइति ॥ अहंकारक्षेत्रेसत्येवतानिबीजानिप्ररोहंतिनतु द्वापतर्गानिभाव ॥ ४ ॥ अहंकारबाधितेऽवशिष्ट कीदृशोहमित्याह ॥ निरशमिति ॥ ५ ॥ इदृशोहंकथमहंभावभावितोभूवतत्राह ॥ यथेति ॥ तथाअहंभावभावितोप्यस्मि इवाभातइत्यर्थ ॥ ६ ॥ तत्प्रकारहेतुस्तमाह ॥ अबोधेनेति ॥ तन्निरासेपिहेतुमाह ॥ बोधेनेति ॥ ७ ॥ द्वित्वमति कार्यदर्शने एकत्वमति कारणदर्शने तेद्वेत्यक्त्वाउभयानुस्यू

निममोनिरहंकारश्छिन्नग्रंथि प्रशांतधी ॥ कथोयथास्थितोरामतथातिष्ठाविकारवान् ॥२॥ अहंकारमसद्विद्धिमैनमाश्रममात्यज॥ असत शशशृंगस्यकिलत्यागग्रहौकुत ॥ ३ ॥ असंभवत्यहंकारेकुतेमरणजन्मनी ॥ नभक्षेत्रेतथाप्युप्तकेनसगृह्यतेफलम् ॥ ४ ॥ निर शशांतमकलमवभावात्मकततम् ॥ परमादप्यणो सूक्ष्मचिन्मात्रत्वमनोमयम् ॥५॥ यथाभसस्तरंगादियथाहेम्नोंगदादिच ॥ तद्वा तदिवाभामतथाहंभावभावित ॥ ६ ॥ अबोधेनजगत्सर्वमायामयमिवास्थितम ॥ बोधेनसकलब्रह्मरूपमप्यतेनघ ॥ ७ ॥ द्वित्वैकत्व मतीत्यक्त्वाशेपस्य सुखितोभव ॥ मादु खितोभवव्यर्थत्वमिथ्यापुरुषोयथा ॥ ८ ॥ मायेयमतिदुष्पारासासारीगादतांगता ॥ शरदामि हिंस्रवाश्रुबोधेनायातितानवम् ॥ ९ ॥ ॥ श्रीरामउवाच ॥ ॥ परमामागतोस्म्यतस्तृप्तिंज्ञानामृतेनते ॥ अवग्रहभयाक्रांत स्वासारेणे वचातप ॥ १० ॥ अद्यतनेवसिक्तोहमतगंच्छामिशीतताम् ॥ उपयपिसमस्तानातिष्ठाम्यतुलसंपदाम् ॥ ११ ॥ नवत्तमनुगच्छामिव चांसिवदतस्तव ॥ ऐदवानांमरीचीनांचकोरस्तृपितोयथा ॥ १२ ॥ वसोपिभूयपृच्छामित्वांप्रश्नमिममीश्वर ॥ कोनामवसोप्यग्रस्तन पियत्यमृतासवम् ॥ १३ ॥ किमुच्यतेमुनिश्रेष्ठमिथ्यापुरुपनामकम् ॥ वस्त्ववस्तुकृतजगद्वस्तुजातवदाशुमे ॥ १४ ॥

तस्मात्तमपरित्यज्यस्वनिष्ठित सुखितोभवेत्यर्थ ॥ अतद्दर्शनेनुपक्ष्यमाणपुरुपस्येवदु खमाभिलवसुपरित्याह ॥ मेति ॥ ८ ॥ तानवमपक्षयम् ॥ ९ ॥ अवग्रहोवर्षप्रतिबंधस्त द्रूपनाक्रांतभ्रातर्मेंदिवारामतदस्यासारेणेव ॥ १० ॥ अपीतिपूर्वार्धस्पार्थसमुच्चये ॥ हैरण्यगर्भसंपत्तानामतुलसंपदामुपरिनिरतिशयानंदलक्षणेतिष्ठामि ॥ ११ ॥ नवउक्ती नामास्वादनतृप्तिभाव ॥ १२ ॥ ज्ञातम्यतत्त्वस्यसम्यगनुभवात्तृप्तोपि ॥ अमृतरूपमासवपेयम ॥ १३ ॥ एवमशस्योन्मुखीकृत्यगुरुप्रति मादु खितोभवव्यर्थत्वमिथ्यापुरुषो यथेतिमार्कस्पचितमिथ्यापुरुषाख्यानकौतुकात्प्राम पृच्छति ॥ किमुच्यतइति ॥ यन्मिथ्यापुरुषेणवस्तुअवस्तुकृतं अवस्तुजगद्वस्तुजातंकृतवदित्यर्थ ॥ १४ ॥

तत्त्वदृशाहासजननीम् ॥ १५ ॥ बालइवपेलवयाधियामूढोविक्षिप्तः ॥ मौर्ख्येणाज्ञानेनचगूढ सवृत ॥ १६ ॥ एकांतेजनदृष्ट्यगोचरेस्थाने ॥ तस्यस्वरूपेणापिमिथ्यात्वमा ह ॥ केशोड्रकमिवेति ॥ १७ ॥ तत्रतदाश्रयस्थानेतस्मान्मिथ्यापुरुषादन्यत्किमपिनास्ति यत्किंचिदस्तीतिप्रतीयतेतत्सएवनतद्व्यतिरिक्तम् ॥ यच्चान्यत्सपश्यतितत्तस्यैवभ्रात्या भासमितिसएवेत्युक्तिरित्यर्थ. ॥ अहमेवेदमदृश्यसर्वमितिसनपश्यति यतोदुर्मतिरित्यर्थ ॥ १८ ॥ खस्याहमुपजीवक. खमेउपजीव्य अत खमेवाहमिदंशाचखमात्स्वरक्षा

श्रीवसिष्ठउवाच ॥ मिथ्यापुरुषबोधायशृणुराघवशोभनाम् ॥ इमामाख्यायिकांहासजननींमदुदीरिताम् ॥ १५ ॥ अस्तिकश्चिन्महा बाहोमायायंत्रमयःपुमान् ॥ बालपेलवधीमूढोगूढोमौर्ख्येणकेवलम् ॥ १६ ॥ सएकांतेक्वचिज्जातःशून्येतत्रैवतिष्ठति ॥ केशोंड्रकमिव व्योम्निमृगतृष्णेववामरौ ॥ १७ ॥ तस्मादन्यन्नतत्रास्तियदस्तिचसएवतत् ॥ यच्चान्यत्तत्तदाभासंनचपश्यतिदुर्मतिः ॥ १८ ॥ संकल्प स्तस्यसंजातस्तत्रवृद्धिमुपेयुषः ॥ खस्याहंखमहंखंमेखंरक्षामीतिनिश्चलः ॥ १९ ॥ खंस्थापयित्वारक्षामिवस्त्विष्टंस्वयमादरात् ॥ इतिसं चिंतयन्व्योमरक्षार्थंसोकरोद्गृहम् ॥ २० ॥ तस्यकोशेबबंधास्थांरक्षितंखंमयेत्यसौ ॥ गृहाकाशेनसंतुष्टस्ततःसरघुनंदन ॥ २१ ॥ अथका लेनतत्तस्यगृहंनाशमुपाययौ ॥ ऋत्वंतरेणाब्दइववातेनेवतरंगकः ॥ २२ ॥ हागृहाकाशनष्टंत्वंहाक्वयातमसिक्षणात् ॥ हाहाभग्नमसि स्वच्छमित्येवैतच्छुशोचसः ॥ २३ ॥ इतिशोकशतंकृत्वापुनस्तत्रैवदुर्मतिः ॥ कूपंचक्रेखरक्षार्थंकूपाकाशपरोभवत् ॥ २४ ॥ ततोनाशं सकालेननीतःकूपोपितस्यवै ॥ कूपाकाशेगतेशोकनिमग्नोसौततोभवत् ॥ २५ ॥ कूपाकाशप्रलापांतेकुंभंशीघ्रमथाकरोत् ॥ कुंभाका शपरोभूत्वास्वयंनिर्वृतिमाययौ ॥ २६ ॥ कुंभोपितस्यकालेननाशंनीतोरघूद्वह ॥ यामेवदिशमादत्तेदुर्भगःसाहिनश्यति ॥ २७ ॥ कुंभा काशप्रलापांतेखरक्षार्थंचकारसः ॥ कुंडंतथैवतेनासौकुंडाकाशपरोभवत् ॥ २८ ॥ कुंडमप्यस्यकालेनकेनचिन्नाशमाययौ ॥ तेजसे वतमस्तेनकुंडाकाशंशुशोचसः ॥ २९ ॥ कुंडाकाशस्यशोकांतेखरक्षार्थंचकारसः ॥ चतुःशालंमहाशालंतदाकाशमयोभवत् ॥ ३० ॥

मि ॥ १९ ॥ खस्यइष्टवस्तुखतत्स्वयकस्मिंश्चिदुपाधौस्थापयित्वास्वयमादराद्रक्षामि ॥ २० ॥ तस्यगृहस्यकोशेअतर्भागे ॥ आस्थामदीयमिदमेतावत्खमित्यभिमानम् ॥ सतुष्टःअभूदितिशेष. ॥ २१ ॥ ऋत्वतरेणशरदा ॥ २२ ॥ एतदाकाशम् ॥ २३ ॥ कूपाकाशेपरोममतयाआसक्तः ॥ २४ ॥ नाशपासुमृत्तिकादिपूरणेनतिरोभावम् ॥ २५ ॥ निर्वृतितदभिमानसुखम् ॥ २६ ॥ यामेवेतिसामान्योक्त्यातदुपपत्तिः ॥ २७ ॥ २८ ॥ केनचिद्वनगजमहिषास्कटनादिनिमित्तेन ॥ २९ ॥ चतु शालचतुर्दिक्षुशालायस्यतथा विधम् ॥ मध्येमहाशालसभाकारगृहम् ॥ तदाकाशासक्त्यातदाकाशमयः ॥ स्त्रीमयोजालमइतिवत् ॥ ३० ॥

॥ ११ ॥ कुसूलधान्यासपनम ॥ १२ ॥ १३ ॥ तस्यमिथ्यापुरुषस्य ॥ १४ ॥ उपसहरत्येवमिति ॥ हेरामसमिथ्यापुरुषएवरीत्यागृहेणगहनेनकुम्भवेशेनकूपकुंभाद्युपाधिना
षगगनंगुहायातत्तद्भंगेगृहन्स्थितस्तद्गतागतिसगमूढसत्तदभिमानात्तन्निर्माणरक्षणविनाशेषुघनतराद्दुःखांतरादपिघनदुःखजातमायातिततोयातिनिर्गच्छतिचेत्यर्थः ॥१५॥
इतिश्रीवासिष्ठ०तात्पर्यप्रकाशेनि पू द्वादशोत्तरशततम सर्ग ॥ ११२ ॥ ॥ मिथ्यापुरुषशब्दादेरर्थोऽस्फुटमीयते ॥ तथैवाख्यायिकायाश्चतात्पर्यसाम्यवर्णनात् ॥ १ ॥
उत्तानार्थस्याख्यानचेष्टाप्रायस्यप्रश्नावसरस्त्वसभवमन्यमानोमिथ्यापुरुषाख्यायिकायाअन्यापदेशवाक्यवदन्यार्थेतात्पर्यमितिनिश्चित्यरामस्तपृच्छति ॥ मिथ्येति ॥ मिथ्यानर
प्रसंगेनत्वयायोमायापुरुष कथित अयंकिमभिप्रेत्यतस्तत्कृतव्योमरक्षणंचकिमभिप्रेत्योच्यतइत्यर्थ ॥ १ ॥ यथाभूतयथास्थितम ॥२ ॥ शून्यांबरमायाकाशस्तद्दुःस्थितम् ॥३॥

तदप्यस्यजहाराशुकाल कवलितप्रज ॥ जीर्णपर्णयथावातस्तत शोकपरोभवत् ॥ ३१ ॥ सचतु शालशोकातेखरक्षार्थंचकारह ॥ कुसूलमंबुदाकारंतदाकाशपर स्थित ॥३२॥ तदप्यस्यजहाराशुकालावातइवांबुदम् ॥ कुसूलनाशशोकेनतेनासौपयतप्यत ॥३३॥ एवंगृहघतुःशालकुंभकुंडकुसूलकैः ॥ तस्यापर्यवसानात्माकालोयमतिवर्त्तते ॥ ३४ ॥ एवंस्थित सविवशोगगनगुहायांगृहन्गृहेणग
हनेनकिलात्मबुद्ध्या ॥ दुःखांतराद्घनतराद्घनदुःखजातमायातियातिचगतागतिसंगमूढ ॥ ३५ ॥ ॥इ० वा० वा० दे० मो० नि० पू०
मिथ्यापुरुषोपाख्यानेआकाशरक्षणनामद्वादशोत्तरशततम सर्ग ॥ ११२ ॥ ॥ ५ ॥ ॥ श्रीरामउवाच ॥ ॥ मिथ्यानरप्रसंगेन
किंमायापुरुष प्रभो ॥ कथितोयत्त्वयाव्योमरक्षणंचकिमुच्यते ॥ १ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ शृणुरामयथाभूतमेतत्प्रकटयामिते ॥
मिथ्यापुरुषवृत्तांतकथायाकथिताधुना ॥२॥ मायायंत्रमय प्रोक्तोय पुमान्रघुनंदन ॥ एनत्वंतमहंकारंविद्धिशून्यांबरोत्थितम् ॥३॥
यस्मिन्नाकाशकोशेस्मिन्साधोजगदिदंस्थितम् ॥ तदनंतमसच्छून्यंसर्गादौभवतिस्वयम् ॥ ४ ॥ अत स्थितस्तुदुर्लक्ष्यब्रह्मव्योम्नोयथश
ब्दवत् ॥ तस्मादुदेत्यहंकार पूर्वस्पंदइवानिलात् ॥ ५ ॥ दृढिंयात सगगनेकल्पयत्यात्मतांगत ॥ अनात्मात्माभिधानेनतेनासौयतते
तत ॥६॥ अनात्मात्मैकरक्षार्थंदेहान्नानाविधानसौ ॥ भूयोभूयोविनाशेपिसृजत्याकुलतांगत ॥ ७॥

सर्गादौसृष्टेप्राक ॥ ४ ॥ किंनिरधिष्ठानान्मायाकाशात्दुःस्थितमस्थितचनेत्याह ॥ अतइति ॥ नतन्निरधिष्ठानंकिंत्वमरधिष्ठानतयास्थितंसुदुर्लक्ष्यब्रह्मयस्यतथाविधम् ॥ नभ
सोदृढियात्कथमहंकारादिजगदुःस्थिततत्रदृष्टांतमाह ॥ व्योम्न शब्दवदिति ॥ अहंकारोलिंगात्मासचमायामयस्यभिप्रेत्यतत्रदृष्टांतांतरमाह ॥ स्पंदइवेति ॥ ५ ॥ अनात्मैवर्था
॥ ६ ॥ तस्यानात्मभूतस्यात्मनोरक्षार्थंपदस्य पूर्वपूर्वदेहनाशउत्तरोत्तरनानाविधान्देहान्कामकर्मवासनानुसारेणसृजति ॥ ७ ॥

सःअहंकारएव ॥ ८ ॥ कूपकुंभादिशब्दैरप्युच्चावचदेहाएवलक्षणयोक्ताइत्याह ॥ कूपेति ॥ तद्योग्नितदवच्छिन्नेमायामयात्मनिआत्मभावनांयाति ॥ ९ ॥ क्रियोपाधिभेद निमित्तयौगिकनामानि ॥ यैर्यैः क्रियोपाधिभिर्जगदाकारविभ्रमैरयमहंकारआत्मानमोहयतीत्यर्थः ॥ १० ॥ प्राणधारणाज्जीवोबाह्यार्थाध्यवसायाद्बुद्धिस्तन्मननान्मनस्त च्चितनाच्चित्तमसत्कल्पनान्मायापरिणामिस्वभावत्वात्प्रकृतिः संकल्पनात्संकल्पः संकल्पितार्थस्याकलनात्कलनातस्यविपरिणामादिनिमित्तत्वात्कालस्तत्रैकदेशभेदकल्पना त्कलाचेत्यपिविश्रुतैःप्रसिद्धैः ॥ ११ ॥ आदिपदादुत्पत्तिप्रकरणोक्तमनोनामानिसर्वाण्यपिगृह्यन्ते ॥ अन्यैःकामःसंकल्पोविचिकित्साश्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्यादिश्रुति स्मृत्यादिप्रसिद्धवृत्तिभेदनामभिश्चवृत्तिबाहुल्येनबहुतांगतैः ॥ १२ ॥ तस्मादन्यन्नतत्रास्तियदस्तिचसएवतदितियदुक्ततदनुभवमारोपयति ॥ भूतेति ॥ पूर्णेब्रह्मणिस्वेनप्रथमशू

सएवमायापुरुषोमिथ्यापुरुषएवसः ॥ असदेवोदितोव्यर्थोप्यहंकारोहिमायया ॥ ८ ॥ कूपकुंडचतुःशालकुंभादीन्देहकानसौ ॥ कृत्वा रक्षितआत्मेतियातितद्योग्निभावनम् ॥ ९ ॥ अहंकारस्यतस्यास्यनामानीमानिराघव ॥ शृणुयैर्जगदाकारविभ्रमैर्मोहयत्यसौ ॥ १० ॥ जीवोबुद्धिर्मनश्चित्तंमायाप्रकृतिरित्यपि ॥ संकल्पःकलनाकालःकलाचेत्यपिविश्रुतैः ॥ ११ ॥ एवमाद्यैस्तथान्यैश्चनामभिर्बहुतांगतैः ॥ सहस्ररूपोहंकारःकल्पितार्थैर्विजृंभते ॥ १२ ॥ भूताकाशेततेशून्येजगन्निर्भित्तिनिश्चितम् ॥ सुखदुःखान्यनुभवन्मिथ्यैवपुरुषःस्थितः ॥ १३ ॥ यथैवमिथ्यापुरुषोरक्षन्व्योमात्मशंकया ॥ घटाकाशादिपुक्लिष्टएवंमाक्लेशवान्भव ॥ १४ ॥ आकाशादपिविस्तीर्णःशुद्धःसूक्ष्मः शिवःशुभः ॥ यआत्मासकथंकेनगृह्यतेरक्ष्यतेथवा ॥ १५ ॥ हृदयाकाशमात्रस्यशरीरक्षयसंक्षये ॥ व्यर्थंभूतानिशोचंतिनष्टआत्मेतिशं कया ॥ १६ ॥ घटादिषुप्रणष्टेषुयथाकाशाद्यखंडितम् ॥ तथादेहेपुनष्टेपुदेहीनित्यमलेपकः ॥ १७ ॥ शुद्धश्चिन्मात्रआत्मायमाकाशादप्य णोरणुः ॥ स्वानुभूत्यंशमात्रंहिखवद्रामननश्यति ॥ १८ ॥ नजायतेनम्रियतेक्वचित्किंचित्कदाचन ॥ जगद्विवर्त्तरूपेणकेवलंब्रह्मजृंभते ॥ १९ ॥ सत्यमेकंपदंशांतमादिमध्यांतवर्जितम् ॥ भावाभावविनिर्मुक्तमितिमत्वासुखीभव ॥ २० ॥

न्यरूपेभूताकाशेततेविस्तृतेसतितत्रवाय्वादिकल्पनाक्रमेणकल्पितजगद्गंधर्वनगरमिवनिर्भित्तिकुड्याद्यावरणशून्यमेवयुक्त्याविमर्शेनिश्चितम् ॥ नह्यच्छिद्रेब्रह्मणिच्छिद्रआका शःप्रथममुपपद्यते ॥ सचशून्यात्माअतिविस्तृतोऽचलश्चलनात्मावायुःकथंसपद्यते सचवायुर्नीरूपोऽनुष्णस्तद्विरुद्धस्वभावतेजःकथंसपद्यते तच्चोष्णदाहस्वभावंकथंतद्विरुद्ध शैत्याप्यायनस्वभाववारिसपद्यते तच्चद्रवशोषाकाठिन्यस्वभावकथंतद्विरुद्धस्वभावपृथिवीभावमापद्यतेअतोनिर्भित्त्येवजगदितिनिश्चिततत्रचसपुरुषोमिथ्यैवसुखदुःखान्य नुभवन्स्थितइत्यर्थः ॥ १३ ॥ नचपश्यतिदुर्मतिरितिवर्णितात्तमिथ्यापुरुषोयथामिथ्याक्लेशमनुभूयस्थितस्तथात्वमाभूरित्याह ॥ यथैवेति ॥ १४ ॥ १५ ॥ शरीरलक्षणस्य क्षयस्यनिवासस्यसंक्षये ॥ १६ ॥ १७ ॥ स्वानुभूत्यंशःअहंकारनिष्कृष्टस्वप्रकाशचित्तावन्मात्रंहि ॥ १८ ॥ १९ ॥ २० ॥

र्णितमिथ्यापुरुषरूपमहंकारत्याजयन्पूर्वरिशिष्टचिन्मात्रेस्थैर्योपदेशेनोपसंहरति॥सर्वापदामिति ॥ अस्वातन्त्र्यापादकत्वादस्वतन्त्रम् ॥ आसन्नोनरकादिपातोयस्मात्तथाविध
सर्वविवेकविरोधि अनार्यानियमहंकृतिपदं सकलमभिमतव्यवहेंद्रियविषयलक्षणफलासहितबोधान्मूलोच्छेदेनविमुच्यशेषेनिष्कृष्टचिन्मात्रेसुबद्धपदद्दढस्थितश्चेत्सर्वोत्तम
नामयासीत्यर्थ ॥ २१ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० पू० मयोदशोत्तरशततम सर्ग ॥ ११३ ॥ ॥ ५ ॥ ॥ विविच्यसदसद्रूपेदृष्टांतैरिहभूरिशः ॥
असद्रूपनिरासेनसद्रूपेस्थैर्यमीर्यते ॥ १ ॥ अथत सर्वस्यमनोविकल्पमात्रत्वाद्विकल्पप्रसुप्तदशनिमसुकरोनिरासइतिव्युत्पादयितुप्रथमपरेब्रह्मणिमनःकल्पनामाह ॥ परस्मादि

सर्वापदांनिलयमध्रुवमस्वतन्त्रमासन्नपातमविवेकमनार्यमन्तम् ॥ बोधादहंकृतिपदसकलविमुच्यशेषेसुबद्धपदमुत्तमतांप्रयासि ॥
॥२१॥ ॥इ०वा०वा०दे०मो०नि०पू०मिथ्यापुरुषोपाख्याननामत्रयोदशोत्तरशततम सर्ग ॥११३॥ ॥५॥ ॥श्रीवसिष्ठउवाच॥
परस्माद्ब्रह्मणःपूर्वंमनःप्रथममुत्थितम् ॥ मननात्मकमाभोगितत्स्थमेवस्थितिंगतम् ॥ १ ॥ पुष्पकोशइवामोदोमहोर्मिरिवसागरे ॥
रश्मिजालमिवादित्येमनोब्रह्मणिराघव ॥ २॥ तस्याद्दस्यात्मतत्त्वस्यविस्मृत्यैवगतंस्थितिम् ॥ नान्यस्मादागतरामजगद्रज्जुभुजगवत्
॥३॥ आदित्यव्यतिरेकेणयोभावयतिराघव ॥ रश्मिजालमिदंव्येतत्तस्यान्यदिवभास्वत ॥४॥ कनकव्यतिरेकेणकेयूरंयेनभावितम् ॥
केयूरमेवतत्तस्यनतस्यकनकंहितत् ॥ ५ ॥ आदित्याव्यतिरेकेणरश्मयोयेनभाविता ॥ आदित्यएवतेतस्यनिर्विकल्प सउच्यते ॥ ६ ॥
सलिलव्यतिरेकेणतरंगोयेनभावित॥ तरगबुद्धिरेवैकास्थितातस्यनवारिधी ॥७॥ सलिलाव्यतिरेकेणतरंगोयेनभाव्यते ॥ अंबुसामा
न्यताबुद्धिर्निर्विकल्प सउच्यते ॥ ८ ॥ कनकाव्यतिरेकेणकेयूरयेनभाव्यते ॥ कनकैकमहाबुद्धिर्निर्विकल्प सउच्यते ॥ ९ ॥ पावकव्यति
रेकेणज्वालालीयेनभाविता ॥ तस्याग्निबुद्धिर्गलतिज्वालाधीरेवतिष्ठति ॥ १० ॥

ति ॥ पूर्वंसर्गादिकालेप्रथमसर्वकल्पनाभ्यःपूर्वंतन्मनस्तत्परेब्रह्मणिअपृथक्सत्तयास्थितमेवसत्कल्पनांतरनिमित्ततयाअपायात्स्थितिंगतमित्यर्थ ॥ १ ॥ अपृथक्सत्तया
स्थितौदृष्टांतानाह ॥ पुष्पकोशेइति ॥ २ ॥ तत्स्थमेवेत्यशदृष्टांतैर्विशदीकृत्यस्थितिंगतमित्यशंविवृणोति ॥ तस्येति ॥ विस्मृत्याभ्रमतिसंधानात्मकेनाज्ञानेनैवसर्वजगत्कल्प
नामूलतयास्थितिंमतम् ॥ ३ ॥ तथाचजगत्सन्मात्रव्यतयाभावनेअन्यत्सन्मात्रतयाविभावनेतुसद्रूपमलेनेतिदृष्टांतैरुपपादयति ॥ आदित्येत्यादिना ॥ इदरश्मिजालंय
आदित्यव्यतिरेकेणभावयतितस्यसतत्भास्वतआदित्यादन्यदिवस्यादित्यन्वय ॥ ४ ॥ नतस्येति ॥ कनकव्यबुद्धं केयूरेणैवावरोधादितिभाव ॥ ५ ॥ आदित्याव्यतिरेकेणनि
र्विकल्पोरश्मिभेदविकल्पशून्य ॥ ६ ॥ कल्पिताकल्पितरूपाभ्यामर्थद्वयकल्पनाकल्पनबुद्धिभ्यांपुरुषोपिसविकल्पोनिर्विकल्पश्चभवतीत्याह ॥ सलिलेत्यादिना ॥ ७ ॥
॥ ८ ॥ ९ ॥ गलतिनोद्भवति ॥ १० ॥

कल्पिताकारानुविद्धाबुद्धिस्तत्रैवास्थाबद्धातन्मूलानिकल्पनातराणिचकरोतीत्याह ॥ ज्वालेति ॥ अभ्रलेखेवज्वालाजालंज्वालाजालाभ्रलेखासेवरंजितातदाकारतापन्ने तियावत् ॥ स्थितिर्बुद्धिवृत्ति ॥ तद्गतानिज्वालाजालगतानिचलनोर्ध्वगमनऋजुवक्रतादीनिचआदत्तेकल्पयति ॥११॥१२॥ निर्विकल्प उक्तयाप्तमाहकद्विविधविकल्परहि त ॥ वस्तुषुवैकल्पिकपदार्थेषु ॥ मज्जतिसत्यबुद्ध्याआसज्जते ॥ १३ ॥ दृष्टांतेउपपादितविकल्पत्यागप्रकारदार्ष्टांतिकेउपदिशति ॥ नानातामिति ॥ कोटरशब्दआंतरप्रत्यग्व स्तुपरः ॥ १४ ॥ स्फुरतास्वप्रकाशेनात्मनैवसकल्पनामिकाशक्तियदाकरोतितदामनोभवतीतिपरेणान्वयः ॥ १५ ॥ विश्वाकारास्वाकृतिभावयन्विश्वात्मासमष्टिमनोभवति ॥ १६ ॥ तद्विश्वाकारसकल्पात्मकसमष्टिचेतोहिरण्यगर्भात्मकम् ॥ १७ ॥ यथायथाभावयतितदवयुत्यप्रपंचयति ॥ कीटत्वमिति ॥ १८ ॥ १९ ॥ मिथ्याशब्दोऽलीकप

पावकाव्यतिरेकेणज्वालालीयनभा ज्वालाजालाभ्रलेखेवरंजितासातथास्थितिः॥ तामेवास्थांसमादत्तेतद्गतान्याकुलामतिः॥११॥ प्राप्तव्यंतेनसंप्राप्तंनासौवस्तुषुम ज्जति॥ योनिर्विकल्पःसमहान्सोसंक्षीणमहामतिः॥ स्वयमेवात्मनैवात्माशक्तिं व्यते॥ तस्याग्निबुद्धिरेकास्तिनिर्विकल्पःसउच्यते॥१२॥ संवेद्येनविनिर्मुक्तेसंवित्तत्त्वेस्थितोभव॥ १४ ॥ नानातामखिलांत्यक्त्वाशुद्धचिन्मात्रकोटरे॥ १३॥ तदापृथगिवाभासंसंकल्पकलनामयम्॥ मनोभवतिविश्वात्मा संकल्पनामिकाम्॥ यदाकरोतिस्फुरतास्पंदशक्तिमिवानिलः॥१५॥ संकल्पयतिसंकल्पैस्तथैवभवतिक्षणात्॥ १७॥ कीटत्वमब्ज भावयन्स्वाकृतिंस्वयम्॥१६॥ तत्संकल्पात्मकंचेतोयथेदमखिलंजगत्॥ तनोतितस्यां जत्वंचमेरुत्वंमरुतांतथा॥ मनोजीवमहंकारबुद्धिचित्तादिनामकम्॥१८॥संकल्पताद्वितैकत्वमेत्यचेतोजगत्स्थितिम्॥ जंतोर्य तदनुनानातांगच्छतिस्वयम्॥ १९ ॥ संकल्पमयमेवेदंजगदाभोगिदृश्यते॥ नसत्यंनचमिथ्यैवस्वप्नजालमिवोत्थितम्॥ २० ॥ परमार्थेन थामनोराज्यंविविधारंभभासुरम्॥ ब्राह्मंतथेदंविततंमनोराज्यंविराजते॥ २१ ॥ यथाभूतार्थभावित्वात्तदेतत्प्रविलीयते॥ यथांबुधिर्व दृष्टंचेत्तदिदंनैवकिंचन ॥ २२ ॥ दृश्यंत्वपरमार्थेनप्रयातिशतशाखताम् ॥ जलमूर्मितरंगादिकलनार्हपरिस्फुरन् ॥ २३ ॥ पुर्धत्तेस्वभावेनतथाचितः॥ कुर्वन्कर्मसहस्राणित्यणुचित्स्पंदनादृते॥२४॥

रः ॥ स्वप्नजालमिवानिर्वचनीयमित्यर्थः ॥ २० ॥ ब्रह्मणोहिरण्यगर्भस्येदंब्राह्मम् ॥ २१ ॥ मिथ्यात्वादेवतत्त्वज्ञानेनयथास्थितब्रह्मात्मनैवभावित्वान्मायिकरूपेणप्रविलीय तइत्याह ॥ यथाभूतेति ॥ तथाचश्रुतिर्मनसैवेदमाप्तव्यंनेहनानास्तिकिंचनेति ॥ २२ ॥ तत्त्वदर्शनाभावेतर्हिकिंभवतितदाह ॥ दृश्यमिति ॥ तदाअज्ञातपरमार्थबलेनैवशत शाखताप्रयातियथाअंबुधिर्जलमेवसन्ऊर्मितरंगादिकलनार्हरूपपरिगृह्यस्फुरन्अंबुधिवपुर्धत्तेतथाकर्मसहस्राणिकुर्वन्जनोपिअणुचितश्चिदाभासयुक्तस्यमनसः स्पंदनादृते कूटस्थचितोऽपूर्वंकिंचिदपिविकारादिनकुरुते अतस्त्वमपिकिंचित्तुच्छतरभेदत्यजन्सन्गमनादिसर्वव्यवहारंकुर्वन्नप्यपूर्वमभिनवजगद्रूपंकिंचिद्वैतरूपंसत्यंनविद्यतेकिंतुपूर्वसि द्धब्रह्मैवपरमार्थसत्यंविद्यतइतिभावयेतिचतुर्थार्धपर्यंतमन्वयः ॥ २३ ॥ २४ ॥

॥ २५ ॥ २६ ॥ प्रवृद्दिताकारविवर्त्तविजृंभिताकारतद्बाधविजृंभिताकारता ॥ प्रशस्तभावमुक्तप्रतीषिपयवसाययति ॥ पदार्थैत्याविना ॥ २७ ॥ २८ ॥ सर्वेषञ्चपिशब्दात्त न्विशनमपि ॥ २९ ॥ हरामायमोक्षएपबधदस्याविकोविफलाभिमानासकलांचितांप्रसभसर्वयत्नेननिरस्यभागाविसर्वेंद्रियजयान्मौनीवशीविगतमानमदश्चसनूस्वोचितराज्या दिकार्यंकुर्वन्ननहंकृतिमहात्मैवभूत्वातिष्ठस्वेय ॥३०॥ ॥ इतिश्रीवा०तात्पर्यप्र०नि०पू०चतुर्दशोत्तरशततमःसर्ग ॥ ११४ ॥ ॥ ७ ॥ ॥ महाकर्माविशब्दानाम्याख्यामि

नापूर्वंकुरुतेकिंचित्किंचिद्वेदमतस्त्यजन् ॥ गच्छन्शृण्वन्स्पृशन्जिघ्रन्वदन्व्यवहरन्स्वपन् ॥ २५ ॥ नापूर्वंविद्यतेकिंचित्सत्यमित्येव भावयन् ॥ यद्यत्करोपितद्विद्धिचिन्मात्रममलंततम् ॥ २६ ॥ ब्रह्मप्रवृद्दिताकारतस्मादन्यन्नविद्यते ॥ पदार्थजातेसर्वस्मिन्नविसारमये स्थिते ॥ २७ ॥ सर्वदेवेदमखिलजगन्नान्यास्तिकल्पना ॥ सर्वित्स्फुरणमात्रेस्मिन्जगज्जालकनामनि ॥ २८ ॥ इदमन्यदिदंचान्यदि तिमिथ्याग्रहः कुतः ॥ संभवादखिलाकारेष्वेकस्याएवसंविदः ॥ सर्वेषमपिनास्त्येवबंधमोक्षावतः कथम् ॥ २९ ॥ मोक्षोयमेषखलुबंधइ तिभ्रमत्यांचितानिरस्यसकलांविफलाभिमानाम् ॥ मौनीवशीविगतमानमदोमहात्माकुर्वन्स्वकार्यमनहंकृतिरेवतिष्ठ ॥ ३० ॥ ॥ इ त्यार्षेवा०वा०दे०मो०नि०पू०परमार्थोपदेशोनामचतुर्दशाधिकशततमः सर्गः ॥ ११४ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ महा कर्त्तामहाभोक्तामहात्यागीभवानघ ॥ सर्वाः शंकाःपरित्यज्यधैर्यमालंब्यशाश्वतम् ॥ १ ॥ ॥ श्रीरामउवाच ॥ ॥ किमुच्यतेमहाकर्त्ता महात्यागीकिमुच्यते ॥ किमुच्यतेमहाभोक्तासम्यक्कथयमेप्रभो ॥ २ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ एतद्भूतत्रयरामपुराचंद्रार्धमौलिना ॥ भृंगीशायतुसंप्रोक्तंयेनासौविज्वरः स्थितः ॥ ३ ॥ सुमेरावुत्तरेशृंगेपूर्वंशशिकलाधरः ॥ अतिष्ठदभ्रसंकाशेसमग्रपरिवारवान् ॥ ४ ॥ तमपृच्छन्महातेजास्तनुविज्ञानवान्स्थितः ॥ भृंगीशःप्रणतोरामबद्धांजलिरुमापतिम् ॥ ५ ॥ ॥ भृंगीशउवाच ॥ ॥ भगवन्देवदेवेश सर्वज्ञपरमेश्वर ॥ यदहंपरिपृच्छामिकृपयातद्वदाशुमे ॥ ६ ॥ संसाररचनांनाथतरंगतरलामिमाम् ॥ अवलोक्यविमुह्यामितत्त्वविश्रां तिवर्जितः ॥ ७ ॥ कंमतंनिश्चयंकांतमुररीकृत्यसुस्थितम् ॥ अस्मिन्जगज्जीर्णगृहेतिष्ठामिविगतज्वरम् ॥ ८ ॥

रिहशभुना ॥ लक्षणान्यपिजीवन्मुक्तानांवर्ण्यंतेभृंगिणेऽधिमे ॥ १ ॥ सर्वाःपुण्यपापादिशंकाःपरित्यज्यधैर्यंनिर्भयंकूटस्थात्मभावम् ॥ १ ॥ किंलक्षणःप्राप्तोमहाकर्त्तोच्य तइतिप्रिष्यपि ॥ २ ॥ अभ्यासकालमपेक्ष्यप्रतप्रयमिन्युच्यतेफलकालत्वमानित्यविकमिवेदलक्षणप्रयसंपद्यते ॥ असौभृंगीशः ॥ ३ ॥ ४ ॥ तनुविज्ञानवान्मवात्मज्ञान ॥ यद्यपिगणपत्यप्राप्तिकालएवसार्वज्ञ्यंतेनप्राप्तमस्तितथाप्यात्मज्ञानस्यानितरज्ञानसाधारण्यायभोमासस्यात्मावमारोप्योक्तिः ॥ ५ ॥ ६ ॥ तरंगतरलांनश्वरीम् ॥ ज्ञातेपि तत्त्वेप्रामासप्यविश्रांतिवर्जितः ॥ ७ ॥ कांतविश्रांतिसुखरम्यम् ॥ तिष्ठामितिष्ठयम् ॥ ८ ॥

हत्वापिसइमॉल्लोकानितिवज्ज्ञानप्र ॥ अकर्त्रभोक्तात्मनिश्चयात्कर्तृत्वादिशंकाविरहिताकृतिः ॥ धर्माधर्माविति ॥ तत्रसर्वाशंकापरित्यज्येत्यर्शविवृणोति ॥ ९ ॥ १० ॥
फलाफलेइष्टानिष्टेयोऽनपेक्षेणनिष्कामेनमनसालोकसग्रहमात्रप्रयोजनेन ॥ रागद्वेषादिपदैस्तद्व्यंजकचेष्टाउच्यते ॥ ११ ॥ भावोक्तिरियनतुयथेष्टाचरणाभ्यनुज्ञेतिबोध्यम् ॥ ११ ॥
दैवात्सपन्नेप्वश्वमेधकलज भक्षणादिकार्येषुधार्मिकोहं ॥ १३ ॥ गतउद्वेग.फलासिद्ध्यन्यथात्वप्रयुक्तउद्वेगोयस्मिन्कर्मणि ॥ मौनमुनिकर्ममननयोगादि ॥ १२ ॥ करोति ॥
प्रारब्धोपनीतयथोचितप्रयोजनकालेकार्यानुरूपवत्तस्थ ॥ १६ ॥ शोकनिमित्तेषुनशोचतेउदयनिमित्तेषुचनोदेति ॥ १५ ॥ १४ ॥ पापोहमितिवाकुशकयाकल्पितैर्धर्माधर्मैः ॥

॥ भृंगीशउवाच ॥ महाभोक्तामहाकर्त्तामहात्यागीभवानघ ॥ ९ ॥ ॥ सर्वाःशंकाःपरित्यज्यधैर्यमालंब्यशाश्वतम् ॥ ईश्वरउवाच ॥ ॥ किमुच्यतेमहाकर्त्तामहाभोक्ताकिमुच्यते ॥ किमुच्यतेमहात्यागीसम्यक्कथयमेप्रभो ॥ १० ॥ ॥ ईश्वरउवाच ॥ ॥ धर्माधर्मौमहाभागशंकाविरहिताशयः ॥ यःकरोतियथाप्राप्तौमहाकर्त्तासउच्यते ॥ ११ ॥ रागद्वेषौसुखंदुःखंधर्माधर्मौफलाफले ॥ यःकरोत्यनपेक्षेणमहाकर्त्तासउच्यते ॥ १२ ॥ मौनवान्निरहंभावोनिर्मलोमुक्तमत्सरः ॥ यःकरोतिगतोद्वेगंमहाकर्त्तासउच्यते ॥ १३ ॥ शुभाशुभेषुकार्येषुधर्माधर्मैःकुशंकया ॥ मतिर्नलिप्यतेयस्यमहाकर्तासउच्यते ॥ १४ ॥ सर्वत्रविगतस्नेहोयःसाक्षिवदवस्थितः ॥ निरिच्छंवर्त्ततेकार्येमहाकर्त्तासउच्यते ॥ १५ ॥ उद्वेगानंदरहितःसमयास्वच्छयाधिया ॥ नशोचतेयोनोदेतिमहाकर्त्तासउच्यते ॥ १६ ॥ यथार्थकालेमतिमानसंसक्तमनामुनिः ॥ कार्यानुरूपवत्तस्थोमहाकर्त्तासउच्यते ॥ १७ ॥ उदासीनःकर्तृतांचकर्माकर्माचरंश्चयः ॥ समंयात्यंतरत्यंतंमहाकर्त्तासउच्यते ॥ १८ ॥ स्वभावेनैवयःशांतःसमतांनजहातिवै ॥ शुभाशुभंत्वाचरन्योमहाकर्तासउच्यते ॥ १९ ॥ जन्मस्थितिविनाशेषुसोदयास्तमयेषुच ॥ सममेवमनोयस्यमहाकर्तासउच्यते ॥ २० ॥ नकिंचनद्वेष्टितथानकिंचिदभिकांक्षति ॥ भुंक्तेचप्रकृतंसर्वंमहाभोक्तासउच्यते ॥ २१ ॥ नादत्तेप्याददानश्चनाचरत्याचरन्नपि ॥ भुंजानोपिनयोभुंक्तेमहाभोक्तासउच्यते ॥ २२ ॥ साक्षिवत्सकलंलोकव्यवहारमखिन्नधीः ॥ पश्यत्यपगतेच्छंयोमहाभोक्तासउच्यते ॥ २३ ॥

स्तत्प्रयोजनानुकूलचेष्टावान् ॥ १७ ॥ कर्माकर्मविहितनिषिद्धकर्मणीस्वयंदैवाच्चरस्तत्कर्तृतामन्यप्रेरणेनहेतुकर्तृतामापद्यमानश्चांतर्मनस्यकर्त्रात्मदृढनिश्चयेनोभयत्रयःसमभावयाति ॥ १८ ॥ योमित्रेषुशुभममित्रेष्वशुभमाचरन्नपिसमतांनजहाति हियस्माद्धेतोर्यःस्वभावेनैवशांतः ॥ नह्यस्यचद्राह्लादकतासदृश स्वभावोन्यथाभवतीत्यर्थः ॥ १९ ॥ जन्मादिषुपचसुभावविकारेषुउदयोवृद्धिरस्तमयोपक्षयस्तत्सहितेषुशरीरेषुनिर्विकारसन्मात्रात्मदर्शनात्सममेवमनोयस्य ॥ २० ॥ महाभोक्तुर्लक्षणान्याह ॥ नकिंचिदित्यादिना ॥ प्रकृतप्रस्तुतप्रारब्धोपनीतम् ॥ २१ ॥ इंद्रियैर्विषयानाददानोप्यद्वयासगपूर्णात्मप्रतिष्ठत्वान्नादत्ते ॥ हस्तपादादिनाआदानगमनाद्याचरन्नपिनिष्क्रियात्मबुद्ध्यानाचरति ॥ एवमशनायाद्यतीतनित्यतृप्तात्मदर्शनान्नभुंक्ते ॥ २२ ॥ उदासीनःसाक्षाद्द्रष्टासाक्षीतद्वत् ॥ २३ ॥

अवापजपारिफिपायांगे ॥ भावाभावैर्लोभम्यपी ॥ ममाविक्षेपास्तयीः ॥ नोक्कामतिनविक्षिपति ॥ २४ ॥ रम्यमन्नद्दस्यारम्यम् ॥ यथास्वणमपोम्याघोरम्यस्वणद्दस्या
रम्यलधनिभाव ॥ २५ ॥ समनुन्यहस्याभोगायसमुपगृह्णाति ॥ २६ ॥ यस्मादुपयामानोपयामा ॥ चकार पागुक्तगुणकवसमुच्चयार्थ ॥ २७ ॥ अधमअस्वादुनिकृष्टम
प्यन्नम ॥ २८ ॥ विरसरनिविघातम ॥ २९ ॥ खटपकारशाकरापरिष्कृतभक्ष्यभेदे ॥ ३० ॥ अभोज्यभाक्कुमशक्यम् ॥ अस्वादुतिक्तादि ॥ षिकम्पितविकम्पनम ॥ ३१ ॥
भराभप्रटकाद्रयाच्चकराच्छादनादि ॥ परउत्कृष्टविम्याम्याच्छादनादि ॥ ३२ ॥ इतिमागुक्तलक्षणयाधियानिरतिशयानवपूर्णादृपात्मधियामिथ्येतिसत्यक्तमितिभा ॥ ३३ ॥

सुखेदु खे क्रियायोगेभावाभावेभ्रमप्रदे ॥ यस्यनोक्कामतिमलिर्महाभोक्तासउच्यते ॥ २४ ॥ जरामरणमापत्त्वराज्यंदारिद्र्यमेवच ॥ रम्यमित्येवयोवेत्तिमहाभोक्तासउच्यते ॥ २५ ॥ महातिसुखदु खानियःपयांसीवसागर ॥ समसमुपगृह्णातिमहाभोक्तासउच्यते ॥ २६ ॥ अहिंसाममतातुष्टिश्चर्य्यादिवाशव ॥ नोपयस्माद्योपयातामहाभोक्तासउच्यते ॥ २७ ॥ कट्वम्ललवणतिक्तमस्पष्टस्पष्टमुत्तमम् ॥ अधमयोऽत्तिसाम्येनमहाभोक्तासउच्यते ॥ २८ ॥ सरसनीरसचैवसुरतविरततया ॥ य पश्यतिसमसौम्योमहाभोक्तासउच्यते ॥ २९ ॥ क्षारखडप्रकारंचशुभंवाप्यशुभंतथा ॥ समतासुस्थिरायस्यमहाभोक्तासउच्यते ॥ ३० ॥ इदभोज्यमभोज्यचेत्येवत्यक्त्वाविकल्पितम् ॥ गताभिलापयाभुक्तमहाभोक्तासउच्यते ॥ ३१ ॥ आपदसंपदमोहमानदमपरंपरम् ॥ योभुक्तेसमयाबुद्ध्यामहाभोक्तासउच्यते ॥ ३२ ॥ धर्माधर्मौसुखंदु खतयामरणजन्मनी ॥ धियायेनेतिसत्यक्तमहात्यागीसउच्यते ॥ ३३ ॥ सर्वेच्छा सकला शंका सर्वेहा सर्वनिश्चया ॥ धियायेनपरित्यक्तामहात्यागीसउच्यते ॥ ३४ ॥ देहस्यमनसोदु खैरींद्रियाणांमन स्थिते ॥ नुनयेनोज्झितासत्तामहात्यागीसउच्यते ॥ ३५ ॥ नमेदेहानजन्मापियुक्तायुक्तंनकर्मणी ॥ इतिनिश्चयवानतमहात्यागीसउच्यते ॥ ३६ ॥ येनधममधर्मंचमनोमननमीहितम् ॥ सर्वमतपरित्यक्तंमहात्यागीसउच्यते ॥ ३७ ॥ यावतीदृश्यकलनासकलेयविलोक्यते ॥ सायेनसुष्ठुसत्यक्तामहात्यागीसउच्यते ॥ ३८ ॥ इत्युक्तदेवदेवेनभृंगीशायपुरानघ ॥ एतांदृष्टिमवष्टभ्यातिष्ठरामगतज्वर ॥ ३९ ॥ नित्योदितविमलरूपमनतमाद्यंब्रह्मास्तिनेतरकलाकलनंहिकिंचित् ॥ इत्येवभावयनिरंजनतामुपेतोनिर्वाणमेहिसकलामलशांतवृत्ति ॥ ४० ॥

सर्वाईहाचाक्रमन कायचेष्टा ॥ धियाविषयबाधादेवपरित्यक्ता ॥ ३४ ॥ देहादीनांसत्तानस्तदु खं सहयेनमिथ्यात्वबुद्ध्याउज्झितात्यक्ता ॥ ३५ ॥ युक्तायुक्तेविहितनिषिद्धेस्थानिरावरणरूपेषा ॥ ३६ ॥ धर्ममधर्मंचशारीरम ॥
मनोमननमानसम ॥ इहितमाारिचेष्टितम ॥ ३७ ॥ सुष्ठुसम्यग्दर्शनेनबाधासत्यक्ता ॥ ३८ ॥ उपसहरति ॥ इतीति ॥ ३९ ॥ यथाभावनयामहाकर्तामहाभोक्तामहात्यागीभावनापाधनभवन्निर्माणनारामायोपदिशति ॥ नित्योदितमिति ॥ देशमत्वदेशाविषयकोशानामवस्थात्रयस्यचनिरासननिरअनतामुपेत सम्यगविशिष्टनित्योदितविमलात्मकपरब्रह्मास्तिकिंचित्तरेतरकस्यनाकलननास्तीत्येवभावय ॥ एवमराभावयन्ममावाजिम्यत्क्याकलनामलम्यशांतावस्थायोपस्यतथाविध सन्निर्वाणमेहि भामुहीत्यर्थ ॥ ४० ॥

हेअगइहमसारेयत्किंचिद्भातितत्समस्तेषुकल्पेषुद्विपरार्द्धावधिकालावयवेषुप्रसिद्धानासर्वकार्याणामेकबीजमूलकारणभूनमनामयंस्वयंजन्मादिविकारामयशून्यंपरमात्मरूप
ब्रह्मैव ॥ तच्चबृहत्सर्गभेदैर्बृंहितसर्वभावविकल्पमपिखमाकाशमेवास्ति ॥ सर्वविकल्पशून्यमेवेत्यर्थ. ॥ ४१ ॥ यन क्वचित्किंचिदपिसतूस्थूलमसतसूक्ष्मंअपिशब्दात्कारणचस
देकरसाद्ब्रह्मणोऽन्यन्नसंभवत्येव ॥ सत.पृथक्त्वेअसत्त्वापत्ते ॥ अपृथक्त्वेसदेकरस्यापत्ते ॥ प्रकारांतरस्यचसभावनायोगादितिभावः॥ हेसाधोऽनस्त्वसद्ब्रह्मैवाहमित्येवातर्दृढ
निश्चय सनूप्रथमसमाध्यभ्यासबलेनस्थित्वासप्तमभूमिकाक्रमेणाधिरुह्यगताशंकविलासतथैवास्वेत्यर्थः ॥ ४२ ॥ हेमाधोत्वयदिअंतर्मुखःसन्निराकृताहंकृतितामुपैपितदाव
हिष्ठसमस्तकार्यजातकुर्वन्नपिकदाचिदपिखेदंनायास्येवेत्यन्वय. ॥ ४३ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०पंचदशोत्तरशततम सर्गः ॥ ११५ ॥ ॥ ७ ॥

अनामयंब्रह्मसमस्तकल्पकार्यैकबीजंपरमात्मरूपम् ॥ बृहच्चतद्बृंहितसर्वभावंखमस्तिभातीहयदंगकिंचित् ॥ ४१ ॥ अन्यत्क्वचित्किं
चिदिदंकदाचिन्नसंभवत्येवसदप्यसच्च ॥ इत्येवसाधोदृढनिश्चयोंतःस्थित्वागताशंकविलासमास्व ॥ ४२ ॥ अंतर्मुखःसन्सततंसमस्तं
कुर्वन्बहिष्ठंखलुकार्यजातम् ॥ नखेदमायासिकदाचिदेवनिराकृताहंकृतितामुपैषि ॥ ४३ ॥ ॥इ०वा०वा०दे०मो०नि०पू० ब्रतत्र
यनिरूपणंनामपंचदशोत्तरशततमःसर्गः॥ ११५॥ ॥ ७॥ ॥ श्रीरामउवाच ॥ ॥ भगवन्सर्वधर्मज्ञचित्तेहंकारनाम
नि॥ गलितेवागलद्रूपेलिंगंसत्वस्यकिंभवेत् ॥ १ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ बलादपिहिसंजातानलिंपंत्याशयंसितम्॥ लोभमोहाद
योदोषाःपयांसीवसरोरुहम् ॥ २ ॥ मुदिताद्याःश्रियोवक्त्रंनमुंचंतिकदाचन ॥ गलत्यहंकारमयेचित्तेगलतिदुष्कृते ॥ ३ ॥ वासनाग्रंथय
श्छिन्नाइवत्रुट्यंत्यलंशनैः॥ कोपस्तानवमायातिमोहोमांद्यंहिगच्छति ॥ ४ ॥ कामःक्लमंगच्छतिचलोभःक्वापिपलायते ॥ नोल्लसंतींद्रि
याण्युच्चैःखेदःस्फुरतिनोच्चकैः ॥ ५ ॥ नदुःखान्युपबृंहंतिनवल्गंतिसुखानिच ॥ सर्वत्रसमतोदेतिहृदिशैत्यप्रदायिनी ॥ ६ ॥ सुखदुःखाद
यस्त्वेतदृश्यंतेयदिवामुखे ॥ दृश्यंतएवतुच्छत्वान्नानुलिंपंतितेमनः ॥ ७॥ चित्तेगलतिगीर्वाणगणस्यस्पृहणीयताम् ॥ साधुर्गच्छत्युदेत्य
स्यसमताशीतचंद्रिका ॥ ८ ॥

चित्तस्यगलतोनित्यंचतुर्थादिषुभूमिषु ॥ गलितस्यचलक्ष्माणिवर्ण्यंतेत्रपुमाश्रयात् ॥ १ ॥ सत्वस्यक्षीणवासन
स्यमनसोलिंगलक्षणम ॥ १ ॥ एवपृष्टोवसिष्ठ प्रथमलोभमोहादिदोषक्षयएवमुख्यतल्लक्षणमित्याह ॥ बलादिति ॥ संजाताःसजनिता.परीक्षाद्यर्थंपरेणबलादपिसपादिताइत्य
र्थ. ॥ सितशुद्धशुभच ॥२॥ सदामुखप्रसन्नतादिरपितल्लक्षणमित्याह ॥ मुदिताद्याइति ॥ दुष्कृतेविपादहेतौपापेज्ञानाग्निनागलतिसति ॥३॥उक्तप्रपचयनूलक्षणांतराण्यप्याह॥
वासनेत्यादिना ॥ ४ ॥ ५ ॥ शैत्यतापनिवृत्तिस्तत्प्रदायिनी ॥ ६ ॥ ननुज्ञानिनामपिकदाचिन्मुखेसुखदुःखादिलिंगानिप्रसादमालिन्यादीनिदृश्यतेयथाप्राक्कुंभस्यदुर्वास.शापश्र
वणेशिखिध्वजस्ययथावाविश्वामित्रेणहरिश्चंद्रच्छलनेपुत्रघातेनचवसिष्ठस्य तत्कथमुदिताद्याःश्रियोवक्त्रनमुचतीतिलक्षणघटतेनत्राह ॥ सुखदु.खादयइति ॥ भोजकप्रारब्ध
प्राबल्येनदुःखनाल्लिंगमालिन्याभासयो.कदाचिद्दृश्येप्युत्तरक्षणेमिथ्यात्वबुद्धिबाधितत्वान्नतयोस्तच्चित्तलेपकत्वमितिनस्वाभाविकमुखादिप्रसादविघातइत्यर्थः ॥ ७ ॥ ८ ॥

अप नेराधिपरष्टाविपानि ॥ निघृनंविर्नातम ॥ ९ ॥ भावैर्विभावैरभावैरविरुद्धोविषमोपि ॥ समांगत्विनाहंकाराणाम ॥ १० ॥ इदानीमात्मलाभस्यातिदुर्लभत्वादर्शंप स्तदयमप्रसामिरभुपसहरति ॥ युष्मालोकनेति ॥ युष्मत्क्षणेनालोकेनप्रकाशेन ॥ अथवाभत्पक्षणयायुष्माआलोकनमालोकस्ताबन्मात्रेणसाध्येलभ्येअस्तमिता मापदापस्मिन्नत्यंसनितयाविधेपरमात्मवस्तुनियोनप्रवर्ततेतंधिगस्त्वित्यर्थ ॥ ११ ॥ मवदसीतर्हिक प्रथममुपायइति चेद्विवेकवैराग्येएवेत्याह ॥ विश्रांतिमिति ॥ हेभगवु स्वरमानामाक एभूतजननमरणोपलक्षितसंसारसागरमुत्तितीर्पोरुत्तरितुमिच्छो पुरुषस्यमत्पारेनिरतिशयानंदात्मनिचिरमुचितांविश्रांतिमाप्तुमहद्व इदअमध्यमंकिपरमात्मनःस्वच किर्मीदृशस्यात्भागेकेतत्स्वर्गभोगैभ्यःकिस्यादितिनिरंतराभ्यस्ताविचारवैराग्यात्मिकामतिरेवप्रथमोऽन्तिमतउपायोऽभ्युपायः ॥ तस्मात्तमेवाश्रयदित्यर्थ ॥ १२ ॥ ॥ इतिश्री

उपशांतचकांतचसंध्यमप्रतिरोधिच ॥ निभृतचोर्जितंस्वच्छंवहतीत्यंमहद्वपु ॥ ९ ॥ भावाभावविरुद्धोपिविचित्रापिमहानपि ॥ नान टायनखेदायसतांसंसृतिविभ्रम ॥ १० ॥ युष्मालोकेनसाध्येस्मिन्वस्तुन्यस्तमितापदि ॥ प्रवर्ततेनयोमोहात्तंधिगस्तुनराधमम् ॥ ११ ॥ विश्रांतिमाप्तुमुचितांचिरमंगद्व स्वरमाकरंजननसागरमुत्तितीर्पो ॥ कोहंकथजगदिदंचपरचकिंस्यात्किंभोगकैरितिमति परमोभ्यु पाय ॥ १२ ॥ ॥ इत्यार्षेवासिष्टमहारामायणेवा० दे० मो० नि० पू० गलितचित्तलक्षणकथननामषोडशाधिकशततम सर्ग ॥ ११६ ॥

श्रीवसिष्ठउवाच ॥ ॥ भवतामादिपुरुषइक्ष्वाकुर्नामभूपति ॥ इक्ष्वाकुवंशप्रभवयथामुक्तस्तथाशृणु ॥ १ ॥ इक्ष्वाकुर्नामभूपाल स्वरा ज्यपरिपालयन् ॥ कदाचिदेकांतगतामनसासमचिंतयत् ॥ २ ॥ जरामरणसक्षोभसुखदु खभ्रमस्थितं ॥ अस्यदृश्यप्रपंचस्यकोहेतु स्यादितिस्वयम् ॥ ३ ॥ जगतोनविवेदासौकारणंचिंतयन्नपि ॥ अथैकदापृच्छदसौब्रह्मलोकागतमनुम् ॥ ४ ॥ पूजितंस्वसभासस्यंभग वंतंप्रजापतिम् ॥ ॥ इक्ष्वाकुरुवाच ॥ ॥ मांयोजयतिधार्ष्ट्येनभगवन्करुणानिधे ॥ ५ ॥ भवत्प्रसादएवायभवंतंप्रष्टुमंजसा ॥ कुत स र्गायमायात स्वरूपचास्यकीदृशम् ॥ ६ ॥ कियदेतज्जगत्कस्यकदाकेनेतिकथ्यते ॥ अहंकथंचविषमादस्मात्संसृतिविभ्रमात् ॥ ७ ॥ विमु च्येयपनात्क्षीणाज्जालादिवविहंगम ॥ ॥ मनुरुवाच ॥ ॥ अहोनुचिरकालेनविवेकेसुविकासिनि ॥ ८ ॥ वितथानर्थविच्छेत्तासार प्रश्नस्त्वयाकृत ॥ यदिदंदृश्यतेकिंचित्तन्नास्तिनृपकिंचन ॥ ९ ॥

वा० तात्पर्य० नि० पू० षोडशोत्तरशततमःसर्ग ॥ ११६ ॥ ॥ १ ॥ ॥ कोहंकथजगदितिविचारेणनिदर्शनम ॥ इक्ष्वाकोर्मनुनाप्रोक्तोविवेकःसंप्रकीर्त्यते ॥ १ ॥ आदिपुरुषो मूलपुरुषायथा ॥ यादृशविचारेणमुक्तःप्रागुक्तपदविश्रांतस्तथातंविचारंशृण्वित्यर्थ ॥ १ ॥ २ ॥ इतिस्वयसमचिंतयदितिपूर्वेणान्वय ॥ ३ ॥ नविवेदविवेकेनवेद ॥ ब्रह्मलोकादागतं मनुस्वपितरम् ॥ ४ ॥ तमप्रथममनुप्रार्थनयाभिमुखीकरोति ॥ मामिति ॥ ५ ॥ प्रष्टव्यांशदर्शयति ॥ कुतइत्यादिना ॥ ६ ॥ सत्यत्वापरिमाणतश्चकियत् ॥ कस्यभोक्तुःस्वामि नश्च ॥ कदाकेनरचितमितिश्रुत्यादिभिःकथ्यते ॥ अनेनश्रुत्यादिप्रमाणमूलमुपदेशपरपरासप्रदायागतमेवत्वयाप्यननुतर्कैर्यत्किंचित्कल्पयित्वेतिसूचितम ॥ ७ ॥ विमुच्येये त्रिकण्ठकसरिपक्षी ॥ ८ ॥ तमतत्त्वापदेशयोग्यतामालक्ष्यपास्यकीदृशमितिप्रश्नस्यप्रथममुत्तरमाह ॥ यदिदमिति ॥ तथाचमिथ्याजगत अमत्स्वरूपमतएवेतिभाव ॥ ९ ॥

ननुसांख्याउपादानेपरमसूक्ष्मतयास्थितमेवकार्यंनिमित्तैराविर्भाव्यतेइत्याहुः ॥ वेदांतिनस्तुसद्ब्रह्मैवजगदात्मनासर्गेसंपद्यतइति तत्कथंतन्नास्तीत्युच्यतेतत्राद्यंप्रत्याह ॥ यस्त्वि
ति ॥ साक्षिणाइंद्रियैर्वायन्नोदृश्यतेतत्किंचिदपिस्वोपादानेनस्थितंप्रमाणाभावादित्यर्थः ॥ १० ॥ स्यादपिनसंभावनाप्यस्ययतोनास्तीत्यर्थः ॥ द्वितीयंप्रत्याह ॥ अविनाश
मिति ॥ ११ ॥ प्रतिबिंबमिति ॥ तथाचादर्शसत्तायाःप्रतिबिंबेष्विवससर्गाध्यासाद्ब्रह्मसत्तानुविद्धजगदस्तुनामतथापिस्वतःसत्त्वंतस्यनास्त्येवेतितन्नास्तीत्युक्तिर्युक्तैवेतिभावः
॥ १२ ॥ कस्तर्हिबहुस्याप्रजायेयेतिसंकल्प्यब्रह्मणएवजगज्जीवभावश्रुतेराशयस्तत्राह ॥ भा स्वभावेति ॥ स्फुरणशक्तयश्चिदाभासाः ॥ ब्रह्मांडतांस्थूलसमष्ट्यभिमानेनत
द्रूपताम् ॥ भूततापृथिव्याद्यभिमानेनतद्रूपताम् ॥ १३ ॥ अन्यत्वचतुर्विधभूतग्रामताम् ॥ तथामिथ्योपाधिषुभ्रांत्याचिदाभासानांबंधादिकल्पनानवस्तुतस्तत्प्रसक्तिरित्याह ॥

यथागंधर्वनगरंयथावारिमरुस्थले ॥ यत्तुनोदृश्यतेकिंचित्तन्नकिंचिदिवस्थितम् ॥ १० ॥ मनःषष्ठेंद्रियातीतंयत्स्यादपिनकिंचन ॥ अ
विनाशंतदस्तीहतत्सदात्मेतिकथ्यते ॥ ११ ॥ इयंतुसर्वदृश्याढ्याराजन्सर्गपरंपरा ॥ तस्मिन्नेवमहादर्शेप्रतिबिंबमुपागता ॥ १२ ॥ भाः
स्वभावसमुत्पन्नाब्रह्मस्फुरणशक्तयः ॥ काश्चिद्ब्रह्मांडतांयांतिकाश्चिद्गच्छंतिभूतताम् ॥ १३ ॥ अन्यास्त्वन्यत्वमायांतिभवत्येवंजगत्स्थि
तिः ॥ नबंधोस्तिनमोक्षोस्तिब्रह्मैवास्तिनिरामयम् ॥ नैक्यमस्तिनचद्वित्वंसंवित्सारंविजृंभते ॥ १४ ॥ एकंयथास्फुरतिवारितरंगभंगैरेवं
परिस्फुरतिचिन्नचकिंचिदेव ॥ त्वंबंधमोक्षकलनेप्रविमुच्यदूरेस्वस्थोभवाऽभवभयोऽभयसारएव ॥ १५ ॥ ॥ इ० वा० वा० दे० मोक्षो
पायेषुनिर्वाणप्रकरणेपू० इक्ष्वाकुमनुसंवादेसप्तदशाधिकशततमःसर्गः ॥ ११७ ॥ ॥ ५ ॥ ॥ मनुरुवाच ॥ ॥ संकल्पोन्मु
खतांयाताःसत्यश्चिन्मात्रसंविदः ॥ आपस्तरंगत्वमिवयांतिभूमिपजीवताम् ॥ १ ॥ तेजीवाःसंसरंतीहसंसारेपूर्वमुत्थिते ॥ सुखदुःखद
शामोहोमनस्येवास्तिनात्मनि ॥ २ ॥ अदृश्योदृश्यतेराहुर्गृहीतेनयथेंदुना ॥ तथानुभवमात्रात्मादृश्येनात्मावलोक्यते ॥ ३ ॥ नशास्त्रैर्ना
पिगुरुणादृश्यतेपरमेश्वरः ॥ दृश्यतेस्वात्मनैवात्मास्वयासत्वस्थयाधिया ॥ ४ ॥

नबंधोस्तीति ॥ १४ ॥ उक्तद्वितीयप्रश्नोत्तरमुपसंहरति ॥ एकमिति ॥ यथाएकंवारितरंगभेदैःपरिस्फुरतिएवंचिदपिजगद्भेदैःपरिस्फुरति ॥ मायामात्रत्वात्तत्त्वनकिंचिदेव
अतस्त्वंबंधमोक्षभ्रमौदूरेप्रविमुच्यनविद्यतेभवभयंयस्यतथाविधः सन्नभयंब्रह्मसारएवभवेत्यर्थः ॥ १५ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० पू० सप्तदशोत्तरश
ततमःसर्गः ॥ ११७ ॥ ॥ ५ ॥ ॥ कुतःसर्गःकदाकस्यकेनेत्येषामिहोत्तरं ॥ तथात्मदर्शनोपायामनुनात्रप्रकीर्तिताः ॥ १ ॥ तत्रादौशुद्धसंविदोजीवभावेनिमित्तमा
ह ॥ संकल्पेति ॥ चिन्मात्रस्यशुद्धचैतन्यस्याविद्यायातत्तत्संस्कारविचित्रायांप्रतिबिंबरूपाःसंविदःसंस्काराणामंतःकरणतयापरिणामेतदवच्छिन्नतयाजीवतांयांति ॥ १ ॥
पूर्वमुत्थितेउपाधितयाआविर्भूतेसंसारेसमष्टिव्यष्टिमनसःकार्ये ॥ एवंसतियत्फलितंतदाह ॥ सुखदुःखेति ॥ २ ॥ नन्वदृश्यआत्माकथंदृश्येमनसिसंसारदुःखीतद्विमुक्तोवाअ
विवेकेविवेकेवादृश्यतेतत्राह ॥ अदृश्यइति ॥ दृश्येनांतःकरणेनचरमसाक्षात्काररूपतत्परिणामेनचनिमित्तेन ॥ ३ ॥ सत्वस्थयानिरहममतावस्थया ॥ ४ ॥

निरहममतारहद्रियाविपुकथग्रष्टम्यमिदृष्टांतिनस्पष्टयति ॥ पथिकाद्इति ॥ ५ ॥ अवधीरणमुपमासादिनापीडनम् ॥ ६ ॥ परायमाभउदासीनपदार्थसाधारणसत्यज्यआत्मम
पःशुद्धात्मदत्यातद्ममधुर ॥ ७ ॥ ८ ॥ नविद्यतेकिंचिन्मात्रमविषयतयाविधयश्चिन्मात्ररूपोगगनादप्यणु सूक्ष्म ॥ ससारबंधनीनमुक्तिहेतुरितियावत् ॥ ९ ॥ अहजगतो
नवहिभावसंगमियवेशनस्फुरणंशुद्धदृष्टांतमाह ॥ यथेति ॥ १० ॥ यथाअगदाद्याकारताहेमएवसन्निवेशावयवविन्यासवैचित्र्यतद्वदात्मनोपिजगत्तन्मूलमायारूपेदत्य
च ॥ ११ ॥ आत्मनःकालापवादस्तत्रूपपितुकालस्यजगत्पुपसहारस्थानसमुद्रतामाह ॥ विनाशेति ॥ विनाशएववाडवोवडवाग्निस्तेनाक्रांतविशिष्टम् ॥ भूतानिप्राणि

पथिका पथिदृश्यंतेरागद्वेषविमुक्तया ॥ यथाधियातयैवेतेद्रष्टव्याःस्वेंद्रियादय ॥५॥ एतेपुनादरःकार्यं सतानैवावधीरणम् ॥ पदार्थ
मात्रताविश्रान्तिपूर्वेतेयथासुखम् ॥६॥ पदार्थमात्रदेहादिधियासंत्यज्यदूरत ॥ आशीतलांतःकरणोनित्यमात्ममयोभव ॥ ७॥ दे
होहमितियाबुद्धि साससारनिबधनी ॥ नकदाचिदियबुद्धिरादेयाहिमुमुक्षुभि ॥८॥ नकिंचिन्मात्रचिन्मात्ररूपोस्मिगगनादणु ॥ इ
तियाशाश्वतीबुद्धिस्सानससारबंधनी ॥ ९ ॥ यथाविमलतोयानांबहिरंतश्चभावनम् ॥ तेजस्तिष्ठतिसर्वत्रतयात्मासर्ववस्तुषु ॥ १० ॥
सन्निवेशाशवैचित्र्ययथाहेम्नोंगदादिता ॥ आत्मनस्तदतद्रूपातयैवजगदादिता ॥ ११ ॥ विनाशवाडवाक्रांतभीमंकाममहार्णवम् ॥
जगज्जालतरगिण्योयांतिभूततरगिका ॥ १२ ॥ तथाप्ययाप्यपूर्णस्यय पाताकालवारिधे ॥ तमात्मानमहागस्त्यराजन्भावयसर्वदा
॥ १३ ॥ अनात्मन्यात्मतामस्मिन्देहादौदृश्यजालके ॥ त्यक्त्वासत्वमुपारूढोगूढस्तिष्ठयथासुखम् ॥ १४ ॥ कुपकोटरसमुप्तविस्मृत्यजन
नीसुतम् ॥ यथारोदितिपुत्रार्थतयात्मार्थमयंजन ॥ १५ ॥ अजरामरमात्मानमबुद्ध्वापरिरोदिति ॥ हाहतोहमनाथोहनष्टोस्मीतिवपु
र्व्ययं ॥ १६ ॥ यथावारिपरिस्पदान्नानाकारविलोक्यते ॥ तथासकल्पवशतश्चिद्रूपपरिबृंहति ॥ १७ ॥ सस्याप्यसंकल्पकलंकमुक्तचित्त
त्वमात्मन्युपशांतकल्प ॥ स्पंदेप्यसंस्पंदमिवेहतिष्ठस्वस्थ सुखीराज्यमिदप्रशाधि ॥ १८ ॥ ॥ इत्यार्षेवासिष्ठम० वा० दे० मो० नि०
पृ० इक्ष्वाकुमनुसवादेअष्टादशोत्तरशततमःसर्ग ॥ ११८ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ७ ॥

निकायास्तरमायासाम् ॥ १२ ॥ यथासर्वजगज्जालभक्षणेप्ययाप्यपूर्णस्यास्यकालवारिधेर्यःपातापानकर्ता ॥ १३ ॥ सत्वनिर्वासनीभावम् ॥ १४ ॥ नित्यलब्धेप्यात्म
न्यप्रबुद्धतायाभ्रांत्याशोकदृष्टाह ॥ कुपकोटरेति ॥ १५ ॥ वपुर्व्ययेदेहनाशे ॥ १६ ॥ परितोबृंहतिकार्यपरपरयावर्धते ॥ १७ ॥ हेपुत्रत्वसकल्पकलंकमुक्तचित्तमात्मनिसंस्थाप्यस
मूलसमस्तसंसारोपशमेप्रारब्धभोगोपयोगितयनिभासावशेषाउपशांतकल्प समूल्यवहारायवहद्रियाविस्पदेपितस्याभासमात्रत्वादसस्पदप्राप्तमेवहव्यवहारभूमौस्वस्थ सुखीतिष्ठ
इराज्यप्रशाधिपालय ॥ शास शासेरस्यापीपूत्वेनासिद्धत्वाद्धेर्धि ॥ १८ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाण पू० अष्टादशोत्तरशततम सर्ग ॥ ११८ ॥

विद्याविद्यात्मशक्तिभ्यांसत्यासत्यात्मनिश्चयात् ॥१॥ स्पंदेप्यसंस्पंदमिवेहतिष्ठत्युक्तंतत्रब्रह्मकिमर्थमाययास्पंदतेकथंचासंस्पंदइतिष्ठ
वर्ण्यतेपुरुषस्यात्रस्वातंत्र्यमोक्षबंधयोः ॥ विद्याविद्यात्मशक्तिभ्यांसत्यासत्यात्मनिश्चयात् ॥१॥ स्पंदेप्यसंस्पंदमिवेह... वर्ण्यतेपुरुषस्यात्रस्वातंत्र्यमोक्षबंधयोः ॥ सर्गात्मभिरिति ॥ विभुरयपरमात्माप्रसवधर्मिण्याअविद्याशक्त्याअविदुष.प्रतिसर्गात्मकैः स्पंदैः क्रीडते विदुष प्रतितुतत्संहारात्मिक
तीतीक्ष्वाकोर्जिज्ञासालिंगैरुपलक्ष्यमनुराह॥सर्गात्मभिरिति ॥ विभुरयपरमात्माप्रसवधर्मिण्याअविद्याशक्त्याअविदुष.प्रतिसर्गात्मकैः स्पंदैः क्रीडते विदुष प्रतितुतत्संहारात्मिक
याविद्याशक्त्यासमूलसर्गसत्त्वबाधितत्वात्कूटस्थाद्वयेआत्मनिसदैवतिष्ठतीत्यर्थः ॥ १ ॥ तत्रसर्गात्प्रवृत्तस्यसर्गशक्त्युदयइवविराग्यान्निवृत्तस्यसंहारशक्त्युदयोविस्वरसतएव
भवतीत्याह ॥ स्वयमिति ॥ २ ॥ तत्रज्ञातात्मनिजीवजगत्साधारणसत्तासामान्यात्मनाविभाव्यमानेतद्विशेषात्मकबाह्याध्यात्मिकपदार्थजालकल्पनेदृष्टांतानाह ॥ चंद्रेति ॥
अर्चिष प्रभाज्वालाप्रभेदायथाकल्पितास्तथाजगद्वैचित्र्यतद्ग्राहकबुद्ध्यादिवैचित्र्यकल्पितमित्यन्वयः ॥ तमायोग्रहणमायाशबलदृष्टांतार्थम् ॥ ३ ॥ ४ ॥ सर्वगतस्वप्रकाश

मनुरुवाच॥ ॥सर्गात्मभिर्विभुःस्पंदैःक्रीडतेबालवत्स्वयम्॥ संहारात्मकशक्त्याथसंहृत्यात्मनितिष्ठति॥१॥ स्वयमस्यतथाशक्तिरुदे
त्यावध्यतेयया॥ स्वयमस्यतथाशक्तिरुदेत्युन्मुच्यतेयया॥ २॥ चंद्रार्कवह्नितमायोरत्नादीनांयथार्चिषः॥ यथापत्रादिवृक्षाणांनिर्झरा
णांयथाकणाः॥ ३ ॥ तथेदंब्रह्मणिस्फारेजगद्बुद्ध्यादिकल्पितम्॥ दुःखप्रदमतज्ज्ञानांतदेवातदिवस्थितम्॥ ४॥ अहोनुचित्रामायेयं
तातविश्वविमोहिनी॥ सर्वांगप्रोतमप्यात्मायदात्मानंनपश्यति॥ ५॥ चिदादर्शमयंसर्वंजगदित्येवभावयन्॥ यस्तिष्ठत्युपशांतस्तंस
ब्रह्मकवचःसुखी॥ ६॥ अहमर्थविमुक्तेनभावेनाभावरूपिणा॥ सर्वंशून्यंनिरालंबंचिद्रूपमितिभावयेत्॥ ७॥ इदंरम्यमिदंनेतिबीजंतं
दुःखसंततेः॥ तस्मिन्साम्याग्निनादग्धेदुःखस्यावसरःकुतः॥८॥ राजन्नभावनास्त्रेणरम्यारम्यविभागिता॥ पौरुषातिशयेनाशुस्वेनैवां
तर्विलूयताम्॥ ९॥ अभावनेनभावनंविलूयकर्मकाननम्॥ परंसमेत्यतानवंविशोकएवतिष्ठभोः॥ १०॥

स्यात्मनोऽदर्शनमसतोऽप्रकाशस्यापिजगत स्फुटदर्शनंचाश्चर्यमघटितघटनासमर्थमायावलादेवेत्याह ॥ अहोइति ॥ सर्वेष्वंगेष्ववयवप्रायेषुबाह्याध्यात्मिकभावेषुप्रोतमतर्ब
हिश्चव्याप्तमप्यात्मानयद्यस्मान्नपश्यति ॥ ५॥ कयातर्हिभावनयाआत्मानदृष्ट्वासुखीस्यात्तामाह ॥ चिदादर्शमयमित्यादिना ॥ आदर्शेनगरादिरिवब्रह्मणिजगत्प्रातिभासिक
नवास्तवमितिभावयन्नित्यर्थः ॥ मोहशरैरभेद्यब्रह्मैवकवचयस्यस ॥ ६ ॥ ७ ॥ इतिवैषम्यकल्पनमितिशेषः ॥ ८ ॥ अभावनासमाध्यभ्यासेनसर्वदृश्यविस्मृतिस्तल्लक्षणेना
स्त्रेणरम्यारम्ययो.पदार्थयोर्विभाविताप्रियाप्रियतावैषम्यकल्पना साहिरागद्वेषहेतु.समदृष्टिदार्ढ्यलक्षणपुरुषप्रयत्नातिशयेनविलूयताछिद्यताम ॥ ९ ॥ समाधिलक्षणेनाभा
वनेनबाह्यार्थभावनतत्प्रयोजकधर्माधर्मलक्षणकर्मकाननंचविलूयपरमाकाशादप्यधिकतानवसौक्ष्म्यंसमेत्यतद्बलेनशोकहेत्वलेपेविशोकएवतिष्ठेत्यर्थः ॥ १० ॥

९पूमत्वनयवविवक विलासवान्समाधिनागलितवासकल्पनाभास पूर्णात्मनाऽऽरितभुवनाभोगश्च भूत्वा अधिगत परानंदस्यंदो ... 
यस्यतथाविधस्तद्विभागवहिःस्फुरत्सर्वदृश्यापन्नोऽत एव निरलसंसारामय पंचमपदभूमिकासुचिरायस्थित्वातिसममभूमिकायामात्यंतिकविक्षेपवैषम्यशमेनसमस्वच्छिकापू
णतास्तित शुधआत्मनिकवासनाज्ञानकालुष्यक्षयात्स्वच्छआभोगआकारोयस्यतथाविधोऽभयचिद्वपुर्भवेत्यर्थ ॥ अथवाचतुर्भि पादैश्चतुर्थ्याद्यास्ततसो भूमिका क्रमेणव
र्णिताख्या ॥ ११ ॥ ॥ इति श्रीवासिष्ठम० तात्पर्यप्रकाशे निर्वाणप्रकरणे एकोनविंशाधिकशततम सर्ग ॥ ११९ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥
मुमुक्षुभूमिकालिप्सामुच्यमानस्यनूत्तरा ॥ भक्तस्यपरतस्तिस्रोभूमिका समर्थिता ॥ १ ॥ परसमेत्यनानवमितियपोमभूमिकाभ्यासफलमुक्त्वातदुपायभूताभूमिकाभेदान्वर्ण
यति ॥ शास्त्रेत्यादिना ॥ तथाचसाधनचतुष्टयसंपन्नसहितगुरुसन्निध्यादिमहायकश्रवणप्रथमाभूमिकेत्यादिनिष्कर्षा उत्पत्तिप्रकरणवर्णिता एषा प्रबोध्या ॥ १ ॥ विचार

शान्तिभुवनाभोगाभूत्वाविभागवहिःस्फुरनोगलितकलनाभासोल्लासोविवेकविलासवान् ॥ अधिगतपरानंदस्पंदश्चिरायनिरामय श
ममममितस्वच्छाभोगोभवाभयचिद्वपु ॥ ११ ॥ ॥ इत्यार्षेवा० वा० दे० मो० नि० पू० इक्ष्वाकुमनुसंवादेएकोनविंशाधिकशततम
सर्ग ॥ ११९ ॥ ॥ ७ ॥ ॥ मनुरुवाच ॥ ॥ शास्त्रसज्जनसंपर्कै प्रज्ञामादौविवर्धयेत् ॥ प्रथमाभूमिकैषोक्तायोगस्यैवचयो
गिन ॥ १ ॥ विचारणाद्वितीयास्यात्तृतीयासंगभावना ॥ विलापनीचतुर्थीस्याद्वासनाविलयात्मिका ॥ २ ॥ शुद्धसंविन्मयानंदरूपाभ
वतिपंचमी ॥ अर्धसुप्तप्रबुद्धाभोजीवन्मुक्तोत्रतिष्ठति ॥ ३ ॥ स्वसंवेदनरूपाचषष्ठीभवतिभूमिका ॥ आनंदैकघनाकारासुषुप्तसदृश
स्थिति ॥ ४ ॥ तुर्यावस्थोपशांताथमुक्तिरेवहकेवलम् ॥ समतास्वच्छतासौम्यासप्तमीभूमिकाभवेत् ॥ ५ ॥ तुर्यातीतातुयावस्थापरा
निर्वाणरूपिणी ॥ सप्तमीसापरिप्रौढाविषय स्यान्नजीवताम् ॥ ६ ॥ पूर्वावस्थात्रयत्वत्रजाग्रदित्येवसंस्थितम् ॥ चतुर्थीस्वप्नइत्युक्ता
स्वप्नाभंयत्रवैजगत् ॥ ७ ॥ आनंदैकघनीभावात्सुषुप्ताख्यातुपंचमी ॥ असंवेदनरूपायषष्ठीतुर्यपदाभिधा ॥ ८ ॥

णामननम् ॥ असंगस्याद्वितीयात्मनाभावना निदिध्यासनम् ॥ विलापनीतस्वसाक्षात्कारेणाज्ञानाविप्रपंचस्यबाधसंसाधिनी ॥ वासनापदनतवाश्रयाऽविद्यास्ते ॥ २ ॥
शुद्धसंविन्मयसमाधिपरिपाकात्प्रथमपुरायआनंदस्तद्रूपा ॥ तादृशाद्दृष्टेर्नानुभवमारोहयति ॥ अर्धेति ॥ यथानिद्राशेषेणार्धसुप्ताऽर्धप्रबुद्ध पुरुषोविषयशब्दादीनाक
णपचप्यन स्वापसुखासक्तोनप्रतिवचनादिव्यवहारमिच्छतितद्वदुत्थानकालेप्यस्यांभूमिकायांयोगीतिष्ठतीत्यर्थ ॥ ३ ॥ स्वसंवेदनस्वरसतएवास्वाद्यमानाप्रज्ञाकारानुभवव
जितरूपा ॥ तदाह ॥ आनंदेति ॥ ४ ॥ अथपरासाक्षात्तिरपिक्षीयतेतदाविस्फुरतमसिपूर्णस्वप्रकाशमवशिष्यतेतथाजीवत स्थिति सप्तमी भूमिका सैवमयाशमसमसितस्व
च्छभोगतियामुक्तत्वेथ ॥ आद्यभूमिकात्रयस्यवक्ष्यमाणरीत्यैकाकारात्षष्ठीतुर्या ॥ ५ ॥ सप्तम्याअष्टम्याश्चयोगिजीवनाजीवनमात्रविशेषोनान्यइत्यभेदएवेत्याशयेनाह ॥
तुर्यातीतेति ॥ सप्तमीभूमिरेवतुर्यातीताऽप्यपरिप्रौढासतीविदेहमुक्ति सपयेसाचजीवतांयोगिनांविषयोनस्यादित्यर्थ ॥ ६ ॥ ७ ॥ ८ ॥

॥ अंतरिति ॥ तयासप्तमभूमिकाप्रसिद्धया तामेवप्रशंसति ॥ मनोवचोभिरित्यादिना ॥ ९ ॥ तस्यामेवसर्वदृश्यानांप्रत्यगात्मनिसम्यग्विलयादात्यंतिकीजीवन्मुक्तेत्याह ॥ अंतरिति ॥ तयासप्तमभूमिकाप्रसिद्धया तामेवप्रशंसति ॥ मनोवचोभिरित्यादिना ॥ ९ ॥ ॥ १० ॥ ११ ॥ तस्यातुजीवन्मुक्तस्यकीदृशोनुभवस्तमाह ॥ नम्रियेइति ॥ १२ ॥ एककःएकचरोयतिः ॥ १३ ॥ १४ ॥ १५ ॥ अतिक्षुद्रेषुतृणाग्रेषु अतिमहत्स्ववरे अति प्रकाशेभानौयत्तत्प्रसिद्धतरसन्मात्रंतदेवप्रत्यक्चिन्मात्रमहमस्मीत्यखंडमहावाक्यार्थंमत्वेत्यर्थः ॥ १६ ॥ चितोमेमहिमाव्यापकइतितस्यपरमात्मनोमहिमानंज्ञात्वाक्षयीमर णादिदुःखभागित्यर्थः ॥ तथाचश्रुतिः ॥ एषनित्योमहिमाब्राह्मणस्यनवर्धतेकर्मणानोकनीयान् ॥ तस्यैवस्यात्पदवित्तंविदित्वानलिप्यतेकर्मणापापकेनेति ॥ १७ ॥ जीवन्मु

तुर्यातीतपदावस्थासप्तमीभूमिकोत्तमा ॥ मनोवचोभिरग्राह्यास्वप्रकाशपदात्मिका ॥ ९ ॥ अंतःप्रत्याहृतिवशाच्चेत्यंचेन्नविभावित म् ॥ मुक्तएवास्यसंदेहोमहासमतयातया ॥ १० ॥ यद्भोगसुखदुःखांशैरपरामृष्टपूर्णधीः ॥ सशरीरोऽशरीरोवाभवत्येवंमतिःपुमान् ॥ ११ ॥ नम्रियेनचजीवामिनाहंसन्नाप्यसन्नयम् ॥ आत्मारामोनरस्तिष्ठेत्तन्मुक्तत्वमुदाहृतम् ॥ १२ ॥ व्यवहार्युपशांतोवागृहस्थोवाथवैककः ॥ अहंनकिंचिच्चिदितिमत्वाजीवोनशोचति ॥ १३ ॥ अलेपकोहमजरोनीरागःशांतवासनः ॥ निर्मलास्मिचिदाकाशमितिमत्वानशो चति ॥ १४ ॥ अहमंतादिरहितःशुद्धोबुद्धोऽजरामरः ॥ शांतःसमसमाभासइतिमत्वानशोचति ॥ १५ ॥ तृणाग्रेष्वंबरेभानौनरनागाम रेषुच ॥ यत्तदस्तितदेवेतिमत्वाभूयोनशोचति ॥ १६ ॥ तिर्यगूर्ध्वमधस्तान्मेव्यापकोमहिमाचितः ॥ तस्यानंतविलासस्यज्ञात्वेतिकइव क्षयी ॥ १७ ॥ बद्धवासनमर्थोयःसेव्यतेसुखयत्यसौ ॥ यत्सुखायतदेवाशुवस्तुदुःखायनाशतः ॥ १८ ॥ अविनाभावनिष्ठत्वंप्रसिद्धंसु खदुःखयोः ॥ तनुवासनमर्थोयःसेव्यतेवाविवासनम् ॥ १९ ॥ नासौसुखायतेनासौनाशकालेनदुःखदः ॥ क्षीणवासनयाबुद्ध्यायत्क र्मक्रियतेनघ ॥ २० ॥ तद्दग्धबीजवद्भूयोनांकुरंप्रविमुंचति ॥ देहेंद्रियादिनाकर्मकरणौघेनकल्प्यते ॥ २१ ॥ एकःकर्ताचभोक्ताचकइ वांगोपपद्यते ॥ भावनांसर्वभावेभ्यःसमुत्सृज्यसमुत्थितः ॥ २२ ॥ शशांकशीतलःपूर्णोभातिभासेवभास्करः ॥ क्रियमाणाकृताकर्मतू लश्रीर्देहशाल्मलेः ॥ २३ ॥ ज्ञानानिलसमुद्भूताप्रोड्डीयक्वापिगच्छति ॥ सर्वैवहिकलाजंतोरनभ्यासेननश्यति ॥ २४ ॥

क्तानामपिजीवनस्यविषयभोगाधीनत्वाद्विषयनाशेऽज्ञवदेवदुःखप्राप्तिमाशंक्यविशेषंवक्तुमज्ञस्यविषयनाशेदुःखोत्पत्तिप्रकारमाह ॥ बद्धवासनमितिसार्धेन ॥ १८ ॥ अवि नाभावनिष्ठत्वसहावस्थितिनियमः ॥ जीवन्मुक्तानातद्वैलक्षण्यमाह ॥ तनुवासनमिति ॥ चतुर्थादिभूमिकासुतनुवासनंसप्तमभूमौतुविवासनम् ॥ १९ ॥ एवंकर्मापितेषाम लेपकमित्याह ॥ क्षीणेति ॥ २० ॥ देहेंद्रियादिषुभिन्नेष्वेकात्मतादात्म्याध्यासेनतत्कृतकर्मस्वहमेवैकःकर्तेत्यभिमानेहिकर्मभिर्लेपःस्यात् नचमुक्तानांसोस्तीत्याशयेनाह ॥ देहेंद्रियादिनेति ॥ २१ ॥ भावनामहंताद्यध्यासम् ॥ सर्वेभ्योदेहेंद्रियादिभावेभ्यःसम्यगुत्सृज्यसम्यगुत्थितोनिर्गतः ॥ २२ ॥ कृतासंचितरूपा ॥ २३ ॥ कर्मैवज्ञानकलापि कालेननश्येदित्याशंक्याह ॥ सर्वैवेति ॥ २४ ॥

त्स्वरूपमासाद्यसाक्षात्कृत्य ॥ १२ ॥ प्रकृतिःस्वाभाविकात्मरूपम् ॥ भावनाअनादिविस्तृतस्वरूपप्रतिसंधा
कथतर्हितन्छाम्यतितत्राह ॥ एतदिति ॥ एतस्यात्मनःस्वंपारमार्थिकंरूपमासाद्यसाक्षात्कृत्य ॥ १२ ॥ तादृशसाक्षात्कारेणजीवन्मु
नंचरमसाक्षात्कारवृत्तेस्तदनुप्रवेशात्तन्नाम्नीसाक्षात्काराभिधायदाभवतितदाएषप्रसिद्धःप्रत्यगात्मैवसशास्त्रप्रसिद्धोमोक्ष स्यादित्यर्थः ॥ १३ ॥ इतिश्रीवासिष्ठम०
क्तःकथंतिष्ठतितदाह ॥ प्रशान्तेति ॥ शास्त्रार्थजिज्ञासाकाव्यनाटकाद्यर्थजिज्ञासालौकिकप्रियाप्रियादिविकल्पविक्षेपाश्चनिवर्ततेइतिसमः ॥ १४ ॥ मुक्तस्येहयतेश्वर्यालक्षणैर्मनुनेर्यते ॥ १ ॥ निरस्तनिःशेषवि
ता०प्र०नि०पू०एकविंशत्युत्तरशततमःसर्गः ॥ १२१ ॥ ॥ ७ ॥ ॥ निरूढस्यात्मबोधस्यतुर्यातीतपदस्थिते. ॥ मुक्तस्येहयतेश्वर्यालक्षणैर्मनुनेर्यते ॥ १ ॥ निरस्तनिःशेषवि
कल्पविप्लवःसमःसुखंतिष्ठतीतियायोगिनःस्थितिरुक्तातामेवप्रपञ्चयति ॥ येनकेनचिदित्यादिना ॥ आच्छन्नोवस्त्रैराच्छादितः ॥ आशितोभोजितः सयोगीसम्राट्मानुषानंदपरा
र्वाधप्राप्तोराजेवेतिपामरदृशेयमुपमा ॥ तत्त्वदृशातुनतदानंदस्योपमास्ति यतोवाचोनिवर्तन्तइत्यादिश्रुत्याहैरण्यगर्भानंदांतविषयानंदमीकरमहार्णवतयानिरवधित्वप्रतिपाद

एतत्स्वरूपमासाद्यप्रकृतिःपरिशाम्यति ॥ नदेशोमोक्षनामास्तिनकालोनेतरास्थितिः ॥ १२ ॥ अहंकृतेर्विमोहस्यक्षयेणेयंविलीयते ॥
प्रकृतिर्भावनानाम्नीमोक्षःस्यादेषएवसः ॥ १३ ॥ प्रशांतशास्त्रार्थविचारचापलोनिवृत्तनानारसकाव्यकौतुकः ॥ निरस्तनिःशेषविकल्प
विप्लवःसमःसुखंतिष्ठतिशाश्वतात्मकः ॥ १४ ॥ ॥इ०वा०वा०दे०मो०नि०पू०इक्ष्वाकुमनुसं०एकविंशत्यधिकशततमःसर्गः ॥ १२१ ॥
मनुरुवाच ॥ ॥ येनकेनचिदाच्छन्नोयेनकेनचिदाशितः ॥ यत्रक्वचनशायीचससम्राडिवराजते ॥ १ ॥ वर्णधर्माश्रमाचारशास्त्रयंत्रेण
योज्झितः ॥ निर्गच्छतिजगज्जालात्पंजरादिवकेसरी ॥ २ ॥ वाचामतीतविषयोविषयाशादशोज्झितः ॥ कामप्युपगतःशोभांशरदीव
नभस्तलम् ॥ ३ ॥ गंभीरश्चप्रसन्नश्चगिराविवमहाह्रदः ॥ परानंदरमाक्षुब्धोरमतेस्वात्मनात्मनि ॥ ४ ॥ सर्वकर्मफलत्यागीनित्यतृप्तोनि
राश्रयः ॥ नपुण्येननपापेनलिप्यतेनेतरेणच ॥ ५ ॥ स्फटिकःप्रतिबिंबेनयथायातिनरंजनम् ॥ तज्ज्ञःकर्मफलेनांतस्तथानायातिरंजनम्
॥ ६ ॥ विहरञ्जनतावृंदेदेहकर्त्तनपूजनैः ॥ खेदाह्लादौनजानातिप्रतिबिंबगतैरिव ॥ ७ ॥ निस्तोत्रोनिर्विकारश्चपूज्यपूजाविवर्जितः ॥
संयुक्तश्चवियुक्तश्चसर्वाचारनयक्रमैः ॥ ८ ॥ तस्मान्नोद्विजतेलोकोलोकान्नोद्विजतेचसः ॥ रागद्वेषभयानंदैस्त्यज्यतेपिचयुज्यते ॥ ९ ॥

नात ॥ १ ॥ तस्यार्थसिद्धविद्वत्संन्यासमाह ॥ वर्णेति ॥ शास्त्रेणयंत्रणाकिंकरवन्नियमनतयावर्जितः ॥ जगतिजालवद्बद्धयहेतोरैहिकामुष्मिकक्रियातत्फलकर्तृत्वभोक्तृत्वा
दिवासनासंघादित्यर्थः ॥ २ ॥ वाचामतीतस्यनिरतिशयानंदस्यानुभवस्यैवविषयः ॥ अतएवविषयाशादशोज्झितः ॥ ३ ॥ परस्यानंदस्यरसनरसोनिरंतरमास्वादनंतस्माद
क्षुब्धोऽप्रच्युतः ॥ ४ ॥ इतरेणहर्षविषादादिनाच ॥ ५ ॥ कर्मफलेनप्रारब्धोपनीतसुखदुःखादिना ॥ रंजनरूपातरापत्तिम् ॥ ६ ॥ तदेवस्पष्टमाह ॥ विहरन्निति ॥ देहस्यक
र्तनैश्छेदनैःपूजनैश्चदेहप्रतिबिंबमिवमिथ्येतिपश्यतीतिप्रतिबिंबगतैरिवेत्युच्यते ॥ ७ ॥ पूज्यःपूजितोपिनिःस्तोत्रःअप्रशंसमानः पूजाविवर्जितोपिनिर्विकारइतिकर्मधारयेक्रमे
णविशेषणान्वयः ॥ संयुक्तश्चेत्यादिरस्यैवप्रपंचः ॥ ८ ॥ उद्विजतेबिभेति ॥ रागद्वेषादिपदैस्तन्निमित्तविषयालक्ष्यन्ते ॥ कदाचित्प्रारब्धबलाद्युज्यतेत्यज्यतेच ॥ ९ ॥

कस्यचित्कुशलमतेरपिप्रमेयप्रमितिविषयेस्वप्रसत्त्वतोनारोहतिनांतर्भवति ॥ तस्मात्तंकुशलमतयोपिनपरिच्छेत्तुंशक्नुवंतीत्यर्थः ॥ व्यवहारतस्तुबालेनापिप्रमेयीक्रियतेअस्मे
माप्यनुवर्तनेनवशीक्रियते यतोयमदुराशयःशुद्धचित्तत्वादऋजुरित्यर्थः ॥ १० ॥ तस्यज्ञानसमकालमेवमुक्त्याविदेहाविबाधेनपुनर्मुक्तिनिमित्ततीर्थादौदेहत्यागस्यनार्थितेवनास्ती
त्याह ॥ तनुमिति ॥ कदाचनकदाचिदपितनुमाबात्यजतुवर्तमानक्षणइदानीमपिवातनुंत्यजतु तथाप्यसौज्ञानसप्राप्तिसमयेप्रागेवमुक्तोविदेहश्चेतिपरेणसंबंधः ॥ ११ ॥ तदुप
पादनायबंधमोक्षस्वरूपमाह ॥ अहंभ्रांतिरिति ॥ १२ ॥ सपूजनीयइति ॥ यथाश्रुतिः ॥ यंयंलोकंमनसासंविभातिविशुद्धसत्त्वःकामयतेयांश्चकामान् ॥ तंतंलोकंजयतेतां
श्चकामांस्तस्मादात्मज्ञंह्यर्चयेद्भूतिकामइति ॥ १३ ॥ तत्पूजनमेवपरमपुरुषार्थप्रापकज्ञानहेतुरपीत्याह ॥ नेति ॥ हेअंगक्षीणोभवामयोयेषांतथाविधानांजीवन्मुक्तानांभक्त्या
भजनेनयत्परमपदंज्ञानद्वाराआसाद्यतेतत्तीर्थादिभिर्नासाद्यतइत्यन्वयः ॥ १४ ॥ ब्रह्मपदंहेमेरुशिखरस्थम् ॥ १५ ॥ ॥इ०वा०ता नि०पू० द्वाविंशत्युत्तरशततमःसर्गः॥१२२॥

प्रमेयेकस्यचिदपिनरोहतिमहाशयः ॥ प्रमेयीक्रियतेचापिबालेनाप्यदुराशयः ॥ १० ॥ तनुंत्यजतुवातीर्थेश्वपचस्यगृहेपिवा ॥ माकदा
चनवाराजन्वर्तमानेपिवाक्षणे ॥ ११ ॥ ज्ञानसंप्राप्तिसमयेमुक्तोसौविगताशयः ॥ अहंभ्रांतिर्हिबंधायमोक्षोज्ञानेनतत्क्षयः ॥ १२ ॥
सपूजनीयःसंस्तुत्योनमस्कार्यःसयत्नतः ॥ सनिरीक्ष्योभिवाद्यश्चविभूतिविभवैषिणा ॥ १३ ॥ नयज्ञतीर्थैर्नतपःप्रदानैरासाद्यतेतत्परम
पवित्रम् ॥ आसाद्यतेक्षीणभवामयानांभक्त्यासतामात्मविदांयदंग ॥ १४ ॥ ॥श्रीवसिष्ठउवाच॥ ॥एवमुक्त्वासभगवान्मनुर्ब्रह्मग
हयर्यौ ॥ इक्ष्वाकुरपितांदृष्टिमवष्टभ्यस्थिरोभवत् ॥ १५ ॥ ॥ इत्यार्षेवा०वा०दे०मो०नि०पू० इक्ष्वाकुमनुसंवादेइक्ष्वाकुप्रबोधनं
नामद्वाविंशत्युत्तरशततमःसर्गः ॥ १२२ ॥ ॥ ६ ॥ ॥श्रीरामउवाच॥ ॥एवंस्थितेहिभगवञ्जीवन्मुक्तस्यसन्मते ॥ अपू
र्वोतिशयःकोसौभवत्यात्मविदांवर ॥ १ ॥ ॥श्रीवसिष्ठउवाच॥ ॥नत्वस्यकस्मिंश्चिदेवांशेभवत्यतिशयेनधीः ॥ नित्यतृप्तःप्रशांतात्मा
सआत्मन्येवतिष्ठति ॥ २ ॥ मंत्रसिद्धैस्तपःसिद्धैर्यंत्रसिद्धैश्चभूरिशः ॥ कृतमाकाशयानादिकातत्रस्यादपूर्वता ॥ ३ ॥

तस्यान्यापम्यसिद्धेभ्यःखेचरत्वाणिमादिषु ॥ अनिर्देश्यपरिपूर्णत्वाद्विशेषोनाभिधीयते ॥ १ ॥ वर्णितलक्षणस्यजीवन्मुक्तस्यमणिमंत्रादिसिद्धानामिवखेचरादिसिद्धिरूपोपि
कश्चिदपूर्वोतिशयोस्तिनवेतिसंदिहानोरामःपृच्छति ॥ एवमिति ॥ एवंवर्णितरूपेलक्षणजातेस्थितेसति ॥ १ ॥ तस्यान्यसिद्धागोचरनिरतिशयानंदात्मगोचरोनुभवएवविशेष
इत्याशयनान्तरमाह ॥ नत्वस्येति ॥ तस्यकस्मिंश्चिदितरसिद्धागम्यपरमात्मतत्त्वांशेधीरेवातिशयेनभवतीतियोजना ॥ अथवाअप्यर्थेएवकारः ॥ तस्यसांसारिकसिद्ध्यंशेकस्मि
श्चिदप्यतिशयेऽतिशयधीर्नभवतीतियोजना ॥ तदुक्तमाह ॥ नित्यतृप्तइति ॥ २ ॥ मंत्रसिद्धादिरूपेणाप्यहमेवस्थितइतिसर्वात्मभूतस्यामंत्रसिद्धानांखेचरादिसिद्धीनामपि
ताताम्येतस्यनापूर्वतापीत्याह ॥ मंत्रसिद्धैरिति ॥ अथवाअपूर्वशब्दानिर्णीतपूर्वकारणस्यैतिप्युत्पत्त्यात्मस्वविद्यामनित्यनिरतिशयानंदएवमुख्यः ॥ आकाशयानादिसिद्धि
जातंतुमंत्रसिद्ध्यादिभिःकृतत्वयत्नोत्पादितमितिनतस्यपूर्वतैवनापूर्वतत्यर्थः ॥ ३ ॥

सर्वात्मभूतस्यज्ञस्यसर्वसांसारिकसिद्धी यद्यपूर्वशब्दस्यानन्यप्राप्तत्वमप्यर्थस्तथापिवृद्धैर्मन्त्रसिद्धादिभिरणिमादिसिद्धिजातंप्राप्तमेवेतिनतेष्वपूर्वतेत्याह॥ अणिमाद्यपीति ॥ यत्नेनेति ॥ ४ ॥ तर्हितत्त्वविदस्तेभ्यः कोतिशयस्तत्राह ॥ एषएवेति ॥ तत्त्वज्ञानमेवातिशयइ नातत्त्वयत्नेनतैरेवसाधितत्वादपिनत्वेनपुनःसाधनेप्रयोजनमस्तीत्याशयेनाह ॥ यत्नेनेति ॥ ४ ॥ तर्हितत्त्वविदस्तेभ्यःकोतिशयस्तत्राह ॥ एषएवेति ॥ तत्त्वज्ञानमेवातिशयइ त्यर्थः ॥ अतिशयांतरमाह ॥ सर्वत्रेति ॥ वस्तुषुभोग्येषु ॥ ५ ॥ नीरागत्वफलान्येवतत्त्वज्ञलक्षणतयावर्णयन्नुपसंहरति ॥ एतावदिति ॥ तत्त्वबोधेसशांतिनचिरंतनभ्रमेणनिर्व त्यर्थः ॥ अतिशयांतरमाह ॥ सर्वत्रेति ॥ वस्तुषुभोग्येषु ॥ ५ ॥ यन्मदनादीनामापदामनुदिननिपुणमत्यंततनुत्व तस्यविश्रांतस्यअलिंगासर्वधर्मशून्याब्रह्मचिदेवमूर्तिः सैंधवघनवदेकरसंस्वरूपयस्यतथाविधस्यएतावदेवखलुलिंगंलक्षणम् ॥ रूपाण्य मपक्षयइत्यर्थः ॥ ६ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०त्रयोविंशत्युत्तरशततमःसर्गः ॥ १२३ ॥ ॥ ७ ॥ ॥ निष्कारणत्वंजीवानामासरागेणवद्धता ॥ वस्थास्तुर्यंचमृगव्याधीयमीर्यते ॥ १ ॥ इतरसिद्ध्यपेक्षयाआत्मज्ञानस्योत्कर्षोनित्यनिरतिशयानंदानुभवत्वादेव प्रत्यगात्मनश्चनित्यनिरतिशयानंदरूपताब्रह्मस्वरूपत्वादेवेत्यर्थ

अणिमाद्यपिसंप्राप्तंताद्दशैरेवभूरिशः॥ यत्नेनसाधितत्वात्तैर्नांतरेणात्मदर्शिना ॥ ४ ॥ एषएवविशेषोस्यनसमोमूढबुद्धिभिः॥ सर्वत्रा स्थापरित्यागान्नीरागममलंमनः॥ भवेत्तस्यमहाबुद्धेर्नासौवस्तुषुमज्जति॥ ५॥ एतावदेवखलुलिंगमलिंगमूर्तेःसंशांतसंसृतिचिरभ्र मनिर्वृतस्य॥ तज्ज्ञस्ययन्मदनकोपविषादमोहलोभापदामनुदिनंनिपुणंतनुत्वम्॥ ६ ॥ ॥ इत्यार्षेवा०वा०दे०मो०नि०पू०अज्ञा देर्ज्ञस्यविशेषकथनंनामत्रयोविंशत्युत्तरशततमःसर्गः॥ १२३॥ ॥ ७॥ ॥श्रीवसिष्ठउवाच॥ ॥यथासत्वमुपेक्ष्यस्वंश नैर्विप्रोदुरीहया॥ अंगीकरोतिशूद्रत्वंतथाजीवत्वमीश्वरः॥ १ ॥ भूतानिद्विविधान्येवप्रतिसर्गंस्फुरंतिवै॥ आद्यविस्पंदजातानितानि निष्कारणानिवै॥ २॥ ईश्वरात्समुपागत्यपुनर्जन्मांतराणिच॥ भूतान्यनुभवंत्यंगस्वकृतैरेवकर्मभिः॥ ३॥

स्योपपत्तयेब्राह्मणएवस्वस्वभावोपेक्षावशाज्जीवभावप्राप्तिमाह ॥ यथेत्यादिना ॥ यथाकश्चिद्विप्रःशूद्रांकामयमानस्तत्संभोगसहवासादिदुरीहयास्वंस्वोचितंसत्वंसात्विकब्रा ह्मणधर्मंशनैरुपेक्ष्यचिरकालेनशूद्रत्वमंगीकरोतितथाईश्वरोबुद्ध्यादिसंगत्यातत्प्रयुक्तभोगाशयास्वनित्यशुद्धपूर्णानंदस्वभावमुपेक्ष्यजीवत्वमंगीकरोतीत्यर्थः ॥ १ ॥ उपाधिप्रा धान्येनभोग्यान्युपहितप्राधान्येनभोक्तॄणीतिद्विविधानिमायागतानादिद्विविधसंस्कारपरंपरानुसारिणोहिरण्यगर्भात्मकादाद्यविस्पंदाज्जातानिमायागंधर्वनगरवदाविर्भूतानि अतोमिथ्यात्वान्निष्कारणानिवास्तवसामग्रीनिरपेक्षाणिनहिस्वाभघटादिःस्वोत्पत्तौदंडचक्रादिसामग्रीसापेक्षइत्यर्थः ॥ २ ॥ ननुसाधुकारीसाधुर्भवतिपापकारीपापोभवति पुण्योवैपुण्येनकर्मणाभवतिपापःपापेन तस्माल्लोकात्पुनरेत्यान्यस्मैलोकायकर्मणइत्यादिश्रुतिषुजन्मकर्मणोर्बीजांकुरवदनादिःपरस्परकार्यकारणभावोवगम्यतेतत्कथमीश्व रस्यकर्मशून्यस्यजीवभावेनाद्यसर्गेजन्मोच्यतेतत्राह ॥ ईश्वरादिति ॥ स्वकृतैरुपहितकृतैः ॥ नेश्वरस्यजीवभावेकर्मापेक्षाकिंतुजीवभावापत्त्यनंतरदेहादिजन्मनिपूर्वपूर्वदेहादि कृतकर्मापेक्षा यथासवितुर्जलेप्रतिबिंबनेनचलनादिक्रियापेक्षाप्रतिबिंबस्यतरंगभेदेपुसंक्रमेतत्तद्गतविक्रियानुभवेचोपाधिक्रियापेक्षातद्वदितिभावः ॥ ३ ॥

न्तरस्पष्टमाह ॥ नापकारणभावइति ॥ तथाचोक्तवार्तिके ॥ वियद्वस्तुस्वभावानुरोधादेवनकारकात् ॥ वियत्संपूर्णतोत्पत्तौकुम्भस्यैवदशाधियामिति ॥ ४ ॥ पश्चाच्चेपोकर्मा णांनिवृत्तावुपायमनन्तमाह ॥ आत्मज्ञानादिति ॥ यादृशमात्मानंयोजानातिसतदनुरूपंसंकल्पयतिसंकल्पानुरूपंचकरोति नहिमनुष्यादिदेहात्मतांबुद्धिंविनापुण्यपापेसंकल्पयति करोतिवा ॥ तथाचोक्तंभगवद्भिर्भाष्यकृद्भिः ॥ नह्यनभ्यस्तात्मभावेनदेहेनकश्चिच्चाभियतेइति ॥ देहाध्यासोपिसंकल्पद्वारैवपुण्यपापप्रवृत्तिहेतुरित्याह ॥ संकल्पइति ॥ ५ ॥ संकल्पात्त्वात्मनिसंकल्पितथाविधत्वपुण्यापुण्यप्रवृत्तिभागवासनादिसंतानंनबंधस्यकारणम् ॥ ६ ॥ संकल्पत्यागेउपायमाह ॥ सावधानइति ॥ ग्राह्यग्राहकभेदभ्रमेहिसति ग्राहकस्यग्राह्येअनुकूलत्वप्रतिकूलत्वानुसंधानाद्धानोपादानानुकूलप्रवृत्तिसंकल्पाभवति ॥ ग्राह्यग्राहकविभ्रमत्यागेनतत्साक्षिण्यैकात्म्यलक्षणसावधानत्वाभ्यासेतुसंकल्प

कार्यकारणभावायमीदृशोजन्मकर्मणो ॥ अकारणमुपायातिसर्वेजीवा परात्पदात् ॥४॥ पश्चात्तेपास्वकर्माणिकारणंसुखदुःखयो ॥ आत्मज्ञानात्समुत्पन्नं संकल्पं कर्मकारणम् ॥५॥ संकल्पित्वंहियबंधस्यकारणंतत्परित्यज ॥ मोक्षस्तुनि संकल्पित्वंतदभ्यासपरोभव ॥६॥ सावधानोभवत्वंचग्राह्यग्राहकसंभ्रमे ॥ अजस्रमेवसंकल्पदशांपरिहरऽघने ॥७॥ माभवग्राह्यभावात्माग्राहकात्माचमाभव ॥ भावनामखिलांत्यक्त्वायच्छिष्टंतन्मयोभव ॥ ८ ॥ अजस्रयमेवार्थपतत्यक्षगणोनघ ॥ बध्यतेतत्ररागेणतत्रारागेणमुच्यते ॥९॥ किंचिद्रोचतेतुभ्यतद्बद्धोसिभवास्थितौ ॥ नकिंचिद्रोचतेचित्तेतन्मुक्तोसिभवास्थितौ ॥ १० ॥ तस्मात्पदार्थनिचयात्सहस्थावर जंगमात् ॥ तृणादेर्देवपर्यंतान्माकिंचित्तवरोचताम् ॥ ११ ॥ यत्करोपियदश्नासियज्जुहोपिददासियत् ॥ नकर्त्तासिनभोक्तासितत्रमु क्तमति शर्मा ॥ १२ ॥ सतोतीतनशोचतिभविष्यंचिंतयतिनो ॥ वर्तमानंचगृह्णातिकर्मप्राप्तमखंडितम् ॥ १३ ॥ मनसिग्रथिताभावास्तृ ष्णामोहमदादय ॥ मनसैवमनोरामच्छेदनीयंविजानता ॥ १४ ॥

स्त्वयाच्छिद्यतइतिभाव ॥ ७ ॥ अमुमेवार्थंस्फुटयन्नाह ॥ माभवेति ॥ यच्छिष्टंसाक्षिस्वरूपंतन्मयस्तत्स्वरूप ॥ ८ ॥ असावधानत्वेतुग्राह्येनुकूलरागाऽवर्जनीयइतिवैराग्याभ्यासस्याप्यावश्यकतांदर्शयति ॥ अजस्रमिति ॥ ९ ॥ रागवैराग्ययो स्वरूपंविविच्यदर्शयंस्तयोर्बंधमोक्षलिंगतांदर्शयति ॥ किंचिदिति ॥ यत्यदि ॥ तत्तर्हि ॥ १० ॥ अपरूपाबंधोनुभयो रागस्तत्कार्यबंधोऽस्माद्धिरण्यगर्भसत्कायांतात्तद्भोग्यविषयरूपात्पदार्थनिचयान्निधारितांकिंचिदपितवनरोचताम् ॥ ११ ॥ नन्वेवंपरवैराग्येणभोक्तृत्वा धर्मयपि माबनात्मानभोजनादिक्रियाप्यदुःसमत्वात्तत्कनोवध स्यादित्यस्याशंक्याह ॥ यदिति ॥ तथतासुक्रियासुमुक्तमतिःकूटस्थात्मनिविष्टमसि ॥ तथाचोक्तंभगवता ॥ नैव किंचित्करोमीतियुक्तोमन्येततत्त्वविदिति ॥ १२ ॥ इष्टवियोगानिष्टसंभावनादिसंयुक्तशोकेनबंधप्रसक्तिमाशंक्याह ॥ सतइति ॥ १३ ॥ सर्वबंधक्षयेमनोजयएवोपाय सच मनसैवनान्यथेत्याह ॥ मनसीति ॥ १४ ॥

१ अद्वासिर्यादित्यपिपाठ.

यदुपायेनमनसामनोजयस्तमाह ॥ विवेकेनेति ॥ १५ ॥ मनसामनोजये आत्माश्रयदोषपरिहरति ॥ क्षालयनीति ॥ मलेनक्षारादिना ॥ १६ ॥ मनःसवलितोजीवस्तत्रकि यानश पृथक्कृत्यमनसाच्छेदनीयइतिदर्शयितुजीवरूपाणिविभजते ॥ जीवस्येति ॥ परित्यजमनसाछिधि ॥ १७ ॥ तानिदर्शयति ॥ पाणीत्यादिना ॥ १८ ॥ १९ ॥ विश्व स्यरूपकनिरूपकसत्तास्फूर्तिप्रदमित्यर्थ ॥ २० ॥ २१ ॥ स्थूलसूक्ष्मरूपेजीवस्यजाग्रत्स्वप्नयो.प्रसिद्धे तावन्मात्रपरित्यागेपिनसम्यक्तस्यपरिशुद्धिरित्यवस्थात्रयातीतजिज्ञा समानोराम पृच्छति ॥ जाग्रदिति ॥ स्थितसकीर्णमतएवस्पष्टमलक्षितम ॥ विशेषेणतत्सकरव्यावर्तनेन ॥ २२ ॥ अहभावोजाग्रत्स्वप्नयोर्विक्षेपः अनहभाव सुपुप्तौतन्मूल

विवेकेनातितीक्ष्णेनबलादयइवायसा ॥ मनसैवमनश्छिंधिसर्वभ्रमस्यशांतये ॥ १५ ॥ क्षालयंतिमलेनैवमलंक्षालनकोविदाः ॥ वार यंत्यस्त्रमस्त्रेणविषंप्रतिविषेणच ॥ १६ ॥ जीवस्यत्रीणिरूपाणिस्थूलसूक्ष्मपराणिच ॥ तत्रास्ययत्परंरूपंतद्भजद्वेपरित्यज ॥ १७ ॥ पाणि पादमयोयोयंदेहोभोगायवल्गति ॥ भोगार्थमेतज्जीवस्यरूपंस्थूलमिहास्थितम् ॥ १८ ॥ स्वसंकल्पमयाकारंयावत्संसारभावियत् ॥ चित्तंतद्विद्धिजीवस्यरूपंरामातिवाहिकम् ॥ १९ ॥ आद्यंतरहितंसत्यंचिन्मात्रंनिर्विकल्पकम् ॥ यत्तद्विद्धिपरंरूपंतत्तीयंविश्वरूपकम् ॥ २० ॥ एतत्तुर्यपदंशुद्धमत्रबद्धपदोभव ॥ संपरित्यज्यपूर्वेद्वेमातत्रात्ममतिर्भव ॥ २१ ॥ ॥ श्रीरामउवाच ॥ ॥ जाग्रत्स्वप्नसुपुप्तेपुस्थि तंत्रिष्वप्यलक्षितम् ॥ तुर्यंब्रूहिविशेषेणविविच्यमुनिनायक ॥ २२ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अहंभावानहंभावौत्यक्त्वासदसतीतथा ॥ यदसक्तंसमंस्वच्छंस्थितंतत्तुर्यमुच्यते ॥ २३ ॥ यास्वच्छासमताशांताजीवन्मुक्तव्यवस्थितिः ॥ साक्ष्यवस्थाव्यवहृतौसातुर्यकलनोच्यते ॥ २४ ॥ नैतज्जाग्रन्नचस्वप्नंसंकल्पानामसंभवात् ॥ सुपुप्तभावोनाप्येतदभावाज्जडतास्थितेः ॥ २५ ॥ शांतंसम्यक्प्रबुद्धानांयथास्थि तमिदंजगत् ॥ विलीनंतुर्यमेवाहुरबुद्धानांस्थिरंस्थितम् ॥ २६ ॥ अहंकारकलात्यागेसमतायाःसमुद्भवे ॥ विशरारौकृतेचित्तेतुर्यांव स्थोपतिष्ठते ॥ २७ ॥ अथेमंशृणुदृष्टांतंकथ्यमानंमयाधुना ॥ प्रबुद्धोपियथाबोधमुपैपिविबुधोपम ॥ २८ ॥ कस्मिंश्चित्काननाभोगेम हामौनंव्यवस्थितम् ॥ दृष्ट्वाद्भुतमिदंकिंचिन्मुनिंपप्रच्छलुब्धकः ॥ २९ ॥

मावरणतावुभौव्यष्टिरूपौजीवोपाधीसमष्टिरूपौतुअसद्वाइदमग्रआसीत्ततोवैसदजायतइत्यादिश्रुतिप्रसिद्धेसदसतीतेचत्यक्त्वा ॥ २३ ॥ जीवन्मुक्तेषुव्यवस्थितिर्निष्कृष्टस्थितिर्य स्या. ॥ व्यवहृतौव्यवहारकालेसाक्ष्यवस्थेतिप्रसिद्धा ॥ २४ ॥ तस्याजाग्रदादिसकरवारयति ॥ नैतदिति ॥ जडताआवरणतस्तिस्थतेरज्ञानस्य ॥ २५ ॥ नन्वद्वितीयतुर्यंयर्जाग्रदा दिद्वैतकालेजीवन्मुक्तानामपिकथस्यात्तत्राह ॥ शांतमिति ॥ विलीनंज्ञानबाधितम् ॥ २६ ॥ जलविलीनसैंधववद्विशरारौकृतेसति ॥ २७ ॥ जाग्रतोव्यवहरतःकथचित्त.वि शरारुस्यादित्यसभावनामृगव्याधीयोदाहरणेनवारयति ॥ अथेममित्यादिना ॥ २८ ॥ महामौनज्ञानबाधितवागादिचेष्टम् ॥ इदवक्ष्यमाणंपप्रच्छ ॥ २९ ॥

१ आपद्भावादीत्यपिक्वचित्पाठः

बाणभिन्नमभिद्रुतपलायितमृगपश्चादागेउपगतालुब्धकइतिपूर्वान्वयि ॥ क्विपपच्छतराह ॥ मुनेइत्यादिना ॥ ३० ॥ पुनर्मृगइत्युक्तिभ्रमात् ॥ ३१ ॥ व्यवहारेष्वनभ्यस्ते
ष्वितिशेष ॥ ३२ ॥ अहङ्कारमयमभिमानप्रचुरम ॥ चिरसंचित ॥ ३३ ॥ ३४ ॥ अवस्तादशामुप्यनुभवश्रुत्यादिवाघ्यत्वात्तुर्यैतराजाग्रदादिदशास्थूलादिदेहावनास्ति ॥ ३५ ॥
गुणमयात्मकमायामयचित्तकार्यत्वात्तिसृणामवस्थानांमायावाधेचित्तस्यक्षतत्वादर्पितद्गुपादेयावस्थानामसत्वमित्याह ॥ जाग्रदित्यादिना ॥ ३६ ॥ तिस्रोऽवस्थारजआदि
गुणत्राभाभ्येनविधाविभज्यदर्शयति ॥ घोरमिति ॥ स्वर्गनरकपुनर्जन्मादिहेतुपुण्यपापोत्पादनाद्धनीभावाधिक्याच्च जाग्रन्मयजाग्रदवस्थचित्तघोरमित्यापूक्षम् ॥ ३७ ॥ गुण
त्रयात्मकमायाच्छदविनिर्हीनम ॥ मनश्चित्तयोगिनांप्रारब्धशेषभोगायप्रसमनिशोच्च्यमिवसत्वांशएवानुवर्तिनरजस्तमोंशलेशइत्याह ॥यत्रेति ॥ रजसाप्रक्षोभ्यमाणत्वाच्च

पश्चादुपगतोबाणभिन्नमृगमभिद्रुतम् ॥ मुनेमदीयबाणेनविद्धोमृगइहागत ॥ ३० ॥ क्वप्रयातोमृगइतिप्रत्युवाचसतमुनि ॥ समशी
लावयसाधोमुनयोवनवासिन ॥ ३१ ॥ नास्माकमस्त्यहङ्कारोव्यवहारेपुय क्षम ॥ सर्वार्णीद्रियकर्माणिकरोतिहिसखंमन ॥ ३२ ॥
अहङ्कारमयतन्मेनूनप्रगलितचिरम् ॥ जाग्रत्स्वप्नसुषुप्ताख्यादशावेद्मिनकाश्चन ॥ ३३ ॥ तुर्यएवहितिष्ठेहतत्रदृश्यनविद्यते ॥ इतितस्य
वच श्रुत्वामुनिनायस्यराघव ॥ ३४ ॥ लुब्धकोर्थमविज्ञायजगामाभिमतांदिशम् ॥ अतोवच्मिमहाबाहोनास्तितुर्यैतरादशा ॥ ३५ ॥
निर्विकल्पाहिचित्तुर्यंतदेवास्तीहनेतरत् ॥ जाग्रत्स्वप्नसुषुप्ताख्यत्रयरूपहिचेतस ॥ ३६ ॥ घोरशांतचमूढच आत्मचित्तमिहास्थितम् ॥
घोरजाग्रन्मयचित्तशांतस्वप्नमयस्थितम् ॥ ३७ ॥ मूढसुषुप्तभावस्थत्रिभिर्हीनमृतभवेत् ॥ यच्चचित्तमृतंतत्रसत्वमेकस्थितसमम् ॥
तदेवयोगिन सर्वयत्नात्संपादयतिहि ॥ ३८ ॥ समस्तसकल्पविलासमुक्ततुर्यपदेतिष्ठनिरामयात्मा ॥ यत्रास्थिता साधुसदैवमुक्ता प्रशा
तस्तेटामुनयोमहांत ॥ ३९ ॥ ॥ इ० वा० वा० दे० मो० नि० पू० मृगव्याधीयनामचतुर्विंशत्युत्तरशततम सर्ग ॥ १२४ ॥ ॥ ७ ॥
॥ श्रीवसिष्ठउवाच ॥ ॥ सिद्धांतोध्यात्मशास्त्राणांसर्वापह्नवएवहि ॥ नाविद्यास्तीहनोमायाशांतंब्रह्मेदमक्लमम् ॥ १ ॥

मम ॥ तादृशेचित्तेनैमल्यातिशयेनस्वात्मसुखस्यसदैवाविर्भावात्सर्वव्यापारोपरमेणसमाध्यभ्यासयत्नात्संपादयतीत्यर्थ ॥ ३८ ॥ अतस्त्वमपितादृशचित्तसंपाद्यतुर्यपदेविश्रां
तस्तिष्ठेत्याह ॥ समस्तेति ॥ स्पष्टम् ॥ ३९ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० पू० चतुर्विंशत्युत्तरशततम सर्ग ॥ १२४ ॥ ॥ ७ ॥ ॥ सर्वापह्नवसिद्धांतवादिना
यमविभ्रमा ॥ तुर्येतथाविधेस्थैर्यसोपायमुपदिश्यते ॥ १ ॥ अविद्ययासहजीवस्यावस्थात्रयप्रपंचस्यमायायाऐश्वरस्यवियदादिप्रपंचस्यचेतिसर्वस्यद्वैतजातस्यापह्नवआत्मान
मधिकृत्यप्रवृत्तानांश्रुतिस्मृतीतिहासपुराणादिशास्त्राणांपरमसिद्धांतोनवस्तुप्रकाशन स्वप्रकाशस्यात्मवस्तुन स्वत सिद्धत्वात्तस्मिंस्तद्विषयमाणाप्रसरादित्याह ॥ सिद्धांतइति ॥ शां
तसर्वोपद्रवरहितमविरनित्यापरोक्षप्रकाशांतेनकम्पनइत्यक्लममनायासमुपायसाध्यमित्यर्थ ॥ तथाचश्रुति ॥ यतोवाचोनिवर्तंते अप्राप्यमनसासहेति ॥ तथाचब्रह्मविद्याचार्यैरप्युक्त
म् ॥ यत्परमेयप्रमासाक्षिकमर्थधाम्नाभिमितिचाप्तिसिद्धमुनिवर्तकत्वादिति ॥ १ ॥

प्रवृत्ताइत्या श्रुत्यादिसिद्धांतापरिज्ञानादेवस्वबुद्धिवैभवेनजगन्मूलान्वेषिणांवादिनांब्रह्मशब्दवाच्येसर्वशक्त्यात्मकमायाशबलेब्रह्मणिबुद्धिदोषवैचित्र्यान्नानाविधा कल्पना प्रवृत्ताइत्या
श्रुत्यादिसिद्धांतापरिज्ञानादेवस्वबुद्धिवैभवेनजगन्मूलान्वेषिणांवादिनां ... सिद्धांतभेदान्कल्पयित्वा ॥ ३ ॥ सर्वंमायातदृश्यजातपरित्यज्य ॥ समनस्कसर्वेंद्रियव्यापारोपरमान्महामौनी ॥ पू
ह ॥ शांतइतिद्वाभ्याम् ॥ २ ॥ निर्णीयस्वस्वबुद्ध्यनुसारेणसिद्धांतभेदान्कल्पयित्वा ॥ ३ ॥ ... पंचमादिभूमिकाजयाज्जाग्रदवस्थोपिसुषुप्तइवस्थित. ॥६॥ अवेदनात्प्रियद्वेष्यत्वाननुसंधानात् ॥७॥
र्णानंदचिदात्मनिनिर्वाणवान्सन्आत्मन्येवास्वेतिपरेणान्वयः ॥ ४ ॥ ५ ॥ पंचमादिभूमिकाजयाज्जाग्रदवस्थोपिसुषुप्तइवस्थित. ॥ ... विज्ञात सर्वेषांभुवनत्रयवस्तूनांसारोयेन अतएवश्रीम
अवेदनादित्येतदेवस्पष्टयति ॥ दृष्ट्वेति ॥ ८ ॥ सवेदनीयचिंतनीयम् ॥ असुखदुःखम ॥ मध्यमतदुभयसाधनम् ॥ ९ ॥ विज्ञात सर्वेषांभुवनत्रयवस्तूनांसारोयेन अतएवश्रीम
तूस्वत सर्वत. प्रकाशेनशोभमानयद्रसायननिरतिशयसुखममृतंचतन्मयः ॥ अतएवचआसमतात्पीनपुष्टमंडलयस्यतादृशोयःशशांक पूर्णचंद्रस्तत्कल्प. परंपरमात्मानमभ्युपेत

शांतएवचिदाभासेस्वच्छेसमसमात्मनि ॥ समग्रशक्तिखचितेब्रह्मेतिकलिताभिधे ॥ २ ॥ निर्णीयकेचिच्छून्यत्वंकेचिद्विज्ञानमात्रताम् ॥ केचिदीश्वररूपत्वंविवदंतेपरस्परम् ॥ ३ ॥ सर्वमेवपरित्यज्यमहामौनीभवानघ ॥ निर्वाणवान्निर्मननःक्षीणचित्तःप्रशांतधीः ॥ ४ ॥ आत्मन्येवास्वशांतात्मामूकांधबधिरोपमः ॥ नित्यमंतर्मुखोभूत्वास्वात्मनांतःप्रपूर्णधीः ॥ ५ ॥ जाग्रत्येवसुषुप्तस्थःकुरुकर्माणिराघव ॥ अंतःसर्वपरित्यागीबहिःकुरुयथागतम् ॥ ६ ॥ चित्तसत्तापरंदुःखंचित्तासत्तापरंसुखम् ॥ अतश्चित्तंचिदेकात्मानयक्षयमवेदनात् ॥ ७ ॥ दृष्ट्वारम्यमरम्यंवास्थेयंपाषाणवत्समम् ॥ एतावतात्मयत्नेनजिताभवतिसंसृतिः ॥ ८ ॥ सवेदनीयंनसुखंनासुखंनचमध्यमम् ॥ एतावतात्मयत्नेनदुःखांतोनंतआप्यते ॥ ९ ॥ आपीनमंडलशशांकवदंतरेवश्रीमद्रसायनमयःसुखमेतितज्ज्ञः ॥ विज्ञातसर्वभुवनत्रयवस्तुसारःकुर्वन्ननामकुरुतेपरमभ्युपेतः ॥ १० ॥ इ० वा० वा० दे० मो० नि० पू० तुर्यैस्थैर्योपायकथनंनामपंचविंशत्युत्तरशततमःसर्गः ॥ १२५ ॥ ॥ ७ ॥ ॥ श्रीरामउवाच ॥ ॥ सप्तानांयोगभूमीनामभ्यासःक्रियतेकथम् ॥ कीदृशानिचचिह्नानिभूमिकांप्रतियोगिनः ॥ १ ॥

स्तज्ज्ञोजीवन्मुक्तिसुखमेति ॥ कुर्वन्नपिप्रारब्धोपनीतंव्यवहारंनकुरुते ॥ प्रतिबिंबचेष्टायामिवनस्वस्यकर्तृत्वंपश्यतीत्यर्थः ॥ १० ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशे नि० पू० पंचविंशत्युत्तरशततम.सर्गः ॥ १२५ ॥ ॥ ७ ॥ ॥ उच्यतेयोगभूमीनामभ्यासक्रमलक्षणे ॥ अंतरालेमृतौभोगास्ततोजन्मांतरेजय. ॥ १ ॥ जाग्रत्येवसुषुप्तस्थःकुरुकर्माणिराघवेतिचतुर्थभूमिकारूढंरामंप्रतिपंचमादिभूमिकास्थितिःसंपाद्येत्युक्तम् ॥ तत्संपादनकामोरामःस्वजितजेतव्यभूमिकाविभागज्ञानायतल्लक्षणानितदभ्यासक्रमंचपृच्छति ॥ सप्तानामिति ॥ भूमिकांप्रतिप्रतिभूमिकंयोगिनःकीदृशानिचिह्नानिभवंति ॥ वीप्सायांप्रतेःकर्मप्रवचनीयसंज्ञायाद्विर्वचनस्याव्ययीभावस्यवाआवश्यकत्वात्तदकरणछांदसम् ॥ १ ॥

उदाररूपासुचित्तशुद्ध्यनुकूलासुशौचसत्सगेश्वरोपासनजपा

तस्यप्रथमभूमिकाप्राप्तिक्रममाह ॥ कथमित्यादिना ॥ ७ ॥ भावनासुभोगतत्साधनचिंतासु ॥ विरागवैरस्यम् ॥ उदाररूपासुचित्तशुद्ध्यनुकूलासुशौचसत्सगेश्वरोपासनजपा दिरूपासुक्रियासुक्रमतेसज्जते ॥ तेनचान्वहचित्तशुद्ध्युपचयेनतृष्णाक्षयानुमोदते ॥ ८ ॥ विचिकित्सतिजुगुप्सते ॥ मर्माणिपरेषारहस्यदोषान्नोदाहरतिनभाषते ॥ ९ ॥ परेषा स्वस्यचमनस.अनुद्वेगकराणिमृदून्यल्पायासमहाफलानियमनियमादिकर्माणिसेवते ॥ भोगेचपापावश्यभावात्तनापेक्षते ॥ १० ॥ पेशलान्यनुद्वेगकराणि ॥ उचितानिस त्यप्रियहितादिरूपाणि ॥ ११ ॥ एवगुणविशिष्टपुरुषस्यसच्छास्त्रश्रवणाधिकारलक्षणायाप्रथमभूमिकायामवतारइत्याह ॥ तदेति ॥ सज्जनान्शातिदातिज्ञानविज्ञानसपन्ना न् ॥ १२ ॥ यत.कुतश्चित्तत्सेवानुकूलधनादिसाधनमानीयतान्सेवमानस्तन्मुखाज्ज्ञानशास्त्राणिपुराणमोक्षधर्माध्यात्मसहितादीन्यवेक्षतेश्रृणोतीत्यर्थ. ॥ १३ ॥ भूमिकावा

कथंविरागवान्भूत्वासंसाराद्धिंधतराम्यहम् ॥ एवंविचारणपरोयदाभवतिसन्मतिः ॥७॥ विरागमुपयात्यंतर्भावनास्वनुवासरम् ॥ क्रि यासूदाररूपासुक्रमतेमोदतेन्वहम् ॥८॥ ग्राम्यासुजडचेष्टासुसततंविचिकित्सति ॥ नोदाहरतिमर्माणिपुण्यकर्माणिसेवते ॥ ९॥ मनो नुद्वेगकारीणिमृदुकर्माणिसेवते ॥ पापाद्बिभेतिसततंनचभोगमपेक्षते ॥ १० ॥ स्नेहप्रणयगर्भाणिपेशलान्युचितानिच ॥ देशकालोपप न्नानिवचनान्यभिभाषते ॥ ११ ॥ तदासौप्रथमामेकांप्राप्तोभवतिभूमिकाम् ॥ मनसाकर्मणावाचासज्जनानुपसेवते ॥ १२ ॥ यतःकु तश्चिदानीयज्ञानशास्त्राण्यवेक्षते ॥ एवंविचारवान्यःस्यात्संसारोत्तारणंप्रति ॥ १३ ॥ सभूमिकावानित्युक्तःशेषःस्वार्थइतिस्मृतः ॥ वि चारनाम्नीमितरामागतोयोगभूमिकाम् ॥ १४ ॥ श्रुतिस्मृतिसदाचारधारणाध्यानकर्मणाम् ॥ मुख्ययाव्याख्ययाख्याताञ्छ्रयतेश्रेष्ठपं डितान् ॥ १५ ॥ पदार्थप्रविभागज्ञःकार्याकार्यविनिर्णयम् ॥ जानात्यधिगतश्रव्योगृहंगृहपतिर्यथा ॥ १६ ॥

न्प्रथमभूमिकाप्रविष्टइत्युक्तः ॥ शेष उक्तसाधनचतुष्टयादिसपत्तिहीनस्त्वध्यात्मग्रथासक्तोपिरागादिनाअनधिकारिजनप्रतारणेनार्जनादिनाउदरभरणशीलत्वात्स्वार्थोविच कइत्यर्थ. ॥ सेयशुभेच्छाख्याप्रथमाभूमिका ॥ तस्यक्रमेणद्वितीयभूमिकाप्रवेशक्रममाह ॥ विचारेति ॥ भूमिकामागत अधिकारप्राप्त्याऽवतीर्णः ॥ १४ ॥ सतत्रकिंकरोति तदाह ॥ श्रुतीति ॥ श्रुतीनास्मृतीनासदाचाराणाधारणाध्यानकर्मणासाध्येनसमाधिनासाधनैश्चयमनियमासनप्राणायामप्रत्याहारै प्रतिपाद्येयस्ययोगशास्त्रस्यतस्यचमुख्य याअनुष्ठानानुष्ठापनफलोपहितयाव्याख्ययाव्याख्यानेनख्यातान् आत्मतत्वानुभवोपदेशकुशलत्वाच्छ्रेष्ठान्पडितान्गुरून्श्रयतेश्रवणमननादिविचारायशरणगच्छतीत्यर्थः ॥ तथाचश्रुतिः ॥ तद्विज्ञानार्थंसगुरुमेवाभिगच्छेत्समित्पाणि श्रोत्रियब्रह्मनिष्ठमिति ॥ १५ ॥ स्वयंव्याकरणाद्यगाभिज्ञत्वात्पदानातदर्थानाचवाच्यलक्ष्यादिरूपाणालक्षणादिप्र विभागज्ञ.शिष्योगुरुमुखादधिगतश्रव्य सन्कार्यसाध्यकर्मकाडार्थस्तद्विलक्षणमकार्यसिद्धब्रह्मकाडार्थस्तयोर्विनिर्णयगृहपतिःस्वगृहकोष्ठविभागमिवस्पष्टजानाति ॥ १६॥

---

१ कर्मणामितिषष्ठाबहुवचनघटितस्तस्येत्यतोग्रथःसर्वत्रापलब्धोपिविसगतत्वाद्विचारणाय ॥ यदितुधारणाध्यानकर्मण साध्येनसमाधिनासाधनैर्यमनियमासनप्राणा यामप्रत्याहारैःसहधारणाध्यानेकर्मणीप्रतिपाद्येयस्ययोगशास्त्रस्यतस्यचेतिपाठ.कल्प्यतेतर्हिसर्वसगतमितिभाति ॥ धारणाध्यानेकर्मणीयस्येतिसमासः ॥ प्रतिपाद्यप्रतिपा दकभावःसबधःषष्ठ्यर्थः ॥

यद्दिर्लोकमयादानुसारेणयराश्रितामपि ॥ अनेनप्रथमभूमिकायामेवतेषामतनिवृत्ततादर्शिता ॥ १७ ॥ शास्त्ररहस्यंपरमतात्पर्यंप्रमाणासंभावनानिरासेनाधिगच्छति ॥ गुरु
सज्जनाभिमतमात्मरहस्यप्रमेयासंभावनानिरासनाधिगच्छति ॥ १८ ॥ एवंद्वितीयभूमिकाजितवतस्तृतीयभूमिकाप्रवेशमाह ॥ असंसगेति ॥ ततस्तृतीयांभूमिकांपततिप्रवि
शति ॥ १९ ॥ यथावदिति श्लोकद्वयंयथायोगपूर्वभूमिकाद्वयानुसार ॥ २० ॥ २१ ॥ यामवासविक्षेपशान्त्येनसमाध्यभ्यासानिवाहाद्वनवाससविहारेण ॥ २२ ॥ समयपि
नयसारध्यानकालेपूर्वभूमिकाद्वयधर्मानुवृत्तिरप्यावश्यकीतिदर्शयति ॥ अभ्यासादिति ॥ २३ ॥ असंगसुखसौम्यतस्पृक्तिविभज्यप्याचष्ट ॥ तृतीयामिति ॥ २४ ॥ सा

मदाभिमानमात्सर्यमोहलोभातिशायिताम् ॥ बहिरप्याश्रितामीषत्त्यजत्यहिरिवत्वचम् ॥ १७ ॥ इत्थंभूतमतिःशास्त्रगुरुसज्जनसेव
नात् ॥ सरहस्यमशेषेणयथावदधिगच्छति ॥ १८ ॥ असंसर्गाभिधामन्यांतृतीयांयोगभूमिकाम् ॥ ततः पतत्यसौकान्तः पुष्पशय्यामि
वामलाम् ॥ १९ ॥ यथावच्छास्त्रवाक्यार्थेमतिमाधायनिश्चलाम् ॥ तापसाश्रमविश्रामैरध्यात्मकथनक्रमैः ॥ २० ॥ संसारनिंदकैस्तद्वद्वै
राग्यकरणक्रमैः ॥ शिलाशय्यासमासीनोजरयत्यायुराततम् ॥ २१ ॥ वनवासविहारेणचित्तोपशमशोभिना ॥ असंगसुखसौम्येनका
लंनयतिनीतिमान् ॥ २२ ॥ अभ्यासात्साधुशास्त्राणांकरणात्पुण्यकर्मणाम् ॥ जंतोर्यथावदेवेयंवस्तुदृष्टिः प्रसीदति ॥ २३ ॥ तृतीयांभू
मिकांप्राप्यबुधोनुभवतिस्वयम् ॥ द्विप्रकारमसंसंगंतस्यभेदमिमंशृणु ॥ २४ ॥ द्विविधोयमसंसंगः सामान्यः श्रेष्ठएवच ॥ नाहंकर्तानभो
क्तानबाध्योनचबाधकः ॥ २५ ॥ इत्यसंजनमर्थेषुसामान्यासंगनामकम् ॥ प्राक्कर्मनिर्मितंसर्वमीश्वराधीनमेवच ॥ २६ ॥ सुखंवाय
दिवादुःखंकैवाममकर्तृता ॥ भोगाभोगामहारोगाः संपदः परमापदः ॥ २७ ॥ वियोगायैवसंयोगाआधयोव्याधयोधियः ॥ कालः क
लनोद्युक्तःसर्वभावाननारतम् ॥ २८ ॥ अनास्थयेतिभावानांयद्भावनमांतरम् ॥ वाक्यार्थलब्धमनसः सामान्योसावसंगमः ॥ २९ ॥

मान्यःपूर्वभूमिकासाधारणः ॥ स्वदेहक्रियाफलयोर्नकर्तानभोक्ताचेत्युदासीनः ॥ परक्रियाफलानांचनबाध्योबाधकश्चेत्यसंगः ॥ २५ ॥ इतिनिश्चयेन ॥ अर्थेषुदृश्येष्वस
जनमनभिष्वंगः ॥ सामान्यासंगमेवदृढीकर्तुंमुपपादयति ॥ प्राक्कर्मेतिसार्धत्रिभिः ॥ सुखस्यापिप्राप्यमाणत्वविशेषदुःखस्याप्यमाप्यसर्वंप्राक्कर्मनिर्मितकमत्वानभ्युपपक्षे ईश्वरत्वात
भ्युपपक्षेत्वीश्वराधीनमेव ॥ वाशब्दउत्तरपक्षस्यप्रामाणिकत्वद्योतनाय ॥ २६ ॥ पक्षद्वयेपिममात्वाभ्यासात्तेष कर्तृत्वानुशासनिकोकर्तृताकैवनकाचिदपीत्यर्थः ॥ असंस
र्गोपयुक्तामन्यामप्यनास्थाहेतुभावेपुदर्शयति ॥ भोगाइति ॥ २७ ॥ २८ ॥ इयमनास्थापिश्रवणादिसाधनाभ्यासेनवाक्यार्थज्ञानासक्तस्यैवासंसगस्तस्यापनाप्यस्येत्याह ॥
वाक्यार्थेति ॥ २९ ॥

अयंचासंसग.पूर्वभूमिकयोरेवसत्संगाद्युपायैःसम्यगभ्यसनीयइत्याह ॥ अनेनेति ॥ श्रवणमननात्मिकानामात्मसविदांप्रयोगेणआवर्त्तनेन ॥ तथाचभगवतोबादरायणस्यसूत्र माटत्तिरसकृदुपदेशादिति ॥ ३० ॥ आत्मवस्तुनिप्रमाणप्रमेयासभावनाद्वयनिरासेनस्फुटतांइत्थमेवात्मवस्त्विति विश्वासगोचरतामागतेसति ॥ ३१ ॥ सप्तम्यंतत्रयपूर्वान्वयि वस्तुनीत्यस्यविशेषणम् ॥ श्रेष्ठासंसगंदर्शयति ॥ नाहमित्यादिना ॥ नाहंकर्त्ताकित्वीश्वरएवकर्त्ता ॥ ममप्राकृतमिदानींक्रियमाणवाकर्मनास्तीत्यादिनिरासतत्प्रतियोग्यादि विकल्पशब्दार्थवेदनामपिदूरतरेकृत्वायन्मौनमासनमितिपरेणान्वयः ॥ ३२ ॥ मौनवाङ्मनश्चक्षुरादिचेष्टाशून्यनिदिध्यासनपरिपाकफलनिर्विकल्पसमाधिनायत्आसनमव स्थानम् ॥ ३३ ॥ यद्वह्मैकरस्यविलीनचित्तटत्त्यात्मकमासितमतर्बाह्यादिसर्ववस्त्वालबनशून्यमित्यर्थः ॥ चेतनेचिदाभासे ॥ सर्वाविषयसमम्यः ॥ ३४ ॥ यतआसितभास

अनेनक्रमयोगेनसंयोगेनमहात्मनाम् ॥ वियोगेनासतामंतःप्रयोगेणात्मसंविदाम् ॥३०॥ पौरुषेणप्रयत्नेनसंतताभ्यासयोगतः ॥ करामलकवद्वस्तुन्यागतेस्फुटतांदृढम् ॥ ३१ ॥ संसारांबुनिधेःपारेसारेपरमकारणे ॥ नाहंकर्त्तेश्वरःकर्त्ताकर्मवाप्राक्तनंमम ॥ ३२ ॥ कृत्वादूरतरेनूनमितिशब्दार्थभावनम् ॥ यन्मौनमासनंशांतंतच्छ्रेष्ठासंगउच्यते ॥ ३३ ॥ यन्नांतर्नबहिर्नाधोनोर्ध्वंनाशासुनांबरे ॥ नपदार्थेनापदार्थेनजडेनचचेतने ॥ ३४ ॥ आसितंभासनंशांतमभासंनभसासमम् ॥ अनाद्यंतमजंकांतंतच्छ्रेष्ठासंगउच्यते ॥ ३५ ॥ संतोषामोदमधुरःसत्कार्यामलपल्लवः ॥ चित्तनालाग्रसंलीनोविघ्नकंटकसंकटः ॥ ३६ ॥ विवेकपद्मोरूढोंतर्विचारार्कविकासितः ॥ फलंफलत्यसंसंगांत्तृतीयांभूमिकामिमाम् ॥ ३७ ॥ समवायाद्विशुद्धानांसंचयात्पुण्यकर्मणाम् ॥ काकतालीययोगेनप्रथमोदेतिभूमिका ॥ ३८ ॥ भूमिःप्रोदितमात्रातैरम्तांकुरिकेवसा ॥ विवेकेनांबुसेकेनरक्ष्यापाल्याप्रयत्नतः ॥ ३९ ॥

नंस्वप्रकाशचिद्रूपम ॥ अभासप्रकाशकांतरशून्यम ॥ ३५ ॥ सचायंसमाधिःसदाचारोपबृंहितविवेकस्यफलमितिवक्तुंविवेकंपद्मत्वेनरूपयति ॥ संतोषेति ॥ सत्कार्याणिनिष्कामकर्माणिउपासनगुरुशुश्रूषाश्रवणादीन्येवपल्लवायस्य ॥ चित्तलक्षणनालाग्रेसलीनैरागादिवासनाप्रभवैर्बहुतरविघ्नकटकैःसंकटोनिबिडितः ॥ ३६ ॥ सोयमसंसंगएवतृतीयाभूमिकेत्याह ॥ फलमिति ॥ ३७ ॥ प्रथमभूमिकैवानेकजन्मसचितसुकृतपरिपाकैरैहिकपुण्यसचयैश्वदैवादकुरिताचेत्सैवसत्सगमादिनामहतायत्नेनरक्षणीयासाचेद्रक्षिताअनायासेनैवद्वितीयादिभूमिकाःसेत्स्यंतीतितत्रैवयत्नाधिक्यमुपदिशति ॥ समवायादिति ॥ विशुद्धानांतत्त्वविदांसमवायाद्दानमानभजनाद्युपायैर्मेलनात् ॥ ३८ ॥ समवेतैस्तैःकिंकार्यंतदाह ॥ भूमिरिति ॥ यतस्तैर्विशुद्धैःसाशुभेच्छालक्षणाभूमिरीषच्छुभप्रवृत्त्युन्मुखतयाप्रोदितामेघैरंकुरिताभूमिरिवप्रतिदिनविवेकोपदेशलक्षणेनांबुसेकेनयथाअम्तनाअम्लानाभवतितथारक्ष्यावर्धनीयादुष्प्रवृत्त्यादिविघ्ननिवारणयत्नेनपालनीयाचेत्यर्थः ॥ ३९ ॥

एषा शुभेच्छासाधनचतुष्टयमध्ये वैराग्यलक्षणेन शान्त्यादिलक्षणेन वायं नैवांशेन प्रथममंकुरितोऽप्युत्सन्नितमेवांशं विचारेणोदयमभिवर्द्धनयेत् ॥ ४० ॥ एकोंशोऽभिवर्धितोऽन्याउत्त रभूमिकाभ्यस्यप्रथमसाधयिष्यतीत्याह ॥ एषेति ॥ ४१ ॥ सोपायवर्णितां तृतीयभूमिकां सफलामुपसंहरति ॥ श्रेष्ठेति ॥ ४२ ॥ प्रसंगादन्तराले मूढपुरुषविषयमाराम पृच्छति ॥ मू ढस्येति ॥ आभिजात्याद्यधिकारिविशेषणहीनस्याध्यात्मकथाविमुखस्य कामभोगार्थमेव प्रवृत्तस्याधमस्य सोपायान्तरेण मोक्षोऽस्ति न वेति प्रथमप्रश्नार्थः ॥ ४३ ॥ आद्यभू मिकामप्रथमवराक्षतानारोहाभावारेकद्वित्र्यादिरूढदशायां मृतस्य कीदृशी गतिरिति द्वितीयस्य ॥ ४४ ॥ आद्यप्रश्नस्योत्तरमाह ॥ मूढस्येत्यादि सार्धद्वयेन ॥ काकतालीययोग

येनांशेनोद्गतमत्यपाविचारेणोदयं नयेत् ॥ तमेवानुदिनं यत्नात् रूपीवलइवांकुरम् ॥ ४० ॥ एषा हि परिमृष्टान्तरन्यासां प्रसवैकभू ॥ द्विती यां भूमिकायत्नात् तृतीयां प्राप्नुयात्तत ॥ ४१ ॥ श्रेष्ठा सर्वगताद्येषा तृतीया भूमिकात्र हि ॥ भवति प्रोज्झिताशेषसंकल्पकलनः पुमान् ॥ ४२ ॥ श्रीरामउवाच ॥ ॥ मूढस्यासत्कुलोत्थस्य प्रवृत्तस्याधमस्य च ॥ अप्रामयोगिसंगस्य कथमुत्तरणं भवेत् ॥ ४३ ॥ एकामथ द्वितीयां वाप् तीयां चतरां च वा ॥ आरूढस्य मृतस्याथ कीदृशी भगवन् गतिः ॥ ४४ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ मूढस्यारूढदोषस्य तावत्संसृतिराततः ॥ या वज्जन्मान्तरशतं काकतालीययोगतः ॥ ४५ ॥ अथवा साधुसंगत्या वैराग्यं नाभ्युदेति हि ॥ वैराग्येऽभ्युदिते जन्तोरवश्यं भूमिकोदयः ॥ ४६ ॥ ततो नश्यति संसार इति शास्त्रार्थसंग्रहः ॥ योगभूमिकयोत्क्रान्तजीवितस्य शरीरिणः ॥ ४७ ॥ भूमिकांशानुसारेण क्षीयते पूर्वदुष्कृतम् ॥ ततः सुरविमानेषु लोकपालपुरेषु च ॥ ४८ ॥ मेरूपवनकुञ्जेषु रमते रमणीसखः ॥ ततः सुकृतसंभारे दुष्कृते च पुराकृते ॥ ४९ ॥ भोगजाले प रिक्षीणे जायन्ते योगिनो भुवि ॥ शुचीनां श्रीमतां गेहे गुप्ते गुणवतां सताम् ॥ ५० ॥ जनित्वा योगमेवैते सेवन्ते योगवासिताः ॥ तत्र प्राग्भाव नाभ्यस्तयोगभूमिक्रमं बुधाः ॥ स्मृत्वा परिपतन्त्युच्चैरुत्तरं भूमिकाक्रमम् ॥ ५१ ॥

त स्वविचारत एव वा साधुसंगत्या वा वैराग्यं यावन्नाभ्युदेति तावदित्यन्वयः ॥ ४५ ॥ ४६ ॥ द्वितीयस्योत्तरमाह ॥ योगभूमिकयेत्यादिना ॥ ४७ ॥ ४८ ॥ दुष्कृतक्षयानुसारेण रम तइत्यत्र द्रष्टव्ये ॥ दुष्कृतं च निमित्तं नानुभाव्य ॥ न हि तस्य नरकादिभोगोऽस्ति न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छतीति भगवद्वचनात् ॥ आनुषंगिकं तु स्वभोगाभिप्रायं वा ॥ स्व र्गिणाम् अविचारीरमानसादिदु स्वसहस्रसत्वात् ॥ ४९ ॥ भोगजाले भुज्यमाने सुकृतसंभारे दुष्कृते च परिक्षीणे सतीत्यन्वय ॥ योगिन इति जात्यादौ प्यायांत सुवचनम् ॥ ५० ॥ यो गमेवेति ॥ पूर्वाभ्यासेनैव क्रियते ह्यवशोऽपि स इति भगवद्वचनात् ॥ तदेवाह ॥ योगवासिता इति ॥ परिपतन्त्यारोहन्ति ॥ ५१ ॥

---

१ इत आरभ्य सप्तदश स्पष्टसार्धश्लोकद्वयस्थाने पुस्तकान्तरे अयं पाठ उपलभ्यते स च मूढस्यारूढदोषस्य नावत्संसृतिराततः ॥ यावज्जन्मान्तरशतैर्नोदितां प्रथमां भुवम् ॥ ॥ १ ॥ अथवा साधुसंगत्या काकतालीययोगतः ॥ संसारस्य परामर्शाद्वैराग्यं नाभ्युदेति हि ॥ २ ॥ वैराग्येऽभ्युदिते जन्तोरवश्यं भूमिकोदय इति ॥ अनयोर्मध्ये मूललि खितपाठ एव टीकानुगुण इति भाति ॥

प्रश्नयोरुत्तरमुक्त्वाप्रकृतमनुसरति ॥ भूमिकात्रितयमित्यादिना ॥ आद्यभूमिकात्रयेजाग्रच्छब्दप्रवृत्तिनिमित्तमाह ॥ यथावदिति ॥ भेददर्शनगुणेनप्रसिद्धजाग्रत्साम्यादित्यर्थ. ॥ ५२ ॥ निमित्तांतरमप्याह ॥ उदेतीति ॥ आर्यतापूज्यताप्रयोजकसद्गुणोत्कर्षः ॥ यांदृष्ट्वेति ॥ यद्यदाचरतिश्रेष्ठइतिन्यायादित्यर्थः ॥ ५३ ॥ तामेवार्यतामनार्यजनव्यावृत्ताप्रथमलक्षयति ॥ कर्त्तव्यमिति ॥ कामंपर्याप्तम् ॥ सर्वंनित्यनैमित्तिककर्मेत्यर्थः ॥ ५४ ॥ यथाचारंवृद्धाचारानुसारि तत्रापियथाशास्त्रम् ॥ तत्रापियथाचित्तस्वचित्तयत्कृत्वाप्रसीदतिनपश्चात्तप्यतेतादृशमेव ॥ व्यवहारलौकिकमपि ॥ ५५ ॥ तदेवार्यत्वप्रथमभूमिकायाशुभेच्छायामंकुरितम् ॥ द्वितीयभूमिकायाश्रवणादिप्रवृत्त्यात्रिकासितम् ॥ तृतीयभूमिकायाचित्तैकाग्र्यफलेनफलितमित्यर्थः ॥ ५६ ॥ तत्रांतरालेमृतानानिष्कामकर्मानुष्ठानक्षीणपापानाकर्मणापितृलोकोविद्ययादेवलोकइत्यादिश्रुतिप्रसिद्धोदेवलोकादिभोगोपिशुभसंकल्पाहितसद्वासनासंभृतत्वान्नकाम्यकर्मानुष्ठायिनामिवरागादिदुर्वासनास्मरणेनाधःपातहेतुरित्याशयेनाह ॥ आर्यतायामिति ॥ ५७ ॥ आ

भूमिकात्रितयंत्वेतद्रामजाग्रदितिस्मृतम् ॥ यथावद्भेदबुद्ध्येदंतज्जाग्रदितिदृश्यते ॥ ५२ ॥ उदेतियोगयुक्तानामत्रकेवलमार्यता ॥ यांदृष्ट्वामूढबुद्धीनामभ्युदेतिमुमुक्षुता ॥ ५३ ॥ कर्त्तव्यमाचरन्काममकर्त्तव्यमनाचरन् ॥ तिष्ठतिप्राकृताचारोयःसआर्यइतिस्मृतः ॥ ५४ ॥ यथाचारंयथाशास्त्रंयथाचित्तंयथास्थितम् ॥ व्यवहारमुपादत्तेयःसआर्यइतिस्मृतः ॥ ५५ ॥ प्रथमायामंकुरितंद्वितीयायांविकासितम् ॥ फलीभूतंतृतीयायामार्यत्वंयोगिनोभवेत् ॥ ५६ ॥ आर्यतायांमृतोयोगीशुभसंकल्पसंभृतान् ॥ भोगान्भुक्त्वाचिरंकालंयोगवाञ्जायतेपुनः ॥ ५७ ॥ भूमिकात्रितयाभ्यासादज्ञानेक्षयमागते ॥ सम्यग्ज्ञानोदयेचित्तेपूर्णचंद्रोदयोपमे ॥ ५८ ॥ निर्विभागमनाद्यंतंयोगिनोयुक्तचेतसः ॥ समंसर्वंप्रपश्यंतिचतुर्थींभूमिकामिताः ॥ ५९ ॥ अद्वैतेस्थैर्यमायातेद्वैतेप्रशममागते ॥ पश्यंतिस्वप्नवल्लोकांश्चतुर्थींभूमिकामिताः ॥ ६० ॥ भूमिकात्रितयंजाग्रच्चतुर्थीस्वप्नउच्यते ॥ विच्छिन्नशरदभ्रांशविलयंप्रविलीयते ॥ ६१ ॥

ज्ञानेज्ञानविरोधिद्वैतवासनाजालेअसंभावनाविपरीतभावनादोषेचक्षयमागतेसतिनिष्प्रत्यूहान्महावाक्यादपरोक्षाखंडाकारज्ञानोदयेसतिमूलाज्ञानक्षयाद्योगिनश्चतुर्थींभूमिकामितागताः सन्तः सर्वंजगत्सममानंदैकरसंपश्यंतीतिपरेणान्वयः ॥ ५८ ॥ ५९ ॥ ६० ॥ व्यावहारिकसत्तयाजगद्भानसाम्याज्जाग्रत् ॥ प्रातिभासिकसत्तयातद्भानसाम्यात्स्वप्नउच्यते ॥ पञ्चम्याभूमिकायासुषुप्तिपदप्रवृत्तिनिमित्ततत्साम्यदर्शयति ॥ विच्छिन्नेति ॥ सुषुप्तिकालेसकलेविलीनेतमोभिभूत सुखरूपमेतीतिश्रुतौसुषुप्तौसर्वविलयप्रसिद्धेरत्रापिप्रातिभासिकत्रिपुटीपरिशेषस्यापिविलयेनतत्साम्यादितिभावः ॥ विच्छिन्नस्यशरदभ्रखंडस्यकेवलाकाशमात्रपरिशेषलक्षणंविलयमिवशुद्धचिन्मात्रपरिशेषलक्षणस्वभावंप्रविलीयतेप्रविलयेनप्राप्नोतीत्यर्थः ॥ लीङर्थफलव्यापाराशयोर्मध्येफलांशस्यविलयशब्देननिष्कृष्यानुवादात्तस्यचव्यापारांशप्रतिकर्मत्वान्मृदुपचतीतिक्रियाविशेषणेप्विवात्रापिद्वितीया ॥ अवशिष्टव्यापारांशमात्रंप्रविलीयतइतितिङतप्रकृत्योच्यतेउदपेषपिनष्टीत्यत्रेव ॥ ६१ ॥

सत्तावित्सत्तातरबशेष ॥ सुषुप्तमितिपदंशीर्णनामपस्यास्ताम् ॥ ६१ ॥ उदितआविर्भूतस्वरूप ॥ ६२॥ सुषुप्तस्थानएकीभूतःप्रज्ञानघनएवेतिश्रुत्युक्तप्रज्ञानघनतासाम्याद्धात
स्यांसुषुप्तपदनामतेत्याशयेनाह ॥ सुषुप्तेति ॥ आनन्दमयाह्यानन्दभुगितिश्रुतिप्रसिद्धांतर्मुखस्यानंदास्वादनसाम्यादपितन्नामतेत्याशयेनाह ॥ अतर्मुखतयेति ॥ ६४ ॥ विषासन
अस्यांभूमिकायांस्थितस्याभ्युत्थानवासन सन्निस्यर्थ ॥ ६५ ॥ उक्तसुषुप्तमपेक्ष्यतुर्याभिधानाम् ॥ तल्लक्षणान्याह ॥ यत्रेत्यादिना ॥ ६६ ॥ द्वैतवदेक्यस्यापिसम्यांतरम्यावत्तकस
स्यात्यातत्तुभयवर्जित ॥ तथात्वमिकस्तदयपदंषिसर्वसदेहभेदमाह ॥ निर्ग्रंथिरिति ॥ भिद्यतेहृदयग्रंथिश्छिद्यन्तेसर्वसंशयाइतिश्रुतेरितिभाव ॥ ६७ ॥ अनिर्वाण प्रारब्धप्र
तया(।)पनिर्वाणामुक्त ॥ यथाविपरीतःअनुपर्शाणापिनज्वलतीतिनिर्वाणःअजडजगरस्वभावेनांतर्बहिश्चशून्य ॥ ६८ ॥ अनाद्यनानंदस्वभावेनत्वनर्बहिश्चपूर्ण ॥ तस्यांद्वि

सत्तावशेषएवास्तेपंचमींभूमिकागत ॥ पंचमींभूमिकामेत्यसुषुप्तपदनामिकाम् ॥ ६२ ॥ शांताशेषविशेषांशस्तिष्ठत्यद्वैतमात्रके ॥ गलितद्वैतनिर्भासमुदितोंत प्रबुद्धवान् ॥ ६३ ॥ सुषुप्तघनएवास्तेपंचमींभूमिकामित ॥ अतर्मुखतयातिष्ठन्बहिर्वृत्तिपरोपिसन् ॥ ६४ ॥ परिश्रांततयानित्यनिद्रालुरिवलक्ष्यते ॥ कुर्वन्नभ्यासमेतस्यांभूमिकायांविवासन ॥ ६५ ॥ षष्ठींतुर्याभिधामन्यांक्रमात्क्रमतिभूमिकाम् ॥ यत्रनासन्नसद्रूपोनाहंनाप्यनहंकृति ॥ ६६ ॥ केवलक्षीणमननमास्तेद्वैतैक्यनिर्गत ॥ निर्ग्रंथि शांतसंदेहोजीवन्मुक्तोविभावन ॥ ६७ ॥ अनिर्वाणोपिनिर्वाणश्चित्रदीपइवस्थित ॥ अतःशून्योबहिःशून्यःशून्य कुंभइवांबरे ॥ ६८ ॥ अंत पूर्णोबहि पूर्ण पूर्णकुंभइवार्णवे ॥ किंचिदेवपसंपन्नस्त्वथवैपनकिंचन ॥ ६९ ॥ षष्ठ्यांभूम्यामसौस्थित्वासप्तमींभूमिमाप्नुयात् ॥ विदेहमुक्ततात्रोक्तासप्तमीयोगभूमिका ॥ ७० ॥ अगम्यावचसांशांतासासीमाभवभूमिषु ॥ कश्चित्सांशिवमित्युक्ताकेश्चिद्ब्रह्मेत्युदाहृता ॥ ७१ ॥ केश्चित्प्रकृतिपुंभाववविवेकइतिभाविता ॥ अन्यैरप्यन्यथानानाभेदैरात्मविकल्पिते ॥ ७२ ॥ नित्यमव्यपदेश्यापिकथंचिदुपदिश्यते ॥ सत्तैताभूमिका प्रोक्तामयातवरघूद्वह ॥ ७३ ॥

र्तीपरूपस्यसंसारदशायांकदाप्यप्रसिद्धत्वेनकिंचिद्रूपेणपरमार्थरूपेणसंपन्न ॥ बाह्यपदस्यानित्यसिद्धत्वान्नकिंचनसंपन्न ॥ ६९ ॥ सप्तमीभूमिकापरिसीमांचेसीदमु
क्तेर्विसप्तमीसापरिसीमाविषय.स्यान्नजीवतामितिप्रागुक्तेस्त्यथ ॥ ७० ॥ वचसामगम्यायोगिमानसानुभवैकगम्येत्यर्थ ॥ नचजीवन सप्तमीभूमिकेषनास्तीतियोगिमानसा
नुभवगम्यतापिनस्यानास्तीतिभ्रमितव्यम ॥ सासीमाभवभूमिष्विवतितस्याभवभूमिमध्यपातसीमात्वोक्तिविरोधापत्ते ॥ आसामभ्यासयोगेनेस्युत्तरश्लोकस्यसंनायत्वोक्तिविरो
धाच्च ॥ शिवमितिशैवैरुक्ता ॥ शिवमद्वैतंचतुर्थंमन्यन्तइतिश्रुत्यनुरोधादितिभाव ॥ ब्रह्मेतिवेदान्तिभि ॥ ७१ ॥ प्रकृतिपुंसोर्भाव.अविविक्तावस्थितिस्तस्यविवेकइतिसांख्ययो
गिभि ॥ अन्यैर्जैमिनिसात्वतमाहेश्वरबुद्धादिवादिभि.स्वर्गोवासुदेवोमहेश्वरोऽनुपप्लवविज्ञानमनुपप्लवतुल्यमित्यादिस्वस्वबुद्ध्यनुसारिविकल्पितैर्नानाभेदैरन्यथान्यथाभाविते
त्यर्थ ॥ ७२ ॥ यदिवचसामगम्यांतर्हिकथमुपदिश्यतेतत्राह ॥ नित्यमिति ॥ कथंचिल्लक्षणयालक्षणाभ्युपायैरित्यर्थ ॥ ७२ ॥

परवैराग्यदाक्ष्येसत्येवभूमिकासुप्रवेशोभवतिनान्यथेतिमत्तकरिण्याख्यायिकाच्छलेनवर्णयितुमारभते ॥ अस्तीत्यादिना ॥ ७४ ॥ विग्रहव्यग्रासदासमरोद्युक्तामहद्भ्यांदशना भ्याशसनशस.प्रख्यातिस्तद्वती ॥ अस्तुसाकिंततस्तत्राह ॥ साचेदिति ॥७५॥ तयैताभूमिकानिरुद्धाअतस्तद्वधविनानैकापिभूमिकाजेतुंशक्येत्यर्थ ॥७६॥ सायावन्नविजिता तावत्तदाक्रातासुक्षुद्रसासारिकसपद्रूपास्वपिसमरभूमिषुप्रवेष्टुमपिकोनामसुभट समर्थोयोद्धेत्यर्थ ॥ प्रश्न.स्पष्ट ॥७७॥७८॥ क्वचैषारमतेइत्यस्योत्तरमाह॥ शरीरकाननेइति॥ विविधदैन्यधावनशोकमोहाद्युल्लासकरणशीला ॥ मत्तानीद्रियाण्येवोग्रा कोपना.कलभा शावकायस्या ॥ रसनाकलभाषिणीमधुरबृंहितसाधनयस्या ॥७९॥ प्रख्यातौदतौ दर्शयति ॥ कर्मेति॥कर्मशुभाशुभरूपम् ॥ मदमत्तेत्यत्रोक्तमदद्दर्शयति ॥ मदइति॥एवमग्रेपियोज्यम् ॥८०॥८१॥ नागीकरिणी ॥ जीवसचयान्प्राणिनिकायान् ॥८२॥ आश

आसामभ्यासयोगेननदुःखमनुभूयते॥ अस्त्यत्यंतमदोन्मत्तामृदुमंथरचारिणी॥ ७४॥ करिणीविग्रहव्यग्रामहादशनशंसिनी॥ सा चेन्निहन्यतेनूनमनंतानर्थकारिणी॥ ७५॥ तदेतासुसमग्रासुभूमिकासुनरोजयी॥ करिणीमदमत्तासायावन्नविजितौजसा॥ ७६॥ कोनामसुभटस्तावत्संपत्समरभूमिषु॥ ॥श्रीरामउवाच॥ ॥कासौप्रमत्ताकरिणीकाश्चतारणभूमयः॥ ७७॥ कथंनिहन्यतेचैषा क्वचैषारमतेचिरम्॥ ॥श्रीवसिष्ठउवाच॥ ॥रामेच्छानामकरिणीइदंमेस्त्वितिरूपिणी॥ ७८॥शरीरकाननेमत्ताविविधोल्लासका रिणी॥मत्तेंद्रियोग्रकलभारसनाकलभाषिणी॥ ७९॥ मनोगहनसंलीनाकर्मदंतद्वयान्विता॥ मदोस्यावासनाव्यूहःसर्वतःप्रसरद्वपुः ॥८०॥संसारदृष्टयोरामतस्याःसमरभूमयः॥भूयोयत्रानुभवतिनरोजयपराजयौ॥८१॥ इच्छानागीनिहंत्येषाकृपणान्जीवसंच यान्॥वासनेहामनश्चित्तंसंकल्पोभावनंस्पृहा॥८२॥इत्यादिनिवहोनाम्नामस्यास्त्वाशयकोशगः॥ धैर्यनाम्नावरास्त्रेणप्रस्तुतामवहे लया॥८३॥नागींसर्वात्मिकामेतामिच्छांसर्वात्मनाजयेत्॥ यावद्वास्त्विदमित्येवमियमंतर्विजृंभते॥८४॥ तावदुग्राकुसंसारमहावि षविषूचिका॥एतावानेवसंसारइदमास्त्वितियन्मनः॥८५॥ अस्यतूपशमोमोक्षइत्येवंज्ञानसंग्रहः॥प्रसादकारिणीस्वच्छानिरिच्छेवि मलाकृतौ॥८६॥तैलबिंदुरिवादर्शेविश्राम्यत्युपदेशवाक्॥ असंवेदनमात्रेणनोदेतीच्छाभवांकुरः॥८७॥

यकोशगश्चित्तकोशगतोदृत्तिवैचित्र्यप्रयुक्तइतियावत् ॥ कथनिहन्यतेचैषेतिप्रश्नस्योत्तरमाह ॥ धैर्येति ॥८३॥ सर्वात्मिकाब्रह्मलोकांतसर्वभोग्यगोचराम् ॥ सर्वात्मनासर्वथा सर्वमहमेवेतिभाविनेनात्मनावा ॥ नहिनित्यलब्धात्मरूपतयाभाविनेतृष्णाभवतिकिंत्विदमित्यलब्धतयादृष्टेइत्याह ॥ यावदिति ॥८४॥ ससारमहाविषविषूचिकारूपातृष्णाता वदेवविजृंभतइत्यनुकृष्यते ॥८५॥ तृष्णैवसंसारस्तत्क्षयएवमोक्षभूमिकोदयहेतुत्वान्मोक्ष कथंवैराग्यस्यभूमिकोदयहेतुतातद्दर्शयति ॥ प्रसादेति ॥ ८६ ॥ रागादिपुरुषापराध मलिनेचित्तेश्रुत्याचार्याद्युपदेशवाक्पद्मपत्रेजलबिंदुरिवनसश्लिष्यते ॥ वैराग्यादिसाधनसपन्नेतुआदर्शेतैलबिंदुरिवसंश्लिष्टासतीअविद्यामलमार्जनेनप्रसादोब्रह्माकारप्रथना नुकूलास्वच्छतातत्कारिणीपर्यवस्यतीत्यर्थः ॥ रागादेरनुदयेउदितस्यच्छेदनेचोपायमाह ॥ असवेदनेति ॥इच्छारूपोभवाकुर.सवेदनविषयस्मरणतत्परित्यागमात्रेणनोदेति॥८७॥

मनागभ्युदितेनाप्यसंवेदनशस्त्रेणैवच्छेत्तव्या ॥ ८८ ॥ निष्छुरिताभ्याम् ॥ दीनताभोगकार्पण्यम् ॥ असंवेदनस्वरूपमुत्सारयति ॥ स्वसंवेदनेति ॥ सुष्ठु असंवेदनं स्वसंवेदनमननुक्-
लानिरोधयत्न प्रत्याहारयत्नश्च चित्तस्यांतस्तूर्ष्णीं निर्व्यापारतयाऽऽसनम् ॥ ८९ ॥ तदभ्यासकालेसावधानतारूपपरिपाककालेत्ववधानविनिर्मुक्तसुषुप्तिमरणावस्थयोरिव
स्वतएवसंपद्यतइत्याशयेनाह ॥ अवधानेति ॥ तामनर्थकारिणीमिच्छामत्स्याँ प्रत्याहारलक्षणेनबडिशेनाकृष्यनियच्छनवशीकुर्वन्स्पर्शात्सर्वाभ्यां प्रतीत्युक्ति ॥ ९० ॥ ननुभाक्कल्पना
स्यामारब्धमुक्तिरितिबहुशास्त्रयाक्रमिदानीमिच्छात्यागाद्विकिंकथमुच्यतेतमाह ॥ इदमेस्त्विति ॥ संवेगश्चित्तधावनविषयानुसंधानलक्षणकल्पनाफलाभस्थैर्यमितिकल्पनमाहुरि-
त्यर्थ ॥ भावनस्मरणम् ॥ ९१ ॥ संकल्पएवसर्वानर्थमूलमितिभावनाकर्णनामप्ययमेवाभिप्रायइत्याशयेनाह ॥ स्मरणमिति ॥ कथंतर्हिस्मृतिसंकल्पशब्दयोरपर्यायतातमाह ॥
तत्रेति ॥ ९२ ॥ संकल्पअननुभूतमपिभाव्यतइतिविशेषात्पर्यायत्वपिभूमिकाभेदैःसुभिर्दैर्यत्वेनकश्चिद्विशेषइत्यजेदोभविवक्षितइत्याशयेनाह ॥ अनुभूतामिति ॥ ९३ ॥ इदा

मनागभ्युदितैवेच्छाछेत्तव्यानर्थकारिणी॥असंवेदनशस्त्रेणविषस्येवांकुरावली॥८८॥इच्छाविच्छुरितोजीवोविजहातिनदीनताम्॥
स्वसंवेदनयत्नस्तुतूर्ष्णीमेवांतरासनम्॥८९॥अवधानविनिर्मुक्तसुषुप्तवशतेयया॥तांप्रत्याहारबडिशेनेच्छामत्स्यींनियच्छत॥९०॥
इदमेस्त्वितिसंवेगमाहुः कल्पनमुत्तमाः ॥ अयंस्याभावनयत्तत्कल्पनात्यागउच्यते॥ ९१ ॥ स्मरणविद्धिसंकल्पंशिवमस्मरणंविदुः ॥
तत्रप्रागनुभूतंचनानुभूतंचभाव्यते॥९२॥ अनुभूतानानुभूतांस्मृतिविस्मृत्यकाष्ठवत्॥ सर्वमेवाशुविस्मृत्यगूढस्तिष्ठमहामते ॥९३॥
ऊर्ध्वबाहुर्विरौम्येषनचकश्चिच्छृणोतितत् ॥ असंकल्पःपरंश्रेयः सकिमंतर्नभाव्यते ॥ ९४ ॥ किलतूर्ष्णींस्थितेनैवतत्पदंप्राप्यतेपरम्॥
परमंयत्ससाम्राज्यमपिरामतृणायते॥ ९५॥ गम्यदेशैकनिष्ठस्ययथापांथस्यपादयोः ॥ स्पंदोविगतसंकल्पस्तथास्पंदःस्वकर्मसु॥ ९६॥
बहुनात्रकिमुक्तेनसंक्षेपादिदमुच्यते ॥ संकल्पनंपरोबंधस्तदभावोविमुक्तता ॥ ९७॥

र्भोपरमकारुणिकोवसिष्ठ सर्वमनानांविषयसंकल्पत्यागविनामोक्षोनसिध्यतीतिस्त्यागएवावश्यकार्यइतिसमस्तवासिष्ठोपदेशरहस्यमाक्रोशेनापिदृढीकरिष्यन्नाह ॥ ऊर्ध्वबा-
हुरिति ॥ विरौमिउच्चै स्वरेणपुनःपुनराक्रोशामि ॥ एवंक्रियमाणमप्याक्रोशंबधिरइवसुमममस्तद्वचनकश्चिदपिजनोनशृणोति ॥ शृण्वत्स्वपिचश्रवणफलादर्शनादुक्ति ॥ अ-
संकल्पेकिमर्थनभाव्यतनविमृश्यकृतकृत्यतापद्यसिंत क्रियतेनहिमदमध्यमाधिकारिणांसम्यक्ज्ञानमंतरेणार्थसिद्धिरित्यर्थ ॥ ९४ ॥ तूर्ष्णींसर्वव्यापारोपरमेणस्थितेनैवपुंसा
तत्तादृशपरमपदंप्राप्यतेकिलतिश्रीतप्रसिद्धौ ॥ तथाचश्रुति ॥ यदापंचावतिष्ठंतेज्ञानानिमनसासह बुद्धिश्चनविचेष्टतितामाहुः परमांगतिमिति ॥ परमैहैरण्यगर्भंतमपिसाम्रा-
ज्यसुखंपरमभूमानंदतृणवतुच्छतामापद्यतइत्यर्थ ॥ ९५ ॥ ननुसर्वथासंकल्पत्यागेदेहस्यवायसिद्धेर्व्यवहारलोपेकथंजीवनंतमाह ॥ गम्येति ॥ यथागंतव्येस्वगृहादिदेशएवै-
कनिष्ठाअविच्छिन्नचित्तवृत्तिधारायस्यतथाविधस्यपांथस्यपादयोर्विगतसंकल्पएवमतिक्षणस्पंदोआयनेतथायोगिनोपिचिन्नेषुसंकल्पपूर्वाभ्यासजीवनादृष्टवशाद्देवानिमित्त
स्वकर्मसुस्पंदःभविष्यतीत्यर्थ ॥ ९६ ॥ ९७ ॥

कयादृष्ट्याअसकल्पनंभवेत्तामाह ॥ सर्वमिति ॥ भूतार्थंचिद्रूपंनित्यसिद्धपरमार्थचिद्रूपम ॥ ९८ ॥ अवेदनंतादृशदृष्टिपरिणत्याअहंममेत्यध्यस्तसर्वभेदविस्मरणमेवजी
वन्ब्रह्मैक्यलक्षणयोगविदुर्ब्रह्मविद ॥ तविद्याद्दुःखसंयोगवियोगयोगसंज्ञितमितिभगवतातथाव्याख्यातत्वादितिभाव. ॥ योगस्थ.कुरुकर्माणीतितद्वाक्यतुलोकसंग्रहेच्छप्रत्यै
वब्रह्मैक्यलक्षणयोगविदुर्ब्रह्मविद ॥ तविद्याद्दुःखसंयोगवियोगयोगसंज्ञितमितिभगवतातथाव्याख्यातत्वादितिभाव. ॥ योगस्थइति ॥ अथसमाधिपरश्चेन्माकुरु ॥ ९९ ॥ यथासिभोइति ॥ यथास्थितस्वरूपावाप्तौयथास्थितस्थितेरेवो
च्छिकविहितानुष्ठापनार्थंननियमार्थमित्याशयेनाह ॥ योगस्थइति ॥ अथसमाधिपरश्चेन्माकुरु ॥ ९९ ॥ शिवमिति ॥ १०१ ॥ विस्तरोक्तमनर्थतत्त्वपुरुषार्थवत्वचनिष्कृष्य
चितत्वादितिभाव. ॥ १०० ॥ सास्थितिरेवसर्वप्रपञ्चनिवृत्तिरूपत्वाच्चूडालोपदर्शितःसर्वत्यागोपीत्याह ॥ शिवमिति ॥ १०१ ॥ विस्तरोक्तमनर्थतत्त्वपुरुषार्थवत्वचनिष्कृष्य
करतलामलकवद्दर्शयन्नुपसंहरति ॥ अहममेति ॥ १०२ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०षड्विंशत्युत्तरशततमःसर्गः ॥ १२६ ॥ ॥ इहरामस्यविश्रांतिर्भ
रद्वाजोत्सुकोक्तय. ॥ लक्षणजाग्रदादीनांतुरीयंचोपवर्ण्यते ॥ १ ॥ एतावत्पर्यंतश्रीवसिष्ठरामसंवादश्रावयित्वारामविश्रांतिस्मरणसन्निधापितेनिरतिशयानंदपूर्णात्मनिविश्रां

सर्वमेवमजंशांतमनंतंध्रुवमव्ययम् ॥ पश्यन्भूतार्थचिद्रूपंशांतमास्वयथासुखम् ॥ ९८॥ अवेदनंविदुर्योगंशांतमासितमक्षयम् ॥
योगस्थःकुरुकर्माणिनिर्वासनोथमाकुरु ॥ ९९॥ अवेदनंविदुर्योगंचित्तक्षयमकृत्रिमम् ॥ अत्यंततन्मयोभूत्वातथातिष्ठयथासिभो
॥ १०० ॥ शिवंसर्वगतंशांतंबोधात्मकमजंशुभम् ॥ तदेकभावनंरामसर्वत्यागइतिस्मृतः॥ भावयच्छ्वदंतःस्वंकार्यंकर्मसमाचर
॥१०१॥ अहंममेतिसंविदन्नदुःखतोविमुच्यते॥ असंविदन्विमुच्यतेयदीप्सितंसमाचर॥ १०२॥ ॥इ०वा०वा०दे०मो०नि०पू०
परमार्थस्वरूपवर्णनंनामषड्विंशत्युत्तरशततमःसर्गः॥१२६॥ ॥ ७॥ ॥श्रीभरद्वाजउवाच॥ ॥इतिवरमुनिनोक्तंज्ञानसा
रंपुराणंसकलमनुनिशम्यश्रीरघूणांकुलाग्र्यः ॥ विमलमतिरपृच्छत्किंचिदन्यत्स्वयंवासमसुखपरिपूर्णःपूर्णबोधस्थितोसौ ॥ १ ॥
सखलुपरमयोगीविश्ववंद्यस्सुरेशोजननमरणहीनःशुद्धबोधस्वभावः॥ सकलगुणनिधानंसन्निधानंरमायास्त्रिजगदुदयरक्षानुग्रहा
णामधीशः॥ २॥

तनूर्ष्णींभूतंगुरुश्रीवाल्मीकिंदृष्ट्वायापिस्वयंतत्रविश्रांत्यलाभादग्रेपिश्रवणोत्सुकोभरद्वाज·पृच्छति ॥ इतीत्यादि ॥ हेगुरोविमलमति श्रीरघूणांकुलाग्र्योऽसौश्रीराम.वरमुनि
नाश्रीवसिष्ठेनइतिवर्णितैर्बहुभिःप्रकारैरुक्तमुपदिष्टंपुराणंचिरतनब्रह्मादिमहर्षिसंप्रदायागतज्ञानसारंनिशम्यश्रुत्वाअग्रेपिजिज्ञासुःकिंचिदपृच्छत् ॥ अथवाएतावतैवोपदेशेनशां
तसर्वसंदेहमोहःस्वयंसमेनविषयवैचित्र्यप्रयुक्ततारतम्यरहितेनसाक्षात्कृतेनात्मसुखेनपरिपूर्ण.सन्पूर्णबोधात्मैवभूत्वास्थितस्तद्वदेतिशेषः ॥ १ ॥ ननुसमानेप्रथमश्रवणेत्वयास्वस
देहमोहनिवृत्त्यनिवृत्तिभ्यामेवरामस्यापितेकुतोनावधार्यतेइतितुनाशक्य यतोममरामस्यचमहदंतरमस्तीत्याह सखल्विति ॥ सनित्यसिद्धज्ञानयोगैश्वर्यानावृतचित्स्वभावः
सर्वस्यवशीसर्वस्येशानइत्यादिश्रुतिप्रसिद्धईश्वरोजगत्पालनायावतीर्णोजगद्गुरुरपिसर्वलोकानुग्रहायज्ञानशास्त्रप्रवृत्त्यर्थंस्वेच्छयास्वस्याज्ञानमिवपरिकल्प्यश्रोतुंप्रवृत्तः अहं
त्वनाद्यज्ञएवमुमुक्षुरल्पतरसाधनसंपन्नइतिमहदंतरमितिभावः ॥ २ ॥

एवंपृष्टोवाल्मीकि प्रश्नद्वितीयप्रकाटितस्वकथाशेषेणसमर्थयन्नुत्तरमाह ॥ इतिश्रुत्वेत्यादिना ॥ ३ ॥ शक्तिपात अखण्डाकारमात्रजन्यचित्तवृत्तौनित्यनिरतिशयानन्दाभिव्यक्ति
विभावस्तद्वशात् स्वपासमुद्घाटनलक्षणात्मेयणस्वरूपामलचिह्नन कुण्डलिन्या सुषुम्नामार्गेषट्चक्राणिभित्त्वाब्रह्मरन्ध्रप्रवेशेनशिवशक्तिसंयोगलक्षणोयोगशास्त्रप्रसिद्धोवा ॥
यस्तुमन्त्रशास्त्रप्रसिद्धोगुरोः शिष्यानुग्रहातिशयेनस्वदेहस्पर्शाशिष्यदेहप्रविश्यतदीयनाडीपरिशोधनद्वारातत्कुण्डलिन्या समस्तचक्रपुरस्सारणेनसर्वभुवनसमाधारापरोक्षप्रदर्शनरू
प शक्तिपात सनहविवक्षित ॥ श्रीरामस्यस्वधर्मेश्वरस्यसाधनपाद स्वत सिद्धतयातदनपेक्षणात्तेनलोकापकारासिद्धेश्चेति ॥ उद्बुद्ध स्वस्वरूपेजागरितोविकसितश्च ॥ ४ ॥
विभागउक्तानुक्तार्थविवेचनम ॥ आदिपदाद्वासार्थपर्यालोचनमाभग्रहते ॥ तदयाभि परिपाटीभिमनोबुद्ध्यादिक्रियाभिश्चापरिविवर्जित ॥ आनन्दामृतेनपूर्णोअसम प्राणायस्य

॥ श्रीवाल्मीकिरुवाच ॥ ॥ इतिश्रुत्वावसिष्ठस्यवाक्यंवेदांतसंग्रहम् ॥ विदिताखिलविज्ञानोराम कमललोचन ॥ ३ ॥ शक्तिपातवशो न्मेषप्रकटामलचिह्नन ॥ मुहूर्तमासीदुद्बुद्धश्चैतन्यानंदसागर ॥ ४ ॥ प्रश्नोत्तरविभागादिपरिपाटीविवर्जित ॥ आनंदामृतपूर्णासूरोम फ्लटकिलागक ॥ ५ ॥ महासामान्यरूपत्वाद्विश्वापकतयास्थित ॥ नित्यमष्टगुणैश्वर्यतृणप्रायमनोरथ ॥ ६ ॥ नर्किंचिद्वेसंपन्न शिवे परिणत पदे ॥ ॥ श्रीभरद्वाजउवाच ॥ ॥ अहोखलुममाश्चर्यंराम प्राप्तोमहत्पदम् ॥ ७ ॥ कथमेतादृशीप्राप्तिरस्माकंमुनिनायक ॥ मूढा लब्धाश्वकिंचिज्ज्ञामादृशा कचपापिन ॥ ८ ॥ क्वचब्रह्मादिभि प्राप्याद्दुर्लभारामसंस्थिति ॥ अहोमुनीश्वरगुरोकथविश्राम्य तेमया ॥ दुष्पारस्यभवांभोधेस्तीयतेतद्वदाशुमे ॥ ९ ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ श्रीरामवृत्तांतमशेषमादितोवसिष्ठवाक्यानुगत निरूपितम् ॥ धियाविचार्यानुपरान्तशस्त्रगोमयापितादृक्कथनीयमत्रते ॥ १० ॥ अविद्याया प्रपंचोयंनास्तिसत्यमिहाण्वपि ॥ विवेचय तिविबुधाविवदंत्यविवेकिन ॥ ११ ॥

॥ ५ ॥ महासामान्यसर्वाधिष्ठानसन्मात्र सत्यस्मिंस्तद्रूपत्वसंपत्ते ॥ सर्वतश्चिद्व्यापकतयापूर्ण स्थित ॥ सएवास्यनिरतिशयानन्दाविर्भावइत्याशयेनाह ॥ नित्यमिति ॥ अष्ट
गुणानामष्टसंख्यानामणिमादिऐश्वर्याणांतृणप्रायामनोरथालिप्सायस्य ॥ ६ ॥ शिवपदेनिरतिशयानन्दवस्तुनिपरिणतएकरसभूत संपन्न ॥ इत्थमुत्तमाधिकारिणोरामस्यश्रव
णादसहसैवातिसुपर्वण्यमदमध्यमाधिकारिणां चित्तशुद्ध्यर्थमुपासनाविशेषमवस्थात्रयविवेकद्रश्यप्रविलापनादिमननोपायांश्चवक्तुंतदवतारहेतुंभरद्वाजौत्सुक्यादीनरिष्टनेम
यभगवान्वाल्मीकिर्वर्णयति ॥ भरद्वाजउवाचेत्यादिना ॥ ७ ॥ ८ ॥ दुष्पारस्यभवांभोधेर्मोहवारिदृनिशाय ॥ ९ ॥ एवंपृष्टवाल्मीकि श्रुतपर्यालोचनावर्तनमेवप्रथममावृत्ति
रसकृदुपदेशादितिन्यायसिद्धमुपदिशति ॥ श्रीरामेति ॥ तादृक्कृत्वतनुभवानकूलमवस्थात्रयविवेचनादिकथनीयकथ्यतेइत्यर्थ ॥ १० ॥ मिथ्याभूताविद्याकार्यत्वादेवम
पचस्यासत्त्वंविदितमागमचबुद्धिमताबादुःशक्यमित्याह ॥ अविद्यायादित्यादिना ॥ ननुप्रपंचस्याविद्याकार्यत्वंचेत्किमर्थंवादिनांविवादसमाह ॥ विवेचयतीति ॥ ११ ॥

मिथ्याद्वैतेनचनवास्तवाद्वैतहानिरित्याह ॥ नास्तीति ॥ हेवयस्यसखेइतिप्रीत्यासबोधनम ॥ रहस्यानांप्रणवमहावाक्याद्यर्थानांवक्ष्यमाणोपासनानांच ॥ विशदोविशुद्धचि
त्तोभव ॥ १२ ॥ तत्रादौप्रणवप्रथममात्रार्थंजायत्प्रपच स्फुटतत्साक्षिविवेकायमिथ्यात्वेनोपपादयति ॥ प्रपचेत्यादिना ॥ तस्यत्रयआवसथास्त्रयःस्वमाइतिश्रुतौजायदपिनि
द्रैवेतिकीर्तिता ॥ १३ ॥ शून्यमूलोमिथ्याभूताज्ञाननिदानः ॥ शून्यतारूपमज्ञानमेवशिखरमग्रमतोयस्यतथाविधःमध्येपिचित्कारणपृथक्क्रियाद्युपायेनपर्यालोचनेसारःस
त्तातच्छून्यतयाप्रातिभासिकमात्र.प्रथते ॥ अतस्तत्रानास्थैवयुक्तेतिशेषः ॥ १४ ॥ असतोपिसवासनाविद्ययादर्शनगवर्वनगरादेःप्रसिद्धमित्याह ॥ अनादीति ॥ १५ ॥ वास
नाविषवीरुधोविषवल्लीरध्यास्यआश्रित्याकिसमुह्यसि ॥ १६ ॥ तत्त्वदर्शनेननिरालबज्ञानरूपस्यालंबस्यचित्तस्थैर्यहेतोरवष्टंभस्यपरिग्रहादधःपूर्वमज्ञावस्थायामेवएतज्जा

नास्तिभिन्नंचितःकिंचित्किंप्रपंचेनरुध्यसे ॥ अभ्यासेनरहस्यानांवयस्यविशदोभव ॥ १२ ॥ प्रपंचविषयावृत्तिर्जाग्रन्निद्रेतिकीर्तिता ॥ संप्रबुद्धस्तुयस्यांतश्चित्प्रदीपोनिरंजनः ॥ १३ ॥ शून्यमूलःप्रपंचोयंशून्यताशिखरःसखे ॥ सारशून्यतयामध्येप्यनास्थासन्मनीपिणाम् ॥ १४ ॥ अनादिवासनादोषादसन्नेवायमीक्ष्यते ॥ गंधर्वनगराकारःसंसारोबहुविभ्रमः ॥ १५ ॥ त्वमनभ्यस्यकल्याणींचैतन्यामृतकंदलीम् ॥ संमुह्यसिकिमध्यास्यवासनाविषवीरुधः ॥ १६ ॥ जाग्रदेतन्नपतितंज्ञानालंबग्रहादधः ॥ नसंत्युपरिसर्वेषांयेनिरालंबसंविदः ॥ १७ ॥ तावद्रूढासुधाकाररसासंविन्महानदी ॥ नयावदात्मरूपेणनिपुणैरवगाह्यते ॥ १८ ॥ प्राङ्नास्तिचरमेनास्तिवस्तुसर्वमिदंसखे ॥ विद्धिमध्येपितन्नास्तिस्वप्नवृत्तमिदंजगत् ॥ १९ ॥ अविद्यायोनयोभेदाःसर्वेमीबुद्बुदाइव ॥ क्षणमुद्भूयगच्छंतिज्ञानैकजलधौलयम् ॥ २० ॥ सुशीतलोदकनदींविदित्वाथविगाह्यताम् ॥ बहिर्भ्रांतिनिदाघास्तेनियांतुकलितासुखम् ॥ २१ ॥ एकश्चाज्ञानजलधिर्जगदाप्लाव्यतिष्ठति ॥ ज्येष्ठोयमहमित्यूर्मिरविद्यावातसंभवः ॥ २२ ॥ चित्तस्खलनभेदालीरागाद्याश्चप्रकल्पिताः ॥ ममतोत्कलितावर्तःस्वतःस्वैरंप्रवर्तते ॥ २३ ॥

पन्निपतित उपरितुर्यदशायातुतिस्रोप्यवस्थानसंति ॥ येयोगिनोनिरालंबसविदस्तेषांसर्वेषामनुभवसिद्धमित्यर्थः ॥ १७ ॥ यावदज्ञानंतावत्कालमेवचिन्नद्याजगद्दुस्तरंगविक्षे
पप्ररोहइत्याह ॥ तावदिति ॥ रूढादुस्तरगप्रादुर्भाववती ॥ १८ ॥ आद्यंतकालासत्वेनमध्येप्यसत्वमेवस्वभाववैपरीत्याघटनात्स्वमवदनुमेयमित्याह ॥ प्रागिति ॥ स्वप्नस्यवृत्त
मिववृत्तंयस्यतत् ॥ १९ ॥ २० ॥ कलितमसुखदुःखयस्मिन्कर्मणितत्तथानियांतु ॥ अचेतनेष्वपिनिदाघेषुचेतनत्वमारोप्योक्तिः ॥ २१ ॥ इदानींभगवान्शिष्यस्यमज्जननि
वारयिष्यन्नज्ञानंक्षारसमुद्रत्वेनवर्णयति ॥ एकश्चेत्यादिना ॥ स्वविकारभूतंजगदाप्लाव्यअभिव्याप्य ॥ तस्यमहोर्मिंप्रथमजदर्शयति ॥ ज्येष्ठइति ॥ अविद्याप्रवाहोनादिर्भाति
वासनासएववातस्तत्संभवः ॥ २२ ॥ अल्पतरगान्दर्शयति ॥ चित्तेति ॥ चित्तस्यतत्तद्विषयेषुयेस्खलनभेदास्तेषामालिःपंक्तिस्तद्धेतवोरागाद्याश्चप्रकल्पिताःक्षुद्रतरंगाइतिशे
षः ॥ तस्यावर्त्तंदर्शयति ॥ ममतेति ॥ २३ ॥

प्राणिकृतपुण्यपापात्मककर्मैवास्यपशुपतेर्देवस्यप्राणिपशुबंधनपाशाविश्रवतांविविधश्रुत्यादिप्रमाणप्रसिद्धताम्
अद्यापिनपच्यतेनक्षीणानितवेतिशेषः ॥ ध्रुवमितिवितर्कें ॥ प्राणिकृतपुण्यपापात्मककर्मैवास्यपशुपतेर्देवस्यप्राणिपशुबंधनपाशाविश्रवतांविविधश्रुत्यादिप्रमाणप्रसिद्धताम् उमासहायपरमेश्वरप्रभुंत्रिलोचननीलकंठं ॥ ३४ ॥ सत्वचित्तप्रसीदतिविशुद्ध्यति ॥ ततस्तस्माद्भजनादकृत्रिमाविघ्नैरबाध्यत्वात्सहजाभविष्यतीतिशेष ॥ तथाचश्रुतिः ॥ प्रशांतम् ॥ ध्यात्वामुनिर्गच्छतिभूतयोनिंसमस्तसाक्षिंतमसः परस्तादिति ॥ ३५ ॥ ईश्वरोपासनशुद्धसत्वबलाद्यामोहसहस्रैरुद्दामस्यतमसइमाप्रसिद्धांव्यामोहशक्तिंजित्वा गुरुशास्त्रोपदेशविश्वासवतामनसायमस्यसेंद्रियमनोनियमनात्मकस्ययोगस्याध्वानमनुसर ॥ ३६ ॥ ततःक्षणमुहूर्तद्वादशतमभागमपिसमाधायसमाधिमाश्रित्यतेनात्मदर्शने नतवप्राक्तमोहनाबुद्धिरूपारजनीरात्रिर्विभातुप्रभातंप्रावगच्छतु ॥ ३७ ॥ ननुसत्कर्मानुष्ठानैरेवचित्तशुद्धिसिद्धेःकिमर्थमीश्वरोपासनतत्राह ॥ महेशेति ॥ ३८ ॥ नन्वाभिजा त्यसदाचारतपःकर्मायत्ननपुरुषप्रयत्नानाप्राक्तनकर्मापेक्षयाप्राबल्यप्राक्साधितनत्कथमिदानीमीश्वरानुग्रहापेक्षोच्यतेतत्राह ॥ नाभिजात्यमिति ॥ पुरातनकर्मणामनंतत्वा दिदानींतनपुरुषप्रयत्नानामल्पतरत्वान्नेश्वरानुग्रहमंतरेणतज्जयसिद्धि ॥ ईश्वरानुग्रहसाहाय्यत्तदिकृत्वैवप्रागैहिकप्रयत्नप्राबल्यंसाधितनतद्धिहायेतिभाव. ॥ ३९ ॥ तर्हीश्वरो

दुरितानिसमस्तानिपच्यंतेद्यापिनध्रुवम्॥ कृतमेवास्यदेवस्यपाशाविश्रवतांगताः॥ ३४ ॥ साकारंभजतावत्त्वंयावत्सत्वंप्रसीदति॥
इमामुद्दामतमसोजित्वासत्वबलाद्ध्रुवम् ॥ यमस्यानुसराध्वानंविश्वस्तेनांतरात्मना ॥ ३६ ॥ निराकारेपरेतत्त्वेततःस्थितिरकृत्रिमा ॥ ३५ ॥
समाधायक्षणंपश्यप्रत्यगात्मानमात्मना॥इयंविभातुसाव्यक्तंप्राग्बुद्धिरजनीतव॥३७॥ कृतंपुरुषकारेणकेवलेनचकर्मणा॥
महेशानुग्रहादेवप्राप्तव्यंप्राप्यतेनरैः ॥ ३८ ॥ नाभिजात्यंनचारित्र्यंननयोनचविक्रमः ॥ बलवंतिपुराणानिसखेकर्माणिकेवलम्
॥ ३९ ॥ अप्रतर्क्यात्प्रतीकारात्किमेवमवसीदसि ॥ नलुंपतिललाटस्थामीश्वरोप्यक्षरावलिम्॥ ४० ॥ क्वचिद्वक्ताक्ववैदग्ध्यंक्वचेयंमो
हवल्लरी॥ अचिंतनीयानियतिर्यदियंद्वंद्वमाहिता॥ ४१ ॥

पास्तिरेवकार्याकियमनियमज्ञानादिभिस्तत्राह ॥ अप्रतर्क्यादिति ॥ एवमीश्वरप्रपन्नोपित्वमप्रतर्क्यात्पौरुषतर्कागम्याच्छ्रुत्येकसमधिगम्याद्धर्मादिसहितज्ञानलक्षणात्प्रतीका रात्समूलसर्वकर्मनिरासोपायात्किमवसीदसिकिमर्थमुद्विजसि ॥ यतउपासनाप्रसादितईश्वरोपिललाटस्थामक्षरावलिंनसाक्षात्स्वकरेणमार्जयतिकिंतुज्ञानकृतमूलोच्छेदोपा येनैवेत्यर्थ. ॥ ४० ॥ गुरुशास्त्रयोःशिष्यबोधनशक्तिःशिष्यस्यचचित्तशुद्ध्याऊहापोहकुशलतयाबोद्धुनाशक्तिःरागादीनांचसमूलोच्छेदयोग्यताप्राप्तिलक्षणपरिपाकइतिसर्व सामग्रीमिलनमपीश्वरेच्छालक्षणनियतिवशादेवेत्याह ॥ क्वेति ॥ वाङ्मनसागम्यायाअखंडब्रह्मात्मचितोवक्तागुरु क्व शिष्यस्यचतद्बोधयोग्यतालक्षणवैदग्ध्यकौशलंक्व इयमेवंशमदमादिक्रमेणस्वविनाशायपरिणतामोहवल्लरीक्व ॥ यद्यस्याःसकाशादियसर्वासामपीद्वंद्वपरस्परमिलनमागतासानियतिरीश्वरेच्छाअचिंतनीयाप्रभावेयत्तापरिच्छे देनचिंतयितुमशक्येत्यर्थः ॥ ४१ ॥

---

१ अत्रटीकानुरोधाद्द्वंद्वमागतेतिपाठइतिभाति

दुष्टस्यकालस्यगोचरा अनभूताइतियावत ॥ ५४ ॥ अपिचसाक्षिणस्तवससारनर्तनकौतुकदर्शनमेवयुक्तनतुशोकमोहादिविकारैःस्वयंनर्त्तनमित्याह ॥ स्वयमिति ॥ विप त्तौयंनचित्तादिनाशेविकलानिविवेकदर्शनासमर्थानिरोदनादिविक्रतानिचइंद्रियाणिचक्षुरादीनियस्यतथाविधःसन् ॥ ५५ ॥ क्षणभंगिनोदर्शनादितिशेषः ॥ मनस्वीविवेकी ॥ ५६ ॥ अमगल्यममगलार्हम् ॥ ५७ ॥ कानिमगलानितान्याह ॥ देवेति ॥ देवद्विजादिश्रद्धाप्रभृतयईश्वरानुग्रहसाधनत्वान्मगलानि ॥ ईश्वरानुग्रहस्तुसाक्षाज्ज्ञानसाधन त्वात्परममगलमितिभावः ॥ तथाचोक्तम् ॥ ईश्वरानुग्रहादेवपुसामद्वैतवासना महाभयपरित्राणाद्विप्राणामेवजायतइति ॥ ५८ ॥ इदानीभरद्वाजःसर्वसाधनरहस्यंमयापिडी

स्वयंनृत्यसिकिंप्रीतोविपत्तौविकलेंद्रि यः॥ क्षणंनिश्चलमासीनःपश्यसंसारनाटकम्॥५५॥ नविषीदतिमनस्वीभरद्वाजमनागपि ॥५६॥ त्यजशोकममंगल्यंमंगलानिविचिंतय॥ देवद्विजगुरुश्रद्धाभरबंधुरचेतसाम्॥ नवैराग्यात्परोबंधुर्नसंसारा त्परोरिपुः॥५९॥ श्रीवाल्मीकिरुवाच॥ भरद्वाजशृणुष्वेदंमहाज्ञानंविमुक्तिदम्॥ यस्यश्रवणमात्रेणभवाब्धौननिमज्जसि॥६१॥ संहृतिस्थितिसंभूतिभेदैर्योनेकधास्थितः॥ एकोपिसन्नमस्तस्मैसच्चिदानंदमूर्त्तये॥६२॥ तवोपायंप्रवक्ष्यामिसंक्षेपाच्छ्रुतिशासनात्॥६३॥

काकथामर्त्यपिंडानांनिमेषांतरवासिनाम्॥ अपिदेवनिकायायेतेपिदुष्कालगोचराः॥५४॥ अस्यानेकतरंगस्यजगतःक्षणभंगिनः॥ चिदानंदघनंस्वच्छमात्मानंचविभावय॥५७॥ सदागमप्रमाणानांमहेशानुग्रहोभवेत्॥५८॥ ॥भरद्वाजउवाच॥ ॥ज्ञातंतवप्रसादेनसर्वमेतदशेषतः॥ इदानींश्रोतुमिच्छामिवसिष्ठेनोपपादितम्॥ ज्ञानसारमशेषेणग्रंथेनोक्तंपदात्मना॥६०॥ कृतेप्रपंचविलयेयथातत्त्वंप्रकाशते॥ पूर्वापरविचारार्हाकथंनष्टातवस्मृतिः॥ तथैवज्ञायतेसर्वंकरामलकवत्स्वयम्॥६४॥

कृत्यज्ञातम् दृश्यप्रपचप्रविलापनोपायरहस्यमीश्वरानुग्रहसाधनरहस्यंचवसिष्ठस्यविस्तरोक्तिषुविशकलिततत्रतत्रोक्तंपिडीकृत्यनज्ञातमितिकंठोक्त्यार्थाच्चदर्शयंस्तज्जिज्ञासुः पृच्छति ॥ ज्ञातमित्यादिना ॥ ५९ ॥ अनेकवाक्यात्मनाअशेषेणग्रंथेनोक्तरहस्यमेकपदात्मनापिडीकृतनिष्कृष्टश्रोतुमिच्छामीत्यर्थः ॥ यदात्मनेतिपाठेयत्तात्पर्यकेणेतिग्रथवि शेषणम् ॥ ६० ॥ ६१ ॥ प्रविलापनोपायमपवादंवक्तुमध्यारोपेणैकमेवानेकधास्थितदेवमगलार्थंनमस्यति ॥ सहृतीति ॥ ६२ ॥ प्रश्नाभिप्रायानुरूपमुत्तरवक्तुप्रतिजानीते ॥ कृतेइति ॥ श्रुतिशासनात्माडूक्योपनिषदादिश्रुत्युक्तक्रमात् ॥ ६३ ॥ विशकलितोक्तंसूक्ष्ममतिभिःस्वयमेवपूर्वापरविचारेणनिष्कृष्यज्ञातुंशक्यतत्तेसौबुद्ध्याप्राक्प्रख्यातमिदा नीकथनष्टमितिवक्ष्यमाणग्रहणावधानार्थमधिक्षिपति ॥ पूर्वापरेति ॥ ६४ ॥

अतएवेदृशसामर्थ्यप्राप्तौ मोहजयोत्साहएवयुक्तोनत्वन्तरालेशोकइत्याह ॥ हेभरद्वाजेति ॥ असामान्यमसाधारणम् ॥ ४२ ॥ किंचमहत्स्वपिकार्येषुशोक सामग्रीहीनस्ययुक्तो नतुमहाराजस्यवसर्वसामर्थ्यसंपन्नस्यतवेत्याशयेनाह ॥ दूरमिति ॥ महासत्वोराजापुत्रादिमहापदिनिमग्नोपिधनभृत्यादिसामग्रीसंपन्नत्वादन्येषांमनोरथदूरमपिपृथ्वीपरिपा लनदुष्टनिग्रहशिष्टपरिपालनादिकार्यमाज्ञामात्रेणकर्तुमुत्सहते ॥ परिक्षतेधनादिक्षतिरूपायामापदितदुत्तरणेहेतुधैर्यादिसामग्रीविरहादित्यर्थः ॥ ४३ ॥ जीवन्मुक्तान्विदर्शनी कृत्यपुण्यसामग्र्यांसत्यांममबोधोपिभविष्यत्यवेत्यनुमायसोत्साहःपुण्यसामग्र्यर्जनेप्रयत्नमप्रवर्तेतेत्याशयेनाह ॥ बोधइति ॥ ४४ ॥ ननुपापवत्पुण्यस्यापिबंधकत्वाद्विषवत्पुण्य कथमर्जनीयतमाह ॥ द्विपद्भूतेनेति ॥ सविरागपुण्यंबंधकमपितद्भावतुमुक्षूनांमोक्षोपयुक्तमेवेतिभावः ॥ ४५ ॥ पुण्यातिशयेनप्राक्तनपापनाशेशमदमाद्यमृतनाप्यायितानोधि

हेभरद्वाजमोहत्वंविवेकेनजहिस्फुटम् ॥ असामान्यमिदानींत्वंज्ञानप्राप्स्यस्यमशयम् ॥ ४२ ॥ दूरमुत्सहतेराजामहासत्त्वोमहापदि ॥
अल्पसत्वोजन शोचत्यल्पेपिहिपरिक्षते ॥ ४३ ॥ बोध पुण्यपराधीन प्रयतेबहुजन्मभि ॥ अनुमीयतधीरेषुजीवन्मुक्तेषुकार्यत ॥ ४४ ॥
द्विपद्भूतेनयेनैवकर्मणायंधइद्दश ॥ सुखद्भूतेनतेनैवमोक्षमाप्स्यसिपुत्रक ॥ ४५ ॥ सतांसत्कर्मभवेग पुराणप्रणुदन्नयम् ॥ वर्षौघइव
भूतानादवानलमसेचयत् ॥ ४६ ॥ सर्वसन्न्यस्यकर्माणिब्रह्मण प्रणयीभव ॥ नेष्यसेयदिमसारचक्रावर्त्तभ्रम शामम् ॥ ४७ ॥ तावदेतद्विक
ल्पोत्थमिदयावद्विग्रह ॥ प्रतिकूलाब्धिकल्लोलेकेवलनिश्चलेजले ॥ ४८ ॥ अयकिमधकरणस्त्वयाशोकोवलव्यते ॥ निर्वाहयतुसैव
त्वांप्रज्ञायपरिभगुरा ॥ ४९ ॥ नजातुतेविगण्यतेगणनासुगरीयसाम् ॥ येतरंगैस्तृणानीवक्रियतेहर्षशोकयो ॥ ५० ॥ समारूढदशादो
लामहोरात्रमिदंजगत् ॥ क्रीड्यतेपड्विधे प्रेंखे मस्वेकिमितिखिद्यते ॥ ५१ ॥ सूतेसहरतिक्षिप्रपुन स्सृजतिहतिच ॥ जगतिबहुपर्याये का
लएवकुतूहली ॥ ५२ ॥ नविशेषग्रह कश्चिन्नचकश्चिन्नकश्चन ॥ जतुष्वभ्यवहार्येषुप्राक्रम्यकालभोगिन ॥ ५३ ॥

विधतापशांतिर्भवतीत्याह ॥ सतामिति ॥ असेचयदितिभूतकालोनविवक्षित ॥ ४६ ॥ पुण्यार्जनोत्तरंवैराग्यद्वारापुण्यत्कार्यंतदुपदिशति ॥ सर्वेइति ॥ ब्रह्मणःप्रणयीब्रह्मणाधुपा येब्रह्मण्यासक्त ॥ ४७ ॥ यावद्विग्रहोऽब्रह्मणयिता ॥ उल्लोलजलेपयसिअब्धिःप्रतिकूलकूलोपसर्पीविक्षिप्त ॥ निश्चलेतुपयसिकेवलपयएवभवेत्यर्थ ॥ ४८ ॥ अधक रणाविवकदृष्टिपिधायक ॥ एवशोकाधत्वायाबद्विवेकदृश्यहाटनमावप्रज्ञापरिकैवनिर्वाहयतु ॥ ४९ ॥ हर्षशोकयोस्तरंगैःशुभोत्साहभंगे ॥ ५० ॥ हर्षविषादादिदशाळक्ष णांदोलाम ॥ इदजगत्जीवजातम ॥ षडूर्मिभेदाषड्भेदात्कामाद्यरिषट्भेदाद्वापड्विधे प्रेंखेदोलायांच क्रीड्यतेकालेन ॥ क्रीडतेरकर्मकाद्धेनुमण्णिचिगतिबुद्धीत्यादिनाकर्तुः कर्मत्वकर्मणिलः ॥ मदिक्रीडाकौतुककल्पितेषुपदार्थसयोगवियोगेषुत्वेदोयुक्तइत्यर्थ ॥ ५१ ॥ कुतूहलीक्रीडाकौतुकी ॥ ५२ ॥ स्वशरीरादेः सर्वप्राणिशरीरादिवत्काला धीनत्वात्पर्यायमप्यनतनदवश्यशोकम्यमेवमितिनिश्चित्यतमाहतापभिमानत्यागेनशोकप्रसक्तिरित्याशयमाह ॥ नविशेषेति ॥ पक्षोदर्शनम ॥ नकश्चित्तद्विषयोविशेषधर्म नक श्चनपर्यायक्रमसिद्धइत्यर्थ ॥ कालळक्षणस्यभोगिनःसर्पस्यप्राक्रम्यबलात्कारेणाभ्यवहारोभक्षणतत्कर्मभूतेषुजंतुषुमध्ये ॥ ५३ ॥

दिश श्रोत्रभूत्वाकर्णौप्राविशन्नित्यादिश्रुते कर्तुर्जीवस्यशब्दादिभोगप्रसिद्धयेकर्णादिगोलकानुप्रवेशेनश्रोत्रादिलक्षणेनेंद्रियभावेनोपेतादिगादिदेवतांयथाक्रमदेवतास्वेवनि
क्षिपेदितिशेष ॥तमेवक्रमदर्शयति ॥ दिक्ष्वित्यादिना ॥ ८ ॥ अप्सुवरुणदेवतायाम् ॥ ९ ॥ १० ॥ ब्रह्मणिचतुर्मुखे ॥ बुद्धिग्रहणमुपलक्षणम् ॥ एवमनोहंकारचित्तान्यपिचंद्ररु
द्राच्युतेषुप्रविलापयेदित्युपसंहरति ॥ एताइति ॥ अग्निर्वाग्भूत्वामुखप्राविशदित्यादिश्रुतिवाक्यप्रमाणमनुस्मृत्यदेवताएवेंद्रियव्यपदेशेनस्थितानांत्विंद्रियाणिनामवस्त्वतराणि
संतीतितत्त्वोपदेशेनप्रविलापनायमयाव्यादिश्यतेनस्वतःस्वकपोलकल्पनयाएतेऽर्था प्रकटीकृताइत्युत्तरेणान्वय ॥ ११ ॥ एवंदेहेंद्रियादिप्रविलापनसंग्रहश्लोकंविवृत्यविरा
जिप्रथमस्थित्वेत्येतद्विशदयति ॥ एवमिति ॥ १२ ॥ अव्याकृतेस्थितःपश्चादित्येतद्विवरणप्रसंगेनमायाशबलस्यसर्वजगदभिन्ननिमित्तोपादानस्यब्रह्मणोब्रह्मविद्यार्थिभि प्रागु

श्रोत्रादिलक्षणोपेतांकर्त्तुर्भोगप्रसिद्धये॥दिक्षुन्यस्यात्मनःश्रोत्रंत्वचंविद्युतिनिक्षिपेत् ॥ ८ ॥ चक्षुरादित्यबिंबेचजिह्वामप्सुविनिक्षिपे
त् ॥ प्राणंवायौवाचमग्नौपाणिमिंद्रेविनिक्षिपेत् ॥ ९ ॥ विष्णौतथात्मनःपादौपायुंमित्रेतथैवच ॥ उपस्थंकश्यपेन्यस्यमनश्चंद्रेनिवेशये
त् ॥ १० ॥ बुद्धिंब्रह्मणिसंयच्छेदेताःकरणदेवताः ॥ इंद्रियव्यपदेशेनव्यादिश्यंतेचदेवताः ॥ ११ ॥ श्रुतिवाक्यमनुस्मृत्यनस्वतःप्रकटीकृ
ताः ॥ एवंन्यस्यात्मनोदेहंविराडस्मीतिचिंतयेत् ॥ १२ ॥ ब्रह्मांडांतःस्थितोयोसावर्धनारीश्वरःप्रभुः ॥ आधारःसर्वभूतानांकारणंतदुदा
हृतम् ॥ १३ ॥ सयज्ञस्त्रष्टिरूपोसौजगद्दत्तौव्यवस्थितः ॥ द्विगुणांडाद्बहिःपृथ्वीपृथिव्याद्विगुणंजलम् ॥ १४ ॥ सलिलाद्द्विगुणंतेजस्तेजसो
द्विगुणोनिलः ॥ वायोर्द्विगुणमाकाशमूर्ध्वमेकैकशःक्रमात् ॥ १५ ॥ व्यस्तेनचसमस्तेनव्यापिनाग्रथितंजगत् ॥ क्षितिंचाप्सुसमावेश्य
सलिलंचानलेक्षिपेत् ॥ १६ ॥

पास्यत्वेनोक्ताब्रह्मांडात्मनोविराजोत्पन्नसदास्थितांब्रह्मविद्याघटितार्धशरीरामूर्तिदर्शयन्सएवसर्वप्राणिनांमातापितृरूपेणकारणमित्याह ॥ ब्रह्मांडांतरिति ॥ १३ ॥ सोसौ
पितृत्वादेवस्वस्रष्टस्यदेवमनुष्यादिजगतोदत्तावन्नपानादिजीवनोपायेव्यवस्थितःसन्नृहविर्दृष्ट्यादिनासर्वपोषकश्चौतस्मात्यज्ञस्त्रष्टिरूपोब्रह्मांडांतःस्थितः॥ प्रासंगिकमुक्त्वाप्रस्तु
तप्रविलापनवक्तुब्रह्मांडावरणान्याह ॥ द्विगुणेति ॥ यद्यपिएभिरावरणैरंडव्याप्तंदशगुणोत्तरैरितिपुराणेषुदशगुणोत्तरत्वश्रूयतेतथापिद्विगुणमेवपरितोवेष्टनेपचक्रोशप्रदक्षिणेपंच
विंशतिक्रोशवदेकगुणस्यपंचगुणत्वेद्विगुणस्यदशगुणत्वमित्यभिप्रायेणतद्बोध्यम् ॥ अथवातदपंचीकृतभूतावरणाभिप्रायमिदंतुपंचीकृताभिप्रायमित्यविरोधः ॥ १४ ॥ एकै
कशएकैकस्मादूर्ध्वमुत्तरोत्तरम् ॥ १५ ॥ व्यस्तेनअपंचीकृतेनसमस्तेनपंचीकृतेन अतएवांतरमांतरबाह्यप्रविलापयेदित्याह ॥ क्षितिमिति ॥ १६ ॥

॥ ६५ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाण० पू० सप्तविंशत्युत्तरशततम सर्ग ॥ १२७ ॥ ॥ ७ ॥ ॥ प्रविलापनयुक्त्याभरद्वाजकृतायता ॥ वर्ण्य तेद्यानिकर्तव्यरामसमुत्थापनक्रमा ॥ १ ॥ तमसोगसाक्षात्कारांतमपवर्गप्रविलापनप्रकारशांतोदांतउपरतस्तितिक्षु श्रद्धावित्त समाहितोभूत्वात्मन्येवात्मानपश्यतीतिश्रुतितात्प र्यवर्णनमुखनैववक्तुमारभते ॥ शांतइत्यादिना ॥ तमोपरतपदविषयविभागेनव्याचष्टे ॥ निषिद्धादिति ॥ तमससमाहितपदार्थतयाआसनाद्यष्टांगयोगवर्णयस्तितिक्षुपदमर्थाया चष्टे ॥ सद्वासनइत्यादिना ॥ उच्चारयेद्दीर्घजपेत् ॥ शुश्रूषापास्याभोक्तरीत्याश्रुततमथा ॥ १ ॥ २ ॥ यस्माद्यस्मायस्ययस्यसंभवोजन्मभवतितत्तज्ज्ञात्वाश्रुत्यादिनास्वस्वा तपुनपुभूतपुरेवेपुप्रविलापयत्वाधारप्रभमृत्युकरीत्यानसद्यतिरेकेणनासीदितिस्मरेदित्यर्थ ॥ ४ ॥ एवमाध्यात्मिकदेहेंद्रियादिभावंत्यक्त्वातत्कारणभूतदेवतासमष्ट्यात्माधका

स्वेयविचार्यस्वयमेवचेतसातव्याप्यतेयेननशोचतेपुन ॥ सत्संगसच्छास्त्रविवेकत पुनर्वैराग्ययुक्तेनविभाव्यमेतत् ॥ ६५ ॥ ॥ इ० वा० वा० दे० मो० नि० पू० भरद्वाजानुशासननामसप्तविंशत्युत्तरशततम सर्ग ॥ १२७ ॥ ॥ ७ ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ शांतोदांतश्चोपरतोनिषिद्धात्काम्यकर्मण ॥ विषयेंद्रियसंश्लेषसुखाच्चश्रद्धयान्वित ॥ १ ॥ सद्वासनेसमासीनोजितचित्तेंद्रियक्रिय ॥ ओमित्युच्चारयत्तावन्मनोयावत्प्रसीदति ॥ २ ॥ प्राणायामंतत कुर्यादत करणशुद्धये ॥ इंद्रियाण्याहरेत्पश्चाद्विषयेभ्यःशनैःशनै ॥ ३ ॥ देहेंद्रियमनोबुद्धिक्षेत्रज्ञानांचसंभव ॥ यस्माद्भवतितज्ज्ञात्वातेषुपश्चाद्विलापयेत् ॥ ४ ॥ विराजिप्रथमस्थित्वातत्रात्मनितत परम् ॥ अव्याकृतस्थित पश्चात्स्थित परमकारणे ॥ ५ ॥ मांसादिपार्थिवंभागंपृथिव्यांप्रविलापयेत् ॥ आप्यंरक्तादिकंचाप्सुतैजसतेजसिक्षि पेत् ॥ ६ ॥ वायव्यंचमहावायौनाभसंनभसिक्षिपेत् ॥ पृथिव्यादिषुविन्यस्यचेंद्रियाण्यात्मयोनिषु ॥ ७ ॥

रार्थोविराडहमस्मीतिभावनयाप्रथमविराजिस्थित्वातत परतत्कारणेउकारार्थेसूक्ष्मभूतलिंगसमष्ट्यात्मनिहिरण्यगर्भेविराजमविलाप्यस्थित्वाततस्तत्कारणेत्रिगुणेनायोपहि तेमकारार्थेअव्याकृतेस्थितस्सत्तत पश्चात्सर्वजगन्मूलकारणत्वोपलक्षितेसाव्याकृतसधाधिष्ठानअर्धमात्रालक्षितेशुद्धेब्रह्मणिअव्याकृतमपिविलाप्यस्थितोभवेदित्यर्थ ॥ ५ ॥ देहेंद्रियादिषुयस्ययस्मात्संभवस्तत्तत्प्रविलापनप्रयुक्तमाहशिष्यपुनर्विवृणोति ॥ मांसादीत्यादिना ॥ क्षिपेत्तन्मात्रतापत्तनेनप्रविलापयेत् ॥ ६ ॥ नाभसंशारीराकाशम् ॥ एवमाणादींद्रियाण्यप्यात्मयोनिषुस्वारंभकेषुदेवतोपाधिभूतसूक्ष्मपृथिव्यादिषुनिक्षिप्यविलाप्य ॥ ७ ॥

१ अयम्श्लोकएकस्मिन्पुस्तकऽधिकोदृष्ट

दिगादिदेवतांयथाक्रमदेवतास्वेवनि

दिश श्रोत्रंभूत्वाकर्णौप्राविशन्नित्यादिश्रुते कर्तुर्जीवस्यशब्दादिभोगप्रसिद्धयेकर्णादिगोलकानुप्रवेशेनश्रोत्रादिलक्षणेनेंद्रियभावेनोपेता बुद्धिग्रहणमुपलक्षणम् ॥ एवमनोहंकारचित्तान्यपिचंद्ररु
क्षिपेदितिशेषः ॥तमेवक्रमदर्शयति ॥ दिक्ष्वित्यादिना ॥ ८ ॥ अप्सुवरुणदेवतायाम् ॥ ९ ॥ १० ॥ ब्रह्मणिचतुर्मुखे ॥ बुद्धिग्रहणमुपलक्षणम् ॥ एवमनोहंकारचित्तान्यपिचंद्ररु
द्राच्युतेषुप्रविलापयेदित्युपसंहरति ॥ एताइति ॥ अग्निर्वाग्भूत्वामुखंप्राविशदित्यादिश्रुतिवाक्यप्रमाणमनुस्मृत्यदेवताएवेंद्रियव्यपदेशेनस्थितानत्विंद्रियाणिनामवस्त्वंतराणि
सर्तीतितत्त्वोपदेशेनप्रविलापनायमयाव्यादिश्यतेनस्वतःस्वकपोलकल्पनयाएतेऽर्था प्रकटीकृताइत्युत्तरेणान्वय ॥ ११ ॥ एवंदेहेंद्रियादिप्रविलापनसपरिहश्लोकविद्वत्यविरा
जिप्रथमस्थित्वेत्येतद्विशदयति ॥ एवमिति ॥ १२ ॥ अव्याकृतेस्थितःपश्चादित्येतद्विवरणप्रसंगेनमायाशबलस्यसर्वजगदभिन्ननिमित्तोपादानस्यब्रह्मणोब्रह्मत्विद्यार्थिभिःप्रागु

श्रोत्रादिलक्षणोपेतांकर्तुर्भोगप्रसिद्धये ॥दिक्षुन्यस्यात्मनःश्रोत्रंत्वचंविद्युतिनिक्षिपेत् ॥ ८ ॥ चक्षुरादित्यबिंबेचजिह्वामप्सुविनिक्षिपे
त् ॥ प्राणंवायौवाचमग्नौपाणिमिंद्रेविनिक्षिपेत् ॥ ९ ॥ विष्णौतथात्मनःपादौपायुंमित्रेतथैवच ॥ उपस्थंकश्यपेन्यस्यमनश्चंद्रेनिवेशये
त् ॥ १० ॥ बुद्धिंब्रह्मणिसंयच्छेदेताःकरणदेवताः ॥ इंद्रियव्यपदेशेनव्यादिश्यंतेचदेवताः ॥ ११ ॥ श्रुतिवाक्यमनुस्मृत्यनस्वतःप्रकटीकृ
ताः ॥ एवंन्यस्यात्मनोदेहंविराडस्मीतिचिंतयेत् ॥ १२ ॥ ब्रह्मांडांतःस्थितोयोसावर्धनारीश्वरःप्रभुः ॥ आधारःसर्वभूतानांकारणंतदुदा
हृतम् ॥ १३ ॥ सयज्ञस्त्विष्टिरूपोसौजगद्वृत्तौव्यवस्थितः ॥ द्विगुणांडाद्बहिःपृथ्वीपृथिव्याद्विगुणंजलम् ॥ १४ ॥ सलिलाद्विगुणंतेजस्तेजसो
द्विगुणोनिलः ॥ वायोर्द्विगुणमाकाशमूर्ध्वमेकैकशःक्रमात् ॥ १५ ॥ व्यस्तेनचसमस्तेनव्यापिनाग्रथितंजगत् ॥ क्षितिंचाप्सुसमावेश्य
सलिलंचानलेक्षिपेत् ॥ १६ ॥

पास्यत्वेनोक्ताब्रह्मांडात्मनोविराजोत्पत्स्येसदास्थितांब्रह्मविद्याघटितार्धशरीरामूर्तिदर्शयन्सएवसर्वप्राणिनांमातापितृरूपेणकारणमित्याह ॥ ब्रह्मांडांतरिति ॥ १३ ॥ सोसौ
पितृत्वादेवस्वसृष्टस्यदेवमनुष्यादिजगतोवृत्तावन्नपानादिजीवनोपायेव्यवस्थितःसन्वृष्ट्यादिनासर्वपोषकश्चैतस्मात्यज्ञस्त्विष्टिरूपोब्रह्मांडांतःस्थितः ॥ प्रासंगिकमुक्त्वाप्रस्तु
तप्रविलापनवक्तुंब्रह्मांडावरणान्याह ॥ द्विगुणेति ॥ यद्यपिएभिरावरणैरंडव्याप्तंदशगुणोत्तरैरितिपुराणेषुदशगुणोत्तरत्वंश्रूयतेतथापिद्विगुणमेवपरितोवेष्टनेपंचक्रोशप्रदक्षिणेपंच
विंशतिक्रोशवदेकगुणस्यपंचगुणत्वेद्विगुणस्यदशगुणत्वमित्यभिप्रायेणतद्बोध्यम ॥ अथवातदपंचीकृतभूतावरणाभिप्रायमिदंतुपंचीकृताभिप्रायमित्यविरोधः ॥ १४ ॥ एकै
कशएकैकस्मादूर्ध्वमुत्तरोत्तरम् ॥ १५ ॥ व्यस्तेनअपंचीकृतेनसमस्तेनपंचीकृतेन अतएवांतरमांतरबाह्यंप्रविलापयेदित्याह ॥ क्षितिमिति ॥ १६ ॥

समावस्यप्रविलाप्य ॥ समस्तस्थूलप्रपञ्चोत्पत्तिकारणे महदाकाशे हिरण्यगर्भाकारे ॥ १७ ॥ किं तल्लिङ्गशरीरं तदाह ॥ वासनाद्इति ॥ १८ ॥ लिङ्गं लिङ्गशरीरम् ॥ एवं स्थूलोपाधिप्रविलापनेनाधःस्वस्वरूपन्नोप्रत्यगात्मताभिमानस्यागात्ततो बहिर्भूत सत्वप्रसूक्ष्मभूतात्मकलिङ्गसमष्टिदेहे अहमस्माधिष्ठाता हिरण्यगर्भ एवास्मीति चिंतयेदित्यर्थ ॥ १९ ॥ ननु चतुर्मुख पद्मसम्भवो वेदलोके हिरण्यगर्भ इति प्रसिद्ध अयन्तु भूतसूक्ष्मसमस्यात्मा न चतुर्मुख इति कथं हिरण्यगर्भस्तत्राह ॥ चतुर्मुख इति ॥ भूतसूक्ष्मे अभिमानितयाप्यवस्थितोऽयमव्यक्तप्रपञ्चे अप्रत्यक्षप्रविलापनात्पूर्वं प्रत्यगात्मत्वभोगार्थं पद्मोद्भवत्वे कल्पयित्वा चतुर्मुख आसीदित्यर्थ ॥ इत्थं हिरण्यगर्भात्मभावनानंतरं यत्कर्तव्यं तदाह ॥ लिङ्गमिति ॥ अपञ्चीकृतभूतेभ्योऽपि सूक्ष्मउपाध्याकारेणाव्याकृते मायांशे उपहितश्चिदाकारेणाव्यक्ते च ॥ जडांशस्य जडे चिदाभासांशस्य चितिप्रविलापनमिति सूचनाय द्विधाकृत्योक्ति ॥ २० ॥

अग्निं वायौ समावेश्य वायुं च नभसि क्षिपेत् ॥ नभश्च महदाकाशे समस्तोत्पत्तिकारणे ॥ १७ ॥ स्थित्वा तस्मिन् क्षणं योगी लिङ्गमात्रशरीरयुक् ॥ वासनाभूतसूक्ष्माश्च कर्माविद्ये तथैव च ॥ १८ ॥ दशेन्द्रियमनोबुद्धिरेतल्लिङ्गं विदुर्बुधा ॥ ततोऽधौ हार्दहृदयात् स्वात्मा अस्मीति चिंतयेत् ॥ १९ ॥ चतुर्मुखोऽग्रके चाय भूतसूक्ष्मेष्ववस्थित ॥ लिङ्गमव्याकृते सूक्ष्मे न्यस्याव्यक्ते च बुद्धिमान् ॥ २० ॥ नामरूपविनिर्मुक्तं यस्मिन्सतिष्ठते जगत् ॥ तामाहु प्रकृतिं केचिन्मायामेके परे त्वणून् ॥ २१ ॥ अविद्यामपरे प्राहुस्तर्कविभ्रान्तचेतस ॥ तत्र सर्वं लयं गत्वा तिष्ठत्यव्यक्तरूपिण ॥ २२ ॥ नि सबधानिरास्वादा सम्भवति तत पुन ॥ तत्स्वरूपाहितिष्ठति यावत्सृष्टि प्रवर्तते ॥ २३ ॥ आनुलोम्यात्स्मृता सृष्टि प्रातिलोम्येन सद्वति ॥ अत स्थानत्रयं त्यक्त्वा तुरीयं पदमव्ययम् ॥ २४ ॥

अथवाव्याकरणफलमभिव्यक्तिरिति क्रियाफलरूपप्रवृत्तिनिमित्तभेदकल्पनया एकस्यैव व्यपदेशभेद इत्याशयेनाह ॥ मायेति ॥ प्रकृतिसांख्या ॥ मायां वेदांतिन ॥ २१ ॥ अपरे बौद्धा स्वस्तिरूपामविद्याम ॥ तथा तस्मिन्नव्याकृते प्रलयकाले सर्वे पदार्था लयं गत्वा भावविकारगत्वा अनभिव्यक्तरूपिणस्सतस्तत्तत्तयैव तिष्ठति ॥ २२ ॥ कथं तिष्ठति तत्राह ॥ नि सबधा इति ॥ परस्परसंसर्गशून्या अभिव्यंग्यतालक्षणास्वादशून्याश्चेत्यर्थ ॥ कुत ॥ प्रलयानंतरसर्गकालेन तत अव्याकृतादेव प्रकृतिभूतात् ॥ २१ ॥ आनुलोम्यादाकाशादिक्रमात् ॥ प्रातिलोम्येन सृष्टिविपरीतक्रमेण पश्चात्स्थित परमकारणे ईश्वरे लीयते ॥ अत इति ॥ स्थानत्रयं विराड्धिरण्यगर्भाव्याकृतात्मस्थूलसूक्ष्मकारणरूपसमष्टिजाग्रदाद्यवस्थात्रयमपनीत ब्रह्मन बहि भन्नो अयमक्षनमक्षनामक्षनमक्षानघनमितिश्रुत्युपदर्शितविशात्प्रकाशात्मधिष्ठानपरिशिष्टचिन्मात्रैकरसमद्वयममव्ययं तुर्यमप्राप्तमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवं शांतमद्वैतं चतुर्थं मन्यते इति श्रुत्युपदर्शिततत्स्वभावमयेवात्मानं ज्ञानादर्शाभिध्यायेत् ॥ २४ ॥

ध्यानेद्धयाचरमसाक्षात्कारवृत्त्याध्यानकर्तृकरणरूपंलिंगमपिमूलाज्ञानबाधेनप्रविलाप्यघटभंगेघटाकाशोमहाकाशमिवपरंनिरतिशयानंदंब्रह्मविशेत्तैवास्यलिंगनिगडमु
क्त्याकृतार्थतेत्यर्थ. ॥ ननुनातःप्रज्ञमित्यादिश्रुतौलिंगबाधोनदृश्यतेतत्कथतन्निवृत्तिरितिचेत्स्थानत्रयबाधेलिंगबाधोर्थसिद्ध. ॥ स्थूलसूक्ष्मभूतेंद्रियादिष्वेवलिंगस्यप्रतिष्ठित
त्वादितिदर्शयति ॥ भूतेंद्रियेति ॥ २५॥ नन्वज्ञानकथप्रतिष्ठातत्राह ॥ लिंगमिति ॥ शुद्धेब्रह्मण्यज्ञानावरणेनाव्याकृतेहिसतिसूक्ष्मभूतद्वारालिंगमुत्पद्यतेनाज्ञानविनेतितदेवलि
गस्यमूलप्रतिष्ठेतितन्निवृत्तौलिंगनिगडभंगसिद्धिरितिभावः ॥ एववाल्मीकिनाप्रणवार्थप्रपचनोपायेनप्रतिबोधितःप्रबुद्धोभरद्वाजःस्वानुभवंगुर्वनुभवसंवादेनपरीक्षणायप्रकट
यन्नुवाच ॥ इदानीमित्यादिना ॥ २६ ॥ २७॥ चिदहनतुचिच्छक्तिमान् ॥ कीदृशादभेदात्परमात्मासितत्राह ॥ घटाभावेइति ॥ घटभंगेसतीत्यर्थ ॥ यथाएकस्यैवघटस्यघट
कलशनामभेदकल्पनातदुपहितेआकाशेचघटाकाशःकलशाकाशइतिव्यपदेशभेदकल्पनातद्वदेकस्यैवाज्ञानस्यजगन्नामभेदकल्पनातदुपहितेचमयिजीवईश्वरोदेवोनर कुज

ध्यायेत्तत्राप्नयेलिंगंप्रविलाप्यपरंविशेत् ॥ भूतेंद्रियमनोबुद्धिवासनाकर्मवायवः ॥ २५ ॥ अज्ञानंचप्रतिष्ठाःस्युर्लिंगमव्याकृतेसति ॥
भरद्वाजउवाच ॥ ॥ इदानींलिंगनिगडान्मुक्तोहंसर्वथायतः ॥ २६ ॥ चिदंशत्वात्प्रविष्टोहंचैतन्यानंदसागरे ॥ अभेदात्परमात्मास्मिस
र्वोपाधिविवर्जितः ॥ २७ ॥ कूटस्थःकेवलोव्यापीचिदचिच्छक्तिमानहम् ॥ घटाभावेघटाकाशकलशाकाशयोर्यथा ॥ २८ ॥ तमाहुः
श्रुतयोवक्ष्यएवमेवैक्यमादरात् ॥ यथाग्निरग्नौसंक्षिप्तःसमानत्वमनुव्रजेत् ॥ २९ ॥ तदाख्यस्तन्मयोभूत्वागृह्यतेनविशेषतः ॥ यथातृ
णादिकंक्षिप्तंरुमायांलवणंभवेत् ॥ ३० ॥ अचेतनंजगन्न्यस्तंचैतन्येचेतनीभवेत् ॥ यथावैलवणग्रंथिःसमुद्रेसैंधवोयथा ॥ ३१ ॥ ना
मरूपाद्विनिर्मुक्तःप्रविश्यैतिसमुद्रताम् ॥ यथाजलेजलंन्यस्तंक्षीरेक्षीरंघृतेघृतम् ॥ ३२ ॥ अविनष्टाभवंत्येतेगृह्यंतेनविशेषतः ॥ तथा
हंसर्वभावेनप्रविष्टश्चेतनेसति ॥ ३३ ॥ नित्यानंदेसमस्तज्ञेपरेपरमकारणे ॥ नित्यंसर्वगतंशांतंनिरवद्यंनिरंजनम् ॥ ३४ ॥

रइत्यादिव्यपदेशभेदेकल्पनाचासीत् तत्रैकेनघटभंगेनयथाउभयनिवृत्त्याशुद्धाकाशलक्षणैक्यतद्वदेकस्याज्ञानस्यनिवृत्त्यासर्वनामादिभेदनिवृत्त्याचिदैक्यसाम्राज्यमित्यर्थः
॥ २८ ॥ एवमैक्यमभिप्रेत्यतत्रब्रह्मभूतमायत्रनान्यत्पश्यतिनान्यच्छृणोतिनान्यद्विजानातिसभूमायत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकपश्येत्एकात्मप्रत्ययसारंशिवंशांतमद्वैतच
तुर्थमन्यते नेहनानास्तिकिंचनेत्यादयोवक्ष्य.श्रुतयआहुरित्यर्थः ॥ एवंयथाजलेजलक्षिप्तंक्षीरेक्षीरंघृतेघृतम् ॥ अविशेषोभवेत्तद्वज्जीवात्मापरमात्मनीत्यादिश्रुतिभिरी
दृशमैवैक्यदर्शितमित्याशयेनोदाहरति ॥ यथेति ॥ समानत्वमैक्यम् ॥ २९ ॥ एवमचेतनप्रपचस्यापिचितिविलापनेनतद्भावापत्तौदृष्टांतमाह ॥ यथेति ॥ ३० ॥ न्यस्तप्रवि
लापितम् ॥ ३१ ॥ ३२ ॥ उपाधिनाशेउपहितजीवविनाशशकापिमेगतेत्याशयेनाह ॥ अविनष्टाइति ॥ चेतनेचिदेकरसेसतिब्रह्मणि ॥ ३३ ॥ निष्कलनिष्क्रियशांतनिरवद्यं
निरजनमित्यादिश्रुत्यापिस्वानुभवसवादयति ॥ नित्यमित्यादिना ॥ ३४॥

॥ १७ ॥ सत्यसकल्पसकल्पमात्रेणासतोपिजगतःसत्तासंपादकसमयसद्रूपम् ॥ ३६ ॥ सत्वादिभिर्मायागुणैर्वर्जितम् ॥ ३७ ॥ अभ्यासकालेपिस्वयाअर्थ्येवध्यानमप्यनु प्रविष्टमित्यारायनाह ॥ प्रविष्टमित्यादिना ॥ स्वकर्मकृत्सश्रवणगुरुशुश्रूषादिपर स्ववर्णाश्रमधर्मनिष्ठश्च ॥ ३८ ॥ ३९ ॥ कथंप्रतिपद्यतेतदाह ॥ नमत्तइति ॥ ४० ॥ प्रतिप त्तिप्रकार्यमाह ॥ इत्यात्मेति ॥ एवंभरद्वाजोक्तमनुभवनिशम्यसंतुष्टोवाल्मीकिस्तदुक्तानुभवस्थैर्यायस्यजतैषहितश्रयत्यकुःभत्यस्परपदमित्यादिश्रुतिसिद्धसंन्यासमवश्य कर्तव्यतयोपदिशति ॥ सर्वेदृति ॥ ४१ ॥ संसारचक्रावर्तेपुनमतीतिभ्रमस्तत्यविरामविश्रांतिस्तुसंगार्हस्थ्येनेन्यसेनप्राप्नोपितांईकर्मार्थिसंन्यस्यब्रह्मणःप्रणयीब्रह्मण्येवनिधि क्षेपमासक्तोभव ॥ ब्रह्मसंस्थोमृतत्वमेतीतिश्रुतेरनन्यव्यापारतयाब्रह्मण्यासक्तस्यसंन्यासिनएवसर्वाश्रमार्थांतिशांतिसंभवादित्यर्थ ॥ सर्वसमयसांगमितियावत् ॥ ४२ ॥ नवि छवनेनचिरस्यास्यति ॥ तस्यतावदेवचिरयावन्नविमोक्ष्येअथसंपत्स्येइतिश्रुतेरितिभाव ॥ ज्ञानिनोजीवन्मुक्तस्यकर्मकर्तव्यनवेतिप्रथमःप्रश्न यदाकर्तव्यंतदाभवत्तिरूपनि

निष्कलंनिष्क्रियंशुद्धंतद्ब्रह्मास्मिपरंपरम् ॥ हेयोपादेयनिर्मुक्तंसत्यरूपंनिरिंद्रियम् ॥ ३५ ॥ केवलंसत्यसंकल्पंशुद्धंब्रह्मास्म्यहंपरम् ॥ पुण्य पापविनिर्मुक्तंकारणंजगतःपरम् ॥ ३६ ॥ अद्वितीयंपरंज्योतिर्ब्रह्मास्म्यानंदमव्ययम् ॥ एवमादिगुणैर्युक्तंसत्वादिगुणवर्जितम् ॥ ३७ ॥ प्रविश्यसकलंब्रह्मसदाध्यायेत्स्वकर्मकृत् ॥ एवमभ्यसतःपुंसोमनोऽस्तंयातितत्त्ववै ॥ ३८ ॥ मनस्यस्तंगतेतस्यस्वयमात्माप्रकाशते ॥ प्रका शेसर्वदुःखानांहानिःस्यात्सुखमात्मनि ॥ ३९ ॥ स्वयमेवात्मनात्मानमानंदंप्रतिपद्यते ॥ नमत्तोस्त्यपरःकश्चिच्चिदानंदमयःप्रभुः ॥ ४० ॥ अहमेकःपरंब्रह्मइत्यात्मातःप्रकाशते ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ सर्वेसंन्यस्यकर्माणिब्रह्मणःप्रणयीभव ॥ ४१ ॥ नेप्स्यसेयदिसंसार चक्रावर्तभ्रमःशमम् ॥ ॥ भरद्वाजउवाच ॥ ॥ त्वयोक्तंसर्वमेवेदंज्ञातंबुद्धंमयागुरो ॥ ४२ ॥ बुद्धिश्चनिर्मलाजातासंसारोनविलयते ॥ इदानींज्ञातुमिच्छामिज्ञानिनःकर्मकीदृशम् ॥ ४३ ॥

त्यंनमित्तिककाम्यकर्मसर्वमेवयथापूर्वंकर्तव्यमयथाकामनाभ्यानिवृत्तत्वात्तस्वाश्रमोचितकर्ममात्रंकर्तव्यमितिद्वितीयप्रश्न पाठक्रमादार्थक्रमस्यबलीयस्त्वाद्बोध्य ॥ ननुसर्वेसं न्यस्यकर्माणिब्रह्मणःप्रणयीभवेतिसर्वकर्मसंन्यासंश्रुतवताभरद्वाजस्यद्वावपिप्रश्नावनुपपन्नौ सत्यम् तथापियावज्जीवमग्निहोत्रंजुहोति कुर्वन्नेवेहकर्माणिजिजीविषेच्छतंस मादित्यादिश्रुतिभिर्यावज्जीवंकर्तव्यतयानिबद्धानांदीक्षितोनददातिनजुहोतीत्यादिविधायभिर्दीक्षाकालेत्यक्तानामपिदीक्षापगमेपुनःपरिग्रहवत् स्वजनैषहितस्त्रोय एतमेवप्रव्राजि नोलोकमिच्छन्तःप्रव्रजंति इत्यादिश्रुतिभिर्ब्रह्मजिज्ञासानिमित्तेनत्यक्तानांज्ञानसिद्ध्यानिमित्तापगमेपुनःपरिग्रहोन्यायसिद्ध ॥ नचविविदिषासंन्यासविधानात्पुनरपरिग्रह ॥ त स्यजन्मांतरानुष्ठितविविदिषासंन्यासवशाद्इहस्याप्याश्रमेष्वेवतत्त्वज्ञानोदयेनकृतार्थानांपुरुषविशेषाणांप्रतिअप्राप्तसंन्यासांतरविधानपरस्यप्रागर्थविविदिषासंन्यासपरिपालनवि धानाशक्तेरित्याशयेनप्रश्नावुपपन्नौबोध्यौ ॥ ४३ ॥

तदुत्तरंतस्यकर्मकीदृशमितित्वत्प्रश्नो
एवपृष्टोवाल्मीकिस्त्वयाप्रथमंकाम्यनिषिद्धकर्मणाज्ञानविरोधिविक्षेपादिदोषहेतुभूतकर्मणांचत्यागेनज्ञानिर्त्वंशास्त्राभ्यासेनसपादनीय  तदुत्तरंतस्यकर्मकीदृशमितित्वत्प्रश्नो
त्तरत्वस्वयमेवज्ञास्यसितत्तद्भूमिकापरिपाकक्रमेणतत्तत्कर्मोपरमस्यतदातदैवत्वयानुभवितुशक्यत्वाज्ज्ञानिनाचप्रारब्धवैचित्र्येणैकरूपस्थित्यदर्शनेनतत्कर्मणाप्रवृत्तमेवनिवृत्त
मेववेतिनियतुमशक्यत्वादित्याशयेनोत्तरमाह ॥ तस्मादिति ॥ तस्मात्सर्वकर्मसन्याससहितब्रह्मप्रणयित्वमेवससारभ्रमनिवर्त्तकज्ञानोपायइतिमदुपदिष्टार्थस्यबुद्ध्वात्वादृशै
मुमुक्षुभिर्यद्यस्मिन्कर्मणिकृतेसतिश्रवणादिविघ्नदोषश्चित्तविक्षेपमालिन्यपातकादिदोषश्चनभवतितदेवकर्तव्य काम्यनिषिद्धचकाराद्दृष्टविक्षेपसाधनचकर्मनकर्त्तव्यमित्यर्थ.॥
विविदिषासन्यासपरिपालनतुविधिनात्यक्तस्यपुनर्विधिविनापरिग्रहासभवादारूढोनैष्ठिकधर्मयस्तुप्रच्यवतेपुनः  प्रायश्चित्तनपश्यामियेनशुद्ध्येत्सआत्महत्यादिपरावृत्तौदोषश्च

॥श्रीवाल्मीकिरुवाच॥ ॥तस्माद्यन्नकृतेदोषस्तत्कर्तव्यंमुमुक्षुभिः॥ ४४ ॥ काम्यंकर्मनिपि
प्रवृत्तंवानिवृत्तंवाकर्त्तव्यंचनवाप्रभो ॥ ॥श्रीवाल्मीकिरुवाच॥ ॥तस्माद्यन्नकृतेदोषस्तत्कर्तव्यंमुमुक्षुभिः॥ ४४ ॥ काम्यंकर्मनिपि
द्धंचनकर्तव्यंविशेषतः॥ यदाब्रह्मगुणैर्जीवोयुक्तस्त्यक्तमनोगुणान् ॥ ४५ ॥ संशांतकरणग्रामस्तदास्यात्सर्वगःप्रभुः॥ देहेंद्रियमनो
बुद्धेःपरस्तस्माच्चयःपरः॥ ४६ ॥ सोहमस्मियदाध्यायेत्तदाजीवोविमुच्यते॥ कर्त्तृभोक्त्रादिनिर्मुक्तःसर्वोपाधिविवर्जितः ॥ ४७ ॥ सुख
दुःखविनिर्मुक्तस्तदानींविप्रमुच्यते ॥ सर्वभूतेषुचात्मानंसर्वभूतानिचात्मनि ॥ ४८ ॥ यदापश्यत्यभेदेनतदाजीवोविमुच्यते ॥ जाग्रत्स्व
प्नसुषुप्ताख्यंहित्वास्थानत्रयंयदा॥ ४९ ॥ विशेत्तुरीयमानंदंतदाजीवोविमुच्यते ॥ जीवस्यचतुरीयाख्यास्थितिर्यापरमात्मनि ॥ ५० ॥
अवस्थाबीजनिद्रादिनिर्मुक्ताचित्सुखात्मिका॥ योगस्यसेयंवानिष्ठासुखंसंवेदनंमहत्॥ ५१ ॥ मनस्यस्तंगतेपुंसांतदन्यन्नोपलभ्यते ॥
प्रशांतामृतकल्लोलेकेवलामृतवारिधौ॥ ५२ ॥

वणात्पुनःपरिग्रहेप्रयोजनाभावाच्छिष्टविगर्हितत्वाच्चसेत्स्यतीतिभावः ॥ ४४ ॥ ज्ञानित्वंत्वस्यसर्वमनोगुणत्यागेनपूर्णानंदाद्वयविशुद्धासंगचिदेकरसत्वादिब्रह्मगुणग्रामावे
वस्यान्नान्यथेत्याह ॥ यदेत्यादिना ॥ ४५ ॥ देहादिकोशचतुष्टयात्परआनंदमयकोशात्मातस्मात्परस्तदधिष्ठानब्रह्म ॥ ४६ ॥ आदिपदात्कर्ताकार्यकरणभोक्ताभोग्यभोगो
ज्ञाताज्ञानंज्ञेयमितितिस्रोपित्रिपुट्यःपरिगृह्यते ॥ तत्प्रयोजकैःसर्वैर्देहाद्युपाधिभिस्तत्फलाभ्यांसुखदुःखाभ्यांचविनिर्मुक्तोयदाभविष्यसितदानीम् ॥ ४७ ॥ ४८ ॥ ४९ ॥
॥ ५० ॥ जाग्रत्स्वप्नावस्थयोर्बीजसवासनाकर्मोज्ञानम्॥ निद्रातदवस्थाविशेषः॥ सेयंतुर्याख्याजीवस्यस्थितिर्योगस्यनिदिध्यासनपरिपाकजन्यनिर्विकल्पसमाधेर्वाशब्दान्मु
ख्याधिकारिणोविचारमात्रजन्यसाक्षात्कारज्ञानस्यवानिष्ठापरिसमाप्तिः ॥ ५१ ॥ तस्मिन्विश्रांतस्यतवद्वैतदर्शनप्रसक्तिरेवनास्तिदूरेकर्मक्षाराब्धिवीचिमज्जनप्रसक्तिरित्याश
येनाह ॥ प्रशांतेति ॥ ५२ ॥

मागृत मीश्वरमुपास्यतयसावनतेव सिष्ठोक्त ज्ञानमार्गेणयोगमार्गेण वातत्त्वज्ञानेसत्येकनिष्ठानेनसर्वविज्ञानात्सर्वसंशयमूलाज्ञाननाशात्सर्वसंशयोच्छेदेन विश्रांतिर्भविष्यतीत्युप
सहरति ॥ मज्जत्यादिना ॥ ५३ ॥ ५४ ॥ तमशास्त्राचार्योपदेशस्त्वानुभवानामेकार्थनिष्ठतानिश्चयायार्थचिंतनात्तत्तिलक्षण-परामर्श शब्दघोषणात्तत्तिलक्षणोभ्यासश्चाव
श्यकायइत्याह ॥ परामर्शेनेति ॥ ५५ ॥ ५६ ॥ योगमुपाधित्यागेनैक्यम ॥ स्वात्मनाशोधितमतीचा ॥ आत्मनिब्रह्मणि ॥ ५७ ॥ ५८ ॥ महात्मनाअपरिच्छिन्नब्रह्माकार
चित्तारामः ॥ ५९ ॥ अनुपदृष्टिमाथमयुक्त नत्रागुरुशक्तिपातनत्वयाशिष्यस्यब्रह्मीकरणात्स्वस्यगुरुत्वशिष्योद्धारसामर्थ्यलक्षणतत्क्षणात्वयएवदर्शितमस्माभ्यमित्यथ

मज्जमज्जसिकिंहनब्रह्मत्पाराब्धिवीचिषु ॥ भजसभरिताभोगपरमेशजगद्गुरुम् ॥ ५३ ॥ इतितेवर्णितसर्वंवसिष्ठस्योपदेशनम् ॥ अने
नज्ञानमार्गेणयोगमार्गेणपुत्रक ॥५४॥ भरद्वाजमहाप्राज्ञमर्वज्ञास्यमितिनिश्चितम् ॥ परामर्शेनशास्त्रस्यगुरुवाक्यायबोधनात् ॥५५॥
अभ्यासात्मवसिद्धि स्यादितिवेदानुशासनम् ॥ तस्मात्त्वसर्वमुत्सृज्यकुर्वंभ्यासेस्थिरमन ॥५६॥ ॥भरद्वाजउवाच॥ ॥राम प्राप्त
परंयोगस्वात्मनात्मनिहंमुने ॥ कथंवसिष्ठदेवेनव्यवहारपर कृत ॥५७॥ इतिज्ञात्वाहमप्येवमभ्यासार्थयतेयथा ॥ तथैवव्यवहारोपि
ध्युत्थानेमेत्तविष्यति ॥५८॥ ॥श्रीवाल्मीकिरुवाच॥ ॥यदापरिणत साधु स्वस्वरूपेमहात्मना ॥ विश्वामित्रस्तदोवाचवसिष्ठंमपि
सत्तमम् ॥५९॥ ॥श्रीविश्वामित्रउवाच॥ ॥हेवसिष्ठमहाभागब्रह्मपुत्रमहानसि ॥ गुरुत्वशक्तिपातेनतत्क्षणादवदर्शितम् ॥६०॥
दर्शनात्स्पर्शनाच्छब्दात्कृपयाशिष्यदेहके ॥ जनयेद्य समावेशशांभवंसहिदेशिक ॥६१॥ रामेप्ययविशुद्धात्माविरक्त स्वात्मनैवहि ॥
विश्रांतिमानाकांक्षेचमवादामवाप्यदम् ॥६२॥ शिष्यप्रज्ञैवबोधस्यकारणगुरुवाक्यत ॥ मलत्रयमपक्वंचेत्कथंयुध्यतिपक्ववत्
॥६३॥ ज्ञानप्रत्यक्षमेवेदंगुरुशिष्यप्रयोजनम् ॥ उभावपियतोयोग्यौसर्वपामीदृशामपि ॥६४॥

॥ ६० ॥ मनुमयास्वशरीरत्यक्त्वारामदेहमविश्यकुंडलिनींसंचारादिकनकृतमेवतत्कथंत्वयाशक्तिपातोदर्शितस्तमाह ॥ दर्शनादिति ॥ सत्यसंकल्पात्वाद्गुरोस्तत्पादस्यापिस
च्छिष्यस्यकुंडलिन्या-षट्चक्रभेदनब्रह्मरंध्रस्थितपरशिवसमावेशलक्षणोजीवस्योपाधिपरित्यागेनशुद्धब्रह्मसमावेशलक्षणश्चशक्तिपात सिध्यतीतिभाव ॥ देशिकोगुरु ॥६१॥
तथारामस्यसच्छिष्यतांदर्शयति ॥ रामइति ॥ ६२ ॥ मलत्रयमविद्यास्वप्रसिद्धमाणवादिकामकर्मवासनालक्षणमा ॥ कथंयुध्यतिशिष्यइतिशेष ॥ ६३ ॥ सच्छिष्येपुशास्त्र
स्यदृष्टफलत्वमित्याह ॥ ज्ञानमिति ॥ यतउभौगुरुशिष्यौयोग्यौयत्सर्वेषांपुरुषाणामीदृशांकिवल्यलक्षणानामपिभाजनत्वमित्यर्थ ॥ ६४ ॥

इत्थवसिष्ठप्रशस्यप्रस्तुतकर्त्तव्यमाह ॥ इदानीमिति ॥ अस्मदादिपुकृपया ॥ त्वपदेपरिणत कृतकृत्यइतियावत् ॥ ६५ ॥ ममकार्यनिर्विघ्नयज्ञसिद्धित्वस्मरन्सनूरामव्युत्थानंक र्त्तुमर्हसीतिपूर्वेणान्वयथामाकुथाइत्युत्तरत्रवासवध ॥ ६६ ॥ किचान्यद्देवकार्यमपिरामव्युत्थापनेनचरामसपादयामोवयम् ॥६७॥ कार्यांतराण्यपिदर्शयन्देवकार्यविशदयति ॥ सिद्धाश्रमेत्यादिना ॥ अहल्यायामुक्तिशापमोक्षचकरिष्यतीत्यनुषंग. ॥६८॥ निश्चयोवाग्निश्चय ॥ गतिपरलोकमार्गम् ॥६९॥ राज्यविमुच्यगतोविगत.॥ जीवन्मुक्तत्वादेवा भयोनिस्पृहश्च ॥ दडकारण्यवासिनोमुनीनूराक्षसवधेनभयादुद्धरिष्यतीतिपरेणान्वय. ॥७०॥ विविधानितीर्थानिप्राणिनश्चउद्धरिष्यतिपावयिष्यतीत्यर्थ. ॥ सीताहरणप्रयुक्त यद्दौर्गत्यशोकमोहादिविडबनतच्छलेनरावणादीनाववादपिसर्वैपास्त्रीसगिनाभुविशोच्यतामस्वास्थ्यचदर्शयिष्यतीतिपरेणान्वयः ॥७१॥ अथइंद्रवरदानेनयुद्धेमृतस्यवानरक्षा देःपरावृत्तिपरावर्त्तनपुन'मजीवनदर्शयिष्यति ॥७२॥ अग्निप्रवेशेनसीताविशुद्धिमन्विच्छन्सन्नात्मन.स्वस्यलोकानुमतिशिष्टजनमाननीयचरित्रतांदर्शयिष्यति॥ततोराज्येभिषि

इदानींकृपयारामव्युत्थानंकर्त्तुमर्हसि॥ पदेपरिणतस्त्वंहिकार्याविशावयंयतः॥६५॥ स्मरन्कार्यंममविभोयदुद्दिश्याहमागतः॥ प्रार्थि तश्चातिकृष्टेनराजादशरथःस्वयम्॥ ६६ ॥ तद्वृथामाकृथाःसर्वंशुद्धेनमनसामुने॥ देवकार्यंचरामान्यदवतारप्रयोजनम्॥६७॥सिद्धा श्रमंमयानीतोरामोराक्षसमर्दनम्॥ करिष्यतिततोहल्यामुक्तिंचजनकात्मजाम्॥६८॥परिणेष्यतिकोदंडभंगेनकृतनिश्चयः॥ रामस्य जामदग्न्यस्यकर्तानष्टांगतिंध्रुवम्॥६९॥पितृपैतामहंराज्यंविगतोभयनिस्पृहः॥ वनवासच्छलेनेहदंडकारण्यवासिनः॥७०॥उद्धरिष्य तितीर्थानिप्राणिनोविविधानिहि॥ सीताहरणदौर्गत्यच्छलेनभुविशोच्यताम्॥७१॥ दर्शयिष्यतिसर्वेषांरावणादिवधादपि॥ स्त्रीसंगि नामथास्वास्थ्यंवानरादेःपरावृतिम्॥ ७२ ॥ सीताविशुद्धिमन्विच्छँल्लोकानुमतिमात्मनः॥ जीवन्मुक्तोनिस्पृहोपिक्रियाकांडपरायणः ॥७३॥ भविष्यतिगतिंद्रष्टुंज्ञानकर्मसमुच्चयौ॥यैर्दृष्टोयैःस्मृतोवापियैःश्रुतोबोधितस्तुयैः॥७४॥सर्वावस्थागतानांतुजीवन्मुक्तिप्रदास्य ति॥इतिकार्यमशेषेणत्रैलोक्यस्यममापिहि॥७५॥अनेनरामचंद्रेणपुरुषेणमहात्मना॥नमोस्मैजितमेवैतकोप्येवंचिरमेधताम्॥७६॥

क्त.स्वयजीवन्मुक्तोनिस्पृहोपिसन्कर्माधिकृतजनानाकर्मानुष्ठानेनैवगतिद्रष्टुदर्शयितुक्रियाकाडपरायणोभविष्यतीतिपरेणान्वयः ॥ ७३ ॥ ज्ञानकर्मसमुच्चयाधिकारिणांब्रह्म लोकादिगतिदर्शयितुज्ञानकर्मसमुच्चयौचकरिष्यतीतिशेष. ॥ ज्ञानमत्रोपासनम ॥ नकेवलकर्ममार्गप्रवर्तनेनवर्त्तमानजनमात्रोपकारीकिन्तूत्तरकालमपिस्मरणकीर्त्तनस्वचरि त्रप्रबोधनादिनास्वानुगतानाभक्तानाजीवन्मुक्तिसुखप्रदइत्याह ॥ यैरिति ॥ ७४ ॥ सर्वावस्थासुगतानांभक्त्याअनुगतानाम ॥ ७५॥ अनेनमहात्मनारामचद्रेणइतिवर्णितप्रका रेणत्रैलोक्यस्यममापिहितकार्यमितिपूर्वेणान्वय ॥ इदानींश्रीविश्वामित्र सामाजिकानारामभक्तिवर्धयन्नाह ॥ नमइति ॥ हेजनाःएतेयूयमस्मैरामायनमस्कुरुत ॥ तन्नम स्कारमात्रेणभवद्भिःसर्वजेतव्यजितमेवनसाधनांतरमपेक्षणीयमित्यर्थ. ॥ युष्माकंमध्येकोपिपुरुषधौरेयएवंश्रीरामइवजीवन्मुक्तश्चिरनिर्विकल्पसमाधिविश्रांतिप्राप्त. ॥ सु खमेधतावर्धताम ॥ ७६ ॥

॥७७॥ दूराद्बुद्धमायुताउत्तरचरितमद्भुतरामकथायैस्तथाविधा.अतोरामांघ्रिपद्मरजसामादरेणनमस्कारेदतियावत् ॥ सदारामस्मरणेचआस्थिताआस्थावतोवभूवुरितिशेष ॥ वसिष्ठादिमैथिलांपत कथयामृतयानसन्तुतोपनष्टमोवभूव ॥ ७८ ॥ एममन्येमहर्षयश्चनसन्तुतु ॥ भूयःश्रोतुमुत्कंठिता.सर्वेवभूवुरित्यर्थ ॥ अतएवतेतस्यगुणाम्परोक्ताना कर्णयन्तस्तयमृतपान्याम्नतिभुवन्भुवन् ॥ लब्धक्षावश्छांदस ॥ ७९ ॥ भूहिमोकुजनमतिब्यक्तवत् ॥ अयरामाजन्मनःप्रासोऽभूत् किवाबुधोरेष अथवामनुष्यइत्यज्ञ माभिप्रायानुसारीप्रश्न ॥ ८० ॥ विश्वामित्रोप्यन्तुशनानुसारेणोत्तरमाह ॥ अयमेति ॥ हजनत्वमभासिश्रीरामएवसाक्षाद्भगवान्सुवेदतिविश्वासकुरु सपुराण.पर पुरुष ॥

॥श्रीवाल्मीकिरुवाच॥ ॥इतिश्रुत्वाचतेसर्वेविश्वामित्रेणभाषितम् ॥ सिद्धाश्चवरयोगींद्रावसिष्ठप्रमुखा पुन ॥ ७७॥ रामांघ्रिपद्मर जसामादरस्मरणस्थिता ॥ दूरश्रुतोत्तरकथा कथयामैथिलीपते ॥ ७८ ॥ नसन्तुतोपभगवान्वसिष्ठोन्यमहर्षय ॥ गुणान्गुणनिधेस्त स्यब्रुवन्नाकर्णयन्स्तुतम् ॥७९॥ विश्वामित्रमुनिंप्राहवसिष्ठोभगवानपि ॥ ॥श्रीवसिष्ठउवाच॥ ॥ब्रूहिविश्वामित्रमुनेरामोराजीव लोचन ॥ कोयमभूद्बुध किंवामनुष्योवायराघव ॥८०॥ ॥श्रीविश्वामित्रउवाच॥ ॥ अत्रैवकुरुविश्वासमयसपुरुष पर ॥ विश्वा यमथिताम्भोधिर्गीरागमगोचर ॥८१॥ परिपूर्णपरानद सम श्रीवत्सलांछन ॥ सर्वेषांप्राणिनांराम प्रदातासुप्रसादित ॥८२॥अय निहतिकुपित सृजत्ययमसत्सकान् ॥ विश्वादिर्विश्वजनकोधातासत्तामहासख ॥८३॥अयम्मुक्तांतनि सारन्कुससारधूर्त्तकै ॥ आन दसिंधुर्वितितोवीतरागैर्विगाह्यते॥८४॥ कश्चिन्मुक्तइवात्मस्य कश्चित्तुर्यपदाभिध ॥ कश्चित्प्रणीतप्रकृति कश्चित्तस्य पुमानयम्॥८५॥ अयंत्रयीमयोदेवस्त्रैगुण्यगहनातिग ॥ जयत्यगैरयपक्षिर्वेदात्मापुरुषाद्भुत ॥८६॥ अयंचतुर्बाहुरयविश्वस्रष्टाचतुर्मुख ॥ अयमेवम हादेव संहर्त्ताचत्रिलोचन ॥८७॥

सक ॥ विश्वार्थमथितोऽम्भोधि.क्षीरार्णवायनस ॥ मगीरागांगूढार्थयानामागमानामुपनिषदांतस्यगोचरोनान्यप्रमाणस्येत्यर्थ ॥ ८१ ॥ प्रदातासर्वपुरुषार्थानामितिशेष ॥ सुप्रसन्नस्यामसादित ॥ ८२ ॥ असत्समाःकार्यनेकीर्तिनइत्येसत्सकामिथ्यार्थासतान् ॥ ८३ ॥ व्यक्तांतानिविचारबाधितानि सारामदर्वश्चससारा कार्यकारण्यधार्यैस्तथाविधै धूर्तकर्मगहनैर्वीतरागैयन्निभिरानदसिंधुर्विमासनमविस्यते ॥ ८४ ॥ अयमेवज्ञानमुक्तोनित्यमुक्तोमायानियतामायांतर्वज्ञश्चतिचतुर्धास्थितइत्याह ॥ कश्चिदिति ॥ ८५ ॥ त्रयीमयोवेदशरीर ॥ अंगै शिक्षाकल्पादिभि ॥ वेदानामात्मापारमार्थिकस्वरूपभूत ॥ ८६ ॥ चतुर्बाहु पालकोविष्णु ॥ ८७ ॥

१ अयमयामश्छांदस पृषाद्यरादित्वा

योगान्मायाशक्तिसंबंधात् ॥ मोहनिद्रानाश्नत्वात्सदाजागरूक ॥ ८८ ॥ यथाविक्रमेणपराक्रमेणावश्यभावीविजयउन्नतेप्राप्यते तेजसायथाप्रकाशोभास्वररूपंउन्नतेधि
यते यथाश्रुतेनशास्त्रेणप्रज्ञोत्कर्षउन्नतेप्राप्यते तद्वदयसुपर्णेनगरुडेनेत्यर्थः ॥ ८९ ॥ अमुनारामेणयश्चित्तेनममायप्रतियोद्धेतिचिंत्यश्चितनार्हःसपन्न ॥ ९० ॥ विष्णुदेहेनामु
नाशून्यंस्वर्गंहास्वर्गस्यशोच्यतेत्यर्थ ॥ अभितःपरितःसमयानिकषाहाप्रतियोगेपीतिषष्ठ्यर्थेद्वितीया ॥ एवशेषमूर्तिरयपातालाल्लक्ष्मणात्मनाइहागतः ॥ तथाचपातालस्या
विशोच्यतेत्यर्थः ॥ ९१ ॥ ९२ ॥ रूपयितुंनिरूपयितुंद्रष्टुंच ॥ ९३॥ वंशेऽवतारेणरघुरप्यनेनपावितइत्याह ॥ रघोरिति ॥ शुश्रुमइतिक्रादिनियमान्नेट्लिटिमसोमादेशाभा

अजोयंजायतेयोगाज्जागरूकःसदामहान् ॥ बिभर्तिभगवानेतद्विरूपोविश्वरूपवान् ॥ ८८ ॥ विजयोविक्रमेणेवप्रकाशइवतेजसा ॥
प्रज्ञोत्कर्षःश्रुतेनेवसुपर्णेनायमुह्यते ॥ ८९॥ अयंदशरथोधन्यःसुतोयस्यपरःपुमान् ॥ धन्यःसदशकंठोपिचिंत्यश्चित्तेनयोमुना ॥ ९० ॥
हास्वर्गममुनाशून्यंहापातालादिहागतः ॥ तस्यागमादयंलोकोमध्यमःश्रेष्ठतांगतः ॥ ९१ ॥ रामइत्यवतीर्णोयमर्णवांतःशयःपुमान् ॥
चिदानंदघनोरामःपरमात्मायमव्ययः ॥ ९२ ॥ निगृहीतेंद्रियग्रामारामंजानंतियोगिनः ॥ वयंत्ववरमेवास्यरूपंरूपयितुंक्षमाः ॥ ९३ ॥
रघोरघोच्छेदकरोभगवानितिशुश्रुमः ॥ वसिष्ठकृपयात्वंहिव्यवहारपरंकुरु ॥ ९४ ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ इत्युक्त्वावस्थितस्तूष्णीं
विश्वामित्रोमहामुनिः ॥ वसिष्ठस्तुमहातेजारामचंद्रमभाषत ॥ ९५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ रामराममहाबाहोमहापुरुषचिन्मय ॥
नायंविश्रांतिकालोहिलोकानंदकरोभव ॥ ९६ ॥ यावल्लोकपरामर्शोनिरूढोनास्तियोगिनः ॥ तावद्रूढसमाधित्वंनभवत्येवनिर्मलम्
॥ ९७ ॥ तस्माद्राज्यादिविषयान्पर्यालोक्यविनश्वरान् ॥ देवकार्यादिभारांश्चभजपुत्रसुखीभव ॥ ९८ ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥
इत्युक्तोपियदारामःकिंचिन्नोचेलयंगतः ॥ तदासुषुम्नयासोपिविवेशहृदयंशनैः ॥ ९९ ॥

वश्छांदसः ॥ ९४ ॥ ९५ ॥ ९६ ॥ अधिकारनिष्पादनलक्षणोलोकानांपरामर्शोयावन्ननिरूढोननिष्पन्नः ॥ नभवतियुक्तमितिशेषः ॥ ९७ ॥ पर्यालोक्यकंचित्कालमनुभूय
देवकार्यादीनधिकारभारांश्चपर्यालोक्यपश्चात्समाधिंभजेत्यर्थः ॥ ९८ ॥ यदारामइतिगुरुणाउक्तोपिलयंब्रह्मैक्यंगतोबाह्यार्थश्रवणाभावाद्वागादिकरणचेष्टोपरमाच्चनकिं
चिदूचेतदासवसिष्ठस्तच्छरीरसकल्पेनप्रविश्यतदीयसुषुम्नानाड्याशनैर्हृदयपुंडरीकंविवेश प्रविश्यतदीयंविलीनजीवोपाधिलिंगंघनीकृत्यबीजांतःप्रविष्टोवायुस्तदंतर्गतमंकुर
मिवबहिराचकर्षेतियावत् ॥ ९९ ॥

तस्यबहिराकर्षणेनशविभावकमेणतमपिदाभासाभिव्यक्त्यासक्तत्क्षेमप्रकाशवासार्थदर्शनादिकमाह ॥ शक्तीति ॥ प्रथमप्राणादिबीजभूतायामाधारशक्तौततःप्राणावि र्भावेतेपुनर्तोमनसआविर्भावेतस्मिंश्चप्रसक्तिश्चिदाभासप्रायेणानुप्रवेशस्तकरोतीतिशक्तिप्राणमनःप्रसक्तिकरणः अतएवतत्प्रकाशात्मकस्तदुपाधिकोजीवःप्राणद्वारासर्वनाडी रंध्रेष्वनुप्रविश्यसुषुप्ताभ्यामिंद्रियानिसर्वाणिज्ञानकर्मेंद्रियलक्षणानिकरणानियेनतथाविध सप्तनैर्नैर्मल्योन्मील्यनाशेऽकूटाद्पूज्याद्वसिष्ठमुख्याद्विदुपोदृष्ट्वास्वयंकृतकृत्य त्वान्निर्मुक्तसर्वैषणःअतएवकृत्यस्यावश्यकस्याकृत्यस्यप्रत्यवायस्यचव्यवहारस्यविचारणयागुणदोषचिंतयाआविपरात्तत्वमुक्तज्ञानोपादानादिरहित्याचरहितः सर्वान्दृश मामेतंकिंवक्ष्यतीतिसवाक्प्रतीक्ष्यस्थितइत्यर्थः ॥ १० ॥ तदनंतरमितिप्रागुक्तरामरामहाबाहोइत्यादिवसिष्ठवचनपुनस्तेनैवश्राविनमुत्सादरगुरुवाक्यमनुल्लंघ्यमितिविद्वा

शक्तिप्राणमनःप्रसक्तिकरणोजीवःप्रकाशात्मकोनाडीरंध्रसुषुप्तसर्वकरणःप्रोन्मील्यनेत्रेशनैः ॥ दृष्ट्वोत्कृष्टवसिष्ठमुख्यविदुषोनिर्मुक्तसर्वैषणः कृत्याकृत्यविचारणादिरहितः सर्वान्प्रतीक्ष्यस्थितः ॥ १०० ॥ श्रुत्वावसिष्ठवचनंगुरुवाक्यमितिस्वयम् ॥ श्रुत्वाप्रोवाचभगवान्रामचंद्रःसमाहितः ॥ १०१ ॥ ॥ श्रीरामउवाच ॥ ॥ नविधेर्ननिषेधस्यत्वत्प्रसादादयंप्रभुः ॥ तथापितववाक्यंतुकरणीयंहिसर्वदा ॥ १०२ ॥ वेदागमपुराणेषुस्मृतिष्वपिमहामुने ॥ गुरुवाक्यंविधिःप्रोक्तोनिषेधस्तद्विपर्ययः ॥ १०३ ॥ इत्युक्त्वाचरणौतस्यवसिष्ठस्यमहात्मनः ॥ शिरसाधार्यसर्वांस्तान्सर्वानाहघृणानिधिः ॥ १०४ ॥ ॥ श्रीरामउवाच ॥ ॥ सर्वेशृणुतभद्रंवोनिश्चयेनसुनिश्चितम् ॥ आत्मज्ञानात्परंनास्तिगुरोरपिचतद्विदः ॥ १०५ ॥ ॥ श्रीसिद्धादयऊचुः ॥ ॥ रामैवमेवसर्वेषांमनसिस्थितिमागतम् ॥ त्वत्प्रसादाच्चसकलसंवादनंदृढीकृतम् ॥ १०६ ॥ सुखीभवमहाराजरामचंद्रनमोस्तुते ॥ वसिष्ठेनाप्यनुज्ञातागच्छामोथयथागतम् ॥ १०७ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ एवमुक्त्वागताःसर्वेरामसज्जनेरताः ॥ रामचंद्रस्यशिरसिपौष्पीवृष्टिःपपातह ॥ १०८ ॥ एतत्तेसर्वमाख्यातंरामचंद्रकथानकम् ॥ अननक्रमयोगेनभरद्वाजसुखीभव ॥ १०९ ॥

एवम्भ्यादिसाधनामपिश्रुत्वाभगवान्सवक्ष्य स्वावतारप्रयोजनमिदइतियावत् ॥ मदभ्युपगमेनसमाहितः सम्प्रोवाचेत्यर्थ ॥ १०१ ॥ १०२ ॥ विधिरवश्यानुष्ठेयोर्थ ॥ तद्विपर्यय स्तदतिक्रमणंतुनिषेध ॥ अवश्यपरिहेयइत्यर्थ ॥ १०३ ॥ इदानींश्रीरामःपरमपुरुषार्थदानरूपस्यगुरुकृतोपकारस्यनिष्कृतिमन्यामपश्यन्स्वशिरसितच्चरणधारणव्याजेनस्वगु रवेसमर्प्यसप्रजनम्यःसर्वोत्कृष्टज्ञानमाहात्म्यंगुरुमाहात्म्यंचस्वयमत्यक्षमनुभूतविश्वासवाक्यायोपदिष्टवानित्याह ॥ इत्युक्त्वेति ॥ १०४ ॥ तद्विदआत्मविदइतिगुरुविशेषणम् ॥ तत्रात्मतत्त्वगुरूपदेशाद्वेत्तीतितद्विद शिष्यस्यगुरोःपरनास्तीतिभावः ॥ १०५ ॥ स्थितिनिश्चयम ॥ सवादेनएतद्रूपलक्षणेनत्वदुक्तिसवादेनच ॥ १०६ ॥ १०७ ॥ १०८ ॥ रामचंद्र स्यजीवन्मुक्तिविश्रांतिपर्यंतसवादकमाख्यानमानसजीवनमशान्तमितियावत् ॥ १०९ ॥

उपसंहरति ॥ इतीति ॥ वरमुनेर्वसिष्ठस्यवचनपंक्तिलक्षणयारत्नमालयाविचित्राभूषिताइतिउक्तरूपारघुपतेर्जीवन्मुक्तिसिद्धिर्यामयातुभ्यप्रोदिताप्रोक्तानिखिलानांकविकुलानायोगिनाचसेव्यरूपासापरमगुरुकटाक्षाच्छ्रवणादिनासेवितासतीमुक्तिमार्गंप्रागुक्तभूमिकाक्रमदद्दात्यारोपयतीत्यर्थः ॥ ११० ॥ विधिसवादप्रकारम् ॥ मोहमालिन्यरा

इतिरघुपतिसिद्धिःप्रोदितायामयातेवरमुनिवचनालीरत्नमालाविचित्रा॥निखिलकविकुलानांयोगिनांसेव्यरूपापरमगुरुकटाक्षान्मुक्तिमार्गंददाति॥ ११० ॥ यइमंश्रृणुयान्नित्यंविधिंरामवसिष्ठयोः॥ सर्वावस्थोपिश्रवणान्मुच्यतेब्रह्मगच्छति॥ १११ ॥ ॥इत्यार्षेवासिष्ठमहारामायणेवाल्मीकीयेदेवदूतोक्तेद्वात्रिंशत्साहस्र्यांसंहितायांबालकांडेमोक्षोपायेषुनिर्वाणप्रकरणेपूर्वार्धेरामव्युत्थानंनामअष्टाविंशत्युत्तरशततमस्सर्गः ॥ १२८ ॥ ॥ ७ ॥ ॥ निर्वाणप्रकरणपूर्वार्धसमाप्तम् ॥ ॥ ७ ॥ ॥ ७ ॥

गद्वेषमहापातकोपपातकादिसर्वदोषावस्थायुक्तोपिपुरुषःश्रवणादेवसर्वैर्दोषैर्मुच्यतेशांत्यादिगुणप्राप्तिक्रमेणब्रह्मगच्छतिप्राप्नोतिकिंपुनरधिकारीत्यर्थः ॥१११॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेपूर्वार्धेअष्टाविंशत्युत्तरशततमःसर्गः ॥ १२८ ॥ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीसर्वज्ञसरस्वतीपूज्यपादशिष्यश्रीरामचंद्रसरस्वतीपूज्यपादशिष्यश्रीगंगाधरेंद्रसरस्वत्याख्यभिक्षोःशिष्येणानंदबोधेंद्रसरस्वत्याविरचितेश्रीवासिष्ठमहारामायणतात्पर्यप्रकाशेनिर्वाणप्रकरणेपूर्वार्धंसंपूर्णम् ॥ ॥ ७ ॥

चिदात्मनिगौण्याशिलाशब्दप्रयोगनिमित्तानुगुणान्दर्शयति ॥ घनत्वेति ॥ आदिपदादभेद्यत्वैकरसत्वकूटस्थत्वादिपरिग्रहः ॥१६॥ अपिशब्दाभ्यांसूचितोविरोधोमाययापरिह र्त्तव्य ॥१७॥१८॥ जगदेवमयातत्रपद्मवनत्वेनोत्प्रेक्षितमित्याह ॥ अस्यामेवेति ॥ तच्चजगदन्यदिवभातमपिवस्तुतोनान्यत्शुद्धचिदात्मकचवानकिंतुमायैवेत्यर्थः ॥१९॥ तेषा चनिकटेसतिशखाःशतसहस्रशइतियदुक्ततत्तात्पर्यमाह ॥ शखेति ॥ लोक्यतइतिलोकचित्रलिख्यतेशिल्पिमन कल्पनयायथातथाभूतभव्यसर्वंजगत् तत्रशालभंजिकावस्तु तोयथावास्तवीवअस्तीतिपरेणान्वयः ॥ २० ॥ २१ ॥ आदत्तेस्वीकरोतितथाएषाचिदपिघनाएकिकांएकपिंडतास्वीकरोतीत्यर्थः ॥ २२ ॥ तत्स्वरूपादभिन्नोपिवपुर्मय परि च्छिन्नाकारइवभातीत्यर्थः ॥ सुषुप्तावस्थयाटकच्छेदात्प्रागनभिव्यक्तयेत्यर्थः ॥ २३ ॥ २४ ॥ सतोःशिलामरिचयोर्नोदेतिनास्तमायातितथेत्यर्थः ॥ पुरंध्र्यासुचरित्रायास्त्रि

चिच्छिलैषामयोक्तातेयस्यामंतर्जगंतिवै ॥ घनत्वैकात्मकत्वादिवशादेषाशिलैवचित् ॥१६॥ अप्यत्यंतघनांगायाःसुनीरंध्राकृतेरपि॥ विघनेंतर्जगद्वृंदंव्योम्नीवविपुलानिलः॥ १७॥ द्यौःक्ष्मावायुराकाशंपर्वताःसरितोदिशः ॥ संतितस्यांशिलायांचसुषिरंनमनागपि॥ ॥ १८ ॥ अस्यामेवघनांगात्मजगत्पद्मंविजृंभते॥ एतस्माद्वस्तुतोनान्यदन्यच्छुद्धात्मकंचवा ॥१९॥ शंखपद्मादिकंलोकंपाषाणेलिख्य तेयथा॥ भूतंभवद्भविष्यच्चशिलायांशालभंजिका॥ २० ॥ तथास्तितत्रतत्सर्वंसंस्थानंवस्तुतोयथा॥ उपलांतःसन्निवेशोनानात्माप्ये कपिंडताम्॥ २१ ॥ यथादत्तेतथैषाचित्पिंडाकारैकिकांघनाम् ॥ यथापद्मःशिलाकोशादभिन्नस्तद्वपुर्मयः ॥ २२ ॥ तथासर्गश्चितोरू पादभिन्नोपिवपुर्मयः॥ सुषुप्तावस्थयाचक्रपद्मलेखाःशिलोदरे ॥२३॥ यथास्थिताश्चितेरंतस्तथेयंजगदावली॥ शिलांतःपद्मलेखाली मरिचांतश्चमल्कृतिः॥ २४॥ नोदेतिनास्तमायातियथासर्गस्तथाचितौ ॥ यथापुरंध्र्यांमर्त्यौतर्मज्जावाबिल्वगायथा॥ २५॥ तथानंत विकाराढ्याचितौब्रह्मांडमंडली॥ विकारादितदेवेतिमुधैवोक्तिरनर्थिका ॥ २६ ॥ तत्तांसमुपयात्याशुजलंबिंदुरिवांभसि॥ अनंतत्वा च्चितेरेतद्विकारादिचितेरिति ॥२७॥ उक्त्यासंपद्यतेयच्चतल्लयेनविलीयते॥ ब्रह्मैवेदंविकारादिविकाराद्यर्थवर्जितम्॥२८॥ वर्जनावर्ज नेर्थस्यब्रह्मैवानंततावशात्॥ ब्रह्मस्थितंविकारादिब्रह्मैवोत्पादितंक्रमात् ॥ २९ ॥

यामतर्मनसिमर्त्यस्तत्कांतःसदैवास्ति ॥ २५ ॥ यदाविकारिणांब्रह्मांडानांचिन्मात्रत्वतदातद्विकारभुवनशरीरादिभेदानांचिन्मात्रत्वमर्थसिद्धमितितदुक्तिरर्थशून्यत्वान्मुधानि ष्फलैव ॥ २६ ॥ कुतोर्थशून्यातत्राह ॥ तत्तामिति ॥ यतएतद्विकारादिआशुब्रह्माद्यानांचिन्मात्रतादर्शनक्षणएवतत्तांचिन्मात्रतासमुपयातिनपृथगणुमात्रमप्यवशिष्यतइति हेतोः ॥ २७ ॥ कविवर्णितगंधर्वनगरवैचित्र्यवदुक्तिमात्रसिद्धत्वादपितस्यप्रत्येतृचिन्मात्रत्वमित्याह ॥ उक्त्येति ॥ सभूरितिव्याहरत् भुवमसृजत एतइतिवैप्रजापतिर्देवानसृज त असृग्रमितिमनुष्यानिंदवइतिपितॄन्नित्यादिश्रुत्याभुवनादिसर्गस्यनामपूर्वकत्वोक्तेरेवनामलयेनलयोप्यूह्यः॥२८॥विकाराद्यर्थवर्जनमपिनवस्त्वतरमित्याह ॥ वर्जनेति॥२९॥

पुष्पफलपर्यंतस्वकार्यंबीजवत्सर्वप्रपंचस्तत्तानुरत्नित्वशमादपिसर्वंचिदेवेत्याह ॥ बीजेत्यादिना ॥ ३० ॥ अंकुरादिपूर्वपूर्वविकारेषुभवती विद्यमानैवाथउत्तरकालफलदशारवा पत्रशारियाति ॥ ३१ ॥ द्वैतस्यैकत्वकल्पनाधीनकल्पनत्वादप्यकल्पितचिन्मात्रंतत्त्वमित्याह ॥ एकत्वमिति ॥ एतयोर्बीजतत्कार्ययो ॥ अन्यभवश्चिद्व्यतिरिक्तजात्मकल्पना तदधीनाद्भूति ॥ नन्विदृग्रूपंतुकदाचिदपिदृश्याद्वयस्वभावंनसंभवतीत्यर्थ ॥ ३२ ॥ तदेवस्फुटयन्प्रकृतेयोजयति ॥ चिदिति ॥ ३३ ॥ मज्जादिविभिल्लेख्इतिशेष ॥ ३४ ॥ एक भवइतिप्रसिद्धजगद्रूपेणदृश्यते ॥ सुघनकशिलापिवासनामात्रम ॥ ३५ ॥ ३६ ॥ जगत्कर्तृजीवेश्वरस्वरूपंतदीयकर्तृत्वादिजगच्चचितिश्चिदेव ॥ भवाभवाश्चआविर्भावतिरोभावा

अथान्यार्थमिदंविद्धिस्त्वगदण्यांभसासमम् ॥ बीजंपुष्पफलांतस्थंबीजांतनान्यदात्मकम् ॥ ३० ॥ यादृशीबीजसत्तासाभवतीयात्यथो त्तरम् ॥ चिद्घनेचिद्घनत्वयत्सएवत्रिजगत्क्रम ॥ ३१ ॥ एकत्वमेतयोर्द्वित्वमेकाभावेद्वयोःक्षति ॥ जगदन्यभवोद्भूतिर्नकदाचित्तदीदृशम् ॥ ३२ ॥ चिच्चिन्नकदाचिच्चद्वयमंनमिथोद्वयम् ॥ महाशिलांतरेभेदोलेखात्मास्तियथायदु ॥ ३३ ॥ तदन्यानन्यमज्जादिचिद्घनेत्रिजगत्त या ॥ रेखोपरेखावलितायथैकापीवरीशिला ॥ ३४ ॥ तथात्रैलोक्यवलितब्रह्मैकमितिदृश्यते ॥ एतच्छिलांतरज्जादियथानित्यसुघनकम् ॥ ३५ ॥ नात्ममेतिनचोदेतितथाहताजगद्गति ॥ यथाशिलांतर्लेखादिभियतेनशिलांतरात् ॥ ३६ ॥ तत्सारत्वाज्जगत्कर्तृकर्तृत्वादिजगच्चि ति ॥ यथाशिलांतरानानांस्पदास्पदभवाभवा ॥ ३७ ॥ विपयत्वनगच्छतिकर्त्तारोजगतस्तथा ॥ नेदंकदाचित्क्रियतेनकदाचननश्यति ॥ ३८ ॥ अद्विवद्भवोल्लासविलासावेदनात्मकम् ॥ यथायश्चयदाकारतयातत्रतदेवहि ॥ ३९ ॥ ब्रह्मसत्तात्मकंसर्वंसुघनस्यमिवस्थित म् ॥ भूरिभावविकाराढ्योयोयंजगद्गुरुभ्रम ॥ सुघनमेवतद्विद्धिशिलांतःपंकजादिवत् ॥ ४० ॥ नित्यंसुघनपदमेवजगद्विलास सम्यक् प्रशांतममचिद्घनखात्मकत्वात् ॥ पद्मा शिलांतरिवसर्गदशास्वसाराद्दष्टानदेक्षमुपयातिकदाचिदेव ॥ ४१ ॥ ॥ इ० वा० वा० दे० मोक्षो पायेपुनि पू शिलाकोशोपदेशोनामपट्चत्वारिंश सर्ग ॥ ४६ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥

॥ ३७ ॥ शिलायथातत्त्वदर्शनेविपयत्वंनगच्छतितथाआत्मतत्त्वदर्शनेपिकर्त्तारइत्यर्थ ॥ ३८ ॥ अविषद्विरिक्तस्पवविकारित्वादित्यर्थ ॥ अतएवशिलानानाशिल्पिनोविरु द्धमानघकल्पनाभेदइवब्रह्मापिनानाजीवविरुद्धकल्पनाभेदपितत्तद्रूपमेवावतिष्ठतइत्याह ॥ यथेति ॥ यदाकारकल्प्यतइतिशेष ॥ ३९ ॥ सुघनस्ययथाप्रतिजीवविविधस्वा मापकल्पनाभेदवविरोधेनसहनेनस्थितिरित्यर्थ ॥ सुगुममनुम्मिषितवासनामात्रमेव ॥ ४० ॥ आख्यायिकातात्पर्यंसंक्षिप्योपसंहरति ॥ नित्यमिति ॥ चिद्घनपद्मसत्वतदात्मक त्वात् ॥ असारात्तुच्छा शिलांतःपद्माइवसर्गादिदशाआत्मनिदृष्टाअपिकदाचिदपिदेहंस्वरूपस्थितिनापयास्येवेत्यर्थ ॥ ४१ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० पू० पट्चत्वारिंश सर्ग ॥ ४६ ॥ ॥ ५ ॥ ॥ ५ ॥

१ यत्नइतिकचित्पाठ

इहबिल्वशिलाख्यानतात्पर्यमुपवर्ण्यते ॥ मयूराडरसेबर्हवर्णसंस्थानभेदवत् ॥१॥ बिल्वदृष्टांतवशादचिद्रूपमेवतदंतर्बीजमज्जादीनामिवस्वगतभेदेननत्रतत्समसत्ताकसर्गोद्भवश्चा चित्रोक्तइतितात्पर्यभ्रमोमाभूदितितत्तात्पर्यंवर्णयति ॥ चित्तत्त्वस्येति ॥ चिद्रूपतत्त्वयावत्स्वस्वरूपप्रतिसंधानशून्यतावदेवसर्गगर्भमितिद्योतनायाचेतनफलदृष्टांतः ॥ सर्गश्चचि त प्रसिद्धस्वापादपरःस्वापःस्वप्नएवयुगवत्सरादिक्रमात्स्वसत्ताकल्पितसन्निवेशेनप्रवृत्तोनचित्समसत्ताकःस्वगतभेदइत्यर्थ ॥ १ ॥ तर्हिकिंचित्तत्त्वादन्यएवसर्ग एतदपिदुर्वचं मित्याह ॥ देशेति ॥ २ ॥ तर्हिकिमसदेवेदसर्गादितदपिदुर्वचमित्याह ॥ समस्तेति ॥ समस्तानाशब्दानातदर्थानातद्वासनानातत्प्रयुक्तसंकल्पविकल्पादिकलनानाचवेदितुरवस्था त्रयेप्येकात्मत्वात्सत्त्वेअत्यतासतस्तेनवेदनादर्शनादित्यर्थः॥३॥ तस्माच्चिदधीनप्रातिभासिकानुक्रमवैचित्र्याशयेनैवफलत्वेनोत्प्रेक्षणमित्याह ॥ फलस्येति ॥ अनानातथाना

श्रीवसिष्ठउवाच॥ ॥चित्तत्त्वस्यफलस्येवचितःस्वापापरक्रमात् ॥ससत्तासन्निवेशेनयःससर्गइतिस्थितः॥१॥ देशकालक्रियादीनाम पितन्मयरूपतः॥इदमन्यदिदंचान्यदितिनात्रोपपद्यते॥२॥समस्तशब्दशब्दार्थवासनाकलनाविदः॥एकात्मत्वादसच्चेदमितिसंकथ्यते कथम् ॥३॥ फलस्यांतःसंनिवेशोनामानुक्रमतोयथा॥ चितःस्वसत्ताघनतानानानानानास्थितातथा॥४॥ अनानैवापिनानैवक्षुब्धेवाक्षु भितैवच॥ यथाफलांतःस्वासत्ताचिदंतःसिद्धयस्तथा ॥ ५ ॥ जगन्नगरमादर्शेचितःस्वंप्रतिबिंबितम् ॥ कचतीवाकचदपिशिलांतःसंनि वेशवत् ॥ ६ ॥ परमेचिन्मणौसंतिजगत्कोटिशतान्यपि॥ चिंतामणावनंतानिफलानीवार्पितान्यलम् ॥ ७ ॥ चित्समुद्गकएवेदंतदंगो त्कीर्णमाततम् ॥ जगन्मौक्तिकमाभातितदंशमयमन्यवत् ॥ ८ ॥ अहोरात्रंविकरयन्वेदनावेदनान्यलम् ॥ चिदादित्यःस्थितोभास्वाञ्ज गद्द्रव्याणिदर्शयन् ॥ ९ ॥

नाचभूत्वास्थिता ॥ ४ ॥ तत्रानानात्वायंशएवप्राथम्याद्वास्तवइत्याह ॥ अनानैवेति ॥ क्षुब्धाविक्लनेव ॥ सिद्धय सन्निवेशनिष्पत्तयः ॥ ५ ॥ शिलाख्यानस्यतात्पर्यंदर्शय ति ॥ जगदिति ॥ शिलांतःसन्निवेशवज्जगदितियदुक्तंतस्याप्यादर्शेप्रतिबिंबितनगरमिवचित स्वस्वरूपमेवअकचदपिकचतीत्यर्थैतात्पर्यमित्यर्थः ॥ ६ ॥ मायिकानंतशक्तिम त्त्वाद्वाचिंतामणौचिंतकमनोरथफलानीवचितिसर्वंजगदस्तीतितत्तात्पर्यंवर्णनीयमित्याह ॥ परमेइति ॥ अर्पितानीतिश्रुतिषुअरनाभिनिदर्शनोपन्यासादितिभाव ॥ ७ ॥ क ल्पितविकाराशाशिभावेनमुक्ताशुक्तिसपुटकेमुक्तानामिववाचितिजगत्स्थितौतात्पर्यमित्याह ॥ चित्समुद्गकइति॥तदंगेतद्गर्भेउत्कीर्णमिवतदंगोत्कीर्णम् ॥ तदेवाह ॥ तदंशमय मिति ॥ ८ ॥ आदित्यःस्वस्वरूपाविर्भावतिरोभावात्मकमहोरात्रविभागमिवचिन्मणिशिलापिस्ववेदनावेदनात्मकजगद्द्रव्यप्रकाशनाप्रकाशनेस्वात्मनिकरोतीत्यर्थेवातत्तात्प र्यमित्याह ॥ अहोरात्रमिति ॥ विकरयन्विकलयन्विकुर्वन्नितियावत् ॥ ९ ॥

समुद्रस्यकोटरेगर्भेआवर्ततरंगादिस्पंदभेदानांसमत्वमात्मत्वंजगद्भेदानामपिचिन्मात्ररूपत्वेनातत्तात्पर्यमित्याह ॥ समुद्रेति ॥ १० ॥ वर्त्तमानसर्गस्यातीतानागतसर्गस्यचतुल्यत याचिन्मात्ररूपतामदर्शनेनात्तत्तात्पर्यमित्याह ॥ यदस्तीति ॥ शालभंजिकाउत्कीर्णाअनुत्कीर्णावाप्रतिमा ॥ ११ ॥ बिल्वाख्यानस्यापिजगतश्चित्सारत्वेतात्पर्यमित्याशये नाह ॥ भावेति ॥ यत्सत्यतत्त्वतच्चिद्रूपमज्जाकल्पमेव ॥ पदार्थश्रीर्बिल्वादिफलपदार्थश्रीर्मज्जैवसारोयस्यास्तथाविधामसिद्धेत्यर्थ ॥१२॥ शिलोदरात्पृथक्करणेपद्मनानावि शब्दायासस्यवचित पृथक्करणेजगदस्तत्वेवातत्तात्पर्यमित्याह ॥ पद्मेति ॥ १३ ॥ नवैतन्मयमद्वयमित्यंशस्फुटयति ॥ नानेति ॥ यद्विचिंतोमपृथक्क्रियतेतर्हिनानापिजगच्चि दात्मकतयाभननैवभवतियथातादृशशिलोदरमित्यर्थ ॥ १४ ॥ यथामरुमरीच्याविभ्रमदशाअमल॰यय कोशोजलराशि स्थलधियास्थलमेवेदमिति मुद्धिमता विदुषाहृ ष्यानुभानुभा मृषातपएव ॥ मृषसन्नवआतपादिरसजलादिरिवेतिसवसद्वपुयथाभातिएवचिरत्वभावस्त्वमपिभासि ॥ वस्तुतस्तुत्वंनैवसदसद्वपुरित्यर्थ ॥ १५ ॥ यथापयो

समुद्रकोटरावर्तस्पंदविलासवत् ॥ अनानैवघनानाचिच्छिलांत सन्निवेशवत् ॥१०॥ यदस्तितच्चितिशिलाशरीरेशालभंजिका ॥ यन्नास्तितच्चितिशिलाशरीरेशालभंजिका ॥११॥ भावाभावेपुयत्सत्यचिन्मज्जाकल्पमेवतत् ॥ मज्जासारापदार्थश्रीस्तन्मयस्यात्तदे वहि ॥१२॥ पद्मनानादिशब्दार्थस्यक्कायद्वच्छिलोदरम् ॥ नानातद्वदिदनानातदेतन्मयमद्वयम् ॥१३॥ नानाप्येकतयानानापद्मादिव शिलोदरम् ॥ यथातदविभागात्मतयेदंचिद्घनांतरम् ॥१४॥ यथामलपय कोश स्थलधियातुभानुभा ॥ सन्नेवासन्निवेवचिन्नेवत्वस दमद्वपु ॥ १५॥ यथासम्यक्पयोराशि कोटरेकलनोन्मुखम् ॥ द्रवत्वात्स्पंदतेऽस्पंदतयेदंचिद्घनांतरम् ॥ १६ ॥ चिच्छिलाशवपद्मौघ स्तन्मयत्वेप्यतन्मय ॥ जगद्विद्विसपद्मादिपदार्थचिच्छिलांतरम् ॥ १७॥ महाशिलाघनोप्येपचिद्घनस्यशिलोदरम् ॥ अरघ्रोनिर्द्वयो च्छोज सशांत सनिवेशवत् ॥ १८ ॥ तपतीदंजगद्ब्रह्मशरत्कालइवामलम् ॥ स्फुरतीदंजगद्ब्रह्मसौम्य सोमइवाद्भुत ॥ ॥ १९ ॥ ब्रह्मणीद सुपुप्तमनास्त्यनाराशिलान्तवत् ॥ ब्रह्मत्वंब्रह्मणियथातथैवेदंजगत्स्थितम् ॥ २० ॥

राशि कोटरमध्यद्रवत्वात्स्पंदतेतथाअस्पंदमपिचिद्घनस्यआंतरस्पंदनशक्त्येत्यर्थ ॥ १६ ॥ तर्हितत्पद्मादे शिलामयत्वमिवजागतरासपद्मादेश्चिन्मयताकुतोनविभाव्यतेतत्रा ह ॥ चिच्छिलेति ॥ अतन्मयत्वस्तबोधाद्विनिरोध ॥ अतएवत्वतथानुभ्यत्वेत्याह ॥ जगदिति ॥ १७ ॥ दृष्टांतीकृतशिलाघनोपिपरमार्थदृष्ट्याचिच्छिलोदरमेवसपन्नमित्या ह ॥ महाशिलेति ॥ अतएवतस्यशिलात्वमसद्रूपमपिरघ्रादिसद्भावमपिनास्तीत्याशयेनविशिनष्टि ॥ अरघ्रइति ॥ सन्निवेशवत्मिथ्यासन्निवेशेनभासतइत्यर्थ ॥ १८ ॥ य थाशरत्कालस्तपतिअमलद्युत.सोम स्फुरतीतिकालात्मकयोरेवसूर्यसोमयोरबांतरभेदकल्पनयाक्रियाकारकभावेनव्यपदेशस्तथाब्रह्मजगत्प्रकाशयतिजगदात्मनास्फुरतीतिव्य पदेशइत्याह ॥ तपतीति ॥ सौम्योनयनामृत ॥१९॥ एवंचब्रह्मात्मनाजगन्नित्यनष्टमित्यस्थितमितिधाउत्प्रेक्षितुशक्यमित्याशयेनाह ॥ ब्रह्मणीति ॥ वासनामात्ररूपत्वात्सु पमात्मम ॥ यथाशिलाघनात्मनानित्यमुच्छिलात्मनानित्यसन्नद्वित्यर्थ ॥ २० ॥

चिदात्मनासत्त्वेजगद्ब्रह्मशब्दार्थयोर्भेदोनास्तीत्याह ॥ नानयोरिति ॥ २१ ॥ एषांजगताम् ॥ तस्याश्चिदाकृतेरिव ॥ २२ ॥ मेर्वादिस्थूलतमोपिपदार्थस्तत्त्वदृशाआलोकना
च्छुद्धमस्थौल्यादिधर्मकब्रह्मैवभवति यथाकरकाद्यबुकेवलपयोभवतितद्वत् ॥ अतोबहिस्तृणगुल्मादेर्ब्रह्माडातस्यअतश्चितादेर्हिरण्यगर्भातस्यापिचजगतःपरमयद्बिंबोत्त
रोत्तरसूक्ष्मतमभूतसूक्ष्माव्याकृताक्षराततद्विभागेनातेयद्रूपपरिशिष्यतेतदेवपरविदुर्ब्रह्मविदइतिपरेणान्वयः ॥ २३ ॥ स्थूलस्यविमर्शेसूक्ष्ममात्रत्वेयुक्तिमाह ॥ तत्समूहइति ॥
पचीकृतस्यपचीकृतसमूहः अपचीकृतभूतानितुचित्तमेवेत्येवक्रमेणबोध्यमित्यर्थ ॥ २४ ॥ सौक्ष्म्येसत्सारत्वादेवतत्स्थौल्येपिसत्यतरत्वलक्षणसारतरताप्रपचेपामरैरनुभूयत
इत्याह ॥ यत्सौक्ष्म्येपीति ॥ अतएवाप्परमाणुगतरसशक्के.स्थूलजलेइंद्रियगोचरतेवघटादौब्रह्मसत्तायास्तद्गोचरतेत्याह ॥ यथेति ॥ २५ ॥ पायसीस्थूलजलनिष्ठासतीयो

नानयोर्विद्यतेभेदस्तरुपादपयोरिव ॥ यानीमानिजगंतीहनान्यत्तानिचिदाकृतेः ॥ २१ ॥ भावाभावादिनास्त्येषांतस्याइवकदाचन ॥
ब्रह्मैवजगदाभासंमरुतापोयथाजलम् ॥ २२ ॥ ब्रह्मैवालोकनाच्छुद्धंभवत्यंबुयथातपः ॥ मेर्वादेस्तृणगुल्मादेश्चित्तादेर्जगतोपिच
॥ २३ ॥ परमांबुविभागेनयद्रूपंतत्परंविदुः ॥ तत्समूहस्तदेवोच्चैश्चित्तंमेरुतृणादिकम् ॥ २४ ॥ यत्सौक्ष्म्येपिहिसारात्मस्थौल्येसारतरं
हितत् ॥ यथारसात्मिकाशक्तिःपरमाणुतयानघ ॥ २५ ॥ स्थिताजगत्पदार्थेपुपायसीब्रह्मतातथा ॥ रसशक्तिर्यथानानातृणगुल्मलतां
भसाम् ॥ २६ ॥ तथानानातयोदेतिसैवासैवेवब्रह्मता ॥ यैपारूपविलासानामालोकपरमाणुता ॥ २७ ॥ गुणगुण्यर्थसत्तात्मरूपिण्या
सांपरात्मता ॥ चितिचित्तेस्तिमेर्वादितदभिव्यंजनात्मनि ॥ २८ ॥ पिच्छपक्षौघकाठिन्यंमयूरांडरसेयथा ॥ चितितत्त्वेस्तिनानातातद
भिव्यंजनात्मनि ॥ २९ ॥ विचित्रपिच्छिकापुंजोमयूरांडरसेयथा ॥ यथानानात्मिकेत्येवबर्ह्यंडरसबर्हिते ॥ ३० ॥ विवेकदृष्ट्यादृष्टेतत
थाब्रह्मजगत्स्थितम् ॥ सनानातोप्यनानातोयथांडरसबर्हिणः ॥ ३१ ॥

ग्येतिशेषः ॥ स्थूलवैचित्र्येणसत्तावांतरसामान्यात्मनासत्तावैचित्र्येप्येतादृशादृष्टांताःकल्प्याइत्याशयेनाह ॥ रसशक्तिरित्यादिना ॥ २६ ॥ रूपविलासानानीलपीतादिरूप
वैचित्र्याणामालोकपरमाणुतासूक्ष्मतमरूपसामान्यंयथातथेत्यनुपज्यते ॥ २७ ॥ परात्मताब्रह्मसत्तापिआसांघटादिव्यक्तीनांगुणिगुणरूपावातरवैजात्यार्थसत्तात्मरूपिणी
भवतीतिशेषः ॥ आविर्भावदशायाकार्यात्मनाकारणमेवास्तीतिवत्तिरोभावदशायामपिकारणात्मनाकार्यमप्यस्त्येवेत्येतदपिदृष्टांतेनोपपादयति ॥ चितीति ॥ सर्वथातिरो
भावेमायाशबलचितिअर्धतिरोभावेचित्तेमेर्वादिस्थूलकार्यजातमस्ति यथापिच्छानिपक्षौघा.काठिन्यचमयूरोपादानभूतेतदंडरसेसंतितद्वदित्यर्थः ॥ २८ ॥ २९ ॥ ३० ॥ वि
वेकदृष्ट्याभेददृष्ट्या ॥ तथाचतत्रकल्पितभेदोयथानवास्तवाभेदविरोधीतद्वदत्रापीत्याह ॥ सनानातइति ॥ अंडेरसरूपोबर्हिणोमयूरः ॥ ३१ ॥

म॰ द्वैतात्मकमेवब्रह्मअस्तुयथाब्रह्मवास्तवजगद्विनिषमसत्यथाद्वैताद्वैतात्मकम् ॥ नैतावतावैषम्यप्रसक्ति ॥ यथासदसतो सत्तासमतायामवस्थितिस्तथातन्निरूप णारेत्यथ ॥ १२ ॥ मनुवैषम्यपरिहारायसत्तासमतायामेवावस्थानमितिकुतः अभावभावतापत्तिलक्षणशून्यत्वपिवैषम्यपरिहारावित्याशक्याह ॥ यतइति ॥ रूपतत्त्व भावस्यमतस्तुपपन्नसत्त्वंनशून्यनिष्ठम ॥ अभावस्यापिसदधीननिरूपणत्वात् ॥ नभावचपरमत्तैवसिद्धि ॥ तस्यभावयत्वान्नानाऽनानात्मकभिन्नाभिन्नस्वभावमिदजगद्रूपनस त्तोपस्यनन्नसंभवमनुपपन्नम ॥ नञर्थस्यनशब्दस्यभङ्गुर्वीति ॥ १३ ॥ एवमनुपपन्नस्यापिचर्विदरसदृष्टान्तेनैवैकरस्यनेयमित्याशयेनाह ॥ चिज्जगदिति ॥ यथाजगतिचि दात्मकंतत्त्वमनुगतंतथापीहगिरसोनुगत यथाचित्तत्त्वेजगत्तल्लीनंतथारसेबर्हीतिपश्येत्यर्थ ॥ १४ ॥ उपमोक्तमर्थरूपकेणैकीकृत्यदर्शयन्भेदंनिरस्यति ॥ नानेति ॥ नाना विधपदार्थभ्रमलक्षणे पिच्छे पूर्णाआपातव्याप्तिर्जगल्लक्षणमयूराण्डस्यरस ॥ तन्नभासमानजगन्मयूररूपत्वअमयूररूपसत्तालक्षणपदंपरमार्थवस्तुविद्धि तत्रत्वभेद कुतोस्ती त्यर्थ ॥ १५ ॥ ॥ इतिश्रीवासिष्ठम॰तात्पर्यप्रकाशेनि॰पू॰सप्तचत्वारिंश सर्ग ॥ ४७ ॥ ॥ ९ ॥ ॥ यत्सत्तास्फूर्तिसोस्यानिर्मितिर्विवर्तितिकल्पिते ॥ तत्स्वचि

जद्वैतद्वैतमत्तात्मातथाब्रह्मजगद्भ्रम ॥ यथासदसतोसत्तासमतायामवस्थिति ॥ ३२ ॥ यतस्सदसतोरूपभावस्यविद्धितत्परम् ॥ नानानानात्मकमिदत्वनुभूतनसंभवम् ॥ ३३ ॥ चिज्जगद्वलनपश्यत्यर्हिदरसवर्हिणम् ॥ यथाजगतिचित्तत्त्वचित्तत्स्वेयज्जगत्तथा ॥ नानानानात्मकचमयूराण्डरसोयथा ॥ ३४ ॥ नानापदार्थभ्रमपिच्छपूर्णाजगन्मयूराण्डरसश्चिदाया ॥ मयूररूपत्वमयूरमंत सत्तापदंविद्धि कुतोस्तिभेद ॥ ३५ ॥ ॥ इ॰वा॰वा॰दे॰मो॰नि॰पू॰चिद्दृनोपदेशोनामसप्तचत्वारिंश सर्ग ॥ ४७ ॥ ॥ ९ ॥ ॥ श्रीवसिष्ठउवाच ॥ यथानुदितरूपात्मसर्वमस्तीदमाततम् ॥ मयूरइवबीजेतस्तदहताद्दिगादिषु ॥ १ ॥ यत्रनाभ्युदितंकिंचित्तत्रसर्वंचविद्यते ॥ तदत्राप्य गिरा स्वगसुखसारेणार्यियति ॥ २ ॥ तथाचमुनयोदेवागणा सिद्धामहर्षय ॥ आस्वादयंत स्वरूपंसदातुर्यपदेस्थिता ॥ ३ ॥ एतेयेलब्ध नयनदृष्टयोनिर्निमेषिण ॥ तेदृश्यदर्शनासंगस्पदत्यागेव्यवस्थिता ॥ ४ ॥

दानदृष्टनब्रह्मनिष्ठप्पत्रवर्ण्यते ॥ १ ॥ मयूररसदृष्टान्तात्तिरोभूतजगद्वैचित्र्यगर्भीचिद्विचित्रसंवलितबीजशक्तिमव्याकृतमेवतस्यततत परशुद्धमस्तीतिव्यामोहोमाभूदितितदधिष्ठा ननिर्विशेषभूमानरूपनिष्ठप्पपरिचाययितुंश्रीवसिष्ठउवाच ॥ यथेति ॥ बीजेअङ्गअन्तर्मयूरवद्वर्णितमतरसनाविषहिर्दिगादिविषयत्राविषसर्वंजगयथयशुद्धेकालत्रयेप्यनुदि तरूपात्मअनुत्पन्नस्वरूपमेवास्ति नरेषोस्तदृष्टान्ततात्पर्यविषयोनशाबलमित्यर्थः ॥ १ ॥ यत्रपरमार्थत किंचिन्नाभ्युदितंतत्रैवसर्वंजगदविषयाविद्यतेतदेवाधास्मिन्देहेपिअगि रा अगानारमभूत भाणःसन्मग।दिवैषयिकसुखसारेणचित्तवृत्तिभरेणविविधभोगाकारतयास्फटिकमुकुरादीषन्नजयर्थिवति ॥ तथाचविषयसुखानुभवबलात्तद्विभूतनिरति शयानंदसद्भावोनुमेयइत्यर्थ ॥ २ ॥ सर्वसाधारण्येनतस्सद्भावेअनुमानप्रमाणमुक्त्वाविदुषामनुभवप्रमाणमप्याह ॥ तथाचेति ॥ स्वरूपस्वात्मभूतभूमानदम् ॥ ३ ॥ सर्वैरपिकुतो नानुभूयनइतिचेदुपरशनासमाप्याणस्वरूपविक्षेपावृतिग्रहाणा ॥ अतएवतदुभयपरिहारायमाध्यनिरुद्धदृष्टयःप्राणनिरोधपराश्चयोगिनोदृश्यतइत्याह ॥ एतेइति ॥ लब्धे नयनेमोऽरेकरदीनरनेंद्रियंचयेषाम् ॥ ४ ॥

इदंत्वनारूढषष्ठादिभूमिकाना आरूढषष्ठसप्तमभूमिकास्तुव्यवहरंतोपिसमाहिते पूर्वभूमिकागतैस्तुल्यमात्मसुखंमदैवास्वादयतीत्याह ॥ नास्थिताइति ॥ कर्मसुव्यवहारेषुस्थि तानामपियेषाषष्ठादिभूमिकागतानाबाह्यार्थसत्यताभावनानआस्थिनाईषदपिस्थिता येचपूर्वभूमिकागताःसंवित्संवेद्यसंबन्धत्यागलक्षणसमाधौस्थितायेषां प्राणोमनश्चनस्पद ते तेचचित्तचेत्यसमासगयोस्त्यागोयस्मिस्तथाविधेभूमानदपदेतुल्यतयास्थिताइतिसार्धद्वयस्यार्थः ॥५॥६॥ षष्ठादिभूमिकागताअतन्निर्ब्रह्माकाराखण्डवृत्तिधारास्पदात्तेनाशेननिर तिशयानदास्वादनलक्षणपरमपुरुषार्थयथाससाधयतितथैवबहिश्चित्तचेत्यादिस्पदाद्यवहारसस्थितिमपिकुर्वंति यथाजगदीश्वरोंत.संदैवस्वरूपानदप्रतिष्ठोपिबहिर्मायययाजग द्यवस्थापालयतितद्वदित्यर्थ ॥७॥ तेषाव्यवहारेदृश्येषुबाह्यविषयेषुदर्शनानावुद्धिवृत्तीनांसगमेत्रिपुट्यामप्यभिव्यक्तोनिरतिशयानदात्मातद्धांदयत्येवेतिसर्वोपिव्यवहार सुख रूपएव ॥ यथाऐद्वोरश्मिस्तरुपल्लवमत.प्रविश्यछादयतितद्वदित्यर्थ ॥ ८ ॥ अत.स्वरूपसुखनुतेषासुनरानिर्विक्षेपमित्यत्रापिदृष्टातमाह ॥ विबादिति ॥ विबनित्यातरालि

नास्थिताभावनायेषांस्थितानामपिकर्मसु॥ संवित्संवेद्यसंबंधस्पंदत्यागेचयेस्थिताः॥ ५॥ प्राणोनस्पंदतेयेषांचित्रस्थवपुषामिव ॥ मनोनस्पंदतेयेषांचित्रस्थवपुषामिव ॥ ६ ॥ चित्तचेत्यसमासंगत्यागेतेस्वपदेस्थिताः ॥ स्पंदात्संसाधयंत्यर्थंतेनांशेनेश्वरोयथा ॥ ७ ॥ तथैवचित्तचेत्यादिस्पंदात्कुर्वंतिसंस्थितिम्॥यथाछादयतिस्वच्छःपल्लवंरश्मिरैंदवः॥८॥तथात्माछादयत्यंतर्दृश्यदर्शनसंगमे॥ बिंबाद्दूरंप्रयातस्यभित्तावपतितस्यच ॥ ९ ॥ यदिंदोस्तेजसोरूपंतद्रूपंशुद्धसंविदः॥ नदृश्यंनोपदेशार्हंनात्यासन्नंनदूरगम्॥ १० ॥ केवलानुभवप्राप्यंचिद्रूपंशुद्धमात्मनः॥ नदेहोनेंद्रियप्राणौनचित्तंनचवासना ॥ ११ ॥ नजीवोनापिचस्पंदोनसंवित्तिर्नवैजगत्॥ नसन्नासन्नमध्यंचशून्याशून्यंनचैवहि ॥ १२ ॥ नदेशकालवस्त्वादितदेवास्तिनचेतरत्॥ एतैःसर्वैर्विनिर्मुक्तंत्वदिकोशशतेनच ॥ १३ ॥ यत्रैतत्स्पंदते दृश्यंतत्तदात्मपदंभवेत्॥ यच्चनाद्यंनकल्पांतंनवस्त्वाद्यनिलादिभिः ॥ १४ ॥ इहचामुत्रसद्रूपादन्यथाभवतिकंचित्॥ जायंतेचम्रियंते चदेहकुंभाःसहस्रशः॥ १५॥

कस्यशुद्धस्य.स्थस्येदोस्तेजसश्चद्रिकायायद्रूपतदेवपरमात्मनोनिर्विक्षेपाछादरूपतैरनुभूयनइत्यर्थ. ॥ ९ ॥ १० ॥ तदेवदेहादिसर्वोपाधिनिर्मुक्तमात्मनस्तत्त्वमित्याह ॥ नदेह इत्यादिना ॥ ११ ॥ १२ ॥ देशकालवस्तुनिरूप्यत्रिविधपरिच्छेदादिनाब्रह्मैवास्ति ॥ एतैर्देहादिभिः ॥ शतशब्दआनन्त्यपर. ॥ भूतभाविदेहकोशानात्वदिवासनात्मनास्थिता नामानन्त्यात् ॥ १३ ॥ एवकोशशतेनत्वदिचित्तेयत्रयस्मिन्सतिएतद्दृश्यमाविर्भावतिरोभावादिनास्पंदतेतत्तन्मात्रमेवात्मपदभवेत्सभावितमित्यर्थ. ॥ एवकार्यकारणविलक्षण तत्सभावनीयमित्याह ॥ यच्चेति ॥ यद्ब्रह्मआद्यमहाकल्पादिकालेभवमव्याकृताख्यकारणम् ॥ तथाकल्पांतप्राकृतादिप्रलयरूपचन ॥ सर्गकालेपिइहएतस्मिन्लोकेअमुत्र परलोकेवाअनिलादिभि.शोषणदहनछेदनभेदनादिविकारै कंचित्सद्रूपादन्यथानभवतीतिसविकारवस्तुआदिपदात्तद्विकाराश्चयन्नभवतीत्यर्थः ॥ १४ ॥ ननुदेहादिविकारैस्तद नुगनसद्रूपस्यापिविकार किनस्यात्तत्राह ॥ जायंतेचेति ॥ १५ ॥

१ स्वस्थइत्यपिपाठः

नर्हिकिरहारिपथगलितेनेत्याह ॥ नचेति ॥ १६ ॥ विष्वक्सर्वतः सुसिद्धयाप्रयत्नापुपायपरिष्कृतया ॥ १७ ॥ अतएवव्यवहरन्नपि निर्विकारात्मदर्शनान्नित्यमुक्तात्मस्वरूप
स्थितत्वात् ॥ प्रज्वलन्नपीति ॥ प्रज्वलन्सूर्यराज्ययोग्यव्यवहारेषुदीप्यमानः ॥ १८ ॥ १९ ॥ इमगकालादिसर्वजगद्ब्रह्मत्वात्मदृष्ट्यादृष्टवतस्तवकिंभूयोपिभ्रमणसंभवतिनै
वसंभवतीत्यर्थः ॥ यतस्त्वंवस्तुतः सममविषमस्वरूपगच्छसिसर्वेषामप्रमानसीनिसमगएव॥ यत्नैवसमप्रस्याप्येनीतिश्रुतेरितिभावः ॥२०॥ ॥इतिश्रीवासिष्ठम०तात्पर्यप्रकाशनिर्वा
णप्रकरणपू०अष्टचत्वारिंशःसर्गः ॥ ४८ ॥ ॥ ७ ॥ ॥ विकारेभ्योविवर्तस्यवैलक्षण्यमिहोच्यते॥ अप्रबोधात्त्रिपास्तिप्रबोधेनास्तिसेतिच ॥ १ ॥ विकारारम्भाभ्यांविवर्त
स्यलक्षणभेदंजिज्ञासमानोरामः पृच्छति ॥ यदीति ॥ आविपक्षावारमपरिपक्व ॥ बृंहितेनित्यनिरतिशयवृद्धिमतित्रिविधपरिच्छेदशून्येइतियावत् ॥ १ ॥ तत्रकारणेकार्यो
त्पत्तिपञ्चधाअनिरोहितभागवस्य १प्रतिबद्धभागवस्य २प्रच्छन्नभागवस्यो ३प्रच्छन्नभागवस्यो ४विनष्टभागवस्य ५श्चेति ॥ आद्योमृदादेर्घटादिभावः ॥ द्वितीयोजलस्यहिमक
सयात्वाभ्यंतरस्यास्यनात्माकाशस्यखंडना ॥ तच्चदेहादिसकलमात्मैवात्मविदांवर ॥ १६ ॥ केवलंबोधवैरूप्यादीपत्पृथगिवास्थितम् ॥
विष्वगारममयविज्ञातमुद्धासुसिद्धया ॥ १७ ॥ प्रज्वलन्नपिकार्येपुनिर्वाणोनिममोभव ॥ यदिदंदृश्यतेकिंचिज्जगत्स्थावरजंगमम्
॥ १८ ॥ तत्सर्वंब्रह्मनिधमनिर्गुणनिर्मलात्मकम् ॥ निर्विकारमनाद्यंतनित्यशांतसमात्मकम् ॥ १९ ॥ कालक्रियाकरणकर्तृनिदानका
र्यजन्मास्थितिप्रलयसंस्मरणादिसर्वम् ॥ ब्रह्मेतिदृष्टवतएवतवात्मदृष्ट्याभूयोपिकिंभ्रमणमगसमगएव ॥ २० ॥ ॥ इत्यार्षेवा०वा०
दे०मोक्षोपायेपुनि०पू०ब्रह्मैकात्मप्रतिपादननामअष्टचत्वारिंशःसर्गः ॥ ४८ ॥ ॥ ७ ॥ ॥ श्रीरामउवाच ॥ ॥ यदिनास्ति
विकारादिर्ब्रह्मन्ब्रह्मणिबृंहिते ॥ तदिदंकथमाभातिभावाभावमयंजगत् ॥ १ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अपुनःप्रागवस्थानयत्स्वरू
पविपर्यय ॥ तद्विकारादिकंतातयत्क्षीरादिषुवर्तते ॥ २ ॥ पयस्तांपुनरभ्येतिदधित्वान्नपुनःपय ॥ शुद्धमाद्यंतमध्येषुब्रह्मब्रह्मैवनिर्मलम्
॥ ३ ॥ क्षीरादेरिवतेनास्तिब्रह्मणोनविकारिता ॥ अनाद्यंतविभागस्यनचैपोवयविक्रम ॥ ४ ॥
त्कोभाव ॥ तृतीयोरज्ज्वाःसर्पभाव ॥ चतुर्थोजलस्यतरंगभाव ॥ पंचमोदुग्धस्यदधिभाव ॥ तत्रांत्यएवजन्मादिभावविकारःपरिणामश्च इतरेतुविवर्तभेदाएवेत्याशयेनप्र
थमंतसिद्धविकारलक्षणमाह ॥ अपुनरिति ॥ यत्क्षीरमीसादिषुदधित्वेनुष्यादिलक्षणंकार्यंपुनःप्राक्तनक्षीरादिभावावस्थानशून्यक्षीरादिस्वरूपविपर्ययरूपविपतेतदेवविकार
मस्कारपरिणामादिशब्दवाच्यमित्यर्थः ॥ २ ॥ ब्रह्मणिमगछक्षणकार्यंनतथातद्धर्म्याविस्यात् ॥ अपुष्पमिति ॥ ३ ॥ असुतर्हिपरमाणुभिर्व्यणुकादीनामिवावयव्यारंभक
मस्तभाह ॥अनाद्यंतेति ॥ आद्यंतलक्षणदेशिकपरिच्छेदवस्तुक्रियासंयोगादिविभागवस्तुवावयवेष्ववयव्यारंभकम स्यात्मतद्विलक्षणस्यब्रह्मणःसहत्यर्थः ॥ एतेनबहूनांसंयु
क्तानांसमवेतानांवास्तवुम्यायसमवेतेवासमवायेनैककार्यजनकत्वमारंभकत्वम् ॥ यथातंतूनांपटंप्रति यथावाकारणगुणानांकार्यगुणंप्रतीतिवैशेषिकाद्यभिमतलक्षणमुक्ति
मंत ।प्रयातत्कमारंभकत्व ॥ द्रव्याणिद्रव्यांतरमारभंते गुणाश्चगुणांतरमिति ॥ २ ॥

ब्रह्मणिजगतस्तुपरिशेषाद्विवर्त्तत्वमेवसिद्धमितितल्लक्षणेनदर्शयति ॥ समस्येति ॥ विकृतिरन्यथाभावः ॥ सभ्रमविवर्तम् ॥ तथाचाद्यंतयोःसमेतदसंस्पर्शिवैषम्यप्रतिभासोविव
र्तइतितल्लक्षणमितिभावः ॥ ५ ॥ तदसंस्पर्शंदर्शयति ॥ नसंवेद्यमिति ॥ ६ ॥ मध्येविकारासंस्पर्शःकथंज्ञायतइतिचेदाद्यंतयोस्तदसंस्पर्शस्वभावावधारणादेवलिंगादित्याह ॥
यादृगिति ॥ ७ ॥ आत्मनस्तुप्रकाशस्वाभाव्येनसमतासर्वानुभवसिद्धा अनात्मभावश्चतस्यात्यंतासंभाव्यइत्याह ॥ आत्मात्विति ॥ ८ ॥ ९ ॥ चित्प्रकाशैकरसेब्रह्मणितद्वि

समस्याद्यंतयोर्येयंदृश्यतेविकृतिःक्षणात् ॥ संविदःसंभ्रमंविद्धिनाविकारोस्तिविक्रिया ॥५॥ नसंवेद्यंनसंवित्तिस्तत्रब्रह्मणिविद्यते ॥ तद्ब्र
ह्मशब्दकथितंनिःसंबंधचिदात्मवत् ॥६॥ यादृगाद्यंतयोर्वस्तुतादृगेवतदुच्यते ॥ मध्येयस्ययदन्यत्वंतदबोधाद्विजृंभितम् ॥७॥ आत्मात्वा
द्यंतमध्येषुसमःसर्वत्रसर्वदा ॥ स्वमप्यन्यत्वमायातिनात्मतत्त्वंकदाचन ॥ ८ ॥ अरूपत्वात्तथैकत्वान्नित्यत्वादयमीश्वरः ॥ वशंभावावि
काराणांनकदाचनगच्छति ॥ ९ ॥ ॥श्रीरामउवाच ॥ ॥विद्यमानेसदैकस्मिन्ब्रह्मण्येकांतनिर्मले ॥ संविद्भ्रमस्वरूपाया अविद्यायाःक
आगमः ॥ १० ॥ ॥श्रीवसिष्ठउवाच ॥ ॥ब्रह्मतत्त्वमिदंसर्वमासीदस्तिभविष्यति ॥ निर्विकारमनाद्यंतंनाविद्यास्तीतिनिश्चयः ॥ ११ ॥ य
स्तुब्रह्मेतिशब्देनवाच्यवाचकयोःक्रमः ॥ तत्रापिनान्यताभावमुपदेष्टुंक्रमोह्यसौ ॥ १२ ॥ त्वमहंजगदाशाश्चद्यौर्भूश्चाप्यनलादिवा ॥ ब्र
ह्ममात्रमनाद्यंतंनाविद्यास्तिमनागपि ॥ १३ ॥ नाम्नैवेदमविद्येतिभ्रममात्रमसद्विदुः ॥ नविद्यतेयासासत्याकीदृग्रामभवेत्किल ॥ १४ ॥
॥श्रीरामउवाच ॥ ॥उपशमप्रकरणेह्यस्त्रनेतुत्वयेरितम् ॥ अविद्येयंतथेत्थंचविचार्यतइतिप्रभो ॥ १५ ॥ ॥श्रीवसिष्ठउवाच ॥ ॥ए
तावंतमबुद्धस्त्वमभूःकालंरघूद्वह ॥ कल्पिताभिःकिलैताभिर्बोधितोसिस्वयुक्तिभिः ॥ १६ ॥ अविद्येयमयंजीवइत्यादिकलनाक्रमः ॥ अ
प्रबुद्धप्रबोधायकल्पितोवाग्विदांवरैः ॥ १७ ॥ अप्रबुद्धंमनोयावत्तावदेवभ्रमंविना ॥ नप्रबोधमुपायातितदाक्रोशशतैरपि ॥ १८ ॥

रुद्धस्वभावायाअविद्यायाःकथंप्रसक्तिर्येनतत्रजगद्विवर्त्तःस्यादितिप्रबुद्धदशारामःशंकते ॥ विद्यमानेइति ॥ १० ॥ नप्रबुद्धदृशाअविद्यासद्भावंब्रूमःकिंत्वबुद्धव्युत्पादनायक
ल्पनयेत्याशयेनोत्तरमाह ॥ ब्रह्मतत्त्वमिति ॥ सर्वपूर्णम् ॥ ११ ॥ नअन्यतायाभावसद्भाववदाम किंतूपदेष्टुमसौक्रमःकल्पितइत्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥ यद्यविद्याना
स्त्येवतर्ह्युपशमप्रकरणेयथाभातिरविद्येयंतथेत्थंचविचार्यतइतित्वयैवाविद्यासद्भावमंगीकृत्योक्तमितिरामःशंकते ॥ उपशमेति ॥ १५ ॥ तत्तुतवाबोधदशायात्वद्बुद्ध्यनुसारिक
ल्पनयोक्तमिदानींतुत्वंप्रबुद्धइतिनतत्कल्पनावसरइत्यविरोधइत्याह ॥ एतावंतमिति ॥ १६ ॥ १७ ॥ भ्रममविद्यादिशास्त्रीयव्यवहारकल्पनाम् ॥ तत्मनः ॥ १८ ॥

एतत्कलनाबीजमेव ॥ ३४ ॥ नोपततिचेत्सुखदुःखफलाःशरीरद्रुमायेभ्यस्तथाविधाश्चित्तांकुरानजायते ॥ ३५ ॥ उपक्रांतमुपदेशरहस्यमुपसंहरति ॥ द्वित्वमिति ॥ हेराम जगतिअसत्भ्रांत्युपात्तद्वित्वजहिहित्यज ॥ आचहौइतिचकाराज्जहातेरि· ॥ यतस्त्वबोधमुपागतोसि ॥ आत्मैकभावलक्षणेननिरतिशयानदविभवेनअभयात्माभव ॥ दुःखं तुकालत्रयेपिनास्त्येवेतिनःपरमार्थसारउपदेशइत्यर्थः ॥ ३६ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०एकोनपंचाशत्तमःसर्गः ॥ ४९ ॥ ॥ ७ ॥ ॥ इहकल्प नयाजी लिंगपुर्यष्टकोद्भवः ॥ वर्णितोक्षैस्तथातस्यबाह्यार्थग्रहणक्रम· ॥ १ ॥ भिद्यतेहृदयग्रंथिश्छिद्यतेसर्वसंशयाइतिश्रुतेस्तत्त्वसाक्षात्कारेणस्वयछिन्नसर्वसंशयोपिरामः

एतदेवात्मविज्ञानादग्धंसद्वासनाजलैः॥संसिक्तमपियत्तेननभवत्यंकुरक्षमम्॥३४॥नोचेत्पततिचित्क्षेत्रेकलनाबीजकंततः॥चित्तां कुरानजायंतेसुखदुःखलवद्रुमाः॥३५॥द्वित्वंजगत्यसदुपात्तमबोधजातंबोधक्षयंजहिहिबोधमुपागतोसि॥आत्मैकभावविभवेनभ वाभयात्मानास्त्येवदुःखमितिनःपरमार्थसारः॥३६॥ ॥इत्यार्षेवा०वा०दे०मोक्षोपायेषुनि०पू०संस्तुतिविचारयोगोनामएकोनपं चाशःसर्गः॥४९॥ ॥७॥ ॥श्रीरामउवाच॥ ॥ज्ञातंज्ञातव्यमखिलंदृष्टंद्रष्टव्यमक्षतम्॥परेणपरिपूर्णाःस्मोब्रह्मज्ञानामृ तेनते॥१॥पूर्णात्पूर्णमिदंपूर्णंपूर्णात्पूर्णंप्रसूयते॥पूर्णेनापूरितंपूर्णंस्थितापूर्णेचपूर्णता॥२॥लीलयेदंतुपृच्छामिभूयोबोधाभिवृद्धये॥ बालस्येवपिताब्रह्मन्नकोपंकर्त्तुमर्हसि॥३॥

परेषामुपकारायतत्संशयपदंप्रष्टुकामःप्रथमंस्वानुभवमभिलप्यदर्शयति ॥ ज्ञातमित्यादिना ॥ वयंतेत्वत्संबंधिनाब्रह्मज्ञानामृतेनपरिपूर्णा.स्म. ॥ १ ॥ स्वानुभवेन पूर्णमदःपूर्ण मिदंपूर्णात्पूर्णमुदच्यते ॥ पूर्णस्यपूर्णमादायपूर्णमेवावशिष्यतइतिश्रुतिसंवादयति ॥पूर्णादिति॥ पूर्णाद्ब्रह्मणःसकाशादुपाधौप्रविश्यआनखाग्रात्पूर्णमिदंजीवरूपंपरमार्थत.पूर्ण ब्रह्मैव यत·पूर्णाद्यद्वियदादिक्रमेणप्रसूयतेव्यष्टिसमष्ट्युपाधिरूपतदपिपूर्णमेवप्रसूयते॥ तद्यदामहावाक्योत्थेनाहंब्रह्मास्मीतिज्ञानेनसमूलोपाधिपरिच्छेदापनयनात्पूर्णेनब्रह्मणा पूर्णमेवजीवतत्त्वमखंडैक्येनापूरितंतदाकल्पितापूर्णताभ्रमस्यापगमात्पूर्णस्यपूर्णतैवप्राक्स्थितैवावस्थितेत्यर्थः ॥ २॥ भूयस्त्वाजनानाबोधाभिवृद्धयेबालस्यलीलाप्रश्ने पितेवको पंकर्त्तुंनार्हसि ॥ ३ ॥

यतःसम्यग्विमर्शैश्चिद्व्यतिरेकेणप्रमातृप्रमाणप्रमेयविभागाःकेपिननिरूपयितुंकेनापिवादिनाशक्यंतइत्याशयेनवसि
अत्यल्पमिदमुच्यतेयद्गोलकातिरिक्तानींद्रियाणिनसंतीति
ष्ठःप्रथमसमाधत्ते ॥ इंद्रियादीति ॥ ९ ॥ यदितुकल्पनयाद्रष्टुर्दृश्यस्यचोपपत्तिमन्यसेतर्हिइंद्रियादिघटितपुर्यष्टकत्वेनापिपूर्वपूर्ववासनानुसारेणकल्पनोपपत्तेर्नकिंचिदनुपपन्न
मित्यर्थः ॥ १० ॥ उक्तेर्थेमायां
मित्याशयेनाह ॥ गगनादपीति ॥ तयाचिताआत्मनामायाशबलस्वभावेनपुर्यष्टकत्वेनस्वरूपभावदृत्त्यापूर्वपूर्ववासनानुसारेणभावितंकल्पित
तुप्रकृतिंविद्यान्मायिनंतुमहेश्वरं अस्यावयवभूतैस्तुव्याप्तंसर्वमिदंजगदितिश्रुतिप्रमाणयति ॥ तदेवचेति ॥ ११ ॥ एवंचेंद्रियद्वाराबहिर्निर्गतेनपुर्यष्टकघटकेनचित्तेनघटा
दिव्याप्त्यास्वदृत्तिप्रतिबिंबितघटादेर्बाह्यत्वाकारेणैवहृदयेनीत्वाप्रदर्शनतथैवकालांतरेस्मृतिःस्वप्नेचांतर्गतस्यैवबाह्यत्वेनानुभवश्चेतिसर्वमुपपन्नमित्याशयेनाह ॥ पुर्यष्टकत्वमि

श्रीवसिष्ठउवाच॥ ॥इंद्रियाद्यपिचित्तादिघटाद्यपिनकिंचन॥ पृथक्संभवतीहांगनिर्मलाच्चेतनादृते ॥ ९ ॥ गगनादपियाऽच्छाचित्तयारूपंस्वमात्मना ॥ चित्त्वात्पुर्यष्टकत्वेनभावदृत्त्यैवभावितम् ॥ १० ॥ तदेवचप्रकृतितांगतंजगदवास्थितेः ॥ तस्याअवयवाज्जातामिंद्रियादिघटादिच ॥ ११ ॥ पुर्यष्टकत्वमायातंयच्चित्तंस्वस्वभावतः ॥ स्वएवावयवस्तस्मिन्घटादिप्रतिबिंबति ॥ १२ ॥ ॥ श्रीरामउवाच ॥ ॥ जगत्सहस्रनिर्माणमहिम्नोदर्पणस्यच ॥ पुर्यष्टकस्यभगवन्रूपंकथयकीदृशम् ॥ १३ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अनाद्यंतंजगद्बीजंयद्ब्रह्मास्तिनिरामयम् ॥ भारूपंशुद्धचिन्मात्रंकलाकलनवर्जितम् ॥ १४ ॥ कलनोन्मुखतांयातमंतर्जीवइतिस्मृतः ॥ सजीवःखलुदेहेस्मिंश्चिनोतिस्पंदतेस्फुटम् ॥ १५ ॥

ति ॥ एवंरीत्यापुर्यष्टकत्वमायातंचिद्रूपंतत्स्वमेवपुर्यष्टकस्यचित्तादिघटितस्वभावतःस्वयमेवस्वःचित्तदृत्त्याख्योवयवोभवति तस्मिन्नवयवेघटादिबाह्यंबाह्याकारेणैवप्रतिबिंबति ॥ मृतदेहेतुपुर्यष्टकघटितस्यलिंगात्मनोजीवस्यस्वकल्पनयैवलीलोपाख्यानोपदर्शितरीत्यानिर्गमनान्नदर्शनादिसामर्थ्यमितिसर्वदोषपरिहारइतिभावः ॥ १२ ॥ यद्येवंतर्हिपंचीकृतभूतभागेनजगदाकारेणपरिणमतोऽपंचीकृतभूतकार्यलिंगभागेनतत्प्रतिबिंबग्रहदर्पणभूतस्यचपुर्यष्टकस्यैवकिंरूपंतदेवकथयेतिरामःपृच्छति ॥ जगदिति ॥ १३ ॥ तत्स्वरूपंवक्तुंवसिष्ठस्तन्मूलमज्ञातब्रह्मतत्त्वंनिर्दिशति ॥ अनाद्यंतमिति ॥ १४ ॥ तद्ब्रह्मवियदादिभूतसूक्ष्मसंघातेनापंचीकृतेनलिंगपंचीकृतेनब्रह्मांडचसंघातदंतःप्रतिबिंबलक्षणकलनोन्मुखतायातंसत्सूत्रप्राणानामभिमानेनधारणाज्जीवइतिस्मृतोऽभूदित्यर्थः ॥ चिनोतिवासनोपचयेनांगोपचयेनचोपचितोभवति उपचितश्चबाह्यांतर्व्यापारात्मनास्पंदतेचेत्यर्थः ॥ १५ ॥

तस्यैवाभिमानादिव्यापारभेदेननामभेदानाह ॥ अहंभावादित्यादिना ॥ १६ ॥ सर्वव्यापारसाधारणस्वभावात्मापुर्यष्टकमितिनाम्नास्मृत ॥ १७ ॥ ज्ञानेंद्रियव्यापारेणज्ञातृत्व कर्मेंद्रियव्यापारेणकर्तृत्व तत्फलसुखदुःखाश्रयत्वेनभोक्तृत्व सर्वस्यौदासीन्येनप्रकाशनेसाक्षित्वम् ॥ आदिपदाद्भोगकरणत्वायतनत्वादिपरिग्रह ॥ एतदभिपातिनीआध्यासेनैतद्धर्मिकायासंवित्सैवचिद्भागप्राधान्येनजीवइत्युक्ता जडांशप्राधान्येनतत्वेषुपुर्यष्टकविदुरित्यर्थ ॥ १८ ॥ अतएवस्वतादात्म्यभावितवुद्ध्याकाराणांकालभेदेनभेदाज्जीवोपिकामक्रोधहर्षविषादादयनुरंजितोनानेवभवतीत्याह ॥ कालेकालेइति ॥ अनंतवासनाकणिकोदयमाकारंगच्छतीतिपरेणान्वय ॥ १९ ॥ तस्यैवसमष्टिव्यष्टिजीवस्यबीजस्यांकुरकांडपल्लवादीवसर्वजगदाकारइत्याशयेनाह ॥ यथेति ॥ २० ॥ अतएवाद्यश्चिदात्मानाहंकिंतुशरीराद्याकारएवाहमितिमिथ्याज्ञानेनचेततिपश्यति ॥ २१ ॥ २२ ॥

अहंभावादहंकारोमननान्मनउच्यते ॥ बोधनिश्चयतोबुद्धिरिंद्रदृष्टेस्तथेंद्रियम् ॥ १६ ॥ देहभावनयादेहोघटभावनयाघटः ॥ एषएवस्वभावात्माजनैःपुर्यष्टकस्मृत ॥ १७ ॥ ज्ञत्वकर्तृत्वभोक्तृत्वसाक्षित्वाद्यभिपातिनी ॥ यासंविज्जीवइत्युक्तातद्विपुर्यष्टकविदु ॥ १८ ॥ कालेकालेततोजीवस्त्वन्योन्योभवतिस्वत ॥ भाविताकारयानंतवासनाकणिकोदयम् ॥ १९ ॥ पुर्यष्टकस्वभावेनकालेनाकारंगच्छति ॥ यथावासनत सेकाद्बीजंपल्लवतामिव ॥ २० ॥ आकारोहंशरीरादिस्थावरादिचरादिच ॥ नाहमाद्यश्चिदात्मेतिमिथ्याज्ञानेनचेतति ॥ २१ ॥ भ्रमत्येवजगज्जीवोवासनावलितश्चिरम् ॥ ऊर्ध्वाधोगमनैरब्धौकाष्ठंवीचिहतंयथा ॥ २२ ॥ कश्चिद्विशुद्धजातित्वाद्बोधादनंतरम् ॥ वुद्ध्वात्मानंममभ्येतिपदमाद्यंतवर्जितम् ॥ २३ ॥ कश्चित्कालेनबहुनाभुक्तयोनिगणातुर ॥ आत्मज्ञानवशादेतिपरमंपदमात्मन ॥ २४ ॥ एवंरूपश्चसुमतेजीवोयात शरीरताम् ॥ नेत्रादिनाघटाद्यर्थंयथावेत्तितयाशृणु ॥ २५ ॥ चित्त्वस्यकलनांतस्यसत्रयातस्यजीवताम् ॥ मन पष्ठेंद्रियग्रामोदेहोयमवतिष्ठते ॥ २६ ॥ यदान्य सर्वदेहेभ्यःखेपतत्यद्रूपिणा ॥ तदातज्जीवसंस्पर्शाज्जीवात्मैकत्वमृच्छति ॥ २७ ॥

कश्चित्सनकादितुल्य कस्याद्यशेषसाक्षात्मीयभवबोधादनंतरमाद्येजन्मन्येवेत्यर्थ ॥ अयंचसर्वोविभाग सात्विकराजसादिजीवभेदवर्णनेउत्पत्तिप्रकरणेव्याख्यात ॥ २३ ॥ २४ ॥ कथंघटादिबाह्यसत्वमिंद्रियाणिजडान्यपीतियत्पृष्टंतत्सामान्यत समाहितमपिविशेषेणसमाधत्ते ॥ एवंरूपइत्यादिना ॥ २५ ॥ चित्त्वस्यचैतन्यस्यकलनांतस्यपुर्यष्टकेप्रतिबिंबतयापरिच्छेदस्यानरवापेक्ष्योव्याप्तोपरिमाणतयावतिष्ठते ॥ तेनसदाजीवचैतन्येनपरिमितदेहांतर्गतमेवसुखदुःखाद्विर्सवधानुभवतिनबाह्यम् ॥ २६ ॥ यदातुअन्योबाह्यघटादिरव्योभवतितदातद्वागादुद्रिक्तजलंकुल्याद्वारेणेवसर्वदेहेभ्यउद्रिक्तचक्षुराद्यरूपिणाद्वारेणबाह्येघटादिपर्यंतंसेबाह्याकारोपततिनिर्गच्छतीत्यर्थ ॥ किंततस्तत्राह ॥ तदेति ॥ तदातद्द्वारविनिर्गमनादिद्वारनिर्गतजीवेनस्वाकारवृत्तिव्याप्तिद्वारासंस्पर्शाद्यापनाज्जीवचैतन्येनसहैकत्वमाध्यासिकचित्तादात्म्यलक्षणविषयत्वमृच्छतिप्राप्नोति ॥ २७ ॥

सचाक्षस्यसबंधश्चित्तेनसमन्वितस्यजीवतएवबाह्यार्थवेदनेकारकोभवतिनमृतस्यमुक्तस्यवेत्यर्थः ॥ २८ ॥ अस्तुबहिरेवतथापिकथमंतस्तदनुभवस्तत्राह ॥ यद्यदित्यादिना ॥ यद्यदत करणवृत्तिरूपनयनरश्मिरूपवास्वच्छतरवस्तुतस्मिन्बाह्यनभःस्थघटादिप्रतिबिंबतिसचप्रतिबिंबोवृत्त्यंतर्गतेनजीवेनश्लिष्टोभवति ॥ तर्हिबहिष्ठएवाहंघटमनुभवामीतिकुतोनानुभूयतेतत्राह ॥ बहिरिति ॥ यद्यपिबहिर्जीवोस्तितथाप्यसौबहिःअजीवतिप्राणान्नधारयति ॥ नञोनलोपश्छांदसः ॥ अनुव्यचलदितिवत्तिङंतोत्तरपदःसमासोवा॥ यत्रप्राणव्याप्तिस्तत्रैवाहंतावमर्शोनबहिरित्यर्थः ॥ २९ ॥ अस्त्वेवतर्हिघटेप्रथाफलोपपत्तिस्तथापिकथमंतर्हृदिघटाकारानुप्रवेशस्तत्राह ॥ निघृष्टेति ॥ यदानयनतारकेपटलादिदोषराहित्याच्छाणनिघृष्टनूतनेंद्रनीलाभेभवतस्तदातयोस्तारकयोर्घटप्रतिबिंबसहिताचित्तवृत्तिःप्रविशतीतिबाह्यगतोघटादिपदार्थःप्रतिबिंबतीत्युच्यते ॥ ३० ॥ सचैवनयनतारकानुप्रविष्टःपदार्थोहार्देनाहमभिमानवताजीवेनहृदिप्रतिबिंबतयाश्लिष्टोभवतीत्यर्थः ॥ इतिअनयारीत्याघटादिबाह्यवस्तुबहिस्वभासमानमेवांतर्हृदिअहंकारसंव

बाह्यार्थवेदनेनित्यंसंबंधोक्षस्यकारकः॥ समन्वितस्यचित्तेननमुक्तस्यकदाचन॥ २८॥ यद्यदच्छतरंतस्मिन्नभःस्थंप्रतिबिंबति॥ जीवेनभवतिश्लिष्टोबहिर्जीवोप्यजीवति॥ २९॥ निघृष्टनवरत्नाभेयदानयनतारके॥ तदातयोर्बाह्यगतःपदार्थःप्रतिबिंबति॥ ३०॥ जीवेनभवतिश्लिष्टःप्रतिबिंबतयाततः॥ जीवज्ञेयत्वमायातिबाह्यंवस्त्वितिराघव॥ ३१॥ यत्संश्लेपमुपायातितद्बालोपिहिविंदति॥ पशुर्वास्थावरोवापिजीवःकस्मान्नवेत्स्यति॥ ३२॥ अच्छस्यनयनस्याथोरश्मयोजीववेष्टिताः॥ क्रोडीकुर्वंत्यलंदृश्यंजीवस्तत्त्वेनविंदति॥ ३३॥ एषएवक्रमःस्पर्शेसंबंधःप्रत्ययोद्भवः॥ रसेगंधेचकथितोजीवसंस्पर्शसंभवः॥ ३४॥ शब्दस्त्वाकाशनिष्ठत्वात्कर्णाकाशगतःक्षणात्॥ जीवाकाशंविशत्यंतरिस्थमिंद्रियसंविदः॥ ३५॥ ॥श्रीरामउवाच॥ ॥दृश्यतेमानसादर्शेयंत्रदावौदरेपुतत्॥ प्रतिबिंबितमेतन्मेब्रूहिब्रह्मन्किमात्मकम्॥ ३६॥

लितजीवज्ञेयत्वमायातीत्यर्थः ॥ ३१ ॥ चेतनस्यार्थसस्पर्शेवेदननियमोबालपश्वादिष्वपिप्रसिद्धइत्याह ॥ यदिति ॥ स्थावरेष्वपिगुल्मविशेषेस्पर्शमात्रेणपत्रसंपुटीकरणदर्शनात्तद्वेदनसर्वत्रानुमीयतइतिभावः ॥ ३२ ॥ दूरस्थविषयस्यकथंगोलकसस्पर्शइतिपामरशंकामपाकुर्वन्नाह ॥ अच्छस्येति ॥ गोलकातिरिक्तस्यस्वच्छतमस्येंद्रियस्यरश्मयःप्रागुक्तरीत्याजीववेष्टिताःसंतःपुरोवर्तिविषयंक्रोडीकुर्वंत्यालिंगंति ॥ ३३ ॥ चक्षुष्युक्तक्रमस्पर्शादावप्यतिदिशति ॥ एषएवेति ॥ ३४ ॥ शब्देविशेषमाह ॥ शब्दस्त्विति ॥ शब्दस्यवृत्तिप्रतिबिंबनविनापिसाक्षाच्छ्रोत्रद्वारातःप्रवेशोपिसंभवतीतिभावः ॥ इत्थंगंधस्यापिपवनद्वारातःप्रवेशसंभवोऽस्तुनामेत्याशयेनयथासंभवमुक्तन्यायमुपसंहरति ॥ इत्थमिति ॥ ३५ ॥ इदानींरामःप्रसंगात्सर्वेषांप्रतिबिंबानांस्वरूपजिज्ञासुःपृच्छति ॥ दृश्यतइति ॥ यत्मानसानिचआदर्शाश्चतत्समाहारे काचकांस्यमणिजलादियंत्रदारूणामौदरेषुउदरान्निर्गतेषुनवपल्लवादिषुयत्प्रतिबिंबितघटमुखप्रभादिएतत्किमात्मकंतन्मेब्रूहीत्यर्थः ॥ ३६ ॥

यप्रतिबिंबस्यसत्यत्वेपिचिद्यतिर्बिंबभूतयोर्व्यष्टिसमष्टिजीवयोर्विवानिरिक्तरूपर्भातिमाप्रसिद्धंनिर्मसकुशक्य तथात्यंतजडयोर्मुखदर्पणयोर्घटचित्तसत्त्वोर्वापरस्परसापेक्षप्रति बिंबरूपद्वर्यमितिकिंवाच्यमित्याशयेनोत्तरमाह ॥ अत्यंतेति ॥ दृशार्थैतस्यात्मनोर्भातिसिद्धि ॥ ३७ ॥ नकेवलप्रतिबिंबमात्रभानिरपितुजगदपीत्याह ॥ तावदिति ॥ अप्य र्थेतुशब्द ॥ तावन्मात्रभातिमात्रम् ॥ अतएवमत्र्यजगतिविश्वासोमास्तु ॥ अहमित्यादि प्रपंचस्तरंगस्थानीयश्चिज्जलात्पृथगसन्नित्यर्थ ॥ वर्त्तमानतुसदाचिज्जलमेवेत्य र्थ ॥ ३८ ॥ ३९ ॥ हेरामत्वनित्यमसक्तमति सन्शांतात्मपाशुसुखवु खवेत्तीतितत्पाशुसुखवु खविद्बुद्धिर्यस्यतथाविधश्चभूत्वाअस्तासमस्ताभवलक्षणामयरूपामायायस्यत थाविधःसन्समतायांब्रह्मस्वभावेनिविष्टमतिस्तिष्ठेत्यर्थ ॥ ४० ॥ ॥ इतिश्रीवासिष्ठम॰तात्पर्य॰प्रकाशेनिर्वाण॰पू॰पंचाशत्तम सर्ग ॥ ५० ॥ ॥ ५ ॥ ॥ जीव

॥ श्रीवसिष्ठउवाच ॥ ॥ अत्यंतजडयोरेवजीवयोरिवतन्मिथ ॥ प्रतिबिंबदृशोभ्रांतिविद्धिवेद्यविदांवर ॥ ३७ ॥ तावन्मात्रजगत्त्वेतद्वि श्वासोमातवास्त्विह ॥ अहमित्यादिस्तरंगोवर्त्तमानंसदाजलम् ॥ ३८ ॥ परांभोधौतुनास्त्येवंदेशकालक्रियादिकम् ॥ तन्मयैकतयानि त्यमात्मासर्वत्रसर्वग ॥ ३९ ॥ नित्यमसक्तमतिर्मुदितात्माशांतमपाशुसुखवु खविदत ॥ तिष्ठनिविष्टमति समतायामस्तसमस्तभवाम यमाय ॥ ४० ॥ ॥ इ॰वा॰वा॰दे॰मो॰नि॰पू॰ अक्षसंवेदनविचारयोगोपदेशोनामपंचाशत्तम सर्ग ॥ ५० ॥ ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ नपुनर्भवत पूर्वसपन्नाश्चक्षुरादय ॥ यथाकमलजस्यैतत्सर्वमेवत्वयाश्रुतम् ॥ १ ॥ ब्रह्मपुर्यष्टकस्यादावर्थसंवि पयोदिता ॥ पुर्यष्टकस्यसर्वस्यतथैवोदेतिसर्वदा ॥ २ ॥ विद्धिपुर्यष्टकजीवोयोगर्भस्थेंद्रियोदय ॥ यथयाभावयत्याशुतत्तयापरिपश्य ति ॥ ३ ॥ इंद्रियाणींद्रियार्थांस्त्वविद्धिसंवेदनंस्वकम् ॥ संपन्नंचयथातत्तेप्रोक्तमाधमन स्थितौ ॥ ४ ॥

त्वानिमनोदेहपुर्यष्टकमितित्र्यम ॥ अबोधादेवबोधेतुमद्वैवैकमितीर्यते ॥ १ ॥ कल्पनोन्मुखतांयातमित्यादिनावर्णितमहंकारदेहेंद्रियादीनांयागसतांकल्पनजीवसमष्टेर्पद्मज स्येचव्यष्टेस्तथापितुल्यमितितात्पर्यैत्वयाज्ञातमेवेतिवक्ष्यमाणोपोद्घातायप्रथममनुवदति ॥ नपुनरिति ॥ अप्यर्थेपुन शब्द ॥ कमलजस्यैवभगवतोपिसष्टे पूर्वमनाद्यतमित्यादि वर्णितब्रह्मस्वभावेस्थितस्यचक्षुरादयोनसंपन्नाइत्येतत्सर्वमेवत्वयामदुक्तवचनतात्पर्यैश्रुतमवधारितमित्यर्थ ॥ १ ॥ एवंपुर्यष्टककल्पनोत्तरव्यवहारायार्थकल्पनमपिसमष्टिवद्वक्ष्य टीमामित्याह ॥ ब्रह्मेति ॥ ब्रह्माहिरण्यगर्भ समष्टिपुर्यष्टकजस्ययथासर्गादौव्यवहारत्वार्थसंविदुदितातथासर्वस्यव्यष्टिपुर्यष्टकस्याप्युदेति ॥ २ ॥ तदेवगर्भस्थितिमारभ्यदर्शय ति ॥ विद्धीति ॥ योव्यष्टिजीवोगर्भस्यएवचक्षुरादींद्रियोदयविशिष्टपुर्यष्टकात्माचेतनासिसंपन्नस्ततारभ्ययथयाव्यवहर्तव्यंवस्तुभावयतितयातत्तद्वासनयापरिपश्यती त्यर्थ ॥ ३ ॥ एवंचआधमन स्थितौहिरण्यगर्भमनोव्यापारेयथातत्त्वकस्तवेदमिंद्रियाणिइंद्रियार्थांस्त्वमर्थस्वतयातत्तेतदापिव्यष्टे संपन्नमितिमयात्मोक्तफलतीत्यर्थः ॥ ४ ॥

मेवेत्यर्थः ॥ ५ ॥ वेद्यदोषात्संवेदनंतत् सर्गात्पूर्वसंभवतीत्यटिसमस्त्योरैकैवशुद्धासंवित्ततस्तदनंतरंअहंवेदनालक्षणानतजीवपुर्यष्टकान्वितासास्तुतथापिसंवेदनस्वरूपमनिंदितमेवेत्यर्थः ॥ ५ ॥ वेद्यदोषात्संवेदनंतत्

सर्गात्पूर्वसंभवतीत्यटिसमस्त्योरैकैवशुद्धासंवित्ततस्तदनंतरंअहंवेदनालक्षणानतजीवपुर्यष्टकान्वितासास्तुतथापिसंवेदनस्वरूपमनिंदितमेवेत्यर्थः ॥ ५ ॥ वेद्यदोषात्संवेदनंतत्
कुतोननिघ्यतेइतिचेद्वेद्यस्यपरमार्थतोऽसत्त्वादित्याह ॥ नत्विति ॥ एकत्वादिहेतुभिरनामयेसंवेदनेपरस्यतदन्यस्यास्तितासत्यतानत्वित्यन्वयः ॥ नास्तित्वेचअभावत्वादयस्त्रयो
हेतवः ॥ अभावत्वाद्देशकालकृतपरिच्छेदवत्वादनेकत्वाद्वस्तुकृतपरिच्छेदवत्वादशून्यत्वात्स्थूलत्वाच्चेत्यर्थः ॥ ६ ॥ ननुसंवेदनमेवमनस्तादिभावंगच्छतीत्युक्तेतत्रमनस्तादीना
मसत्यत्वेसंवेदनमेवासत्यंकिनस्यात्तत्राह ॥ चेत्यादीति ॥ चेत्यमतव्यादिगोचरबुद्धिवृत्त्यध्यारोपमात्रतन्नवास्तवमनस्ताप्राप्तिःसेत्यर्थः ॥ ७ ॥ तर्हिविद्याविलासाविर्भूतस्वरू

शुद्धासंवित्संभवंतीसंवेदनमनिंदितम्॥ ततोहंवेदनानंतजीवपुर्यष्टकान्विता ॥ ५॥ नत्वेकत्वादनंतत्वादवेद्यत्वादनामये॥ अभावत्वा
दनेकत्वादशून्यत्वात्परास्थिता ॥ ६ ॥ चेत्यादिबुद्ध्यातत्किंचिन्नमनस्तांचगच्छति ॥ नचजीवत्वमायातिनचपुर्यष्टकात्मिका ॥ ७॥ नवि
द्यादिविलासोस्तिसोस्तिनास्तीवयःसदा ॥ परमात्मेतिकथितोमनःषष्ठेंद्रियातिगः ॥ ८ ॥ तस्मात्संपद्यतेजीवश्चिन्मूर्तिर्मननात्मकः॥
भ्रमःकेवलमित्याद्यउपदेशायगीयते ॥ ९ ॥ यतःकुतश्चित्संपन्नेत्वविद्यामयआमये ॥ उपदेश्योपदेशेनप्रविलीनेविचारणात्॥ १० ॥
प्रशांतसकलाकारंज्ञानंतत्रावशिष्यते ॥ यत्राकाशमपिस्थूलमणाविवमहाचलः ॥ ११ ॥ यत्रोद्यदाचारमपिसदप्यसदिवस्थितम् ॥
जगज्जान्विपर्यास्यत्वाकायेत्वंतिष्ठनिर्मले ॥ १२ ॥ असन्मयमविद्यायारूपमेवतदेवहि ॥ यद्वीक्षितासतीनूनंनश्यत्येवनदृश्यते
॥ १३ ॥ आलोकितंनामकथमवस्तुकिललभ्यते॥ प्रयत्नेनापिसंप्राप्तंमृगतृष्णांबुकैरिव ॥ १४ ॥

पत्वात्पूर्वतदप्यसत्किनस्यात्तत्राह ॥ नेति ॥ आदिपदाच्चरमप्रमाणमननादिपरिग्रहः ॥ योमूढैर्नास्तीवेतिकल्प्यतेसपरमात्मासदास्ति ॥ ८ ॥ यश्चद्वितीयएवसःतर्हितस्मात्सर्वएत
तआत्मानोव्युच्चरतीतिश्रुत्याअग्निविस्फुलिंगन्यायेनजीवसंपत्तिःकथमुक्तेतिचेदुपदेशायकल्पनयेत्याह ॥ तस्मादिति ॥ ९ ॥ अतएवाविद्यारोगस्यनमूलंचित्यंकिंतुचिकित्सै
वचिंतनीयेति ॥ मूलकल्पनादिश्चिकित्सोपायएवनवास्तवइत्याह ॥ यतइति ॥ प्रविलीनेसतिस्वरूपज्ञानमेवावशिष्यतइतिपरेणान्वयः ॥ १० ॥ ११ ॥ उद्यदाचारंनिष्पद्य
मानव्यवहारार्थक्रियाशालीतिसद्व्यावहारिकसत्यमप्यसच्छून्यमिवयत्रस्थिततत्रत्वजगज्जान्विषयास्यक्त्वानिर्मलेजीवन्मुक्तःकायेसत्येऽवतिष्ठ ॥ १२ ॥ इदानीमविद्यायाः
स्वरूपमाह ॥ असन्मयमिति ॥ १३ ॥ मृगतृष्णांबुकैरिवसंप्राप्तदृष्टांतोप्यप्रसिद्धइत्यर्थः ॥ १४ ॥

असदेवसद्भातियत असदज्ञानादेवास्यसत्यतेत्यन्वय ॥ १५ ॥ सत्यात्मन सन्निधानादत्यंतमसत्यायाअप्यविद्याया कल्पनाकल्पितेत्यर्थ ॥ १६ ॥ तस्यतेजीवस्योपदेशाय
तस्या अविद्यायाहेतोर्जीवादिकल्पमाक्ता ॥ १७ ॥ आबोधनोन्मुखीयासार्थदर्शनोन्मुखासतीयथाभावयतीतिपरेणान्वय ॥ १८ ॥ बालेनसभावितोयक्षकद्दवसत्यःअ
सत्योवाभवतु अपतुपचतन्मात्रस्यपचीकरणात्मिकादिहकलनासत्तयासत्यतयासभावयतीत्युत्तरेणान्वयः ॥ १९ ॥ तमात्मनिदेहात्मनिरध्रान्इन्द्रियद्वाराणि ॥ छांदसपुंस्त्वम्
॥ २ ॥ एभ्य पचतन्मात्रेभ्य परमार्थतोऽन्यदेवान्यार्थमिन्द्रियद्वारे पश्यति ॥ २१ ॥ तमसर्वमिन्द्रियमनःप्राणादिर्जत ॥ इदपटादिवासम ॥ भावनासनाम् ॥ २२ ॥ तमवि
पर्येन्द्रियसयोगाभिव्यक्तस्वात्मसुखमेवविषयसुखतयासभावयतीत्याह ॥ रश्मिजालमिति ॥ २३ ॥ एषस्वाभाविकस्वसंवेदनमेवविषयसन्निकर्षाज्जातमहकारात्मनोधमइति

असदेवसदेवासदज्ञानादस्यसत्यता॥ज्ञानाद्यथास्थितंवस्तुदृश्यतेनस्वतिभ्रम ॥१५॥ अविद्यायाविचारोयजीवपुर्यष्टकादिका॥
अप्यत्यतमसत्याया कल्पनाकल्पितात्मन ॥१६॥ तस्यास्तउपदेशायसेयंजीवादिकल्पना॥ कृताशास्त्रे प्रबोधायतांत्वमेकमनाःशृ
णु॥१७॥ जीवत्वमिवसंप्राप्तापुर्यष्टकपदस्थिता॥ कलाकलककलिताचितिराबोधनोन्मुखी॥१८॥ यद्यथाभावयत्याशुतत्तथानुभ
वत्यलम्॥सत्योभवत्वसत्योवाबालेननिशियक्षक ॥१९॥पचतन्मात्रकलनासभावयतिसत्तया॥तत्रात्मनितथारध्रान्प्रपश्यतितथो
दितान्॥ २० ॥ एभ्यएवसमुत्पन्नंयद्धिस्वंभूतपंचकम्॥ पश्यत्यनन्यदन्याभशाखाशतमिवांकुर ॥ २१ ॥इदमतरिदयात्थमितिनिश्च
यवांस्तत ॥जीवोभावययादत्तेतत्तथाप्रत्ययत्यय॥ २२॥ रश्मिजालमिवेंदोर्यदात्मन प्रतिभासनम्॥ यात्यस्पर्शतयातेनतदेवाशूर
रीकृतम्॥ २३॥ मरिचस्येवयत्तैक्ष्ण्यशून्यत्वमिवखस्ययत्॥ आत्मनोवेदनयच्चतदेवान्यदिवस्थितम्॥२४॥ अत्रैवनिश्चयंयत्वानि
यम सुदृढीकृत ॥ अनेनेत्यमनेनेत्यभाव्यमित्यवखंडितम्॥ २५॥स्वभावेतरनामासौस्वसकल्पमयात्मक ॥ कश्चित्कदाचिद्भवतिस्व
भावेनैवनान्यया॥ २६॥ आत्मनैवेदमखिलसंपन्नंद्वैतमद्वयम्॥ खडोमधुरसेनेवम्रदेवचमहाघट ॥ २७॥ सन्निवेशविकारादिदेश
कालादिसंभवात्॥ संभवत्यत्रनत्वीशेदेशकालाद्यसंभवात्॥ २८॥

संभावयतीत्याह ॥ मरिचस्येति ॥ २४ ॥ अभ्मांसारिकविषयभोगेष्वेवपुरुषार्थपर्यवसाननिश्चययत्त्वाऐहलौकिकपारलौकिककर्माचरणनियम सुदृढीकृत ॥ अनेनलौकि
ककर्मणा ॥ अनेनवैदिककर्मणा ॥ अवखंडितनश्वरसुखमुद्दिश्येत्यर्थ ॥ २५ ॥ तथैक भवत्तिनियम स्वाभाविकरागाविकृतइतरस्तुशास्त्रकृत ॥ द्विविधोप्ययसकल्पमयात्म
कतयो कदाचित्कश्चिदेवस्वाभाविकपुरुषयत्नेनैवेतरजित्वाभवतिनान्ययेत्यर्थ ॥ २६ ॥ तथोभयभाप्यत्रआत्मैवस्वभावशास्त्राभ्यतरानुसारीतत्तद्व्यापारसाधनफलात्मनावि
वर्ततइत्याह ॥ आत्मनैवेति ॥ खंड मधुसारशर्कराविशेष ॥ २७ ॥ यद्यपिसंबपटादौपूर्वतनप्रर्पिडावस्थयोर्विनाशाविकारीतथापिमाधुर्यमृत्स्वरूपाविनाशात्तवंशोविवर्तद
ष्टांती मद्विवक्षसन्निविकार.संभवतितद्धर्म्यात्स्याह ॥ सन्निवेशेति ॥ अभ्रमधुमरादी ॥ ईशेप्रमाणि ॥ २८ ॥

अथवाखंडोमधुरसेनेवेतिवाक्येखंडोवनखंडः मधुरसेनवसंतद्रवेणेवेत्यर्थस्तथाचाविकारएवव्रक्षविकारहेतुर्जलभागोदृष्टांतइत्याशयेनाह ॥ इतइति ॥ यथावृक्षप्रविष्टोरसोज लमित पत्रमित पुष्पमहमितिवैचित्र्येणोदित सन्अद्वित्वेपिद्वितांवहनूदृष्टस्तथानःस्वात्मनिप्रसिद्धसत्तारूपब्रह्मापिइत पटइत कुड्यमहमित्यादितोभेदात्सर्वजगदात्मनाआत्मनि द्वित्वमाहरद्विद्धीतिपरेणान्वय ॥ २९ ॥ ३० ॥ यथावाअंभोदोमेघःअयग्रीष्मेअर्करुगेवाहमितितादृप्येणतिष्ठति ततआयवर्षारंभेवारिदानावसरेवारिदोहमितितिष्ठति ततोभू मिप्रवेशेनाकुरातर्जलात्मनाप्रवेशेअयाकुरोहमितितिष्ठति तथाआत्मापिकालभेदेनभावाभावाकारोभूत्वातिष्ठतीत्यर्थ ॥३१॥ अयचजगद्विवर्त्तनियमक्रम कल्पितोपिनकेन चिदन्यथाकर्तुंशक्यइत्याह ॥ इतीति ॥ सर्वेश्वरेब्रह्मणिततप्रसिद्धम ॥ ३२ ॥ एववस्तुस्वभावनियतिरपिवस्तुभेदभिन्नानान्यथाकर्त्तुंशक्येत्याशयेनाकाशादिस्वभावस्याज्ञात ब्रह्मस्वभावस्यचवैलक्षण्यमाह ॥ आदर्शेतिद्वाभ्याम् ॥ आदर्शवत्स्वच्छेआकाशेस्व स्वीयोभागःकार्यवानेवप्रतिविवति ॥ कुतः ॥ व्यतिरेकासभवतःआकाशेआकाशकार्ये

इतःपुष्पमितःपत्रमहमित्युदितोयथा ॥ खंडेस्वात्मनिनःसत्तारसोऽद्वित्वेद्वितांवहन् ॥ २९ ॥ इतःपटइतःकुड्यमहमित्यादितस्तथा ॥ सर्वात्मनात्मनिब्रह्मविद्धित्वंद्वित्वमाहरत् ॥ ३० ॥ अद्यांकुरोहमद्यार्करुगहंत्वद्यवारिदः ॥ यथेतितिष्ठत्यंभोदस्तथात्मासदसद्वपुः ॥ ३१ ॥ इतिभाव्यमनेनेदमित्थंसर्वेश्वरेततम् ॥ क्रमंखंडयितुंलोकेकस्यनामास्तिशक्तता ॥ ३२ ॥ आदर्शस्वच्छआकाशेनैवस्वःप्रतिबिंबति ॥ व्यतिरेकासंभवतःकचत्येवहिकेवलम् ॥ ३३ ॥ ब्रह्मणित्वात्मनात्मैवस्थितःकचतिबिंबति ॥ द्वैतीभवत्यदेहोपिचिन्मयत्वात्स्वभावतः ॥ ३४ ॥ यद्यथैवात्मकचनंवेत्तितंभवतात्मना ॥ असत्यमपितन्नेहव्यभिचारीकदाचन ॥ ३५ ॥ हेमत्वकटकत्वेद्वेसत्यासत्यस्वरूपिणी ॥ हेम्निभांडगतेयद्वच्चित्वाचित्त्वेतथात्मनि ॥ ३६ ॥ सर्वगत्वाच्चितेश्चित्त्वंनित्यंमनसिविद्यते ॥ हेमत्वंकटकस्येवजडभावःस्थितोन्यदा ॥ ३७ ॥ चित्त्वजाड्यात्मकंचित्तंदृढंभावयतिस्वयम् ॥ यथायदैवयद्भावंतथाभवतितत्तदा ॥ ३८ ॥ कालेकालेचिताजीवस्त्वन्योन्योभवतिस्वयम् ॥ भाविताकारवानंतर्वासनाकलिकोदयात् ॥ ३९ ॥

भूतांतरेवाआकाशभेदाभावात् ॥ किंतुकेवलमाकाशनिष्प्रतिबिंबदर्पणोदरवत्स्वच्छतयाकचतिदीप्यतएवेत्यर्थ ॥ ३३ ॥ साविद्यंब्रह्मतुनतथेत्याह ॥ ब्रह्मणीति ॥ कचतिसर्व वस्तुशक्त्यादिरूपेणदीप्यते ॥ जीवरूपेणप्रतिबिंबति ॥ भेदकल्पनयाचद्वैतीभवति ॥ ३४ ॥ अस्त्वेवकिंततस्तत्राह ॥ यदिति ॥ तत्रसर्गादौयद्वस्तुस्वभावेनात्मकचनवृत्ततंस्व भावमसत्यमपिभवतासत्येनात्मनासत्यवेत्तिसचनियमोनकदाचनव्यभिचारीतिसर्वापिनियतिःसिद्धेत्यर्थ ॥ ३५ ॥ सत्यानृतमिथुनीभावेवाचारंभणश्रुतिदर्शितन्यायेनदृष्टा तमाह ॥ हेमत्वेति ॥ ३६ ॥ अतएवप्रथमकार्येमनसिचिज्जडोभयरूपतादृश्यतेतत्रयन्नित्यतत्सत्यमित्याह ॥ सर्वगत्वादिति ॥ अन्यदाकदाचिदित्यर्थः ॥ ३७ ॥ चित्तजाड्ये तिपाठेचित्तस्यजाड्यजडदेहविषयाकारस्तदात्मकचित्तदृढभावनयायदैवयथादेवनरस्थावरादिनायेनप्रकारेणयदायद्भावभवतितदातथैवतद्भावभवतिअनुभवतीत्यर्थः ॥ ३८ ॥ अतएवकालभेदेनजीवस्याहमाकारभेदानुभवइत्याह ॥ कालइति ॥ चिताअंतर्वासनाकलिकानामुदयाद्विकासाद्वैचित्र्येणभाविताकारवान्सन्अन्योऽन्योभवति ॥ ३९ ॥

यथास्वप्नदृष्टोग्रामोवनादिसत्तान्यतेक्षणाद्वनादिभावंयातितथादेहभूतोयंजीवोपिदेहादेहांतरभावंयाति ॥ यत स्वप्नवदेवप्रतिभासात्मकइत्यर्थः ॥ ४० ॥ यथास्वप्नेप्रतिभासत इतिप्रतिभासोदृश्यमानोनरोझटितिकुड्यभूत्वापटोभवेत्तथामरणमूर्छायामपिप्रतिभासमानमिवदेहांतरंभवतीत्यर्थः ॥ ४१ ॥ नन्वयंदेह प्रत्यक्षंम्रियतेवसतेचसकथंदेहांतरंभवेत्त त्राह ॥ असत्यमेवेति ॥ मरणजननादिकमपिमर्तुःप्रातिभासिकमेव जीवतांतुतद्देहस्यशास्त्रादिदर्शनंस्वाविद्याकल्पितस्यैवनतद्वासनामयस्येतिभावः ॥ स्वस्याप्यरूपवद्देहांतरवदि त्यर्थः ॥ ४२ ॥ तर्हिकिंयौवनवार्धक्यवद्देहांतरमप्येतद्देहस्यकालिकःपरिणामोनेत्याह ॥ कालेनेति ॥ एतादृशमेतद्देहरूपकालेनअप्यत्वद्देहांतरंभावएतीतिन यत प्रकृतमिदंश रीरमन्यापवस्थाभेदेपितदेवेदमितिप्रत्यभिज्ञानिश्चयारूढम् ॥ एतेभूतभाविदेहास्तुन प्रत्यभिज्ञानाभावादन्येनान्येसंतिनसंतीत्यादिभ्रांतिगच्छंतिअतस्तेपांस्वतोजीवतएवअसो वासनयासमद्भवइत्यर्थः ॥ ४३ ॥ ननुकदापिजागद्दृष्टेदेवादिशरीरभावेकास्यवासनातत्राह ॥ वस्त्विति ॥ इदंतुजगद्रूपंजीवस्वप्नेंतर्गतंविद्धि ॥ तस्यभयंआवसथात्रय स्वप्नाइतिश्रुते

स्वप्नेदृष्टोयथाग्रामोयातिसत्तान्यतेक्षणात् ॥ देहादेहतयायातिदेहोयंप्रतिभात्मकः ॥ ४० ॥ प्रतिभासोयथास्वप्नेनरः कुड्यपटोभवेत् ॥ भवत्यसत्यमेवेदंदेहांतरमिदंस्वतः ॥ ४१ ॥ असत्यमेवम्रियतेत्वसत्यंजायतेपुनः ॥ जीवः स्वप्रतिभासेनस्वप्नवत्स्वान्यरूपवत् ॥ ४२ ॥ कालेनैतादृशंरूपमिदंनान्यत्वमेतिवै ॥ प्रकृतंनिश्चयारूढंभ्रमत्येतेभवः स्वतः ॥ ४३ ॥ वस्तुदृष्टमदृष्टंचस्वप्नेसमनुभूयते ॥ जीवस्वप्नेजगद्रूपं विद्धिवेद्यविदांवर ॥ ४४ ॥ अजाग्रद्दृष्टिदृष्टोयः स्वाभिधानादिनेरितः ॥ नस्वप्नोविद्यतेतस्मादच्छात्माचितिमात्रकम् ॥ ४५ ॥ अथापूर्वा भिधस्वप्नेयथापश्यतिनान्यथा ॥ अप्रदृष्टंतथैवार्थंचेतनश्चित्प्रपश्यति ॥ ४६ ॥ प्राक्तनीवासनाद्यापिपौरुषेणावजीयते ॥ त्यक्त्वा कुकर्माध्य यत्नेनप्रयातिहिसुकर्मताम् ॥ ४७ ॥ मोक्षाद्दतेनशाम्यंतिजीवतांचक्षुरादयः ॥ उन्मज्जंतिनिमज्जंतिकेवलंदेशकालतः ॥ ४८ ॥

रित्यर्थः ॥ इदंतुस्वप्नेअननुभूतस्यापिदर्शनमिहजन्मन्यननुभूताभिप्रायेण ॥ दृष्टादृष्टंचश्रुतंचाश्रुतंचानुभूतंचाननुभूतंचसर्वंपश्यतीतिश्रुतिमवलम्ब्योक्तम् ॥ वस्तुतस्त्वनादिसं सारेनाननुभूतंकिंचिदस्तीतिमरणकालेभाविदेहारंभककर्मोद्बोधितवासनानुसारेणैवदेहांतरोद्भवइतिबोध्यम् ॥ ४४ ॥ तर्हिवाक्यजन्यब्रह्मसाक्षात्कारलभ्यब्रह्मभावोपिदेहांतरव द्वासनामयः स्वप्नएवकिंनस्यात्तत्राह ॥ अजाग्रदिति ॥ यः शिवमद्वैतंचतुर्थंमन्यंतइतिस्वाभिधानादिनाईरितः अजाग्रद्दृष्ट्यातुरीययादृष्टः परमात्मातस्यउक्तलक्षणस्त्रिविधः स्वप्नए वनविद्यतेजाग्रत्किंचापितदनुभवाभावेनतद्वासनाप्रसिद्धेस्तस्यवासनामयत्वायोगात्तस्मात्सस्वच्छात्माचैतन्यमात्रमित्यर्थः ॥ ४५ ॥ सएवचिदात्माचेतनजीवोभूत्वाअथअपू र्वाभिधमभिनवंचवर्तमानमर्थंयथाचिरस्वप्नेस्वाभावदेवपश्यतिनान्यथातथैवाप्रदृष्टमप्यर्थंप्रपश्यतीत्यर्थः ॥ ४६ ॥ अतएवादृष्टविषयेविभावमाभवयेनदृढीकृतवासनापूर्वदृष्टविष योपामनोमयतीतिपुरुषप्रयत्नभावल्यंप्रदर्शितमित्याह ॥ प्राक्तनीति ॥ ४७ ॥ एवंजीवस्यवासनापारंपर्येणतिलक्षणोदेहादिबंधोदर्शितः इदानींकदातच्छांतिरितिवाकांक्षायामाह ॥ मोक्षादिति ॥ ४८ ॥

मोक्षंविनैवदेहादिनिवृत्तिः किंनस्यात्तत्राह ॥ चितइति ॥ यतश्चितोयावन्मोक्षंदेहाकारकलनावासनातिष्ठत्येव॥स्वकलनैवैतस्यजीवस्यपंचात्मादेहोऽग्रेतिष्ठतीव ॥ यथाशिशो र्भावितोमहायक्षोग्रेतिष्ठतितद्वद्दुर्निवारइत्यर्थः ॥४९॥ इदानींकथंचित्स्थूलदेहनिवारणेपिमोक्षंविनालिंगदेहलक्षणपुर्यष्टकंदुर्निवारमित्याशयेनतद्दर्शयति ॥ मनइति॥५०॥ ननुशास्त्रेज्ञानेंद्रियकर्मेंद्रियप्राणाभूतानिअंतःकरणमविद्याकामकर्माणिपुर्यष्टकमित्युक्ततत्तुपंचीकृताकाशवाय्वादिलिंगघटितस्थूलांतमूर्त्तरूपमपिस्यात्तत्कथममूर्त्तमनोबु द्ध्याद्यष्टकमेवपुर्यष्टकमुक्तंतत्राह ॥ अमूर्त्तएवेति ॥ त्वदुक्तमूर्तपुर्यष्टकंतदास्याद्यदिपंचीकरणेनामूर्त्तानांतन्मात्राणांस्थौल्यंस्यात् ॥ अयंतुतन्मात्ररूपोलिंगात्माअमूर्तएव ॥ अस्यखल्वपंचीकृताकाशत्वमतिपीनतानिरवधिकस्थौल्यंतच्चनसंभवति नह्यमूर्त्तवासनाकोटीनामपिमेलनेस्थौल्यंदृष्टंयदास्यखत्वमेवदुर्लभंतदास्थूलवातता महानूगुल्मोवृक्ष इवात्यंतमसंभाविता ॥ एवंस्थूलतेजोजलपृथ्वीतापि ॥ एवंचस्थूलभूतानामेवासंभवेअस्यपरमाणोरप्यतिसूक्ष्मस्यदेहतासुमेरुतेवात्यंतासंभावितेतिनभौतिकदेहांतपुर्यष्टकंव

चितःस्वकलनात्तस्यदेहोग्रइवतिष्ठति॥ पंचात्माभावितोसत्योमहायक्षःशिशोरिव॥ ४९॥ मनोबुद्धिरहंकारस्तथातन्मात्रपंचकम्॥ इतिपुर्यष्टकंप्रोक्तंदेहोसावातिवाहिकः॥ ५० ॥ अमूर्त्तएवचित्तात्माखत्वमस्यातिपीनता॥ वाततास्यमहागुल्मोदेहतास्यसुमेरुता ॥५१॥ विरजस्त्वक्रमेणैवनिरवस्थस्तुमुक्तिभाक्॥ सुषुप्ततैकावस्थास्यजडाःक्रोडीकृतायया॥ ५२॥ स्वप्नताप्नीतथावस्थादेहप्रत्यय शालिनी॥ आमोक्षंभ्रमतीहायमितिस्थावरजंगमैः ॥ ५३ ॥ कदाचिद्धिसुषुप्तस्थःकदाचित्स्वप्नवत्स्थितः ॥ आतिवाहिकदेहोयंसर्व स्यैवावतिष्ठते॥५४॥ यदासुषुप्तभावस्थोभाविदुःस्वप्नवेधितः॥ तदाकालानलसमस्तिष्ठत्यनुदिताकृतिः॥ ५५॥

र्ण्यतइत्यर्थः ॥ ५१ ॥ मुक्त्यनुपयोगादपिनमोक्षशास्त्रेत्रस्थूलसद्भावकल्पनायुक्तेत्याशयेनाह ॥ विरजस्त्वेति ॥ मनोमात्रमेवदेहादिप्रपंचश्चेन्मनसोवैराग्याद्यभ्यासेनविरज स्त्वेशमादिसाधनसंपत्त्यावाक्याज्ज्ञानोदयक्रमेणमनःकल्पितस्वप्नप्रायप्रपंचस्यतन्मूलाज्ञानस्यचबाधेस्वकार्यकारणावस्थाद्वयशून्यस्यमुक्तिरुपपद्यते ॥ स्थूलभूतभौतिक मूर्त्तप्रपंचाभ्युपगमेतुतादृशस्यज्ञानेनबाधादर्शनान्नमुक्तिरुपपद्यतइत्यर्थः ॥ एवंचनिष्कर्षेस्वप्नसुषुप्तीद्वेएवावस्थेनजाग्रन्नाम्नीस्थूलविषयाअन्याअवस्थाकेनचिदुपपादयितु शक्येत्याशयेनतेविभज्यदर्शयति ॥ सुषुप्ततेतिसार्धेन ॥ ययाजडाःसर्वेदेहादिप्रपंचावासनात्मनोपसंहृत्यक्रोडीकृताः ॥ ५२ ॥ इतिएवंपरिदृश्यमानप्रकारेणस्थावरजंगमैरा कारैरातिवाहिकदेहएवआमोक्षाद्भ्रमतीत्यर्थः ॥ ५३ ॥ ५४ ॥ भाविभिर्दुःस्वप्नैर्वासनात्मनांतःप्रविष्टैर्बोधितोविद्धइवगतस्मृतिरतएवानुदिताकृतिश्चित्प्रतिबिंबखचितत्वादुपसं हृतजगत्त्वाच्चकालानलसमोदीप्तस्तिष्ठति ॥ अनेनातज्ज्ञानशून्यनैयायिकादिसुषुप्तिःप्रत्युक्ता ॥ ५५ ॥

नमस्थावरादिनिकृष्टावस्थासुजाड्याधिक्यात्सुषुप्तिप्रायमित्याह ॥ स्थावराद्यास्विति ॥ अप्यर्थेचशब्द ॥ तथाचकल्पवृक्षाणांपुण्याधिक्यात्कृमिकीटसुषुप्तिविदु खाभा वादानदाधिक्येपिनमनुष्यादिवत्प्रबोधोस्तीतितमस्त्वितैवेत्यर्थ ॥ ५६ ॥ तथाचचित्तजाड्यमेकमेवसुषुप्तिश्चित्तभ्रमणमेवस्वप्नइतिश्चित्तस्यतत्त्वबोधएवबंधमुक्तिस्तुर्यतैवास्य जागदिति प्रयत्नसन्नमित्याह ॥ सुषुप्तेत्यादिना ॥ ५७ ॥ ५८ ॥ ५९ ॥ प्रबोध उत्कृष्टचिन्मात्रस्वरूपोभवति ॥ सचबोधोयुक्ते पुरुषप्रयत्नत ॥ ६० ॥ तत्त्वतोयावान्यश्चेति ज्ञातप्रमाणोजीव सर्वतयोजानातिभासयतिसाक्षीतन्मयएवभवतीत्यर्थ ॥ यस्तुज्ञातप्रमाणःसोपिपरमार्थत स्वस्यएवाज्ञानाच्छिलावद्दृढीकृतेस्वहृदयेसुदीर्घस्वप्नविभ्रमती प्रपश्यपश्यतीतिपरेणान्वय ॥ ६१ ॥ तर्हिकिंजीवानांहृदयेघासस्वप्नमयमस्तिनेत्याह ॥ जीवानामित्यादिना ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ अस्यजीवाणो सौपुप्तीस्थितिर्वा

स्थावराद्यास्ववस्थासुकल्पवृक्षदशासुच ॥ भवत्येवसुपुप्तस्योघनमोहशिलाघन ॥५६॥ सुपुप्ततास्यजडतास्वप्नोत्येयंहिसस्तृति ॥ यप्रबोधोस्यसामुक्तिस्तज्जाग्रघातुर्यता ॥५७॥ जीवप्रबोधान्मुक्तिर्हिप्रबोधात्परमात्मताम् ॥ सोभ्येतिक्षालितमलतामंकनकतामिव ॥५८॥ जीवप्रबोधान्मुक्तिर्यासाचहद्विविधोच्यते ॥ एकाजीवन्मुक्ततेतिद्वितीयादेहमुक्तता ॥ ५९ ॥ जीवन्मुक्तिर्हितुर्यत्वतुर्यातीतपदत त ॥ योधोजीव प्रबोधोयसच्युद्धिप्रयत्नत ॥६०॥ ज्ञातप्रमाणजीवोंतर्योजानातीहतन्मय ॥ पश्यतीमभ्रयचैवसुदीर्घस्वप्नविभ्रमम् ॥ ६१ ॥ मिथ्योदित स्वहृदयेस्वस्यएवशिलीकृते ॥ जीवानामंतरेत्वन्यन्नकिंचिच्चित्कलांविना ॥६२॥ तामेवान्यतयापश्यन्मुधैवपरिशोचति ॥ जीवाणोरंतरेत्वन्यन्नकिंचित्परमार्हते ॥ ६३ ॥ यत्रतत्रजगदृष्टमहोमायाविजृंभितम् ॥ स्याल्यतःकथदवूनांयथानानाभ्रमोदय ॥६४॥ जीवाणूनांतथैवांतर्मिथ्यासंसरणोदय ॥ बधोस्यवासनाबंधोमोक्ष स्याद्वासनालय ॥ ६५ ॥ वासनांतास्यसौपुप्तीस्वप्नेविस्फुरतिस्थिति ॥ घनवासनमोहोयंजीव स्थावरतादिभाक् ॥६६॥ मध्यस्थवासनस्तिर्यक्पुरुषस्तनुवासन ॥ यदांतजींविर्तेनांतोनहिजाताघटादय ॥ ६७ ॥ जीवैक्याद्भयो सत्ताग्राह्यग्राहकयोस्तदा ॥ आत्मानात्मसमालीढोबहिरंतर्यदाञ्चिता ॥ ६८ ॥

सनानामंतोऽवधि ॥ तुर्यतुर्यातीतयोर्निर्वासनत्वात् ॥ सचस्वमेस्फुरतिवैचित्र्येणस्फुटीभवतीत्यर्थ ॥ कथस्फुटीभवतितत्राह ॥ घनेति ॥ ६६ ॥ तस्यवासनासुधोत्कर्षादुत्तरोत्तरशुभयोनिप्राप्तिरित्याह ॥ मध्यस्थेति ॥ पुरुषोमनुष्यगंधर्वविद्याधरादि ॥ वासनानांक्षयतारतम्येनवैचित्र्यस्फुटीभावमुक्त्वाभासग्रहणादिवैचित्र्येणापितमाह ॥ यदेत्यादिना ॥ यदायस्मिन्सुषुप्तिविच्युतिकालेदेहांत आनस्वापव्याप्तप्रमाणाद्भावलक्षणनजीवितेनएतावान्देहपरिमितएवाहमित्यत परिच्छेदोभवतितदाघटादय पदार्थास्तहिर्जाता सपन्ना ॥ ६७ ॥ संनुबहि किमतस्तत्राह ॥ जीवैक्यादिति ॥ तदाचक्षुरादिद्वारनिर्गतात करणद्वारानिर्गतेनस्वस्यपरिच्छिन्नजीवेनघटादीनांव्याप्तौघटमहंजानामीतिग्राह्यग्राहकयोर्वासनात्मिकासत्तातत्तद्वैचित्र्येणस्फुटीभवतीत्यर्थ ॥ एतदेवस्पष्टमाह ॥ आत्मेति ॥ अत स्थितआत्माजीवोयदावहिरनात्मसमालीढोभवतितदाचिताभासव्याहकवासनामृगतृष्णेवाव्यस्तविभागेनसोदयाउदेतीत्यर्थ ॥ ६८ ॥

एवहेयोपादेयवैचित्र्यमपिवासनाध्यस्तमेवनवास्तवमित्याह॥ नेहेति ॥६९॥ शोभितास्तत्त्वबोधेनविराजमाना ॥ सबाह्याभ्यंतरजगच्चिद्व्यतिरिक्तेंनविद्यतेकालत्रयेपीत्यर्थ. ॥ ७० ॥ यथाअब्धि समुद्रस्तत्त्वतोविमृष्ट अपास्तसमस्ततरंगबुद्बुदादिभेद खादाकाशादप्यच्छसकलमेकशुद्धजलमेवतथाइदसर्वं जगत्तत्त्वतोबुद्धसत्अपहस्तित निरस्तवास ॥ ७० ॥ नावस्थावैचित्र्यभेदजातयस्यतथाविधमनामयपरपदमेवेत्यर्थ ॥ ७१ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०एकपचाश सर्गः ॥ ५१ ॥ ॥ ६ ॥

जीवस्वप्नोजगत्तत्रासत्यात्परिक्षय ॥ तदर्थमर्जुनाख्यानवसिष्ठेनावतार्यते ॥ १ ॥ ननुस्वप्न सर्वेषाजीवानाप्रत्येकभिन्न ॥ जाग्रत्प्रपचस्तुसर्वेषासाधारण.सर्वै स्वमेवैध र्म्यैणानुभूयमान कथस्वप्न स्यात्तत्राह ॥ यइति ॥ आदित.प्रथमजीवस्यसर्वजीवसमष्ट्यात्मनोय स्वप्नस्तमेवेममस्माकजाग्रदितिकल्पितससारविद्धि ॥ १ ॥ किमर्थमेवक

तदाग्राह्यग्रहणधीर्मृगतृष्णेवसोदया॥ नेहसंत्यज्यतेकिंचिन्नेहकिंचिन्नगृह्यते॥ ६९ ॥ बाह्यांतरकलाकारश्चिदात्मैकःप्रकाशते॥ त्रिजगच्चिच्चमत्कारस्त्वलंभेदविकल्पनैः॥ शोभिताःस्मश्चितिचिरात्सबाह्याद्यंनविद्यते ॥ ७० ॥ अब्धिर्यथाजलमपास्तसमस्तभेदःखादच्छमेवसकलंद्रवमेकशुद्धम्॥ सर्वंतथेदमपहस्तितभेदजातमाद्यंपरंपदमनामयमेवबुद्धम्॥ ७१ ॥ ॥इ०वा०वा०दे०मो०नि०पू०इंद्रियार्थोपलंभविचारोनामैकपंचाशःसर्गः ॥ ५१ ॥ ॥६॥ ॥श्रीवसिष्ठउवाच॥ ॥योजीवस्यादितःस्वप्नोनानाकलनकोमलः॥ तमिमंविद्धिसंसारंनसत्यंनाप्यसन्मयम्॥ १ ॥ नपुंसइवजीवस्यस्वप्नःसंभवतिकंचित्॥ तेनैतेजाग्रतोभावाजाग्रत्स्वप्नकृतोन्नहि॥ २ ॥ जीवस्वप्नमिमंदीर्घंक्षिप्रताप्रतिभासतः॥ असत्यमप्यवस्तुत्वाद्विद्धिवेद्यविदांवर ॥ ३ ॥ स्वप्नात्स्वप्नांतरमिवगच्छंतोजीवजीवकाः॥ असत्यमेवपश्यंतिघनसत्यतयानघ ॥ ४ ॥ अजडेजडतातातजडेचाजडतोदिता ॥ असत्येसत्यताजीवजीवानुभवमोहतः॥ ५ ॥ भानोरप्यंतरखिलंपश्यंतस्त्रिजगद्भ्रमम् ॥ भ्रमंतिस्वप्नसंभ्रांताइवजीवाभिदालिभिः ॥ ६ ॥ सर्वगत्वादनंतत्वात्स्वस्यजीवस्यजीवतः॥ यद्भावयंतिचेतंतितदेवाश्चितिसत्यवत्॥ ७॥

ल्प्यतइतिचेद्व्यष्टीनामिवसमष्टे स्वप्नातराप्रसिद्धेरित्याह॥ नेति॥ तेनास्माकजाग्रत्प्रसिद्धाभूतभुवनादिभावास्तस्यजाग्रत्स्वप्नोभयस्थानकृतोदयानस्वप्नतोभिद्यंतइत्यर्थ ॥ २ ॥ असत्यत्वावस्तुत्वाभ्यामपितस्यस्वप्नतासाधयन्वैधर्म्यानुभवेनिमित्तदर्शयति ॥ जीवस्वप्नमिति ॥ अस्मदीयस्वप्नवत्क्षिप्रबाध्यतायाअप्रतिभासतोहेतोर्दीर्घम् ॥ तथाचदैर्घ्यमेव वैधर्म्यभ्रमहेतुरितिभाव ॥ ३ ॥ ४ ॥ वस्तुस्वभाववैपरीत्यदर्शनादप्यस्यस्वप्नतेत्याह ॥ अजडेइति ॥ अजडेब्रह्मणिभूतभुवनादिजडतातथाजडेचाहंकारादिदेहातेआत्मत्वाभिमानादजडताउदिता ॥ जीवस्यसमष्टेरेकदेशभूतायेव्यष्टिजीवास्तदनुभवलक्षणान्मोहतोभाने ॥ ५॥ जीवा भिदालिभिर्भेदकल्पनपरपराभिर्भ्रमति ॥ ६ ॥ कल्पितभेदेषुसत्यत्वारोपेकारणमाह ॥ सर्वगत्वादिति ॥ व्यष्टित्वादेवजीवतोप्यत्यतजीवभूतस्यस्वस्यपरमार्थत सर्वगत्वादनतत्वादपरिच्छेदेनसत्यत्वाच्चयद्यद्भावयतितदेवआशुतत्ससत्त्याःस्वसत्तारोपेणसत्यवच्चेतति ॥ तथाचतत्ससक्तित्यागात्तत्सत्यताभ्रमनिवृत्तौबुद्धतत्त्वस्यजीवन्मुक्ति सिद्ध्यतीतिभाव ॥ ७ ॥

१ सबाह्यांतर्नेत्यपिक्वचित्पाठ.

अयमेवार्थोभगवद्गीतायांभगवताप्यर्जुनायोपदिष्टइत्याह ॥ पुंडरीकाक्षेति ॥ शुभांश्रेष्ठितिशेष ॥ ८ ॥ तदर्थमर्जुनाख्यायिकामवतारयति ॥ पांडोरिति ॥ सुखजीवन्मुक्ति सुखविशिष्टम् ॥ जीवितमाशुक्षिपयिष्यतिक्षेप्स्यति ॥ स्वार्थेणिचिगुणाभावश्छांदस ॥ ९ ॥ १० ॥ अर्जुनावतारेकारणमंकुरसर्वमूलमनुक्रामति ॥ अस्तीत्यादिना ॥ स्थित मिति ॥ स्वेमहिम्निप्रतिष्ठितइतिश्रुते ॥ ११ ॥ १२ ॥ तस्मिन्दृश्यमानेसंसारजाले ॥ शकुनय पक्षिण ॥ १३ ॥ नभतास्तुभूतजातिषुमध्येशासित श्रुतिस्मृत्यादिवर्णित क्रम मर्यादायेषाम् ॥ भूतपंचकपदीष्टतत्त्वाभिमानिक्षणेसंसारेलोकपालत्वंतत्तल्लोकाधिपत्यम् ॥ १४ ॥ श्रुतिस्मृतिसमाचारविहितपुण्यमुपादेय इतरन्निषिद्धंपापंहे

पुंडरीकाक्षनिर्दिष्टामससक्तिगतिंशुभाम् ॥ यामालिंग्यमहाबाहोजीवन्मुक्तोमहामुनि ॥ ८ ॥ पांडो पुत्रोर्जुनोनामसुखंजीवितमात्मन ॥ क्षिपयिष्यतिनिर्दु स्वंतथाक्षेपयजीवितम् ॥ ॥ ९ ॥ ॥ श्रीरामउवाच ॥ ॥ भविष्यतिकदाब्रह्मन्सोर्जुन पांडुनंदन ॥ कीदृशींचहरि स्तस्यकथयिष्यत्यसक्तताम् ॥ १० ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अस्तिसन्मात्रमात्मेतिपरिकल्पितनामकम् ॥ स्थितमात्मन्यनाद्यंतेनभसी वमहानभ ॥ ११ ॥ दृश्यतेविमलेतस्मिन्नयंसंसारविभ्रम ॥ कटकादिर्यथाहेम्नितरंगादिर्यथांभसि ॥ १२ ॥ चतुर्दशविधाभूतजातय प्रस्फुरंत्यलम् ॥ तस्मिन्संसारजालेस्मिन्जालेशकुनयोयथा ॥ १३ ॥ तत्रैतेयमचंद्रार्कशक्राद्या शंसितक्रमा ॥ भूतपंचकसंसारलोक पालत्वमागता ॥ १४ ॥ इदंपुण्यमुपादेयंहेयंपापमिदंत्विति ॥ तै स्वसंकल्पघटिताद्वेदनात्स्थापितास्थिति ॥ १५ ॥ तस्याद्ययावदनघप्र वाहपतितेनिजे ॥ कर्मण्यचलसंकाशस्थिरंचित्तमवस्थितम् ॥ १६ ॥ भगवान्सयम किंचिद्व्रतेप्रतिचतुर्युगे ॥ तप प्रकुरुतेभूतदलनात्मा पशंकया ॥ १७ ॥ कदाचिदष्टौवर्षाणिदशद्वादशवापिच ॥ कदाचित्पंचसप्तादिकदाचित्षोडशापिच ॥ १८ ॥ उदासीनवदासीनेतस्मिन्नि यमसंस्थितौ ॥ नहिनस्तिजगज्जालेमृत्युर्भूतानिकानिचित् ॥ १९ ॥ तेननीरंध्रभूतौघनि संचारमहीतलम् ॥ भवतिप्रावृषिस्वेदीकुंजरो मशकैरिव ॥ २० ॥ अथैतानिविचित्राणिभूतानिषड्युक्तिभि ॥ क्षिपयतिसुरारामभुवोभारनिवृत्तये ॥ २१ ॥ एवंयुगसहस्राणिव्यव हारशतानिच ॥ समतीतान्यनंतानिभूतानिचजगतिच ॥ २२ ॥

यमिनिस्वाधिकारानुरूपसंकल्पघटिताद्वेदनात्स्थितिर्मर्यादास्थापिता ॥ १५ ॥ अस्त्वेवंकिंततस्तत्राह ॥ तस्येति ॥ तस्यवक्ष्यमाणयमस्य अद्ययावदेतावत्कालंस्वीयेअधि कारकर्मणिअचलवत्स्थिरंचित्तमन अवस्थितम ॥ १६ ॥ प्रतिचतुर्युगम् ॥ वीप्सायामव्ययीभाव ॥ कदाचित्किंचित्तप प्रकुरुते ॥ प्रतिचतुर्युगंकिंचिद्व्रतेद्वापरांतेइतिवा ॥ ॥ १७ ॥ तपकालनियमोनास्तीत्याह ॥ कदाचिदिति ॥ १८ ॥ तस्मिन्यमेनियमसंस्थितौतपसिआसीनेसतिमृत्यु कानिचिदपिभूतानिनहिनस्ति ॥ १९ ॥ तेनाहिंसनेनहेतु नामहीतलंनीरंध्रभूतैर्भूतौघैर्नि संचारंसंचारायोग्यंभवति ॥ स्वेदीस्वेदवान् ॥ २० ॥ सुराविचित्राणिवेषा युक्तिभि अंशावतारावतारतपुआयुपायै क्षिपयतिहिंसनेनचिरस्तीकु र्वीतिभिपावन ॥ २१ ॥ अथचतारावतारादिव्यवहारोऽप्यनेकशोऽभूदित्याह ॥ एवमिति ॥ २२ ॥

॥२३॥ अघानांपापानांविघाताय कर्त्तव्याभविष्यतीतिशेषः ॥ दूरेऽस्तंजनानांकर्षणंपीडनंयस्याम् ॥ अस्माद्विशेषणाद्व्रतचर्याअहिंसादिघटितनिर्विकल्पसमाधिरूपेतिगम्य ते ॥ २४ ॥ प्रपन्नगुल्मावनगुल्मसकीर्णेतियावत् ॥ २५ ॥ २६ ॥ नरनारायणचगतैरनुगतै साहाय्यार्थमवतीर्णैरितियावत् ॥२७॥२८॥ अंभोधिमेखलायाभूमेर्भूपोराजा अंभोधिमेखलाभुवपातीतिवा ॥ आतोनुपसर्गेकः ॥२९॥ तस्यपितृव्यजोभ्राताभविष्यति तस्यद्वद्व प्रतियोद्धाभीमोभविष्यतीतियोज्यम् ॥ बभ्रुर्नकुलः ॥ अहेःसर्पस्येव ॥३०॥

वैवस्वतोद्यतुयमोयएषपितृनायकः॥ अनेनत्वधुनासाधोपरिक्षीणेपुकेपुचित्॥ २३ ॥ युगेष्वघविघातायवर्षाणिद्वादशात्मना॥ व्रतचर्येहकर्तव्यादूरास्तजनकर्षणा॥ २४॥ तेनेयमुर्वीनीरंध्राभूतैर्मर्त्यैरमृत्युभिः॥ दीनाप्रपन्नागुल्मेवभारभूतैर्भविष्यति॥ २५ ॥ भूभारपरिभूतांगीहरिंशरणमेष्यति॥ कांतादस्युपराभूतादीनापतिमिवप्रिया॥ २६ ॥ हरिर्देहद्वयेनाथमहीमवतरिष्यति॥ देवांशैरखिलैःसार्द्धंनरनारायणंगतैः॥ २७॥ वसुदेवसुतस्त्वेकोवासुदेवइतिश्रुतः॥ देहोभविष्यतिहरेर्द्वितीयःपांडवोर्जुनः॥२८॥ युधिष्ठिरइतिख्यातोधर्मपुत्रोभविष्यति॥ अंभोधिमेखलाभूपःपांडोःपुत्रःसधर्मवित्॥ २९॥ दुर्योधनइतिख्यातस्तस्यभ्रातापितृव्यजः॥ भविष्यतिद्वंद्वद्वंद्वोभीमोबभ्रुरहेरिव॥ ३०॥ अन्योन्यंहरतोरुर्वीतयोःसंग्रामलोलयोः॥ अष्टादशात्राक्षौहिण्योघटिष्यंत्यत्रभीषणाः॥ ३१॥ तत्क्षयेणविभारत्वंभुवोविष्णुःकरिष्यति॥ राघवार्जुनदेहेनबृहद्गांडीवधन्वना॥३२॥ विष्णोरर्जुननामादौप्राकृतंभावमास्थितः॥ हर्षामर्षान्वितोदेहोनरधर्माभविष्यति॥ ३३॥ सेनाद्वयगतान्दृष्ट्वास्वजनान्मरणोन्मुखान्॥ विषादमेष्यत्युद्योगंयुद्धायनकरिष्यति॥ ३४॥ तमर्जुनाभिधंदेहंप्राप्तकार्यैकसिद्धये॥ हरिर्बुद्धेनदेहेनबोधयिष्यतिराघव॥३५॥ नजायतेम्रियतेवाकदाचिन्नायंभूत्वाभवितावानभूयः॥अजोनित्यःशाश्वतोयंपुराणोनहन्यतेहन्यमानेशरीरे॥३६॥यएनंवेत्तिहंतारंयश्चैनंमन्यतेहतम्॥उभौतौनविजानीतोनायंहंतिनहन्यते॥३७॥

आसमतात्त्रायतइतिआत्रासेनातदक्षौहिण्यः ॥ अत्रभारतयुद्धेकुरुक्षेत्रेवाघटिष्यति ॥३१॥ हेराघवबृहद्गांडीवंधनुर्यस्य॥ धनुषश्चेत्यनङ् ॥ तथाविधेनार्जुनदेहेनविभारत्वंभारावतरणकरिष्यतीतिपूर्वत्रान्वयः ॥ ३२ ॥ नरधर्माअज्ञप्रायइतियावत् ॥ ३३ ॥ स्वजनान्बंधून् ॥ ३४ ॥ बुद्धेनस्वतःसिद्धात्मबोधेनकृष्णदेहेन ॥ ३५ ॥ बोधनप्रकारमेवविस्तराद्वर्णयति ॥ नजायतइत्यादिना ॥ आद्यतविकारयोर्निषेधमध्यतनविकारचतुष्टयप्रसक्तवारयति ॥ नायमिति ॥ भाविजन्मादिप्रतिषेधोवा ॥ ३६ ॥ एनमुक्तस्वभावमात्मानयोहतारवेत्तियश्चहतंमन्यतेतावुभौनात्मानतत्त्वतोविजानीतः ॥ अज्ञानमेवहतृहतव्यताभ्रातिनिमित्तमितियावत् ॥ ३७ ॥

मिभि.किवत्तैर्नास्यनाशप्रकारनाशहेतूनांमितिक्षेप ॥ ३८ ॥ स्फारमपरिच्छिन्नमतएवालब्धवोपंसंविद्वपुर्धर्मस्यस्वरूपमेवासि अतएवाजोसि नित्योसिनिरस्ताज्ञानतत्कार्यक
छकोजनभासीतिनर्वधुसंसक्तिम्मरणादिसभावनामयुक्तेषु स्वतयोचितमितिभाव ॥३९॥ ॥इतिश्रीवासिष्ठम॰तात्पर्यप्रकाशेनि॰पू॰ द्विपंचाश सर्ग ॥५२॥ ॥ १ ॥ ॥ ष
ण्पतिइस्त्रेत्स्याग समत्यामादिलक्षणम ॥ उपास्येयत्पेपवशाभेदव्यवस्थिते ॥ १ ॥ तथावीस्वबंधुहंताहमित्यादिरूपोहंताभिमान एतेमदीयाबांधवाइत्यादिममताभिमान
श्चतत्सर्वदुःखनिदानमितिसएवत्याज्यइत्याह ॥ अर्जुनेति ॥ हेअर्जुनत्वंजरामरणादिषड्ूर्मिनिर्मुक्त अतएवशाश्वत स्वबंध्वादीनांसर्वभूतानांस्वयसाक्षावात्मासि अतस्त्वंक
स्यापिनहंता ॥ अहंहंतेत्यभिमानमलमस्यंतत्यजेत्यर्थ ॥ १ ॥ अभिमानस्त्यागफलमाह ॥ यस्येति ॥ यस्यबंधाविमष्टसिकालेऽहमनुघातयामीत्यहंकृतोभावोनास्तिउ
त्तरकालबंधवस्यबुद्धिर्नास्फलहर्षविषादादिनानलिप्यतेसपुरुषइमान्सर्वान्लोकान्स्वंसइतिलोकाश्चतुर्विधभूतजातयस्तान्हत्वाप्राणैर्वियोज्यापिकर्मपिनहंति ॥ सर्वभराश्वैका

अनंतस्यैकरूपस्यसत सूक्ष्मस्यखादपि ॥ आत्मन परमेशस्यकिंकथंकेननश्यति ॥ ३८ ॥ अनतमव्यक्तमनादिमध्यमात्मानमालोक
यसंविदात्मन् ॥ संविद्वपु स्फारमलब्धदोषमजोसिनित्योसिनिरामयोसि ॥३९॥ ॥इ॰वा॰वा॰दे॰मो॰नि॰पू॰ अर्जुनोपाख्यानेन
रनारायणावतारकथननामद्विपंचाशत्तम सर्गं ॥५२॥ ॥५१॥ ॥श्रीभगवानुवाच ॥ ॥अर्जुनत्वंनहंतात्वमभिमानमलंत्य
ज ॥ जरामरणनिर्मुक्त स्वयमात्मासिशाश्वत ॥ १ ॥ यस्यनाहंकृतोभावोबुद्धिर्यस्यनलिप्यते ॥ हत्वापिसइमाँल्लोकान्नहंतिननिबध्यते
॥ २ ॥ येवसजायतेसविदंत सैवानुभूयते ॥ अयंसोहमिदतन्मइत्यंत सविदंत्यज ॥ ३ ॥ अनयैवप्रयुक्तोस्मिनष्टोस्मीतिषभारत ॥ अ
मित सुखदु खाभ्यामवश परितप्यसे ॥४॥ स्वांगांशे क्रियमाणानिगुणे कर्माणिभागश ॥ अहंकारविमूढात्माकर्त्ताहमितिमन्यते ॥५॥

त्मतत्त्वस्यबंधादिविकारास्पर्शिनस्थैर्यसत्वात् ॥ देहादीनांचमायामात्रत्वेननित्यमसत्वादेवबध्यापुंमस्येवबंधाप्रसक्तेरितिभाव ॥ अतस्त्वयुक्तपापफलेनापिननिबध्यतेयथे
श्वरइत्यर्थ ॥ २ ॥ हंतृत्वादिधर्मकदेहादितादात्म्यमानिसंवेदनवशादेवतत्कर्मंहतृत्वादेरात्मनिप्रतिभासोनस्वत ॥ अतस्तदेवमयमस्यजेत्याह ॥ येवेति ॥ अंतर्हर्दिआत्मनियेवस
चिद्रुस्थिरस्तिर्देहाद्यभिमानरूपाअभ्यासदशीका ॥ अयकार्यकरणसंघात सोहंताभर इदमेतदेहादिसंबंधितद्रव्यादिमेमम इत्येवसंविदंमानिर्वासिस्तस्यजेत्यर्थ ॥ ३ ॥ अनया
उक्तलक्षणयासविदाहंतृत्वादिनियुक्तोस्मि तत्प्रयुक्तपापिष्ठनर बंधुनाशापेक्षिकामैर्नरकपाताघानुष्मिकानर्थैश्चयुक्तोस्मीतिचमोस्याद्दुःखदु खाभ्यांपरितप्यसे ॥ ४ ॥ स्वा
त्मन अंशावस्थाश्चेत्क्षेत्रकल्पेनाभासे स्वांगे गुणविकारैर्देहेंद्रियादिभि क्रियमाणानिकर्माणि ॥ ५ ॥

१ अनंतैकरूपस्यतस्मादा

मिभि किवर्त्तीनांस्यनाशमकारनाशहेतूनांमतिक्षेप ॥ ३८ ॥ स्फारमपरिच्छिन्नमतएवालब्धदोपसविद्‌पुश्चैतन्यस्वरूपमेवासि अतएवाजोसि नित्योसिनिरस्ताज्ञानतत्कार्यक
ठकांजनमासीतिनवपुर्संसक्तिजन्मरणादिसभावनामयुक्तंतु स्वतबोचितमितिभाव ॥ ३९ ॥ ॥ इतिश्रीवासिष्ठ० तात्पर्यप्रकाशेनि० पू० द्विपचाश सर्ग ॥ ५२ ॥ ॥ ९ ॥ ॥ व
ण्यतेहन्त्रसामःसमस्यागादिलक्षणम ॥ उपास्यहेयरूपेणदशाजेवव्यवस्थिते ॥ १ ॥ तमादौसर्वंधुहताहमित्यादिरूपोहताभिमान एतेमदीयाबाधवाइत्यादिममताभिमान
श्चतबसर्वंतु स्वनिदाममितितएवत्याज्यदत्याह ॥ अर्जुनेति ॥ हेअर्जुनत्वजरामरणादिषड्‌र्मिनिर्मुक्त अतएवशाश्वत स्वयम्पादीनांसर्वभूतानांस्वयसाक्षात्मासि अतस्त्वक
स्यापिनहता ॥ अहहतेत्यभिमानमलमत्यतंत्यजेत्यर्थ ॥ १ ॥ अभिमानत्यागफलमाह ॥ यस्येति ॥ यस्यवधादिप्रवृत्तिकालेअहममुंघातयामीत्यहंकृतोभावोनास्तिउ
त्तरकालेचयस्यबुद्धिलस्फलहर्षविषादादिनानलिप्यतेसपुरुषइमान्सर्वाल्लोकान्यदिहंतिलोकाश्चतुर्विधभूतग्रामयस्तान्हत्वाप्राणीभिर्योक्यापिकमपिनहंति ॥ सर्वमशाश्वतेका

अनंतस्यैकरूपस्यसत सूक्ष्मस्यखादपि॥ आत्मन परमेशस्यकिंकयंकेननश्यति॥ ३८॥ अनंतमव्यक्तमनादिमध्यमात्मानमालोक
यसविदात्मन्॥ सविद्‌पु स्फारमलब्धदोषमजोसिनित्योसिनिरामयोसि॥ ३९॥ ॥ इ० वा० वा० दे० मो० नि० पू० अर्जुनोपाख्यानेन
रनारायणावतारकथननामद्विपचाशत्तम सर्ग ॥ ५२ ॥ ॥ ५ ॥ ॥ श्रीभगवानुवाच ॥ ॥ अर्जुनत्वंनहंतात्वमभिमानमलत्य
ज ॥ जरामरणनिर्मुक्त स्वयमात्मासिशाश्वत ॥ १ ॥ यस्यनाहंकृतोभावोबुद्धिर्यस्यनलिप्यते॥ हत्वापिसइमाँल्लोकान्नहंतिननिबध्यते
॥ २ ॥ येवसजायतेसविदत सैवानुभूयते॥ अयंसोहमिदंतन्महत्यंत संविदंत्यज ॥ ३ ॥ अनयैवप्रयुक्तोस्मिनष्टोस्मीतिचभारत॥ अ
जित सुखदु खाभ्यामवश परितप्यसे॥ ४॥ स्वांशांशे क्रियमाणानिगुणे कर्माणिभागश ॥ अहंकारविमूढात्माकर्त्ताहमितिमन्यते॥ ५॥

त्ततस्त्वस्यवधादिविकारास्पर्शिमस्त्यैवसत्वात् ॥ देहादीनांचमायाभावत्वेननित्यमसत्वादेववध्यात्पुरुषस्यैववधमासस्केरितिभाव ॥ अतस्त्वयुक्तपापफलेनापिननिबध्यतेयथे
भरइत्यर्थ ॥ २ ॥ इत्थत्वादिधर्मकदेहादिनात्मन्यभातिसविनवशादेवतद्धर्महंतृत्वादेरात्मनिप्रतिभासोनस्वत ॥ अतस्तदेवमयमस्यजेत्याह ॥ यैवेति ॥ अंतर्हृदिआत्मनियैवस
विदुद्भिर्त्तिर्देहाघभिमानरूपाअभ्यादशीवा ॥ अयकार्यकरणसंघात सहंताअहं इदमेतदेहादिसर्वधितद्यासिमेनम इत्येवसविदंभातिविर्त्तिस्त्यजेत्यर्थ ॥ ३ ॥ अनया
उक्तलक्षणयासविदाहंहत्वाविनियुक्तोस्मि तथयुक्तपरिभ्रष्ट बधुनाशात्पैहिकानर्थैर्नरकपाताद्यामुष्मिकानर्थैश्चयुक्तोस्मीतिचभ्रान्त्यासुखदु खाभ्यांपरितप्यसे ॥ ४ ॥ स्वा
त्मन अंशस्वरूपस्याच्छादकत्वेनांशाशे तमाद्रिगुणविकारैर्देहेंद्रियादिभि क्रियमाणानिकर्माणि ॥ ५ ॥

१ अनंतैकस्वरूपस्य चिन्मात्र.

॥ चक्षुरिति ॥ अत्रास्मिंश्चक्षुरादिकरणकार्यसंघातेअहंकःनकश्चिदिति अ
विमर्शेतुचक्षुरादीनामेवरूपादिविषयेप्रवृत्तिर्नात्मनइतिनतत्कृतैरस्यकर्तृत्वप्रसक्तिरित्याशयेनाह ॥ चक्षुरिति ॥ अत्रास्मिन्मनआद्यंतःकरणसंघातेप्यहंनकश्चिदितिपश्यतस्तेकःपदार्थःक्लेशभागे
हमितिस्थितिःकानयुक्तेत्यर्थः ॥ ६ ॥ कलनासंकल्पादिस्तल्लक्षणेस्वकर्मणिरतेप्रसक्तेसत्यपिअत्रास्मिन्मनआद्यंतःकरणसंघातेप्यहंनकश्चिदितिपश्यतस्तदनुशोचनेइत्याश
प्रविष्टोयदर्थंशोचसिसनास्त्येवेत्यर्थः ॥ ७ ॥ यत्रसंघातकृतेकार्येतदंतर्गतस्याप्येकैकस्यसंघाताभिमानदुःखेनशोकेउपहास्यतातत्रकिंवाच्यंतद्बहिर्भूतस्यतदनुशोचनेइत्याश
येनाह ॥ बहुभिरिति ॥ गृह्यतेचेत्तर्हिहासायैवभवतीत्यर्थः ॥ तथाचाहुः ॥ नसामवायिकंदुःखमेकःशोचितुमर्हतीति ॥ ८ ॥ किंचनिरहंकारस्यफलासंगरहितकायिकादित्रिवि
धशास्त्रीयकर्मचित्तशुद्धिद्वाराज्ञानोद्दीपकत्वात्परमपुरुषार्थायैवभवतीतिनतेस्वधर्माद्युद्धाद्दुःखप्रसक्तिरित्याह ॥ कायेनेति ॥ योगिनोत्रारुरुक्षवः ॥ ९ ॥ नमारितोमरणाय
व्यापारितःपुनःपुनर्मृत्युहेतुभोगलाम्पट्येनप्रवर्तितइत्यर्थः ॥ निर्विषूचिकाःनिरस्तरागाद्यामयाः ॥ लौकिकशास्त्रीयकर्मकुर्वतोप्यानुषंगिकतत्फलहरतउपभुंजानाअपिनचते

॥ न चक्षुःपश्यतुकर्णश्चशृणोतुत्वक्स्पृशत्विदम्॥ रसनाचरसंयातुकात्रकोहमितिस्थितिः॥ ६॥ कलनाकर्मणिरतेमनस्यपिमहात्मनः॥ न कश्चिदत्राहमितिक्लेशभागेकएवते॥ ७॥ बहुभिःसमवायेनयत्कृतंतत्रभारत॥ एकोभिमानदुःखेनहासायैवहिगृह्यते ॥ ८ ॥ कायेन मनसाबुद्ध्याकेवलैरिंद्रियैरपि॥ योगिनःकर्मकुर्वंतिसंगंत्यक्त्वात्मशुद्धये॥ ९॥ अहंत्वविषचूर्णेनयेषांकायोनमारितः॥ कुर्वंतोपिहरंतो पिनचतेनिर्विषूचिकाः॥ १०॥ नकश्चिद्राजतेकायोममतामेध्यदूषितः॥ प्राज्ञोप्यतिबहुज्ञोपिदुःशीलइवमानवः॥ ११ ॥ निर्ममोनिर हंकारःसमदुःखसुखःक्षमी॥ यःसकार्यमकार्यंवाकुर्वन्नपिनलिप्यते॥ १२॥ इदंचतेपांडुसुतस्वकर्मक्षात्रमुत्तमम्॥ अपिक्रूरमतिश्रे यःसुखायैवोदयायच॥ १३॥ अपिकुत्सितमप्यन्यदप्यधर्ममयक्रमम्॥ श्रेष्ठंतेस्वंयथाकर्मतथेहाम्रुतवान्भव॥ १४॥ मूर्खस्यापिस्व कर्मैवश्रेयसेकिमुसन्मतेः॥ मतिर्गलदहंकारापतितापिनलिप्यते॥ १५॥

कुर्वंतोहरतश्चेत्यर्थः ॥ १० ॥ क्वचिल्लौकिकेशास्त्रीयेवाप्यवहारेनराजते ॥ अनर्थानास्कंदितपुरुषार्थायनकल्पतइतियावत् ॥ ११ ॥ कार्यमवश्यकर्तव्यंशास्त्रीयकर्म अ
कार्यमनावश्यकंलौकिकम् नतुनिषिद्धमप्रसक्तेः ॥ १२ ॥ क्षात्रक्षत्रियाणांविहितंसंग्रामेष्वपलायनवधुवधरूपत्वात्क्रूरमपिचित्तशुद्धिद्वाराब्रह्मज्ञानादिसुखायैव तथाधर्मय
शोराज्यस्वर्गाद्यभ्युदयायचेत्यतिश्रेयएवेत्यर्थः ॥ १३ ॥ तर्हियद्बंधुवधादन्यद्द्रोणभीष्मकृपादिगुरुवधरूपंकुत्सितकर्मतन्मयाकथंकार्यमित्यर्जुनस्यतत्राधर्मत्वशंकासत्यश
पथाशिषानिवारयन्नाह ॥ अपीति ॥ पूजार्हेषुतद्विपरीतशस्त्रोद्यमनप्रहरणाद्यधर्मबहुलक्रममपितेस्वंयुद्धकर्मयथायेनसत्येनशास्त्रप्रामाण्येनश्रेष्ठंतथातेनसत्येनइहास्मिन्यु
द्धेअमृतवान्अमरणधर्माविजयीभवेत्यर्थः ॥ १४ ॥ यत्रअज्ञस्यापिस्वधर्मःश्रेयसेतत्रतत्त्वज्ञस्यतस्मान्नरकादिप्रसक्तिर्दूरापास्तैव पातित्यावहैर्महापातकादिकोटिभिरपिनि
रहंकारमतेर्लेपाभावादित्याशयेनाह ॥ मूर्खस्यापीति ॥ १५ ॥

---

१ अत्रमुमुक्षवइत्यपिक्वचित्पाठः

योगस्यस्यतुत
रिथराज्यलाभादिलाभप्रयुक्तपुद्रेलोभमूलानिपापानिरसमूलास्तथाऽमयादतिन्यायेनकदापिवधममसक्ति स्यात्फलासंगत्यागेनसिद्ध्यसिद्धिसमतालक्षणयोगस्यस्यतुत ॥ शतिति ॥ १७ ॥ निर्धि
यसकिरपिनार्ला नितायोगस्थितिमपदिशति ॥ योगस्थइति ॥ १६॥ अथवावक्ष्यमाणलक्षणब्रह्मार्पणबुद्ध्याकृतशास्त्रीयमिदकर्मनतेबधायेत्याह ॥ शतिति ॥ १७ ॥ निर्धि
शपमत्वनत्त्वज्ञाननतरसामर्थ्यंसगुणश्वरापणबुद्ध्यावाकमकुर्वतोपिनकमबंधइत्याह ॥ इश्वरेति ॥ १८ ॥ अथवासर्वसंकल्पत्यागलक्षणसंन्यासयोगयुक्त्यापिनतेकमबंधम
सनिरित्याह ॥ सन्यस्तेति ॥ १९॥ एवमुपदिष्टोर्जुन सगत्यागादीनांतल्लक्षणैर्विभागजिज्ञासुःपृच्छति ॥ संगत्यागस्येतिद्वाभ्याम ॥२०॥२१ ॥ आत्यंतिकसंगत्यागस्यतत्त्वपरि
ज्ञानमंतरेणायोगादुक्तास्ततत्त्वमेवभगवान्प्रथमंलक्षणेननिदिशति ॥ सर्वेति ॥ तथाचनिर्विकल्पसमाधिपरिपाकसाक्षात्कारानुभवसिद्धनिष्प्रपंचप्रत्यगात्मरूपमेवब्रह्मेत्यर्थ

योगस्थ कुरुकर्माणिसंगत्यक्त्वाधनंजय ॥ निःसंगस्त्वयथाप्राप्तकर्मवान्ननिबध्यसे ॥१६॥ शांतब्रह्मवपुर्भूत्वाकर्मब्रह्ममयंकुरु ॥ ब्रह्मा
र्पणसमाचारोब्रह्मैवभवसिक्षणात् ॥ १७॥ इश्वरार्पितसर्वार्थईश्वरात्मानिरामय ॥ इश्वर सर्वभूतात्माभवभूपितभूतल ॥ १८ ॥ स
न्यस्तसर्वसंकल्प सम शांतमनामुनि ॥ सन्यासयोगयुक्तात्माकुर्वन्मुक्तमतिर्भव ॥ १९ ॥ ॥ अर्जुनउवाच ॥ ॥ संगत्यागस्यभगव
न्स्तथाब्रह्मार्पणस्यच ॥ इश्वरार्पणरूपस्यसन्यासस्यचसर्वश ॥ २० ॥ तथाज्ञानस्ययोगस्यविभाग कीदृश प्रभो ॥ क्रमेणकथयैतन्मे
महामोहनिवृत्तये ॥ २१ ॥ ॥ श्रीभगवानुवाच ॥ ॥ सर्वसंकल्पसंशांतोप्रशांतघनवासनम् ॥ नर्किचिद्भावनाकारयत्तद्ब्रह्मपरंविदु
॥ २२ ॥ तद्योगविदुर्ज्ञानयोगचक्रतयुद्धय ॥ ब्रह्मसर्वंजगदहंचेतिब्रह्मार्पणंविदु ॥ २३ ॥ अत शून्ययदि शून्यपाषाणहृदयोपमम् ॥
शांतमाकाशकोशाच्छंनदृश्यनदृश परम ॥ २४ ॥ ततइपयदुत्थानमीपदन्यतयोदितम् ॥ सजगत्प्रतिभासोयमाकाशमिवशून्यता
॥ २५ ॥ भावोहमितिकोप्येपप्रत्येकमुदितश्चिते ॥ कोटिकोट्यंशकलित कद्दवैनप्रतिग्रह ॥ २६ ॥

॥ २२ ॥ तद्योगनदाकाराबहितचित्तवृत्तिमज्ञाननिवृत्तिफलोपहितांज्ञानमाहुस्तदनुकूलधारामाप्ररूपांनुयोगमित्यर्थ ॥ब्रह्मण्यभिमतव्यस्यजगतस्तदभिमतुरहंकारस्यचबा
धामुख्यब्रह्मार्पणमित्याह ॥ ब्रह्मेति ॥ २३॥ ब्रह्मणिजगदहंकारयोर्बाधोपपत्तयेतद्वाध्यस्तत्वंचतुअस्यस्वरूपमाह ॥ अतश्शून्यमित्यादिना ॥ नदृश्यमिति ॥ सर्वदृश्यनिषेधेदृ
शोपिदृश्यत्वान्निषेध किंनस्यादित्याशंक्याह॥नदृश परमिति ॥ दृशोदृश्यतानिषेधोपात्तस्यापरिदृश परदृगंतरस्यान्ननुतदस्तीत्यर्थ ॥ २४॥ ततस्तादृशस्वभावादीपदन्यत
यादितयत्समुत्थानंसायजगत्प्रतिभास सगंधर्वनगराकाशमिवशून्यतंवेत्यर्थ ॥२५ ॥ सन्यासोपपादनोपपत्त्यर्थंब्रह्मणिजगदारोपवदेवतदरोपुजीवेपुप्रत्येकमहंभावाध्यासइति
नवमापद्यायुक्तइत्याह ॥ भावइतिद्वाभ्याम् ॥ २६ ॥

एष अहमितिभाव स्वाधिष्ठानादपृथगूभूतएव ॥ हियस्माद्धेतोःपृथक्त्वपर्यंतःपरिच्छेद सचब्रह्मणिन असंश्वनाहमितिकश्चिदवगच्छति ॥ तथाचावगंतृत्वेनपृथक्त्वोपपत्ति
पृथक्त्वेनचावगंतृत्वोपपत्तिरित्यवश्यमन्यतरस्मिन्हेयेनिरुपपत्तिकपृथक्त्वमेवहेयमितिभावः ॥ २७ ॥ अहंतायामुक्तोन्यायोघटादिममतेहायामपियोज्यइतिदर्शयस्तन्मू
लाहंतामहत्यागमेवद्रढयति ॥ यथेति ॥ यथाअहमीहाअहंभावोनपृथगस्तितथाइहप्रतीचिघटादिममतेहालक्षणोमर्कटोपिपृथङ्नास्तीतिनञनुषंगेणयोज्यम् ॥ तथाचद्वि
विधापीहाअभोधिरिवपूर्णस्वमात्मैवेतिनाहंतामहोयुक्तइत्यर्थ. ॥ २८॥ किंचाहममतादिसर्वविकल्पभेदेतत्तद्विषयवैचित्र्येणविचित्रेस्फुरितेपितत्सत्तास्फूर्तिनिमित्तेअवस्थात्र
यानुगतेसवित्सारमात्रस्वभावेसर्वविकल्पागमापायसाक्षिणिप्रत्यगात्मन्येकत्वमपिस्फुरत्येव ॥ एवसतितत्राप्यामहोयुक्तःसकुतोनोनक्रियतइत्यर्थ. ॥ २९ ॥ इतिउक्तरीत्या

अपृथगूभूतएवैषपृथगूभूतइवस्थितः॥ पृथक्त्वंहिनपर्यंतोनाहमित्यवगच्छति ॥ २७॥ यथेहाहंतथेहास्तिघटादीहापिमर्कटः॥ स्वमीहे वंतथांभोधिःकिमहंतांप्रतिग्रहः ॥ २८ ॥ विकल्पभेदेस्फुरितेसंवित्सारमयात्मनि॥ वैचित्र्येणविचित्रेपिकिमेकत्वेपिनोग्रहः॥ २९ ॥ इतिज्ञातविभागस्यबुद्धौतस्यपरिक्षयः॥ कर्मणांयःफलत्यागस्तंसंन्यासंविदुर्बुधाः॥ ३० ॥ त्यागःसंकल्पजालानामसंसंगःसकथ्यते ॥ समस्तकलनाजालस्येश्वरत्वैकभावना॥ ३१ ॥ गलितद्वैतनिर्भासमेतदेवेश्वरार्पणम्॥अवोधवशतोभेदोनास्त्येवैषांचिदात्मनि॥ ३२ ॥ बोधात्माकिलशब्दार्थोजगदेकंनसंशयः॥अहमाशाजगदहंस्वमहंकर्मचाप्यहम्॥३३॥ कालोहमहमद्वैतंद्वैतंचाहमहंजगत्॥मन्मना भवमद्भक्तोमद्याजीमांनमस्कुरु॥ मामेवैष्यसियुक्त्वैवमात्मानंमत्परायणः॥ ३४॥ ॥अर्जुनउवाच॥ ॥द्वेरूपेनवदेवेशपरंचापरमे वच॥ कीदृशंतत्कदारूपंतिष्ठाम्याश्रित्यसिद्धये॥ ३५॥

विमृश्यज्ञातसारासारविभागस्यपुरुषस्यबुद्धौतस्याहममतामहस्ययःपरिक्षयस्तेनचार्थसिद्धःसर्वकर्मफलेष्वस्पृहालक्षणस्त्यागः ॥ ३० ॥ तेनचसर्वसंकल्पत्यागलक्षण असंस
ग सिद्ध्यतीतिप्रथमप्रश्नोप्युत्तरितइत्याह ॥ त्यागइति ॥ चतुर्थप्रश्नस्योत्तरमाह ॥ समस्तेति ॥ सर्वस्यद्वैतजालस्यवाचारंभणश्रुत्युक्तन्यायेनतदुपादानेश्वरमात्रत्वभावनेत्यर्थ.
॥ ३१ ॥ तत्रोपपत्तिमाह ॥ अवोधवशतइति ॥ ३२ ॥ तद्दृढीकारायभगवान्स्वस्यसार्वात्म्यलक्षणाविभूतिमाह ॥ अहमाशाइत्यादिना ॥ गच्छतीतिजगत्चरम् ॥ स्वकर्मा
श्रयः ॥ ३३ ॥ अद्वैतपरद्वैतमपररूपतन्मियम्यंजगच्चाहमेवेत्यर्थः ॥ एवंद्विरूपेमयिअविकारतारतम्येनमनोयस्यसमन्मनाःभव ॥ तादृशेमयितथैवभक्तःश्रवणकीर्त्तनादिनव
विधभक्तिमान्भव ॥ तादृशस्यमेज्ञानयज्ञेनकर्मयज्ञेनवायजनशीलोभवेत्यर्थः ॥ एवमुक्तप्रकारद्वयेनापियुक्त्वामयिचित्तनिवेश्यमामेवात्मानस्वात्मभूतमेष्यसिसाक्षात्परपर
याचप्राप्स्यसीत्यर्थ. ॥ ३४ ॥ एवमुक्तोर्जुनस्तेद्विरूपेतद्युक्तियोग्यमधिकारकालविभागचजिज्ञासमानःपृच्छति ॥ द्वेइति ॥ ३५ ॥

सामान्यसर्वजनसाधारणसुबोधमित्यर्थ ॥ ३६ ॥ परअशुद्धचित्तैरधिगमम् ॥ ३७ ॥ ३८ ॥ ततश्चित्तशुद्धिक्रमात् ॥ ३९ ॥ तुशब्दार्थेवाशब्द ॥ इदंसगुणभजनमयातु
भ्यमित्तशुद्ध्यभावसमाप्त्याक्रयदितुतवमामश्विसवयवेत्नार्हविज्ञातम ॥ भावेक्त ॥ विज्ञानैकरसमायमसयस्यतथाविध शुद्धइतिमन्यसतत्त्वार्हममईश्वरस्यआत्मानपारमा
र्थिक स्वरूपभूतशोधिततत्त्वार्थआत्मन स्वस्यच आत्मानशोधितत्वपदार्थरूपंचैकरसीकृत्याखण्डपरिपूर्णात्मानसश्रयमुख्यातम्भिन्नोभवेत्यर्थ ॥ ४० ॥ अहमासाजगदहमित्या
दिविभूत्युपदेशस्यापितत्तदधिष्ठानस्वतत्त्वपरिशोधनएवतात्पर्यमित्याह ॥ इदचाहमिति ॥ ४१ ॥ मदुपदेशाखबोधेनमयसद्य एवस्वरूपेविश्रांति सेत्स्यतीत्युत्साहजननायसिद्धस
न्त्याह ॥ मन्येहमि ॥ ४२ ॥ आत्मानमधिष्ठानत्वेनानुगतम् ॥ आत्मन्यध्यस्तानि ॥ ४३ ॥ सर्वथासर्वप्रकारेणसमाधिव्युत्थानव्यवहारदशयावावर्तमानोपि ॥ ४४ ॥ सर्व

श्रीभगवानुवाच॥ ॥सामान्यपरमंचैवद्वेरूपेविद्धिमेनघ ॥ पाण्यादियुक्तसामान्यशंखचक्रगदाधरम् ॥ ३६॥ पररूपमनाद्यंतंय
न्मेंष्वनामयम्॥ब्रह्मात्मपरमात्मादिशब्देनैतदुदीर्यते ॥ ३७॥ यावदप्रतिबुद्धस्त्वमनात्मज्ञतयास्थित ॥ तावच्चतुर्भुजाकारदेवपू
जापरोभव ॥ ३८॥ तत्क्रमात्सप्रबुद्धस्त्वततोज्ञास्यसितत्परम्॥ ममरूपमनाद्यंतंयेनभूयोनजायते॥३९॥ यदिवावेद्यविज्ञातोभाव
स्तदरिमर्दन॥तन्ममात्मानमात्मानमात्मनश्चाशुसंश्रय ॥ ४०॥ इदंचाहमिदंचाहमितियत्प्रवदाम्यहम्॥ तदेतदात्मतत्त्वंतुतुभ्यमुप
दिशाम्यहम्॥ ४१॥ मन्येसाधुविशुद्धोसिपदेविश्रांतवानसि॥ संकल्पैरवमुक्तोसिसत्यैकात्ममयोभव ॥ ४२॥ सर्वभूतस्थमात्मानंस
र्वभूतानिचात्मनि॥ पश्यत्वंयोगयुक्तात्मासर्वत्रसमदर्शन॥४३॥सर्वभूतस्थमात्मानंभजत्येकत्वमात्मन ॥ सर्वथावर्त्तमानोपिनस
भूयोभिजायते॥ ४४॥एकत्वसर्वशब्दार्थएकशब्दार्थआत्मन ॥ आत्मापिचनसन्नासद्भूतोयस्याश्रुतस्यतत्॥ ४५॥ त्रैलोक्यचेतसा
मतरालोकोयंप्रकाशक ॥ अनुभूतिमुपारूढ सोहमात्मेतिनिश्चय ॥ ४६॥ त्रैलोक्यपयसामंतर्योरसानुभव स्थित ॥ गव्यानामब्धि
जानांचसोयमात्मेतिभारत॥ ४७॥

भूतस्थमात्मानमितिश्लोकस्यतात्पर्यंस्वयमेववर्णयति ॥ एकत्वमिति ॥ सर्वभूतेष्वधिष्ठानतयास्थितमात्मानपश्यसितदासर्वशब्दस्यार्थोधिष्ठानव्यतिरिक्तस्यालाभादेकत्वम
जतेसएवएकशब्दार्थआत्मनःप्रतीच स्वभावेपर्यवसन्न सआत्मापिचनसन्मूर्तभूतमयस्वभावोनाप्यसन्नसूक्ष्मभूतद्वयस्वभाव किंतुभूमानदपिविवेकस्वभावोयस्यानुभवगतस्तस्या
स्यत्यादिना ॥ ४६ ॥ त्रैलोक्यस्यानांपयसांजलानां गोर्धिकारागव्यामितपांदुग्धादीनां अब्धिजानांलवणादीनांचक्षारादिसुमध्वादीनांचजिह्वापसन्निकृष्टानांयोरसानुभव
सोयमात्मैवेतिनपरोक्ष्यसक्तिरित्यर्थ ॥ ४७॥

अनुभवनीयेनविषयजातेनमुक्तोरहित·अतएवदुर्लक्ष्यत्वात्सूक्ष्मः ॥ ४८ ॥ सर्वपदार्थानामंतरधिष्ठानतयादेहानामंतस्तुप्रकाशकतयाचसस्थित· ॥ ४९ ॥ देहांत·स्थितिदृष्टां
तेनविशदयति ॥ सर्वेति ॥ यथासर्वरत्नानामतर्गततेजोबहिरपिप्रकाशयतितद्वदित्यर्थ· ॥ ५० ॥ असस्थितइवेत्युक्तितात्पर्यविपयमलेपकत्वदृष्टातातरेणविशदयति ॥ यथेति
॥ ५१ ॥ सर्वदेहेष्वत.स्थित्वातर्यामितयाविधारकत्वेप्यलक्ष्यत्वेदृष्टातमाह ॥ मुक्ताफलेति ॥ ५२ ॥ तत्राधिष्ठानात्मनानिर्विकारस्थितिर्ब्रह्मतासैववास्तवी यातुमुक्तासुतंतुवद
तर्यामितयास्थितिर्याचरत्नेषुप्रभावत्प्रकटजीवतयास्थितिस्तेउभेअध्यस्तसापेक्षेजगद्व्यवहारार्थंकल्पितेइतिनवास्तवहंतव्यहंतात्वयुक्तपापतत्फलप्रदोवास्यात्मातिरिक्तइत्याश

अंतःसर्वशरीराणांयःसूक्ष्मोनुभवःस्थितः॥ मुक्तोनुभवनीयेनसोयमात्मास्तिसर्वगः॥४८॥ समग्रपयसामंतर्यथाघृतमिवस्थितम्॥
तथासर्वपदार्थानांदेहानांसंस्थितःपरः ॥ ४९ ॥ सर्वांभोनिधिरत्नानांसबाह्याभ्यंतरेयथा॥ तेजस्तथास्मिन्देहानामसंस्थितइवास्थितः
॥५०॥ यथाकुंभसहस्राणांसबाह्याभ्यंतरेनभः॥ जगत्त्रयशरीराणांतथात्माहमवस्थितः॥५१॥ मुक्ताफलशतौघानांतंतुःप्रोतवपुर्य
था॥ तथायंदेहलक्षाणांस्थितआत्मास्त्यलक्षितः॥५२॥ ब्रह्मादौतृणपर्यंतेपदार्थनिकुरंबके॥ सत्तासामान्यमेतद्यत्तमात्मानमजंवि
दुः॥५३॥ तदीषत्स्फुरिताकारंब्रह्मब्रह्मैवतिष्ठति॥ अहंतादिजगत्तादिक्रमेणभ्रमकारिणा ॥ ५४ ॥ आत्मैवेदंजगद्रूपंहन्यतेहंतिवात्र
किम्॥ शुभाशुभैर्जगद्दुःखैःकिमस्यार्जुनलिप्यते ॥ ५५॥ प्रतिबिंबेष्विवादर्शसमंसाक्षिवदास्थितम्॥ नश्यत्सुनविनश्यंतंयःपश्यति
सपश्यति॥५६॥ इदंचाहमिदंनेतिइतीदंकथ्यतेमया ॥ एवमात्मास्मिसर्वात्मामामेवंविद्धिपांडव ॥५७॥ इमाःसर्वाःप्रवर्त्तंतेसर्गप्र
लयविक्रियाः॥ आत्मन्यहंताचित्तस्थाःपयःस्पंदाइवांबुधौ॥५८॥ यथोपलत्वंशैलानांदारुत्वंचमहीरुहाम्॥ तरंगाणांजलत्वंचपदा
र्थानांतथात्मता॥५९॥ सर्वभूतस्थमात्मानंसर्वभूतानिचात्मनि॥ यःपश्यतितथात्मानमकर्तारंसपश्यति ॥६०॥ नानाकारविकारे
षुतरंगेषुयथापयः॥ कटकादिषुवाहेमभूतेष्वात्मातथार्जुन॥६१॥

यनाह ॥ ब्रह्मादाविति त्रिभिः ॥ ५३ ॥ ५४ ॥ ५५ ॥ अध्यस्तैर्वधादिदोषैरलेपेदृष्टातांतरमाह ॥ प्रतिबिंबेष्विति ॥ ५६ ॥ सर्वदेहेषुअहमहमितिप्रथमानश्चिदंशएवाहंजडदे
हेंद्रियविषयांशोनाहमितिविभागोक्तिरपिदर्पणप्रतिबिंबितेष्वनेकदर्पणांतरेषुघटादिषुचव्यावृत्तदर्पणस्वरूपपरिचयायदर्पणादर्पणविभागोक्तिवदेवेत्याह ॥ इदंचाहमिति ॥ इति
शब्दआद्ययोर्थविभागप्रकारपरोद्वितीयस्तुउक्तिविभागप्रकारपरइत्यपौनरुक्त्यम् ॥ एवंदर्पणवदेवालेपकोऽद्वयएवात्मासन्नहंसर्वात्मास्मि ॥ ५७ ॥ अहंताअभिमानवृत्तिस्तद्व
तिचित्तेतिष्ठंतीतितत्स्था. ॥ ५८ ॥ आत्मतापारमार्थिकीत्यर्थः ॥ ५९ ॥ अकर्त्तारंप्रतिबिंबचेष्टासुदर्पणवद्व्यापृतमित्यर्थः ॥ ६० ॥ ६१ ॥

॥ ६२ ॥ ब्रपपतत्यनिर्विवदेकमेव ॥ ६३ ॥ यथानिर्विकारस्यैवैकनयाजन्मादिभावविकाराणांगम्यमात्मामयभूतकिमन्यदस्ति ॥ मैवधुवधाविनाशविकारावाकसति अगव पिंकिमाम्यदस्तिर्नाकिंचिदित्यर्थ ॥ ६४ ॥ अत अमयप्रमयभावयित्वासम्यगनुभूय ॥ ६५ ॥ तेषामेवोक्तलक्षणविशिष्टानांविदेहकैवल्यावाप्तिरपीत्याशयेनाह ॥ निर्मानमोहा इति ॥ ६६ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू०त्रिपंचाशत्तम सर्ग ॥ ५३ ॥ ॥ ५ ॥ ॥ सुखदु खादिसवधेहेतुर्दानक्रमस्त्था ॥ यदाल म्ब्यचतज्ज्ञानतस्सर्वमिहकीर्त्यते ॥ १ ॥ द्वंद्वैर्विमुक्ता सुखदु खसंज्ञैरित्यत्रगच्छतीत्युक्तमतस्तत्सुखदु खसवधेकाहेतु कथतद्विमोक्षोपाय किमालम्ब्यचेत्याशकापरिहारद्वारेणात्मतत्त्वमुपदे ष्टुकामोभगवानुवाच ॥ भूयएवेति ॥ प्रीयमाणायमत्याश्रोतुकामायउपविश्यमानार्थग्रहणेनसमुत्थितेच ॥ १ ॥ तमादौविषयाएवसुखदु खरूपाइत्यभेदभ्रमवारयन्नाह ॥ मा

नानातरंगवद्दानियद्यालोलानिवारिणि ॥ कटकादीनिवाहेम्निभूतान्येवपरात्मनि ॥ ६२ ॥ पदार्थजातभूतानिग्रहद्रुमचभारत ॥ एकमेवाखिलविद्धिपृथक्कनमनागपि ॥ ६३ ॥ किंतद्भावविकाराणांगम्यमस्तिजगत्त्रये ॥ क्वतेवापिजगत्किंवाकिमुधापरिमुत्यसि ॥ ६४ ॥ इतिश्रुत्वाभयत्वतभावयित्वासुनिश्चितम् ॥ जीवन्मुक्ताश्चरतीहमत समरसाशया ॥ ६५ ॥ निर्मानमोहाजितसंगदोषाअध्यात्मनित्याविनिवृत्तकामा ॥ द्वंद्वैर्विमुक्ता सुखदु खसंज्ञैर्गच्छत्यमूढापदमव्ययतत् ॥ ६६ ॥ ॥ इ०वा०वा०दे०मोक्षोपायेपुनि०पू०अर्जुनोपाख्यानेअर्जुनोपदेशोनामत्रिपंचाश सर्ग ॥ ५३ ॥ ॥ श्रीभगवानुवाच ॥ ॥ भूयएवमहाबाहोशृणुमेपरमवच ॥ यत्तेहप्रीयमाणायवक्ष्यामिहितकाम्यया ॥ १ ॥ मात्रास्पर्शास्तुकौंतेयशीतोष्णसुखदु खदा ॥ आगमापायिनोनित्यास्तांस्तितिक्षस्वभारत ॥ २ ॥ तेतुनैकात्मनश्चान्येकातोदु खक्कवासुखम् ॥ अनाद्यतनवयवेकुत पूरणखडने ॥ ३ ॥

त्रास्पर्शाइति ॥ श्रीयतेविषयाएभिरितिमात्राइंद्रियाणितेषांविषयसस्पर्शास्तेशीतोष्णाद्यनुभावनमयुक्तसुखदु खदेतव ॥ अथवास्पृश्यतइतिस्पर्शा शब्दादय ॥ शीतोष्णग्रहणमुदाहरणार्थम ॥ यथाशीतग्रीष्मेसुखमुष्णदु खंतेपुन शिशिरेविपरीतेइतिनविषया सुखदु खरूपाइत्यर्थ ॥ एवदु खहेतुमुक्त्वातस्मात्तन्निवारणोपायमाह ॥ तांस्तितिक्षस्वेति ॥ तितिक्षोक्तिर्वैराग्यस्याप्युपलक्षणम ॥ तथाचप्रियेषुविरज्यस्वअप्रियेपुतितिक्षस्वेत्यथ ॥ २ ॥ ययामुत्पातविरागतितिक्षसिध्यतस्तामाह ॥ तेत्विति ॥ तेमात्रा स्पर्शाश्चतेसुखदु खेवा चकारादन्यदपि ॥ एकात्मन अद्वयपूर्णानदरसभावात्स्वात्मनोन्येनअत एवबोधात्विस्यर्थ ॥ किंचप्रियतमधनपुत्रादिसपत्त्यापूर्णोहमितिभ्रान्त्याआभिमानिकसुखतद्वियोगादप्रियसपत्त्यास्वखिन्नोहमितिदु खचस्यात्तअपिनिरवयवेपूरणखडनासभवदर्शनेनिवर्त्ततेइत्याह ॥ अनाद्यतेइति ॥ ३ ॥

यस्यस्पर्शानाविषयाणांमात्राणामिंद्रियाणांचाख्यानमाख्यासत्यताप्रतीति संस्थिताउपशांताभवतिसमात्रास्पर्शभ्रमात्मकोजीवोधीरस्यास्तीतिधीरस्तत्त्वदर्शीसमदुःखसु
खोभूत्वाअमृतत्वायकल्पतइत्यर्थः ॥ ४ ॥ नन्वप्रियादुःखादयःकथस्वप्रतिकूलवेदनीयतास्वभावजह्युर्येनतेसह्याः स्युस्तत्राह ॥ सर्वत्वादिति ॥ निरतिशयानंदैकरसस्यात्मनए
वसर्वत्वादेतेदुःखादिभेदाः शोभनाभेदाः सुभेदाः प्रियतमधनपुत्रादिभेदाइवसंस्थितानप्रतिकूलवेदनीयताभजंते प्राक्तनेनतुप्रातिकूल्यस्वभावेनासद्रूपाइत्यर्थः ॥ ५ ॥ तदेवस्फुटी
कृत्यसमर्थयति ॥ मनागपीति ॥ ६ ॥ नन्वसदपिदुःखाद्यात्मन्युत्पद्यते असतएवस्वकारणसमवाय स्वसत्तासंबंधआद्यक्षणसंबंधोवाउत्पत्तिरितिकणभक्षाक्षचरणाद्युक्तिप्रति
क्षिपति ॥ नासतइति ॥ असतोदुःखादेर्भावःसत्तानविद्यते सतःअभावःअसत्ताचनविद्यते ॥ स्वभाववैपरीत्यायोगात् वाचारंभणादिश्रुत्याविकारमात्रस्यासत्त्वनिश्चयात् ॥ न

संस्थितास्पर्शमात्राख्यामात्रास्पर्शभ्रमात्मकः ॥ समदुःखसुखोधीरःसोमृतत्वायकल्पते ॥ ४ ॥ सर्वत्वादात्मनश्चैतेसुभेदाःसंस्थिताइ
व ॥ असद्रूपास्त्वसद्रूपंकथंसोढुंनशक्यते ॥ ५ ॥ मनागपिनविद्यंतेसुखदुःखेतुसर्वशः ॥ सर्वत्वादात्मतत्त्वस्यसत्ताकथमनात्मनः ॥ ६ ॥
नासतोविद्यतेभावोनाभावोविद्यतेसतः ॥ नास्त्येवसुखदुःखादिपरमात्मास्तिसर्वगः ॥ ७ ॥ सत्वासत्वमतीत्यत्काचैतयोर्जगदात्मनोः ॥
त्यक्तानकिंचिन्मध्येचशेषेबद्धपदोभव ॥ ८ ॥ नहृष्यतिसुखैरात्मादुःखैर्ग्लायतिनोऽर्जुन ॥ दृश्यदृक्केतनात्मापिशरीरांतर्गतोपिसन्
॥ ९ ॥ जडंचित्तादिदुःखस्यभाजनंदेहतांगतम् ॥ नचैतस्मिन्क्षतेक्षीणेकिंचिदेवात्मनःक्षतम् ॥ १० ॥ जडंदेहादिदुःखादेर्यदिदंभोक्तृ
संस्थितम् ॥ तन्मायाभ्रममेवांगविद्धबोधवशोत्थितम् ॥ ११ ॥ नकिंचिदेवदेहादिनचदुःखादिविद्यते ॥ आत्मनोयत्पृथग्भूतंकिंके
नातोनुभूयते ॥ १२ ॥

नुसर्वविकाराणामसत्वेपिडाद्यन्यतमविकारानालिंगितप्रकृतिमृदाद्यदर्शनात्तस्याप्यसत्वेशून्यतापरिशेषःकिनस्यादितिचेन्न ॥ विकारेष्वनुगतसद्बुद्धेर्निर्विषयत्वायोगेनविकारा
सत्वेपिशून्यपरिशेषानापत्तेः ॥ यदितदप्यसदेवस्यात्तर्हिघटःअसन्पटःअसन्नित्येवान्ववर्त्स्यत् सत्सदित्येवचानुवर्त्ततेअतस्तन्मात्रमेवपरिशिष्यते ॥ यस्तुविकारेषुसदिदमित्यभि
मानःसोधिष्ठानसत्तानुवेधादेवनस्वतइतिसुखदुःखादिनास्त्येवेत्यर्थः ॥ ७ ॥ जगतःसत्त्वमतिनिरतिशयानंदात्मनःअसत्वमतिचत्यक्त्वातयोर्जगदात्मनोर्मध्येअंतरालेउभयसंघट
नानिमित्तमनस्तमश्चातितुच्छमितित्यक्त्वाशिष्यतइतिशेषश्चिदात्मातस्मिन्बद्धपदःप्रतिष्ठितोभव ॥ ८ ॥ दृश्यानिहर्षग्लान्यादीनिसाक्षितयापश्यतीतिदृश्यदृक् ॥ नहिदृश्यास्ते
दृग्धर्माभवितुमर्हंतीतिभावः ॥ ९ ॥ कितर्हिदुःखहर्षादिभाजनतत्राह ॥ जडमिति ॥ एतस्मिन्चित्तादौ ॥ १० ॥ इदंचित्तादिघटितजीवरूपम् ॥ ११ ॥ १२ ॥

सधिरार्षः

यरिद् त्वनदवाधोत्यंभानिरतस्तनसम्यग्बोधेनैवविनश्यति ॥ अथदृष्टांतकथयामीत्यन्वय ॥ १३ ॥ १४ ॥ कीदृश सबोधस्तमाह ॥ विप्वगिति ॥ विश्वविप्वक्पूर्णब्रह्मैव ॥ १५ ॥ अपबाधादयकाले ॥ १६ ॥ फलतवार्चायावच्छन्न ॥ कालादीनांद्वंद्वसमास ॥ सदसद्धर्मौभावाभावविकल्पौ ॥ १७ ॥ १८ ॥ त्वत्करिष्यमाणपुरुषार्थौहिणीक्षया त्वनात्मब्रह्मणपवृहितंक्षत अनुभवात्मनाशुद्धब्रह्मैवब्रह्ममयकुर्वित्यर्थ ॥ १९ ॥ २० ॥ नूनंतस्त्वनिश्चयेनकिंचनजागमोहादिरूपभूत्वा ॥ स्वद्वातोगुहापरिच्छिन्नोवायुरि

यदिदंप्रपयाम्यन्नतेनैवातोविनश्यति ॥ भ्रांतिर्दुःखमबोधोत्थासम्यग्बोधेनभारत ॥ १३ ॥ यथारज्ज्वामहिभयबोधान्नश्यत्यबोधजम् ॥ तथादेहादिदुःखादिबोधान्नश्यत्यबोधजम् ॥ १४ ॥ विष्वग्विश्वमजब्रह्मननश्यतिनजायते ॥ इतिसत्यपरविद्धिबोध परमएपस ॥ ॥ १५ ॥ ब्रह्मांबुधांतरगत्वकिंचिद्भूत्वाविलीयते ॥ ब्रह्मावर्त्तस्फुरस्यपब्रह्मैवासिनिरामयम् ॥ १६ ॥ यावत्कालक्रियादेशास्त्वमहसैनि पाइव ॥ ब्रह्मणावपरिस्पदानान्नस्त सदसद्धर्मौ ॥ १७ ॥ जहिमानमदशोकभयमीहासुखासुखे ॥ द्वैतमेतदसद्रूपमेक सद्रूपवान्भव ॥ ॥ १८ ॥ पुरुषार्थोहिणीनाचक्षयेणानुभवात्मना ॥ ब्रह्मणावृहितशुद्धब्रह्मब्रह्ममयकुरु ॥ १९ ॥ असंविदन्सुखदुःखंलाभालाभौजया जयौ ॥ शुद्धब्रह्मैवनांगच्छब्रह्माब्धिस्त्वहिभारत ॥ २० ॥ लाभालाभसमोभूत्वाभूत्वानूननकिंचन ॥ स्वद्वातइवास्पदीप्रकृतकार्यमा चर ॥ २१ ॥ यत्करोपियदश्नासियज्जुहोपिददासियत् ॥ यत्करिष्यसिकौंतेयतदात्मेतिस्थिरोभव ॥ २२ ॥ यन्मयायोभवत्यत सतदा त्मत्यसशयम् ॥ ब्रह्मसत्यमवात्त्वब्रह्मभत्यमयोभव ॥ २३ ॥ अनपेक्षफलब्रह्मभूत्वाब्रह्मेतिभावितम् ॥ क्रियतेकेवलकर्मब्रह्मज्ञेनय यागतम् ॥ २४ ॥ कर्मण्यकर्मयपश्यत्यकर्मणिचकर्मय ॥ सबुद्धिमान्मनुष्येपुसयोक्त कृत्स्नकर्मकृत् ॥ २५ ॥ माकर्मफलहेतुर्भूर्मातेस गोस्त्वकर्मणि ॥ योगस्थ कुरुकर्माणिसगत्यक्त्वाधनंजय ॥ २६ ॥

व ॥ २१ ॥ सर्वक्रियाणांब्रह्मणिनिश्चयस्थैर्यमेवमर्पणमित्याशयेनाह ॥ यदिति ॥ २२ ॥ यन्मय यदाकारचित्त ॥ २३ ॥ अपेक्षायाअभाव-अनपेक्षम् ॥ अर्थाभावेऽव्य यीभाव ॥ सर्वकामोपरमलक्षणक्लपरमपुरुषार्थ स्वयभूत्वाकेवलयथाचेष्टारूपब्रह्मतिभावनाबाधितकर्मक्रियते ॥ २४ ॥ य-पुमान्कर्मण्युक्तरीत्याअकर्मनिष्क्रियब्रह्मपश्य त्ययमपिब्रह्मप्यविद्यानप्रतिष्ठारूपकर्मअसर्थंकर्तव्यपश्यतिसबुद्धिमान्विवेकीसएवपरयरूपत फलतश्चकृत्स्नपूर्णकर्मकरोतीतिकृत्स्नकर्मकृदुक्तोविद्वद्भिरित्यर्थ ॥ २५ ॥ कर्मफलानिरागादीनिहेतवप्रवृत्तिनिमित्तानियस्यतथाविधोमाभू ॥ अकर्मणिमाप्रकर्माकरणपितेसगआसक्तिमाभूत्योगस्थ-मागुक्तसिद्ध्यसिद्धिसमदृष्टिमनिश्चित ॥ २६ ॥

१ पुद्ध्मब्रह्मैवनांगच्छमसाब्धिस्त्वहिभारतेतिपाठांतरम्

मूढतांतत्त्वदृष्टौप्रमादम् ॥ २७ ॥ २८ ॥ मौर्ख्येउक्तप्रमादेस्थितेसत्यवश्यमासक्तिर्भवेदेवततोऽनर्थपरंपरेत्यर्थः ॥ २९ ॥ तत्त्वदर्शनाप्रमादेतुनिरासक्तेःस्वतएवाकर्तृता सिद्ध्यती त्याह ॥ परमिति ॥ ३० ॥ तेनचभूमिकाक्रमाद्विदेहकैवल्यांतसिद्ध्यतीत्याह ॥ अकर्तृत्वादिति ॥ ३१ ॥ अकार्यंप्रमादान्निषिद्धंचकुर्वन् ॥ ३२ ॥ ३३ ॥ सव्यग्र सक्रियोपि स अव्यग्रतामक्रियताम् ॥ ३४ ॥ अलब्धस्यलाभोयोगोलब्धस्यपालनंक्षेमस्तदुभयचिंताशून्यः ॥ ३५ ॥ त्यक्तसर्वकर्मणोमानसविषयासंगसत्वेदांभिकएवससन्यासइ

कर्मासक्तिमनाश्रित्यतथानाश्रित्यमूढताम् ॥ नैष्कर्म्यमप्यनाश्रित्यसमस्तिष्ठयथास्थितम् ॥ २७॥ त्यक्त्वाकर्मफलासंगंनित्यतृप्तोनि राश्रयः ॥ कर्मण्यभिप्रवृत्तोपिनैवकिंचित्करोतिसः॥ २८॥ आसक्तिमाहुःकर्तृत्वमकर्तुरपितद्भवेत् ॥ मौर्ख्येस्थितेहिमनसितस्मान्मौ र्ख्यंपरित्यजेत् ॥ २९ ॥ परंतत्त्वज्ञमाश्रित्यनिरासक्तेर्महात्मनः ॥ सर्वकर्मरतस्यापिकर्तृतोदेतिनक्वचित् ॥ ३० ॥ अकर्तृत्वादभोक्तृत्वम भोक्तृत्वात्समैकता॥ समैकत्वादनंतत्वंततोब्रह्मत्वमाततम् ॥ ३१ ॥ नानातामलमुत्सृज्यपरमात्मैकतांगतः ॥ कुर्वन्कार्यमकार्यंचनैव कर्तात्वमर्जुन ॥ ३२ ॥ यस्यसर्वेसमारंभाःकामसंकल्पवर्जिताः॥ ज्ञानाग्निदग्धकर्माणंतमाहुःपंडितंबुधाः ॥ ३३ ॥ समःसौम्यःस्थि रःस्वस्थःशांतःसर्वार्थनिस्पृहः ॥ यस्तिष्ठतिससव्यग्रोप्यलमव्यग्रतांगतः ॥ ३४ ॥ निर्द्वंद्वोनित्यसत्वस्थोनिर्योगक्षेमआत्मवान् ॥ यथा प्राप्तानुवर्तीत्वंभवभूपितभूतलः॥ ३५॥ कर्मेंद्रियाणिसंयम्यय आस्तेमनसास्मरन्॥ इंद्रियार्थान्विमूढात्मामिथ्याचारःसउच्यते ॥ ३६॥ यस्त्विंद्रियाणिमनसानियम्यारभतेर्जुन ॥ कर्मेंद्रियैःकर्मयोगमसक्तःसविशिष्यते ॥ ३७॥ आपूर्यमाणमचलप्रतिष्ठंसमुद्रमापःप्रवि शंतियद्वत्॥ तद्वत्कामायंप्रविशंतिसर्वेसशांतिमाप्नोतिनकामकामी ॥ ३८॥ ॥ इ० वा० वा० दे० मोक्षोपायेपु० नि० पू० अर्जुनोपा ख्यानेआत्मज्ञानोपदेशोनामचतुष्पंचाशःसर्गः ॥ ५४॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

त्याह ॥ कर्मेंद्रियाणीति ॥ ३६ ॥ समनस्केंद्रियनिग्रहवतोयथाशास्त्रंव्यवहरतोपिफलासंगत्यागात्सन्यासफलमस्त्येवेत्याशयेनतंप्रशंसन्नाह ॥ यस्त्विति ॥ ३७ ॥ तस्मान्निगृ हीतसर्वेंद्रियस्यसन्यासिनएवसर्वकामोपरमात्परमपुरुषार्थोनान्यस्येत्युपसंहरति ॥ आपूर्यमाणमिति ॥ यद्वत्आपोनद्यआपूर्यमाणसमुद्रंप्रविशंतितद्भावमापन्नाविलीयंतेत द्वदचलेब्रह्मणिप्रतिष्ठायस्यतसन्यासिनंसर्वेकामामिथ्यात्वबुद्धिबाधितविषया सत प्रविशत्यात्मन्येवविलीयात्ममात्रतामापद्यंतेसएवसर्वानर्थशांतिलक्षणमोक्षमाप्नोतिनतुका म्यतइतिकामाविषयास्तत्कामनाशीलइत्यर्थः ॥ ३८ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० पू० चतुष्पचाश सर्गः ॥ ५४ ॥ ॥ छ ॥ ॥ छ ॥

१ ब्रह्मत्वमागतमित्यपिक्वचित्पाठः

दहनाशेप्यनाशात्मामूढनस्त्वमयो.सम ॥ मूढोनन्मादिभागुर्मात्यात्सतुनेत्यमवर्ण्यते ॥१॥ भुज्यतइतिभोगादेहधारणहेतवोन्नपानादयस्तेषांत्यागनकुर्यात् ॥ हितमितमेध्याशनादुपारयादित्यर्थ ॥ भोगानांभावनांचिंतांतत्सोष्ठवसंपादनव्यसनितांचनकुर्यात् ॥ तथ्राभालाभादिपुसुसमेनैवस्थातव्यमित्यर्थ ॥ १ ॥ एवंदेहात्मभावनापिनकार्येत्याह॥ अनात्मनीति ॥ भवात्मनिजन्मादिविक्रियारस्वभावे ॥ २ ॥ ३ ॥ उक्तेऽर्थेअशीर्योनहिशीर्यतेइतिश्रुतिप्रमाणयन्नाभिमानिकपरिग्रहएवशीर्णतादिदेहधर्माणामात्मनिप्रसंजकस्तत्त्यागनुनशीर्णतादिप्रसक्तिरित्याह ॥ नहीति ॥ अचित्तालावेहादिपरिग्रहनिमित्ताचित्ताद्विविक्ष्यदृष्टइत्यर्थ ॥ कर्मणियुद्धादौ ॥ ४ ॥ मौर्ख्येस्थितेअज्ञतापन्ने ॥ ५ ॥

॥श्रीभगवानुवाच॥ ॥ नकुर्याद्भोगसत्यागंनकुर्याद्भोगभावनम् ॥ स्यातव्यंसुसमेनैवयथाप्राप्तानुवर्त्तिना ॥ १ ॥ अनात्मन्यात्मतांदेहभावयन्नवात्मनि ॥ आत्मन्येवात्मतांसत्येभावयात्मस्वरूपिणि ॥ २ ॥ देहनाशेमहाबाहोनकिंचिदपिनश्यति ॥ आत्मनाशोहिनाशः स्यान्नचात्मानश्यतिध्रुवं ॥ ३ ॥ नहिशीर्यत्यचित्तात्मात्यक्तसर्वपरिग्रहः ॥ कर्मण्यभिप्रवृत्तोपिनैवकिंचित्करोतिसः ॥ ४ ॥ आसक्तिमाह्रु कर्तृत्वमकर्तुरपितद्भवेत् ॥ मौर्ख्यस्थितेहिमनसितस्मान्मौर्ख्यंपरित्यजेत् ॥ ५ ॥ परतत्त्वज्ञमाश्रित्यनिरासक्तेर्महात्मनः ॥ सर्वकर्मरतस्यापिकर्तृताठेतिनक्वचित् ॥ ६ ॥ अविनाशमनाद्यंतमात्मानमजरंविद्धि ॥ नश्यत्यात्मेतिदुर्बोधोमातवाऽस्त्विहद्रु खद ॥ ७ ॥ नतथापरिपश्यतिविदितात्मानउत्तमाः ॥ पश्यत्यनात्मनात्मानस्वमात्मन्यात्ममानिनः ॥ ८ ॥ ॥ अर्जुनउवाच ॥ ॥ एवंचेत्रिजगन्नाथमृढानामपिमानद ॥ देहनाशसमुत्पन्नेइष्टनष्टनकिंचन ॥ ९ ॥ ॥ श्रीभगवानुवाच ॥ ॥ एवमेतन्महाबाहोनकिंचिन्नश्यतिक्वचित् ॥ आत्मैवास्त्यविनाशात्माकितस्यक्वविनश्यति ॥ १० ॥ इदनष्टमिदयुक्तमितिमोहभ्रमाहते ॥ अन्यत्तथानपश्यामिवंध्यात्मीतनययथा ॥ ११ ॥

तथोपायमाह ॥ परमिति ॥ ६ ॥ ७ ॥ यथाआत्मानस्पतीत्येवमकारेणनपरिपश्यति ॥ कुतोनपश्यति यतस्तेआत्मन्येवआत्ममानिनः स्वमात्मानमनात्मदेहादिरूपेनपश्यतीत्यर्थः ॥ ८ ॥ नन्वेवंसतिमूढानांदेहाद्यात्मबुद्ध्यापश्यतुनामतथापितेषांतन्नाशेआत्मनाशोनास्त्येवेतिमरणादिर्निनर्थ स्यादित्यर्जुन शंकते ॥ एवंचेदिति ॥ इष्टमियतमवस्तुनकिंचननष्टम् ॥ दृष्टमितिपाठेयथादृष्टिगम्यम् ॥ ९ ॥ इष्टापत्त्याशंकांपरिहरति ॥ एवमेतदित्यादिना ॥ १ ॥ कथंतर्हिदेहनाशपुत्रलाभादेरनर्थत्वमर्थत्वंचतेषांतमाह ॥ इदमिति ॥ युक्तलब्धम् ॥ स्वमपिपृथग्मरणजन्मभ्रमादनर्थादिभ्रमहारदर्शनादितिभावः ॥ ११ ॥

१ तथात्वमिदु स्वदत्यपिपाठ

अतएवसतोऽसत्त्वविरोधान्नदेहादेःसत्त्वमितिप्रागुक्तमित्याह ॥ नासतइति ॥ उभयोःसदसतोः॥ सत्सदेवअसदसदेवनस्वभावविपर्ययइतिअंतोनिर्णयस्तत्त्वदर्शिभिर्दृष्टोनमूढैरि त्यर्थः ॥ १ २॥ एवयत्सत्तदविनाशियद्विनाशितदसदेवेतिनासतोबधुदेहादेर्युद्धेनाशेकश्चिदनर्थइत्याशयेनाह ॥ अविनाशीतिद्वाभ्याम् ॥ १३ ॥ १४ ॥ अद्वयत्वाद्विनाशका प्रसिद्धेरपिनात्मनाशप्रसक्तिरित्याह ॥ आत्मेति ॥ १५ ॥ एकत्वकारणसच्छब्दवाच्यद्वित्वकार्यमसदन्ततयोर्मध्यमातरमधिष्ठानसन्मात्रम् ॥ १६ ॥ एवमपरिच्छिन्नस्यात्म नोमरणादिपरिच्छेददुःखादिभ्रमेकोहेतुरित्यर्जुनःपृच्छति ॥ तदिति ॥ तर्त्तहि ॥ किंकृताकेनहेतुनाप्राप्ता ॥ स्थितिर्नियतिः ॥ तस्यांचस्थितौस्वर्गःसुखनरकोदुःखर्चाकिंकृतौ

नासतोविद्यतेभावोनाभावोविद्यतेसतः ॥ उभयोरपिदृष्टोंतस्त्वनयोस्तत्त्वदर्शिभिः ॥ १२ ॥ अविनाशितुतद्विद्धियेनसर्वमिदंततम् ॥ विनाशमव्ययस्यास्यनकश्चित्कर्तुमर्हति ॥ १३ ॥ अंतवंतइमेदेहानित्यस्योक्ताःशरीरिणः ॥ अनाशिनोप्रमेयस्यतस्माद्युध्यस्वभारत ॥ १४ ॥ आत्मात्वेकोस्तिनद्वित्वमसतःसंभवःकुतः ॥ अविनाशस्त्वनंतोसौसतोनाशोनविद्यते ॥ १५ ॥ द्वित्वैकत्वपरित्यागेशेषंयत्परि शिष्यते ॥ शांतंसदसतोर्मध्यंतदस्तीहपरंपदम् ॥ १६ ॥ ॥ अर्जुनउवाच ॥ ॥ तन्मृतोस्मीतिभगवन्किंकृतातुनृणांस्थितिः ॥ कथंस्थि तौचलोकानांतौस्वर्गनरकौप्रभो ॥ १७ ॥ ॥ श्रीभगवानुवाच ॥ ॥ भूमिरापोनलोवायुःखंमनोबुद्धिरेवच ॥ एतत्तन्मात्रजालात्माजी वोदेहेषुतिष्ठति ॥ १८ ॥ सकृष्यतेवासनयारज्ज्वेवपशुपोतकः ॥ सतिष्ठतिशरीरांतःपंजरेविहगोयथा ॥ १९ ॥ सकालदेशतोदेहाज्जर्ज रत्वमुपागतान् ॥ वासनावशतोयातिप्लक्षपर्णाद्रसोयथा ॥ २० ॥ श्रोत्रंचक्षुःस्पर्शनंचरसनंघ्राणमेवच ॥ गृहीत्वैतानिसंयातिवायुर्ग धानिवाशयात् ॥ २१ ॥ वासनावरत्वमेवास्यदेहोनेतरयुक्तिजः ॥ क्षीयतेवासनात्यागेक्षीणेभवतितत्पदम् ॥ २२ ॥

॥ १७ ॥ एतेभ्योभूतेभ्यःसमुत्थायतान्येवानुविनश्यतीतिश्रुतितात्पर्येणभगवान्समाधत्ते ॥ भूमिरिति ॥ पंचभूतमात्रानिर्मितमनोबुद्ध्यादिघटितव्यष्टिसमष्टिस्थूलसूक्ष्मदेहता दात्म्यापत्तिरेवपरस्यजीवभावःसएवजन्ममरणसुखदुःखादिभ्रमनियतिनिमित्तमित्यर्थः॥ १८॥तस्यविचित्रदेहपरिग्रहेतत्तदनुरूपचेष्टावैचित्र्येचनिमित्तमाह॥सइति ॥ १९॥ पूर्व देहाद्देहांतरगमनेपिवासनैवनिमित्तमित्याह ॥ सइति ॥ २० ॥ आशेतेअस्मिन्नित्याशयःपूर्वशरीरपुष्पादिचतस्मात् ॥ २१ ॥ अतएवास्यस्थूलदेहोपिवासनात्मकएवचिरानु वृत्त्यास्थौल्यभ्रमइत्याशयेनाह ॥ वासनेति ॥ क्षीणेलिंगेतत्परमपदस्वयमेवभवति ॥ २२ ॥

१ यद्वशिष्यतइत्यपिक्वचित्पाठः

परमात्मभूतेनैवात्मपनाविनाआपुष्ट अयमबायासमायामूलिंगदेह परेणपरमात्मनाअवच्छेद्यमतिबिंबभावाभ्यांद्विगुण्येनममेशात्रापुष्ट अभिव्यक्तोभूतेत्यर्थ ॥ माययाएँव्रजा लिकपुरुषायथासेभ्राम्यतितद्वत् ॥ यमभरमाबिभर्तीतिकमण्यण् ॥ २३ ॥ ओषमस्तु स्पर्शनपेतियुक्तमहिरणोति ॥ अक्षस्वभावानिति ॥ स्वभावान्शब्दादिषधृणशक्ती ॥ २४ ॥ तदवलोकमरणप्रसिद्धमित्याह ॥ देहइति ॥ २५ ॥ २६ ॥ खचिदाकाशेभूताकारोयायमयसिन्यस्मिन्देशकालभोग्याद्याकारेअवतिष्ठतेभोजकादृष्टोद्बो धितवासनाभवनिततमाकारपश्यति ॥ २७ ॥ अस्यदेहस्यनाशोप्येवमसर्वंपश्य ॥ अथवासुप्तमदेहनचाशतद्वसत्त्वचमापश्य ॥ यथासुप्तोनकिंचित्पश्यतितद्वदित्यर्थः ॥ २८ ॥ मतियोगिनांवासनाकल्पितत्वेतभावानामपितादृशत्वमेवादिसर्गादारभ्यकृममित्याह ॥ यथैवेति ॥ आदिसर्गेहिप्रथमुर्खेनएपुसर्गेपुगवाश्वाद्याकारेषुभावनयापूर्वसर्गानुभवषा

वासनावान्परापुंशोभूत्वाभ्राम्यतियोनिषु ॥ जीवोभ्रमभराभारोमायापुरुषकोयथा ॥ २३ ॥ अक्षस्वभावानखिलाञ्छरीराद्वासना वश ॥ जीवोगृहीत्वासयातिपुष्पाद्गधमिवानिल ॥ २४ ॥ देहोनिस्पंदतामेतिजीवेकौतियनिर्गते ॥ निस्पंदावयवाभोग शांतवातइव द्रुम ॥ २५ ॥ अचेष्टछेदभेदादिदोषैरायात्यदृश्यताम् ॥ मृतइत्युच्यतेतेनदेहोविगतजीवित ॥ २६ ॥ सजीव प्राणमूर्त्ति खेयत्रयत्रावति ष्ठते ॥ तंतंस्ववासनाभ्यासात्पश्यत्याकारमाततम् ॥ २७ ॥ अयदेहोहिजीवेनत्वसन्नेवावलोकित ॥ अस्यनाशोत्वमप्येवपश्यमावासु प्तवत् ॥ २८ ॥ यथैवपश्यत्याकारांस्तेषांनाशांस्तथैवस ॥ आदिसर्गेभावनयाकिलैष्वेवविभावत ॥ २९ ॥ झटित्युद्भवकालेहियद्य थादृश्यतेपुर ॥ आनिपाततदेवास्या अविनाभाविसविद ॥ ३० ॥ प्राक्तनवासनामूलंपुरुषार्थेनजीयते ॥ यत्ननाद्यतनेनाशुल्यस्तनाय तनयया ॥ ३१ ॥

सर्वथविभावतोविभावनायावशादेवतत्पकल्पितनतुमद्दष्टाद्यादायकुलालवत्किंचिन्निर्मितम ॥ किलेतिश्रुतिपुराणप्रसिद्धौ ॥ २९ ॥ ननुउत्पत्तिकालेजगद्वासनामयमिथ्या भूतमस्तुस्थितिकालेत्वर्थक्रियासमर्थत्वात्सर्वजनीनसत्यतानुभवाच्चवास्तवमेवेत्याशंक्याह ॥ झटिनीति ॥ उत्पत्तिकालेझटितिप्रथमक्षणेयद्यथादेहघटादिरूपमिथ्याभूतसत्यथा पुरास्यतआविनाशातदेवतथास्वभावमेवभवतिनस्वभावांतरभजते ॥ अस्यासत्वधिष्ठानभूतायास्तवमविनाभाविसविदोययोतत्स्वरूपस्थितिहेतुत्वात्सविद्विनाभावेनतेषांसत्ताया अदशनाश्चतिभाव ॥ ३० ॥ देहाद्याकाराणांवासनामयत्वमसुक्तिमतत्सघात ॥ प्राक्तनमिति ॥ अशुभवासनाकल्पितदेहाद्याकारस्यशुभवासनाभ्यासप्रसूतब्रह्माकारवृत्त्यास मूलनाशात्सफलमितिभाव ॥ पुरुषार्थेनश्रवणमननादिपुरुषप्रयत्नजनितेनाखण्डाकारज्ञानेनजीयतेबाध्यते ॥ अद्यतनेनप्रायश्चित्तादियत्नेनसत्सनमायतनमधर्मानुष्ठानयथा सीयतेतद्वत् ॥ अद्यतनेनदाहयत्नेनसत्सनमायतनत्वणगहयथानास्यतेतद्वदितिवा ॥ ३१ ॥

यएवेति ॥ धर्मार्थकाममोक्षेषुमध्ये ननुवहूनांज्ञानाययतमानानांप्रयत्न प्रबलाभि पूर्वतनकामक्रोधादिवासनाभिर्विनाश्यमानोदृश्यतइतिनोत्तरत्वप्राबल्येहेतुरितिचेत्तत्राह ॥ यएवेति ॥ धर्मार्थकाममोक्षेषुमध्ये यएवममायपुरुषार्थआवश्यकइत्यभिनिवेशेनदृष्ट सएवपूर्वोत्तरप्रयत्नयोर्विशेषांशोजयेप्रयोजक ॥ तथाचतेपामोक्षाभिनिवेशमायाद्रोगाभिनिवेशदार्ढ्याच्चपराभवइतिभाव. ॥ ३२ ॥ अतएवशास्त्रीयेप्रयत्नेदृढाभिनिवेश.कार्यइत्याह ॥ अपीति ॥ ३३ ॥ तन्मायेपूर्ववासनावैचित्र्यात्सुखदु खानर्थपरंपरासर्वतोदुर्वारैवेत्याशयेनाह ॥ नरकेति ॥ जरठमोहधी अनायज्ञानमूढबुद्धि ॥ ३४ ॥ तमेवाशयमज्ञोजतुरनीशोयमात्मन सुखदु खयो. ईश्वरप्रेरितोगच्छेत्स्वर्गवानरकतुवेतिव्यासवाक्यादिप्रसिद्धकारणातरसंदेहनिरासेनस्फुटजिज्ञासुरर्जुन.पृच्छति ॥ नरकेति ॥ जगत स्थिते.स्थितिनिमित्तस्यास्यजीवस्य ॥ ३५ ॥ नहेत्वतरसंभावनीयमीश्वरकामकर्मादीनामपिवासनानुसारेणैवसुखदु खव

यएवपुरुषार्थेनदृष्टोबलवताक्षणात्॥ पूर्वोत्तरविशेषांशःसएवजयतिस्फुटम्॥ ३२ ॥ अपिस्फुटतिविंध्याद्रौवातिवाप्रलयानिले॥ पौरुपंहियथाशास्त्रमतस्त्याज्यंनधीमता॥ ३३॥ नरकस्वर्गसर्गादिवासनावशतोभितः॥ प्रपश्यतिचिराभ्यस्तंजीवोजरठमोहधीः॥ ३४॥ ॥ अर्जुनउवाच॥ ॥ नरकस्वर्गसर्गादिसंभ्रमेपुजगत्पते॥ किमस्यकारणंब्रूहिजीवस्यजगतःस्थितेः॥ ३५॥ ॥ श्रीभगवानुवाच॥ ॥ स्वप्नोपमानातेनेहश्रेयसेवासनाक्षयः॥ चिराभ्यासवशात्प्रौढासंसारभ्रमकारिणी॥ ३६॥ ॥ अर्जुनउवाच॥ ॥ किमुत्थादेवदेवेश क्षीयतेवासनाकथम्॥ ॥ श्रीभगवानुवाच॥ ॥ मौर्ख्यमोहसमुत्थानात्वनात्मन्यात्मभावना॥ आत्मज्ञानान्महाबोधाद्विलयंयाति वासना॥ ३७॥ भावितात्मासिकौंतेयसत्यंविज्ञातवानसि॥ अयंसोहंजनाएतेमयेतित्यजवासनाम्॥ ३८॥ ॥ अर्जुनउवाच॥ ॥ वासनाविलयेजीवोविलीनोभवतिस्वयम्॥ योहियत्स्त्तयोच्छूनस्तन्नाशात्सविलीयते॥ ३९॥

प्रापकत्वाद्वासनैवासाधारणीचिराभ्यासनिरूढासस्टतिहेतुरितितत्क्षयएवपरमपुरुषार्थार्थिनासर्वप्रयत्नैःकार्यइत्याशयस्फुटीकुर्वन्भगवानाह ॥ स्वप्नेति ॥ शास्त्रीयप्रयत्नविना चिराभ्यासवशात्प्रौढास्वप्नोपमानावासनैवयेनहेतुनासंसारभ्रमदायिनीतेनहेतुनातत्त्वज्ञानाभ्यासेनसमूलवासनाक्षय.श्रेयसइत्यन्वय ॥ ३६ ॥ वासनामूलंज्ञातुकामोर्जुन.पृच्छति ॥ किमुत्थेति ॥ अज्ञानमेवतन्मूलज्ञानादेवसमूलतन्नाशइतिभगवानाह ॥ मौर्ख्येति ॥ ३७ ॥ तत्रविचारादात्मस्वरूपपरिचयस्तेवृत्तस्तद्दार्ढ्येनदेहतत्सर्वादिष्वहममेतिवासनाक्षयमात्रकर्त्तव्यपरिशिष्यतइत्याह ॥ भावितेति ॥ ३८ ॥ ननुवासनामयमेवलिंगतत्प्रतिविंबोजीवस्तदुत्थस्तस्यवासनाक्षयेक्षयएवस्यादित्यनर्थायैवतत्त्वज्ञानवासनाक्षयश्चेत्याशयेनार्जुन शकते ॥ वासनाविलयेइति ॥ विलीयतेविनश्यति ॥ ३९ ॥

जम्मन परमानन्दाविर्भावलक्षणपरमपुरुषार्थस्य मरणस्य आत्यंतिकानर्थनाशस्य च को भाजनतामेति न कश्चिदिति लक्षणयाव्याख्येयम् ॥ प्रसिद्धजन्ममरणे तु न पारे तत्त्वज्ञस्य समूलवासनानाशेन तत्सत्त्व भावास्पूर्वापरग्रंथाननुगुणत्वाच्च ॥ ४ ॥ भवेदयं दोषो यदि मलिविधि मायसंसारी जीवः सर्पादिवास्म्योभूतमायाधीनजन्मादिदेशकालभेदभिन्नद्दत्य भ्युपगतस्याम् भत्वेयं किंतु ब्रह्मैव परमार्थतः शुद्धमपि तया स्वाविद्यया पिहितस्वतत्त्वमजानन् स्वात्मन्येव जीवजगद्द्वैतकल्पनया संसरति तत एव शास्त्रीयश्रवणादिप्रयत्नेन स्वतत्त्वमुद्ध्वा सवासनाविद्यां विधूय स्वस्वभावे वतिष्ठमानसैवास्य मुक्तिरेवेति श्रौत सिद्धांत प्रत्युत न कश्चित्त्वदुक्तापत्तिर्नोदोष इत्याशयेन भगवान् समाधत्ते ॥ स्वयमित्यादिना ॥ ४१ ॥ अनायत्तमन न्याधीनम् ॥ ४२ ॥ साधसमूलवासनामुक्तिया वदेहधारण जीवन्मुक्तिरिति प्रसिद्धा देहेषत्वयाप्यनुभवितुं शक्येति न मुक्तिफलभाजि संशय कार्यं इत्याशयेनाह ॥ जीवन्नेवेति ॥ ॥ ४३ ॥ स च मोक्षा न कर्मभिन वा सविषयगोचरपांडित्येवालम्भ्य ॥ किं त्वात्मज्ञानेनैवेत्याशयेनाह ॥ य इति ॥ ४४ ॥ उक्तसमाधानं संक्षिप्योपसंहरति ॥ दुर्दर्शनस्येति ॥ स्वमा

जीवे विलयमायाते देशकालान्यथा रुतौ ॥ कोसौ भाजनतामेति जन्मनो मरणस्य च ॥ ४० ॥ ॥ श्रीभगवानुवाच ॥ ॥ स्वयकल्पितसंकल्पमात्मरूपयदाविलम् ॥ तदेव वासनाकारं जीवं विद्धि महामते ॥ ४१ ॥ अनायत्तमसंकल्पमात्मरूपयदव्ययम् ॥ प्रबोधाद्वासनामुक्तं तन्मोक्षं विद्धि भारत ॥ ४२ ॥ जीवन्नेव महाबाहो तत्त्वं प्रेक्ष यथास्थितम् ॥ वासनावागुरोन्मुक्तो मुक्त इत्यभिधीयते ॥ ४३ ॥ यो न निर्वासनो नूनं स बद्धः परमोपि सः ॥ सर्वज्ञोप्यभितो बद्धः पंजरस्थो यथा खगः ॥ ४४ ॥ दुर्दर्शनस्य गगने शिखिपिच्छिकेव सूक्ष्मा परिस्फुरति यस्य तु वासनांतः ॥ मुक्तः स एव भवतीह हि वासनैव बंधो न यस्य न नु तत्क्षय एव मोक्षः ॥ ४५ ॥ ॥ इत्यार्षे वा० वा० दे० मोक्षोपाये पु० नि० पू० अर्जुनोपाख्याने जीवतत्त्वनिर्णयो नाम पंचपंचाशत्तमः सर्गः ॥ ५५ ॥ ॥ श्रीभगवानुवाच ॥ ॥ इति निर्वासनत्वेन जीवन्मुक्ततयार्जुन ॥ अतः शीतलतामेत्य स बुद्धः स्वमलं त्यज ॥ १ ॥ जरामरणनिःशंक आकाशविशदाशयः ॥ त्यक्तेष्टानिष्टसंकल्पो वीतरागो भवानघ ॥ २ ॥ प्रवाहपतितं कार्यमिदं किंचिद्यदागतम् ॥ कुरु कार्याणि कर्माणि न किंचिदिह नश्यति ॥ ३ ॥

यापिहितत्वाद्दुर्दर्शनस्य अन्यस्य अप्रमेयैव अप्रमाणस्य यस्य परमात्मनो गगने ऐंद्रजालिकशिखिपिच्छिकेव नानाभ्रमदायिनी सूक्ष्मवासना अंतः परिस्फुरति जीवजगदाकारेण पश्य तेसः एव तु अधिकारिशरीरे वेदांतनयप्राप्त्योत्पन्नतत्त्वज्ञानः समूलवासनाबंधान्मुक्तो भवति ॥ इहास्मिन् परमात्मनि नु यतः समूलावासनैव बंधस्तत्क्षय एव मोक्षश्चेत्यर्थः ॥ ४५ ॥ ॥ इति श्रीवासिष्ठम० ता० प्र० नि० पू० पंचपंचाशत्तमः सर्गः ॥ ५५ ॥ ॥ १ ॥ ॥ जीवन्मुक्तिमतिप्राऽस्मिन्नर्जुनायोपदिश्यते ॥ चित्स्वतत्त्वजगद्रूपमनश्वि मय विस्तरात ॥ १ ॥ बधुद्ध स्वबधुबधु स्वम ॥ १ ॥ २ ॥ प्रवाहपतितं शिष्टव्यवहारपरंपरागतकार्यं भवत्यकर्तव्यं मिश्रयुद्धमन्यानि चावश्यकानि यागदानादीनि कर्माणि कुरु न का चित्तेन तत्त्वबोधस्य क्षतिरित्यर्थः ॥ ३ ॥

१ इदमेत्यर्थकम्

सुषुप्ताइवस्वात्मनि निःसकल्पास्तिष्ठतीतिसुषुप्तस्थाः सुषुप्तात्मावन्निर्विशे ॥ ४ ॥ ५ ॥ स्वस्व धर्मरूपमेव ॥ साप्रसिद्धाजीवन्मुक्ततातथातादृश्येवनदेहचेष्टामात्रत्यागरूपेत्यर्थ ॥ स्थिरामिति ॥ ज्ञानबाधितत्वात्तुच्छेभ्यइंद्रियार्थेभ्योविषयेभ्यःस्वतःप्र षत्वयज्योतिरात्ममात्रावशेषा स्फुरति ॥ ६ ॥ अन्यदपिसुषुप्तिसाम्यजीवन्मुक्तस्यलक्षणेस्तीत्याह ॥ यथाकूर्मस्यशिरःपादाद्यंगानिअल्पेपिविक्षेपेझटित्येवा यत्नविनैवव्यावृत्तानीद्रियाणियस्यद्दिदृस्थेपरमात्मनिमनसासहस्थिरानिश्चलासस्थितिमैकरस्येनस्थैर्यमायाति ॥ कथतर्हिजीवन्मुक्ताव्यवहारकालेजगत्पश्यतीतिचेन्मनोराज्यपरिकल्पितनिर्भित्तिकचित्रवैचित्र्यवदेवेतिप्रदर्शना तःप्रविशतितद्वत् ॥ सतथाविधोजीवन्मुक्तइत्यर्थः ॥ ७ ॥ चित्तलक्षणश्चित्रकृत्शिल्पीविश्वाधिष्ठानेआत्मनितथातेनतेनसर्वजनप्रसिद्धानतवैचित्र्येणविश्वं यजगत्सर्गमासर्गातमनोरचितचित्ररूपेणवर्णयितुमुपक्रमते॥विश्वात्मनीति ॥

इदंकर्मत्यजामीदमाश्रयामीतिनिर्णयः॥ मूढ प्रवाहपतितंकर्मस्वमेवक्रियतेतुयत्॥ जीवन्मुक्तस्वभावोयंसाजीवन्मुक्ततातथा ॥ ४ ॥ स्यमनसोरूपंज्ञानिनस्तुसमास्थितिः ॥ ५ ॥ प्रवाहपतितंकर्मकुर्वतःशांतचेतसः ॥ जीवन्मुक्ताःसुषुप्तस्थाःस्फुरंत्यत्रसुषुप्तवत् ॥ ६ ॥ स्थिरांसंस्थितिमायांतिकूर्मांगानीवसर्वशः॥ इंद्रियाणींद्रियार्थेभ्योदृदियस्यस्वभावतः॥ ७॥ विश्वात्मनितथाविश्वंकालत्रयमयोदि तम्॥ अभित्तित्रिजगच्चित्रंकुरुतेचित्तचित्रकृत् ॥ ८ ॥ व्योम्निव्योमात्मकमपिप्रस्फुटंवृत्तिवर्त्तिभिः ॥ चित्तचित्रकरेणादौचित्रंचित्रं वितानितम्॥ ९ ॥ पश्चाद्भित्तिःकृताव्योमरूपाचासावहोभ्रमः॥ अपूर्वैवातिमायेयंतृणकुड्यमयीशुभा ॥ १० ॥ नमनागपिभेदोस्ति स्फुटमप्युपलब्धयोः॥ इमायाउपलक्ष्यंतेभित्तयश्चित्तचित्रजाः॥ ११ ॥

कृत्अभित्तिभित्तिरहितत्रिजगच्चित्रकुरुतेइत्यन्वयः ॥ ८ ॥ व्योम्निअज्ञानाकाशेव्योमात्मकमज्ञानमात्रस्वरूपत्वात्स्थितुमयोग्यमपिसाभासांतःकरणवृत्तिलक्षणवर्त्तिका भिःप्रस्फुटमभिव्यक्तचित्रमद्भुतचित्रवितानितविस्तारितम ॥ ९ ॥ अद्भुतत्वमेवप्रसिद्धचित्रवैधर्म्येणदर्शयति ॥ पश्चादिति ॥ समष्टिमनसासत्यसकल्पत्वात्सकल्पसमकालमेव जगच्चित्रंकृततःपश्चाद्भित्तिस्तदाधारःकृताव्योमरूपाअमूर्त्ताकाशरूपाचित्रधारणेअयोग्यैवेत्याश्चर्यअतएवायंभ्रमइत्यर्थः॥ अहोभ्रमइतिपदयोरर्थंक्रमात्प्रपचयति॥ अपू र्वैवेत्यादिना ॥ इयंविरचनाअपूर्वैव अतिशयितामायाअतिमाया तृणकुड्यमिवात्यंतमसारापिभ्रांतदृशाशुभा ॥ १० ॥ आश्चर्यांतरदर्शयति ॥ नमनागपीति ॥ प्रसिद्धेषुचित्रे षुचित्रेभ्योभिन्नाभित्तयोभवंति इमास्तुयाश्चित्तचित्रजाव्योमादिभित्तयउपलक्ष्यतेतासांस्फुटमप्युपलब्धयोराधाराधेययोश्चित्तत्वाविशेषान्मनागपिभेदोनास्तीत्याश्चर्य मित्यर्थः ॥ ११ ॥

अहोभमदत्यभाहादत्यशमपच्यममदत्यशमपचयति ॥ व्योमइत्यादिना ॥ तामनश्विमरचनाव्योम्न शून्यतमा अस्यतासत्यइतियावत् ॥ हेतामरसलोचन ॥ तमक्षणिकस्व मजगमयदृष्टांतमाह ॥ क्षणेनेति ॥ घटिकाया षष्ठोभागःक्षण ॥ १२ ॥ आत्मामनस्तत्कार्यजगच्चतथास्ममवेवमभःशून्यमसदेवेत्यर्थ ॥ कुतस्तर्हिजनानांसत्यताप्रतीतिस्त माह ॥ चिरतनेति ॥ चिरानुवृत्तत्वादित्यर्थ ॥ किलेतिनेवतत्त्वमितिसूचनाय ॥ १३ ॥ किंतर्हितस्त्वत्राह ॥ किंत्विति ॥ विभ्रमेभ्रांतिकल्पितपदार्थजातेयत्सत्यसकल्पत्वका लमयपिनास्त्यवतत्क्षनालोकितेतत्त्वतःअदृष्टेतत्त्वज्ञानाभावाकृतिकस्यावपि मस्यादेवेत्यर्थ ॥ यत्तुसतत्वविकालक्रमेणबाल्यावस्थाक्रमेणप्रतिषविकारक्रमेणवाआलोकना दर्थक्रियासामर्थ्यलक्षणमन्यहाभ्यामहारिकसत्यत्वमसिद्धमतत्त्वदर्शनलक्षणेनालोकेनविलीयते ॥ यथासौरालोकेनदृश्यमानशरदभ्रमण्डलेनैवशोष्यमाणविलीयतेतद्वदि

व्योम्नःशून्यतमाविद्धितास्तामरसलोचन ॥ क्षणेनचेतसियथाभ्रांतौलोकक्षयोदयौ ॥ १२ ॥ आत्माजगत्तथैवेदंसबाह्याभ्यंतरनभ ॥ चिरतनमनोराज्यवत्तस्मात्किलसत्यता ॥ १३ ॥ किंत्वनालोकितेपिस्यात्सत्यनास्त्येवविभ्रमे ॥ क्रमेणालोकत सत्यमालोकेनविलीयते ॥ १४ ॥ दृश्यमानमपिक्षामंशरदीवाभ्रमंडलम् ॥ चित्तचित्रकृतश्चित्रेसंस्थिताश्चित्रपुत्रिका ॥ १५ ॥ भित्त्यभावादनाकाराघहि त्रिभुवनाटिका ॥ नता सतिनवासित्वंकिंकेनपरिरोध्यते ॥ १६ ॥ रोध्यरोधकसमोहत्यक्त्वाखेविमलोभव ॥ प्रवृत्तिरेवनव्योम्न प्रवृत्ति श्चैवस्वात्मिका ॥ १७ ॥ अत कालक्रियाकुड्यकलादिविमलंनभ ॥ चित्तसस्ययथाचित्रसरूपमखिलात्मकम् ॥ १८ ॥ व्योम्न शून्यत मंविद्धितथेदमखिलजगत् ॥ चित्तभित्तौकृतचित्रंयथाचित्रकरेणतत् ॥ १९ ॥ सर्वशून्यतयाव्योमोमनागपिनभिद्यते ॥ यथाप्रकचत श्चित्तेजगन्निर्माणसक्षयौ ॥ २० ॥ क्षणेनैवतथैवेमौभुविस्यावितिविद्धिहे ॥ अयक्षीणामनोराज्येनानानुभवनात्मनि ॥ २१ ॥

तिपरगाम्नय ॥ १४ ॥ एवमनश्विमस्यभांतिमात्रत्वेनवधुवधारितेशामालिन्ययुक्तमित्याह ॥ चित्तेत्यादिना ॥ १५ ॥ परिरोध्यतेहन्यते ॥ १६ ॥ रोध्यरोधकसमोहवध्य घातकभमतत्प्रयुक्तशोकमालिन्यमितियावत् ॥ खेब्रह्माकाशे ॥ यतोव्योमभिदाकाशस्यवधाविप्रवृत्तिरवनास्ति यानुप्रातिभासिकीप्रवृत्ति सावस्वात्मिकाब्रह्माकाशरूपैव ॥ १७ ॥ कलाचित्ररचनाकौशलआदिपदात्तद्दिचित्र्यभेदाश्चविमलंनभोब्रह्मैव यथाचित्तसस्यमनाराज्यचित्रमखिलप्रपचात्मकमपिशून्यत्वान्नभ स्वरूपतथापरिदृश्यमान मपिजगद्व्योमशून्यतममिस्युसरेणान्वय ॥ १८ ॥ इदानीमज्ञातचित्रचित्रकरश्चित्तंनुतद्भित्तिरित्युपेक्षणेपिशून्यत्वमेवपर्यवस्यतीत्याह ॥ चित्तेति ॥ १९ ॥ तमापिमनोरा ज्यक्षणिकजगदेवदृष्टांतइत्याह ॥ यथेति ॥ २० ॥ [illegible] ॥ २१ ॥

ननुक्षणभावितमोहेनकथमनाद्यनतकल्पविस्तीर्णससारलक्षणंमनोराज्यकृतंतत्राह ॥ असदेवेति ॥ यथाअसतोपिजन्मादिकरणेमनःशक्तंतथाक्षणस्यकल्पीकरणेपिबलवत्स मर्थमित्यर्थ ॥२२॥ क्षणकल्पीकरोत्येतत्तत्असदुत्पादयतीत्येतच्चाश्चर्यमल्पमेव ॥ यस्मात्ततोपिबहुआश्चर्ययदसदपिजगत्सत्कुरुते इतीदृशमनःसामर्थ्यादेवेयंजगद्भ्रांतिरुत्थि तेत्यन्वय ॥ २३ ॥ तदेवाह ॥ क्षणेनैवेति ॥ २४ ॥ एवंनिर्वाणेनित्यमुक्तेआत्मन्यध्यस्तत्वात्प्रतिभामात्रतोजातत्वात्तुच्छनिमेषमयक्षणिकमप्युत्थितंजगदजानद्भिः अत्रईदृश एवसर्गेभ्रांतैर्वज्रसारतादुरुच्छेदताकल्पिता ॥२५॥ साचनयुक्तेत्याह ॥ प्रतिभासेति ॥ अविदिताकृते अज्ञाततत्त्वस्यात्मन इदंजगत्प्रतिभासविपर्यासोन्यथाप्रतिभासस्तावन्मा त्रम ॥ ईदृशस्यास्यप्रवृत्तावध्यारोपेनिवृत्तौबाधेवाकावज्रसारतानकाचिदित्यर्थः ॥ २६ ॥ स्थितस्यहिनिरासेप्रयत्नापेक्षाइदंनुकदापिनस्थितमेवेत्याह ॥ चित्तचित्रकृतइति

क्षणभावितमोहेनकल्पनापरिकल्पिता ॥ असदेवमनोराज्यंकर्तुंशक्तंयथामनः ॥ २२ ॥ क्षणस्यकल्पीकरणेतथैवबलवन्मनः ॥ क्षणं कल्पीकरोत्येतत्तच्चाल्पंकुरुतेबहु ॥ २३ ॥ असत्सत्कुरुतेक्षिप्रमितीयंभ्रांतिरुत्थिता ॥ क्षणेनैवमनोराज्यंप्रतिभातंस्वभावतः ॥ २४ ॥ यद्विचित्रात्मतदिदंजगज्जालमितिस्थितम् ॥ सर्गेनिर्वाणनिष्ठत्वान्निमेषमयमुत्थितम् ॥ २५ ॥ प्रतिभामात्रतोत्रैवकल्पितावज्रसार ता ॥ प्रतिभासविपर्यासमात्रंत्वविदिताकृतेः ॥ २६ ॥ प्रवृत्तौवानिवृत्तौवाकैवसावज्रसारता ॥ चित्तचित्रकृतश्चित्स्थंजगच्चित्रंकदा स्थितम् ॥ २७ ॥ अकुड्यमप्यरंगाढ्यमिदंस्फारमिवाग्रतः ॥ अहोनुचित्रंनिर्भित्तिचित्रमुज्वलमुत्थितम् ॥ २८ ॥ सुरंजनंजगदितिस्फु टंदृष्टिविलोभनम् ॥ नानातमोमषीलेखंनानातेजोंशुरंजनम् ॥ २९ ॥ नानाकल्पांगावयवंनानारागानुरंजितम् ॥ नानादृष्टिविलासा ढ्यंनानानुभवलोचनम् ॥ ३० ॥ नानाग्रहोग्रकचनंनानाकाराग्रपश्चिमम् ॥ व्योमनीलसरःफुल्लताराचंद्रार्कपंकजम् ॥ ३१ ॥ विचित्र रचनोद्युक्तमेघालीपत्रमंजरि ॥ प्रकोष्ठकाभिलिखितसुरासुरनृपुत्रिकम् ॥ परमालोकमंकोलयुवताकाशकुड्यकम् ॥ ३२ ॥

॥ २७ ॥ विनास्वकारणसामग्रीतःस्वतश्चासदप्यग्रत स्फुरतीत्याश्चर्यमित्याह ॥ अकुड्यमिति ॥ रंगाश्चित्रलेखनसाधननीलपीतादिरगद्रव्याणि ॥ २८ ॥ कथंपुरःस्थिततदा ह ॥ सुरंजनमित्यादिना ॥ सुष्ठुरंजयत्यासंजयतीतिसुरंजनम् ॥ दृष्टिग्रहणमिंद्रियमनआद्युपलक्षणम् ॥ २९ ॥ कल्पास्तदंगयुगादीनिचावयवायस्य ॥ ३० ॥ सूर्योदयास्ता दिकालेषुनानाकारेअग्रपश्चिमेप्राचीप्रतीच्यौयस्मिन् ॥ तत्रचित्रपद्मवनादिवर्णयति ॥ व्योमेत्यादिना ॥ ३१ ॥ शरदादिकालभेदेनविचित्ररचनाभिःउत्ऊर्ध्वंयुक्तामेघाली लक्षणाःपत्राणिमंजर्यश्चयस्मिन् ॥ लोकत्रयलक्षणेषुप्रकोष्ठकेषुचित्रकोष्ठभेदेषुअभितोलिखिताःसुरासुरमनुष्यलक्षणाःपुत्रिकायस्मिन् ॥ परमउत्कृष्टोयश्चंद्रसूर्याद्यालोक स्तल्लक्षणेनमंकोलेनसुधालेपेनयुवतेवविराजमानतायस्यतथाविधमाकाशलक्षणकुड्यभित्तिर्यस्मिन् ॥ ३२ ॥

द्दार्न।चित्राकौ मवरचनटीरूपांचिमपुत्रिकांपरिकल्प्यवर्णयति ॥ आकाशएवेत्यादिपंचभि ॥ चपलेनकामकेनचित्तकलक्षणेनचित्रकमास्वाधिष्ठानभूताकाशएवइयंचर्ण्य मानाजगत्त्रयमनोहरानर्टीपुत्रिकारचिता ॥ प्रतिभानघनयोग्यमपशालिनीबुद्धिरेवएकोमुख्योरंगोनृत्यशालायस्या ॥ नृत्यशालाप्रदीपस्थानीयस्यसाक्षिचैतन्यस्यचके [(व]स्फुरणप्रतिबिंबग्राहिभिर्बुद्धिवृत्त्याभरणैःपरिष्कारजिताःप्रकाशितालोकायया ॥ नृत्यहावभावविलासादिलीलाभिराकुला ॥ २३ ॥ पुनस्तामेवविशिनष्टि ॥ ऐवेति ॥ नव ह्यमवर्द्धमसहस्रार्कसमत्रमितिपुराणोक्तहेममयप्रह्लादमेघाचलादृढाअगलतिकायस्या ॥ घनामेघाएवकेशपाशायस्या ॥ धर्मार्थकामार्यानियमितानिम्याम्स्तनानि ययालयाविधेयवत्तिनिवर्तितशास्त्ररूपवक्षेयस्या ॥ पातालमालानिसप्तपातालानिऊरुजानुजंघागुल्फपादपार्ष्ण्यंगुलिरूपसमावयवकौचरणौयस्या ॥ उन्नतामूर्तिततोय स्या ॥२४॥ ब्रह्मादिवाहुचतुष्टयनउपासमर्या ॥ सत्वगुणलक्षणकचकारताभ्यामुन्नताभ्यांविवेकवैराग्यकुचाभ्यांस्फुरन्तीअंगयष्टिर्यस्याम् ॥ सुभ्यालैः शेषादिभिर्वेष्टितमही

आकाशएवरचिताप्रतिभैकरंगामुग्धाजगत्त्रयमनोहरपुत्रिकेय ॥ चिन्मात्रचक्रपरिरंजितसर्वलोकालीलाकुलाचपलचित्तकचित्रक र्मा ॥ २३ ॥ इमाचलांगलतिकाघनकेशपाशाचंद्रार्कलोचनविचालनदृष्टलोका ॥ धर्मार्थकामविनियन्त्रितशास्त्रवक्षापातालजालच रणोन्नतमूर्तितया ॥ २४ ॥ ब्रह्मेंद्ररुद्रहरिबाहुचतुष्टयोग्रासत्वावृतोन्नतकुचस्फुरदंगयष्टि ॥ सुभ्यालवेष्टितमहीतलपद्मपीठापद्मीकृता चलमहाभुवनोदरीच ॥ २५ ॥ राम्यधकारचपलत्वहराक्षिचेष्टाताराकरालपुलकापविटतपक्ति ॥ सच्चतुर्दशविधातुलभूतजातरो मांचनाप्रलयवादकदंबपुष्पा ॥ २६ ॥ जीवान्विताग्गगनएवकृताविचित्राव्योमात्मिकाचिरविलक्षणचित्रकर्त्रा ॥ चित्तेनचित्रपरिक र्मविदाप्रिलोकीनानाविलासवलितावरपुत्रिकेति ॥ २७ ॥ ॥इ० वा० वा० दे० मोक्षोपायेपुनिर्वाणप्रकरणेपू० अर्जु० चित्तवर्णनं नामषट्पंचाश सर्ग ॥ ५६ ॥ ॥ ५ ॥ ॥

तलमवपद्माकारपीठमासनयस्या ॥ गोरोचनाकस्तूर्यादिनानाभूषणप्रचनास्थानीया कृताअचलामेर्वजनहिमवदादिनानावर्णपर्वतायस्मिस्तथाविधमहाभुवनमध्यलोकए वउदरंयस्या ॥ २५ ॥ राम्यधकारस्यमेरुभ्रमक्षिप्रीकरणलक्षणचपलत्वंतद्धरतिअनुहरत्यपनयतिचंद्रार्कलक्षणाक्षिचेष्टायस्या ॥ पंचविधिपुष्पैचवदनपंक्तिर्यस्या ॥ भुवनभे दाचतुर्दशविधभूतपरस्परविसदृशाभूतजातमवाभिर्भवद्रोमांचनयस्या ॥ तपुष्टेषुप्रसिद्धाभूतभुवमार्षिप्रलयमारुताएवसर्वतःप्रसारितसद्बुद्धिकेसरत्वात्कुत्रोन्नृणांवैराग्यसहासना दीनमध्याधायकत्वाद्भावाधारकृष्णकदंबमालापुष्पाणियस्या ॥ २६ ॥ जीवेनम्यष्टिसमष्ट्यात्मनाअन्विता ॥ चित्रस्यपरिकर्माणिउपकरणभूतानिविविधवासनाकामकर्माणि विदन्निपामातिनयाविधनक्ततएवाचिरादेवविलक्षणानांविचित्राणांकर्माणांनिर्माणसमर्थेनचित्तेनइतिएववर्णितरूपाभिलोकीलक्षणावरपुत्रिकास्वाधिष्ठानचिद्गगनएवकृतेत्युपस हार ॥ २७ ॥ ॥ इतिश्रीवासिष्ठ० तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू० षट्पंचाशत्तम सर्ग ॥ ५६ ॥ ॥ ५ ॥ ॥ ५ ॥

जायतेत्रययादृष्ट्यासयोर्निर्वासनमनः ॥ सुखाद्वयात्मशेषश्चसादृष्टिरुपदिश्यते ॥ १॥ तत्रप्रागुदर्शितांजगत्याश्चर्यतादृष्टिमेवप्रथमंत्रासनाशैथिल्योपयोगितयावर्णयति ॥ इद मिति ॥ अभित्तौनिराश्रयएवमनसाजगदाकारकलनात्पूर्वंजगच्चित्रजायतेपश्चात्तदतर्गताभूतभुवनात्मकविराड्भित्तिस्तदाधारतयाकल्प्यमानाउदेति ॥ व्यष्टिसमूहस्यसमष्टेर्वि राजोव्यष्ट्यधीनकल्पनत्वाद्वापश्चादुदय. ॥ १ ॥ अत्यतमसभावितरूपत्वादियंमायाअसभावितत्वचविरुद्धत्वादित्याशयेनप्रसिद्धातादृशमायामुदाहरति ॥ मग्नमिति ॥ तु व्या'फलतुबम् ॥ फलेलुक् ॥ तत्किलजलेमग्नशिलातुम्बुनाइतियथास्वमेंद्रजालादावेवोपपद्यतेतद्वदित्यर्थः ॥ २ ॥ आस्ताजगच्चित्रस्याश्चर्यता तस्मिन्शून्यात्मनिचिद्व्योमा त्मनस्तवाहतोदयस्ततोप्याश्चर्यभूतइत्याह ॥ चित्तस्थेति ॥ ३ ॥ यदितुजगत्यपिचिद्व्योमतामेवपश्यसितर्हिसादृष्टिरेवपर्यवसन्नेत्याश्चर्यमेवेत्याह ॥ सर्वमिति ॥४॥ दीर्घसस्टति

श्रीभगवानुवाच॥ ॥इदंविद्धिमहाश्चर्यमर्जुनेहहियत्किल॥ पूर्वंसंजायतेचित्रंपश्चाद्भित्तिरुदेतिहि ॥ १ ॥ अभित्तावुत्थितेचित्रेदृश्य तेभित्तिरातता॥ अहोविचित्रामायेयंमग्नंतुंबंशिलाप्लुता॥ २ ॥ चित्तस्थचित्रसदृशेव्योमात्मनिजगत्त्रये ॥ व्योमात्मनस्तेकिमियमहं ताव्योमतोदिता॥ ३ ॥ सर्वंव्योमकृतंव्योम्नाव्योम्निव्योमविलीयते॥ भुज्यतेव्योमनिव्योमव्योमव्योमनिचाततम्॥ ४ ॥ वेष्टितंवासना रज्ज्वादीर्घसंस्टतिदामवत्॥ वासनोद्वेष्टनेनैवतदिहोद्वेष्ट्यतेर्जुन॥ ५॥ प्रतिबिंबंयथादर्शेतथेदंब्रह्मणिस्वयम्॥ अगम्यंछेदभेदादेराधा रानन्यतावशात्॥ ६ ॥ अनन्यच्छेदभेदादिब्रह्मणिब्रह्मणांबरम्॥ किंकथंकस्यकेनैवच्छिद्यतेवाऽभिद्यते॥ ७॥ तेनेहवासनाभावोबो धात्संपन्नएवते॥ योननिर्वासनोनूनंसर्वधर्मपरोपिसन्॥ ८॥ सर्वज्ञोप्यतिबद्धात्मापंजरस्थोयथाहरिः॥ यस्यास्तिवासनाबीजमत्य ल्पंचितिभूमिगम्॥ ९॥ बृहत्संजायतेतस्यपुनःसंस्टतिकाननम्॥ अभ्यासाद्दृढरूढेनसत्यसंबोधवह्निना॥ निर्दग्धंवासनाबीजंनभूयः परिरोहति॥ १० ॥

भ्रमणयंत्रतथाविधंतज्जगच्चित्रंदामवत्प्रस्तत्तयावासनारज्ज्वावेष्टितत्तच्चिद्व्योमापीहजगतिवासनोद्वेष्टनादेवोद्वेष्ट्यतइत्यर्थ ॥ ५ ॥ अस्यज्ञानातिरिक्तोपायदुरुच्छेद्यताप्यधिष्ठा नदार्ढ्यबलादेवनस्वतइत्याह ॥ प्रतिबिबमिति ॥ ६ ॥ अतएवब्रह्मानन्यतादर्शनबलादेवजगतःसर्वच्छेदभेदादिव्यवहारायोग्यतादर्शनेनसर्ववासना.समूलमुच्छेद्याइत्याशयेना ह ॥ अनन्यदिति ॥ यदाब्रह्मणिप्रतिभातछेदभेदादिव्यवहारजाततद्विषयीभूतजगच्चब्रह्मणाअनन्यत्तच्चिदवरमेवतदाकेनकर्त्राकरणेनवाकेनप्रकारेणकस्यफलस्यार्थेक्कदेशेका लेवाकिंछिद्यतेभिद्यतेवा ॥ छेदादिव्यवहारवादानाब्रह्मातिरिक्तविषयदर्शनादित्यर्थः ॥ ७ ॥ तेनानेनोपायेनबोधात्तेवासनानामपिब्रह्मातिरेकेणाभावःसंपन्नएव ॥ ईदृग्ज्ञाना भावेतुवासनाबंधोदुरुच्छेदएवेतिप्रागुक्तस्मारयति ॥ यइति ॥ ८ ॥ हरिःसिंहोहरितवर्णःशुकोवा ॥ अणुमात्रमपिवासनानस्थाप्या अनर्थसहस्रबीजत्वादित्याशयेनाह ॥ य स्येति ॥ ९ ॥ नि.शेषदग्धम् ॥ १० ॥

यत्रघटादिस्थूलानामपिबाधस्तत्रपरमसूक्ष्मवासनानांस्थितिरसंभाविनैवेत्याह ॥ यत्प्रामाविति ॥ ७ ॥ ८ ॥ रजोरेणुरिवतुच्छाक्षुद्रा ॥ ९ ॥ १० ॥ स्वात्मनिस्वोदरेअखिलं पूरयतिमसतितथाविधे ॥ ११ ॥ समग्राकार पूर्णतातद्रूपम् ॥ समस्तैर्जगदाकारैर्वर्जितम् ॥ १२ ॥ हेअर्जुनत्वमत पूर्णात्मदर्शनादेवाभिमतानाकामानापरिहारोनिवृत्तिस्तल्ल क्षणयामत्रयुक्त्याविषयविषप्रयुक्तविषूचिकारूपासदाप्रवृत्तिहेतुमहस्थितिमतःकरणस्थावासनानिपुणमपास्यविभव.विगतससारबधोभियासर्वानर्थानामभूमिरभयस्वभावो भगवानहमेवभवेतिसर्वभगवद्गीतार्थस्यातेसग्रहेणोपदेश. ॥ १३ ॥ मौनमुपगम्यपुरस्तात्स्थितेसति ॥ १४ ॥ १५ ॥ गांडीवधनुर्यस्यसोऽर्जुनः ॥ गांड्यत्रगात्सज्ञायामिति

यस्मात्मौसर्वएवेमेक्षीणाघटपटादयः॥ वराकीवासनातत्रकिंकरोतुपरेपदे॥ ७॥ यथानलगिरिंप्राप्यहिमलेशोविलीयते॥ शुद्धमासाद्यचित्तत्वमविद्यालीयतेतथा॥ ८॥ क्ववराकीरजस्तुच्छावासनाभोगबंधनम्॥ क्वपूरितजगज्जालश्चित्तत्वविपुलानिलः॥ ९ ॥तावत्स्फुरत्यविधेयंनानाकारविकारिणी॥ यावन्नसंपरिज्ञातःशुद्धःस्वात्मायमात्मना॥ १०॥ सर्वाहस्यदशःक्षीणाःस्वच्छतैवोदितानथा॥ नभसीवपदेतस्मिन्स्वात्मन्यखिलपूरणे॥ ११॥ समग्राकाररूपंतत्समग्राकारवर्जितम्॥ वागतीतंपरंवस्तुकेननामोपमीयते॥ १२॥ विपयविषविपूचिकामतस्त्वंनिपुणमहंस्थितिवासनामपास्य॥ अभिमतपरिहारमंत्रयुक्त्याभवविभवोभगवान्भियामभूमिः॥१३॥ श्रीवसिष्ठउवाच॥ ॥ इतिगदितवतित्रिलोकनाथेक्षणमिवमौनमुपस्थितेपुरस्तात्॥ अथमधुपइवासिताब्जखंडेवचनमुपेप्यतितत्रपांडुपुत्रः॥ १४॥ ॥ अर्जुनउवाच॥ ॥ परिगलितसमस्तशोकभारापरमुदयंभगवन्मतिर्गतेयम्॥ ममतववचनेनलोकभर्तुर्दिनपतिनापरिबोधिताब्जिनीव॥ १५॥ इत्युक्तोत्थायगांडीवधन्वासहरिसारथिः॥ अर्जुनोगतसंदेहोरणलीलांकरिष्यति॥ १६॥ करिष्यतिक्षतगजवाजिसारथिद्रुतक्षरद्रुधिरमहानदींभुवम्॥ शरोत्करप्रसरमहारजःस्थलीतिरोहितद्युमणिविलोचनांदिवम्॥ १७॥ ॥इ०वा० वा०दे०मो०नि०पू० अर्जुनोपाख्यानेअर्जुनकृतार्थतानामाष्टपंचाशःसर्गः॥५८॥ ॥अर्जुनोपाख्यानंसमाप्तम् ॥७॥ ॥ ॥श्रीवसिष्ठउवाच॥ ॥एतांदृष्टिमवष्टभ्यराघवाघविनाशिनीम्॥ तिष्ठनिःसंगसंन्यासब्रह्मार्पणमयात्मकः॥ १॥

मत्वयैव ॥ धनुषश्चेत्यनङ् ॥ १६ ॥ सोर्जुनोभुवक्षताःगजवाजिसारथयोद्रुताःशीघ्रप्रवाहितायासुतथाविधाःक्षरद्रुधिरमहानद्योयस्यातथाविधाकरिष्यति ॥ दिवंचशरोत्करप्रसरैर्महारजोनिर्मितस्थल्याचतिरोहितद्युमणि सूर्यस्तल्लक्षणविलोचनयस्यास्तथाविधाकरिष्यतीत्यर्थः ॥ १७॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाण०पू०अष्टपंचाशःसर्ग. ॥ ५८ ॥ ॥७॥ ॥ जीवन्मुक्तपदेऽस्पदाचेत्यमुक्ताचित स्थितिः ॥ सुस्थिरास्याययादृष्यासादृष्टिरिहवर्ण्यते ॥१॥ अघविनाशिनीसर्वपापक्षयकरीम् ॥ निःसगतालक्षणोयःसन्यास सर्वत्यागस्त्वपदार्थशोध.सर्वजगतोब्रह्मणिबाधलक्षणयद्ब्रह्मार्पणतत्पदार्थशोधस्तदुभयपरिशिष्टाखण्डमहावाक्यार्थसच्चिदानंदैकरसभूमात्मातिष्ठेत्यर्थः ॥ १॥

निदग्धानिवासनाबीजानियस्यतथाविधमन ॥ ११ ॥ उक्तोपदेशक्रममुपसंहरन्नर्जुननिर्वासनस्थितौप्रतिष्ठापयति ॥ शांतात्मे ति ॥ हेअर्जुनत्वउज्झिता अमिताआशायेनत थाविध.सम्पादनतत्प्रसिद्धभगवद्गीतारूपश्रुतमदुपदेशसम्यगवगम्यगलितमहामनोविमोहःसन्अपहृतिरपगतमध्रुवधारिद्धेशोभूत्वानिर्वासनात्मनिशांतात्मागलितचित्तएक शांतप्रसरूप अतएवविगतभयानिर्वाणःपरमनिरतिशयेत्यर्थ ॥ १२ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू सप्तपंचाशत्तम सर्ग ॥ ५७ ॥ ॥ ९ ॥ ॥ तस्यबो धेनसाविषवासनाक्षयसंभवः ॥ इहोपपादततेनाप्यर्जुनस्यकृतार्थता ॥ १ ॥ हेअच्युतत्वत्प्रसादात् अनुपहप्रयुक्तत्वदुपदेशान्मोह सवासनाज्ञाननष्ट ॥ विस्मृतकंठचामीकर स्ववत्तत सिद्धात्मतत्त्वस्यस्मृतिरिवस्मृति साक्षात्कारोलब्धातयाचसर्वसंदेहबीजनाशाद्गतसंदेहस्थितोस्मिअतस्तस्यावस्थितिविपर्ययथाप्राप्तव्यवहारकर्तं

दग्धतुवासनाबीजननिमज्जतिवस्तुषु॥ सुखदुःखादिषुस्वच्छपद्मपत्रमिवांभसि॥ ११॥ शांतात्माविगतभयोज्झितामिताशोनिर्वाणो गलितमहामनोविमोह ॥ सम्यक्श्रुतमवगम्यपावनतत्तिष्ठात्मन्यपहृतिरेकशांतिरूप ॥ १२॥ ॥इ०वा०वा०दे०मोक्षोपायेषुनि० पू० अर्जु०अर्जुनविश्रांतिवर्णनंनामसप्तपंचाश सर्ग ॥५७॥ ॥ ९॥ ॥अर्जुनउवाच॥ ॥नष्टोमोह स्मृतिर्लब्धात्वत्प्रसादान्मयाच्यु त॥ स्थितोस्मिगतसंदेह करिष्येवचनतव॥ १॥ ॥श्रीभगवानुवाच॥ ॥एतयोयदिबोधेनसशांताहृदयेस्फुटम्॥ तच्चित्तशांतमेवां तर्विद्धिसत्वमुपागतम्॥ २॥ अभ्रतश्चेत्यरहितंप्रत्यक्चेतननामकम्॥ यत्त्वशेषविनिर्मुक्तयत्सर्वंसर्वतश्चयत्॥ ३॥ नकेचनविदन्त्येतेतत्प दजागतादय ॥ भूतलाद्गगनोड्डीनविहगमिवोन्नतम्॥ ४॥ प्रत्यक्चेतनमाभासशुद्धसकल्पवर्जितम्॥ अगम्यमेनमात्मानविद्धिदूरदृ शामिव॥ ५॥ सर्वातीतयदत्यच्छविनाशुद्धसवासना॥ नशक्नोतिपदंद्रष्टुंजनदृष्टिरणूनिव॥ ६॥

न्मत्तविषयवतववचनकरिष्यपालयिष्यामीत्यर्थ ॥ १ ॥ एवमर्जुनेनकृतार्थत्वेउक्तेतेपिसोपविष्टतत्त्वबोधेनसमूलसर्ववासनाक्षयमुपपत्तिभिर्द्रढयिष्यन्श्रीभगवानुवाच ॥ एतयदित्यादिना॥ तस्यबोधेनहृदयेरामाविद्युत्सयोपविसर्गात्मनाशांतास्ततर्हिसवासनात्मकचित्तशांतसत्त्वसर्वनिर्वासनत्वमुपगतमितिविद्धि ॥ तथाचश्रुति ॥ यदासर्वेप्रमुच्य तेकामायस्यहृदिश्रिता अथमर्त्योऽमृतोभवत्यत्रब्रह्मसमश्नुतइति ॥ २ ॥ अथअस्यासत्यावस्थायांप्रत्यक्चेतनात्मकयाथावद्धारेसर्वतस्वतस्त्वशेषविनिर्मुक्ततद्ब्रह्मचेत्यरहितंभवती तिशेष ॥ ३ ॥ जागतास्वसुरादयोऽपिजनाश्चकेचनतत्पदनविदति ॥ उन्नतमूर्ध्वदेशागतम ॥ ४॥ आभासमहाभूतादिविषयोदयविधक्षेभावभासकम् ॥ अगम्यमविषयम् ॥ दृशां दूरमसन्निकृष्टमिव ॥ ५ ॥ तद्दर्शनेचसकलाचवधृतत्वावनात्वम्पतानिविष्यासनास्याआवश्यकीत्याह ॥ सर्वातीतमिति ॥ चिरस्वभावादस्यच्छम ॥ असगत्वात्स्वच्छम॥ ६॥

---

१ अभनिदग्धवासनाबीजमितिपाठोपेक्षितइतिभातिटीकामुरोधात्     २ अयमादिशमार्थ

यत्रघटादिस्थूलानामपिबाधस्तत्रपरमसूक्ष्मवासनानांस्थितिरसभाविनैवेत्याह ॥ यत्प्राप्याविति ॥ ७ ॥ ८ ॥ रजोरेणुरिवतुच्छाक्षुद्रा ॥ ९ ॥ १० ॥ स्वात्मनित्योदरेअखिल पूरयतियसतितथाविधे ॥ ११ ॥ समग्राकार पूर्णतातद्रूपम् ॥ समस्तैर्जगदाकारैर्वर्जितम ॥ १२ ॥ हेअर्जुनत्वमत पूर्णात्मदर्शनादेवाभिमतानाकामानांपरिहारोनिवृत्तिस्तल्ल क्षणयामन्त्रयुक्त्याविषयविषप्रयुक्तविषूचिकारूपासदाप्रवृत्तिहेतुमहंस्थितिमत.करणस्थावासनानिपुणमपास्यविभव.विगतससारवधोभियासर्वानर्थानामभूमिरभयस्वभावो भगवानहमेवभवेतिसर्वभगवद्गीतार्थस्यातेसग्रहेणोपदेश ॥ १३ ॥ मौनमुपगम्यपुरस्तात्स्थितेसति ॥ १४ ॥ १५ ॥ गाडीवधनुर्यस्यसोऽर्जुनः ॥ गाढ्यजगात्सज्ञायामिति

यस्मिन्नसौसर्वएवेमेक्षीणाघटपटादयः॥ वराकीवासनातत्रकिंकरोतुपरेपदे॥ ७॥ यथानलगिरिंप्राप्यहिमलेशोविलीयते॥ शुद्धमासा द्यचित्तत्वमविद्यालीयतेतथा॥ ८॥ क्ववराकीरजस्तुच्छावासनाभोगवंधनम्॥ क्वपूरितजगज्जालश्चित्तत्वविपुलानिलः॥ ९ ॥ ताव त्स्फुरत्यविद्येयंनानाकारविकारिणी॥ यावन्नसंपरिज्ञातःशुद्धःस्वात्मायमात्मना॥ १०॥ सर्वादृश्यदृशःक्षीणाःस्वच्छतैवोदितातथा॥ नभसीवपदेतस्मिन्स्वात्मन्यखिलपूरणे॥ ११॥ समग्राकाररूपंतत्समग्राकारवर्जितम्॥ वागतीतंपरंवस्तुकेननामोपमीयते॥ १२॥ विषयविषविषूचिकामतस्त्वंनिपुणमहंस्थितिवासनामपास्य॥ अभिमतपरिहारमंत्रयुक्त्याभवविभवोभगवान्भियामभूमिः॥ १३॥ श्रीवसिष्ठउवाच॥ ॥ इतिगदितवतित्रिलोकनाथेक्षणमिवमौनमुपस्थितेपुरस्तात्॥ अथमधुपइवासिताब्जखंडेवचनमुपैप्यतितत्र पांडुपुत्रः॥ १४॥ ॥ अर्जुनउवाच॥ ॥ परिगलितसमस्तशोकभारापरमुदयंभगवन्मतिर्गतेयम्॥ ममतववचनेनलोकभर्तुर्दिनपति नापरिबोधितान्जिनीव॥ १५॥ इत्युक्तोत्थायगांडीवधन्वासहरिसारथिः॥ अर्जुनोगतसंदेहोरणलीलांकरिष्यति॥ १६॥ करिष्यतिक्ष तगजवाजिसारथिद्रुतक्षरद्रुधिरमहानदींभुवम्॥ शरोत्करप्रसरमहारजःस्थलीतिरोहितद्युमणिविलोचनांदिवम्॥ १७॥ ॥इ०वा० वा०दे०मो०नि०पू० अर्जुनोपाख्यानेअर्जुनकृतार्थतानामाष्टपंचाशःसर्गः॥ ५८॥ ॥ अर्जुनोपाख्यानंसमाप्तम् ॥ ७॥ ॥ ॥ श्रीवसिष्ठउवाच॥ ॥ एतांदृष्टिमवष्टभ्यराघवाघविनाशिनीम्॥ तिष्ठनिःसंगसंन्यासब्रह्मार्पणमयात्मकः॥ १॥

मत्वर्थेव ॥ धनुषश्चेत्यनङ् ॥ १६ ॥ सोऽर्जुनोभुवक्षता गजवाजिसारथयोद्रुता.शीघ्रप्रवाहितायास्तुतथाविधाःक्षरद्रुधिरमहानद्योयस्यातथाविधाकरिष्यति ॥ दिवंचशरोत्क रप्रसरैर्महारजोनिर्मितस्थल्याचतिरोहितद्युमणि सूर्यस्तल्लक्षणविलोचनयस्यास्तथाविधाकरिष्यतीत्यर्थ. ॥ १७॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाण०पू०अष्टपंचा श सर्गः ॥ ५८ ॥ ॥७॥ ॥ जीवन्मुक्तपदेऽस्पदाचेत्यमुक्ताचित.स्थिति. ॥ सुस्थिरास्याययादृष्ट्यासादृष्टिरिहवर्ण्यते ॥१॥ अघविनाशिनीसर्वपापक्षयकरीम ॥ निःसगता लक्षणोयःसन्यास सर्वत्यागस्त्वपदार्थशोध.सर्वजगतोब्रह्मणिबाधलक्षणयद्ब्रह्मार्पणतत्पदार्थशोधस्तदुभयपरिशिष्टाखडमहावाक्यार्थसच्चिदानंदैकरसभूमात्मातिष्ठेत्यर्थः ॥ १॥

यस्मिन्सर्वंस्थितं यतःसर्वंघटं य सर्वसंहारे सयतश्चय कालत्रयेपि एवसर्वानित्यप्रपंचमयोपियोनित्य परस्तमेवात्मानविद्धिनपरिच्छिन्नस्वभावमित्यर्थः ॥२॥ सर्वप्रपंचमाह भावादूरस्थमपिसर्वांतरत्वात्सर्वस्यादूरस्थम् ॥ एवमाकाशवत्सर्वगमपितत्स्थआनिवत्तत्त्वस्तुपर्याप्तमेव ॥ इत्थंसर्वप्रकारेणापितदेवैकमस्तिनान्यदितिसिद्धेत्सपरिच्छिन्नरूपेणा पितस्मिंल्लिखितास्थस्तत्वत्तत्पश्चसत्तामवाभापिनत्वात्म्येण ॥ एवसतिकल्पितपरिच्छेदाभिमानेनसएवापरिच्छिन्नसम्मानस्तमसिअत्तपरिच्छेदसंशयोभवेत्यर्थः ॥३॥ द्वि विधाद्विविदात्मनारूपविवेकिभिरनुभूयते एकश्चित्ततद्वृत्तिमभिविषितचेत्यार्थप्रयारूपचित्तनिर्मितं अपरश्चचित्ततद्वृत्तितद्विषयाणामागमापायादिसर्वावस्थासाक्षिसच्चिद्रूपम निर्विवमित्यसिद्ध तदुभयमपिचत्येनसर्वेषमिपुटयाचविनिर्मुक्तंचेत्तत्परमपदमत्सैवसपन्नमितिविद्धीत्यर्थः ॥४॥ साचेत्यसर्वथविनिर्मुक्तसंवित्स्थिति ॥ यतोवाचानिवर्तन्तेइ

यस्मिन्सर्वंयत सर्वंय सर्वसर्वतश्चय ॥ यश्चसर्वमयोनित्यमात्मानविद्धितपरम् ॥ २ ॥ दूरस्थमप्यदूरस्थसर्वगतत्स्थमेवच ॥ तत्स्थ सत्तामवाप्नोपितदेवास्यत्तसंशय ॥ ३ ॥ यत्सर्वेचविनिर्मुक्तसंवेदनमनिर्मितम् ॥ चेत्यमुक्तचिदाकासतद्विद्धिपरमपदम् ॥४॥ सापरा परमाकाष्ठासादशादृगनुत्तमा ॥ सामहिम्नांचमहिमागुरूणांसातथागुरु ॥ ५ ॥ सआत्मातत्त्वविज्ञानंसशून्यब्रह्मतत्परम् ॥ तच्छ्रेय स शिवःशांत साविद्यासापरास्थिति ॥ ६ ॥ योयमंतश्चितेरात्मासचानुभवरूपक ॥ यत्रस्वदंतेसर्वाणिस्वात्मद्रव्याणिसत्तया ॥७॥ सज गत्तिलतैलात्मासजगद्गृहदीपक ॥ सजगत्पादपरस सजगत्पशुपालक ॥ ८ ॥ सतंतुर्भूतमुक्तानांपरिप्रोतस्तदंबर ॥ सभूतमरिचौघा नापरमातीक्ष्णतातया ॥ ९ ॥ सपदार्थेपदार्थत्वंसतत्त्वंयदनुत्तमम् ॥ ससतोवस्तुन सत्त्वमसत्त्ववासत स्वत ॥ १० ॥ य स्ववित्तिविचि त्रेणस्वयमात्मैवलभ्यते ॥ सर्वएवजगद्भावाअविचारेणचारव ॥ ११ ॥ अविद्यमाना सद्भावाविचारविशरारव ॥ अहमादौजग ज्जालेमिथ्याभ्रमभरात्मनि ॥ १२ ॥ कोनुभूत्वानुयभ्रामिरतिंकथमवापधी ॥ आद्यमध्यातमानानिसकल्पकलनान्यहम् ॥ १३ ॥

त्यादिश्रुतिप्रोक्ताआनंदोत्कर्षपरंपरायाः परमाकाष्ठा ॥ महिम्नांमहत्त्वानाम् ॥ गुरूणामाम्नातॄपरमागुरु ॥ नातःपरमस्तीत्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ सैवसर्वजगत्सारइत्याह ॥ सइत्यादिना ॥ ८ ॥ ९ ॥ सएवसर्वपदार्थानामसाधारणस्वरूपमित्याह ॥ सइति ॥ सत्त्वसम्यक्त्वम् ॥ १० ॥ सक य स्वस्यवित्तिस्तात्त्विकरूपेणबोधस्वरूपेणविचित्रेणात्मै विचनोपायेनसर्वस्वयमात्मैवनान्यदितिलभ्यतइत्यर्थः ॥ ११ ॥ सत परमात्मनोभावाविकस्याविचारविशरारवइत्युक्तमर्थंदर्शनविचारेणजगद्भावाविशीर्यंतेतद्दर्शयति ॥ अ हमित्यादिना ॥ १२ ॥ रतिमास्थाम् ॥ ननुधीरेवशुद्धस्यापितवआस्थाबंधेनिमित्तंभविष्यतिमत्राह ॥ कथमिति ॥ धीर्बुद्धिरप्यसंगात्वयमाकथमवाप ॥ मय्यास्तीनास्तिहेतुरि त्यर्थः ॥ मामेतुवास्तवतयाचित्त्वाआदिमध्यांतादिपरिच्छेदा सकल्पकलनानिचाहमेवममव्यतिरेकेणसतीमिथ्याचारोभ्रमणोमेमेयस्थामसक्तिरित्याशयेनाह ॥ आद्येति ॥ १२ ॥

एवविचारवतोलोकशास्त्राविरुद्धव्यवहारकालेपिसास्थितिर्नापैतीत्याशयेनाह ॥ सम्यगिति ॥ १४ ॥ यस्यमनःसमेभ्योपिसमेब्रह्मणिस्थितंसमहात्मासर्वदाअंतरुदयास्तम योन्मुक्तस्थितिरितिपरेणान्वय. ॥ १५ ॥ व्यवहारकालेतादृशस्थित्यप्रच्युतावुपपत्तिमाह ॥ भावेति ॥ यतोयभावनयैवाद्वयपदारूढोनव्यवहारतइत्यर्थ. ॥ तथाचाह ॥ भा वद्वितसदाकुर्यात्क्रियाद्वैतनकर्हिचित् ॥ अद्वैतत्रिपुलोकेषुनाद्वैतंगुरुणासहेति ॥ १६ ॥१७॥ हृदयोल्लेखोमानापमानादिदु खम् ॥ कथतस्मिश्चिन्मणौजीवन्मुक्तेव्यवहार.प्रसर तितत्रादर्शएवदृष्टातइत्याह ॥ अविभागमिति ॥ इवकारोभिन्नक्रम ॥ यथाआदर्शेदृश्यमानोजनव्यवहार अविभागमादर्शस्यवैचित्र्यविभागविकारमकृत्वैवप्रतिबिंबतितद्व च्चिन्मणावपीत्यर्थ ॥१८॥१९॥ वाच्यवाचकशिष्यतदीहागुरुतद्वाक्याद्याख्यानकल्पनाचमत्कारैर्ममआदेशस्त्वदुपदेशोपितन्मयश्चिन्मयएव ॥२०॥ चमत्कुरुतेविवर्त्तते ॥ प्र

ब्रह्माकाशमनाद्यंतंकेवेयत्ताममात्मनः॥ इतिनिश्चयवानंतःसम्यग्व्यवहृतिर्बहिः॥ १४ ॥ उदयास्तमयोन्मुक्तस्थितिरंतःससर्वदा॥ ना स्तमेतिनचोदेतिमनःसमसमस्थितम्॥ १५ ॥ यस्यखस्येवशून्यत्वंसमहात्मेहतद्वपुः॥ भावाद्वैतपदारूढःसुषुप्तपरयाधिया॥ १६ ॥ व्य वहार्यपिसंक्षोभंनैत्यादर्शनरोयथा॥ आदर्शपुरुषस्येवव्यवहारवतोपिच॥ १७॥ नयस्यहृदयोल्लेखोमनागपिसमुक्तिभाक्॥ अविभा गमिवादर्शेचिन्मणौप्रतिबिंबति॥ १८॥ चितेःपरमनैर्मल्याद्व्यवहारोयथागतः॥ चिच्चमत्कृतिरेवेयंजगदित्यवभासते॥ १९॥ नेहास्त्यै क्यंनचद्वित्वंममादेशोपितन्मयः॥ वाच्यवाचकशिष्येहागुरुवाक्यैश्चमत्कृतैः॥२०॥ आत्मनात्मनिशांतैवचिच्चमत्कुरुतेचिति॥ चित्प्रस्पं दोहिसंसारस्तदस्पंदःपरंपदम्॥ २१ ॥ चित्स्पंदशमनेनेयंपरिशाम्यतिसंसृतिः॥ महाचित्तेनतेर्थोंशभावायोभावनाक्षयः॥ २२ ॥ अ सन्नपिस्वभावंतत्संवित्स्पंदउदाहृतम्॥ शून्यत्वमजडंयत्तत्परमाहुश्चितेर्वपुः॥ २३ ॥ तत्त्वेनभावनायत्तासंसृतिःसानुभूयते॥ अभाव नामात्रलयात्साचनिःसाररूपिणी॥ २४॥ केवलंकेवलीभावात्तद्रूपासैवशिष्यते॥ चित्स्पंदमेवसंसारचक्रप्रवहणंविदुः॥ २५ ॥

स्पंदोविवर्त्तएव ॥ २१ ॥ तेतवमहतिअपरिच्छिन्नेब्रह्माकारेचित्तेनतेपरिणतेसतियःअशभावस्यजीवजगल्लक्षणैकदेशभावस्यायोऽपगम.सोऽर्थ.परमपुरुषार्थःसएवभावनाक्ष योवासनाक्षयश्चेत्यर्थ. ॥ २२ ॥ यद्यस्माद्धेतो असन्नपिसवित्स्पदउदाहृतजडस्वभावमापादयतितत्तस्माद्धेतो.स्पदशून्यत्वमेवअजडतत्परमचितेर्वपु.स्वरूपमित्यनुभवनिष्ठा आहु. ॥ २३ ॥ अनात्मदर्शनरूपायासंसृति.साअनात्मजगदाकारस्यतत्त्वेनयाथार्थ्येनयाभावनातदायत्तातथैवानुभूयते ॥ तदभावनामात्रेणभावनालयात्साजीवन्मुक्तसंसृ तिर्दग्धपटवन्नि साररूपिणीनबधक्षमेत्यर्थ' ॥ २४ ॥ कथतर्हिजीवन्मुक्तौसाशिष्यतेतदाह ॥ केवलमिति ॥ केवलीभावान्नि.स्पदचिन्मात्रीभावात्सासंसृतिस्तद्रूपाचिद्रूपैवशि ष्यतेअतश्चित्स्पदमेवमातृमानादिरूपससारमाहुरित्यर्थ. ॥ २५ ॥

सघनचित्पृथगस्तीत्यबोधएवसंसृतिरुपयस्थति ॥ २६ ॥ २७ ॥ स्वज्ञान स्वात्मतत्त्वप्रबोधमात्रेण ॥ २८ ॥ भोगवासनाक्षयात्सहजसिद्धभोगानामभावनमेवज्ञत्वस्यजी वन्मुक्ततायालक्षणम् ॥ कुतोसौभोगान्नभावयतित्याह ॥ इतइति ॥ २९ ॥ भवतीतिपूर्वान्वयि ॥ कोनुमूलेत्याविनावर्णितेभ्योविवेकादिलक्षणेभ्य अपरलक्षणम् ॥ ३० ॥ इदानींलक्षणांतरमाह ॥ चिदिति ॥ मदीयात्मचिदेवनेनभोक्तृभाग्यभोगाकारेणस्फुरतीतितत्स्वभावभूत्वासर्वात्मरूपिणीअस्तीतियोंतर्निश्चय स्वभ्यास समप्ररूढ सएवज्ञत्वलक्षण मित्यर्थ ॥ ३१ ॥ यानुतस्यसर्वजनवद्देहधारणनिमित्तेभोगेप्रवृत्ति सावथाचेष्टैवेत्याह ॥ यइति ॥ योलोकानुरोधसिद्ध्यर्थंभुज्यमानानपिभोगान्परमार्थतोनभुंक्तेसबुद्धिमांस्त त्त्वविन्मत्यानभोहममसक्तलोकानुरोधसिद्ध्यर्थंस्वयमपिलगुडैर्नभोहतितद्वत्तस्यवथाचेष्टैवसेत्यर्थ ॥३२॥ ननुसायदियथाचेष्टातर्हिसर्वजनभोक्तृभोग्यभोगाकारपरिणता

माद्यमानप्रमेयादिस्फटकादीवहेमनि ॥ पृथगस्तिनचस्पंदश्चितेर्यासंसृतिर्भवेत् ॥२६॥ चित्तमेवचितिस्पंदस्तद्बोधोहिसंसृति ॥ अबो धमात्रेचित्स्पंद कटकत्वमिवोत्थितम् ॥ २७॥ बोधमात्रविलीनेस्मिंस्तुच्छाचिद्रामशिष्यते ॥ स्वज्ञावबोधमात्रेणक्षीयतेभोगवासना ॥ २८ ॥ भोगाभावनमेवेहपरमज्ञत्वलक्षणम् ॥ इतोनाभिमता सर्वेज्ञस्यभोगा स्वभावत ॥ २९ ॥ भवतिकोतिढमोहिदुरन्तकिलवां छति ॥ एतदेवपरविज्ञिज्ञत्वस्यापरलक्षणम् ॥ ३० ॥ स्वभावेनैवभोगानांयत्किलानभिवांछनम् ॥ चित्तस्पंदैवसर्वात्मरूपिण्यस्तीति निश्चय ॥ ३१ ॥ योंत प्ररूढ स्वभ्यासोज्ञत्वशब्देनसस्मृत ॥ योनभुंक्तेभुज्यमानानपिभोगानसबुद्धिमान् ॥ ३२ ॥ लोकानुरोधसिद्ध्य र्थंसहतिलगुडैनभ ॥ विनाकृत्रिमयाबुद्ध्यानसिद्धिरवगम्यते ॥ ३३ ॥ कचिदात्मावलोकेचस्वांगावदलनैरपि ॥ चिच्चेत्यचेत्यकोटिस्था तावत्पश्यतिविभ्रमम् ॥ ३४ ॥

त्मचिदेवसर्वात्मरूपेतिभागुक्तबुद्धिरपिसर्वजननभोलगुडहननमदीयमेवेतिपरमार्थबुद्धित्वात्कृत्रिमैवेतितत्कथलक्षणत्वेनोक्तातत्राह ॥ विनेति ॥ सिद्धिर्निरतिशयानंदात्मतत्त्व म ॥ तथाचकृत्रिममपिसर्वात्मभावदर्शनपरिच्छिन्नात्मदृष्टिनिरासद्वारातत्त्वावगमोपयुक्तमितितल्लक्षणमुक्तमित्यर्थ ॥ ३३ ॥ तर्हिदेहात्मबुद्धिनिरासद्वारातत्त्वदर्शनोपयोगित्वा द्धस्तपादादिस्वांगानामवदलनादिसाहसक्रियापितल्लक्षणंकिंनस्यात्तत्राह ॥ कचिदिति ॥ यदिकश्चिच्छास्त्रेविहितमनुभवेवास्वांगानामवदलनादिसाहसैरपिसर्वात्मतादर्शनमस्त्या त्मावलोकेउपयोगप्रसिद्ध स्यात्तदानवपिलक्षणस्यान्नतुतदस्तीत्यर्थ ॥ अथवाअकृत्रिमयेतिच्छेद ॥ आत्मावलोकेतद्रूपाविर्भावेअकृत्रिमयाऽपरिच्छिन्नाकारशून्ययाज्ञ स्वभावाकारबुद्ध्याविनास्वांगावदलनै स्वांगावदलनसदृशसाहसकोटिभिरपिसिद्धिरुपयोगोनावगम्यतइत्यर्थ ॥ तत्कुतस्तत्राह ॥ चिदितिभिन्नि ॥ इयचित्यावदबोधात्मा ज्ञानस्वच्छाभवतितावच्चेत्यकोटिस्थास्वप्रकारचतुष्यादिकोट्यनुपविष्टासतीस्वयमपिस्वरूपिणीवभूत्वाचेत्यवासविषयमतिस्फुरणेनेनविभ्रमपश्यति ॥ ३४ ॥

यदाअत·मम्यग्बोधोदय स्यात्तदास्पदास्पंददशाक्रम साभिधानक स्वनाम्नासहकापियातिबाध्यतइत्यर्थ· ॥३५॥३६॥ आत्यंतिकप्राणचेष्टोपरमोपिसएवेत्याह ॥ यदिति ॥ यदाअत·मम्यग्बोधोदय स्यात्तदास्पदास्पंददशाक्रम साभिधानक स्वनाम्नासहकापियातिबाध्यतइत्यर्थ· मध्यगमनिर्वचनीयमपिरूपयन्न ॥ ३७ ॥ नविद्यतेअसविंत्तिरज्ञानस्पदश्चयस्याश्चिते प्रशममोक्षाख्यंविदुरित्यर्थ ॥यदाचित्तात्माचित स्पद·शुद्धचित:स्फाररूपब्रह्माकारस्त स्यधृग्भवतितदानबधायनमोक्षाय ॥ ३८ ॥ चिन्निरर्थैव्यर्थैसविंत्तिश्चित्ताकारोनिर्वाणतदुपरमश्चतेद्वेदशेनविदतेचेत् ॥ ३९ ॥ तर्त्तर्हि ॥ ४० ॥ समोक्षोमास्तुसमानिर्विक्षे

इदंयावदबोधात्मास्पंदतेस्पंदरूपिणी॥ सम्यग्बोधोदयोंत:स्यात्स्पंदास्पंददशाक्रम:॥३५॥कापियातिचसंशांतदीपवत्साभिधानक:॥ चित:प्रशांतरूपायादीपिकाया:स्वभावत:॥ ३६ ॥ स्पंदास्पंदमयीनेहकथैवास्तिमनागपि ॥ यदस्पंदस्यमरुतोनसन्नासन्नमध्यगम् ॥ ३७॥ रूपंतदेवासंवित्तिस्पंदाया:प्रशमंचिते:॥ अभिन्न:स्याच्चित:स्पंद:शुद्धचित्स्फाररूपधृक्॥ ३८ ॥ नबंधायनमोक्षायस्थितआ त्मनिकेवलम्॥ चिच्चेन्निरर्थसंवित्तिनिर्वाणेनचविंदते ॥ ३९ ॥ तद्बंधमोक्षपक्षादेर्नामापीहनविद्यते ॥ मोक्षोस्त्वित्येवबोधोंत:पूर्णता क्षयकारणम्॥ ४० ॥समास्त्वित्यपिबंधस्तेश्रेयोऽसंवेदनंपरम्॥ यदनाभासमजडंतद्विद्धिपरमंपदम्॥४१॥ चित:स्वरूपंसंस्थानमचे त्योन्मुखतात्मकम्॥ य:संकल्पनशब्दार्थरूप:स्पंदोमहाचित:॥ ४२॥ बंधमोक्षादिकार्होसौप्रेक्ष्यमाण:प्रणश्यति॥ प्रेक्षणादेवसंशांते त्वहंभावेनिरास्पदे॥ ४३॥ नविघ्न:केनकिंकस्यबध्यतेवाथमुच्यते॥ संकल्पएवरचितेबुधश्चेदविभागवान्॥ ४४ ॥ तदसंकल्पमस्पंदं सर्वंजातमवारितम्॥ स्पंदेस्पंदमयेवाततन्मयत्वात्सदाचिता ॥ ४५॥ संक्षीणेनचसंसारोनिस्पंदेचिद्घनेस्थिते ॥ चित्तेजएवचित्स्पंद इतिबुद्धेनिरंतरम्॥ ४६॥ व्यतिरिक्तश्चित:स्पंदोनकिंचिदवशिष्यते ॥ अस्मिन्दृश्यमयेदीर्घस्वप्नेस्वप्नांतरंव्रजन्॥ नज्ञोमोहमुपादत्तेस र्वंगत्वात्स्वसंविद:॥४७॥

पाचिदस्त्वितिवाइच्छापिबध· ॥ कितर्हिश्रेयस्तदाह ॥ श्रेयइतिसपादेनार्धद्वयेन ॥ ४१ ॥ कस्तर्हिबंधमोक्षादिकव्यवहारार्ह पदार्थस्तमाह ॥ यइति ॥ ४२ ॥ ४३ ॥ कस्त र्हिचित सकल्पस्पदत्यागेउपायस्तमाह ॥ सकल्पएवेति ॥ बुधोविवेकीस्वरचितेसकल्पएवचेदिदमयासकल्पितमिदनेतिपूर्वापरविमर्शेनविभागजहातितत्तर्हिजातोपिसकल्पो बहि·स्पदजननाक्षमोदृथानश्यतीत्यर्थादेवसर्वमवारितमसकल्पमस्पदचजातमेवेत्यर्थ· ॥ ४४ ॥ एवचिताप्रबुद्धचैतन्येनस्पदेसक्षीणेस्पंदमयेवातेचसक्षीणेसतितन्मूल·ससारो पिक्षीणएवेत्याह ॥ स्पदइति ॥ ४५ ॥ अथवाचित्प्रकाशव्यतिरेकेणस्पदोन्योनास्तीतिदर्शनादपितन्निवृत्तिरित्याह ॥ चिदिति ॥ ४६ ॥ मोहस्वचलनादिभ्रमम ॥ ४७ ॥

अनिशायस्मिन्नस्सभचायमाणाअपिमलानसवजगदाकारोपलभा स्वरनतय्युक्तानवास्वादस्तेनष्ठुगभयथास्यात्तथाउपातउत्सपम तथाउक्तसमसामत्तानासत्तास्यातरापप
मा३नि ममउक्तसविक्तिरूपा सकलकस्नाकारपकायस्मिन्मलतिर्लीयते यतमत्यगात्मानमेवमुक्तप्रकारेणध्यानेनविचारेणावगमयपश्येत्यर्थ ॥ ४८ ॥ ॥ इतिश्रीवासि
ष्ठम०तात्पर्यप्रकाशनि पू प्रत्यगात्मावबोधोनामैकोनषष्टितम सर्ग ॥ ५९ ॥ ॥ ९ ॥ ॥ अद्वितीयस्यशुद्धस्यपरस्यनिजमायया ॥ सर्वाकारे स्थितिरिहविभूतिरुपदिश्य
त ॥ १ ॥ मोक्तब्रह्मणाविभूतीः मपञ्चयिष्यन्तमनुष्यान्मथमनिर्दिशति ॥ एवमिति ॥ तस्यास्तन्निष्ठा ॥ तथाचतत्यतिठोल्कर्षदेवविभूतिपूल्कर्षोमानुषादिहरतिष्ठितिभा
व ॥ १ ॥ नृपामानुषानरविभवपूर्णाइवेतितृतीयभुनिदर्शितानवोत्कर्षक्रमप्रथमभूमिकानिर्देश ॥ तदुक्तभूमिकासुप्रबोल्कपमाह ॥ आकाशेति ॥ क्रीड्यतेतत्स्थैर्नैवज
ननतिपरणाम्वय ॥ २ ॥ तस्मिन्ब्रह्मणिआनन्दस्फूर्तिविरोधिमालिन्यक्षयतारतम्येन तिष्ठतीतितत्स्थोमनुष्यगधर्वादिर्जनस्तेन ॥ स्वर्गौकसायथेतितदुत्तरगधर्वाद्युत्तरभूमिकोदा

यत्रादतिप्रसस्समनिशम्यगसविक्तिसत्तायस्मिन्नेतसकलकलनाकारपकागलति ॥ उपत्येतेस्वदनसुभगयत्रसर्वोपलभाध्यानेनैवतम
वगमयप्रत्यगात्मानमत ॥ ४८ ॥ ॥ इ०वा०वा०दे०मोक्षोपायेपुनि०पू०प्रत्यगात्मावबोधोनामैकोनषष्टितम सर्ग ॥ ५९ ॥ ॥ ६ ॥
श्रीवसिष्ठउवाच ॥ ॥ एवमाद्यपरतत्त्वचिह्नपरमपदम् ॥ तस्याएतेमहारूपाब्रह्मविष्णुहरादय ॥ १ ॥ विभूतिभि स्फुरत्युच्चैर्जनास्तु
शानृपाइव ॥ आकाशगमनाद्याभि क्रीडाभि क्रीड्यतेचिरम् ॥ २ ॥ तत्स्थैर्नैवजनैरेहस्वर्गेस्वर्गौकसायथा ॥ तथाप्यागनम्रियतेतथाप्या
गनशाम्यते ॥ ३ ॥ तथाप्यजीव्यतेनागतथाप्यागनरुध्यते ॥ अपारपरमाकाशरूपिण परमात्मन ॥ ४ ॥ सत्तासामान्यरूपचेन्मनाग
पिविभाव्यते ॥ तत्त्वानिमेषमात्रेणजतुर्मुक्तमनामुनि ॥ ५ ॥ कुर्वन्ससारकर्माणिनभूय परितप्यसे ॥ ॥ श्रीरामउवाच ॥ ॥ मनोबुद्धि
रहकारश्चित्तपत्रक्षयगतम् ॥ सत्तासामान्यमाभातमनस्वासकिमुच्यते ॥ ६ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ यद्ब्रह्मसर्वदेहस्थभुक्तेपिवतिव
ल्गाति ॥ आदत्तेविनिहत्यत सवित्सवेद्यवर्जितम् ॥ ७ ॥

हरम्याधम ॥ तत्त्ववानदोत्कर्षावधिभूतब्रह्मतत्त्वबोधेनमाप्य ॥ अगेतिसबोधने ॥ ३ ॥ नजीव्यतेप्राणधारणनिमित्तरशनायाविभिनपीड्यते ॥ नरुध्यतेकुड्यादिभि ॥ ४ ॥ त
त्तरअनु साधारणजनुशरीरोपियदिस्यात्तथापिनपरितप्यसेकिपुनरुत्तमशरीरइत्युत्तरेणान्वय ॥ ५ ॥ यद्विभावनाज्जतुनपरितप्यतेतत्सत्तासामान्यरूपांकनिर्विशेषभूतसवि
शपम् ॥ आयेतस्यविभातिविषयनमसगतम् ॥ द्वितीयेतथाप्यजतुनपरितप्यतेइत्यात्यन्तिकपरितापोच्छेदवर्णनमयुक्तमित्याशयेनराम पृच्छति ॥ मनइति ॥ मनोबुद्ध्यादिसमष्टेत
यमक्षयगतनन्निर्विशेषमाभानपूर्णचिन्मात्रमसत्सत्तासामान्यमितित्वयाप्यतेतत्तमनस्वीमनआदिसमविशेषवान्सभात्माइश्वरइत्यय ॥ ६ ॥ नामप्रपञ्चबाधोत्तरपरिशिष्टनि
विशेषमितिवातत्सूक्ष्मकारिकसविशेषमितिवाविभज्यसत्तासामान्यमुक्तौकिनुसर्वजीवभावेष्वीश्वरभावेमुक्तौचयदनुस्यूतमसदवभासमानमस्माभतदेवोक्तदेवजगतस्तत्त्वम् ॥
तमनुत्तरभिनत्तानकश्चिदाधइत्याशयनवहिद समाधत्त ॥ यदिति ॥ आदत्तेतजापालनमसर्वकाले ॥ विनिहन्तिसुषुप्तिप्रलययो ॥ सवित्सवेद्यवर्जिततुरीयतायाम ॥ ७ ॥

स्थितमेवकंठचामीकरवद्बोधेनार्जितम् ॥ ८ ॥ तदेववियदादिकार्यानुस्यूतंतद्विभूतितयोपवर्ण्यतेसार्वात्म्यप्रदर्शनायेत्याह ॥ तदित्यादिना ॥ ९ ॥ तत्तयारसनेंद्रियतया ॥ नेत्रे चक्षुरिंद्रिये ॥ १० ॥ ११ ॥ १२ ॥ अहंकृत्याअहंकारतया ॥ सविदिबुद्धौ ॥ सवित्त्यावुद्धितया ॥ १३ ॥ १४ ॥ चेतनेचतुर्विधभूतेषु ॥ १५ ॥ तत्रविशेषाकारसत्तापित देवेत्याह ॥ अमरेष्विति ॥ १६ ॥ कालस्यक्रमेयुगसवत्सरत्वादिभेदे ॥ ऋतावित्यादिस्तत्प्रपंच ॥ १७ ॥ नियमेननियतितया ॥ १८ ॥ १९ ॥ बाल्येनेत्यादयोभावप्रधाननि

तत्सर्वगतमाद्यंतरहितंस्थितमर्जितम् ॥ सत्तासामान्यमखिलंवस्तुतत्त्वमिहोच्यते ॥८॥ तत्स्थितंखतयाव्योम्निशब्देशब्दतयास्थितम् ॥ स्पर्शेस्थितंस्पर्शतयात्वचितत्त्वक्तयास्थितम् ॥ ९ ॥ रसेलीनंरसतयारसनायांतुतत्तया ॥ रूपेरूपतयादृष्टंनेत्रेलीनंचदृक्तया ॥ १० ॥ घ्राणे घ्राणतयादृष्टंगंधेगंधतयोदितम् ॥ पुष्टंकायतयाकायेभूमावपिचभूतया ॥ ११ ॥ पयस्तयाचपयसिवायौवायुतयास्थितम् ॥ तेजस्तया तेजसिचबुद्धौबुद्धितयागतम् ॥ १२ ॥ मनस्तयामनस्यंतरहंकृत्याप्यहंकृतौ ॥ रूढंसंविदिसंवित्त्याचित्तेचित्ततयोत्थितम् ॥ १३ ॥ वृक्षे वृक्षतयालग्नंपटेपटतयोदितम् ॥ घटेघटतयारूढंवटेवटतयोत्थितम् ॥ १४ ॥ स्थावरेस्थावरत्वेनजंगमत्वेनजंगमे ॥ पाषाणत्वेनपाषाणेचेतनत्वेनचेतने ॥ १५ ॥ अमरेष्वमरत्वेननरत्वेननरेषुच ॥ तिर्यक्त्वेनचतिर्यक्षुक्रिमित्वेनक्रिमिस्थितौ ॥ १६ ॥ कालक्रमेकालतयाक्रतावृतुतयातथा ॥ त्रुटिक्षणनिमेषादौसंस्थितस्तत्तयाविभुः ॥ १७ ॥ शुक्लेशुक्लतयाजातंकृष्णेकृष्णतयास्थितम् ॥ क्रियासुस्पंदरूपेण नियतौनियमेनच ॥ १८ ॥ संस्थितःसंस्थितौस्थित्यानाशेनाशतयास्थितः ॥ उत्पत्तिरूपेणोत्पत्तावास्थितःपरमेश्वरः ॥ १९ ॥ बाल्येनबाल्येविश्रांतोयौवनेयौवनेनच ॥ जरसाचजरारूपेमरणेमरणेनच ॥ २० ॥ इतिसर्वपदार्थानामभिन्नःपरमेश्वरः ॥ कल्लोलसीकरोर्मीणामब्धाविवपयोभरः ॥ २१ ॥ नानातैषांत्वसत्यैवसत्येनानेनचैवहि ॥ कल्पिताचित्स्वभावेनवेतालःशिशुनायथा ॥ २२ ॥ सर्वत्रसंस्थितिमता विगतामयेनव्याप्तंमयेदमखिलंविविधैर्विलासैः ॥ चिद्रूपिणैवकलनाकलितात्मनेतिमत्वोपशांतमतिरास्वसुखंमहात्मन् ॥ २३ ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ इत्युक्तवत्यथमुनौदिवसोजगामसायंतनायविधयेस्तमिनोजगाम ॥ स्नातुंसभाकृतनमस्करणाजगामश्यामाक्षयेरविकरैश्चसहाजगाम ॥ २४ ॥ ॥ इ० वा० वा० दे० मो० नि० पू० विभूतियोगोपदेशोनामषष्टितमःसर्गः ॥ ६० ॥ दिवसः ॥ १६ ॥

देशाः ॥ २० ॥ पयोभरोजलसामान्यमिव ॥ २१ ॥ कथमयमेवैकोनानात्वेनस्थितइतिचेत्स्वाज्ञानभ्रांतिकल्पनयैवनवस्तुतइत्याह ॥ नानातेति ॥ २२ ॥ हेमहात्मन्सर्वत्र संस्थितिमताचिद्रूपिणामयाआत्मनास्वेनैवेयजगत्कलनाकलिताकल्पिता इदमखिलमयैवविविधैर्विलासैर्व्याप्तममैवेयविभूतिर्नमद्व्यतिरिक्तंकिंचिदस्तीतिमत्वाउपशांतामति र्यस्यतथाभूतआस्वस्वमहिम्नितिष्ठेत्यर्थः ॥ २३ ॥ २४ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू० षष्टितमःसर्गः ॥ ६० ॥

दृश्यमसाध्यतेयुक्त्यास्वममायासमजगत् ॥ सर्वमपाविरोधेनमात्यासर्वस्यसंभव ॥ १ ॥ यदिसर्वजगत्परमात्मन स्वमसदृशीभातिकल्पितविभूतिस्तर्हिअस्मादादिदृशास्वमवद्भाति रित्यवभासत अस्मदादिदृशातुनस्वमतुल्य किंतुदृढतर अत्यक्षस्यैवभासतइतिवैषम्येकोहेतु नचदीर्घकालानुवृत्त्यास्माकमयाभातीतितत्समाधानयुक्तम् ॥ ब्रह्मादीनामपरार्धद्वयापुपातनोपिचिरकालसवारानुवृत्त्यासत्यताद्याधिक्यापत्तेरित्याशयेनराम पृच्छति ॥ यथेतिद्वाभ्याम् ॥ १ ॥ अस्माकअस्माकमेवप्रपंचेदृढतर सत्यताप्रत्यय कथमुत्थितानपद्मजादीनामित्यर्थ ॥ २ ॥ अबाधितचिरानुवृत्तिरेवसत्यत्वाभिमानहेतुर्नबाधितचिरानुवृत्तिरित्याशयेनवसिष्ठ समाधत्ते ॥ अस्मदिति ॥ यदायपद्मज पूर्वमुपासकाव स्येभूत्तदात्मज्ञानाभावादस्यप्रजापतेस्तदानीतन पूर्वसर्गइदानीमस्मदनुभूयमानसर्वसर्वस आसमताच्चतुर्विधभूतग्रामलक्षणजीवप्रतिभासात्मासत्यएवाभातितथापिसभवत

॥ श्रीरामउवाच ॥ ॥ यथास्माकमुनेस्वप्नपुरपत्तनमण्डलम् ॥ तथैवपद्मजादीनांयदिदेहपरिग्रह ॥ १ ॥ तथैवेदंचसंजातयदिसर्वमसन्मयम् ॥ तदस्माकदृढतर प्रत्यय कथमुत्थित ॥ २ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अस्मत्सर्गवदाभातिपूर्वसर्ग प्रजापते ॥ आजीवप्रतिभासात्माविद्यतेनतुवास्तव ॥ ३ ॥ सर्वगत्वाच्चिते सर्वजीव सर्वत्रसस्थति ॥ साचासम्यग्दर्शनोत्थासम्यग्दर्शननाशिनी ॥ ४ ॥ स्वप्नाभ प्रतिभासोस्ययएषसमुपस्थित ॥ अहंताप्रत्ययैकात्मासएवातिदृढस्थित ॥ ५ ॥ स्वप्नेक्षिप्रविनाशित्वयथापुंसानदृश्यते ॥ सर्वस्वप्नेतथैवैतद्ब्रह्मणामिहलक्ष्यते ॥ ६ ॥ स्वप्नोयपुरुषस्यास्यप्रतिभासस्ययोभवेत् ॥ रामास्मदादिसर्वात्माभवेत्तादृशएवच ॥ ७ ॥ यत्स्वप्नपुरुषाज्जाततत्स्वप्नपुरुषात्मकम् ॥ भवतीत्यनुभूतंहियद्बीजतत्फलयथा ॥ ८ ॥

स्यतत्त्वज्ञानबाधितत्वाद्वास्तवानमिष्यते ॥ ३ ॥ यावदज्ञानतावच्चिते सर्वगत्वात्सर्वजीवोभवति सर्वमपसस्थति सत्येवभवति साचसम्यग्दर्शनविरोध्यज्ञानोत्थासम्यग्दर्शनेनमष्टशीलमस्यास्तथाविधेत्यर्थ ॥ ४ ॥ अतएवास्यप्रजापतेस्तत्त्वज्ञानबाधित स्वप्नाभ केवल प्रपंचप्रतिभासोय समुपस्थित स अज्ञास्मदायहंतामत्ययैकात्माएकीभूतअनुअतिदृढस्थित ॥ ५ ॥ तर्हिप्रजापतिमिति स्वकल्पितप्रपंचस्यतत्त्वबोधेनक्षिप्रविनाशिताकुतोनानुभूयतइतिचेत्तत्राकारणेनमतिप्रधावित्याशयेनाह ॥ स्वप्नेइति ॥ यथास्वप्नपुंसास्वाप्नभोगप्रदकर्मप्रतिबद्धत्वात्स्वप्नेविद्यमानमपिक्षिप्रविनाशित्वनदृश्यतेतथासमष्टिस्वप्नेजगत्यपिब्रह्मणाप्रपंचानामिहविनाशित्वबोधेनमितबोधोलक्ष्यतइत्यर्थ ॥ ६ ॥ हेरामअस्यस्वप्नपुरुषस्यप्रतिभासस्यप्रतीतेरप्रसिद्ध स्वप्न अस्मदादिसर्वजीवजगदात्मायादृशाआपनत्वमवाहरूपइस्येवभवेत्प्रजापतेरपिताहशएवभवेदित्यर्थः ॥ ७ ॥ अस्तुतादृशकिंतस्तजधाह ॥ यदिति ॥ यथातस्यादिदेवोकमेवतजन्यस्वप्नफलाकारापरिणतस्वरूपतद्विपर्यः ॥ ८ ॥

...जन्मांतरस्वर्गनरकाद्यर्थक्रियासमर्थोपि घनसत्यत्वभावननुक्तमित्यत ॥

अस्त्वेवंततोपि किमत आह ॥ असत्यमेवेति ॥ असत्येनमन.पुरुषेणयत्साध्यतेतदसत्यमेवेतिसिद्धमतोजन्मांतरस्वर्गनरकाद्यर्थक्रियासमर्थोपि घनसत्यत्वभावननयुक्तमित्यत येनहेतुनानयुक्ततेनहेतुनादृढप्रत्ययितमपिपरित्याज्यम ॥ १० ॥ किंचास्मदादीनामपिस्वाप्नसर्गादियद्वासनेतत्तदानींदृढप्रत्ययमेवभवतिनमिथ्याबुद्धिस्तदादृश्यतेनेतावतास्यस त्वेतेत्यर्थ· ॥ अभ्युपेत्यप्राजापत्यस्यसर्गस्यदीर्घकालस्थायित्वमिदसर्वमुक्तम् वस्तुतस्तुतस्यदैर्घ्यमपिहरिश्चंद्रस्वप्नदैर्घ्यवदल्पकालेपिसंभवतीत्याह ॥ निमेषमात्रइति ॥ वार्पि क पूरइवप्रवृद्ध पौर अयप्राजापत्य सर्गस्वप्न ॥ ११ ॥ प्रजापतेरिवसर्वेषामपिस्वस्वप्नेपुनदानींदीर्घप्रपचताप्रत्ययोस्त्येवेत्याह ॥ सुदीर्घेति ॥ १२ ॥ चिदर्थानप्रसिद्धिकल्पह

असत्यमेवतद्विद्धियदसत्येनसाध्यते ॥ असत्येर्थेसमर्थेपिनयुक्तंभावनंघनम् ॥ ९ ॥ येनतेनपरित्याज्यमसद्भावनभावनम् ॥ दृढप्रत्ययितंस्वप्नपुरुषाद्यत्समुत्थितम् ॥ १० ॥ भवत्यात्मनिसर्गादिदृढप्रत्ययमेवतत् ॥ निमेषमात्रःपौरोयंसर्गस्वप्नःपुरःस्थितः ॥ ११ ॥ तस्मिन्निमेषएवास्मिन्कल्पनापरिकल्प्यते ॥ सुदीर्घस्वप्नखंडोयंयथोदेतिप्रजापतेः ॥ १२ ॥ सर्गाख्यःसर्वभूतानांप्रत्येकमुदितस्तथा ॥ चित्तत्वस्यैवभावेनसर्गवर्गपरंपरा ॥ १३ ॥ स्फुरत्यंभोद्रवत्वेनयथावर्त्तविवर्त्तनैः ॥ यथास्वप्नात्मिकैवेयंसर्गलक्ष्मीर्नवास्तवी ॥ १४ ॥ तदासंभवतीदंवैतत्पदंप्रलयंगतम् ॥ यद्यथायादृशंदृष्टंतत्तादृग्विद्यतेतथा ॥ १५ ॥ नहिपर्यनुयोक्तव्याःस्वप्नविभ्रमरीतयः ॥ नतदस्तिजगत्यस्मिन्यन्नसंभवतिभ्रमे ॥ १६ ॥ विचित्रास्तिपुलोकेपुदृश्यंतेवस्तुदृष्टयः ॥ जलमध्येज्वलत्यग्निर्यथाब्धौवडवानलः ॥ १७ ॥ नगराण्यंबरेसंतियथावैमानिकाश्रयाः ॥ शिलास्वब्जानिजायंतेहेमाद्राविवपादपाः ॥ १८ ॥ एकांतेसर्वपुण्यानिसंतिकल्पतरौयथा ॥ शिलाःफलंतिफलिवद्यथारत्नगुलुच्छकाः ॥ १९ ॥ शिलांतःप्राणिनःसंतिभेकाइवशिलांतरे ॥ दृषदोवारिनिर्यातिचंद्रकांतोपलादिव ॥ २० ॥ निमेषेणघटोयातिपटतांस्वापसंविदि ॥ असत्यमपिबुध्येतस्वप्नेस्वमरणंयथा ॥ २१ ॥

पदृश्यत्वमिथ्यात्वेप्रयोजकतच्चोभयत्रापिसमानमित्याशयेनाह ॥ चित्तत्वस्येति ॥ १३ ॥ १४ ॥ तत्प्राजापत्यपदसर्गादिसहितप्रलयगतमत्यंतासदेवेतिननिरोधोनचोत्पत्तिर्न बद्धोनचसाधक नमुमुक्षुर्नवैमुक्तिरित्येपापरमार्थतेतीदप्रसिद्धश्रुतिवचनसंभवतीत्यर्थ· ॥ नन्वत्यंतासदेवेदचेत्कथव्यवहारार्हमितिचेत्तथादृष्टत्वादेवनात्रपर्यनुयोज्यमस्तीत्याह ॥ यद्यथेति ॥ १५ ॥ अज्ञानस्याघटितघटनासामर्थ्यादपिनपर्यनुयोज्यतेत्याह ॥ नतदिति ॥ १६ ॥ असंभावितानाबहूनाजगतिदर्शनमुदाहरति ॥ विचित्राइत्यादिना ॥ १७ ॥ हेमाद्रौनिर्मृत्तिके ॥ १८ ॥ एकातेएकदेशेसर्वाणिपुण्यानिपुण्यफलभूतान्यभिलषितवस्तूनि ॥ पण्यानीतिपाठेपणनव्यवहारस्तद्योग्यवस्तूनि ॥ पुष्पाणीतिपाठेनुस्पष्टम ॥ यथाशब्दा.सर्वत्रोदाहरणार्था. ॥ फलिवद्वृक्षवत् ॥ रत्नगुलुच्छकाश्चितामणिगुच्छाः ॥ १९ ॥ २० ॥ स्वापसंविदिस्वप्ने ॥ २१ ॥

स्वणदीमराकिर्ना ॥ २२ ॥ २३ ॥ नफलतिनास्पर्षते ॥ यथामोक्षउत्पन्नो प्रलनश्यतु प्रपच सत्योस्तु भोगा शाश्वता सतु नियतिभष्यतो वेदाअप्रमाणीभवतु इत्यादीनां विपयसत्यसकस्मानांचिंतितान्यपिनफलतीत्यर्थ ॥ २४ ॥ असभवा असभाविताअन्येचविचित्रारभविभ्रमा शवरगधर्वादिमायाविलासैर्दृष्टाइत्यन्वय ॥ २५ ॥ देशेदूर स्थादौचद्रमादिशिकत्वादय कालआत्मातिक्रमश्च कवधाद्योमभ्रमयोगादिक्रियपार्श्वपथाविद्भ्यैरमेमणिभि सचरणीये पिशाचमदाद्यनुप्रवेशैश्वजातास्तेतेविचित्रारभविभ्र मादृष्टाइत्यथ ॥ २६ ॥ सत्यभ्यद्वाथक्रियासंभवोयम्यत्तथाविधादृष्टाइतिपूर्वेणान्वय ॥ इदानीमसभवोप्ययमज्ञानाशादिर्गवीसभवतीतिसभवउपपद्यते ॥ २७ ॥ एव मिथ्यार्थासभवाविसर्गरूप स्वप्नविभ्रमअलयेनस्वबोधेनासंभव सन्सिद्धयेस्वरूपविश्रांतयेभवतीत्यथ ॥ एवचअज्ञात्मनादर्शननासत्यांकिंचिदस्तिजगदात्मनादर्शनेतुनसत्यंकि

आकस्मिकजलंव्योम्निध्रियतेभूतगयथ॥वितानमिवखेवारितिष्ठतिस्वणदीयथा॥२२॥उड्डीयतेशिला स्थूला पक्षवतोयथाद्रय॥शि लात भाप्यतेसर्वनतुचिंतामणेरिव॥२३॥चिंतितानिफलत्याशुदेवोद्यानांतरेष्विव॥तान्येवनफलत्याशुमोक्षादीनाचराघव॥२४॥ अचेतनोपिचुस्तेकमयत्रपुमानिव॥एवमायास्तथान्येचविचित्रारंभविभ्रमा ॥२५॥दृष्टा शबरगधर्वविलासैरप्यसभवा ॥ देश कालक्रियाद्रव्यरसस्चरणीयजा ॥ २६ ॥ अयागधर्वजनिताअनता सत्यसभवा ॥ असभव सभवोयमपिभ्राव्युपपद्यते॥२७॥ सभवोऽसभव मन्यक्सिद्धयेस्वप्नविभ्रम ॥नतदस्तिनयत्सत्यनतदस्तिनयन्मृषा॥ २८॥ सर्वसर्वेणसर्वत्रस्वप्नेसर्गाभिधानके ॥ स्व प्नेनिमग्नधीर्जंतु पश्यतिस्थिरतांयथा॥२९॥सर्गस्वप्नमग्नबुद्धि पश्यतिस्थिरतांतथा॥भ्रमाद्भ्रमांतरंगच्छन्स्वप्नात्स्वप्नांतरव्रजन्॥अ तिस्थिरप्रत्ययभागिहजीवोविमुह्यति॥३०॥श्वभ्रांतरश्वभ्रनिपातदोषात्संप्राप्नुवन्मुग्धमृग प्रयाति॥ मोहद्यापातमयैकरूपजीव स्तथासस्रतिपातमूढ ॥३१॥ ॥इ वा०वा०दे०मो०नि०पू०जगत्स्वप्नकथननामएकषष्टितम सर्ग ॥६१॥ ॥ ९॥ ॥

॥श्रीवसिष्ठउवाच॥ ॥अत्रराघववक्ष्येहमितिहासमिमश्टणु ॥ यद्वृत्तकस्यचिद्भिक्षो किंचिन्मननशालिन ॥ १ ॥ आसीत्कश्चिन्म हाभिक्षु समाध्यभ्यासतत्पर ॥नित्यंस्वव्यवहारेणक्षिपयत्यखिलंदिनम् ॥ २॥

चिरस्तीनिफलितमित्याह ॥ मतदिति ॥ २८ ॥ २९ ॥ ३० ॥ यथामुग्धोमृग श्वभ्रपुनिपातयतीतिश्वभ्रनिपातस्तथाविधास्वमोहदोषाच्छ्वभ्राच्छ्वभ्रांतरमयातितथासस्रती पातयतीतिसस्रतिपाताराणारयस्मात्मूढोजीव पातमयनयाएकरूपनम्रगयन्मध्येनिर्गमनमस्तियत्रतथाविधमोहदेहादिगतमयेशाश्वमयातीत्यर्थः ॥ ३१ ॥ ॥ इतिश्रीवासि ष्ठम०तात्पर्यप्रकाशनि०पू०एकषष्टितम सर्ग ॥ ६१ ॥ ॥ ९ ॥ ॥ भिक्षुप्रबासनायोगाज्ज्ञानादेहाभिविभ्रमम् ॥ वर्ण्यतेजीवटाख्यानेभिक्षुमानसचेष्टितम् ॥ १ ॥ अथमस्मिन्नृपमानुमोनरगच्छन्चिन्निश्चिंतेर्येउदाहरणभूतमितिहासपुरातनम ॥ यद्वृत्तसयम्यम् ॥ १ ॥ महानुर्थातिविशोतिवैराग्यादिसपन्नोभिक्षु परिब्राट् ॥ स्वव्यवहा रत्ताभ्यमोचितव्यवव्यमननादिव्यवहारेण ॥ २ ॥

समाधिश्चित्तस्यध्येयाकारदार्ढ्येनपूर्वस्वरूपशून्यत्वापादनंतदेवार्थमात्रनिर्भासस्वरूपशून्यमिवसमाधिरितिपतंजलिवचनात् ॥ तदभ्यासनशुद्ध पूर्ववासनात्यागेन... ॥ अंबु जलत्रीचितामिव ॥ ३ ॥ एकधीरेकाग्रचित्त. ॥ ४ ॥ सामान्यजना शास्त्रसंस्कारहीनास्तद्वृत्तिताचित्तचेष्टानुसारिताम ॥ ५ ॥ नरातरयतिधर्मानियन्त्रितपामरपुरुषांतररूपं यथाअंबुआवर्त्तनेकृतेप्राक्तनप्रवाहस्पंदस्यसमस्थानस्यचसत्यागमात्रेणनाभ्याकारमावर्ताख्यरूपांतरेणतिष्ठतितद्वत् ॥ ६ ॥ तत्रनांतरीयकीनामकल्पनामाह ॥ तेनेति ॥७॥ ॥ ८ ॥ हृष्टोमत्तः ॥ ९ ॥ पाठेऽध्ययने सत्कर्मानुष्ठानैश्चतुष्टिमत्सतुष्टेनपृथक्जनचरित्रेण ॥ १० ॥ अहर्व्यापारनिष्ठयाश्रांतइतिशेषः ॥ अतःसंस्कारात्मनालीनाव्यवस्थितिर्य

समाध्यभ्यासशुद्धंतत्तस्यचित्तंक्षणेनयत्॥ चिंतयत्याशुतद्भावंगच्छत्यंब्विववीचिताम्॥३॥कदाचित्ससमाधानविरतोतिष्ठदेकधीः॥ किंचित्संचिंतयामासस्वासनस्थःक्रियाक्रमम् ॥ ४ ॥ तस्यचिंतयतोजाताप्रतिभेयमितिस्वतः ॥ भावयाम्याशुलीलार्थंसामान्यजनव त्तिताम् ॥ ५ ॥ इतिसंचिंत्यचेतोस्यस्थितंकिंचिन्नरांतरम् ॥ स्पंदसंस्थानसंत्यागमात्रेणावर्तनेंब्विव ॥६ ॥ तेनचित्तनरेणाथकृतंनामा त्मवांछया॥ जीवटोस्मीतिसहसाकाकतालीयवत्स्थितम् ॥ ७॥ जीवटोविजहाराथसस्वप्नपुरपश्चिरम् ॥ स्वप्ननिर्माणनगरेकस्मिंश्चि त्पुरवीथिषु ॥ ८ ॥ तत्रपानंपपौमत्तोभृंगःपद्मरसंयथा॥ लीलयैवदृढंहृष्टःसुष्वापघननिद्रया ॥ ९ ॥ स्वप्नेददर्शविप्रत्वंपाठानुष्ठानतुष्टिम त्॥ प्रतिभामात्रसंपन्नंचित्तेदेशांतरामिवत्॥ १० ॥ कदाचित्सद्विजश्रेष्ठस्त्वहर्व्यापारनिष्ठया ॥ सुष्वापांतर्व्यवस्थितिर्बीजतायामिवद्रु मः॥ ११ ॥ द्विजोपश्यत्स्वयंस्वप्नेसामंतत्वमथात्मनि ॥ ससामंतःकृताहारःकदाचिद्घननिद्रया ॥ १२ ॥ अपश्यद्राजतांस्वप्नेककुब्वलय पालिनीम् ॥ लालितांभोगपूगेनपुष्पौघेणलतामिव ॥१३॥ सकदाचिन्नृपःस्वस्थःसुष्वापास्तमितेहितः॥ पुरोभाविनिजाचारःस्वकार्य मिवकारणे ॥ १४ ॥ अपश्यत्स्वात्मनिस्वप्नेसुरस्त्रीत्वमनिंदितम्॥ वृक्षकोशरसोल्लासोमंजरीत्वमिवोदितम्॥ १५ ॥ सासुरस्त्रीरतिश्रां तानिद्रांगाढामुपागता ॥ मृगीत्वमात्मनिस्वैरमावर्त्तत्वमिवांबुता॥ १६ ॥

स्य ॥ यथाबीजतायाद्रुमोंतर्गतविटपादिसंस्कारआस्तेतद्वत् ॥ ११ ॥ सामंतत्वमाडलिकराजताम ॥ १२ ॥ कृताहारोभुक्तवान्सन्सुप्तोघननिद्रयाराजतासाम्राज्य ककुभा दिशावलयानिपालयितुशीलयस्यास्तथाविधाम् ॥ १३ ॥ पुरोभावीफलदानायोपस्थितोनिजःस्वीयःकृयासक्तिरूपआचारोयस्य ॥ स्वकार्यंवृक्षादि॥ कारणेबीजे ॥ १४ ॥ बहुपुरुषसंभोगेप्यनिंदितसुरस्त्रीत्वमप्सरस्त्वम् ॥ रसोल्लासेचेतनत्वकल्पनयोक्तिर्लक्षणयावृक्षजीवोक्तिर्वा ॥१५॥ मृगीनयनसौंदर्याभिलाषवासनयामृगीत्वमपश्यदित्यनुकृष्य ते ॥ अंबुताअंबुसाम्यावस्था ॥ १६ ॥

॥ १७ ॥ तिरश्चांस्वप्नदर्शनमस्तिनवेतिसंदेहनिरासायाह ॥ तिर्यञ्चइति ॥ चित्तस्यदृष्टश्रुतसंस्कारग्राहित्वात्सतिसंस्कारेस्मृतिवत्स्वप्नस्याप्यवर्जनीयत्वादित्याशय ॥ १८ ॥ लतापल्लवासक्तिवशाल्लताभूय ॥ वनदेवीनामनेकप्रसिद्धलतागृहमिवविलसनशीला ॥ १९ ॥ सालताकंचित्कालमत्र सविस्यासाक्षिचैतन्येननिद्राजडतांसुषुप्तिमनुभूयबीजांतस्थायाअंकुराकारायाधियोरूपमिवस्वरूपंयस्यास्तथाविधयास्वप्नोन्मुख्याधियाभ्रमराकारोद्बुद्धसंस्कारयाआत्मानंभ्रमरमपश्यदित्यन्वय ॥ २० ॥ २१ ॥ २२ ॥ कौसुममधुमकरंदंपपौइतिशेष ॥ २३ ॥ व्यसनीअत्यासक्त सन्बिसस्यनालगोनालसक्त ॥ २४ ॥ पदंव्यवसितम् ॥ जृंभतेवर्धते ॥ २५ ॥ तेनगजेनसाभ्रमराश्रितानलिनीमर्दितेति

सास्त्रीलोलनयनाकदाचिन्निद्रयावृता ॥ स्वप्नेददर्शवल्लीत्वस्वाभ्यासादृढमात्मनि ॥ १७ ॥ तिर्यञ्चोपिप्रपश्यंतिस्वप्नंचित्तस्वभावत ॥ दृष्टानांचश्रुतानांचचेतःस्मरणमक्षतम् ॥ १८ ॥ साबभूवलतापुष्पफलपल्लवशालिनी ॥ वनदेवीवनोद्यानलतागृहविलासिनी ॥ १९ ॥ बीजांतस्यांकुराकाररूपयेहाधिरूढया ॥ सापश्यदत्र सविस्यासुकुटलवनमात्मन ॥ २० ॥ कंचित्कालंसुषुप्तस्यकलयाजडतांघनाम् ॥ अनुभूयददर्शायस्वात्मानंभ्रमरंस्थिरम् ॥ २१ ॥ षट्पदोविजहारायवनेवनलतास्वसौ ॥ पद्मिनीषुचफुल्लासुतरुणीष्विववल्लभ ॥ २२ ॥ प्रियाबिंबाधरस्वादुरसवत्कौसुममधु ॥ भ्रमत्कुसुमसंघासुमुक्तावल्लीविलासिषु ॥ २३ ॥ सबभूवसरोजिन्याव्यसनीबिसनालग ॥ क्वचिदेवरतिर्ब्येतिचेतोजडमतेरपि ॥ २४ ॥ तामाजगामनलिनींपरिलोलयितुंगज ॥ रम्यवस्तुक्षयायैवमूढानांजृंभतेपदम् ॥ २५ ॥ नलिनीमर्दितासैवसमंतेनसषट्पद ॥ गतोदंतांतरंव्रीहिरिवचूर्णत्वमाययौ ॥ २६ ॥ भ्रमरोवारणालोकाद्वारणालोकभावनात् ॥ ददर्शात्मानमामोदमत्तहस्तितयोदितम् ॥ २७ ॥ शुष्कसागरगंभीरंगजःखातेपपातह ॥ तमोघनघनेशून्येसंसारइवजीवक ॥ २८ ॥ बभूववद्धोराज्ञोमहापरबलांतक ॥ सदामदबलक्षीबोपूर्णोतीवनिशाचर ॥ २९ ॥ कदाचिदसिनिस्त्रिंशच्छिन्न सोस्तमुपाययौ ॥ विवेकानिलनिर्लूनरूपोजीवइवात्मनि ॥ ३० ॥

स तेनमालनसमसषट्पदोगजस्यदंतांतरंगत सस्यसंघमध्यव्रीहिरिवचूर्ण्यमाणश्चूर्णत्वमाययौ ॥ २६ ॥ वारणस्यालोकादवलोकनाद्वारणस्यालोक्यतइत्यालोकआकारस्तद्भावनायात्मानंमत्तहस्तितयाउदितसमुत्पन्नंददर्श ॥ २७ ॥ सगज खातेहस्तिपकनिर्मितगर्ते घनेभ्यःमेघसंघादिभ्योपिघनेकठोरेसंसारेजीवकइवपारवश्येन खात्यन्तनुभवन् ॥ २८ ॥ निशाचरदस्युतराम्यपि ॥ २९ ॥ सकदाचिदुपस्थितेनिशायुद्धेपरातीतिनिशाचर सन्नसिभिर्निस्त्रिंशैर्निर्गतास्त्रिंशदंगुलिभ्योनिस्त्रिंशा कृपाणिकास्ताभिश्छिन्न सन्नस्तंमृत्युमुपाययौ ॥ जीवोजीवोपाधिदेहाभिमानश्च ॥ ३० ॥

गजघटानाहस्तिसमूहानांकुंभस्थलायेभ्यउच्चलितानुड्डीनान् ॥ अभ्यासाच्चिरपरिशीलनसंस्कारात् ॥ अल्युड्डयनदर्शनसंस्कारोद्बोधितादित्याशयः ॥ ३१ ॥ पुन पूर्ववासनये त्यर्थः ॥ अबोधिन अज्ञस्य ॥ शेषेषष्ठीनतुकर्त्तरि नलोकेतिनिषेधात् ॥ ३२ ॥ सविस्त्यादर्शनेनतदुद्बोधितवासनयेतियावत् ॥ ३३ ॥ योनिष्वन्यासुसल्लुठन्नित्युक्त्या हस पद्मवनेभूत्वाविंध्यकच्छेचवारण· हरिणोदेहयत्रादावित्यादिवक्ष्यमाणदिशाअतरालेपचाशीतिजन्मानिजातानीतिगम्यते ॥ तथाचात्रोक्तहंसजन्मद्वयानतररुद्रतागतःससार शतपर्यंतेरुद्र·सोहंव्यवस्थितइतिवक्ष्यति ॥ सकदाचित्पुनर्हंसजन्मप्राप्तोऽन्यैर्हंसै सगतोविजहारेत्यर्थः ॥ ३४ ॥ तत्रहससंसदिब्रह्महसगुणाकारादिवर्णनश्रवणात्सशब्दातन्नाम सहितातदाकारार्थवतीचेतिद्वेधापिब्राह्महसात्मिकासवित्अहमपीदृशोब्राह्महस स्यामितिवासनातत्रतस्मिन्जन्मनितस्यहसभूतस्यास्यभिक्षुमनसःप्राग्वर्णिताडरसस्थबर्हिवत्

पश्यन्गजघटाकुंभस्थलाग्रोच्चलितानलीन्॥ गंडस्थभ्रमराभ्यासाद्गजोभूयोप्यभूदलिः ॥ ३१ ॥ सेवमानोवनलतांपुनरायात्सपद्मिनीम्॥ दुस्त्यजोहिदुरभ्यासोवासनानामबोधिनः॥३२॥ तत्रहस्तिखुराक्रांतःपुनःसंचूर्णतांययौ॥पार्श्वस्थहंससंवित्त्याबभूवकलहंसकः॥ ३३॥ कलहंसश्चिरतरंयोनिष्वन्यासुसंलुठन्॥ कदाचिद्बहुभिर्हंसैःसंगतोविजहारह॥ ३४॥ ब्राह्महंसात्मिकासंवित्सशब्दार्थवती मनाक्॥ तत्रपुष्टास्यतस्यांतःप्रागंडरसबर्हिवत्॥ ३५॥ सतच्चिंतांचरन्मृतोदृढंव्याधिघुणाहतः॥ तत्संवित्त्यनुसंधानाज्जातःपद्मजसारसः॥३६॥ तत्रातिसंततविवेकवतोविलासैःसंबोधितोविगतलौकिकवस्तुदृष्टिः॥ मुक्तःस्थितोननुयुगांतविधौविदेहमुक्तेनतेनकिमुभाविविभाव्यमेतत्॥ ३७॥ ॥इत्यार्षेवा०वा०दे०मोक्षोपायेषुनि०पू०जीवटोपाख्यानेस्वप्नशतरुद्रीयेभिक्षुसंसारोदाहरणंनामद्विषष्टितमःसर्गः॥६२॥ ॥७॥ ॥श्रीवसिष्ठउवाच॥ ॥सकदाचिद्ददर्शाथरुद्रंरुद्रपुरंखगः॥ वैरिंचनलिनीनाललीलालाभेनलीलया॥ १॥

पुष्टाघनीभूतेत्यर्थ· ॥ ३५ ॥ सताब्राह्महसचिंतामेवदृढचरन्नावर्तयन्व्याधिघुणाभिहतोमृत.पद्मजस्यसारसोलक्षणयाहसोवाहनमित्यर्थ· ॥ ३६ ॥ तत्रतस्मिन्जन्मनिब्रह्मलोकेचअतिशयेनसततैर्विवेकवतःप्रजापतेर्विवेकवैराग्यतत्त्वज्ञानाद्युपदेशविलासैःसम्यग्बोधितः अतएवविगतालौकिकवस्तुषुभोग्यवर्गेषुसारतादृष्टिर्यस्यतथाविधःसन्मुक्तोजीवन्मुक्तोभूत्वास्थितः ॥ एवजीवतैवनिरतिशयानदमोक्षसुखेलब्धेसति ब्रह्मणासहतेसर्वेसप्राप्तेप्रतिसचरे परस्यांतेकृतात्मानःप्रविशतिपरपदमितिश्रुतेर्युगातविधौद्विपरार्धावसानेब्रह्मणासहविदेहमुक्तेनतेनहसेनकिमधिकभाविसाध्य एततसुधीभिर्विभाव्यचिंत्यम ॥ उइतिवितर्के ॥ ज्ञानेनेहैवसमूलानर्थनिवृत्तेर्निरतिशयानदावाप्तेश्चसपादितत्वात्तदतिरिक्तपुरुषार्थाभावाच्चास्यकृतकृत्यत्वादित्यर्थः ॥ ३७ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्य०नि०पू०द्विषष्टितम सर्ग·॥ ६२ ॥ ॥७॥ ॥ रुद्रभूतेनतेनात्रपूर्वदेहप्रबोधनम ॥ तेषाचशतरुद्रत्वमैकात्म्यचेहवर्ण्यते ॥ १ ॥ सहमोलीलयाअनायासेनैववैरिंचासननलिनीनालेलीलाःक्रीडास्तल्लाभेनपद्मजसामीप्यमुक्तिपदप्राप्तिबलेनेतियावत ॥ कदाचित्पद्मजेनसहरुद्रपुरगतोरुद्रददर्श ॥ १ ॥

॥ ९ ॥ निर्याय्यन्यायापेतक्रमेणास्तिचेत् ॥ १० ॥ सकला आशास्यंतइत्याशाअभिलषितार्थाः ॥ किलेतिधर्मशास्त्रप्रसिद्धौ ॥ ११ ॥ अज्ञश्चेदपराधसहस्रमुलंघसुज्ञश्चे न्नापराध्यत्येव सचसत्यप्यपराधसहस्रेपालनीयइतिपरीक्षणायप्रश्नपरिपूरणमेवप्रार्थयते ॥ ममैतामिति॥ सभवार्थामबाधितार्थाम् ॥ अनेनासंभावितार्थप्रश्नच्छलेनपरवधप्र वृत्तिःस्वस्यनास्तीतिदर्शितम् ॥ १२ ॥ सर्वेषांप्रश्नानामापाततोर्थःस्पष्टः ॥ तात्पर्यतस्तूत्तरसर्गेस्फुटीकरिष्यते ॥ १३ ॥ उत्तरोत्तरस्वप्नेपूर्वपूर्वसत्यतांत्यजन्नपितत्प्रकाशक स्वच्छसत्यात्मस्वरूपंनत्यजति ॥ १४ ॥ यथारंभाया.कदल्याःस्तंभःअंतरतस्तथातदंतश्चपत्रमात्रवल्कलमात्रम् ॥ दृष्टांतेतत्सदृशवल्कलांतरदार्ष्टांतिकेसएवेतिविशेषइतिभा वः ॥ १५ ॥ भूतौघपदेनतदाधारभुवनानिलक्ष्यंते ॥ अतिमहत्वेनप्रसिद्धायेब्रह्मांडाकाशादयोपियस्याणोरपेक्षयापरमाअणवः अत्यंतक्षुद्राः ॥ १६ ॥ परमाणोःसूक्ष्मस्यैवस

वेतालउवाच॥ ॥राजन्लब्धोसिभीमेनवेतालेनमयाधुना॥क्वगच्छसिविनष्टोसिभवभोजनमद्यमे॥९॥ ॥राजोवाच॥ ॥हेरात्रिच रनिर्याय्यंमांचेदस्तिबलादिह॥ तत्तेसहस्रधामूर्धास्फुटिष्यतिनसंशयः॥१०॥ ॥वेतालउवाच॥ ॥नत्वामद्म्यहमन्याय्यन्यायोयंहि मयोच्यते॥राजासिसकलाशाश्चपूरणीयास्त्वयार्थिनाम्॥ ११ ॥ ममैतामर्थितांराजन्संभवार्थांप्रपूरय॥ प्रश्नानिमान्मयोक्तांस्त्वंस म्यगाख्यातुमर्हसि॥ १२ ॥ कस्यसूर्यस्यरश्मीनांब्रह्मांडान्यणवःकृशाः॥ कस्मिन्स्फुरंतिपवनेमहागगनरेणवः॥ १३ ॥ स्वप्नात्स्वप्नांतरं गच्छन्छतशोथसहस्रशः॥ त्यजन्नत्यजतिस्वच्छंकःस्वरूपंप्रभास्वरम्॥ १४ ॥ रंभास्तंभोयथापत्रमात्रमेवंपुनःपुनः॥ अंतरंतस्तथां तश्चतथाकोणुःसएवहि ॥ १५ ॥ ब्रह्मांडाकाशभूतौघसूर्यमंडलमेरवः॥ अपरित्यजतोणुत्वंकस्याणोःपरमाणवः॥ १६ ॥ कस्यानव यवस्यैवपरमाणुमहागिरेः॥ शिलांतर्निबिडैकांतरूपमज्जाजगत्त्रयी॥ १७॥ इतिकथयसिचेन्नमेदुरात्मंस्तदिहनिगीर्यभवंतमात्मघा तिन्॥ फलमिवतवमंडलंग्रसेहंप्रसभमुपेत्यजगद्यथाकृतांतः॥ १८ ॥ ॥इत्यार्षेवा०वा०दे० मोक्षोपायेषुनिर्वाणप्रकरणेपू० वेताल प्रश्नोनामसप्ततितमःसर्गः॥ ७०॥ ॥७१॥ ॥श्रीवसिष्ठउवाच॥ ॥इत्युक्तवतिवेतालेवक्तुंप्रश्नान्विहस्यसः॥ उवाचवचनंराजा दंतांशुधवलांबरः॥ १ ॥

तोमहतोगिरेः ॥ निबिडघनतरयत्सत्त्वैकांतरूपंतदेवमज्जासारोयस्याः ॥ १७ ॥ इतिषट्प्रश्नान्मेकथयसिचेद्दुष्टोदेहादिरेवआत्मायस्यतथाविध अतएवापरिच्छिन्नमात्मान परिच्छेदेनघातितवानसीत्यात्मघातिन् तत्तस्मादकथनापराधादेवभवतंफलमिवनिगीर्यप्रसभबलात्तवमंडलमंडलस्थजनान्ग्रसेयम् ॥ ग्रसेहमितिपाठेविकरणपदव्यत्ययश्छां दसः ॥१८॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०सप्ततितमःसर्गः ॥ ७० ॥ ॥ आद्यप्रश्नसमाधानविस्तरेणात्रवर्ण्यते ॥ अनंतकोटिब्रह्मांडफलवृक्षादिकल्पनैः ॥ १ ॥ प्रसिद्धब्रह्मांडानांत्रसरेणुत्वमित्यल्पदृष्ट्यात्वयोक्तंवक्ष्यमाणकल्पनयाकोटिकोटिगर्भब्रह्मांडानामपितत्त्रसरेणुत्वसंभवादित्याशयेनविहस्यदंतानामंशुभिःप्रभाभिर्ध वलान्यंबराणिवस्त्राण्याकाशंचयस्यतथाविधःसन् ॥ १ ॥

तमारीकस्यमूपरर्माभावब्रह्मांडप्रसरेणवदतिप्रथममभ्रस्योत्तरोत्तरक्रमभिन्नमत्ताभिमानवेतालस्यनिरस्कुर्वन्कश्चित्कल्पनाचमत्कारदशांआदर्शयति ॥ आस्तेइत्यादिना ॥ इद
त्यपामयाचाधितंब्रह्मांडमक्षरस्याअजरमुत्तरोत्तरदशगुणाभिभूतत्वग्भिभूजलाद्यावरणैःपरिवेष्टितम् ॥ २ ॥ इदब्रह्मांड १ ईदृशब्रह्मांडसहस्रगभाणिपक्षीकृतमहाभूतानि
२ तद्भामधतन्मात्रा ३ उत्तरोत्तरतद्गर्भांपिरसाहितन्मात्राणि ७ तद्गर्भोहिरण्यगर्भमन ८ अतीतानागतानंततद्भावभूतमायाराशय ९ तद्गर्भाकल्पकाला १० तद्गर्भांड
सगात्तरस्यदिनभूताब्रह्मविष्णुरुद्राणामायु कालास्तदात्मानस्तएष ११ अनन्तकोटीनतिपासत्तास्फूर्तिव्यवहारप्रवर्त्तकमायाशबलब्रह्म १२ इत्येताश्चतुर्दशपदार्थानिहक्रमा

राजोवाच॥ ॥आस्तेकदाचिचेदहिब्रह्मांडमजरफलम्॥उत्तरोत्तरदशगुणभूतत्वक्परिवेष्टितम्॥ २॥ तादृशानांसहस्राणिफलानिय
त्रसतिहि॥ अत्युच्चस्तादृशीशाखाविपुलाचलपल्लवा॥३॥ तादृशानांसहस्राणिशाखानांयत्रसत्यथ॥ तादृशोस्तिमहावृक्षोदुर्लंघ्योवि
पुलाकृति ॥४॥ तादृशानांसहस्राणियत्रसतिमहीरुहाम्॥ तादृशवनमत्युच्चैरनततरुगुल्मकम्॥५॥ तादृशानांसहस्राणिवनानांयत्र
संत्यथ॥ तादृगस्तिबृहच्छृगमत्युच्चैर्भरिताकृति॥६॥ तादृशानांसहस्राणिशृगाणांयत्रसत्यथ ॥ तादृशोस्त्यतिविस्तीर्णोदेशोविपुलको
टर ॥७॥ तादृशानांसहस्राणिदेशानांयत्रसत्यथ॥ तादृगस्तिबृहद्वीपंमहाह्रदनदीयुतम्॥८॥ तादृशानांसहस्राणिद्वीपानांयत्रसत्यथ॥
तादृगस्तिमहीपीठंविचित्ररचनान्वितम्॥ ९॥ तादृशानांसहस्राणिपृथ्वीनांयत्रसत्यथ॥ तादृगस्तिमहास्फारंमहाभुवनदंबरम्॥१०॥
तादृशानांसहस्राणिजगतांयत्रसत्यथ॥ तादृगस्तिमहाब्रह्मचर्मंबरपीठवत्॥११॥ तादृशानांसहस्राणियत्रांडानिकरंडका ॥तादृशो
स्तिगतस्पंदोविपुलाब्धिश्वसागर ॥१२॥ तादृक्सागरलक्षाणितरंगोयत्रपेलव ॥तादृश स्वविलासात्मानिमलोस्तिमहार्णव ॥१३॥
तादृगब्धिसहस्राणियस्योदरजलान्यथ॥ तादृशोस्तिपुमान्कश्चिदत्युच्चैर्भरिताकृति ॥१४॥तादृशानांनृणांलक्षैर्यस्यमालोरसिस्थिता॥
प्रधानसर्वसत्तानांतादृशोस्तिपरःपुमान्॥१५॥तादृशानांसहस्राणिपुरुषाणांमहात्मनाम्॥स्फुरतिमंडलेयस्यस्वतनूरुहजालवत्॥१६

फलशास्त्राविषगुरशकल्पनाभिर्निदर्शयति ॥ तादृशानामित्यादिना ॥ चलानिपल्लवानीवभुवनानियस्याम ॥ ३ ॥ ४ ॥ ५ ॥ शृगपदेनात्रतत्प्रधानोगिरिरेवोच्यते ॥ विपु
लतमत्वात्सघनभरिताकृति ॥ ६ ॥ ७ ॥ महाह्रदनदीवर्षाविभूतानाविर्भूतप्रबहणप्राणादिवायुचेष्टाभियुतम् ॥ विविधाभिर्नामादिरचनाभिरन्वितम् ॥ ९ ॥ १० ॥ ११ ॥
॥ १२ ॥ १३ ॥ पुमान्विष्णु ॥ १४ ॥ परःपुमान्रुद्र ॥ १५ ॥ तनूरुहाःकेशलोमानितज्जालवत् ॥ तथाश्रुति ॥ तथासत पुरुषात्केशलोमानितथाक्षरात्संभवतीह
विश्वमिति ॥ १६ ॥

प्रत्यग्दृष्टेरन्यासुपराग्दृष्टिषु याएतारुद्रादिब्रह्मांडांता.शतमसंख्या कलना.प्रतिभासास्ताएताःसर्वप्राणिप्रत्यक्षास्तस्यादित्यस्यदीप्तयोरश्मयः ॥ १७ ॥ मयाचिदात्माइतिएव प्रभाव सूर्यइतित्वत्प्रश्नोत्तरत्वेनोक्तएततूसर्वंजगदसौतपतिप्रकाशयति ॥ १८ ॥ भुवनाभोगाब्रह्मांडाः ॥ १९ ॥ भातिस्फूर्तिलभते ॥ भवतिसत्ताचलभते ॥ २० ॥ रेवेताल वर्णितशवलब्रह्मलक्षणस्यत्रैलोक्यमंडपमणे.सूर्यस्यपारमार्थिकतत्त्वभूतेमुख्याधिकारिषुविज्ञानशास्त्रजन्याखंडाकारसाक्षात्कारस्तन्मात्रेणकचितात्मनिस्वात्मतयाप्रथमाने अनधिकारिजंतुमात्रेतुअविकासभाजिअस्फुटेइहप्रत्यगात्मनिअग्निविस्फुलिंगवच्चिज्जन्मनोर्जीवजगतोर्भवनस्यपृथक्सत्तायाःकर्तृत्वभोक्तृत्वाद्यनंतसंभ्रमतानाचावलेखाः उल्लेखाःसति ॥ परमार्थदृशातुमनागपिनसति अतस्त्वशातप्रश्नाडंबरमास्त्वेत्यर्थः ॥२१॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०एकसप्ततितमःसर्गः ॥ ७१ ॥ ॥ ५ ॥ इहावसिष्टप्रश्नानापचानामुत्तरक्रमात् ॥ वेतालायाप्रमत्तायराज्ञागम्यगुदीर्यते ॥ १ ॥ एवंप्रथमप्रश्नसमाधायकस्मिन्स्फुरंतिपवनेमहागगनरेणवइतिद्वितीयप्रश्नंराजासमाध

तादृशोस्तिमहादित्यःशतमन्यासुदृष्टिषु ॥ याएताःकलनाःसर्वास्ताएतास्तस्यदीप्तयः ॥१७॥ अस्यादित्यस्यदीप्तीनांब्रह्मांडास्त्रसरेणवः ॥ मयाचित्सूर्यइत्युक्तःसर्वमेतत्तपत्यसौ ॥१८॥ विज्ञानात्मैवपरमोभास्करोभाविताशयः ॥ इमेयेभुवनाभोगास्तस्यैवत्रसरेणवः ॥१९॥ विज्ञानपरमार्कस्यभासाभांतिभवंतिच ॥ इमाजगदहर्लक्ष्म्यःक्वचिल्लक्ष्म्योरवेरिव ॥ २० ॥ विज्ञानमात्रकचितात्मनिजंतुजातेत्रैलोक्यमंडपमणेरविकासभाजि ॥ चिज्जन्मनोर्भवनसंभ्रमतावलेखाःसंतीहरेनहिमनागपिशांतमास्व ॥ २१ ॥ ॥इ०वा०वा०दे० मोक्षोपायेषुनिर्वाणप्रकरणेपू०वेतालप्रथमप्रश्नोत्तरवर्णनंनामैकसप्ततितमःसर्गः ॥ ७१ ॥ ॥ ५ ॥ ॥राजोवाच॥ ॥कालसत्तानभःसत्तास्पंदसत्ताचचिन्मयी ॥ शुद्धचेतनसत्ताचसर्वमित्यादिपावनम् ॥ १ ॥ परमात्ममहावायौरजःस्फुरतिचंचलम् ॥ कुसुमांगइवामोदस्तदतद्रूपकंस्वतः ॥ २ ॥

त्ते ॥ कालसत्तेत्यादिना ॥ तत्रगगनपदेनप्रसिद्धगगनस्यैवग्रहणविवक्षितमुतमहत्पदविशेषितत्वाद्द्रौण्यामहाकालरूपश्चित्संवलितमायाकाशउतस्पंदशक्तिप्रधानःसूत्रात्माकाशःउतततोनिष्कृष्ट.शुद्धचिदाभासलक्षणोजीवाकाश.अन्योवास्तुसर्वेष्वपिकल्पेषुतत्तत्सत्ताएवसूक्ष्मतमत्वात्तेपारेणवस्त्वयोक्ताइत्याह ॥ कालसत्तेति ॥ स्पंदःक्रियाशक्तिप्रधानःसूत्रात्मातत्सत्ता ॥ शुद्धचेतनस्ततोनिष्कृष्टश्चिदाभासस्तत्सत्ताचेत्यादिसर्वंसूक्ष्मत्वात्पावननिर्दोषरज.परमात्ममहावायौकल्पितानेकविकारचंचलस्फुरतीतिपरेणान्वय ॥ १ ॥ ननुपरमात्मनएवसर्वानुगतसत्तारूपत्वात्तत्रकालादिसत्तास्फुरतीत्याधाराधेयभावेनव्यपदेशःकथतत्राह ॥ कुसुमांगइति ॥ यथाकुसुममेवस्वांगेआमोदाख्यंभेदस्वतएवपरिकल्प्यकुसुमेआमोदरूपकमिवतदाधेयतयास्थिततद्वत्परमार्थसत्तैवकालादिसत्ताभेदात्मतांस्वात्मनिपरिकल्प्यस्थितेत्यर्थः ॥ २ ॥

१ कुसुमरूपकमिवेत्यपिपाठः

ममामन्नमातरमच्छन्नित्यादितृतीयप्रश्नस्योत्तरमाह ॥ जगदाख्येदृति ॥ शांतमशांतनत्तारस्वभवोपमसगज्योतीरूपम् ॥ अतएवतथाबोधमात्रात्ब्रह्मशांतत्वबृहणम् ॥ ३ ॥ र
भासभायथापममामित्रिचतुर्थप्रश्नसमाधत्ते ॥ रभास्तभइति ॥ अत अतःअस्मिविवर्तिविवर्त्तनशील अपिशब्दादवांतरकारणेषुपरिणामशीलच अत सोणुस्ततोप्यतर
म'त्यथ ॥ ४ ॥ विवर्त्तजगद्दृणादिनिमित्तोपत्तत्ब्रह्मात्मादिशब्दगोचरतानतुवस्तुन सर्वधर्मशून्यत्वादित्याह ॥ सद्वेति ॥ ५ ॥ अतएवपटसत्तानुसत्तायांपपवस्यतितनु
सत्ताकापासवत्तावासाचनरकसत्तायांसागुल्मसत्तायांसाबीजस्वजलादिसत्तायामित्यादिक्रमेणयायासत्ताविभाव्यतेसासातत्तदनुभवनिर्मितानाकारान्विहायरभास्तंभ
सदस्तत्तदनुभवरूपचिन्मात्रपयस्यतीत्यमलइदमलजगदाकारणततविस्तृतमित्यर्थ ॥ ६ ॥ तस्याणुपदस्रवर्त्तीनिमित्तमाह ॥ सूक्ष्मत्वादिति ॥ एवसौक्ष्म्यपिनपूर्णताहानि
रिनिप्रस्ताबादत्यापितदृस्याअनिपरिच्छिन्नत्वात्सरमाण्वमायादनिमसाबाकाराभूनीयत्यादिपचमप्रश्नापरिस्तोत्तर सदत्तइत्याशयेनाह ॥ अनंतत्वादिति ॥ मेवादिपदनप्रश्नो

जगदाख्यमहास्तंभस्वमात्स्वमातरब्रजत् ॥ रूपत्यजतिनोशांतंवपुःशांतत्वबृहणम् ॥ ३ ॥ रभास्तंभोयथापत्रमात्रमेवांतरांतरम् ॥ अ
तरंतस्तथदहिविन्चयस्रविवरयपि ॥ ४ ॥ सद्ब्रह्मात्मादिभि शब्दैर्यदतामिर्विगीयते ॥ शून्यमध्यपटशतनतर्किंचिच्चकिंचन ॥ ५ ॥ याया
विभाव्यतसत्तामासानुभवनिर्मितान् ॥ रभास्तभवदेतावच्चिन्मात्रममलततम् ॥ ६ ॥ सूक्ष्मत्वादप्यलभ्यत्वात्परमात्मापराणुक ॥
अनंतत्वादसावेवभासामवादिमूलताम् ॥ ७ ॥ अणोरप्यत्यनंतस्यपुंसोस्यजगदाद्यपि ॥ परमाणुवदाभातिप्रतीतत्वादरूपवत् ॥ ८ ॥
परोणुरपोऽलभ्यत्वात्पूरकत्वान्महागिरि ॥ सर्वावयवरूपोपिनिरस्तावयवःपुमान् ॥ ९ ॥ अस्यवैज्ञप्तिमात्रस्यमज्ञामात्रजगत्त्रयी ॥
विज्ञानमात्रमप्यद्दिमाधोविद्धिजगत्त्रयम् ॥ १० ॥ विज्ञानमात्रकलनाकलितजगतिशांतस्वभावसुकुमारमनंतरूपम् ॥ वेतालबाल
यपदतदलघनायमेवस्वयसमनुभावयशांतमास्व ॥ ११ ॥ ॥ इ० वा० वा० द० मोक्षोपायेपुनिर्वाणप्रकरणेपू० वेतालप्रश्नभेदोनाम
द्विसप्ततितम सर्ग ॥ ७२ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ५ ॥ ॥ ५ ॥

कादवताप्रपञ्चस्यक्रमपगस्तततपामूलतामाधारताम् ॥ ७ ॥ जगदादित्रलोकादिपचकमतीतत्वादणुनरतत्तत्राकारवत्तिपरिच्छिन्नचित्कणपरिच्छेदत्वादरूपवन्नि स्वरूप
स्यामप्रमाणाविवत् ॥ तदपिसूक्ष्मतमनार्थच्छिद्रपूर्भासमानपरमाणववेति ॥ ८ ॥ कस्यानवयवस्यैवपरमाणुमहागिरेरितिपञ्चप्रश्नसमाधत्ते ॥ परोणुरिति ॥ अलभ्यत्वाच्च
क्षुरादिकरणापासत्वात् ॥ एषपरोणुपूरकत्वात्ससमोप्यामहागिरि ॥ अध्यारोपदशासर्वमूर्त्तामूर्त्तअवयवरूपयस्यतथा ॥ नेतिनत्यपवादेननिरस्तावयव ॥ ९ ॥ सप्तशि
लांतर्निर्विदकानरूपमज्ञाजमवर्तास्यशपकटयति ॥ अस्येति ॥ हियस्माञ्जगत्त्रयपातापृथवीअतरेवसमादिमेदस्याविभूतिपुहादाकाशरूपविज्ञानमात्रस्यमध्यमांतरमज्ञाव
यसिद्धमितिभावईत्यथ ॥ १० ॥ सप्तप्रश्नानांनिरासेनभीष्मानेतालपरिभवन्निषोक्तार्थसंक्षेपेणोपसहरति ॥ विज्ञानेति ॥ हवेतालबालकजगतिविज्ञानमात्रस्यकलनाना
स्वकीशत्रानाचस्तिवपकटनतस्मात्मविज्ञानरूपभवादर्शवेतालबाटपटिरलघनीयमनास्कदनीयमेवअक्षोभदुत्यात्मेवस्वभावमात्मानमनुभावयस्वानुभवमारोहयशांतदर्पमा
स्त्यथ ॥ ११ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० पू० द्विसप्ततितम सर्ग ॥ ७२ ॥ ॥ ५ ॥ ॥ ५ ॥

उपदिश्यात्रवेतालप्रश्ननिर्णयमंस्थितिम् ॥ भगीरथस्यवृत्तांतस्तत्रान्योप्यत्रवर्ण्यते ॥ १ ॥ तत्रतस्मिन्राजनिविचारोचितयाधियाअनुमितयाभावितात्मतयातत्त्वज्ञतयानिमि त्तेन ॥ वेतालपक्षेवासर्वयोज्यम् ॥ १ ॥ अविचलध्यानीसमाधिस्थइतियावत् ॥ २ ॥ एवंक्रमेणराजवर्णितक्रमेण ॥ ३ ॥ बालभ्रांतिकल्पितवेतालकस्यकायइवविलीय ते ॥ ४ ॥ चित्तसर्वतउपसंहृत्यस्वोभावःपरमात्मातदापतिततत्प्रतिष्ठितकुर्वन् ॥ ५ ॥ हेमुनेमननशीलरामएकस्मिन्वस्तुनिशमःसर्ववृत्तिलयस्तेनशांतात्मोपरतचित्त'अतएव सर्वत्रसमंब्रह्मपश्यतीतिसमदर्शन. ॥ ६ ॥ असमूढातपूर्वान्वयि ॥ नन्वेवंस्थितस्यमेकथंदेहयात्रासिद्धिस्तत्राह ॥ यथेति ॥ दुःसाध्यमन्येषांकष्टसाध्यमपिकार्यंयस्यानायासे

श्रीवसिष्ठउवाच ॥ ॥इतिराजमुखाच्छ्रुत्वावेतालःशांतिमाययौ ॥ भावितात्मतयातत्रविचारोचितयाधिया ॥ १ ॥ उपशांतमनाभू त्वामत्वैकांतमनिंदितम् ॥ बभूवाविचलध्यानीविस्मृत्यविषमांक्षुधाम् ॥ २ ॥ एतद्राममयोक्तंतेवेतालप्रश्नजालकम् ॥ एवंक्रमेणचि दणौतेनेदंसंस्थितंजगत् ॥ ३ ॥ चिदणोःकोशगंविश्वंविचारेणविलीयते ॥ कायोवेतालकस्येवशिष्यतेयत्पदंतुतत् ॥ ४ ॥ संहृत्यसर्वत श्चित्तंस्तिमितेनांतरात्मना ॥ स्वभावापतितंकुर्वन्निरिच्छंतिष्ठशांतधीः ॥ ५ ॥ आकाशविशदंकृत्वामनसैवमनोमुने ॥ तिष्ठैकशमशां तात्मासर्वत्रसमदर्शनः ॥ ६ ॥ स्थिरबुद्धिरसंमूढोयथाप्राप्तानुवर्त्तिनः ॥ राज्ञोभगीरथस्येवदुःसाध्यमपिसिद्ध्यति ॥ ७ ॥ संपूर्णशांतम नसःपरिवृत्तवृत्तेर्नित्यंसमेसुखमयात्मनितिष्ठतोंतः ॥ सिद्ध्यंतिदुर्लभतराअपिवांछितार्थागंगावतारइवसागरखातवस्तु ॥ ८ ॥ ॥इ० वा०वा०दे०मो०नि०पू०वेतालाख्यानंनामत्रिसप्ततितमःसर्गः ॥ ७३ ॥ ॥ ७४ ॥ ॥श्रीरामउवाच ॥ ॥यथाचित्तचमत्कृ त्याराज्ञोगंगावतारणम् ॥ भगीरथस्यसंपन्नंतन्मेकथयभोप्रभो ॥ १ ॥ ॥श्रीवसिष्ठउवाच ॥ ॥ आसीद्भगीरथोनामराजापरमधार्मि कः ॥ भुवःसमुद्रयुक्तायामंडलीतिलकोपमः ॥ २ ॥ संकल्पानंतरंप्राप्तायथाभिमतमर्थिनः ॥ चंद्रप्रसन्नवदनादस्माच्चिंतामणेरिव ॥ ३ ॥

नैवसिध्यति ॥ ७ ॥ यथासगरांशुमद्दिलीपादिदुर्लभतरोपिसागराणांसगरपुत्राणांतत्खातसमुद्रस्यचवस्तुसंजीवनमणिप्रायोगंगावतारःशांतितृप्तिसमदर्शित्वादिगुणसंपन्नस्यभ गीरथस्यानायासेनसिद्धस्तद्वदित्यर्थः ॥ ८ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०त्रिसप्ततितमःसर्गः ॥ ७३ ॥ ॥ ७४ ॥ ॥ भगीरथस्यात्रगुणाश्रिताचाथविचा रजा ॥ त्रितलेनचसंवादोजिहासातोत्रवर्ण्यते ॥ १ ॥ चित्तस्यपूर्णतादिलक्षणयाचमत्कृत्या ॥ १ ॥ समुद्रयुक्तायाभुवोराजास्वीयकोसलमंडल्यास्तुतिलकोपमः ॥ २ ॥ तस्यदानशौंडतावर्णयति ॥ संकल्पानंतरमिति ॥ अर्थिनोयाचकाअस्माद्भगीरथाद्याञ्चासंकल्पानंतरमेवसमीपगमनवाक्प्रयोगादिश्रमविनैवयथाभिलषितमर्थंप्राप्ताःप्राप्तवं तः ॥ गत्यर्थाकर्मकेतिकर्त्तरिक्तः ॥ चंद्रप्रसन्नवदनादित्यनेनदानोत्साहान्मुखेप्रसादातिशयएवनत्वस्यधनव्ययदुःखान्म्लानिरितिद्योत्यते ॥ ३ ॥

अपायपुरानवारयन्ति ॥ साधूनामिति ॥ एवव्ययशीलस्यकथधनप्राप्तिस्तमाह ॥ तृणमात्रमिति ॥ कश्चित्आयस्थानेस्वधर्मत प्राप्तंतृणमात्रमप्युपादत्ते ॥ पौनरुक्त्याद्गुणो पारानाप्रसिद्धर्थं चिन्तामणिपदेनकामधनुर्लक्ष्यत ॥ ४ ॥ यथावज्रवेधनमणि अध.अधोभागेअयसायत्र्यतेवध्यतेइत्ययोयमवज्रसारदृढरथश्रांतरपरिभ्रमत्यास्वकांत्या उज्ज्वलतीप्रकाशमानायप्रचक्रनेमियस्मिन्कर्मणितथाभवतिथातिस्वास्वप्रोतगुणयोम्यकरोतितथायोप्रमीरथोवलयत्तरमपिसर्वंदुर्जनतचेष्टितचतदेशास्कदनेनस्वममता पनोज्ज्वलतिरथनेम्यग्निलानिषमहलानियस्मिन्कर्मणितथाभवतितथाराज्ञायपोर्तेनियसभ्रम.पादवेशोनिगडाययोभिधीयतेइत्ययोयभक्त्वाअभिनत्भित्वेषगुणपूर्णचक्का रेत्यर्थ ॥ वज्रमारमपीतिपाठेपिरूपकेप्यायमेवतात्पर्याय ॥ ५ ॥ दिवानिशप्रजापालनायसर्वत.परिभ्रमणात्स्वयध्यांतोपिनृणामधर्ममवृत्तिहेतुतमोगेहांधकारदैन्यदारिद्र्यम

साधूनांयोव्ययस्यार्थंधनान्यविरतंददौ ॥ तृणमात्रमुपादत्तेकश्चिन्तामणिर्यथा ॥ ४ ॥ वज्रसारमिवप्रोतमुज्ज्वलन्नेमियोभिनत् ॥ अधोमणिरयोयःसर्वंदुर्जनचेष्टितम् ॥ ५ ॥ अधूमवह्निदहश्री भ्रांतोपिदैन्यमप्यलम् ॥ तमोहरच्चणांनैशद्युमणिर्वेश्मनामिव ॥ ६ ॥ किरन्नग्निकणासारमक्षित स्वप्रतापजम् ॥ मध्याह्नसूर्यकांताग्निरिवज्वलतियोरिपु ॥ ७ ॥ मृदुशीतलसस्पर्शोयस्समाह्लादयन्मन ॥ सुज्ञानांद्रवतिस्निग्धस्येंदोरिंदुमणिर्यथा ॥ ८ ॥ जगद्यज्ञोपवीतस्यस्वर्गपातालवाहिन ॥ गंगावाहस्ययेनास्यांतृतीय पूरितोगुण ॥ ९ ॥ अगस्त्यशोपितोंभोधिर्गंगापूरेणपूरित ॥ येनदुष्पूरभृतोपिमहासार्थोर्थिनामिव ॥ १० ॥ गंगासोपानपङ्क्त्यायेनपातालवासि न ॥ योजिताब्रह्मणोलोकेयांधवालोकयधुना ॥ ११ ॥ ब्रह्माणशंकरजह्नुतपमाराधयश्चय ॥ भूयोभूयोययौखेदमशून्याध्यवसायि न ॥ १२ ॥ यौवनेवर्तमानस्यतस्यभूमिपतेरपि ॥ प्रविचारयतोलोकयात्रांपयाकुलामिमाम् ॥ १३ ॥ सुविरागचमत्कारविचारकणि कादभूत् ॥ वयस्यपिचतारुण्येदैवाद्वृद्धीमराविव ॥ १४ ॥

प्यहरत ॥ यथाद्युमणिर्वेश्मननिशातमोम्धकारादैन्यंचहरतितद्वत् ॥ विशेषणेउभययोर्य्ये ॥ ६ ॥ स्वस्यप्रताप पराक्रम अतिप्रताप तस्माज्जातमग्निकणानामासारधा राकिरन्सन्योऽरिपुमध्याह्नकालेजन्न सूर्यकांतशिलाग्निरिवज्वलति ॥ अग्निपक्षेभरा.अपाण्यपांसतीतिअरिणस्तणादयस्तेषु ॥ ७ ॥ सुज्ञाप्रसन्नचन्द्रविद्वस्तेषांसन्निधौ ॥ इदुमणिश्चन्द्रकांत ॥ ८ ॥ येनगंगावाहस्यगंगाप्रवाहलक्षणस्यजगद्यज्ञोपवीतस्यतृतीयोगुणस्तनु.अस्यांपृथिव्यांगंगावतारणेनपूरित ॥ ९ ॥ सर्वविभवतर्पितनामर्थिनांमहाम् सार्थ.सघोधनेनेव ॥ १० ॥ भूतप्रोहित्यादुप्रसवनिर्दग्धत्वात्पातालवासिन अधोगतिप्राप्ताबांधवा.सगरपुत्रायेनगंगालक्षणयासोपानपङ्क्त्याब्रह्मणोलोकेयोजिताआरोपि ता ॥ ११ ॥ अशून्याध्यवसायिन अविच्छिन्नदृढनिश्चयात्स्वमनसःसकाशात् ॥ १२ ॥ अपिशब्दात्तपेवेतियम्यते ॥ १३ ॥ यौवनेविचारवैराग्योदयोऽतिदुर्लभइतिद्योत नायमराविवेति ॥ १४ ॥

इतिवक्ष्यमाणप्रकारेणइमांजगद्यात्रांचिंतयामास ॥ चिंताप्रकारमेवाह ॥ नित्यमित्यादिना ॥ १५ ॥ श्यामारात्रिः ॥ बहुशोभुक्तंविरसंचफलंयस्यतत्तथाविधमेवसर्वेषां कुर्वताकर्मलक्ष्यतेनत्वपूर्वंपरमपुरुषार्थफलंचेत्यर्थः ॥ १६ ॥ तत्तत्कामिसाधनकृत्स्नकर्मविपूचिकेवाशुद्धिदुःखफलमेवेत्यर्थः ॥ १७ ॥ १८ ॥ अथउक्तचिंतानंतरंससतेःसत्का शादेकांतमत्यंतभीतः सन् ॥ १९ ॥ भ्रमतांजीवानांरागद्वेषादिससारवृत्तिपुनःफलभूतास्वेनामुस्वर्गनरकमानुष्यायरण्यानीषुच ॥ २० ॥ २१ ॥ साधनचतुष्टयश्रवणमन नाद्युपायैश्चिराभ्यस्तंयत्साम्यंविक्षेपवैषम्यशून्यं समाधिस्तदात्मनाअनादिसिद्धब्रह्माकारेणचउत्थेनाविभागेननत्तयस्यप्रत्यक्तत्त्वस्याववोधेनसर्वदुःखानिक्षीयंतेइतिपरेणान्वय ॥ २२ ॥ २३ ॥ उदयचनेति ॥ २४ ॥ एवमुपदिष्टोभगीरथोविवेकेनस्वयमेवात्मतत्त्वमतःपर्यालोच्यापाततानिश्चित्यतत्रविक्षेपवाहुल्याच्चित्तस्यप्रतिष्ठामलभमानःस्वावगता

एकांतंचिंतयामासमहीपतिरसाविति ॥ जगद्यात्रामिमांनित्यमसमंजसमाकुलम् ॥ १५ ॥ पुनर्दिनंपुनःश्यामादानादानशतंपुनः ॥ तदेवभुक्तंविरसंलक्ष्यतेकर्मकुर्वताम् ॥ १६ ॥ येनप्राप्तेनलोकेस्मिन्नप्राप्यमवशिष्यते ॥ तत्कृतंसुकृतमन्यच्छेषंकर्मविपूचिका ॥ १७ ॥ पुनःपुनःपर्युषितंकर्म्मकुर्वन्नलज्जते ॥ मूढबुद्धिरबुद्धिस्तुकःकुर्यात्किलबालवत् ॥ १८ ॥ अथैकदोद्विग्नमनाःकदाचित्त्रितलंगुरुम् ॥ एकांतंसंस्तुतेर्भीतःसमपृच्छद्भगीरथः ॥ १९ ॥ ॥ भगीरथउवाच ॥ ॥ अंतःशून्यास्वनुचिरंभ्रमत्संसारवृत्तिषु ॥ अरण्यानीषुचैतासुभृशं खिन्नावयंविभो ॥ २० ॥ जरामरणमोहादिरूपाणांभवकारिणाम् ॥ भगवन्सर्वदुःखानांकथमंतःप्रजायते ॥ २१ ॥ ॥ त्रितलउवाच ॥ चिरसाम्यात्मनोत्थेननिर्विभागविलासिना ॥ राजन्ज्ञेयावबोधेनपूर्णेनभरितात्मना ॥ २२ ॥ क्षीयंतेसर्वदुःखानित्रुट्यतिग्रंथयोभि तः ॥ संशयाःसमतांयांतिसर्वकर्माणिचानघ ॥ २३ ॥ ज्ञेयंविदुरथात्मानंसंशुद्धंज्ञप्तिरूपिणम् ॥ सचसर्वगतोनित्यंनास्तमेतिनचोद यम् ॥ २४ ॥ ॥ भगीरथउवाच ॥ ॥ चिन्मात्रंनिर्गुणंशांतमस्तिनिर्मलमच्युतम् ॥ देहादिनतरांकिंचिदितिवेद्मिमुनीश्वर ॥ २५ ॥ किं तत्रप्रतिपत्तिर्मेस्फुटतामेतिनेतरा ॥ एतावन्मात्रसंवित्तिःस्यामहंभगवन्कथम् ॥ २६ ॥ ॥ त्रितलउवाच ॥ ॥ ज्ञानेनज्ञेयनिष्ठत्वमेति चेतोत्वदंबरे ॥ ततःसर्ववपुर्भूत्वाभूयोजीवोनजायते ॥ २७ ॥

शगुरवेनिवेदयंस्तत्स्फुटीभावेविक्षेपोपशमेचोपायंपृच्छति ॥ चिन्मात्रमिति ॥ अस्तीत्यनेनअसत्त्वापादकोऽज्ञानांशोमेनष्टइतिसूचितम् ॥ देहेंद्रियप्राणमनोबुद्ध्यादिव्यतिरिक्तमत रत्किंचिदात्मानित्यमित्वद्वचनविश्वासात्स्वोपपत्त्याचवेद्मि ॥ २५ ॥ तत्राभानापादकोऽज्ञानांशइतरावभासहेतुर्विक्षेपांशश्चस्वस्यननष्टइतिदर्शयति ॥ किमिति ॥ अत्रअनयोः सदसद्विवेकबोधयोर्मध्येइतराआयासदात्मबोधरूपाप्रतिपत्तिः स्फुटताकरतलामलकवत्स्पष्टतांनैतितत्रकिंकारणम् ॥ अहंसर्वविक्षेपशांत्याएतावन्मात्रसंवित्तिश्चकथंकेनोपा येनस्यामित्यर्थः ॥ २६ ॥ तत्रभगीरथस्यराज्याद्यभिमानादेवतत्तद्विषयेषुचित्तधावनाद्विक्षेपस्तत्प्राबल्यादेवनस्फुटात्मप्रतिपत्तिरितिनिश्चित्यत्रितलस्तत्परित्याजनायप्रथ मगीतोक्तामानित्वादिसाधनान्युपदिशति ॥ ज्ञानेनेति ॥ ज्ञायतेअनेनेतिज्ञानममानित्वादितेनज्ञेयंयत्तत्प्रवक्ष्यामीत्यादिभगवद्दर्शितेज्ञेयेनिष्ठत्वस्थैर्यम् ॥ सर्ववपुःपूर्णस्वभावः ॥ नजायतेपूर्णस्वभावान्नप्रच्यवतइत्यर्थः ॥ २७ ॥

अमानित्वादिपुकानिचिरवपुस्यानुवाख्याख्याभ्यांमपपयति ॥ असक्तिरित्यादिना ॥ २८ ॥ मयिचानन्ययोगेनभक्तिरव्यभिचारिणीत्यस्यतात्पर्यार्थंदर्शयति ॥ आत्मन्द
ति ॥ निष्कृटार्थर्याचतनमवाप्नभगवद्भक्तिनगुणचरितश्रवणकीर्त्तनादिर्भगवदभिप्रेतस्यर्थ ॥ २९ ॥ ३० ॥ अध्यात्मज्ञाननित्यत्वंश्रवणमननिदिध्यासनाभ्यास तत्त्वज्ञाने
नाथस्यपरमात्मनस्वस्वरूपस्फुटाभिव्यक्तिपात्वयापृष्टासासर्वसाधनफलीभूता सर्वेषामेवसाधनानामनहंकारलक्षणसाधनमूलं अहंकारेसतिअमानित्वादेर्दु संपादत्वादि
त्याशयेनाह ॥ अहंभावेति ॥ ३१ ॥ तर्हितत्परित्यागोपायममवदेतिपृच्छति ॥ शरीरइति ॥ ३२ ॥ विकसितामकामोपहतत्वेनस्फुटीभूतांसत्ताशुद्धात्माकारतांगत्वास्थि
तस्येतिशेष ॥ ३३ ॥ त्यक्तराज्यंभोजनानवदुमन्यते शमदमोपहसिष्यंति सर्वाभिलषितपूरणसमर्थोहंकथंभिक्षामटिष्यामि कथंकदन्नपानादिनाजीविष्यामीत्यादिविध

असक्तिरनभिष्वंग पुत्रदारगृहादिषु ॥ नित्यंचसमचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ २८ ॥ आत्मनोनन्ययोगेनतद्भावनमनारतम् ॥ विवि
क्तदेशसेवित्वमरतिजनसंसदि ॥ २९ ॥ अध्यात्मज्ञाननित्यत्वतत्त्वज्ञानार्थदर्शनम् ॥ एतज्ज्ञानमितिप्रोक्तमज्ञानतदतोन्यथा ॥ ३० ॥
रागद्वेषक्षयाकारसमारव्याधिभेषजम् ॥ अहंभावोपशांतौतुराजन्ज्ञानमवाप्यते ॥ ३१ ॥ ॥ भगीरथउवाच ॥ ॥ शरीरेस्मिन्श्चिरा
रूढोगिरौतरुरिवस्वके ॥ अहंभावोमहाभागवदमेत्यज्यतेकथम् ॥ ३२ ॥ ॥ त्रितलउवाच ॥ ॥ पौरुषेणप्रयत्नेनत्यक्त्वाभोगौघभाव
नाम् ॥ गत्वाविकसितांसत्तामहंकारोविलीयते ॥ ३३ ॥ यत्रणापंजरंयावद्भ्रमलज्जादिनाखिलम् ॥ अकिंचनत्वशेषेणस्फुटातावदहंकृ
ति ॥ ३४ ॥ सर्वमेतद्द्वियात्यक्त्वायदितिष्ठसिनिश्चल ॥ तदहंकारविलयेत्वमेवपरमपदम् ॥ ३५ ॥ शांताशेषविशेषणोविगतभी सत्य
क्तसर्वैषणोगत्वानूनमकिंचनत्वमरिपुत्यक्त्वासमग्रांश्रियम् ॥ शांताहंकृतिरस्तदेहकलनस्त्वंवभिक्षामटन्मामप्युज्झितवानलयदि
भवस्युच्चैस्त्वमुच्चैरसि ॥ ३६ ॥ ॥ इ० वा० वा० दे० मोक्षोपायेपुनिर्वाणप्रकरणेपू० भगीरथोपदेशोनामचतु सप्ततितम सर्ग ॥ ७४ ॥
॥ श्रीवसिष्ठउवाच ॥ ॥ अथतस्यगुरोर्वक्त्रादित्याकर्ण्यभगीरथ ॥ मनस्याहितकर्तव्य न्त्वव्यापारपरोभवत् ॥ १ ॥

तामपुत्रकलत्राभिमानादिनाकृतमहेपूचवदेवनियमणालक्षणपंजरयावदकिंचनत्वशेषेणसर्वत्यागेननभमतावदहंकृति स्फुटाअस्यमविकसितासत्यनीत्यर्थ ॥ ३४ ॥ नत्वर्हि
॥ ३५ ॥ सर्वत्यागमेवाचरयकत्तस्पनयापपचयति ॥ शांतेति ॥ शांतान्यनतानिच्छमचामरादीनिराजविशेषणानियस्यतथाविध.सन्नूनमस्यतमकिंचन समृद्धमपांश्रियमरिपु
स्यक्त्वाअस्तदेहाभिमानस्तेष्वरिष्वेवभिक्षामटन्सन्मांगुरुमपिअलपूर्ण समृद्धपरिव्यार्थपरिशेषाभावादुज्झितवान्सगुरुभूषणेन यावद्राजुच्चपोचपावेदांतोगुरुरीश्वरइत्याविशा
साभावाण्यत्रउगारीरत्यलक्षणसपच्चोपरिभवसितर्हिसर्वमुमुक्षुमुणीरूपीभूतस्त्वमुच्चै सर्वोत्कृष्टमसीषासिनतेससारसभावनापीत्यर्थ ॥ ३६ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्य
प्रकाशेनि० पू० चतु सप्ततितम सर्ग ॥ ७४ ॥ ॥ १ ॥ ॥ मनसभ्यासेनसर्वस्वत्यागोराज्ञोभवण्यते ॥ भैक्षचर्याकथिच्छीलेभितलेनसमस्थिति ॥ १ ॥ मनसिआ
हितनिश्चितवक्ष्यमाणकर्मभ्ययेमतथाविध.सन् ॥ १ ॥

अग्निष्टोमग्रहणविश्वजित्सर्वैतानांसोमसंस्थानामुपलक्षणम् ॥ २ ॥ अगुणिश्रुताध्ययनादिविकलमपिअविचारयन् तद्विचारेविलंबापत्तेः ॥ ३ ॥ असवःप्राणास्तन्मात्रावशे षः ॥४ ॥ सीमातिनेसीमातेसन्निहिताय ॥ ५ ॥ अधोवासःकौपीनाच्छादनतदवशेषः ॥ ६ ॥ यत्रस्वयदृष्टोपिजनैर्भगीरथनाम्नानज्ञायते यत्रचजनमुखात्स्वनामापिनज्ञायते नश्रूयतेतत्रतादृशेषु ॥ ७ ॥ ॥ इतिअनयारीत्यावर्त्तमानः ॥ ८ ॥ द्वीपानिनवांतरितानिमंडलानि ॥ अवशःसन्दर्शनाधीनचित्तः ॥ ९ ॥ प्रवाहपतितान्क्रमप्राप्तान्नानागारा न् ॥ छादसपुस्त्वम् ॥ प्राप्येतिशेषः ॥१०॥ विविदु परिचिक्युः ॥११॥ अनादृतमशेषराज्ययेन ॥१२॥ शोचितःशोकविषयीकृतः ॥१३॥ १४ ॥ स्वमेवगुरुमितिपूर्वान्वयि ॥

ततःकतिपयेष्वेववासरेषुगतेषुसः॥ अग्निष्टोममखंचक्रेसर्वत्यागैकसिद्धये॥ २॥ गोभूम्यश्वहिरण्यादिददौधनमशेषतः॥ द्विजेभ्योनिजबंधुभ्योगुण्यगुण्यविचारयन्॥ ३॥ दिवसत्रयमात्रेणसर्वमेवपरित्यजन्॥ असुमात्रावशेषोसावासीद्राजाभगीरथः॥ ४॥ अथ सर्वार्थरिक्तंतत्खिन्नप्रकृतिपौरकम्॥ सीमांतिनेतृणमिवराज्यंस्वमरयेददौ॥५॥ आक्रांतेद्विषताराज्येमुनिःसद्मनिमंडले॥अधोवासो वशेषोसौनिर्जगामस्वमंडलात्॥ ६॥ यत्रनज्ञायतेनाम्नायत्रनज्ञायतेमुखात्॥ तत्रग्रामेष्वरण्येषुदूरेषूवासधैर्यवान्॥७॥ इत्यल्पेनैव कालेनप्रशांतसकलैषणः॥ परमेणशमेनासावापविश्रांतिमात्मनि ॥ ८॥ भ्रमन्द्वीपानिभूपीठेकदाचित्कालयोगतः ॥ अवशःशत्रु णाक्रांतंस्वमेवप्रापतत्पुरम्॥ ९॥ नानागारांश्चतत्रासौप्रवाहपतितांश्चतान्॥ पौरांश्चमंत्रिणश्चैवशमीभिक्षामयाचत॥ १०॥ विवि दुस्तेनृपंपौरामंत्रिणश्चभगीरथम्॥ पूजयामासुरथतंसविपादाःसपर्यया॥ ११॥ प्रभोराज्यंगृहाणेतिप्रार्थितोप्यरिणामुनिः॥ नादत्ते नादृताशेषस्तृणमप्यशनादृते॥ १२॥ कतिचिद्दिवसांस्तत्रनीत्वान्यत्रजगामसः॥ भगीरथोयंहाकष्टमितिलोकेनशोचितः॥ १३॥ अ थान्यत्रोपशांतात्मापरिविश्रांतधीःसुखी॥ आत्मारामंकदाचित्तुसप्रापत्रितलंगुरुम्॥ १४॥स्वमेवस्वागतंकृत्वातेनसार्धंभगीरथः॥कं चित्कालमुवासाद्रौवनेग्रामेपुरेजने॥१५॥समतामुपयातौतौगुरुशिष्यौसमौस्थितौ॥कलयामासतुःस्वस्थौविनोदंदेहधारणम्॥१६ किमयंधार्यतेदेहःकिंवानेनोज्झितेननः॥यथाक्रमंयथाचारंतिष्ठत्वेषयथास्थितम्॥१७॥इतिनिश्चित्यतिष्ठंतौतौवनाद्वनगामिनौ॥ अ नानंदंपरानंदंनासुखंनचमध्यमम्॥ १८॥ धनानिवाजिविभवाद्यैश्वर्यंचाष्टधोदितम्॥ सिद्धैरप्यर्पितंतुष्टैर्मेनातेजर्जरंतृणम् ॥१९॥

स्वागतग्रहणवंदनाद्युपलक्षणम् ॥१५॥ विनोदकुतूहलभूतदेहधारणम् ॥१६॥ यथाक्रमयथाशास्त्रोक्तक्रमम् यथाचारंवृद्धाचारमनुसृत्यचतिष्ठतु ॥ १७ ॥ नविद्यतेविषयानं दायत्रतथाविधपरानंदप्रापतुरितिशेषः ॥ तदेवविशिनष्टि ॥ नासुखमिति ॥ असुखदुःखतद्रहितम् मध्यमंसुखदुःखोभयशून्यांतरालावस्थातद्भिन्नम् ॥ १८ ॥ तयोर्मानुषभोगे ष्विवदिव्यभोगेष्वपिवैराग्यदार्ढ्यंदर्शयति॥ धनानीति ॥ तच्चरितसंतुष्टैःसिद्धैर्ब्रह्मादिभिरर्पितदत्तमणिमादिभेदेनाष्टधाउदितप्रसिद्धमैश्वर्यंचजर्जरजीर्णतमतृणमिवमेनाते॥१९

स्यारभस्यथारभ्यकमणवयावत्तत्वयावदायधारणीयइतिनिश्चित्यतस्थन ॥ २० ॥ मौनीमुनीनिजेनपूर्वसमाचरणक्रमेणजातसुखमसौख्यंदुःखमपिअभिननंदतु ॥ यतस्तौस
मभ्यापिसमव्रतणिअनिसमौएष्वरसौभूतौसर्वांस्वतस्तत्स्वभावादेवशमिनौपरमशांतिमतौ ॥ २१ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० पू० पंचसप्ततितम सर्ग ॥ ७५ ॥
पुनर्भगीरथस्यराज्यप्राप्तिदर्शयते॥आराध्यब्रह्मरुद्रादीन्गंगायाअवतारणम ॥ १ ॥ कोसलमंडलाद्भगीरथास्यक्षमंडलाख्यमंडलांतरे ॥ अह्महृतवान् ॥ आमिषमुद्रमत्स्या
दि ॥ १ ॥ नष्टाःशास्त्रक्रमःपालनमर्यादायपोतथाविधा सत्पालनसमर्थयागुणलक्ष्म्यासयुक्तनृपमन्विष्यतिस्म ॥ २ ॥ सर्वगुणलक्ष्मीसमन्वितोयमितिपरिज्ञायमत्यभिक्षा
यनमागतसैन्यभिषिच्यमहीपतिचक्रुः ॥ ३ ॥ स्वर्णेनिगजआशिश्रियआरुरोह ॥ ४ ॥ नीरध्रतांपूर्णताम ॥ ५ ॥ तस्मिन्नेवकालेदैवात्कोसलराज्यहारिणोपिमरणादयोध्या

स्वकर्मणेवदेहोययावत्तत्वमनिच्छया ॥ धारणीयइतिस्वेनकर्मणैवाथतस्थतु ॥ २० ॥ अभिननंदतुरागतमुत्तमौनिजसमाचरणक्रम
जमुनी ॥ सुखमसौख्यमर्थाप्सितवर्जितौसमसमेतिसमौशमिनौस्वत ॥ २१ ॥ ॥ इ० वा० वा० दे० मो० निर्वाणप्र० पू० भगीरथनि
र्वाणनामपंचसप्ततितम सर्ग ॥ ७५ ॥ ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ अथैकदापुरेश्रेष्ठेएकस्मिंश्चिन्मंडलांतरे ॥ अनपत्यनृप
मृत्युरहन्मत्स्यइवामिषम् ॥ १ ॥ तत्रप्रकृतय खिन्नानष्टशास्त्रक्रमानृपम् ॥ अन्विष्यंतिस्मसयुक्तंगुणलक्ष्म्याविशालया ॥ २ ॥ तंभगीर
थमासाद्यस्थिरभिक्षाचरमुनिम् ॥ परिज्ञायसमानीयसैन्येषचक्रुर्महीपतिम् ॥ ३ ॥ भगीरथःक्षणेनैवप्राव्टपीवाम्बुनासर ॥ वलित सेन
यागुर्व्याङ्गइत्याशिश्रियेगजम् ॥ ४ ॥ भगीरथोजगन्नाथोजयतीतिजनारवै ॥ नीरध्रतामुपाजग्मुर्गिरींद्राणांमहागुहा ॥ ५ ॥ तत्रत
पालयतद्राज्यराजानमाहृता ॥ आजग्मु प्राक्प्रकृतय प्राहुरित्यनृपाधिपम् ॥ ६ ॥ ॥ प्रकृतयऊचु ॥ ॥ राजन्नस्माकमधिपोय
स्त्वयामपुरस्कृत ॥ मृत्युनाविनिगीर्णोसौमत्स्येनवामिषमृदु ॥ ७ ॥ तत्तत्पालयितुंराज्यप्रसादकर्तुमर्हसि ॥ अप्रार्थितोपयातानात्या
गोथानांचनोचित ॥ ८ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इतिसंप्रार्थितोराजातदंगीकृत्यतद्वच ॥ सप्तसागरचिह्नाया सप्तभूवभुव पति ॥ ९ ॥
सम शांतमनामौनीवीतरागोविमत्सर ॥ प्राप्तकार्यैककरण सतिरोहितविस्मय ॥ १० ॥ पातालतलनष्टानांसागराकारकारिणाम् ॥
पितामहानांगंगांबुश्रुश्रुवेतारणक्षमम् ॥ ११ ॥ तदाकिलस्वर्गनदीवहतिस्मनभूतले ॥ पितृणांभूतविस्यभूत्तेनगंगाजलांजलि ॥ १२ ॥

स्याअपिवरकृतयाभगीरथमागत्यप्रार्थयामासुरित्याह ॥ तथेति ॥ भगीरथस्यैवप्राक्तनामधिपुरोहितादिप्रकृतय ॥ ६ ॥ राज्यत्यजतात्वयाय सीमांतवासीअरि राज्यदानेन
पुरस्कृत आसी ॥ ७ ॥ तत्तस्माद्धतात्तत्प्राक्तनराज्यम ॥ ८ ॥ ९ ॥ मौनीमितहितसत्यवाक् ॥ तिरोहितस्तत्त्वज्ञाननवाधितोविस्मयोमहत्यपिकौतुकेआश्चर्यतावुद्धिर्यस्य ॥ १० ॥
अभ्यासप्रप्तायभूम खननात्सागराकारगर्तकर्तृशीलप्रयाम ॥ कपिलक्रोधाग्निनापातालतलेनष्टानांभस्मीभूतानांस्वपितामहानांगंगांबुप्लावनेनजलांजलिदानेनचतारणक्ष
मनत्रार्ण्यतजलमितिताश्रुत्वंषघनजनपरंपरयातनशुश्रुवेइत्यथ ॥ ११ ॥ तदानींभूतलेगंगास्थितंगतंषजलांजलि कृतोनदत्तइत्याशंक्याह ॥ तदेति ॥ तेनभगीरथेनैवाम्येषा
मपिपितॄणांयमाजलांजलिभूताइजातविस्मयास्यानिपस्पनयाविधोभूदित्यर्थ ॥ १२ ॥

ततस्तच्छ्रवणदिनात्प्रभृति ॥ १३ ॥ गंगावतरणकार्यार्थं यत्तपआदिकार्यं तदर्थाईहाचेष्टायस्य ॥ १४ ॥ अयोजयत्अवतार्यसंयोजितवान् ॥ १५ ॥ जगत्पते शशिविभृतः शिवस्यागसंगिनी शिरसिसंगता सापेक्षत्वादसमर्थत्वेपिसमासश्छांदसः ॥ जगत्पतेर्ब्रह्मणोवानियोगादितिशेषः ॥ नभस्तलाद्वाभूमिनिपतति ॥ महात्मनांस्वर्गिणावद्धीपुण्यसंततिरिवेत्युत्प्रेक्षा ॥ १६ ॥ भगीरथेमहीपतौसजातस्यशाश्वतस्ययशसआसमुद्रप्रचारार्थंवीथिकाइतिरूपकोत्प्रेक्षा ॥ १७ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० पू० षट्सप्ततितमः सर्गः ॥ ७६ ॥ ॥ ७ ॥ ॥ चूडालाख्यानमुक्तार्थद्रढिम्ने त्रावतार्यते ॥ शिखिध्वजस्यमाहात्म्यविवाहक्रीडनक्रमाः ॥ १ ॥ भगीरथेनपश्चाद्राज्यकालेधि

भगीरथेनचमहीमवतारयितुंदिवः॥गंगांगृहीतोनियमस्ततःप्रभृतिभूभृता॥१३॥ ततोराज्यंपरित्यज्यमंत्रिणांभूपतिःशमी॥ तपसेकार्यकार्येहोजगामविजनंवनम्॥१४॥ तत्रवर्षसहस्रैश्चसमाराध्यपुनःपुनः॥ ब्रह्माणंशंकरंजह्नुंभुविगंगामयोजयत्॥१५॥ ततःप्रभृत्यमलतरंगभंगिनीजगत्पतेःशशिविभृदंगसंगिनी॥ नभस्तलान्निपततिगांत्रिमार्गगामहात्मनामिवबद्धपुण्यसंततिः॥ १६ ॥ स्फुरत्तरंगभंगिनीस्वफेनपुंजहासिनीप्रसन्नपुण्यमंजरीयुतेवधर्मसंततिः॥ भगीरथेमहीपतौयशःप्रचारवीथिकातदाहिसात्रिमार्गगामहीतलेबभूव॥१७॥ ॥इ० वा० वा० दे० मो० निर्वाणप्रकरणेपू० गंगावतरणंनामषट्सप्ततितमःसर्गः॥ ७६ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच॥ ॥एतामवष्टभ्यदृशंभगीरथधियाधृताम्॥ समःस्वस्थोयथाप्राप्तंकार्यमाहरशांतधीः॥ १ ॥ इदंपूर्वंपरित्यज्यक्रोडीकृत्यमनःखगम्॥ शांतमात्मनितिष्ठत्वंशिखिध्वजइवाचलः॥ २ ॥ ॥श्रीरामउवाच॥ ॥कोसौशिखिध्वजोनामकथंवालब्धवान्पदम्॥ एतन्मेकथयब्रह्मन्भूयोबोधविवृद्धये॥३॥ ॥श्रीवसिष्ठउवाच॥ ॥द्वापरेभवतांपूर्वमिदानींचभविष्यतः॥ तेनैवसन्निवेशेनदंपतीस्निग्धतांगतौ॥४॥ ॥श्रीरामउवाच॥ ॥यत्पूर्वमासीद्भगवंस्तदिदानींतथैवहि॥ भविष्यतिकिमर्थंवैवदमेवदतांवर॥५॥ ॥श्रीवसिष्ठउवाच॥ ॥जगन्निर्माणनियतेरस्याब्रह्मादिसंविदः॥ ईदृश्यवस्थितिर्नित्यमनिवार्यस्वभावजा ॥ ६ ॥ यदन्यद्बहुशोभूत्वापुनर्भवतिभूरिशः॥ अभूत्वैवभवत्यन्यःपुनश्चनभवत्यलम्॥ ७ ॥ अन्यत्वावर्तसंनिवेशाढ्यंसादृश्येनविवल्गति ॥ सदृशाविषमाश्चैवयथासरसिवीचयः॥ ८ ॥ ताएवान्याश्चदृश्यंतेव्यवस्थाःसंस्तौतथा॥ तस्माद्राजेवभूयापिवक्ष्यमाणकथेश्वरः॥ ९ ॥

याधृताम् ॥ १ ॥ इदंविभवजातंपरित्यज्य ॥ मनःखगंक्रोडीकृत्यत्वदंदिनिरुध्य ॥ २ ॥ ३ ॥ दंपतीजायापतीपूर्वकल्पेद्वापरेअभूताम् ॥ इदानीमष्टाविंशेचतुर्युगेऽपिमद्वापरेतेनैवसन्निवेशेनभविष्यतः ॥ ४ ॥ भूतभविष्यतो सादृश्येकोहेतुरितिरामप्रश्नार्थः ॥ ५ ॥ जगन्निर्माणेनियतिरूपायाब्रह्मादीनासत्यसंकल्पसंविदः अनिवार्यस्वभावएवतद्धेतुरित्यर्थः ॥ ६ ॥ ईदृशीत्युक्तंप्रपंचयति ॥ यदिति ॥ यथाएकस्मिन्नाम्रतरौअन्यदन्यत्फलबहुशोभूत्वापुनःपुनस्तादृशमेवभूरिशोभवति ॥ स्कंधवटस्तुअभूत्वैवभवतिसचच्छिन्नःपुनस्तस्मिन्नभवति ॥ ७ ॥ ८ ॥ सस्तनौशिखिध्वजादिससारेपितथेत्यर्थः ॥ राजाअतीतशिखिध्वजइववक्ष्यमाणकथायावर्ण्यत्वेनईश्वरोनायकः ॥ ९ ॥

॥ १० ॥ कण्णाकुण्ठरा ॥ [illegible]

॥ ११ ॥ सकलानांवापीकूपतडागारामादिकार्याणाम ॥ विदग्धोलोकशास्त्रनिष्णात ॥ १४ ॥ शांतस्वांतःसुभग सौभाग्यलक्षणयुक्तश्च विनयार्थानांपरेषामपिविनयशिक्षा देमूनांवाम्यामांवदितावक्ता ॥ १५ ॥ सर्वेषेरज्ञानातितथापिमाननाअभिज्ञताभिमानलच्छून्य ॥ सेणक्षीणव्यसनादि ॥ १६ ॥ उत्तमनओजसास्वबाहुवीर्येण ॥ अनेनपिता मांडलिकएवासीदसौस्वबाहुवीर्येणैवसम्राट्ट्मपन्नइतिगम्यते ॥ १७ ॥ साम्राज्यमयुक्तयासपर्या ॥ [illegible]

भविष्यतिमहातेजास्तद्वृत्तांतमिमंशृणु ॥ द्वापरेपूर्वमभवदनीतेससमेमनौ ॥ १० ॥ चतुर्युगेचतुर्थेतुसर्गेस्मिन्कुरुणांकुले ॥ जम्बूद्वीपेप्र सिद्धस्यविंध्यस्यादूरसंस्थिते ॥ ११ ॥ मालवानांपुरेश्रीमाञ्छिखिध्वजइतीश्वर ॥ धैर्यौदार्यदयायुक्तःक्षमाशमदमान्वित ॥ १२ ॥ शूरःशुभसमाचारोमौनीगुणगणाकर ॥ आहर्त्तासर्वयज्ञानांजेतासर्वधनुष्मताम् ॥ १३ ॥ कर्त्तासकलकार्याणांभर्त्तापूर्ववपुर्भुव ॥ पेशलस्निग्धमधुरोविदग्धःप्रीतिसागरः ॥ १४ ॥ सुंदरः शांतसुभगः प्रतापीधर्मवत्सलः ॥ वदिताविनयार्थानांदातासकलसंपदाम् ॥ १५ ॥ भोक्तासत्संगसहितः सुश्रोतासकलश्रुतेः ॥ वदासौमाननाशून्यः सैणवृणवदस्थशान् ॥ १६ ॥ पितरिस्वर्गमापन्नेबालएवोत्तमौजसा ॥ कृत्वाषोडशवर्षाणिस्वयंदिग्विजयंवशी ॥ १७ ॥ नूनंसाम्राज्यसपर्याभूमंडलमयोजयत् ॥ अतिष्ठद्दिगताशंकपालयन्धर्मतः प्रजा ॥ १८ ॥ सधीमान्मंत्रिभिः सार्धंयशसाशुभ्रयन्दिश ॥ अथगन्धरसुवर्षेपुवसतेप्रोल्लसत्यलम् ॥ १९ ॥ पुष्पपुंजृंभमाणेपुस्फुरत्सुशशिर श्मिपु ॥ मंजरीजालदोलासुविटपांतःपुरांतरे ॥ २० ॥ रजःकर्पूरधवलेवलद्दलकपाटके ॥ आमोदविलसत्पुष्पगुलुच्छकवितानके ॥ २१ ॥ गायत्सुगहनेपूच्चैर्मिथुनेष्वलिनामिव ॥ आवातिमधुरेवायौशशिशीकरशीतले ॥ २२ ॥ कदलीकदलीकच्छतलपल्लवलासिनि ॥ कां तांप्रतिप्रभूवास्यवसचेतः समुत्सुकम् ॥ २३ ॥ क्षीबकुसुमसंभारसौगंध्यमधुरासवे ॥ मनोनान्यास्पदंचक्रेसवसतमिवोदितम् ॥ २४ ॥

वाराकम ॥ १८ ॥ वर्षेपुगन्धरसुर्योवमेषामेसतीतियावत् ॥ अथास्यपेत कांतामतिसमुत्सुकमभूवेतिपञ्चमेनसंबंध ॥ १९ ॥ विटप शाखातल्लक्षणेऽत पुरांतरेमंजरीजालदोला सु अलिनांमिथुनेपुगायत्स्वितिव्यवहितेनान्वय ॥ २० ॥ तस्येवांतःपुरतत्सामपीक्ष्यननवर्णयति ॥ रजइति ॥ २१ ॥ शशिनाशीकरैश्चशीतले ॥ २२ ॥ कदलीमपिद्धा कद ल्योगुल्मभेदास्तपांकच्छायेपुतलेपुपल्लवेपुचलासिनिलास्पर्शालेइतिरीत्यमावोपपादकमाधारविशेषणम ॥ वसवित्युक्त्यापूर्वमेवगुणसौंदर्यादिश्रवणात्बाल्यायामनुरक्तमि तिगम्यते ॥ २३ ॥ कुसुमसंभाराणांसौगंध्यलक्षणैर्मधुरैरासवै क्षीबमत्तसत्सूसवसतमनमिव उदितरागपल्लवितमनः अन्यास्पदंकांतातिरिक्तविषयावलंबनंनचक्रे ॥ २४ ॥

तद्वौत्सुक्यप्रकारप्रपंचयति ॥ उद्यानेत्यादिना ॥ २५ ॥ २६ ॥ निवेक्ष्यामिपरिणेष्यामि ममेवतस्याअपिस्वाभिलाषप्रयुक्तसंतापःकदास्याद्येनशीघ्रंघटनास्यादित्याशयेनाह ॥ मृणालेति ॥ द्वंद्वलक्ष्य पुष्पितलतागृहात्मनाद्वंदीभूतावल्लक्ष्यस्तदभिलाषिणी ॥ २७ ॥ २८ ॥ २९ ॥ वनानामुपवनानांचगुणानुवर्णनेआवलितासुकथासुचारमतेतिसप्तमीनांस वच. ॥ ३० ॥ ३१ ॥ कुमारी त्वदिपूजयामासवद्धमेनेसाकल्पिकभूषणैरलंचक्रेवा ॥ मन्येइत्यवितर्के॥वितर्कवचनंवसिष्ठस्यवाक्यालंकारार्थम् ॥३२॥ मन्त्रिणापदलक्षणम्॥

उद्यानवनदोलासुलीलाकमलिनीषुच॥ कदाप्रणयिनींमुग्धांहेमाब्जमुकुलस्तनीम् ॥ २५ ॥ करिष्येकामिनीमंकेपर्यंकेकुंकुमांकिताम्॥ कदाकमलवल्लीनांदोलास्वलिरिवालिनीम् ॥ २६॥ आलोलांतांनिवेक्ष्यामिबालांभुजलतानुगाम् ॥ मृणालहारकुंदेंदुद्वंदवल्लक्ष्यभिलाषिणी॥ २७॥ मत्कृतेमदनातप्ताकदास्यादिंदुसुंदरी ॥इतिचिंतापरोभूत्वाकुसुमावचयोन्मुखः ॥ २८ ॥ विजहारवनांतेषुकुसुमोपवनेषुच॥ वनोपवनलेखासुलीलाकमलिनीषुच॥ २९ ॥ वल्लीवलयगेहेषुविविधोद्यानभूमिषु॥ वनोपवनविन्यासवर्णनावलितासुच॥ ३०॥ शृंगाररसगर्भासुकथास्वरमतोन्मनाः॥ त्वहिहारलसत्कायविलोलालकवल्लरीः ॥ ३१ ॥ कुमारीःपूजयामाससुवर्णकलशस्तनीः॥ एतन्मन्येविदुर्भव्यामंत्रिणोनृपनिश्चयम् ॥ ३२ ॥ इंगिताकारवेदित्वमेवमंत्रिपदंपरम् ॥ अथतस्यविवाहायमंत्रिवर्गोविचारयन्॥ ३३ ॥ सुराष्ट्राधिपतेःकन्यांययाचेयौवतान्विताम्॥ नवयौवनसंपन्नांभार्यात्वेविधिनोत्तमाम्॥ ३४ ॥ उपयेमेसतामात्मसदृशींप्रतिमामिव॥ चूडालेतिभुविख्यातानाम्नानृपतिसुंदरी ॥ ३५॥ सातंभर्त्तारमासाद्यरेजेफुल्लेवपद्मिनी॥ नीलनीरजनेत्रांतांचूडालांसशिखिध्वजः॥ ३६ ॥ स्नेहाद्विकासयामाससूर्योदेवोयथाब्जिनीम्॥ अवर्धततयोःप्रीतिरन्योन्यार्पितचेतसोः॥३७॥ हावभावविलासाढ्यैरंगैर्नवलतेवसा॥ सुमंत्र्यर्पितसर्वार्थःससुखीसुस्थितप्रजाः॥ ३८ ॥ राजहंसइवाब्जिन्यारेमेदयितयातया॥ अंतःपुरेषुदोलासुलीलाकमलिनीषुच॥ ३९॥ उद्यानेषुविहारेषुलतापुष्पगृहेषुच॥ कदंबवनलेखासुचंदनागुरुवीथिषु॥४०॥ मंदारदामलोलासुकदलीकंदलीषुच॥ पुरांतेषुवनांतेषुदिगंतेषुसरस्सुच॥ ४१॥

...परस्परानुरागगुणशीलकुलादिसंपत्तिविचारयन् ॥ ३३ ॥ युवतीनांसमूहोयौवतम् ॥ अस्याढेतद्धितेपुवद्भावः ॥ तेनान्वितां नवेनयौवनेनवयसाचसंपन्नाम् ॥ ३४ ॥ प्रतिमांप्र...सदृशीमनुरूपाम् ॥ ३५ ॥ ३६ ॥ विकासयामासप्रसादयामास ॥ ३७ ॥ हावभावादयःशृंगारचेष्टाभेदास्तदाढ्यैरंगैर्नवलतेवसाशुशुभेइतिशेषः ॥ शोभनैरा...मात्यैः...अर्पिताःसर्वेउपभोग्यार्थायस्मै ॥ अथवाशोभनैर्धार्मिकैर्मन्त्रिभिःसर्वेभ्योर्थिभ्यःअर्पिता.सर्वेअभिलषितार्थायस्य ॥ अतएवसुस्थितप्रजा...पुरेषु ॥ ३८ ॥ ३९ ॥ चंदनागुरुसुगंधितासुवीथिषुचदनागुरुवृक्षाणांपंक्तिषुच ॥ ४० ॥ ४१ ॥

॥ ४१ ॥ धुरेर्वैर्यंळीर्वैर्ष्टेपुक्षभेपुसतरमणीयपर्वदष्टिर्ययोस्तथाविधयोर्मेघसस्यसपत्कांतयोपुभूम्योरिव ॥ ४२ ॥ मिथ अन्योन्यस्माच्छिक्षणादन्योन्यसाम्यार्थिस्वा
धकोविदौपाह्नतरीअतएवसर्वगुणसाम्यादनुरागेणताद्रूप्यरजमाववर्जाविक्यमिवसपन्नमित्याह ॥ स्वरूपमिति ॥ ४४ ॥ अन्योन्यहृदयस्थत्वाद्देहद्वयसंक्रांतमेकमेवजीवस्वरू
पम् ॥ विमारिशिम्पैदग्ध्यमपितत्तच्छिल्पकुशलानामुखाद्यसअभ्यस्य ॥ ४५ ॥ यथावालोपद्रवाश्रवर्णविद्यमलचर्यमिनिशात्वनियतकालादेवमिपापदकातितवत् ॥ सा
चूडाला ॥ असौशिखिध्वज ॥ ४६ ॥ अमावास्यापाप्येनिशेष ॥ इद्रकाविवमिथोहृदयसस्थौसंतौऐक्यमुपागतौ ॥ ४७ ॥ मिश्रितक्षीरोदकवदेकरसौ ॥ ४८ ॥ भूतल

जगलेपुजनांतेपुजंपूजधीरजातिपु ॥ बभूवाह्लादकसर्वंतयोरन्योन्यचेष्टितम् ॥ ४२ ॥ सहृपयोर्धुरवरैर्घंभूम्योरिवकांतयो ॥ नित्यमे
वावियुक्तत्वात्प्रियत्वाच्चेष्टितस्यच ॥ ४३ ॥ मिथ कलाकलापस्यकोविदौतौबभूवतु ॥ स्वरूपमेकमेवतौदधतुर्भिन्नतांगतौ ॥ ४४ ॥ अ
न्योन्यहृदयस्थत्वाद्विसंक्रांतमक्षतम् ॥ सर्वंशास्त्रार्थवैदग्ध्यंचित्रायपिमुखात्प्रभौ ॥ ४५ ॥ बाल कालादिवाग्रत्यसासीत्सर्वार्थप
हिता ॥ नृत्यवाद्यादियावच्चचूडालावदनादसौ ॥ ४६ ॥ अशिक्षतप्रभुर्वाथकलानामतिकोविद ॥ अमावास्यामिवेंद्वर्कावन्योन्यवि
लमत्कलौ ॥ ४७ ॥ मिथोहृदयसस्थौतौद्वावप्यैक्यमुपागतौ ॥ तौसास्थितावेकरसावन्योन्यदयितावुभौ ॥ ४८ ॥ पुष्पामोदाविवाभि
न्नौभूतलस्थौशिवाविव ॥ वैदग्ध्यसुंदरमतीसर्वशास्त्रार्थपंडितौ ॥ ४९ ॥ कायार्थंप्रभुवंप्राप्तौकमलाकमलाधवौ ॥ स्नेहाप्रसन्नमधु
रौसमविज्ञातवादिनौ ॥ ५० ॥ अनुवृत्तिपरावाल्लोकवृत्तांततद्विदौ ॥ कलाकलापसंपन्नौलसद्रसरसायनौ ॥ शीतलस्निग्धमुग्धा
गौशशांकोद्वाविवोदितौ ॥ ५१ ॥ रेजेलसच्चरतिभोगविलासकांतमंत पुरेपुमिथुनंतदनुत्तमश्रि ॥ ब्रह्मांडखंडकुहरेष्विवराजहंसयुग्म
विकासिमदमन्मथमदचारि ॥ ५२ ॥ ॥ इ० वा० वा० दे० मो० नि० पू० चूडालोपाख्यानेशिखिध्वजविलासकथनंनामसप्तसप्ततितम
सर्ग ॥ ७७ ॥ ॥ ६ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ एवमहूनिवर्षाणिमिथुनंनिर्भरस्पृहम् ॥ रमेयौवनलीलाभिरमदाभिर्दिनेदिने
॥ १ ॥ अथ यातेपुबहुपुवर्षेष्वावृत्तिशालिपु ॥ शनैर्गलिततारुण्यंभिन्नकुंभादिवांभसि ॥ २ ॥

स्योभूमावपतीर्णौशिवौगौरीशंकराविव ॥ ४९ ॥ सहपत्येकपापृष्टसदेहपरलोकशास्त्ररहस्यसमनुल्यकालनुल्यविषयषविज्ञातचतुःशीलययोस्तौ ॥ ५० ॥ परस्परगुरुहिता
भिज्ञादीनांचानुवृत्ति प्रियहितविनयाद्याचारलत्परौ ॥ लोकवृत्तांतस्यतस्यशास्त्रैकगम्यधर्मरहस्यस्यचविदौ ॥ लसतिश्रृंगारादिनवरसलक्षणामिरसायनानिययोस्तौ ॥ ५१ ॥
प्रमोदरसरस्यप्रह्मांडमयस्यसत्यलोकस्यकुहरेपुगभीरसरस्सुराजहंसयोर्युग्ममिथुनमिव ॥ ५२ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्य० नि० पू० सप्तसप्ततम सर्ग ॥ ७७ ॥ ॥ ६ ॥
तयो क्रमेणवैराग्यसच्छास्त्राभ्यासमिद्धनाच्चूडालायाविवेकोमहाज्ञानलाभश्चवर्ण्यते ॥ १ ॥ निर्भरस्पृहदृढप्रेम ॥ मिथुनतस्मिन्पुसदृढम ॥ १ ॥ अथ यातेनिस्तारुण्येगलतिसतितयुग्म
इतिनिर्णीयअभ्यासमनतराथविचारयामासतिवक्ष्यमाणएकादशोपलबंध ॥ २ ॥

निर्णयहेतुप्रथमतत्कृतविचारप्रपचयति ॥ तरगेत्यादिना ॥ तरगनिकराकारेणभगुरेणदेहेनव्यवहरणशीलेदेहिनि ॥ मरणदेहवियोग. ॥ ३ ॥ कुतोदुर्निवारणंतत्राह ॥ हिमाशनिरिति ॥ ४ ॥ तृष्णाभोगतत्साधनतृष्णाप्राट्षिकटुतुबीलतेवदीर्घतागतावर्ततइतियावत् ॥ रयोत्रवार्षिकपूर. ॥ ५ ॥ जीव्यतेअस्मिन्नितिर्जीवनदेहादि ॥ ६ ॥ दुःखान्याध्यात्मिकादीनितृष्णाचचेतःपततिनिपत्यतुदतीतियावत् ॥ ७ ॥ अप्रियासपत्नीकामयतेयस्तस्यकाताप्रियतमेव ॥ ८ ॥ अरतिरिष्टविषयालाभनिमित्तदौर्मनस्यम् ॥ वैरस्यरसशोषः ॥ इहास्मिन्ससारे ॥ ९ ॥ दशासुजन्ममरणादिदुर्दशासु ॥ तद्युग्ममिथुनंइतिविचार्यतत्रअध्यात्मशास्त्रमेवसमाख्यायिभेषजनिर्णीयतदेवविचारयामासेत्यन्वय·

तरंगनिकराकारभंगुरव्यवहारिणि ॥ पातःपक्कफलस्येवमरणंदुर्निवारणम् ॥ ३ ॥ हिमाशनिरिवांभोजेजरानिपतनोन्मुखी ॥ आयुर्गलत्यविरतंजलंकरतलादिव ॥ ४ ॥ प्राट्षीवलतातुंबीतृष्णैकादीर्घतांगता ॥ शैलनद्यारयइवसंप्रयात्येवयौवनम् ॥ ५ ॥ इंद्रजालमिवासत्यंजीवनंजीर्णसंस्थिति ॥ सुखानिप्रपलायंतेशराइवधनुश्च्युताः ॥ ६ ॥ पतंतिचेतोदुःखानितृष्णागृध्रइवामिषम् ॥ बुद्बुदःप्राट्षीवाप्सुशरीरंक्षणभंगुरम् ॥ ७ ॥ रंभागर्भइवासारोव्यवहारोविचारगः ॥ सत्वरंयुवतायातिकांतेवाप्रियकामिनः ॥ ८ ॥ बलादरतिरायातावैरस्यमिवपादपम् ॥ तदिहस्याच्छुभाकारंस्थिरंकिमतिशोभनम् ॥ ९ ॥ यदासाद्यपुनश्चेतोदशासुनविदूयते ॥ इतिनिर्णीययुग्मंतत्संसारव्याधिभेषजम् ॥ १० ॥ चिरंविचारयामासशास्त्रमध्यात्मसंमतम् ॥ आत्मज्ञानैकमात्रेणसंस्तत्याख्याविषूचिका ॥ ११ ॥ संशाम्यतीतिनिश्चित्यतावास्तांतत्परायणौ ॥ तच्चित्तौतद्गतप्राणौतन्निष्ठौतद्विदाश्रयौ ॥ १२ ॥ तदातदर्चनपरौतदीहौतौविरेजतुः ॥ तत्रैवातिघनाभ्यासौबोधयंतौपरस्परम् ॥ १३ ॥ तस्मीतौतत्समारंभावन्योन्यंतौबभूवतुः ॥ अथसाविरतंरामरमणीयपदक्रमान् ॥ १४ ॥ श्रुत्वाध्यात्मविदांवक्त्राच्छास्त्रार्थांस्तारणक्षमान् ॥ इत्थंविचारयामासस्वमात्मानमहर्निशम् ॥ १५ ॥ अव्यापृताव्यापृतावाधियाधवलयेद्धया ॥ प्रेक्षेतावत्स्वमात्मानंकिमहंस्यामितिस्वयम् ॥ १६ ॥ कस्यायमागतोमोहःकथमभ्युत्थितःक्व वा ॥ देहस्तावज्जडोमूढोनाहमित्येवनिश्चयः ॥ १७ ॥ आबालमेतत्संसिद्धंमतौचैवानुभूयते ॥ कर्मेंद्रियगणश्चास्मादभिन्नावयवात्मकः ॥ १८ ॥

॥ १० ॥ ११ ॥ तद्विदाअध्यात्मशास्त्रविदएवाश्रयःशरणययोस्तौ ॥ १२ ॥ १३ ॥ तस्मिन्नध्यात्मशास्त्रएवसम्यक्तच्चिंतनतच्छ्रवणमन्योन्यतत्प्रबोधनमित्यादि.समारंभोययोस्तौ ॥ साचूडाला ॥ १४ ॥ इत्थवक्ष्यमाणप्रकारेण ॥ १५ ॥ अव्यापृतात्यक्तशारीरव्यापारा ॥ प्रेक्षेविविच्यपश्येयम ॥ अस्मिन्कार्यकारणसघातेअहचेतनधातुःकिस्याम ॥ १६ ॥ अयसंसारलक्षणोमोहोभ्रम कस्यागतः यस्यहिभ्रातिरागतासतन्निवारणेस्वस्थ.स्यात्सएवकइत्यर्थः ॥ कथवेतिनिमित्तजिज्ञासाक्वेतितन्मूलजिज्ञासा ॥ मूलेहिपरिज्ञातेतदुच्छेदेनोच्छेत्तुसशक्य· ॥ १७ ॥ मतौस्थूलोहगौरोहमित्यादिबुद्धिवृत्तौसत्यामेवानुभूयतेनस्वतइतितस्यजडत्वमित्यर्थः ॥ अस्माद्देहादभिन्नहस्तपादाद्यवयवात्मकः ॥ १८ ॥

१ एवव्याख्यानेपुवद्भावानुपपत्तिः ॥ अप्रियसपत्नीसग्रहणकामयतइतिव्याख्यानेतुनकाप्यनुपपत्तिः

२ कथकैर्निमित्तैरित्यपिपाठः

बुद्धीन्द्रियगणोपिएवशरीरावयवात्मकएव ॥ यद्यप्यजवश्चेतिसूक्ष्मेन्द्रियप्राणादय सूक्ष्मलिंगदेहावयवाएवनस्थूलदेहावयवाइतिवादरायणेनसिद्धांतिततथापितेपविदेहावयव
त्वेनैवापठितपामरमनुष्यादवयवदेहस्यकत्वासतवयवजडत्वमेवेत्याशय ॥ १९ ॥ मनआदेरपिजडदेहादिप्रेरकत्वात्तस्ययोगयाग्यद्रम्यनयायस्यादित्यजडत्वसिद्धमि
त्याह ॥ प्रेर्यतइत्यादिना ॥ २० ॥ सदासत्ताआत्मस्वभावविवेकेतिनिश्चय ॥ क्षेपणैरज्जुयष्टि ॥ २१ ॥ खातेनखपदयानरालिकनिजदेशेन ॥ सानुद्धिर्मासनेप्रेर्यते ॥ २२ ॥ जी
वेनभाषावच्छिन्नचिदाभासेनजन्यतेअभ्यस्यते ॥ तथाचयक्षदेहवत्तस्याप्यसत्त्वादेवजडत्वमित्यर्थ ॥ वातात्माप्राणोपाधि ॥ २३ ॥ अंतरन्येनस्वांतर्यामिबिंबचैतन्यनप
रिपूर्णोजीवति ॥ चत्यात्रस्य साक्षिभावेनविषयप्रकाशनतेनकलंकिनादूषितप्रायेण ॥ २४ ॥ जीर्णेनचिरतनेन ॥ २५॥ चेत्योल्लेखकलंकिनेतितत्रोपपत्तिमाह ॥ असत्येति॥

अवयवावयविनोनभेदोजडएवच ॥ बुद्धीन्द्रियगणोप्यवजडएवेतिदृश्यते ॥ १९ ॥ प्रेर्यतेमनसायस्मात्प्रष्ट्येवभुविलोष्टक ॥ मनश्चै
वजडमन्येसकल्पात्मकशक्तियत् ॥ २० ॥ क्षेपणैरिवपाषाण प्रेर्यतेबुद्धिनिश्चयै ॥ बुद्धिर्निश्चयरूपैवजडामन्तैवनिश्चय ॥ २१ ॥ खाते
नेवसरिन्नूनसाहंकारेणवाह्यते ॥ अहंकारोपिनि सारोजडएवशवात्मक ॥ २२ ॥ जीवेनजन्यतेयक्षोबालेनेवभ्रमात्मक ॥ जीवश्च
चेतनाकाशोवातात्माहृदयेस्थित ॥ २३ ॥ सुकुमारोंतरन्येनकेनापिपरिजीवति ॥ अहोनुज्ञातमेतेनचेत्योल्लेखकलंकिना ॥ २४ ॥ जी
वोजीवतिजीर्णेनचिद्रूपेणात्मरूपिणा ॥ चेत्यभ्रमवताजीवश्चिद्रूपेणैवजीवति ॥ २५ ॥ आमोद पवनेनेवखातेनेवसरिद्वय ॥ असत्य
जडचेत्यांशचयनाच्चिद्वपुर्जडम् ॥ २६ ॥ महाजलगतोत्यग्निरिवरूपस्वमुज्झति ॥ सदासद्वायदाभातिचित्समाधौसतिस्वत ॥ २७ ॥ स्व
रूपमलमुत्सृज्यतदेवभवतिक्षणात् ॥ एवंचिद्रूपमप्येतच्चेत्योन्मुखतयास्वयम् ॥ २८ ॥ जडशून्यमसत्कल्पचैतन्येनप्रबोध्यते ॥ इतिस
चित्यचूडालाकिनैपाचिद्ध्यतनी ॥ २९ ॥ इतिसंचितयामासचिरायेत्यब्युध्यत ॥ अहोनुचिरकालेनज्ञातंज्ञेयमनामयम् ॥ ३० ॥

चयनात्साहास्य्यससमाध्यासाच्चिद्वपुश्चिरस्वभावमपितज्जडमिवसपन्नमित्यर्थ ॥ २६ ॥ महाजलतमलसामुद्रवातस्तोग्निरिवस्वभास्वररूपमुज्झतिमुचति॥ अतएवसत्तांशे
चिद्रूलक्षण्यमिवलभ्यापट सम्पट सच्चितिसत्ताघटपटाद्यपिवाकारसमरसानुभूयते ॥ घटाद्याकारस्यमुद्रादौलयेघटोनास्तिपटोनास्तीतिसत्ताकारमप्युज्झतीअभावताम
प्यापद्यतइतिभाव ॥ चित्समाधौचेस्थिकाप्यसद्रूपमसद्रूपतायदेवभासनोपनीतंस्वतआभातितदेवक्षणादलपूर्णस्वरूपमसद्ध्यनरक्षणास्स्वयभवतीतिपरेणान्वय ॥ २७ ॥ एव
मुक्तरीत्यापरमात्मचिद्रूपमपिअविद्यावरणाद्ध्यासपरंपरयाजडशून्यमसत्कल्पसपन्नजगद्रूपमुद्भावनाबत्तस्वभावेनपरम्येनैवतत्त्वाकारवृत्त्याम्यामूलाविद्यावरणभग
हाराप्रबोध्यतइतिपरेणान्वय ॥ २८ ॥ तर्हिमूलाविद्यावरणभगेनैपाप्रज्ञाचित्केनोपायेनदृश्यत्वप्रविहायप्रबोधयतीत्याशंक्यविचिंतितवतीत्याह ॥ इतीति ॥ २९ ॥ दृश्यसपर्य
मानप्रकारेणाभ्युध्यत आत्मतत्त्वमित्यर्थ ॥ ३० ॥

---

१ शक्तिमदित्यपिपाठ

कश्चिदपिपुरुषोनहीयतेपरमपुरुषार्थात्प्रच्युतोनभवतीत्यर्थः ॥ अथवाकश्चिदपिकाम्योर्थोनहीयतेनहानिप्राप्यते ॥ तत्राप्यैवसर्वकामावाप्तेरित्यर्थः ॥ अथवाकिंचिद्वस्तुदुः
खसाधनमितिबुद्ध्यानहीयतेनत्यज्यते ॥ सर्वस्याप्यानंदैकरसत्वसपत्तेरित्यर्थ. ॥ हानासंभवोक्तिरुपादानस्याप्युपलक्षणम् ॥ चिद्विलासस्यअता.परिच्छेदहेतवः ॥ ३१ ॥ द्वि
तीयस्यनैमिरिकदृष्टिपरिकल्पितस्येंदोःपदेस्थानेस्थिताभातिकल्पिताइतियावत् ॥ ३२ ॥ शुद्धसंवेदनमेवआकार स्वरूपंयस्या ॥ शिवभूमानंदरूपत्वात्परममंगलतादृशस्व
भावात्कदाप्यप्रच्युतमित्यच्युतम् ॥ ३३ ॥ सकृन्मूलाविद्यावरणभंगेनविभातानपुनःकेनाप्याव्रियतइतिसकृद्विभाता अतएवनित्योदयवतीपरिगीयतेवेदांताद्यध्यात्मशास्त्रे
षुलक्षणया ॥ ३४ ॥ चेत्यादित्रिपुटीजालमस्या सकाशाद्भिन्नवस्तुन यतएषात्रिपुटीतयासाक्षिभूतयाचेत्यतेनतुमानन सिद्धासैषासाक्षिचित्त्रिपुटीप्रवृत्ते प्रागेवस्वतःसिद्ध
त्वादाद्या ॥ ३५ ॥ विजृंभतेविवर्तते ॥ ३६ ॥ मनोबुद्ध्यादिविवर्तैश्चिदात्मनिमातरिप्रमातृभावापन्नेसतितत्रतरंगादिकलनाप्रायाजगद्रूपभूतभौतिकपदार्थानांसत्ताअस्ति

यद्वैविज्ञेयंतांकृत्वानकश्चिद्धीयतेपुनः ॥ एतेहिचिद्विलासांतामनोबुद्धींद्रियादयः ॥ ३१ ॥ असंतःसर्वएवाहोद्वितीयेंदुपदस्थिताः ॥ महा
चिदेकैवास्तीहमहासत्तेतियोच्यते ॥ ३२ ॥ निष्कलंकासमाशुद्धानिरहंकाररूपिणी ॥ शुद्धसंवेदनाकाराशिवंसन्मात्रमच्युतम् ॥ ३३ ॥
सकृद्विभाताविमलानित्योदयवतीसदा ॥ साब्रह्मपरमात्मादिनामभिःपरिगीयते ॥ ३४ ॥ चेत्यचेतनचित्तादिनास्याभिन्नंनमानतः ॥
तयैवाचेत्यतेचिच्छ्रीःसैषाद्याचिदितिस्मृता ॥ ३५ ॥ अचेत्यंयदिदंचित्त्वंतत्तस्यारूपमक्षतम् ॥ मनोबुद्धींद्रियाद्यर्थरूपैःसैवविजृंभते
॥ ३६ ॥ तरंगकणकल्लोलकलनेयंचिदात्मनि ॥ जगद्रूपपदार्थानांसत्तास्फुरतिमातरि ॥ ३७ ॥ यदिदंतत्परंरूपंतस्याःखलुमहाचितेः ॥ शु
द्धचिन्मणिवत्साहिसेयंसमसमोदिता ॥ ३८ ॥ अनन्ययैवयाशक्त्याजगज्जृंभिकयास्थिता ॥ सत्तामायातिरेकेणनान्यासंभवतीहहि
॥ ३९ ॥ विचित्रतेवभांडानांननुहेमतयायथा ॥ सातथोदेतितद्रूपमात्मानंचेततिस्वयम् ॥ ४० ॥ स्वचित्तेनद्रवत्वेनतरंगादित्वमंबुषु ॥
महाचितौजगच्चित्तादुदेतीवानुदेत्यपि ॥ ४१ ॥

तास्फुरति ॥ ३७ ॥ यदिदंजगत्सत्तारूपंप्रसिद्धंतत्तस्याअधिष्ठानभूतायामहाचितेरेवपररूपंस्व
पातरम ॥ खलुशब्दोद्वेवावब्रह्मणोरूपेमूर्तंचैवामूर्तंचेत्यादिश्रौतप्रसिद्धिद्योतनार्थः ॥ यत साहिचित्स्फटिकमणिवज्जगत्प्रतिबिंबमसंगैवधत्ते सेयजगत्सत्ताचव्यावहारिकेषुप्रा
तिभासिकेषुचसमसमास्वस्वाधिष्ठानानुसारिणीउदिता ॥ ३८ ॥ अतएवजगत्सत्तायाअधिष्ठानसत्तान्यत्वनिरूपणायोगान्मायामात्रत्वमित्याह ॥ अनन्ययैवेति ॥ ३९ ॥ अ
तएवनामरूपविशेषप्रलयेजगत्सत्तामायाशबलब्रह्मसत्तात्मनैवपरिशिष्यते ॥ मायाबाधेतुआनंदैकरससन्मात्ररूपमात्मानस्वयमनुभवतीत्याह ॥ विचित्रतेवेति ॥ भांडानाम
लकारजातानाविचित्रतायथाप्रविलयेहेमतयाहेमसत्तात्मनैवोदेतितथेत्यर्थः ॥ ४० ॥ सत्तायांदर्शितन्यायेनैवजगद्वैचित्र्यस्फुरणरूपचिद्भेदानामपिविषयाकारभेदेमिथ्यात्व
पर्यालोचनेअपरिच्छिन्नपरब्रह्मचिन्मात्रतापर्यवस्यतीत्याशयेनाह ॥ स्वचित्तेनेतिद्वाभ्याम ॥ यथास्वमैंद्रजालादौद्रवत्वेनपरिणतेनस्वचित्तेनसिद्धेषुसमुद्राद्यंबुषुतरंगादिअनु
दयेप्युदेतीवतथामहाचितौब्रह्मण्यपिसमष्टिचित्ताज्जगदनुदयेप्युदेतीत्यर्थ ॥ अनुदेतीतिनअस्तिइत्यनेनसहेतियोगविभागात्समासश्छांदसोवा ॥ ४१ ॥

१ एवेहेतिक्वचित्पाठ.

अस्त्वेवंक्लिततत्समाह ॥ तदिति ॥ तत्तमस्समेचिद्रूपआलीवचित्तकल्पितजलरूपेणरूपवान्सस्तरंगादिरूप्यमेवान्यथायामसत्पालम्यतिरिक्तंनाणुमात्रमपिकिंचिदस्ति एवमि
त्यात्ममवाहजगदानविशेषभेदेसपन्चोनपरमार्थतःपूर्णचिदात्मनोमत्तोव्यतिरिक्तमणुमात्रमप्यस्तीत्यभावस्याप्यपरिशेषादनहंभावचिन्मात्रमेवाततंविस्तीर्णमित्यर्थः॥ ४२॥
मरणंदेहवियोगोनाशोऽभ्यसदितिभेद ॥ सदसद्गतीस्वर्गनरकौ ॥ ४३ ॥ तथमस्तुतविचारस्यावधौविश्रांतिदर्शयति ॥ अच्छेयइति ॥ ४४ ॥ आसे शासस्योरितिसलोप ॥ अ
सपूदस्याभासोयस्मिन् ॥ ४५ ॥ चिरकालिकपरिच्छेदरहितम ॥ अनंतदेशवस्तुकृतपरिच्छेदरहितम ॥ ब्रह्मादिस्तंबपर्यंतप्राणिकर्मफलौघाश्चकारात्साधनव्यापारा अफ
लादिकानिष्फलसाधनादयश्चेष्टाश्चइदमाकाशमेवनान्यत् ॥ ४६ ॥ पुस्तकलालादिपुरुषजातिसत्कममयीतन्निर्मिता ॥ अथवापुस्तमतिमायांकल्पितापुरुषजाति ॥कर्म

तदात्मैवयथायातोरूपवान्जलधौद्रवात् ॥ एवंचिन्मात्रमेवाहमनहंभावमाततम् ॥ ४२॥ नतस्यजन्ममरणेनतस्यसदसद्गती ॥ नना
श सत्तवत्यस्यचिन्मात्रनभस क्वचित् ॥ ४३ ॥ अच्छेद्योयमदाह्योयंचिदादित्योतिनिर्मल ॥ आहोनुचिरकालेनशांतास्मिपरिनिर्व
ता ॥ ४४ ॥ निर्वामिभ्रमनिर्मुक्तमासेनिर्मंदराब्धिवत् ॥ असदाभासमत्यच्छमनंतमजमच्युतम् ॥ ४५॥ आत्माकाशमनाद्यमम
लपरमचिरम् ॥ अनंतमिदमाकाशंफलौघाश्चाफलादिका ॥ ४६॥ सुरासुरयुतविश्वमेतन्मयमकृत्रिमम् ॥ पुस्त्वकर्ममयीसेनासर्वच
न्मात्रकयथा ॥ ४७॥ द्रष्टदृश्यमयीसत्ताचिन्मात्रैक्यमयीतथा ॥ इदमैक्यमिदद्वित्वमहनाहमितीतिच ॥ ४८ ॥ कद्रूवभ्रमसमोह कथक
स्यकृत क्वा ॥ स्वमनतमनायासमुपशांतास्मिसस्थिता ॥ ४९ ॥ निर्वाणपरिनिर्वाणागतमासेगतज्वरम् ॥ अचेतनचेतनंवायोयमा
भातिचेतति ॥५० ॥ भासमानात्मतद्रूपंखंमहाचितिसस्थितम् ॥ नेदनाहंनचान्यच्चनभावाभावसंभव ॥ शांतसर्वनिरालयकेवलंस
स्थितपरम् ॥५१॥ इत्थंविचारणपरापरमप्रबोधाद्बाययास्थितमिदपरमात्मतत्त्व ॥ सशांतरागभयमोहतमोविलासाशांतायभूवश
रदवरलेखिकेव ॥५२॥ ॥इ०वा०वा०दे० मोक्षोपायेपुनिर्वाणप्रकरणेपू०भूहालाप्रबोधोनामअष्टसप्ततितम सर्ग ॥ ७८ ॥ ॥७॥
श्रीवसिष्ठउवाच ॥ ॥ दिनानुदिनमित्येषास्वात्मारामतयातया ॥ नित्यमतर्मुखतयाथभूवप्रकृतिस्थिता ॥ १ ॥

तदनुरूपचलनादि तन्मयीतत्पुत्रावालनिर्मितमृत्स्ना ॥ ४७ ॥४८ ॥ किरूपमनुष्टयमकारभोक्तृनिमित्ताधिकरणसंभावनाप्रतिषेधार्थम ॥ स्वपारमार्थिकरूपप्राप्त्येतिशेष
॥ ४९ ॥ निर्वाणेमोक्षमुक्तेपरितोनिर्वाणानिर्वाणागतभवज्वरगमकठचामीकरवआत्मस्वरूपमेवाहमासे ॥ यदचेतनचेतनवाआभाति योयतद्भोक्ताचेततितदुभयभासमानात्मा
भिन्नयद्ब्रह्मतद्रूपस्वचिदाकाशमेवेतिपरेणान्वय ॥ ५० ॥ किंदृताहंतान्यत्तादिजगत्स्वभावमस्यकिंब्रह्मनेत्याह ॥ नेदमिति ॥५१॥ उक्तमेवसंक्षिप्योपसहरति ॥इत्यमिति॥
परमप्रबोधादात्यंतिकमोहनिद्रापगमात्सशांतारागादयस्तमोविलासाअवस्थामयस्तमायस्या ॥ ५२ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू० अष्टसप्तति
तम सर्ग ॥ ७८ ॥ ॥ ७ ॥ ॥ अपूर्वमीमतीदत्तापृष्टयाधरणीभृताभूहालयास्वशोभायाहेतुर्बोधोभ्रवर्ण्यते ॥ १ ॥ एवविचारेणोत्पन्नस्यतत्त्वज्ञानस्याभ्यासादिनक्रमेणा
परोक्षभूमिकाप्रतिष्ठामाह ॥ दिनानुदिनमिति ॥ दिनानुदिनंदिनक्रमेण ॥ नित्यमंतर्मुखप्रकृति स्वाभाविकरूपतस्मिन्स्थितापतिष्ठिता ॥ १ ॥

तस्यास्तत्प्रतिष्ठालक्षणान्याह ॥ नीरागेत्यादिना ॥ २ ॥ परिपूर्णदेहादांतरात्मनसोर्प्यांतर प्रत्यगात्मायस्या ॥ ३ ॥ सुचिरंप्राक्संसारश्रांतातदा निरतिशयानंदघनेज्ञानलब्धे पदांतरेपरमपदेविश्रांता ॥ ४ ॥५॥ कथमल्पकालिकेनबोधेनानादेर्महत्तमस्यचभ्रमस्यनिवृत्तिस्तत्राह ॥ यथेति ॥ कश्चिदनिर्वचनीयस्वरूपःस्पंदविभ्रमःअविदुषिअकस्मादेवा गतस्तथातत्त्वज्ञानवतिसर्वनि शेषमकस्मादेवविलीयतइत्यर्थ ॥ दीर्घपाठेयथाविलीयतेतथातत्त्वज्ञानवतींवभूवेतिकथंचिद्व्याख्येयम ॥ ६ ॥ नद्दष्टमकलंद्वैतंयत्रतथाविधेपदे ॥ ७ ॥ यथाजरद्गवीवृद्धागौर्दुरारोहतमसंतृणोदकसमालोकनुल्यातपचंद्रिकोपभोगंशैलाग्रंदैवात्प्राप्यअनाकुलासंस्थिताभवतितद्वत्साविसमालोकजाप्रदादिसर्वावस्थास्वेक रूपप्रकाशप्रत्यगात्मानजाग्रदाद्यसंबंधात्मनास्वज्ञावेनप्राप्यतस्मिन्नेवात्मन्यनाकुलासंस्थितेत्यर्थ. ॥ ८ ॥ आत्मनस्तत्त्वदर्शनप्रयुक्तेनोदयेनपूर्णानंदस्वरूपाविर्भावेण ॥ ९ ॥ स्म

नीरागानिरुपासंगानिर्द्वंद्वानिःसमीहिता॥नजहातिनचादत्तेप्रकृताचारचारिणी॥२॥परितीर्णभवांभोधिःशांतसंदेहजालिका॥परमा त्ममहालाभपरिपूर्णांतरात्मना॥३॥विश्रांतासुचिरंश्रांताघनलब्धपदांतरे॥सर्वोपमातीतनतयाजगामाव्यपदस्थताम्॥४॥इतिसाभा मिनीतस्यचूडालावरवर्णिनी॥स्वल्पेनैवहिकालेनययौविदितवेद्यताम्॥५॥यथायमागतःकश्चिज्जागतःस्पंदविभ्रमः॥तथाविलीयते सर्वंतत्त्वज्ञानवतिस्वयम्॥६॥अदृष्टसकलेशांतेपदेविश्रांतिमेत्यसा॥रराजशरदच्छाभ्रमालेवगतसंभ्रमा॥७॥अनाकुलासमालोक मसंबंधात्मनात्मनि॥जरद्गवीवशैलाग्रंसतृणंप्राप्यसंस्थिता॥८॥स्वविवेकघनाभ्यासवशादात्मोदयेनसा॥शुशुभेशोभनापुष्पलतेवा भिनवोद्गता॥९॥अथतामनवद्यांगींकदाचित्सशिखिध्वजः॥अपूर्वशोभामालोक्यस्मयमानउवाचह॥१०॥भूयोयौवनयुक्तेवमं डितेवपुनःपुनः॥अधिकंराजसेतन्विजगद्राजवतीयथा॥११॥प्रपीतामृतसारेवलब्धालभ्यपदेवच॥आनंदापूरपूर्णेवराजसेनितरां प्रिये॥१२॥उपशांतंचकांतंचदधानासुंदरंवपुः॥अभिभूयेंदुमायासिश्रियंकामपिकामिनि॥१३॥अभोगकृपणंशांतमूर्जितंसम तांगतम्॥गंभीरंचप्रशांतंचचेतःपश्यामितेप्रिये॥१४॥तृणीकृत्यत्रिभुवनंपीताखिलजगद्रसम्॥अनंतोड्डामरंसौम्यंमनःपश्यामितेप्रि ये॥१५॥नकेनचिन्महाभागेविभवानंदवस्तुना॥चेतस्तवतुलामेतिमरुक्षीराब्धिसुंदरम्॥१६॥तैरेवबालकदलीमृणालांकुरकोमलैः॥ अंगैःस्थितिमनुप्राप्तैर्वर्द्धियातेवलक्ष्यसे॥१७॥तथातेनैवतन्नवसन्निवेशेनसंस्थिता॥अन्यतामुपयातासिलतेवऋतुपर्यये॥१८॥

यमानोविस्मयस्मेरास्य ॥ १० ॥ जगत्जगती ॥ वर्तमानेपृषन्महद्बृहज्जगच्छतृवच्चेतिशतृवद्भावातिदेशादुगितश्चेतिस्त्रियाङ्गीपूच्छादसत्वान्नकृतः ॥ राजवतीराजन्वतीपूर्णचंद्रव तीवायथाराजतेतद्वद्राजसे ॥ ११ ॥ १२ ॥ १३ ॥ ऊर्जितविवेकोर्जितम ॥ शांतशमादिगुणवत ॥ प्रशांतमुपरतचापलम ॥ १४ ॥ १५॥ मरुरिवनिर्जलजाड्यनयाक्षीराब्धि रिवपूर्णतयाचसुंदरम् ॥ ॥ १६ ॥ स्थितिमचापल्यमुपायातैस्तैःप्राक्तनैरेवांगैरवयवैस्तेजोतिशयेनवर्द्धियातेव ॥ १७ ॥ ऋतुपर्ययेशिशिरात्यये ॥ १८ ॥

---

१ मूलस्थतृणपदमुदकस्याप्युपलक्षणमित्यर्थः

वयस्याभिः सखीभूताभिः तनु कृशीभूतो विद्वेषो रागश्च याभिस्तथाविधाभिः स्वप्रज्ञाभिः शास्त्रदृष्टिभिश्च सहरमे ॥ अथवा शास्त्रदृष्टिभि. करणैस्तनुरल्पीभूतो विद्वेषो रागश्च यासां तथाविधाभिर्वयस्याभि. सखीभि. सहरमे ॥ ३० ॥ अंगहेनाथइहजगति अहनयनरश्मिभिरन्यैर्वाइंद्रियैश्चित्तेनचयत्पश्यामितन्नकिंचिदस्त्येव ॥ तेनेंद्रियमनोदृश्येनविरहितंतुनकिंचिन्निष्प्रपंचवस्तुअत. पश्यामि ॥ यतोहेतोरितिवर्णितरीत्याअंतर्बहिश्चसम्यगबाधितरूपंपश्यामि तेनहेतुनाचिरसततमुदितापरमाभ्युदयश्रीमतीअस्मीत्यर्थः ॥ ३१ ॥

॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू० एकोनाशीतितमः सर्गः ॥७९॥ ॥ ७ ॥ ॥ अज्ञेनराज्ञातद्वाक्यस्यासंबद्धत्ववर्णनम् ॥ खेचरत्वादिसिद्धीनां बीजचात्रनिरूप्यते ॥ १ ॥ एवंवर्णितप्रकारेणस्वशोभातिशयेनिमित्तानिवदतीम् ॥ १ ॥ बालाअप्रौढबुद्धिरसि ॥ परबोधानुकूलवाक्योच्चारणेअकुशलेतियावत् ॥ २ ॥ अ

तनुविद्वेषरागाभिःप्रज्ञाभिःशास्त्रदृष्टिभिः ॥ रमेसहवयस्याभिस्तेनाहंश्रीमतीस्थिता ॥ ३० ॥ पश्यामियन्नयनरश्मिभिरिंद्रियैर्वाचित्तेनचेहहितदंगनकिंचिदेव ॥ पश्यामितद्विरहितंतुनकिंचिदंतःपश्यामिसम्यगितिनाथचिरोदयास्मि ॥ ३१ ॥ ॥ इत्यार्षेवा० वा० दे० मोक्षोपायेषुनि० पू० चूडालोपाख्यानेचूडालात्मलाभोनामैकोनाशीतितमःसर्गः ॥ ७९ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ एवमात्मनिविश्रांतांवदंतींतांवराननाम् ॥ अबुध्वातद्गिरामर्थंविहस्योवाचभूपतिः ॥ १ ॥ ॥ शिखिध्वजउवाच ॥ ॥ असंबद्धप्रलापासिबालासिवरवर्णिनि ॥ रंमसेराजलीलाभीरमस्वावनिपात्मजे ॥ २ ॥ किंचित्त्यक्त्वानकिंचिद्योगतोप्रत्यक्षसंस्थितम् ॥ त्यक्तप्रत्यक्षसद्रूपःसकथंकिलशोभते ॥ ३ ॥ भोगैरभुक्तैस्तुष्टोहमितिभोगान्जहातियः ॥ रुषेवासनशय्यादीन्सकथंकिलशोभते ॥ ४ ॥ भोगाभोगेपरित्यज्यखेशून्येरमतेतुयः ॥ एकएवाखिलंत्यक्त्वासकथंकिलशोभते ॥ ५ ॥ वसनाशनशय्यादीन्सर्वान्संत्यज्यधीरधीः ॥ यस्तिष्ठत्यात्मनैवैकःसकथंकिलशोभते ॥ ६ ॥ नाहंदेहोन्यथाचाहंनकिंचित्सर्वमेवच ॥ एवंप्रलापोयस्यास्तिसकथंकिलशोभते ॥ ७ ॥ यत्पश्यामिनपश्यामितत्पश्याम्यन्यदेवयत् ॥ प्रलापइत्यसन्यस्यसकथंकिलशोभते ॥ ८ ॥

सबद्धप्रलापतामेवनाकिंचित्किंचिदित्याद्युक्तेर्दर्शयति ॥ किंचिदिति ॥ साकारस्यैवशोभाप्रसिद्धा यस्त्वाकारसामान्यंत्यक्त्वानिराकारतांगतःसशून्यप्रायःकथंशोभेतेत्यर्थः ॥ ३ ॥ भोगैरभुक्तैस्तुष्यामीतियस्त्वयोक्तंतदप्यसबद्धमित्याह ॥ भोगैरिति ॥ रुषाक्रोधेनेव ॥ ४ ॥ एकैवाकाशसंकाशेकेवलेस्वहृदयेरमेइतियस्त्वयोक्तंतदप्यसंगतमित्याह ॥ भोगाभोगेइति ॥ स्वयंसाक्षाद्भोगोमित्रभृत्यादीनामाभोजनमाभोगश्चेत्यनयोःसमाहारपरित्यज्यतत्साधनंवित्ताद्यखिलंचत्यक्त्वायएकएवशून्येखेपिशाचवद्रमतेसकिलशोभते इतिकथंसंगच्छतामित्यर्थः ॥ ५ ॥ धीरधीःअतिक्रोधादिवधैर्यमात्रबलेनशीतोष्णक्षुत्तृषादिदुःखानिसहमानइत्यर्थः ॥ ६ ॥ इदंचाहमिदंनाहमितियदुक्तंतदप्यसबद्धमित्याह ॥ नाहमिति ॥ ७ ॥ पश्यामियन्नयनरश्मिभिरिंद्रियैर्वेत्यंतेयदुक्तंतत्तुसुतरामसंगतमितिनैतेशोभाहेतवइत्युपसंहरति ॥ यदिति ॥ ८ ॥

॥ ९ ॥ १० ॥ कष्टमिति ॥ नचेदिहापेदीन्महतीमिनष्टिरित्यादिमुनेरितिभाव ॥ ११ ॥ अंगेतिरामसंबोधने ॥ १२ ॥ खेगमागमोदेवषत्सचारस्तद्विषयेइच्छावभूव ॥ तादृशावारम्भरावषस्यारितिभाव ॥ १३ ॥ १४ ॥ एकंवनि ॥ अर्थाद्राज्ञ शत्रुजयाययद्विमिहायनप्रवासकालेइतिगम्यते ॥ अन्यथातत्पराधीनायास्तस्या एकांतनिरतत्वायोगात् ॥ ऊर्ध्वगस्यप्राणपवनस्यचिरत्वपरसिद्ध्यनुकूलभूमध्यादिदेशनिरोधाभ्यासम ॥ १५ ॥ खेचरसिद्धिप्रयोजककियाप्रसंगेनराम क्रियासामान्येनिमित्तजिज्ञासुराक्षिपति ॥ यदिदमिति ॥ यदिदस्थावरजंगमचजगत्तत्सर्वस्पंदच्युतक्रिययानिष्पादितदृश्यते विनाकर्मादिकारकस्पंदकस्याप्युत्पत्तेरदर्शनात् ॥ तर्हिसतिक्रियानाम स्पंदस्यकथनिष्पत्ति निःस्पंदस्याकुटस्थस्यात् आद्येआत्माश्रयोऽनवस्थावा द्वितीयेव्याघातःअविराम फलानवस्थाचेतिकथक्रियानाम्नोवस्तुनउत्पत्तिरनुभूयतेअनुभवपथमारोहतिनव

तस्माद्बालासिमुग्धासिचपलासिविलासिनि ॥ नानालापविलासेनक्रीडामिक्रीडसुंदरि ॥ ९ ॥ प्रविहस्याट्टहासेनशिखिध्वजइतिप्रियाम् ॥ मध्याह्नेस्नातुमुत्थायनिर्जगामांगनागृहात् ॥ १० ॥ कष्टनात्मनिविश्रांतोमहद्वांसिनबुद्धवान् ॥ राजेतिखिन्नाचूडालास्वव्यापारपराभवत् ॥ ११ ॥ तदातथागतत्रायताहृगाशययोस्तयो ॥ तानि पार्थिवलीलानि कालोबहुतिथोययौ ॥ १२ ॥ एकदानित्यवत्सायानिरिच्छायाअपिस्वयम् ॥ चूडालायाबभूवेच्छालीलयाखगमागमे ॥ १३ ॥ खगमागमसिद्ध्यर्थमथसानृपकन्यका ॥ सर्वभोगाननादृत्यसमागम्यचनिजनम् ॥ १४ ॥ एकैवैकांतनिरतास्वासनावस्थितागिका ॥ ऊर्ध्वगप्राणपवनचिराभ्यासचकारह ॥ १५ ॥ ॥ श्रीरामउवाच ॥ ॥ यदिददृश्यतेकिंचिज्जगत्स्थावरजंगमम् ॥ स्पंदच्युतंक्रियानाम कथमित्यनुभूयते ॥ १६ ॥ कस्यस्पंदविलासस्यघनाभ्यासस्यमेवद ॥ ब्रह्मन्खगमनाद्येतत्फलयत्नैकशालिन ॥ १७ ॥ आत्मज्ञोवाप्यनात्मज्ञ सिद्ध्यर्थलीलयाथवा ॥ कथससाधयत्येतद्यथातद्वदमेप्रभो ॥ १८ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ त्रिविधंसंभवत्यगसाध्यंवस्त्विहसर्वत ॥ उपादेयचहेयचतथोपेक्ष्यचराघव ॥ १९ ॥

त्यथ ॥ १६ ॥ एवमाक्षिप्यप्रस्तुतपृच्छति ॥ कस्येति ॥ एतत्खगमनादिसिद्धिजातकस्यस्पंदविलासस्यफलतद्वपिवदेत्यथ ॥ १७ ॥ अनात्मज्ञ सिद्ध्यर्थआत्मज्ञोलीलयावाएतत्सिद्धिजातकथमनक्रमणससाधयतितद्वपिवदेत्यथ ॥ १८ ॥ भवेदयमात्माश्रयानवस्थादिकोदोषोयदिक्रियास्वरूपमात्रसिद्ध्येकारकापेक्षास्यात् नतुतथाकिंतुक्रियासाध्यस्यफलस्य फलनिष्पत्तयेहिप्रयत्तानिकारकाणिनांतरीयकतयाक्रियामपेक्षन्ते ॥ तथाहिफलस्यसाध्यताकारकाणांसाधनताचव्यपदेष्टुशक्यते ॥ तथाचसाध्यसाधनोभयविलक्षणाक्रियानसाध्यापेक्षितसाधनेभ्य साधनांतरमपेक्षतइतितस्याःसक्रियकूटस्थस्यवाकारणमितिविकल्पानिरवकाशएवेत्याशयेनवसिष्ठउत्तरमप्रसमाधानानुकूलगोचरवस्तुसाधारणंक्रियासाध्यमविभज्यदर्शयति ॥ त्रिविधमिति ॥ उपादानबुद्धिविषयीभूतवस्तुउपादेयप्रवृत्तिविषय हानबुद्धिविषयहेयनिवृत्तिविषय उपेक्षाबुद्धिगम्यमुपेक्ष्यतदुभयाभावेपि कथंचिदुपादानेनोपेक्षयापवर्त्य त्वमितिलोकव्यवहारदर्शनादीर्णसाध्यत ॥ १९ ॥

तेषुफलवैलक्षण्यदर्शयति ॥ आत्मभूतमिति ॥ आत्मनःस्वस्यभूतमनुकूलम् ॥ एतयोर्हेयोपादेययोर्मध्यमांतरालिकम् ॥२०॥ आह्लादनकरंसाक्षात्परंपरयावासुखानुकूलम् ॥ दुःखनिवारणसाधनस्यापिसुखानुकूलत्वादेवतत्साधनोपादानसिद्धेरितिभावः ॥ तद्विरुद्धसुखविघाति ॥ दुःखस्यापिस्वास्थ्यसुखविघातित्वादेवद्वेष्यत्वादितिभावः ॥ २१ ॥ त्रयएतेसाध्यभेदाअज्ञानामेवेत्याह ॥ सन्मतेरिति॥२२॥विदुषस्तृतीयकल्पाभ्युगमेपिनकश्चिद्दोषइत्याशयेनाह ॥ केवलमिति ॥ २३ ॥ एकमेववस्तुएकस्यैवपुरुषस्यबोधरोग वैराग्यावस्थाभेदेनत्रेधासपद्यतेइत्याशयेनाह ॥ ज्ञस्येति ॥ एवंसिद्ध्यर्थलीलयाथवाइतिप्रश्नाशयोरुपपत्तिमुक्त्वाकथंसंसाधयत्येतदित्यंशसमाधानंश्रावयति ॥ शृण्वित्यादि ना ॥ २४ ॥ तत्रसिद्धितारतम्येचिराचिरयत्नापेक्षायाचनिमित्तान्याह ॥ देशेति ॥ २५ ॥ एषादेशादीनाचतुर्णांमध्येश्रीशैलाद्युत्तमदेशादिचतुष्टयमेलनेशीघ्रंसिद्धिलाभायो गमत्रजपादिक्रियायाइतरदेशाद्यनुष्ठितक्रियापेक्षयाप्राधान्यस्योत्कर्षस्यकल्पनाभवति ॥ फलोत्कर्षोपितदनुसार्येवेत्याह॥सिद्धादीति ॥ यतस्तसिद्धादयःफलोत्कर्षक्रमाअ

आत्मभूतंप्रयत्नेनउपादेयंचसाध्यते॥हेयंसंत्यज्यतेज्ञात्वाउपेक्ष्यंमध्यमेतयोः॥ २० ॥ यद्यदाह्लादनकरमादेयंतच्चसन्मते॥ तद्विरुद्धम नादेयमुपेक्ष्यंमध्यमंविदुः॥ २१ ॥ सन्मतेर्विदुषोज्ञस्यसर्वमात्ममयंयदा॥ त्रयएतेतदापक्षाःसंभवंतिनकेचन॥ २२ ॥ केवलंसर्वमेवे दंकदाचिल्लीलयातया॥ उपेक्षापक्षनिक्षिप्तमालोकयतिवानवा॥ २३ ॥ ज्ञस्योपेक्षात्मकंनाममूढस्यादेयतांगतम्॥ हेयंस्फारविराग स्यशृणुसिद्धिक्रमःकथम्॥ २४ ॥ देशकालक्रियाद्रव्यसाधनाःसर्वसिद्धयः॥ जीवमाह्लादयंतीहवसंतइवभूतलम्॥ २५ ॥ मध्येचतु र्णामेवैषांक्रियाप्राधान्यकल्पना॥ सिद्ध्यादिसाधनेसाधोतन्मयास्तेयतःक्रमाः॥ २६ ॥ गुटिकांजनखड्गादिक्रियाक्रमनिरूपणम्॥ त त्रासतांचदोषोत्रविस्तारःप्रकृतार्थहा ॥ २७ ॥ रत्नौषधितपोमंत्रक्रियाक्रमनिरूपणम् ॥ आस्तामेवकिलैषोपिविस्तारःप्रकृतार्थहा ॥ २८ ॥ श्रीशैलेसिद्धदेशेचमेर्वादौवानिवासतः॥ सिद्धिरित्यपिविस्तारःकृतार्थप्रकृतार्थहा॥ २९ ॥

पितन्मयास्तादृशक्रियोत्कर्षानुसारिणइत्यर्थ. ॥ २६ ॥ अस्त्वेवंकिनतस्तत्राह ॥ गुटिकेति ॥ तत्रखगमनादिसाधनानिसिद्धगुटिकासिद्धांजनसिद्धखड्गसिद्धपादुकादीन्यपि उड्डामरतत्रयोगिनीकल्पादिविस्तृतबहुग्रंथप्रसिद्धानिसंति ॥ कथंसंसाधयत्येतद्यथावद्ब्रह्मेप्रभोइतित्वदीयप्रश्नस्यतक्रियाक्रमनिरूपणकर्त्तव्यमितिचेदभिप्रायस्तर्ह्यविस्तृतो त्त्यात्तदसंभवात्तद्विस्तारःकार्यः ॥ तेननतत्रतासुसिद्धिषुविषयेअसतामजिज्ञासूनामतत्त्वविदांचत्वदतिरिक्तश्रोतॄणांदैवादभिलाषोदयेतत्रैवप्रवृत्त्यामहान्दोषःस्यात्तवापिसवि स्तारःप्रकृतस्यात्मतत्त्वश्रवणार्थस्यविघ्नरूपत्वाद्विघातकइतिनतन्निरूपणमत्रोचितमित्यर्थः ॥ २७ ॥ एषन्यायोमणिमंत्रादिसाध्यसिद्धिक्रमनिरूपणेश्रीशैलादिसिद्धदेशनि वाससाध्यसिद्धिक्रमनिरूपणेचयोज्यइत्याह ॥ रत्नेतिद्वाभ्याम ॥ २८ ॥ हेकृतार्थेतिरामसंबोधनतासांसिद्धीनात्वादृशदृष्ट्यातुच्छतेतिद्योतनार्थम ॥ २९ ॥

१ मूढविरागावस्थेतिक्वचित्पाठः

तर्हिमयथाप्ययप्रपन्नइतिरामस्यविषादोमाभूदितिपस्तुतज्ञानवार्थोपयोग्यानुषंगिकखगमादिसिद्धिसाधनंवर्ण्यमानकथासंबद्धमविस्तारमाणायामक्रमभ्यावयति ॥ तस्मा
दिति ॥ ३० ॥ तथार्द्यायमनियमप्रतिष्ठतद्वाजमदर्शनेनसंक्षिप्याह ॥ अतस्त्वादिति ॥ साध्यार्थाद्दितरा साधनार्थाभ्यासनास्त्यकास्थानकानिसिद्धाद्यासनानिआदिपदात्समका
यशिरार्पासनानिश्चलतानासाग्रप्रेक्षणमित्यादियोगशास्त्रोक्तक्रियाक्रमपरिग्रह ॥ ३१ ॥ तमेवक्रियाक्रममवयुत्यप्रपंचयति ॥ भोजनेति ॥ साधुसम्यग्योगशास्त्रार्थस्यभा
वनात्परिशीलनात् ॥ ३२ ॥ ३३ ॥ त्यागरेचनेआदानेपूरकनिरोधेकुंभकेचप्रशमभ्यस्तेपुतज्ज्ञस्ययोगिन प्रभुत्वात्प्राणस्वामित्वसंपत्तेर्लौकिकस्यपुंसःप्रभोर्भृत्याइवस
र्विदाःप्राणविधेयतास्वाधीनतायांतीत्यर्थ ॥ ३४ ॥ प्राणानांस्वाधीनत्वेतत्संबद्धसिद्धीनामपिस्वाधीनतासिद्धेतीत्याह ॥ राज्येति ॥ सर्वस्याधिकारिण ॥ ३५ ॥ इदानीं

तस्माद्धिख्विध्वजकथाप्रसंगपतितामिमाम् ॥ प्राणादिपवनाभ्यासक्रियांसिद्धिफलांशृणु ॥ ३० ॥ अतस्त्वाखिलास्त्यकासाध्यार्थेतरवासना ॥ गुदादिद्वारसंकोचान्स्थानकादिक्रियाक्रमे ॥ ३१ ॥ भोजनासनशुद्ध्याचसाधुशास्त्रार्थभावनात् ॥ स्वाचारात्सुजनासंगात्सर्वत्यागात्सुखासनात् ॥ ३२ ॥ प्राणायामघनाभ्यासात्रामकालेनकेनचित् ॥ कोपलोभादिसंत्यागाद्भोगत्यागाच्चसुव्रत ॥ ३३ ॥ त्यागादाननिरोधेषुभृशयांतिविधेयताम् ॥ प्राणाःप्रभुत्वात्तज्ज्ञस्यपुंसोभृत्याइवाखिला ॥ ३४ ॥ राज्यादिमोक्षपर्यंता समस्ताएवसंपद ॥ देहानिलविधेयत्वात्साध्याःसर्वस्यराघव ॥ ३५ ॥ परिमंडलिताकारामर्मस्थानसमाश्रिता ॥ आंत्रवेष्टनिकानामनाडीनाडीशताश्रिता ॥ ३६ ॥ वीणाग्रावर्तसदृशीसलिलावर्तसन्निभा ॥ लिप्यार्धोंकारसंस्थानाकुंडलावर्तसंस्थिता ॥ ३७ ॥ देवासुरमनुष्येपुमृगनक्रखगादिपु ॥ कीटादिष्वब्जजातेपुसर्वेपुप्राणिपूदिता ॥ ३८ ॥

सर्वसिद्धीनांदेहानिलविधेयत्वमुक्त्वापुनर्धारयितुसर्वदेहमध्यगदासमस्तिसहस्रशास्त्रप्रधाननाडीशताश्रितामूलाधारादारभ्यआब्रह्मरंध्रसमष्टुचक्रेष्वनुप्रविश्यनिर्गतामूलाधारेसाध
मिथलपवटनांत सूक्ष्मकुंडलीनिराश्लिंगभोगिपुच्छानाशीवयपयति ॥ परिमंडलिताकारेत्यादिना ॥ परितःअष्टशताशाखाभि परिवेष्टितत्वात्परिमंडलिताकाराअतएवमीमांसामपिना
डीभिर्वेष्टमारामवेष्टनिकानाम ॥ ३६ ॥ तांमूलाधारेस्वांगगतकुंडलिनीसंस्थानानुरूप्येणवर्णयति ॥ वीणेति ॥ वीणादंडस्याग्रमूलभागेप्रसिद्धोरेखासमकलशीमूलपरिवसन
रूप सलिलपरिवसनरूपावायआवर्तस्तत्सदृशी ॥ लिप्यालेखनेनप्रदर्शनितुओंकारस्याधमर्धोंकारस्तस्यसंस्थानमिवसंस्थानंयस्या ॥ द्रविडाक्षरेपूर्वार्धमिवनागराक्षरेउत्तरा
र्धमिवचतत्संस्थानंलभ्यमित्यर्थ ॥ अर्धनपुंसकमित्येकदेशिनासमास ॥ ओमाङ्गाश्चेतिपररूपम् ॥ ३७ ॥ इयचनमनुष्यस्येवकिंतुसर्वप्राणिशरीरेष्वित्याह ॥ देवेति ॥ ३८ ॥

शीतेनार्तं शीतार्त्तिनिवारणायदृढंबद्धमंडलइतियावत् ॥ तथाविधस्यसुभस्यभोगींद्रस्यभोग कायस्तद्वद्बद्धंमंडलंयया ॥ सिताशुभ्रा ॥ कल्पाग्निनाविगलताअंतर्वलयाकारेर खास्फुटितेनेंदुनातुल्यबद्धाकुंडलीवलयाकृतिर्यया ॥ अथवाकल्पतेजरणसमर्थोभवतीतिकल्पोग्निर्जाठराग्निस्तेनविगलन्नूयोमूर्ध्नियोगशास्त्रप्रसिद्धश्चंद्रःसएवविलीयमूलाधा रेप्रसृतोघनीभूयतत्रबद्धकुंडलाकृतिस्तद्वत्स्थितेत्युत्प्रेक्षा ॥ ३९ ॥ ऊरुपदेनऊरुमूलसंधिर्गुदलक्षणयोच्यतेततआरभ्यभ्रूमध्यपर्यंतयानिरंध्राणितानिस्पृशंतीतिष्वनुस्यूतामनोवृ त्तिभिरतश्चचलाबहिश्चपवमानेनप्राणादिनासस्पंदा ॥ ४० ॥ तस्यामूलेंत.सार्द्धत्रिवलयाकाराकुंडलिनीसंज्ञाचिच्छक्तिंदर्शयति ॥ तस्याइति ॥ तस्मिन्मूलाधारेवीणामूलेदु र्लक्षेणनर्त्तीवेगेनेवलसतीपरमसूक्ष्मापराख्यासर्वशब्दमूलभूतागतिःशब्दब्रह्मात्मिकास्फूर्त्तिः सैवप्राणसंगान्नाभिहृदयकंठदेशेषूत्तरोत्तरंव्यक्ततरापश्यंतीमध्यमावैखरीत्यादिभेदा नुभजतेइति ॥ तथाचोक्तमत्रशास्त्रे ॥ चैतन्यंसर्वभूतानांशब्दब्रह्मेतिमेमतिर्विदु ॥ तत्प्राप्यकुंडलीरूपंप्राणिनांदेहमध्यगम् ॥ वर्णात्मनाविर्भवतिगद्यपद्यादिभेदतइति ॥ सावेनाप्यु क्तम् ॥ यासामित्रावरुणसदनादुच्चरंतीत्रिषष्टिंवर्णानत्रप्रकटकरणैःप्राणसंगात्प्रसूते॥ तांपश्यंतींप्रथममुदितामध्यमांबुद्धिसंस्थांवाचंवक्त्रेकरणविशदांवैखरींचप्रपद्येइति॥४१॥

**शीतार्तंसुभभोगींद्रभोगवद्बद्धमंडला॥ सिताकल्पाग्निविगलदिंदुवद्बद्धकुंडली॥३९॥ ऊरोर्भ्रूमध्यरंध्राणिस्पृशंतीवृत्तिचंचला॥ अना रतंचसस्पंदापवमानेनतिष्ठति॥ ४०॥ तस्यास्त्वभ्यंतरेतस्मिन्कदलीकोशकोमले ॥ यापराशक्तिःस्फुरतिवीणावेगलसद्गतिः ॥ ४१ ॥ साचोक्ताकुंडलीनाम्नाकुंडलाकारवाहिनी॥ प्राणिनांपरमाशक्तिःसर्वशक्तिजवप्रदा॥ ४२॥ अनिशंनिःश्वसद्रूपारुषितेवभुजंगमी॥ संस्थितोर्ध्वीकृतमुखीस्पंदनाहेतुतांगता ॥ ४३ ॥ यदाप्राणानिलोयातिहृदिकुंडलिनीपदम् ॥ तदासंविदुदेत्यंतर्भूततन्मात्रबीजभूः ॥४४॥ यथाकुंडलिनीदेहेस्फुरत्यब्जइवालिनी॥ तथासंविदुदेत्यंतर्मृदुस्पर्शवशोदया॥४५॥ स्पर्शनंमृदुनान्योन्यालिंगिकातत्रयंत्रयोः॥ यथासंविदुदेत्युच्चैस्तथाकुंडलिनीजवात्॥ ४६ ॥**

सर्वासांप्राणेंद्रियबुद्ध्यादिशक्तीनामपिसत्तास्फूर्त्तिप्रवृत्तिनिर्वाहकत्वाज्जवप्रदा ॥ ४२ ॥ तत्रकथंप्राणशक्तिजवप्रदातदाह ॥ अनिशमिति ॥ सैवस्वमुखात्प्राणमूर्ध्वंक्षिपतिअ पानंचाधआकर्षतीत्यनिशंनिःश्वसद्रूपेत्यर्थः ॥ ४३ ॥ कथंबुद्धिशक्तिजवप्रदातदाह॥ यदेति ॥ यदाहृदिस्थितःप्राणःकुंडलिन्याआकृष्टःसन्अपानवृत्त्याकुंडलिनीपदया तितदाभूततन्मात्राण्यपंचीकृतभूतान्येवबीजमुपादानंयस्यतथाविधेअंतःकरणेभवतीतिभूर्जीवसंवित्स्मृतिसंकल्पाध्यवसायाभिमानरागादिवृत्तिभेदैरंतरुदेतीत्यर्थः ॥ ४४ ॥ कथंचेंद्रियशक्तिजवप्रदातदाह ॥ यथेति ॥ एवंप्राणबुद्ध्योराहितज्ञानक्रियात्मशक्तिःकुंडलिनीदेहेमृदु स्पर्शोविषयसन्निकर्षोयेषांतेषांचक्षुरादीनांवशोदयासतीदेहेयथायथा यादृशभोजकादृष्टदृष्टसामग्रीवैचित्र्येणस्फुरतितथातथातत्तदिंद्रियैरर्थविशेषस्फूर्तितत्फलभोगादिलक्षणासंविदुदेतीत्यर्थः ॥ ४५ ॥ कथंमृदुस्पर्शवशानुगातदाह ॥ स्पर्श नमिति ॥ कुंडलिनीजवात्तथास्फुरतियथामृदुनाचक्षुरादिनाविषयस्पर्शनंप्रथममुदेति ॥ तथाचतत्रयंत्रंकार्यकरणसंघातयुनक्तीतियंत्रयुःप्रमातातस्यवृत्तिद्वाराबहिर्निर्गतस्य बाह्यविषयेणसहअन्योन्यमालिंगनमन्योन्यालिंगिका ॥ भावेण्वुल् ॥ वृत्तिव्याप्तिप्रयुक्ताव्याप्तिरुदेति ॥ तयाचयथाविषयावरणभंगेउच्चैःस्फुटतरासंविद्वृद्धादिप्रथाउदेति तथातेनतेनप्रकारेणेत्यर्थः ॥ ४६ ॥

तममूलाधारस्थाया कुण्डलिन्याश्चक्षुरादिप्रवर्तनेनाभ्योद्धारमित्याशयेनाह ॥ तस्यामिति ॥ उत्पद्यते प्रतायते ॥ विलीयते संकुचति ॥ ४७ ॥ कथमुत्पद्यते विलीयते च तदाह ॥ नित्यमिति ॥ माप्यालनाकम्प्यपातोत्सुकतया अपानात्मना अधःप्रवेशोन्मुखया तया ॥ उक्तमुपसंहरति ॥ सेति ॥ सामानी साधारणी ॥ समानशब्दाज्ज्ञापेत्स्वार्थे वाप्यभिज्ञा पि हलन्तद्धितस्य नियलोप ॥ ४८ ॥ अपरिच्छिन्नायाश्चितामूलाधारमात्रमूलपरिच्छिन्नकुण्डलिन्यास्त्वत्वांशादुन्नव कथं किमर्थं चेति राम पृच्छति ॥ आकल्पादिति ॥ आकल्पादिति कालत ॥ सर्वमिति वस्तुतश्चापरिच्छिन्न ॥ देशकृतपरिच्छेदाभावस्यापि वस्तुकृतपरिच्छेदाभावेन भावदस्याशयेनोभयोरेवोपादानम् ॥ ४९ ॥ वसिष्ठस्तु तर्हि काल कृतपरिच्छेदाभावोपि तथा भूत एवेति पृथगुपादानस्य यम यदि स्पष्टीकरणाय तस्य पृथगुपादानं तर्हि देशकृतपरिच्छेदाभावेपि तत्समानमिति मितयानुवादव्याजेन दर्शयन्निराकाशयानिर्विषयायाश्चितार्श्चाकारणघटादिमोचरतया वाभिव्यक्त्यर्थं तदास विद्धुवेस्यत भूततन्मात्रबीजभूरिस्युकार्थं विस्तराद्विवरिष्यन् स्थूलसूक्ष्मदेहद्वयाकारपरिणतभूतसा

तस्यासमस्ता सयज्ज्ञानाख्योद्वदयकोशगा ॥ उत्पद्यतेविलीयतेमहार्णवइवापगा ॥ ४७ ॥ नित्यपातोत्सुकतयाप्रवेशोन्मुखयातया ॥ सासवसविदायीजंत्येकासामान्युदाहृता ॥ ४८ ॥ ॥ श्रीरामउवाच ॥ ॥ आकल्पादनवच्छिन्नाचित्सवित्सर्वमस्तिहि ॥ तस्मात्कुण्डलिनीकोशात्केनार्थेनोदय स्फुट ॥ ४९ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ सर्वत्रसर्वदासर्वंचित्सविद्वियतेनघ ॥ किंत्वस्याभूततन्मात्रवशादभ्युदय क्वचित् ॥ ५० ॥ सर्वत्रविद्यमानापिदेहेपुतरलायते ॥ सर्वगाप्यातप सौरोभित्त्यादौवैविजृम्भते ॥ ५१ ॥ क्वचिन्नपंक्तचित्स्पष्टक्वचिदुच्छन्नतांगतम् ॥ वस्तुवस्तुनिदृष्टतत्तत्सद्भावैर्विजृम्भितम् ॥ ५२ ॥ एतद्द्वय क्रमेणाहंशृणुवक्ष्यामितेनघ ॥ देहेस्वेचयथोदेतिमृशसविन्मयक्रम ॥ ५३ ॥ चेतनाचेतनभूतजातंव्योमतयाखिलम् ॥ सर्वंचिन्मात्रसन्मात्रशून्यमात्रंयथानभ ॥ ५४ ॥

देहेष्वपि वोविशेषाभिव्यक्तिरित्याह ॥ सर्वत्रेत्यादिना ॥ ५० ॥ मनुदेशकृतपरिच्छेदाभावे सवित्सर्वघनासेतेत्याशङ्क्योपाधिवशादेव तस्याः स्फुटीभावइति सदृष्टान्तमाचष्टे ॥ सर्वत्रेति ॥ तरलायते गुडो अवच्छदप्रतिबिम्बनाभ्यां द्विगुणीकृत्यप्रवशाद्बहलीभूता जलसूर्यकवद्बुद्धिचाञ्चल्याच्चपलीभवतीत्यर्थ ॥ तथोपाधिक्तबहलीभावेन स्फुटीभावे दृष्टान्तमाह ॥ सर्वगेति ॥ ५१ ॥ तथाप्युपाधिमालिन्यतारतम्येन चिदभिव्यक्तितारतम्यमित्याह ॥ क्वचिदिति ॥ मृच्छिलादिवस्तुनि तच्चिद्वस्तु अविद्याख्येनाभिभवात्तमधारिस्थशैत्यमिव नष्टमदर्शनगतम ॥ देवमनुष्यादिलिङ्गे नु स्पष्टमभिव्यक्तम ॥ वृक्षादिलिङ्गे पुच्छटाछन्नतामिव हि संवेदनविषयकाक्षमतांगतं दृष्टम ॥ चिदंशघनसत्तांशे तारतम्यमित्याह ॥ तदिति ॥ तेषां विविधोपाधीनां सर्वानुभवसिद्धं सद्भावैर्विलिङ्गैस्तत्सर्वमभिजृम्भितमनभिभूतमित्यर्थ ॥ ५२ ॥ उक्तमेवाभिव्यक्तितारतम्यं क्रमाद्दासर्गसमाप्तेर्निरूपयिष्यन् प्रतिजानीत ॥ एतदिति ॥ स्वेमनुष्यादिदेहे यथा पशुस्थावरादिदेहे यथा च दृशतारतम्येन ॥ ५३ ॥ तदुपोद्घातेन सूक्ष्मस्थूलभूताध्यासप्रपञ्चनाय सर्वाधिष्ठानसच्चिदेकरससर्वप्रपञ्चत उभयरूपमालतच्चमादानिर्दिशति ॥ चतनेति ॥ नभोनभोपदसम विभुसूक्ष्मश्च ॥ ५४ ॥

तस्मिंस्तथैवस्थितेमायाकल्पितैकदेशेआकाशादिसूक्ष्मभूतानांक्रमादध्यासात्तदेवभूतमात्रात्मरूपकंस्थितमित्याह ॥ तद्धीति ॥ ५५ ॥ ततन्मात्रपंचकंप्राणामनोबुद्धिज्ञाने द्रियकर्मेंद्रियमितिपंचधागतलिंगशरीरमूर्तिविवतयाप्रविश्यदीपाद्दीपशतमिवसंपन्नंस्वस्वसंविदमतर्भूताजन्मादिविकाराआदिपदाजाग्रदाद्यवस्थाभेदाश्चयस्मिंस्तथाविधंद्वि त्वंजीवभावमितियावत् ॥ लक्षसेलक्षयसि ॥ छांदसउपपदव्यत्यय. ॥ ५६ ॥ कानिचिल्लिंगारंभपरिशिष्टानिपंचकानिजीवस्यदेवमनुष्याद्याकारवासनानुसारिसंकल्पलव रूपिणास्वसत्तामात्रकेणैवपंचीकरणद्वारास्थूलदेहत्वंव्रजंति ॥ ५७ ॥ देहप्रकरणाद्धेमादित्वंधत्तूरादिस्थावरशरीरताम ॥ अथवातिर्यगादित्वमित्यादिपदादेवस्थावरदेहपरि पद. ॥ हेमादित्वमित्यनेनस्वर्णरजतखर्परोपलक्षितब्रह्माद्दत्वतदंतर्गतभुवनादिभोग्यतांचेत्यर्थ. ॥ ५८ ॥ अस्त्वेवंकिततस्तत्राह ॥ एवंहीति ॥ स्थितंसिद्धम ॥ तत्संधिष्ठानचैत न्यसर्वत्रास्तीतिघटाद्यपिचेतनंकिनस्यात्तत्राह ॥ चिदिति ॥ ५९ ॥ पंचकवशाच्चैतन्याभिव्यंजकप्राणादिपंचकघटितलिंगदेहप्रावान्यादेवमनुष्यदेहादौमुख्याचेतनाभि

तद्धिचिन्मात्रसन्मात्रमविकारंस्वनामयम् ॥ क्वचित्स्थितसंविदेवभूततन्मात्रपंचकम् ॥ ५५ ॥ तत्पंचधागतंद्वित्वंलक्षसेत्वंस्वसंविदम् अंतर्भूतविकारादिदीपाद्दीपशतंयथा॥५६॥ स्वसत्तामात्रकेणैवसंकल्पलवरूपिणा ॥ पंचकानिव्रजंतीहदेहत्वंतानिकानिचित्॥ ५७॥ कानिचित्तिर्यगादित्वंहेमादित्वंचकानिचित् ॥ कानिचिद्देशतादित्वंद्रव्यादित्वंचकानिचित् ॥ ५८ ॥ एवंहिपंचकस्पंदमात्रंजगदिति स्थितम् ॥ चित्संविदत्रसर्वत्रविद्यतेरघुनंदन ॥ ५९ ॥ केवलंपंचकवशाद्देहादौचेतनाभिधा ॥ जडस्पंदाभिधाक्वापिस्थावरादौजडाभि धा ॥ ६० ॥ यथाम्बुधौस्थितोवीचिरिवस्थलमिवास्थितः ॥ पंचकेपुनरथैतच्चिल्लोलरूपाजडान्विता ॥ ६१ ॥ इतःसौम्यइतोलोलःकिम ब्धिरितिनोयथा ॥ विकल्पादौतथैवैतत्पंचकंहिजडाजडम् ॥ ६२ ॥ देहादिपंचकंजीवःस्पंदःशैलादिकंजडम् ॥ स्थावराद्यनिलस्पंदिस्व भाववशतोनघ ॥ ६३ ॥

धा ॥ क्वापितिर्यक्षुलिंगस्थूलदेहयो समप्राधान्याज्जडस्पंदाभिधाजडचेतनाभिधा ॥ स्थावरादौनांलिंगस्यात संवेदनमाचलेनबहिर्जनैश्चेतनत्वाविभावनाज्जडाभिधाप्रसिद्धे त्यर्थ. ॥ ६० ॥ त्रिष्वपिचित्कथंतारतम्येनस्थितेत्यत्रदृष्टांतमाह ॥यथेति॥यथाद्विधाविलीनोघनसमुद्र सायंशिशिरपवनसंपर्काद्विलातटेक्रमाद्घनीभावात्तस्त्वब्धौनिश्चल स्थित. सन्द्रवप्रदेशेवीचिरिवचल ईषद्घनप्रदेशेईषच्चल. अत्यंतघनप्रदेशेस्थलमिवाचलश्चस्थितस्तथैवैषाचिन्नरतिर्यक्स्थावरदेहरूपेषुपंचकेषुलोलरूपाईषल्लोलाअत्यंतजाड्या न्विताचस्थितेत्यर्थ ॥६१॥ यथाक्वचिद्घनीभावेनलोलत्वाभावेपितस्यनाब्धित्वव्याघातस्तथास्थावरादिभावेपिनचिद्रूपताक्षतिरित्याह ॥इतइति॥ नोइतिकाकु ॥ किमब्धिर्वरि तिव्यपदेशोनभवतिकिंतुभवत्येवयथातथैवैतत्सुरनरतिर्यग्विकल्पादौचैतन्यमक्षतमित्यर्थः ॥ अथवायजडाजडविकल्पोऽप्यस्तपंचकधर्मएवनचिद्धर्मस्तस्यानिर्धर्मकत्वादि त्याशयेनाह ॥ पंचकंहीति ॥ ६२ ॥ पंचकेस्वभाववशतईदृशावहवोविकल्पादृष्टाइत्याह ॥ देहादीति ॥ देहाद्याकारपरिणतपंचकप्राणधारणाधीनस्पंदचैतन्याभ्याजीव श्चेतनस्तत्प्रयोजकस्पंदशैलादिकंजडमेव ॥ स्थावरादिशरीरगतुवाह्यानिलाधीनस्पंदिअतश्चेतनमित्यादिव्यवस्थितविकल्पा.स्वभाववशतोदृष्टाइत्यर्थः ॥ ६३ ॥

ननस्य स्यात्कथभाव स्वभाव स्थकथविरुद्धविकल्पात्मक स्यात् विरोधोहिपरसापेक्षः स्वोभावस्त्वनन्यापेक्ष यदिस्वीयोभाव स्वभावस्तथाप्यसौस्वमात्रसापेक्षोननरसापेक्ष इतिकथपरसापेक्षस्यविकल्पस्यस्वरूपनिमित्ततास्यादितिय दिपर्यनुयुज्यतताहित्ययास्वभावविहायवाक्पर्यनुयोक्तव्या ताएवहिचिज्ञादिशक्तरूपा ॥ स्वापुनरुक्तमार्थे स्यादित्याजनपत्यर्थेनन्यजात्यविरुद्धगमयत ॥ एवशीतोष्णादिधमपराहिमाग्न्यादिधर्मिपराशाकमर्नापिइतिएवमप्रकारैस्सर्वमपरिदृश्यतइत्यर्थ ॥ स्वभावादितिल्यक्तोप कमविपर्ययी ॥ ६४ ॥ अयवावाम पनपयनुयोज्यास्याद्वासनाक स्थितविकल्पसत्यमकार्थानुवादित्वननतत्पराधीनत्वात् किंतुगृहीतवासनांशानांतत्तद्विरुद्धविकल्पभावेन विकारित्वाल्लिमात्मनापचकानांस्थितएवपयनुयोजनयोग्यादित्याह ॥ गृहीतेति ॥ नाजिरविकल्पनविरोधमाभोच्छेश्वादितिभाव ॥ ६५ ॥ अथवासनानामप्यपराध पूर्व पूर्वविरुद्धविकल्पसहस्रवासनानुमारित्वात् अतएवाज्ञानविरुद्धविकल्पकल्पनामूलमन्विष्यनापुसाचित्तमितइतश्चविरुद्धविकल्पसहस्रेपनतुविपयस्तादिविक्षिप्तावासनाएवपयनु

वाच पयनुयोक्तव्या स्वभावाद्रघुनंदन॥शीतोष्णादिहिमाग्न्यादिवाक्तेनपरिदृश्यते ॥६४॥ गृहीतवासनांशानांपुष्टाभावविकारिणाम्॥स्थितयःपचशानांहियोज्यापयनुयोजने॥६५॥वासनास्तुविपर्यस्ताइतोनंतुमितश्चता ॥ पुंसाप्राज्ञेनशक्यन्तेसुखपयनुयोजितुम्॥६६॥अशुभंवाशुभंवापितेनपयनुयोज्यते॥प्रबुद्धवासनचान्यत्पचकसुप्तवासनम्॥६७॥ यत्रपर्यनुयोगस्यफलसमनुभूयते॥तत्रतत्प्रयुंजीतनाकाशमुष्टिभिः क्षिपेत्॥६८॥ तृणाग्रनिष्ठामेवाद्याःपचकानांहिराशय ॥विवेकनिष्ठा कीटाद्याएतेस्थावरजंगमा ॥६९॥ प्रसुप्तवासना केचित्यथास्थावरजातय ॥प्रबुद्धवासना केचिद्यथानरसुरादय ॥७०॥सवासनाविला केचिद्यथैतेतिर्यगादय ॥प्रक्षिप्तवासना केचिद्यथेनेमोक्षगामिन ॥७१॥ अयस्त्वासेवसवित्सुमनाबुद्ध्यादिका कृता ॥ हस्तपादादिसयुक्त संज्ञा पचकराशिभि ॥७२॥

पाजिनुशक्यन्तनस्वभावादयइत्याह ॥ वासनाइति ॥ ६६ ॥ पुंसामशुभेतियकृत्स्थावरादिभावेषुभेदवादिभावेषाप्रबुद्धवासनंसुप्तवासनंचपचकतिष्ठति ॥ तेनवासनैवतद्धेतुःपयनुयोज्यतइत्यन्वय ॥ ६७ ॥ किंचवासनापर्यनुयोगस्यतत्क्षयोपायेप्रयत्नकरणेनसफलता स्वभावादिपयनुयोगस्यनकिंचित्फलमस्तीत्याह ॥ यत्रेति ॥ ६८ ॥ अतएव वासनास्वपूर्णात्मलाभाप्रवाद्या स्थावरादयोपितृणाद्यस्यनिष्ठनिष्ठानुच्छायपनितृणाद्यनिष्ठा सपपतेविवेकनिष्ठादेवादिभोगशालिदेहाअपिकीटाद्याद्यमनुष्यान्ता सप पतइत्याह ॥ तृणाग्रेति ॥ ६९ ॥ अतएववासनास्वापप्रबोधतारतम्यादेवपचकेषुस्थावरादिवैचित्र्यमित्युदाहृत्यदर्शयति ॥ प्रसुप्तेतिद्वाभ्याम् ॥ ७० ॥ वासनाभिराविलेना स्वच्छतर्पचित्तेनसहिता सवासनाविला ॥ प्रक्षिप्तवासनास्त्यक्तवासना ॥ ७१ ॥ वासनावैचित्र्यादेवदेवनरादिपचकराशिराकाशभूमिगमनादिविचित्रव्यवहारक्षमहस्तपादा दिलक्षणकर्मेंद्रियसपन्नैर्देवनरादिपचकराशिभि स्वात्मस्वात्मसुखचित्तेवनरादियोग्यव्यवहारोचितामनाबुद्ध्यहंकारचित्तपचक्षुश्रोत्रप्राणरसनस्पर्शादिकाअंतर्बाह्यकरणरू पाऽहप्रा संकेता कृताअतएवताःप्रतिप्राणिविचित्रस्वभावादृश्यतइतिभाव ॥ ७२ ॥

तिर्यग्भि.पश्वादिभिस्तुचत्वारःपादाःशृंगेपुच्छंचेति पक्षिभिस्तुचंचु.पक्षौपुच्छंपादौचेति सर्पैस्तुफणाभोगःपुच्छमिति कृमिकीटैर्दंशमशकादिभिश्चस्वस्ववासनानुरूपव्यवहार
योग्याअवयवादिसंकेता कल्पिताइत्यर्थ ॥७३॥ आद्यंतमध्येषुचलैर्विकारिभिर्जडैश्च ॥ अधिष्ठानसद्रूपेणतुअचलैरजडैश्च ॥ ७४ ॥ एवंपंचकाख्यलिंगभेदाननंतानुपवर्ण्य
तेष्वेकतमस्यकस्यचित्कर्मोपासनसमुच्चयानुष्ठानफलसमष्टयहंभावप्राप्तस्यकश्चिदेकःसंकल्पपरमाणुरस्यसंसारनभोवृक्षस्यबीजमित्याह ॥ एषामिति ॥ समष्टिगोचरत्वादभि
व्याप्त.संकल्पोभिसंकल्पस्तल्लक्षण.परमाणु सर्गरूपाणामाकाशवृक्षाणांबीजंतेषुचसर्गाकाशवृक्षेषुइमानिपंचकानीत्यहोमायेत्यर्थ. ॥ ७५ ॥ सर्गाणामाकाशवृक्षत्वंयदुक्तंत

तिर्यगादिभिरप्यन्यैरन्याःसंज्ञाःप्रकल्पिताः॥ स्थावरादिभिरप्यन्यैरन्यान्याःसंविदःकृताः॥ ७३ ॥ इतिसाधोस्फुरंतीमेचित्राःपंचकरा
शयः॥ रूपैराद्यंतमध्येपुचलाचलजडाजडैः ॥ ७४ ॥ एषामेकोभिसंकल्पःपरमाणुर्महीपते॥ बीजमाकाशवृक्षाणांसर्गाणांतेष्विमा
नितु॥ ७५॥ इंद्रियाणिचपुष्पादिविषयामोदवर्तिहि॥ इच्छाभ्रमर्योराजंत्योमंजर्यश्चंचलक्रियाः ॥ ७६ ॥ लोकांतराणिस्वच्छानिगु
ल्मामूलंसमेरवः॥ पल्लवानीलजलदालतालोलादिशोदश॥ ७७॥ वर्त्तमानानिभूतानिभविष्यंतिचयानितत्॥ जयंतितान्यसंख्यानि
फलानिरघुनंदन॥ ७८॥ पंचबीजास्तएतेहिरामपंचकपादपाः॥ स्वयंस्वभावाज्जायंतेस्वयंनश्यंतिकालतः॥ ७९॥ स्वयंनानात्वमायां
तिचिरंजाड्यात्स्फुरंतिच॥ स्वविविक्ताःशमंयांतितरंगाइववारिधौ॥ ८०॥ इतोयांतिसमुत्सेधमितोयांतिशमंस्वयम्॥ एतेजाड्यवि
वेकाभ्यांतरंगाइवतोयधौ॥ ८१॥ येविवेकवशमालयंगतारामपंचकविलासराशयः॥ तेनभूयइहयांतिसंस्थितिंप्रभ्रमंतिजगतीत
रेमुहुः॥ ८२॥ ॥इ०वा०वा०दे०मोक्षोपायेषुनिर्वाण०पू०चू०पंचकविलासोनामाशीतितमःसर्गः॥ ८०॥ ॥ ७॥ ॥

त्पुष्पतदामोदादिकल्पनयोपपादयति ॥ इंद्रियाणीत्यादिना ॥ आदिपदादिंद्रियावयवेषुपुष्पावयवतायथोचितंयोज्या ॥ विषयलक्षणेष्वामोदेषुवर्त्तनशीलंतत्प्रधानमितियाव
त् ॥ चपलानाकर्मेंद्रियाणांक्रिया. ॥ ७६ ॥ स्वच्छानिस्वर्गादिलोकांतराणिगुल्माविटपाः ॥ समेरवोमेरुसहिताःसर्वेपर्वतामूलम् ॥ ७७ ॥ भूतानिचतुर्विधशरीराणि ॥ तत्त
स्यवृक्षस्य ॥ ७८ ॥ स्वभावात्स्वविवेकशून्यादात्मनः ॥ ७९ ॥ स्वस्माद्विविक्ताविवेकदृष्ट्यादृष्टाः ॥ ८० ॥ श्लोकद्वयोक्तमेवसंगृह्णाह ॥ इतइति ॥ इतःपराग्दृष्टेः ॥ इतःप्र
त्यग्दृष्टे. ॥ ८१ ॥ हेरामयेपंचकविलासराशयःआलयनिर्वासननाशपर्यंतंविवेकवशंगतास्तेइहसंसारेभूयोजन्ममरणदेहधारणादिसंस्थितिंनयाति इतरेतुजगतियथापूर्वंप्रभ्र
मत्येवेत्यर्थः ॥ ८२ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०अशीतितमःसर्गः ॥ ८० ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

फुडलिन्याःप्रसरनरोमोद्भवशमकमा ॥ सिद्धिसिद्धेक्षणोपायायथोपमितिवर्ण्यते ॥१॥ यदाप्राणानिलोयातिस्थितिंकुंडलिनीपरम् तदासविदुदेत्यतभूतन्मात्रबीजभूरितिबुद्धि शक्तिप्रधानत्वापपादनेभूतन्मात्रबीजभूरित्यशस्यस्फुटीकरणायस्थूलसूक्ष्मपंचकविचारसगमयन्खेचरादिसिद्धिबीजप्राणाभ्यासोपयुक्तमस्तुतकुंडलिन्यांप्राणापुनःप्र प्रकारमदर्शयति ॥ एतदिति ॥ तस्यस्थूलदेहात्मकस्यपंचकस्यांतरेमूलाधारेतस्यांप्रागवर्णितायांकुंडलिन्यामेतस्यलिंगात्मकपंचकस्यबीजमुपादानभूतसूक्ष्मप्रथमप्राणपंचकरू पणस्फुरतीत्यर्थ ॥ १ ॥ सामाणरूपेणात स्फुरिताकुंडलिनीमारुतधर्मेणस्वधर्मेणचस्पद स्पर्श संविदितिमिरूपकल्पनाभूत्वाकलाचिज्जीवोमन सकल्पोबुद्धिरहंकार पुर्यष्टक लिंगमित्यादिनामानिकलनादिम्यापारोपाधिभिर्लभतइत्याह ॥ सांतरितिभिस्त्रि ॥ १ ॥ ३ ॥ ४ ॥ तमस्यदशके प्रधानवसितत्स्थानभेदैर्विभज्यदर्शयति ॥ अपानतामिति ॥ ५॥

श्रीवसिष्ठउवाच॥ ॥एतत्पंचकबीजतुकुंडलिन्यातदंतरे॥ प्राणमारुतरूपेणतस्यांस्फुरतिसर्वदा ॥ १ ॥ सांत कुंडलिनीस्पदस्पर्शस विक्लामला ॥ कलोक्ताकलनेनाशुकथिताचेतनेनचित् ॥ २ ॥ जीवनाज्जीवतांयातामननाच्चमन स्थिता ॥ सकल्पाच्चैवसकल्पा बोधाद्बुद्धिरितिस्मृता॥ ३ ॥ अहंकारात्मतांयातासैषापुर्यष्टकाभिधा॥ स्थिताकुंडलिनीदेहजीवशक्तिरनुत्तमा ॥४॥ अपानतामुपाग त्यसततंप्रवहत्यध ॥समानानाभिमध्यस्थाउदानास्योपरिस्थिता॥ ५ ॥ अधस्त्वपानरूपैवमध्येसौम्यैवसर्वदा॥ पुष्टाप्युदानरूपैव पुम स्वस्थैवतिष्ठति॥६॥ सर्वयत्नमधोयातियदियन्नाधार्यते॥ तत्पुमान्मृतिमायातितयानिर्गतयाबलात् ॥ ७॥ समस्तैवोर्ध्वमा यातियदियुक्त्यानधार्यते॥ तत्पुमान्मृतिमायातितयानिर्गतयाबलात् ॥८ ॥सर्वयात्मनितिष्ठेत्स्यक्तोर्ध्वाधोगमागमौ ॥ तज्जतोहिं यतेव्याधिरतमारुतरोधत ॥ ९॥सामान्यनाडीवैधुर्यात्सामान्यव्याधिसंभव ॥प्रधाननाडीवैधुर्यात्प्रधानव्याधिसंभव ॥ १०॥ ॥ श्रीरामउवाच॥ ॥किंविनाशा किमुत्पादा शरीरेस्मिन्मुनीश्वर॥आधयोव्याधयश्चैवयथावत्कथयाशुमे॥ ११ ॥

वृत्तिभेदप्रयोजनमाह ॥ अधइति ॥ अपानतानावेशप्रयोजनमित्यर्थ ॥ अपानोदानाभ्यामाकृष्यमाणापिस्वयंसौम्यानिश्चलैव ॥ तदवष्टम्भत्वादेवपुष्टाबलवत्यप्यूर्ध्वं त्तिप्रधानरूपैवसतीस्वस्थैवतिष्ठतिनलिंगबहिरुत्क्रामयतीत्यर्थ ॥ ६ ॥ एवमधोवृत्तेरपिसाधिष्टभिकेत्याह ॥ सर्वप्रयत्नमिति ॥ यदिसामान्यवृत्त्यानधार्यतेतर्हिसाजीवसहिता नदरयासर्वप्रयत्नयास्यात्तथाआकृष्यमाणाअधोमार्गेणबहिर्यांति ॥ किमतस्तत्राह ॥ तदिति ॥ ७॥ प्रागुक्तस्पष्टमाह ॥ समस्तैवेति ॥ ८ ॥ अतएवप्राणापानगतिनिरोधा भ्यासेनसर्वमिसमानस्यतदवृत्तिजयेसर्वव्याधिक्षयमृत्युजयसिद्धिरित्याह ॥ सर्वयेति ॥ आत्मनिदेहे ॥ ९ ॥ एकशतप्रधाननाड्यस्तच्छाखास्तुसामान्यनाड्यस्तास्वन्नरसप्रा पिकाया समानवृत्तेर्वैधकफपित्तापुपचयादिधुयम्यापारस्तैवैतरवायुभिर्वैषम्येणान्नरसाकर्षणादल्परोगाणांमहारोगाणांचसंभवइत्याह ॥ सामान्येति ॥ १० ॥ कस्मा द्विनाशोयपांतांकिंविनाशा ॥ एवंकिमुत्पादा ॥ ११ ॥

तेपानिवृत्तिरौपधानुनयैस्तात्कालिकोपशम· सुखरूपस्यात्मनःपरिशेषात्सुखं तेपांमूलतोज्ञानेननाशोमोक्षइत्यर्थ. ॥ १२ ॥ मिथ अन्योन्यनिमित्तकत्वात्क्रमसंलग्ने कदाचि
युगपदुत्पन्नाद्वाह्यनिमित्तात्समयुगपत् कदाचित्सुखातरितेपर्यायेण ॥ १३ ॥ मौर्ख्यमज्ञानतन्मूले ॥ १४ ॥ तत्रआध्युद्भवनिमित्तान्याह ॥ अतत्त्वज्ञानेति ॥ आक्रमणनि
यहस्तविनातदभावादित्यर्थः ॥ त्वदिचित्तेतानवस्तिमितवायुप्रायास्वास्थ्यहेतुसूक्ष्मतामुत्सृज्यरागद्वेषेषुप्रसक्तेरितिशेषः ॥ १५ ॥ इदप्राप्तमिदनप्राप्तमितिचितायाइतिशेष. ॥
भयशोकनिमित्तप्राप्तौतत्प्रतीकारोपायापरिज्ञानलक्षणघनमोहददतीतिघनमोहदा. ॥ १६ ॥ इदानीशारीरव्याध्युद्भवहेतूनाह ॥ भृशमित्यादिना ॥ इच्छामौर्ख्येआंतरेतद्वे

श्रीवसिष्ठउवाच॥ ॥ आधयोव्याधयश्चैवद्वयंदुःखस्यकारणम् ॥ तन्निवृत्तिःसुखंविद्यात्तत्क्षयोमोक्षउच्यते ॥ १२ ॥ मिथःकदाचि ज्जायेतेकदाचित्समयेवच ॥ पर्यायेणकदाचिच्चआधिव्याधीशरीरके ॥ १३ ॥ देहदुःखंविदुर्व्याधिमाध्याख्यंवासनामयम् ॥ मौर्ख्य मूलेहितेविद्यात्तत्त्वज्ञानेपरिक्षयः ॥ १४ ॥ अतत्त्वज्ञानवशतःस्वेंद्रियाक्रमणंविना ॥ त्वदितानवमुत्सृज्यरागद्वेषेष्वनारतम् ॥ १५ ॥ इ दंप्राप्तमिदंनेतिजाड्याद्वाघनमोहदाः ॥ आधयःसंप्रवर्तंतेवर्षासुमिहिकाइव ॥ १६ ॥ भृशंस्फुरंतीष्विच्छासुमौर्ख्येचेतस्यनिर्जिते ॥ दु रन्नाभ्यवहारेणदुर्देशाक्रमणेनच ॥ १७ ॥ दुष्कालव्यवहारेणदुष्क्रियास्फुरणेनच ॥ दुर्जनासंगदोषेणदुर्भावोद्भावनेनच ॥ १८ ॥ क्षी णत्वाद्वाप्रपूर्णत्वान्नाडीनांरंध्रसंततौ ॥ प्राणेविधुरतांयातेकायेतुविकलीकृते ॥ १९ ॥ दौस्थित्यकारणंदोषाद्व्याधिर्देहेप्रवर्त्तते ॥ नद्याः प्रावृण्निदाघाभ्यामिवाकारविपर्ययः ॥ २० ॥ प्राक्तनीचैहिकीवापिशुभावाप्यशुभामतिः ॥ यैवाधिकासैवतथातस्मिन्योजयतिक्र मे ॥ २१ ॥ आधयोव्याधयश्चैवंजायंतेभूतपंचके ॥ कथंशृणुविनश्यंतिराघवाणांकुलोद्वह ॥ २२ ॥ द्विविधोव्याधिरस्तीहसामान्यःसार एवच ॥ व्यवहारस्तुसामान्यःसारोजन्ममयःस्मृतः ॥ २३ ॥ प्राप्तेनाभिमतेनैवनश्यंतिव्यावहारिकाः ॥ आधिक्षयेणाधिभवाःक्षीयंतेव्या धयोप्यलम् ॥ २४ ॥ आत्मज्ञानंविनासारोनाधिर्नश्यतिराघव ॥ भूयोरज्ज्ववबोधेनरज्जुसर्पोहिनश्यति ॥ २५ ॥

तू ॥ दुरन्नादयस्तुवाह्या. ॥ दुर्देशा.श्मशानादयः ॥ १७ ॥ दुष्टेषुनिशीथप्रदोषादिकालेष्वशनव्यवायादिव्यवहारेण ॥ दुर्भावाविषसर्पव्याघ्रतस्करादिशंकास्तेषांमनस्युद्भाव
नेन ॥ १८ ॥ नाडीनामन्नरसाप्रवेशेनक्षीणत्वाद्विगुणरसवातादिप्रवेशेनप्रपूर्णत्वाद्वाविधुरताकफपित्तादिप्रकोपेनव्याकुलताम् ॥ आघातादिनाविकलीकृते ॥ १९ ॥ दौस्थि
त्यमस्वास्थ्यतत्कारणव्याधिःसदेहस्याकारविपर्ययः ॥ २० ॥ साचाधिव्याधिसामग्रीप्राक्तनैहिककर्मानुसारेणमिलतीत्याह ॥ प्राक्तनीति ॥ २१ ॥ २२ ॥ सामान्य.पेलव
सारोदृढतरश्च ॥ व्यवह्रियतइतिव्यवहार.क्षुत्तृषास्त्रीपुत्रलालसादिस्तत्सभवश्च ॥ जन्ममयोजन्मादिविक्रियामूलम ॥ २३ ॥ अभिमतेनान्नपानस्त्रीपुत्रादिना ॥ २४ ॥ आ
धिर्व्याधि.भूयोभूयसालोकपरिशीलनाद्रज्जुतत्त्वप्रत्ययपर्यंतेनावबोधेन ॥ २५ ॥

मारण्यदीसर्वेषांतटवीरुधामिवसर्वेषामाधिव्याधिविलासानांसाम्याधिसक्षयोमूलहामूलोच्छेदीत्यन्वय ॥ २६ ॥ सामान्यव्याधिष्वनाधिजव्याधय सुचिकित्स्यादित्याशये नाह ॥ अनाधिमादिति ॥ अन्वैरक्षुपरंपरोपदिष्टैश्चिकित्सनै ॥ २७ ॥ लोलार्कादितीर्थेपुस्नानम मन्त्राऔषधानीत्याद्युपाया स्वकुश्चस्वद्रुजनादधिगमाम्यौषधानि चिकित्साशास्त्राणिषत्वयाज्ञायतएवेतिशेष ॥ २८ ॥ आधिभ्योव्याधिजन्मप्रकारंतच्चिकित्सोपायंचराम पृच्छति ॥ आधेरिति ॥ द्रव्यादीपधावितरयामंत्रपुण्यादिरूपयेति स्वसभावनयोक्ति ॥ २९ ॥ तत्रप्रथमतदुभयप्रकारमाह ॥ चित्तेइत्यादिना ॥ विधुरितेआधिभि क्षुब्धे ॥ उक्तमर्थंदृष्टांतेनोपपादयति ॥ तथाहीतिसार्धेन ॥ अग्रपुरोमार्गम्

आधिव्याधिविलासानांरामसाराधिसक्षय ॥ सर्वेषांमूलहाप्रावृण्नदीघतटवीरुधाम् ॥ २६ ॥ अनाधिजाव्याधयस्तुद्रव्यमन्त्रशुभक्र मैः ॥ चिकित्सकादिशास्त्रोक्तैर्नश्यंत्यन्यैरिहाथवा ॥ २७ ॥ स्नानमन्त्रौषधोपायावक्तुश्चाधिगतानिच ॥ त्वयाचिकित्साशास्त्राणिकिमन्य दुपदिश्यते ॥ २८ ॥ ॥ श्रीरामउवाच ॥ ॥ आधे कथंभवेद्व्याधि कथंचसविनश्यति ॥ द्रव्यादितरयायुक्त्यामंत्रपुण्यादिरूपया ॥ २९ ॥ श्रीवसिष्ठउवाच ॥ ॥ चित्तेविधुरितेदेह सक्षोभमनुयात्यलम् ॥ तथाहिरुषितोजंतुरग्रमेवनपश्यति ॥ ३० ॥ अनवेक्ष्यपुरोमार्गमसमा गमनुधावति ॥ प्रस्तमार्गमुत्सृज्यशरार्तोहरिणोयथा ॥ ३१ ॥ सक्षोभात्साम्यमुत्सृज्यवहतिप्राणवायव ॥ देहेगजप्रविष्टेनपयांसीव सरित्तटे ॥ ३२ ॥ असमंवहतिप्राणेनाड्योयांतिविसंस्थितिम् ॥ असम्यक्संस्थितेभूपेयथावर्णाश्रमक्रमा ॥ ३३ ॥ काश्चिन्नाड्य प्रपूर्णं त्वयांतिकाश्चिच्चरिक्तताम् ॥ प्राणाविधुरितेदेहमवंत सरितोयथा ॥ ३४ ॥ कुजीर्णत्वमजीर्णत्वमतिजीर्णत्वमेववा ॥ दोषायैवप्रयात्य न्नप्राणसंचारदुःक्रमात् ॥ ३५ ॥ यथाकाष्ठानिनयतिभ्रार्वादेशंसरिद्रय ॥ तथान्नानिनयत्यंत प्राणवात स्वमाश्रयम् ॥ ३६ ॥ यान्य न्नानिनिरोधेनतिष्ठंत्यंत शरीरके ॥ तान्येवव्याधितायांतिपरिणामस्वभावत ॥ ३७ ॥ ॥ एवमाधेर्भवेद्व्याधिस्तस्याभावाच्चनश्यति ॥ यथामन्त्रैर्विनश्यंतिव्याधयस्तत्क्रमंशृणु ॥ ३८ ॥

॥ ३० ॥ ३१ ॥ शार्ङ्गीतिकेपितथैवआधिक्षुताःसक्षोभात्प्राणवायव साम्यमुत्सृज्यामार्गेणवहंति ॥ यथागजस्यप्रविष्टेनप्रवेशेनक्षुब्धानिपयांसिसरितस्तटेअमार्गेवहंतितद्वत् ॥ ३२ ॥ असमंविषमम् ॥ विसंस्थितिंकफपित्तादिपूर्णतामयुक्तविषमसंस्थानताम् ॥ ३३ ॥ तदेवाह ॥ काश्चिदिति ॥ प्राणैराविधुरितेसर्वतोविक्षुब्धीकृतदेहे ॥ सरितोनाड्य स्रो तांसीव ॥ ३४ ॥ ३५ ॥ समानाख्यःप्राणवात स्वमाश्रयंसर्वशरीरंभुक्तान्यन्नानिरसीकृत्यनयति ॥ मध्येतुसमानएषहेतद्धुतमन्नंसमनयतीतिश्रुतेरितिभाव ॥ ३६ ॥ धातुवै पम्यपरिणामस्वभावत ॥ ३७ ॥ उपसंहरति ॥ एवमिति ॥ अभावान्नाशाम् ॥ ३८ ॥

हरीतक्या फलानि हरीतक्य ॥फलेलु पिहरीतक्यादिपुव्यक्तिरितिनियमान्नवचनेयुक्तवद्भाव ॥ तथायरलवादयोवायुवह्निभूजलादिबीजात्मकामन्त्रवर्णामात्रिकभावनावशतो
नाडीपुन्याप्याकारपरिणतान्नरसानामुत्सारणपाचनादिकार्यंकुर्वंतीत्यर्थ ॥ ३९ ॥ आध्युपशमोपायानाह ॥ शुद्धयेत्यादिना ॥ ४० ॥ ४१ ॥ ४२ ॥ प्रासंगिकप्रश्नोत्तर
मुपसंहृत्यप्रकृतसिद्धिहेतुनिरूपणप्रस्तौति ॥ आधीति ॥ ४३ ॥ पुर्यष्टकाख्यस्यलिंगात्मनोजीवस्याधारभूताम् ॥ ४४ ॥ आपूर्यकूर्मनाड्याप्राणमवष्टभ्येत्यर्थः ॥ तथाचप
तजले.सूत्रम ॥ कूर्मनाड्यास्थैर्यमिति ॥ कंठकूपादधउरसिकूर्माकारानाडीतस्याकृतसंयम स्थैर्यंलभतेयथासर्पोगोधावेतितद्भाष्यम् ॥ कायस्यापीनतागरिमाख्यासिद्धिरपि
तथाताद्दशीभैरवीसिद्धातीत्यर्थ ॥४५॥ केनतर्ह्यूर्ध्वंनभोगतिसिद्धिस्तदाह ॥यदेत्यादिना॥यदापूरकेणपूर्णेदेहांतरायतोमूलाधारादारभ्यब्रह्मरंध्रपर्यंतदीर्घीकृत्योर्ध्वमाकृष्टःप्राण

यथाविरेकंकुर्वंतिहरीतक्यःस्वभावतः ॥ भावनावशतःकार्यंतथायरलवादयः ॥ ३९ ॥ शुद्धयापुण्ययासाधोक्रिययासाधुसेवया ॥
मनःप्रयातिनैर्मल्यंनिकषेणेवकांचनम् ॥ ४० ॥ आनंदोवर्धतेदेहेशुद्धेचेतसिराघव ॥ पूर्णेंदावुदितेत्यत्रनैर्मल्यंभुवनेयथा ॥ ४१ ॥ स
त्वशुद्ध्यावहंत्येतेक्रमेणप्राणवायवः ॥ जरयंतितथान्नानिव्याधिस्तेनविनश्यति ॥ ४२ ॥ आधिव्याध्योरितिप्रोक्तौनाशोत्पत्तिक्रमौत्व
यि ॥ कुंडलिन्याःकथायोगादधुनाप्रकृतंशृणु ॥ ४३ ॥ पुर्यष्टकपराख्यस्यजीवस्यप्राणनामिकाम् ॥ विद्धिकुंडलिनीमंतरामोदस्येवमं
जरीम् ॥ ४४ ॥ तांयदापूरकाभ्यासादापूर्यस्थीयतेसमम् ॥ तदेतिमैरवंस्थैर्यंकायस्यापीनतातथा ॥४५॥ यदापूरकपूर्णांतरायतप्राण
मारुतम् ॥ नीयतेसंविदेवोर्ध्वंसोढुंघर्मक्लमंश्रमम् ॥ ४६ ॥ सर्पीवत्वरितैवोर्ध्वंयातिदंडोपमांगता ॥ नाडीःसर्वाःसमादायदेहबद्धाल
तोपमाः ॥ ४७ ॥ तदासमस्तमेवेदमुत्प्लावयतिदेहकम् ॥ नीरंध्रंपवनापूर्णंभस्त्रेवांबुततांतरम् ॥ ४८ ॥ इत्यभ्यासविलासेनयोगेनव्यो
मगामिना ॥ योगिनःप्राप्नुवंत्युच्चैर्दीनाइंद्रदशामिव ॥ ४९ ॥

मारुतोयस्मिन्कर्मणितद्यथास्यात्तथासंवित्कुंडलिनीप्राणनिरोधोद्भूतमूष्माणतत्प्रयुक्तशारीरक्लमानसंश्रमचाभ्यासपाटवेनामृताप्लावनेनचसोढुंसत्सकर्तुमूर्ध्वंनीयते ॥ ४६ ॥
नीयमानाचसाआकर्षणाद्दंडोपमादीर्घतांगतासतीसर्पीवत्वरितैवोर्ध्वमभ्यासपाटवाद्याति ॥ कथयातितदाह ॥ नाडीरिति ॥४७॥ तदानाडीद्वारानीरध्रनिरवकाशयथास्यात्त
थापवनेनापूर्णंलघुत्वमापन्नसमस्तमापादमस्तकमिददेहककूपादूर्ध्वमाकृष्यमाणाचर्मभस्त्राततव्याप्तमांतरमतःप्रदेशोयेनतथाविधमब्धिवउतूऊर्ध्वंप्लावयतिउड्डीनकरोतितदेवा
स्याकाशगमनमित्यर्थ ॥ ४८ ॥ इतिएवविधेनाभ्यासविलासेनयोगेनकायाकाशसंबंधसंयमलक्षणेन ॥ तथाचभगवतःपतंजले सूत्रम ॥ कायाकाशयोःसंबंधसंयमाल्लघुतू
लसमापत्तेश्चाकाशगमनमिति ॥तद्भाष्यच यत्रकायस्तत्राकाशकायस्यतेनसंबंध प्राप्तिस्तत्रकृतसंयमोयोगीजित्वातत्संबंधलघुतूलादिषुआपरमाणुभ्यःसमापत्तिलब्ध्वाजित
संबंधोलघुर्भूत्वापादाभ्याविहरतिततस्तूर्णनाभितंतुमात्रेविहृत्यरश्मिषुविहरतिततोयथेष्टमाकाशगतिरस्यभवतीति ॥ ४९ ॥

दर्शनीसिद्धदर्शनोपायमाह ॥ ब्रह्मनाडीत्यादिना ॥ यदा रेचकेन प्रयोगेणाभ्यासारूढा कुण्डलिनीशक्तिर्ब्रह्मनाडीसुषुम्णा तदन्तःप्राणप्रवाहेण शीर्षकपालस्योपरि द्वादशाङ्गुलपरिमितं मूर्धनि पाददशाङ्गुलस्थाने मुहूर्तमात्रं स्थितिमाप्नोति तदा व्योमगानां सिद्धानां दर्शनं भवतीति परेणान्वयः ॥ तथा च भगवत्पतञ्जलेः सूत्रम् ॥ मूर्धज्योतिषि सिद्धदर्शनमिति ॥ तद्भाष्यं च ॥ शिरःकपालेऽन्तश्छिद्रं प्रभास्वरं ज्योतिस्तत्र संयमात् सिद्धानां द्यावापृथिव्योरन्तरालचारिणां दर्शनमिति ॥ ५० ॥ ५१ ॥ अदिव्यानामिन्द्रियाणामिति भावलक्षणषष्ठी चानादरे इति षष्ठी ॥ यद्यस्मदादीनामिन्द्रियाणामदिव्यानां सतां तस्यापि सन्निकर्षे सिद्धा नातत्त्वतद्गोचरत्वदुर्लभत्वादानयनोशुमणचाक्षुषप्रभासन्निकर्षं विना पाशादिशरीरधारणमात्रेण सिद्धानां दर्शनं कथं भवेत्तच्च कीदृशमित्यर्थः ॥ ५२ ॥ तच्च कथं भवेदित्यंशमिष्टापत्त्या यच्चैव परिहरति ॥ नकेचनेति ॥ न भास्वतो न भास्वतो वायुभूता

ब्रह्मनाडीप्रवाहेण शक्तिः कुण्डलिनी यदा ॥ बहिरूर्ध्वकपालस्य द्वादशाङ्गुलमूर्द्धनि ॥ ५० ॥ रेचकेन प्रयोगेण नाड्यन्तरनिरोधिना ॥ मुहूर्त्तं स्थितिमाप्नोति तदा व्योमगदर्शनम् ॥ ५१ ॥ ॥ श्रीरामउवाच ॥ ॥ दर्शनं कीदृशं ब्रह्मन्नयनाशुगणं विना ॥ अदिव्यानामिन्द्रियाणां त्वमवश्यं भवेत् ॥ ५२ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ न केचन महाबाहो भूचरेण नभस्वत ॥ अदिव्येनाश्रिताज्ञानैर्दृश्यन्ते पुरुषेन्द्रियैः ॥ ५३ ॥ विज्ञानादृश्यते नुद्धिं नेत्रेण राघव ॥ दृश्यते व्योमगा सिद्धा स्वप्नवत्साधवा अपि ॥ ५४ ॥ स्वप्नावलोकनं यद्वत्तद्वत्सिद्धावलोकनम् ॥ केवलं यविशेषोयं सिद्धप्राप्तो स्थिरायता ॥ ५५ ॥ मुखाद्बहिर्द्वादशान्ते रेचकाभ्यासयुक्तित ॥ प्राणे चिरस्थितिं नीते प्रविशत्यपरां पुरीम् ॥ ५६ ॥ ॥ श्रीरामउवाच ॥ ॥ वदस्वभावस्य कथं ब्रह्मन्नचलसंस्थिति ॥ वक्तारं सानुकम्पाहि दुःप्रश्नेपि न खेदिन ॥ ५७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ शक्तिया तु स्वभावाख्या यथा स्फुरति चात्मन ॥ सर्गादि पुत्र तथैवासौ स्थितिं यातीति निश्चय ॥ ५८ ॥

सिद्धाश्रिताज्ञानैर्मलिनैः पुरुषेन्द्रियैरदिव्यैर्नोपायान्तरेण न दृश्यन्त इति सत्यमेव त्वयोक्तमित्यर्थः ॥ ५३ ॥ केन तर्हि दृश्यन्ते तत्राह ॥ विज्ञानादिति ॥ विज्ञानाद्योगाभ्याससंस्कृतमनसः ॥ ५४ ॥ कीदृशमिति प्रश्नोत्तरस्योत्तरमाह ॥ स्वप्नावलोकनमिति ॥ स्थिरायतास्वसादरदानफलावाप्त्याविष्वग्व्यवहारक्षमार्थतास्वप्नापेक्षया विशेष इत्यर्थः ॥ ५५ ॥ इदानीं परकायप्रवेशो येनोपायेन सिध्यति तमाह ॥ मुखादिति ॥ द्वादशान्ते द्वादशाङ्गुलिपरिमितपथि ॥ ५६ ॥ विशेषोयं सिद्धप्राप्तौ स्थिरायतेति यदुक्तं तत्र स्वभाव एव हेतुरभ्युपगम्य सर्वस्य जगतो मायामयत्वादनियतस्थितित्वात् बहुशः स्वयं च घटस्य पटना दृष्टेत्यादिना भ्युत्पादितत्वात्स्वभावस्यैकस्य नियतस्थिति कथमिति रामः पृच्छति ॥ वदेति ॥ ५७ ॥ सत्यसंकल्पस्येश्वरस्य सर्गादिकाले संकल्पप्रयुक्तावस्तुस्वभावनियतिरपि यावत्सर्गकालमेव न प्रलयेऽस्तीति न सर्वनियतिभङ्गवादविरोध इत्याशयेन प्रागुक्तमेव स्मारयन्नुत्तरमाह ॥ शक्तिरिति ॥ ५८ ॥

॥ अवस्तुत्वादिति ॥ क्वचित्कामरूपदेशादौ ॥ शारदंग्रीष्मादिफलम् ॥ ५९ ॥ नानाऽनानातयाअनियतस्वभावतयास्थि
कालभेदेनेवदेशभेदेनापिवस्तुशक्तेरनियततादृष्टेत्याह ॥ अवस्तुत्वादिति ॥ क्वचित्कामरूपदेशादौ ॥ शारदंग्रीष्मादिफलम् ॥ ५९ ॥ नानाऽनानातयाअनियतस्वभावतयास्थि
कालभेदेनेवदेशभेदेनापिवस्तुशक्तेरनियततादृष्टेत्याह ॥ जृंभतेइति ॥ प्राणिकर्मतत्फलोपभोगव्यवहारार्थमज्ञातब्रह्मैवक
तसर्वमेवेदब्रह्म ॥ ब्रह्मस्वभावेनैवनियतैकरूपनान्येनेत्यर्थः ॥ कथतर्हिवह्नेरूर्ध्वज्वलनादिनियतिस्तत्राह ॥ जृंभतेइति ॥ प्राणिकर्मतत्फलोपभोगव्यवहारार्थमज्ञातब्रह्मैवक
चित्कालतथातथानियतस्थितिभूत्वाजृंभतइत्यर्थः ॥ ६० ॥ इदानीमणिमाख्यामहिमाख्याचसिद्धिःकेनोपायेनसिद्ध्यतीतिरामःपृच्छति ॥ सूक्ष्मेति ॥ नीयतेयोगिनेतिशेष
॥ ६१ ॥ अस्यप्रश्नस्योत्तरमुत्तरसर्गेविस्तराद्वर्णयिष्यस्तदुपोद्घाततयादेहेअग्नीषोमव्याप्तिनिरूपयिष्यन्प्राणापानयोःसघर्षादंतरालेजाठराग्निनिष्पत्तौदृष्टांतमाह ॥ काष्ठेति ॥
छेदेद्वैधीभावः ॥ द्वयो प्राणापानयोः ॥ अग्निर्जाठरः ॥ ६२ ॥ प्राणापानयो संघर्षणोपपत्त्येअन्योन्याकर्षकत्वेकारणमाह ॥ मांसमित्यादिना ॥ कुत्सितस्यदेहयंत्रस्यज
ठरेउदरप्रदेशेनाभेरूर्ध्वमधश्चसमिलत्अतएवमिथ श्लिष्टमुखमामाशयपक्वाशयभस्त्राद्वयरूपस्थूलमांसादिविस्थैरूर्ध्वमाकाशसस्थैरभ स्थैरधोजलेनिमग्नैश्चभागैःपरस्परश्लि

अवस्तुत्वादविद्यायावस्तुशक्तिरपिक्वचित् ॥ भिद्यतेदृश्यतेत्वंगवसंतेशारदंफलम् ॥ ५९ ॥ सर्वमेवमिदंब्रह्मनानानानातयास्थितम् ॥
जृंभतेव्यवहारार्थंकेवलंकथितस्थिति ॥ ६० ॥ ॥ श्रीरामउवाच ॥ ॥ सूक्ष्मच्छिद्रादिगत्यर्थंपूरणार्थंचखस्यवा ॥ अणुतांस्थूलतांवा
पिकायोयंनीयतेकथम् ॥ ६१ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ काष्ठक्रकचयोःश्लेषाद्यथाछेदःप्रवर्त्तते ॥ द्वयोःसंघर्षणादग्निःस्वभावाज्जा
यतेतथा ॥ ६२ ॥ मांसंकुयंत्रजठरेस्थितंश्लिष्टमुखंमिथः ॥ ऊर्ध्वाधःसंमिलत्स्थूलद्ध्वंभःस्थैरिववेतसम् ॥ ६३ ॥ तस्यकुंडलिनीलक्ष्मी
र्निलीनांतर्निजास्पदे ॥ पद्मरागसमुद्गस्यकोशेमुक्तावलीयथा ॥ ६४ ॥ आवर्त्तफलमालेवनित्यंसलसलायते ॥ दंडाहतेवभुजगीसमुन्न
तिविवर्तिनी ॥ ६५ ॥ द्यावापृथिव्योर्मध्यस्थाक्रियेवस्पंदधर्मिणी ॥ संविन्मधुविबोधार्कोत्त्वत्पद्मपुटषट्पदी ॥ ६६ ॥ तत्सर्वशक्तिपद्मा
दिबाह्येनाभ्यंतरैस्तया ॥ हृदिव्याधूयतेवातैःपत्रवृंदमिवाभितः ॥ ६७ ॥

टरुपलक्षितमधोभसाऊर्ध्ववायुनाचविरुद्धदेशयो कृष्यमाणवेतसकुजमिवकपमानंस्थितंवर्ततइत्यर्थः ॥ ६३ ॥ अस्तुनत्किततस्तत्राह ॥ तस्येति ॥ तस्यमांसस्याधस्तनभस्त्रा
भागस्यमूलभागरूपेनिजेआस्पदेमूलाधारेप्रागुक्ताकुंडलिनीसर्वस्यकार्यकारणसघातस्यप्राणप्रदत्वाल्लक्ष्मीः ॥ ६४ ॥ जपकालेआवर्त्यमानारुद्राक्षादिफलमालेवनित्यमभी
क्ष्णप्राणापानोद्गिरणनिगिरणाभ्यासलसलायतेकपेनाव्यक्तरवजनयति ॥ अव्यक्तानुकरणाड्डाचिवह्लुलघ्रणात्करोत्यर्थेक्यङ् ॥ समुन्नतिरूर्ध्वमुखतातयाविवर्तिनीपरिवर्त्त
नशीला ॥ ६५ ॥ द्यावापृथिव्योर्मध्येप्राणिनामूर्ध्वाधोगतिहेतुर्विहितनिषिद्धक्रियेवप्राणापानयोरूर्ध्वाधोगतिहेतुत्वात्स्पंदधर्मिणी चाक्षुषादिसविल्लक्षणानामधूनारूपादिवि
षयास्वादानाविबोधेअर्कइवस्थिता ॥ ६६ ॥ शक्तयोज्ञानकर्मेंद्रियादिशक्तयः ॥ प्रागुक्तहृत्पद्ममादिपदान्नाडीजालंचहृदिआभ्यंतरैर्वातैस्तयाव्याधूयतेकम्प्यते ॥ यथाबाह्येन
वातेनतरुपत्रवृंदव्याधूयतेतद्वदित्यर्थः ॥ ६७ ॥

यद्व्योमस्फुरत्यगस्वभावात्तत्रवायव ॥ बलवन्स्तदुर्यत्किंचित्कृशाकवलयन्तितत् ॥६८॥ वातैराहन्यमानतत्पद्माटिलरलायते ॥ द्वयन्या न्यतिकार्येणपल्लवादियथातरो ॥६९॥ देहस्याजरणसर्वरसानांपवनोन्वहम् ॥ जनयत्यभिमन्योन्यसघर्षाद्दनवेणुवत् ॥७०॥ स्वभाव शीतवातात्मादेहस्तेनौष्ण्यमेत्यय ॥ उदितेनससर्वांगेभुवनभानुनायथा ॥७१॥ सर्वतोविचरेदस्मिंस्तत्तेजस्तारकाकृति ॥ द्वत्पद्महेमभ्र मरोयोगिनांचिंत्यतांगतम् ॥७२॥ तत्प्रकाशमयज्ञानांचिंतितसप्रयच्छति ॥ येनयोजनलक्षस्यवस्तुनित्यहिदृश्यते ॥७३॥ तस्याग्नेर्वा हवस्येवजलसशुष्कमिंधनम् ॥ मांसपंकजखंडाढ्यंद्दत्सर कोशवासिन ॥७४॥ यदच्छशीतलत्वंचतदस्याग्नेद्रुरुच्यते ॥ इतींदोरुत्थि त सोग्निरग्नीषोमौहिदेहक ॥७५॥ सर्वतूष्णात्मकंकिंचित्तेजोकाम्यभिधविदु ॥ शीतात्मकतुसोमाख्यमाभ्यामेवकृतजगत् ॥७६॥ विद्याविद्यास्वरूपेणसर्वसदसदात्मना ॥ जगद्वायेननिर्वृत्ततद्वैवेवविभज्यते ॥७७॥ सविप्रकाशविद्यादिसूर्यमग्निंविदुर्बुधा ॥ अस ज्ज्ञाव्यतमोविद्याद्याहु सोममनीषिण ॥७८॥

मासम्यामयद्व्रिशालस्फुरतिमप्रसस्वभावादेववायवोमन्दमलकाअपापाणादिमृदुपर्णतृणादिवकवलयतीवकालेनजरयंतित्यर्थः ... भस्मादिजरयतीत्य र्थ ॥ ६८ ॥ करणप्रकारमेवाह ॥ वातैरिति ॥ तथागुक्तं ... तरलायते ॥ तरलायमानस्यतस्यहृदिअतन्प्रविष्ट स्यान्नस्यप्रथमरसोरसाद्रक्तरक्तान्मांसमांसात्स्नेहकृत्वचोमेदोमेदसोमज्जामज्जाभ्योस्थीन्यस्थिभ्य शुक्रमितिविविधप्रकार्येणान्यस्यान्यस्यापरिणतिरेति ॥ यथावसंतेतरोरंतःप्रवि ष्टौभरसस्यपल्लवामर्यंपुष्याणिफलानीत्यादिरतिसदविस्यर्थ ॥ ६९ ॥ ... परस्परसंघर्षाज्जाठराग्निरभिव्यक्तिरस्तीत्याशयेना ह ॥ देहस्येति ॥ आजरणजरणपरंपरयाचरमधातुपरिणामपर्यंतमित्यर्थ ॥७० ॥ सदेह सर्वांगेउदितेनपरमेनतनजाठराग्निनाऔष्ण्यमेति ॥७१॥ तस्यैवसर्वदेहव्यापिनोजाठ

राग्नेस्तपोतारकाकारेणयोगिभिरुपासनक्रियतइत्याह ॥ सर्वतइति ॥ अस्मिन्देहे ॥ ७२ ॥ तदेवचिद्रूपेणाचिंत्यमानव्यवहितविप्रकृष्टसर्वपदार्थदर्शनसिद्धिजनयतीत्याह ॥ तदिति ॥ ७३ ॥ तस्याग्नेरिंधनमाह ॥ तस्येति ॥ ... पंकजखंडैराढ्यपद्मत्सरस्तत्कोशशायिनस्तस्यजाठरस्याग्नेरपिशारीरमन्नरसरूप जलसंशुष्कज्वलनयोग्यमिंधनमित्यर्थ ॥ ७४ ॥ देहेरिंधनभूतमिंदुशलक्षणेनविभज्यदेहस्याग्नीषोमात्मकत्वमाह ॥ यदिति ॥ ७५ ॥ बहिरपिजगत्प्रकाशौष्ण्याभ्यांशैत्य जाड्याभ्यांचाग्नीषोमात्मकत्वमित्याह ॥ सर्वमिति ॥ ७६॥ अथवाचिज्जडोभयघटितसदसदात्मकमविद्याशबलब्रह्मैवजगदाकारेणनिवृत्तमितितदेवप्रकाशजाड्यात्मनाग्नी षोमरूपेणविभक्तमित्याह ॥ विद्येति ॥ ७७ ॥ तद्विभागमेवस्फुटमाह ॥ सविदिति ॥ विद्याआत्मतत्त्वस्फूर्तिम् ॥ आविद्यतद्विपर्ययाभ्यास ॥ ७८ ॥

देहेष्वाजरणंसर्वरसानांपवनोन्वहम् जनयत्यग्निमन्योन्यसंघर्षाद्वनवेणुवदितित्वदुक्त्यादेहबहिश्चप्रत्यक्षेणाग्न्यादित्यादेर्वाय्वधीनोद्भवोदयादिदर्शनाद्वह्निर्वाय्वात्मनःसोमादुदेती त्ययमर्थोमयाबुद्धइतिशेषः ॥ शेषं स्पष्टं ॥ ७९ ॥ परस्परंपर्यायेणप्रजीपेतेजिगीषेते ॥ जेःसनिद्वित्वकुत्वयोरभावश्छादसः ॥ अज्झनगमामितिदीर्घः ॥ प्रजीवेतेइतिपाठेतुप रस्परमुपजीवतइत्यर्थः ॥ ८० ॥ अनयोर्जन्मबीजांकुरवत्परस्परोपादानकदिवसरात्रिवत्परस्परनिमित्तकंच ॥ स्थितिस्तुछायातपसमापरस्परोपघातिनीत्यर्थः ॥ ८१ ॥ दृष्टा तभेदोपन्यासस्यतात्पर्यांतरमाह ॥ तुल्येति ॥ युगपदुपलंभेछायातपस्थितिःपर्यायेणोपलंभेदिनरात्रिस्थितिर्दृष्टांतइत्यर्थः ॥ ८२ ॥ दृष्टांतयोःकार्यकारणभावद्वयपरत्वपक्षे

॥श्रीरामउवाच॥ ॥वह्निर्वाय्वात्मनःसोमादुदेतीतिमुनीश्वर॥सोमस्योत्पत्तिमधुनावदमेवदतांवर॥ ७९ ॥ ॥श्रीवसिष्ठउवाच॥ अग्नीषोमौमिथःकार्यकारणेचव्यवस्थिते॥पर्यायेणसमंचैतौप्रजीपेतेपरस्परम् ॥ ८० ॥जन्मांगबीजांकुरवत्तथादिवसरात्रिवत्॥ स्थितिश्छायातपसमाकेवलासैतयोर्भवेत्॥ ८१ ॥ तुल्यकालोपलंभासावित्थंछायातपस्थितिः॥ केवलैकोपलंभाढ्यास्थितिर्दिवस रात्रिवत्॥ ८२ ॥ कार्यकारणभावश्चद्विविधःकथितोनयोः॥ सद्रूपपरिणामोत्थोविनाशपरिणामजः ॥ ८३॥ एकस्माद्यद्द्वितीयस्यसं भवोंकुरबीजवत्॥ कार्यकारणभावोसौसद्रूपपरिणामजः ॥ ८४ ॥ एकनाशेद्वितीयस्ययद्भावोदिनरात्रिवत् ॥ कार्यकारणभावोसौ विनाशपरिणामजः॥ ८५॥ सद्रूपपरिणामस्यमृद्घटक्रमसंस्थितेः॥ अक्षोपलंभादितरत्प्रमाणंनोपयुज्यते ॥ ८६ ॥ विनाशपरिणाम स्यदिनरात्रिक्रमस्थितेः॥ अभावोप्येकवस्तुस्थोगतोमुख्यप्रमाणताम्॥ ८७॥

प्यवांतरभेदांतरद्वयेपितात्पर्यमस्तीत्याह ॥ कार्यकारणभावश्चेति ॥ ८३ ॥ तयोराद्यमुपपादयति ॥ एकस्मादिति ॥ ८४ ॥ द्वितीयमुपपादयति ॥ एकेति ॥ भावउत्पत्तिः ॥ ८५ ॥ आद्येकार्यदशायांकारणसत्त्वेमृदात्मकोयंघटइत्यादिप्रत्यक्षंप्रमाणमित्याह ॥ सद्रूपेति ॥ यद्यप्यनुमानादीनामपिसंभवोस्तितथापिप्रत्यक्षसिद्धेर्थेनतेमृग्यतेइत्यनुप योगोक्तिः ॥ तदुक्तंन्यायवाचस्पत्ये ॥ नहिकरिणिदृष्टेचीत्कारेणतमनुमिमतेमिमातारइति ॥ सिद्धिसत्त्वेनपक्षतारूपकारणाभावादित्याशयः ॥ ८६ ॥ एवंद्वितीयेपिकार्यद शायांकारणासत्त्वेदिवारात्रिर्नोपलभामहेइत्यनुपलब्धिःप्रमाणमित्याह ॥ विनाशेति ॥ एकवस्तुस्थःएकवस्तुमात्रपाहिप्रत्यक्षाविरुद्धः ॥ ८७ ॥

१ उपलब्धेरभावोऽनुपलब्धिः

मनुकार्यंकुर्वन्कारणमुच्यते तत्कर्तृत्वंचकारणस्यतदभिनिवेशलक्षणायामास्थायांदृष्टम् नचप्रकाशनमात्रोपक्षीणस्यविनस्यराग्निनिर्मोमेआस्थास्तीतिनास्तिकर्तृत्वम् एव राधेरपिविनष्टस्यनास्तीत्यभावपरिणामेनकार्यकारणभावोनिर्मूल ॥ एवमचेतनस्यमृदादेर्नघटादिजननेआस्थासंभवति तस्याश्चेतनधर्मत्वात् ॥ किंचानुपमर्दितामृत्पिण्डा मघटानिष्पद्यते उपमर्देतुमृत्पिण्डोनस्यत्येवत्रिंकिंसद्रूपेणपरिणमत नचापिघटस्यव्यतिरिक्ताउभयानुगताम्यामकाचित्सम्प्रतीयास्ति ॥ किंचबीजादिस्थितनिनष्टुनस्यन्नष्ट माअंकुरंजनयत् ॥ नाद्य ॥ कुशूलादौतत्प्रसंगात् ॥ नद्वितीयतृतीयौ ॥ नरासत्त्वाणेप्यसमर्थंपरमुत्पादयितुसमर्थमितिकाबाधोयुक्ति ॥ चतुर्थस्तुकस्य सर्वानुभवबाधितत्व तिनकस्मात्चित्कस्यचिदुत्पत्तिर्विनाशावाकिंतुस्वभावतएवसर्वमुत्पद्यतेविनश्यतिचतथपौर्वापर्यदर्शनाद्विवेकिनांकार्यकारणभावविकल्पइत्यादिदुर्युक्तिवादिन स्वानुभववि रोधोद्भावनेनैवनिरसनीयाइत्याह ॥ अनास्थेति ॥ इत्यादिरायुक्तिर्दुर्युक्तिस्तद्वादिनः ॥ अवज्ञयाअवमानेन ॥ स्वानुभूत्यपलापिताचतेषामित्यन्वेषणीया ॥ अनास्थादियुक्ति युद्धिरकर्तृत्वादिबुद्धिजनयतिचतयोरेवकार्यकारणभावस्त्वानुभवसिद्धइतिकथंतत्साम्यापलाप ॥ यदिनजनयतितर्हितयास्वानुभवस्तत्वपरप्रबोधयिषयायुक्त्युपन्या

अनास्थानास्तिकर्तृत्वमित्याद्यायुक्तिवादिन ॥ अवज्ञयाबहिष्कार्यां स्वानुभूत्यपलापिन ॥८८॥ प्रत्यक्षवदभावोपिप्रमैवरघुनन्दन ॥ अग्न्यभावोपिशीतस्यप्रमाणसर्वजन्तुषु ॥ ८९ ॥ अग्निर्धूमतयाभोगाप्रयातिपयोदताम् ॥ सद्रूपपरिणामेनतदग्नि सोमकारणम् ॥९०॥ अग्निर्नष्टतयाशैत्यादसावेवप्रयातियत् ॥ विनाशपरिणामेनतदग्नि सोमकारणम् ॥९१॥ सर्वांबुधिपय पीत्वाधूमोद्गारेणवाड व ॥ पयोदतांप्रयातेनतदेवजनयत्यलम् ॥९२॥ अर्कंपीत्वानिशानाथमामावास्यपुन पुन ॥ उद्गिरत्यमलेपक्षेम्णालमिवसारस ॥९३॥

सःस्वानुभवविरुद्धप्रलापइति ॥ एवराभिरपिचरमभावविकारात्मनाअभावपरिणामेनविनस्यकारणमितिस्वानुभवसिद्धमेव ॥ नचनाशोनभावविकारः उत्पत्त्यादेरिवतस्या पिभावधर्मत्वानुभवात् ॥ एवंबीजांकुरादावस्यास्त्यनुगतद्रव्यमप्यबाधितप्रत्यभिज्ञानुभवसिद्धंनापलापार्हं तदेवस्थितनिनष्टुनश्यन्नष्टमित्याद्यवस्थाभेदस्त्वात्मन्यनुभवदकारा दे कारणतावस्थाभेदपृच्छिषतइतितद्वस्यभेदास्तेषांनिर्हेतुकोत्पत्त्यादौचिन्त्यमानकामतिगौरवमतःस्वप्रलपतोमूर्खाअवज्ञयैवबहिष्कार्याइत्यर्थ ॥ ८८ ॥ अनुपलब्धे मा मान्यसंदेहंवारयति ॥ प्रत्यक्षवदिति ॥ प्रमैवप्रमाणमेव ॥ नचाभावप्रमाकरणत्वमन्यत्रनदृष्टमितिभ्रमितव्यम् ॥ तेजोऽभावस्यशीतानुमितौलिङ्गविधयाकरणत्वप्रसिद्धेरि त्याह ॥ अग्न्यभावइति ॥ ८९ ॥ वह्निरम सद्रूपपरिणामेनसोमकारणत्वमुदाहरति ॥ अग्निरिति ॥ स्पष्ट ॥ ९० ॥ अभावपरिणामेनापितमुदाहरति ॥ अग्निरिति ॥ अशीत्व मियत्तागुणभावप्रमाति ॥ यथाचाअग्निरुष्णयतिवायुमेवाप्येतीतिश्रुते ॥ ९१ ॥ सद्रूपपरिणामेनाग्नीषोमयो परस्परकारणत्वमेकैकयोदाहरति ॥ समेत्यादिना ॥ वाडवोमवा नल पयोदतांप्रयातेनस्वेनैवतत्सर्वांबुधिपयएवजनयति ॥ क्षीरदधिघृतादीनामपिरसात्मकसोमरूपत्वात्सर्वमपयोवाद ॥ ९२ ॥ आअमावास्यामित्यामावास्यम ॥ आङ्म र्यादाभिविध्योरित्यव्ययीभावेनपुंसकत्वं ॥ कृष्णपक्षेअमावास्यापर्यंतमित्यर्थ ॥ अमलेशुक्लपक्षे ॥ ९३ ॥

१ असौनष्टतयाशैत्याद्वायुतामेवयातियदितिपुस्तकांतरेपाठ ॥ मूलस्यपाठेतुवायुभावमित्यध्याहारलब्धोध्यम् ॥

सोमोमुखमिवशोभमानोयत्रतथाविधवसंतग्रीष्मागमेप्राण.सोष्मावायुभामपच.

सोमोमुखमिवशोभमानोयत्रतथाविधवसंतग्रीष्मागमेप्राण.सोष्मावायु... सोमोमुखमिवशोभमानोयत्रतथाविधवसंतर्यीष्मागमेप्राण.सोष्मावायु

सोमोमुखमिवशोभमानोयत्रतथाविधवसंतर्यीष्मागमेप्राण.सोष्मावायुभामपच.

॥ १०१ ॥ यथाविरुद्धाविरुद्धतमःप्रकाशघटिताअहोरात्रास्तथाचिज्जडोभयघटिताःसर्वव्यवहारा इत्याह ॥ चिद्रूपेति ॥ जलमये बिंबे सूर्यकरद्वारा सूर्यबिंबस्थितामृतात्मक कलाभिः क्रमेण पूरणादुभयारब्धा ऐंदवीतनुरिव ॥ २ ॥ चिज्जडोभयांशाभ्यामेव प्रकाशाप्रकाशतया आविर्भूताभ्यामग्नीषोमात्मकतेत्याह ॥ प्रकाशमिति ॥ ३ ॥ बहि सूर्योदयात्तमइवांतश्चरमदशायां चिदादित्योदयाज्ज्ञानमूलतमोनिवृत्तिरित्याह ॥ चित्सूर्येणेति ॥ व्योमस्योदयोयस्मात्तद्व्योमोदयं तम ॥ ४ ॥ निजेप्रत्यगात्मनि जडेसोमदेहे दृष्टे सति तत्तादात्म्येन स्फुरंत्यपि चित्सत्तुगत्वमिवापन्नागुणांतरयत्तस्यैवसतीभूतासत्त्वसत्तयाअसत्यवद्भवेत् ॥ यथा निशीथेअर्धरात्रेऽन्येचंद्रे विलसति तदनुप्रवेशेन स्फुरन्सौरप्रभाभरश्चंद्रधर्मचंद्रिकात्वेनसत्यमर्थंस्वसत्तयासन्निवभूत्वास्वसत्तयाअसत्यवद्भवतितद्वाऽसौरप्रभाभरोनास्तीतिसर्वजनानुभवादितिभाव ॥ ५ ॥ दृष्टांतदार्ष्टांतिकयोरुपपत्तिफलमाह ॥ सोममिति ॥ चंद्रमंडलेप्रविष्टःसूर्यप्रभारूपोऽग्निःसोमंजलमयचंद्रबिंबंप्रकटयतिस्फुरद्रूपंकरोति ॥ देहेनुजीवभावेनानुप्रविष्टाचिद्देहस्यचिरंयावदायुःप्रभामहंभावविभावयाऽक

द्वाभ्यांचैतन्यजाड्याभ्यांभूतानिप्रस्फुरंतिहि॥ यथातमःप्रकाशाभ्यामहोरात्रामहीतले ॥ १०१ ॥ चिद्रूपजडरूपाभ्यामारब्धेयंजगत्स्थिति ॥ जलामृताभ्यांमिश्राभ्यांशीतातनुरिवैंदवी ॥ २ ॥ प्रकाशमनलंसूर्यंचिद्रूपंविद्धिराघव ॥ जडात्मकंतमोरूपंविद्धिसोमशरीरकम् ॥ ३ ॥ चित्सूर्येनिर्मलेदृष्टेनामनस्येद्व्योदयम् ॥ व्योमसूर्येबहिर्दृष्टेयथाकृष्णनिशातम ॥ ४ ॥ सोमदेहेजडेदृष्टेचिन्निजेसत्यवद्भवेत् ॥ निशीथेविलसत्यन्तेयथासौरप्रभाभर ॥ ५ ॥ सोमंप्रकटयत्यग्निश्चिद्देहस्यचिरंप्रभाम् ॥ स्वसंविन्मयमिंदुश्चिद्देहस्यंरूपमकंजम् ॥ ६ ॥ चिन्निक्रियात्वनामासाकेवलानोपलभ्यते ॥ आलोकइवदीपेनदेहेनैवावगम्यते ॥ ७ ॥ चितश्चेत्योन्मुखत्वेनलाभःसैवचसस्थिति ॥ निश्चेत्यायाःशुभोलाभोनिर्वाणवातदेवहि ॥ ८ ॥ अन्योन्यलब्धसत्तास्यावेवंकृष्णप्रकाशवत् ॥ अग्नीषोमाविमौज्ञेयौसपक्षौदेहदेहिनौ ॥ ९ ॥ अतिशायिनिनिर्वाणेजाड्येचैवातिशायिनि ॥ अग्नीषोमस्यचैवांगस्थितिर्भवतिकेवला ॥ ११० ॥ प्राणोग्निरुष्णप्रकृतिरपानःशीतलःशशी ॥ छायातपवदित्येतौसंस्थितौमुखमार्गगौ ॥ १११ ॥

रोति ॥ यथाप्रकाशयत्येकःकृत्स्नंलोकमिमंरविः ॥ क्षेत्रंक्षेत्रीतथाकृत्स्नंप्रकाशयतिभारतेतिभगवद्वचनात् ॥ एवमन्योन्यमेलनेनतादात्म्याध्यासादक्तअरूपमप्रभामंडलमिंदुर्भवति चिद्वस्तुसंविन्मयमनुष्योहंचेतनइत्यादिस्वानुभवानुसारिदेहस्थंरूपंभवतीत्यन्वय ॥ ६ ॥ इतोपिचितस्यादेहधर्मत्वमित्याह ॥ चिदिति ॥ नमयतिसंकोचयतीतिनामउपाधिसंपृक्तता ॥ ७ ॥ अज्ञानादेतायाश्चितश्चेत्योपाध्युन्मुखत्वमेवानियमादेवानर्थप्राप्तिरित्याह ॥ चितइति ॥ ८ ॥ एवमुक्तरीत्याकृष्णसौरप्रकाशवदन्योन्यसंवलनाधीनसद्रूपेणाभ्यव्यवहारविषयतादिर्भौदेहदेहिनावप्यग्नीषोमात्मकौज्ञेयौ ॥ ९ ॥ तयोरसंवलितावस्थैकस्थितिं रूपसिद्धांतमाह ॥ अतिशायिनीति ॥ निर्वाणमुपाधिनिवृत्त्याआमदाविर्भावलक्षणस्मिन्नतिशायिनिआत्यंतिकेसिद्धेअग्नेःकेवलास्थितिर्भवति जाड्येचातिशायिनिजलशिलादिभावेसोमस्यकेवलास्थितिर्भवतीत्यर्थ ॥ ११० ॥ प्राणापानयोरप्यग्नीषोमात्मकत्वंप्रमुक्तप्रकृतोपयोमायस्मारयति ॥ प्राणइति ॥ १११ ॥

तयो.कुड्यालोकवदन्योन्यतादात्म्यस्थितिंदर्शयति ॥ अपानेइति ॥ १२ ॥ मूलनाणकुंडलिनीरूपश्चिदग्निराधारादिकंठांतचतुर्दलादिपद्मपत्रस्थंपरादिवैखरीपर्यंतवाचात्मक म् ॥त्विषाअर्थप्रकाशनशक्त्या ॥ अनुभूत्याविवक्षापक्षेत्वर्थप्रथारूपयास्फूर्त्या ॥ यथाबहिःसूर्यइतिशेषः ॥ १३ ॥ यथासर्गादौमायाशबलब्रह्मसविच्छीतोष्णरूपिणीब्रह्मांडा कारेणाग्नीषोमाभिधाप्राप्तातथान्नृणाव्यष्टिदेहानासर्गेपीत्यर्थ. ॥ १४ ॥ अस्त्वेवब्रह्मांडमिवशरीरमप्यग्नीषोमात्मककितत कार्यंतत्राह ॥ यत्रेति ॥ यथादिविकृष्णपक्षेअस्या त्मासूर्य.सोमस्यशीता.पचदशकला.प्रतिपदादितिथिपुक्रमेणग्रसतिएकाध्रुवाख्याचिद्रूपापरिशेषयति तत शुक्लपक्षेक्रमेणोष्णाउद्गिरतिताभि क्रमेणपूर्यमाणाध्रुवाकलापूर्ण. सोमोजायते तथाह्रदिस्थित प्राणसूर्योऽपानरूपस्यसोमस्यमुखनासिकाद्वाराप्रविष्टाःशीता.पचदशकलाग्रसित्वामुखाद्बहिर्ध्रुवाख्यामेकाकलापरिशेष्यपुनस्ताउष्णाउद्गिरति ताभि.सापूर्यमाणाबहिरपानाख्यःसोमोजायते तत्रबहिःप्राणापानसधिकालःपूर्णमासी ह्रदित्वमावास्या अतरालदेशेइडापिंगलयोःप्रत्येकमूर्ध्वाधोभागप्रतिशाखानाडीषट्के प्राणसूर्यस्यप्रवाहाद्वेअयनेमेषादयोद्वादशमासास्तदतरालेसक्रांतयः ॥ अपानसोमस्यप्रवाहाच्चैत्रादयोमासाविष्कंभादयोयोगा अन्यानिचपर्वाणिनिष्पद्यतेइतियोगिनाप्रत्य

अपानेशीतलेसत्तामेत्युष्णःप्राणपावकः ॥ प्रतिबिंबमिवादर्शेसचतस्मिंस्तथैवहि ॥ १२ ॥ चिदग्निःपद्मपत्रस्थंसोमंवाचात्मकंत्विषा ॥ जनयत्यनुभूत्येहकुड्यालोकंयथाबहिः ॥ १३ ॥ संसृत्यादौयथाकाचित्संविच्छीतोष्णरूपिणी ॥ अग्नीषोमाभिधांप्राप्तासैवसर्गेनृणामिह ॥ १४ ॥ यत्रसोमकलाग्रस्ताक्षणंसूर्येणषोडशी ॥ मुखाद्वितस्तिमात्रंस्यात्तत्रबद्धपदोभव ॥ १५ ॥ नूनंसूर्यपदंप्राप्तोयत्रसोमोह्रदंबरे ॥ नूनंकेवलयास्थित्यातत्रबद्धपदोभव ॥ १६ ॥ उष्णमग्निश्चिदादित्यःशैत्यंसोमउदाह्रतम् ॥ यत्रैतौप्रतिबिंबस्थौतत्रबद्धपदोभव ॥ १७ ॥ शरीरेसोमसूर्याग्निसंक्रांतिज्ञोभवानघ ॥ तत्रसंक्रांतिकालाहिबाह्यास्तृणसमाःस्मृताः ॥ १८ ॥

क्षम् ॥ अन्यैस्तुस्वरोदयादिशास्त्रतोज्ञेयम् ॥ एवस्थितेवक्ष्यमाणदेहाणुतास्थौल्याद्युपयोगिधारणाभेदाःप्रथमग्निभि.श्लोकैरुपदिश्यते ॥ यत्रमुखाद्बहिर्देशेसूर्येणाग्रस्ताध्रुवा ख्यासोमस्यापानस्यषोडशीकलाप्राणेनोद्गीर्णाभिःकलाभि पूर्यमाणाक्षणप्राप्यापूर्णमासीचद्रइववितस्तिमात्रस्यात्तत्रभुशुंडोपाख्यानोक्तबाह्यकुभकेनमनोधारणयाबद्धप द स्थिरोभवेत्यर्थः ॥ १५ ॥ तथायत्रह्रदंबरेकलाग्रासेनक्रमाद्ग्रस्यमानोऽपानाख्यःसोमोऽमावास्यायामिवकेवलयाशुद्धचिद्रूपध्रुवाख्यकलात्मिकयास्थित्यातिष्ठतितत्रातःकुं भकेनबद्धपदोभव ॥ १६ ॥ इदानीमर्धरेचकेनार्धपूरकेणवाअतरालेप्राणस्योभयतोनिरोधेनबिबप्रतिबिबवत्तुल्यरूपतामापाद्यधारणामाह ॥ उष्णमिति ॥ १७ ॥ यथावसंत ग्रीष्मवर्षाशरत्सुक्रमेणशीतस्यौष्ण्येनग्रासात्सोमस्याग्निसक्रांतिः शरद्धेमतशिशिरेषुक्रमादौष्ण्यस्यशैत्येनग्रासादग्नेःसोमसंक्रांतिस्तयोः सधीविषुवतौसूर्यस्यचमेषादिषुसक्रां तिस्तथाशरीरेपिअपानशैत्यस्यजठराग्निनाग्रासेसोमस्याग्निसक्रांतिः प्राणौष्ण्यस्यबहिःशैत्येनग्रासादग्नेःसोमसंक्रांतिः सूर्यस्यसक्रांतयस्तुप्रागुक्तास्ताजानातीतितज्ज्ञोभवेतिपू र्वोक्तधारणागविधिः ॥ प्रासंगिकतज्ज्ञानस्यप्रसिद्धसक्रांतिस्नानदानादिफलेभ्यउत्कृष्टतमफलकीर्त्तनप्रधानफलेनस्तुतिर्वा ॥ १८ ॥

उत्क्रांगज्ञानमनूपतमाधिकारिमरसयेपराचयति ॥ सक्रांतिमिति ॥ कालंअयनद्वयात्मकंसंवत्सरंदेहयाति ॥ प्राणापानयोर्व्वविशनाडीशास्त्रानुसारिगतिभेदाद्वुवपनम् ॥ प
हिअप्रसिद्धेसंवत्सरेस्थितमिवांतरपियोमाभ्यासात्वयानुभूतंअस्यक्षमनुभूतंघटादीवस्फुटयविवेत्सितर्त्तर्हिअभयोगिकथाशुशोभसे ॥ परमनुपविष्टादन्यदभ्युपेतोभ्यासगोतरेप्रवृत्त
मनुमरोभसेइतितवैकमधणताविधि ॥ ११९ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०एकाशीतितम सर्ग ॥ ८१ ॥ ॥ ७ ॥ ॥ अणुतास्थूलतोपाया
ज्ञानसाध्ययोगिन ॥ परकायाभिनोगाश्चवर्ण्यतइहयुक्तिभि ॥ १ ॥ एवमग्नीषोमात्मकत्वंदेहादेःपरिज्ञायधारणामयाभ्यासपरिष्कृतप्राणमन शरीरस्यसोमसूपाग्निसंक
मादिदर्शिनोयोगिनोदेहस्याणिमादिसिद्धिप्राप्तिप्रकारान्पक्रमतिजानीते ॥ अणुतामिति ॥ १ ॥ तथाहाणुत्वप्राप्तयेदेहस्यविलापनायनाभ्युपरिदेशोज्वलतोजाठरानलस्यहृ
त्पद्मनालसूक्ष्मच्छिद्रद्वाराप्रविश्यहृदयाकाशहृत्पद्मकर्णिकायांपरमात्मनआसनभूतांशिखांदर्शयति ॥ हृदीति ॥ अब्जकोशस्योर्ध्वकर्णिकोपरि ॥ तथाचतैत्तिरीयाणामुपनि
षदि तस्यमध्येमहानग्निर्विश्वार्चिर्विश्वतोमुखइतिजाठरानलप्रस्तुत्यश्रूयते ॥ तस्यमध्येवह्निशिखाअणीयोर्ध्वाव्यवस्थिता नीलतोयदमध्यस्थाद्विद्युल्लेखेवभास्वरा नीवारशू

सक्रांतिमुत्तरमयायनमंगसन्यक्कालतथाविषुवतोयदिदेहवातै ॥ अतवहिष्ठमिववेत्सियथानुभूततच्छोभसेत्रनपुन परमभ्युपेत ॥ ११९
इत्यार्षेवा०वा०दे०मोक्षोपायेपूनि०पू०च०अग्नीषोमविचारणनामैकाशीतितम सर्ग ॥ ८१ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥
अणुतांस्थूलतांवापियथागच्छतियोगिनाम् ॥ देहोनामतथासम्यग्वक्ष्यमाणमिदशृणु ॥ १ ॥ हृदयाब्जचक्रकोशोर्ध्वप्रस्फुरत्यानल क
ण ॥ हेमभ्रमरवत्साध्यविपुल्लवइवांबुदे ॥ २ ॥ सप्रवर्ध्नसंवित्त्यावात्ययेवाशुवर्धते ॥ सविद्रूपतयानूनमकवद्यातिचोदयम् ॥ ३ ॥ स
ध्याभ्रप्रयमाकांशोद्यह्निमभ्यागत क्षणात् ॥ गालयत्यखिलसांगदेहंहिमयथानल ॥ ४ ॥ जलस्पर्शासहोयुक्त्यागलयेत्पपदादपि ॥ वा
द्यएवानलस्पर्शास्वांतेवस्तुविशेषत ॥ ५ ॥ सशरीरद्वयपश्चाद्विधूयक्वापिलीयते ॥ विक्षोभितेनप्राणेननीहारोवात्ययायथा ॥ ६ ॥ आ
धारनाडीनिर्हीनाव्योमस्यैवावशिष्यते ॥ शक्ति कुंडलिनीवह्नेधूमलेखेवनिर्गता ॥ ७ ॥

कवत्तन्वीपीताभास्वत्यणूपमा तस्या शिखायामध्येपरमात्माव्यवस्थितइति ॥ विपुल्लवस्यसाध्यइतिविशेषणपीतत्वप्रकर्षबोधनार्थम् ॥ २ ॥ सज्ञानलकणःप्रवर्द्धनस्यसंवि
त्त्यासर्वदेहव्याप्त्ययाज्वलतितयावर्धनोपायज्ञानेन ॥ सप्तसंवर्धितानाग्निवद्दहतिकिंतुसंविद्रूपतयाअर्कवदुदयमकाशातिशयमाति ॥ ३ ॥ सन्ध्यायांप्रस्यूपेअपेक्षाकाशे
प्रथमसूरितोपोर्कस्तदाभ्र ॥ गालयतिमस्तिकरोति ॥ सांगहस्तपादाद्यंगसहितदेहम् ॥ पार्थिवगंधभागकाठिन्यचतदुपादानजलभागेउपसंहरतीत्यर्थ ॥ ४ ॥ एवमपरात्मा
दापपर्यंतमपिगलयेद्रवीकुर्यात् ततःशोषणयुक्त्यावस्तुविशेषतःअग्नित्वभावविशेषाज्जलस्यस्पर्शशैत्यनसहतेइतिजलस्पर्शासह सोनल स्पर्शास्त्वौष्ण्यबलाद्द्रवत्वोपसंहारयु
क्त्यासकलमपिगलयेत्शोषयेत् ॥ एवरीत्यादेहाद्धास समृत्वातिमनोरूपेआतिवाहिकदेहमात्मेऽवतिष्ठतेइतिशेष ॥ ५ ॥ एवपार्थिवमाप्यंचशरीरद्वयविधूयस्थित सोग्निर्विक्षोभि
तेनप्राणेनोपसहृत क्वापिलीयते ॥ यदाषाअग्निरुद्धायनिवायुमेवाप्यतीतिश्रुतेरित्यर्थ ॥ ६ ॥ तदानींकुंडलिनीशक्तिरपिमूलाधारस्थसुषुम्नानाडीहीनातत्संस्कारशान्त्यातिवाहि
कदेहाकारेणतिष्ठतइत्याह ॥ आधारेति ॥ वह्नेर्निर्गताधूमलेखेव ॥ ७ ॥

तत्रस्थिताचलाक्रोडीकृतासंकलितामनोबुद्धिमयेजीवादिघटितेलिंगशरीरेअहंकृतिर्ययातथाविधा अंतःस्फुरन्चित्प्रकाशचमत्कारःस्वेच्छाविहारशक्तिचमत्कारश्चयस्यास्त
थाविधासतीसूक्ष्मतमेबिसनालच्छिद्रेशैलादौचयत्रैवप्रविश्यनिर्गंतुयोज्यतेतत्रप्रविश्यनिर्यातीत्याह ॥ क्रोडीकृतेति ॥ द्वयोरर्थ ॥ ८ ॥ ९ ॥ एवंसूक्ष्मीभावप्रकारमुक्त्वास्थूली
भावेनैच्छिकनानाशरीरकल्पनाप्रकारमाह ॥ रसेनेत्यादिना ॥ साकुंडलिनीयोगिनोजीवशक्तिर्वंक्षौप्रागुपसंहृतजलभागयदामुचतितदारसेनसर्वतआपूर्णतामेति ॥ यथातन्त्री
चर्मरज्जुबिभर्तीतितत्रीभारोभस्त्रारूपश्चर्मविशेष कूपेक्षिप्तोम्बुनाआपूर्णतामेतितद्वत् ॥ १० ॥ एवंरसापूर्णासतीप्रागुपसंहृतपार्थिवभागयमाकारकर्तुंभावयतितद्योगशक्त्या

क्रोडीकृतमनोबुद्धिमयजीवाद्यहंकृतिः ॥ अंतःस्फुरच्चमत्काराधूमलेखेवनागरी ॥ ८ ॥ बिसशैलतृणेभित्तावुपलेदिविभूतले ॥ सायथा
योज्यतेयत्रतेननिर्यात्यलंतथा ॥ ९ ॥ संवित्तिःसैवयात्यंगरसाद्यंतंयथाक्रमम् ॥ रसेनापूर्णतामेतितंत्रीभारइवांबुना ॥ १० ॥ रसापूर्णा
यमाकारंभावयत्याशुतत्तथा ॥ धत्तेचित्रकृतोबुद्धौरेखारामयथाकृतिम् ॥ ११ ॥ दृढभाववशादंतरस्थीन्याप्नोतिसाततः ॥ मातृगर्भे
निषण्णेषुसुसूक्ष्मेवांकुरस्थितिः ॥ १२ ॥ यथाभिमतमाकारंप्रमाणंवेत्तिराघव ॥ जीवशक्तिरवाप्नोतिसुमेर्वादितृणादि च ॥ १३ ॥ श्रुतं
त्वयायोगसाध्यमणिमाद्यर्थसाधनम् ॥ ज्ञानसाध्यमिदानींत्वंश्रृणुश्रवणभूषणम् ॥ १४ ॥ एकंचिन्मात्रमस्तीहशुद्धंसौम्यमलक्षितम् ॥
सूक्ष्मात्सूक्ष्मतरंशांतंनजगन्नजगत्क्रिया ॥ १५ ॥ तच्चिनोत्यात्मनात्मानंसंकल्पोन्मुखतांगतम् ॥ यदातदाजीवइतिप्रोक्तमाविलतांग
गतम् ॥ १६ ॥ असत्यमेवसंकल्पभ्रमेणेदंशरीरकम् ॥ जीवःपश्यतिमूढात्माबालोयक्षमिवोद्धतम् ॥ १७ ॥ यदातुज्ञानदीपेनसम्यगा
लोकआगतः ॥ संकल्पमोहोजीवस्यक्षीयतेशरदभ्रवत् ॥ १८ ॥ शांतिमायातिदेहोयंसर्वसंकल्पसंक्षयात् ॥ तदाराघवनिःशेषंदीपस्तै
लक्षयेयथा ॥ १९ ॥ निद्राव्यपगमेजंतुर्यथास्वप्नंनपश्यति ॥ जीवोहिभावितेसत्येतथादेहंनपश्यति ॥ २० ॥ अतत्त्वेतत्त्वभावेनजीवो
देहावृतःस्थितः ॥ निर्देहोभवतिश्रीमान्सुखीतत्त्वैकभावनात् ॥ २१ ॥ अनात्मनिशरीरादावात्मभावनमंगयत् ॥ सूर्याद्यालोकदुर्भेदं
हार्दंतद्दारुणंतमः ॥ २२ ॥ आत्मन्येवात्मभावेनसर्वव्यापिनिरंजनम् ॥ चिन्मात्रममलोस्मीतिज्ञानादित्येनलश्यति ॥ २३ ॥

तथाकृत्वाधत्तेइत्यर्थः ॥ ११ ॥ तत्रास्थ्यादिकल्पनाप्रकारमाह ॥ दृढेति ॥ मातृगर्भनिषण्णेषुकललेषुसुसूक्ष्माबीजशक्तिरस्थिहस्तपादाद्यंकुरस्थितिरिव ॥ १२ ॥ यथाभि
मतस्वेच्छानुसारिसुमेर्वादिमहत्तृणाद्यल्पंवाआकारमवाप्नोति ॥ १३ ॥ योगसिद्ध्यनुसारेणस्थूलसूक्ष्मभावप्राप्तिक्रममुक्त्वमुपसंहृत्यज्ञानसिद्ध्यातद्विलक्षणंतवक्तुपरमप्रकृतंश्रा
वयति ॥ श्रुतमिति ॥ १४ ॥ १५ ॥ चिनोत्यध्यासेनोपचिनोति ॥ १६ ॥ जीव पश्यतिसएवास्यस्थूलभावइतिभावः ॥ १७ ॥ सौक्ष्म्यप्राप्तिक्रममाह ॥ यदात्वित्यादिना ॥ १८ ॥
शांतिबाधम ॥ १९ ॥ भावितेसाक्षात्कृते ॥ २० ॥ २१ ॥ लौकिकसूर्याद्यालोकैर्दुर्भेदनाशयितुमशक्यम् ॥ २२ ॥ केनतर्ह्यादित्येनतन्नाशस्तमाह ॥ आत्मन्येवेति ॥ २३ ॥

१ निर्यातीतिक्रोडीकृतेतिद्वयोरर्थइत्यपेक्षनमितिभाति

अन्यांज्ञानसिद्धावपिरहायांजीवन्मुक्तानामैच्छिकविनोदायस्थूलसूक्ष्मनामिभासिकदेहक्ल्पनसिध्यतीत्याह ॥ अन्येचेति ॥ २४ ॥ विमूढाविपकीटादय ॥ अमृततामभृत वराहारताम ॥ अमृतपयाम्यादि विषमिश्रितमिव मिलितदृढभावात्याविषताम ॥ २५ ॥ इतिईदृशतदुदाहरणमुद्दयबहुशोलोकेआलोकितमित्यर्थ ॥ २६ ॥ व्योमतामसाकारताम् ॥ २७ ॥ सैवास्यनिरतिशयाअणिमादिसर्वसिद्धयइत्याशयनोपसंहरति ॥ अणिमादीति ॥ अन्यांपरकायप्रवेशभोगप्राप्तिलक्षणाम ॥ २८ ॥ तप्राप्तीपूर्वदेहपरित्यागोपायमाह ॥ रेचकेति ॥ उद्धृत्यबहिर्नि.सायपरदेहेयावद्योज्यतेतावत्पूर्वदेहस्त्यज्यतइतिपरेणान्वय ॥ यथावातपवनसक्रान्त पुष्पामोद पवनाद्वाकृष्यघ्राणेयोज्यतेतद्वत् ॥ २९ ॥ विरतस्पदउपरतचष्ट काष्ठलोष्टवच्छक्ति ॥ परेपरदेहेजीवेमनसापितत्सपर्कोमेकुमयस्वजीवोविनिवेश्यते ॥ यथाआसेचक पुरुष करस्थकुम्भोदकेनयमेवमरुत्तावसाञ्चासेक्तुमि

अन्येचविदितात्मानोभावयतियथैवयत् ॥ तत्तथैवाशुपश्यतिदृढभावनयातया ॥ २४ ॥ दृढभावानुसधानाद्विमूढाअपिराघव ॥ विपनयत्यमृततामृतंविपतामपि ॥ २५ ॥ एवयथायदेवदृश्यतेदृढभावनात् ॥ भूयतेहितदेवाशुतदित्यालोकितमुहु ॥ २६ ॥ सत्यभावनदृष्टोर्थदेहोदेहोभवत्यलम् ॥ दृष्टस्त्वसत्यभावेनव्योमतांयातिदेहक ॥ २७ ॥ अणिमादिपदप्राप्तौज्ञानयुक्तिरितिश्रुता ॥ भवतासाधुनारामयुक्तिमन्यामिमांशृणु ॥ २८ ॥ रेचकाभ्यासयोगेनजीव कुडलिनीगृहात् ॥ उद्धृत्ययोज्यतेयावदामोद पवनादिव ॥ २९ ॥ त्यज्यतेविरतस्पदोदेहोयकाष्ठलोष्टवत् ॥ देहेपिजीवेपिमतावासेचकवद्वाढर ॥ ३० ॥ स्थावरजगमेवापियथाभिमतयेच्छया ॥ भोक्तुतत्सपदसम्यग्जावोतर्विनिवश्यते ॥ ३१ ॥ इतिसिद्धिश्रियभुक्त्वास्थितंचेत्तद्वपु पुन ॥ प्रविश्यतेस्वमन्यद्वायत्तत्तातविरोचते ॥ ३२ ॥ देहादयस्तथाथियान्याभवत्याखिलानथ ॥ सविदाजगदापूर्यसपूर्णस्थीयतेयवा ॥ ३३ ॥ ज्ञात्वासदाभ्युदितमुज्झितदोषमीशो यद्यथासमभिवाछतिचित्प्रकाश ॥ प्राप्नोतितत्तदचिरेणतथैवरामसम्यक्पदविदुरनावरणत्वमेव ॥ ३४ ॥ ॥ इत्यार्षेवा० वा दे० मो० पुनि० पू० मृ० अणिमादिलाभयोगोपदेशोनामद्व्यशीतितम सर्ग ॥ ८२ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

स्थावरजगमवाविस्वनितदेहत्रापियथाभिमतयेच्छयाआवरइत्यन्वय ॥ ३० ॥ ३१ ॥ इतिउक्तरीत्यापरदेहेसिद्धिश्रियभुक्त्वास्थितेनयोगिनातत्पूर्वतनस्ववपु स्थितचेत्पुनस्तत्प्रविश्यतेनोचेदन्यद्वायपथावद्विराचततस्तावत्कालमधिश्यतइत्यर्थ ॥ ३२ ॥ अथवायोगिनाअथपरकायभोगानान्तरत्वात करणवैपुल्यापादनेनजगदापूर्यदेहादय व्यस्यमनद्वितीयार्थेनयथा ॥ स्थावरजगमसर्वदेहादिप्रतिबिम्बापार्थास्तत्प्रतिबिम्बजीवास्तथातद्विषोपाधिसत्वादिगुणास्तदवच्छिन्नचिल्लक्षणाम्यवाश्चेत्यखिलानपिध्याभवत्यास्वात्मसविदासपूर्णयथास्यात्तथास्थीयतइत्यर्थ ॥ ३३ ॥ उपसहरति ॥ ज्ञात्वेति ॥ ईशोयोगैश्वर्यसपन्नोजीव चित्प्रकाश सदाभ्युदितनित्यस्वप्रकाशमुज्झितसर्वदोपस्वतत्त्वज्ञात्वायद्यथासमभिवाछतितत्तदचिरेणतथैवप्राप्नोति ॥ एवसतितत्त्वविदोनाम्यसिद्धीवहुमन्यतेकिंत्वनावरणत्वमेवनिरतिशयानदसम्यक्पदविदुरित्यर्थ ॥ ३४ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशनि० पू० द्व्यशीतितम सर्ग ॥ ८२ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

चूडालासिद्धिविभवाअप्रबोधश्चभूपतेः ॥ गुरूपदेशसाफल्येकिराटाख्यानमीर्यते ॥ १ ॥ चूडालाएवंप्रागुक्तरीत्याप्राणधारणादिघनाभ्यासवतीसतीअणिमादिगुणैश्वर्ययुक्ता बभूव ॥ १ ॥ तदैश्वर्यमेवावयुत्यप्रपचयति ॥ जगामेत्यादिना ॥ मोहकालुष्यत्यतापत्रयस्यचोपशमादमलाशीतलाच ॥ २ ॥ तस्याःकायव्यूहादिकल्पनैश्वर्यमाह ॥ क्ष णमपीति ॥ अगताअवियुक्ता ॥ राज्येषुराष्ट्रेषुजगत्सुभुवनेषुचोवास ॥ ३ ॥ विद्युताप्रारआउन्मेषाइवद्योतमानानिभूषणानियस्याः ॥ ४ ॥ ५॥ दिशांव्योम्नश्चोदरेयावतिभु वनरध्राणिप्रसिद्धानितानिसर्वाणीत्यर्थः ॥ ६ ॥ सर्वभूतरुतज्ञतयासंभाषणादिव्यवहारम् ॥ ७ ॥ बहुशःप्रतिबोधयामासेतिव्यवहितेनसबंधश्छांदसः ॥ ८ ॥ ९॥ यथावेदाध्य यनकालेबालोवेदविद्यांसर्वपुरुषार्थानुकूलार्थप्रकाशनादिगुणशालिनींनवेदतद्वत ॥ १० ॥ ११ ॥ सर्वसिद्धिशालिन्यास्तस्याश्चेद्भर्तृबोधनेअशक्तिस्तर्ह्यन्येषासिद्धिशून्या

श्रीवसिष्ठउवाच॥ ॥अणिमादिगुणैश्वर्ययुक्तासानृपभामिनी॥ एवंबभूवचूडालाघनाभ्यासवतीसती ॥१॥ जगामाकाशमार्गेणवि वेशांबुधिकोटरम्॥ चचारवसुधापीठंगंगेवामलशीतला॥ २ ॥ क्षणमप्यगताभर्तुर्वक्षसश्चेतसस्तया॥ सर्वेषूवासराज्येषुलक्ष्मीरिव जगत्सुच॥ ३ ॥ आकाशगामिनीश्यामाविद्युत्प्रारंभभूषणा ॥ बभ्राममेघमालेवगिरिमालामहीतले॥ ४ ॥ काष्ठंतृणोपलंभूतंखंवा तमनलंजलम्॥ निर्विघ्नमविशत्सर्वंतंतुर्मुक्ताफलंयथा॥ ५॥ मेरोरुपरिश्टंगाणिलोकपालपुराणिच ॥ दिग्व्योमोदररंध्राणिविजहारय थासुखम्॥६॥ तिर्यग्भूतपिशाचाद्यैःसहनागामरासुरैः॥ विद्याधराप्सरःसिद्धैर्व्यवहारंचकारसा॥ ७॥ यत्नेनतंचभर्तारमात्मज्ञानान्व तंप्रति॥ बहुशोबोधयामासचूडालानविवेदसः॥८॥ कलाविदग्धामुग्धाचबालेयंगृहिणीमम॥इत्येवंकेवलंराजासचूडालांविवेदता म्॥९॥ एतावतापिकालेनतामेवंगुणशालिनीम्॥ बालोविद्यामिवनृपश्चूडालांनविवेदसः॥१०॥ साप्यलब्धात्मविश्रांतेस्तांसिद्धिश्रि यमात्मनः॥ दर्शयामासनोराज्ञःशूद्रस्येवमखक्रियाम्॥११॥ ॥श्रीरामउवाच॥ ॥महत्याःसिद्धयोगिन्यास्तस्याअपिशिखिध्वजः॥ यत्नेनप्रापनोबोधंबुध्यतेन्यःकथंप्रभो॥१२॥ ॥श्रीवसिष्ठउवाच॥ ॥उपदेशक्रमोरामव्यवस्थामात्रपालनम्॥ ज्ञप्तेस्तुकारणंशुद्धा शिष्यप्रज्ञैवराघव॥ १३॥ नश्रुतेननपुण्येनज्ञायतेज्ञेयमात्मनः॥ जानात्यात्मानमात्मैवसर्पःसर्पपदानिव॥ १४॥ ॥श्रीरामउवाच॥ एवंस्थितेवाथमुनेकथमेतज्जगत्स्थितौ॥ क्रमोगुरूपदेशाख्यःस्वात्मज्ञानस्यकारणम् ॥ १५॥

नांगुरूणांशिष्यबोधनेशक्तिर्दूरापास्तेति रामःशकते ॥ महत्याइति ॥ तस्याअपियत्नेनउपदेशप्रयासेन ॥ १२ ॥ तद्विज्ञानार्थसगुरुमेवाभिगच्छेदित्यादिशास्त्रोक्तमर्यादाव्यवस्थातन्मात्रपालनंगुरुकृतउपदेशक्रमोन त्वसावनधिकारिण्यपिज्ञानबलाज्जनयितुशक्नोतीत्यर्थः ॥ प्रज्ञाग्रहणसाधनचतुष्टयसहितप्रज्ञापरम ॥ १३ ॥ श्रुतेनअनात्मशास्त्रप्रावीण्येन पुण्येनचित्तशुद्ध्यनंगेनकाम्यकर्म वर्गेण ॥ अथवाश्रुतेनशाब्देनपरोक्षज्ञानेन ॥ आत्मनस्तत्त्वभूतज्ञेयब्रह्मनज्ञायतेइतरवस्तुवन्नविषयीक्रियते ॥ पुण्येनापिस्वर्गभोगवन्नविनैवविचारज्ञानजन्यतेकिंतुताभ्यावि चारेजनितेचरमसाक्षात्कारवृत्त्यारूढेनात्मनैवात्माआत्मानंजानातीत्यर्थः ॥ सर्पपदानिसर्पइव ॥ इवार्थेवशब्दः ॥ १४ ॥ तर्हिगुरूपदेशाख्यःक्रमःकथंकेनद्वारेण ॥ १५ ॥

स्थूलार्थं भगीनिरधनम्यायेनशिष्यबुद्धेःसत्यकमवणताभ्यसनापारनद्वारागुरूपदेशादेसामकारणेनेतिसकृपसिद्ध किराटोपाख्यानमाह ॥ अत्यंतेत्यादिना ॥ किराट खेटवणि
क् ॥ १६ ॥ १७ ॥ कार्पण्यात्त्वीयस्पणतास्वभावात् ॥ बुधावशोधयामास ॥ १८ ॥ तस्यान्वेषणोद्योगहेतुमभिप्रायमाह ॥ कपर्दकाइति ॥ लाभेसतिममहस्तेभवताश्च
ननकपर्दकेनार्कचित्कीत्वातद्विक्रयाश्चत्वार कपर्दका स्युस्ततोदृष्टौनत शतंतत सहस्रततोदेसहस्रे चेतिचेतसाकलयश्चितयन्नसम् ॥ १९ ॥ अस्यार्थमप्यारब्धोदृढोद्योगोमूढजन
हासदानादिर्विघ्नैरसर्वात्मधम्महाफलोभवतीतिसूचयन्नाह ॥ जनति ॥ २० ॥ २१ ॥ भासाअखिलाजगद्भूतय सांसारिकभोगायेन शांता सर्वेदारिद्र्यापनर्थायस्यतादृश
तयास्थित ॥ २२ ॥ जगदसमूल्यमस्यतथाविधनदृतम ॥ २३॥ तथागुरूपदेशक्रमादन्यच्छाब्दपरोक्षमायमन्विष्यते ॥ अन्यन्नित्यापरोक्षलभ्यते ॥२४॥ कथमन्यत्तदाह॥

॥श्रीवसिष्ठउवाच॥ ॥अत्यंतकृपण कश्चित्किराटोधनधान्यवान्॥ अस्तिविंध्याटवीकक्षेकुटुंबीब्राह्मणोयथा॥१६॥ तस्यैकदानिप
तितागच्छतोविंध्यजंगले॥ एकावराटिकारामवणजालकसंवृते॥ १७॥ कार्पण्यात्सप्रयत्नेनसर्वत्वणतुषादिकम्॥ कपर्दकार्थमभि
तोदुधावदिवसत्रयम्॥ १८॥ कपर्दका स्युर्भवताचत्वारोष्टौचकालत ॥ तत शतसहस्रंचसहस्रंचेतिचेतसा॥ १९॥ कलयन्जंगलेदी
नोरात्रिंदिवमतंद्रित ॥जनहाससहस्राणियुयुघेनपरंतुस ॥ २० ॥ ततोदिनत्रयस्यांतेतेनतस्माच्चजंगलात् ॥ पूर्णेंदुबिंबप्रतिमोलब्ध
श्चिंतामणिमहान्॥ २१ ॥ तंप्राप्यतुष्टहृदय समागम्यगृहंसुखम्॥ प्राप्ताखिलजगद्भूतिशांतसर्वतयास्थित ॥ २२॥ एवयथाकिराटेन
कपर्दान्वेषणेनतत्॥ रत्नंलब्धजगन्मूल्यमहोरात्रमखेदिना॥२३॥ तथाश्रुतोपदेशेनस्वात्मज्ञानमवाप्यते॥ अन्यदन्विष्यतेचान्यल्लभ्य
तेहिगुरुक्रमात्॥ २४॥ब्रह्मसर्वेंद्रियातीतंश्रुतादींद्रियसंविद ॥तेनोपदेशादनघनात्मतत्त्वमवाप्यते॥ २५॥ गुरूपदेशाच्चविनानात्मत
त्त्वागमोभवेत्॥ केनचिंतामणिर्लब्ध कपर्दान्वेषणंविना॥ २६॥ तत्त्वस्यास्यमहार्थस्यगुरूपकथनंगतम् ॥ अकारणकारणतांमणेरि
वकपर्दक ॥ २७॥ पश्यराघवमायेयंमोहनीमहतामपि॥ अन्यदन्विष्यतेयत्नादन्यदासाद्यतेफलम्॥ २८॥ अन्यत्करोतिपुरुष फलम
न्यदेवप्राप्नोतियन्निपुजगत्स्ववलोक्यतेच ॥ तस्मादनंतरभवस्यजगद्द्रुमस्यश्रेयोतिवाहनमसंगमनिच्छयैव ॥ २९ ॥ इ०वा०वा०
दे०मोक्षोपायेपुनिर्वाण०पू०चू० किराटोपाख्याननामत्र्यशीतितम सर्ग ॥८३॥ ॥७॥ ॥७॥ ॥७॥

भवति ॥ श्रुतादिशास्त्रश्रवणतच्छास्त्रबोधादि इंद्रियमयोज्या संविदश्चिसवत्तय ॥ गुरूपदेशाच्छशाब्दस्तत्त्वएवजन्यते तासांमध्येअत्यंतस्वच्छत्रमायोपरमहंसोनित्यापरो
क्षब्रह्मस्फुरणतृशिष्यबुद्धिस्वच्छताप्रसरस्वभावोभयप्रयुक्तमेवनोपदेशात्तत्कारणमित्यर्थ ॥१५॥ तथाप्याचार्यवान्पुरुषोवेदेत्यादिश्रुतेगुरूपदेशआवश्यकइत्याह ॥ गुरूपदेशेति
॥ २६ ॥ अन्वेषणद्वाराकपर्दकइवमननद्वारागुरूपकथनमकारणमप्यवश्यफलदर्शनात्कारणतांगतमित्यर्थ ॥ २७ ॥ २८ ॥ एवमकारणमेवगुरूपदेशाद्यात्मलाभस्यकारण
सम्पन्नात्मनिभारब्धशेपोपमीतस्यजगद्द्रुमस्योपक्षयैवभय सिध्यतीतिनियमापेक्षेत्याह ॥ अन्यदिति ॥ निपुजगास्तुयस्मात्तेतोरेवमवलोक्यतेभ्ययनेवतस्मादात्मलाभादनंतर
भवस्यप्रारब्धशेपोपमीतस्यभगद्द्रुमस्यतुअसंगयथास्यात्तथाअनिच्छयाउपेक्षणेनातिवाहनमेवश्रेयइत्यर्थ ॥ २९ ॥ ॥इ०वा ता नि पू०त्र्यशीतितम सर्ग ॥८३॥

शिखिध्वजस्यवैराग्यचूडालाश्वासनंवने ॥ निशिचैकस्यनिर्याणमद्रेरेस्थितिरीर्यते ॥ १ ॥ तत्त्वज्ञानरूपंपदंविश्रांतिस्थानंविना ॥ अप्रजा.नष्टसंततिःपुमान्शोकादितमसाअ
धत्वमिव ॥ १ ॥ अभीष्टैरसामतादिभिरुपनीतासुरत्नादिविभूतिषु ॥ २ ॥ मुक्तइषुर्यस्मैतथाविधोदैवादविद्धोजतुर्मृगादिर्व्याधतोभीतोयथाएकांतादिषुरतिमेतितद्वत् ॥ ३ ॥
अशेषादिवसक्रियाःकार्यंते ॥ लृकोरन्यतरस्यामित्यणौकर्तुर्णौकर्मत्वेकर्मणिल. ॥ ४ ॥ परिव्राडिवस्थित.समहाभोगान्श्रियंचभोक्तुंखिद्यते ॥ च.पूर्ववाक्यार्थेनसहास्यस

॥ श्रीवसिष्ठउवाच ॥ ॥ततःशिखिध्वजोराजातत्त्वज्ञानपदंविना ॥ आजगामपरंमोहंतमोंधत्वमिवाप्रजाः॥१॥ दुःखाग्निदीपितमना मनागपिविभूतिषु॥ तास्वभीष्टोपनीतासुनरेमेग्निशिखास्विव ॥२॥ एकांतेषुदिगंतेषुनिर्झरेषुगुहासुच॥आजगामरतिंजंतुर्मुक्तेषुर्व्याध तोयथा॥३॥ राघवत्वमिवाशेषाःसांत्वानुनयबोधनैः॥ प्रार्थितःकार्यतेभृत्यैर्महीपोदिवसक्रियाः॥४॥ नित्यमुद्दामवैराग्यःपरिव्राडिव शांतधीः॥ खिद्यतेचमहाभोगान्सभोक्तुंचश्रियंस्थितः॥५॥ ददावतितरांदानंगोभूमिकनकादिकम् ॥ देवेभ्योब्राह्मणेभ्यश्चस्वजनेभ्य श्चमानद॥६॥ चचारचतपःकर्तुंकृच्छ्रचांद्रायणादिकम्॥परिबभ्रामतीर्थानिवनान्यायतनानिच ॥७॥ सतथापिविशोकत्वंनमनाग पिलब्धवान्॥ अनिधानांखनन्भूमिंनिधानार्थीनिधिंयथा ॥८॥ रात्रिंदिवंमहानेषशुष्यत्येवकृशानुना॥ चिंतयाचिंतयामाससंसा रव्याधिभेषजम् ॥ ९ ॥ चिंतापरवशोदीनोराज्यंस्वस्यविषोपमम् ॥ महाविभवमप्यग्र्यंनापश्यत्खिन्नयाधिया ॥ १० ॥ अथैकदैकांतग तांजूडालामंकमागताम्॥ इदंमधुरयावाचासमुवाचशिखिध्वजः॥११॥ ॥शिखिध्वजउवाच॥ ॥भुक्तंराज्यंचिरंकालंभुक्ताविभव भूमयः॥ अधुनास्मिविरागेणयुक्तोगच्छामिकाननम्॥ १२ ॥नसुखानिनदुःखानिनापदोनचसंपदः॥ क्रोडीकुर्वंतितन्वंगिमुनिंवन निवासिनम्॥ १३ ॥नदेशभंगसंमोहोनसंग्रामेजनक्षयः॥ राज्यादप्यधिकंमन्येसुखंवननिवासिनाम् ॥ १४॥ स्तबकस्तनधारिण्यो रक्तपल्लवपाणयः॥ मंजरीजालहारिण्योलोलशुभ्राबुदांशुकाः॥ १५॥ स्वपरागांगरागिण्यःकृतकौसुममंडनाः॥ आसेव्यकांचनशि लानितंबतटशोभिताः॥ १६ ॥तरंगमौक्तिकप्रोतसरिन्मुक्तालतावृताः॥ लतावयस्यावलितामुग्धमुग्धमृगात्मजाः॥ १७॥

मुच्चयार्थः ॥ ५ ॥ ६ ॥ देहमन.शोधनकर्तुंकृच्छ्रचांद्रायणादिकंतपश्चकार ॥ ७ ॥ ८ ॥ चिंतयाचिंतालक्षणेनकृशानुना ॥ ९ ॥ १० ॥ ११ ॥ विभवभूमयोवैभवपदानि ॥ १२ ॥ क्रोडीकुर्वंतिश्लिष्यंति ॥ १३ ॥ सुखाधिक्येहेतून्दर्शयति ॥ नदेशेति ॥ १४ ॥ इदानींवनराजीश्चूडालोपमात्वेनस्वीकृत्यवर्णयति ॥ स्तबकेत्यादिपंचभिः ॥ प्राये णसर्वत्ररूपकाणि ॥ १५॥ कृतानिकुसुमान्येवकौसुमानिमंडनानियाभि. ॥ आसेव्याःकांचनशिलाएवनितंबतटास्तै शोभिताः ॥ १६ ॥ तरंगलक्षणमौक्तिकैःप्रोताभि सरि न्मुक्तालताभिरावृता. ॥ मुग्धमुग्धामृगाएवात्मजाःशिशवोयासाम् ॥ १७ ॥

क्षुधितम्याविर्तापानिरसानिफलभाजनामियाजि ॥ पुष्पैरापूर्यतइतिपुष्पापूरालताएवबाङ्गापगानियासाम् ॥ १८ ॥ त्वदधरइवआस्वाद्य.स्यवस्तरमभ्रमायोयासीतम्रामया
ता ॥ वनवीथ्योवनराज्य ॥ १९ ॥ २० ॥ अस्मिन्वनगमनविषयेसम्भ्रमणेउत्तमविचारे ॥ २१ ॥ तस्यवैराग्यवार्त्ताजिज्ञासमानाभाक्तनीकामासक्तिमेवयोनुरूपतावर्ण
ननानुमन्यमानवस्थूणाविचालनन्यायनविचालयन्तीचूडालोवाच ॥ ग्रामस्यादिना ॥ २२ ॥ २३ ॥ यद्देशोभामहेवसावेनियावम ॥ अस्मदोद्ययोश्वेतिवहुवचनम् ॥ २४ ॥
पुष्पाणिपीयतधार्यतेपाश्चलनाश्चतरीयशिरोमनपुष्पैर्मितयानुलितयाजरसासह ॥ पुष्पसिताभिर्लताभिर्मैथीतत्साम्यदशायामेवयुक्तेतिभाव ॥ २५ ॥ राज्ञस्यराज्यच्छिद्रस्य

स्वभावोद्दामसौगध्यावितीर्णफलभोजना ॥ षट्पदश्रेणिनयना पुष्पापूरलतांगिका ॥ १८ ॥ आस्वाद्यस्यदतांयाता.शीतलामलगा
त्रिका ॥ रमयतित्वमिवमांवनवीथ्योवरानने ॥ १९ ॥ यथाविविक्तमेकानेमनोभवतिनिर्वृतम् ॥ नतथाशशिबिंबेपुनर्व्वक्षेप्रसद्मसु
॥ २० ॥ अस्मिन्सम्भ्रमणेतन्विनविघ्नंकर्तुमर्हति ॥ भर्तुर्विघटयतीच्छांनस्वप्नेपिकुलस्त्रिय ॥ २१ ॥ ॥ चूडालोवाच ॥ ॥ प्राप्तकाल
मृतंकार्यंराजतेनाथनेतरत् ॥ वसंतेराजतेपुष्पंफलंशरदिराजते ॥ २२ ॥ जराजरठदेहानांयुक्तोवनसमाश्रय ॥ नयूनांत्वादृशामेवते
नैतन्मेनरोचते ॥ २३ ॥ यौवनंनमहाराजनयावद्द्वयमुज्झिता ॥ पुष्पौघेणेवतरवस्तावच्छोभामहेगृहे ॥ २४ ॥ पुष्पधानापुष्पमितजरसा
सहकाननम् ॥ समगृहाद्गमिष्यामोहंसाइवसरोवरात् ॥ २५ ॥ अप्राप्तकालंनृपतेप्रजापालनमुज्झत ॥ राजन्यस्यैवरम्यस्यमहदेनो
भविष्यति ॥ २६ ॥ अप्राप्तकारिणंभूपरोधयतिचवैप्रजा ॥ रोधयंतिव्यकार्येभ्य प्रभुंस्तत्या परस्परम् ॥ २७ ॥ ॥ शिखिध्वजउवाच ॥
अलमुत्पलपत्राक्षिविघ्नेनाभिमतस्यमे ॥ विद्धिमांगतमेवेतोदूरमेकांतकाननम् ॥ २८ ॥ बालात्वमनवद्यांगिनागंतव्यंवनंत्वया ॥ पु
सामपिहिस्थूलगिर्दुर्विगाह्योवनाश्रय ॥ २९ ॥ समयानवनावासेयोषित कठिनाअपि ॥ काननेपुष्पमंजर्य सोढुंशक्ताहिमक्षमा ॥
॥ ३० ॥ भवत्यापालयत्येहराज्येस्यातव्यमुत्तमे ॥ कुटुंबभारोद्वहनंपत्न्यौयातेव्रतंस्त्रिय ॥ ३१ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इत्युक्त्वादयि
तांराजातामिंदुवदनांवशी ॥ उत्तस्थौस्नातुमखिलंदिनकार्यंचकारच ॥ ३२ ॥ अथोज्झितप्रजाचेष्टोरविरस्ताचलययौ ॥ शिखिध्वजो
वनमिवसमस्तजनदुर्गमम् ॥ ३३ ॥ सहृत्यविततंरूपतमेवानुययौप्रभा ॥ नाथंभवननिष्क्रांतंचूडालेवानुरागिणी ॥ ३४ ॥

निमित्तमिनिरोध ॥ एन पापम ॥ २६ ॥ रोधयतिनिवारयति ॥ २७ ॥ एवंविधाल्लितोप्यविचलवैराग्य शिखिध्वजस्तामनुनयति ॥ अलमित्यादिना ॥ २८ ॥ वनाश्रयो
वनप्रदेशाद्रुत्वनविगाह प्रवेशुग्गस्य ॥ २९ ॥ कठिना कठोराम्योपि ॥ यथाकाननेजाताउपवनजाताश्च कठोराअपिपुष्पमंजर्य शाखालिसोढुमक्षमास्तद्वदित्यर्थ ॥ शक्ता
टिमितिपाठशाकानांवलवतोपक्षिणामाटिचक्किमितिव्याख्येयम् ॥ ३० ॥ यत्तयोक्तमप्राप्तकालंनृपतेरितितस्यापिदोषस्यपरिहारस्त्वयैवकार्यइत्याशयेनाह ॥ भवत्येति
॥ ३१ ॥ ३२ ॥ उपमयपोर्विशेषणेउपमानयोरपियोज्ये ॥ ३३ ॥ ३४ ॥

घृताव्योमापगास्वसखीगगायेनतथाविधंशर्वंसंश्लिष्यतिस्वयमपिकामादालिंगतीतिसंश्लेषातथाविधायमुनेवेत्युत्प्रेक्षा ॥ श्याद्यधेतिश्लिषःकर्त्तरिण. ॥ ३५ ॥ तमाललक्षण बालकाअंकेयासातासुदिक्षुयमुनाचरित्रदर्शनादिवज्योत्स्नाहासोदयाकितपरित.कृतमंडलचयथास्यात्तथास्थितासु ॥ इत.प्रभृतिसर्वेषासमन्यतानांतारागणोददृशेइत्यत्रस वधः ॥ ३६ ॥ दिनश्रीश्वदिननाथश्वतद्रूपयोर्दंपत्योर्देवोद्यानप्रचुरमैरवमेरुसवधिअपरपारउत्तरार्धंरतुगच्छतो सतोः ॥ ३७ ॥ नथाअघेर्घर्मोपतापभोजकं.पापैस्तन्निमित्तै स्तीक्ष्णकरैश्वडातपैश्वोज्झितमैरवमिदपारनिशानिशानायकलक्षणयोर्दंपत्यो.रतुमागच्छतो.सतोः ॥ ३८ ॥ दिग्वधूभिर्मुक्तउत्सृष्टोमंगललाजानामजलिरिवव्योमलक्षणेकु ट्टिमेसौधतलेतारागणोददृशे ॥ ३९ ॥ स्वनाथान्वेषणेनतदुदयप्रतीक्षयाचश्रातांकुमुदादिकुसुमैर्हासवती ॥ यौवनस्वयौवनफलमितियावत् ॥ ४० ॥ ४१ ॥ ४२ ॥ संप्रसुमा

आययौयामिनीश्यामाभुवनंभस्मधूसरम् ॥ धृतव्योमापगंशर्वंसंश्लेपायमुनेवसा ॥ ३५ ॥ दिक्षुसंध्याब्ददंतासुस्थितासुकृतमंडल म् ॥ तमालबालकांकासुज्योत्स्नाहासोदयांकितम् ॥ ३६ ॥ गच्छतोरपरंपारंदंपत्योर्मैरवंपदम् ॥ देवोद्यानमयंरंतुंदिनश्रीदिननाथ योः ॥ ३७॥ आगच्छतोरिदंपारंत्यघतीक्ष्णकरोज्झितम् ॥ निशानिशानायकयोर्दंपत्योर्मैरवंपुनः ॥ ३८॥ तारागणोथददृशेविकीर्णो व्योमकुट्टिमे ॥ मुक्तोमंगललाजानांदिग्वधूभिरिवांजलिः ॥ ३९॥ चंद्राननातमःश्यामाश्रांताकुसुमहासिनी ॥ यामिनीयौवनंप्रापस रोजमुकुलस्तनी ॥ ४० ॥ कृतसंध्यासमाचारःसहचूडालयेष्टया ॥ सुष्वापशयनेभूयोमैनाकइवसागरे ॥ ४१ ॥ अथार्धरात्रसमयेदेशे निःशब्दतांगते ॥ घननिद्राशिलाकोशनिलीनेसकलेजने ॥ ४२ ॥ सतस्यांसंप्रसुप्तायांशयनेकोमलांशुके ॥ भृशंनिद्राविमूढायांभ्रम र्यामिवपंकजे ॥ ४३ ॥ तत्याजदयितांसुप्तामंकाद्राजाशिखिध्वजः ॥ स्वैरंस्वैरंमुखंराहोर्दिशंचांद्रप्रभामिव ॥ ४४ ॥ उत्तस्थौशयनाल्ली नवधूकार्धचलांशुकात् ॥ सलक्ष्मीकांतिलोलोर्मैर्हरिःक्षीरार्णवादिव ॥ ४५॥ वीरक्रमार्थयामीतितत्रैवानुचरव्रजम् ॥ योजयित्वा जगामासौपुरान्निर्गत्यपूर्णधीः ॥४६॥ राज्यलक्ष्मिनमस्तुभ्यमित्युक्त्वामंडलाद्गतः ॥ विवेशोग्रामरण्यानीमेकोनदइवार्णवम् ॥४७॥ घनांधकारगुल्माढ्याक्षुद्रभूतौघकर्कशा ॥ सारण्यानीनिशासार्धंसमंतेनातिवाहिता ॥ ४८ ॥ प्रातःशून्यामरण्यानींसनीत्वावितितंदि नम् ॥ सममर्केणकस्यांचिद्दिशिश्रामवनावनौ ॥४९॥

यातस्याचूडालायाभृशंनिद्रयाविमूढायांसत्याम् ॥ ४३ ॥ यथाराहोर्मुखचद्रमोक्षकालेस्वैरस्वैरशनैःशनैश्चाद्रप्रभाप्राचीदिशप्रतित्यजतितद्वत् ॥ ४४ ॥ लीनावधूर्यस्मिस्तल्लीनवधूकतथाविधमर्धाचलमर्धभागोयस्यतथाविधमशुक प्रावरणवस्त्रयस्मिस्तथाविधाच्छयनात्पर्यंकात् ॥ लक्ष्म्याःकातिभिःसहिताःसलक्ष्मीकातयोलोलाश्वोर्मयोयस्मिस्तथाविधात्क्षीरार्णवादिव ॥ ४५ ॥ वीरक्रमश्वोरदुष्टनिग्र हार्थानिशाचर्यातत्रवीरक्रमएवानुचरव्रजयोजयित्वानियुज्य ॥ पूर्णधीर्निस्पृह. ॥ ४६ ॥ उपाजीपणाम ॥ अरण्यानीमहदरण्यम ॥ हिमारण्ययोर्महत्वेइत्यानुक् ॥ ४७ ॥ घनैरधकारसदृशैरधकारलक्षणैश्वगुल्मैराढ्यासाअरण्यानीनिशाचतेनातिवाहिताउत्तीर्णा ॥ ४८ ॥ अर्केणसमविशश्रामेत्युक्त्याआसायंजगामैवेतिगम्यते ॥ ४९ ॥

१ सध्याभ्दतास्वत्यपिपाठ.

नमस्विनीरामिम् ॥ ५० ॥ ५१ ॥ अत्यन्तदूरस्थाजनताजनसमूहा अनपशब्दतियावत् ॥ पुराणिचयस्मात् ॥ ५२ ॥ रटतिसशब्दप्रवहतिवशप्रणालद्वारासलिलानियाम्यस्त
थाविधाभिर्वापीभिवलितावलयसरा छन्ना आवरणायस्मिन् ॥ पूर्वंभूताभूतपूर्वाद्विजाश्रमायस्मिन् ॥ ५३ ॥ ५४ ॥ शाद्वलैर्हरितवृणबस्तरी श्यामे ॥ मब्रशाद्वाङ्कलम् ॥५५॥
उटज पर्णशालातद्रूपमालयम् ॥ ५६ ॥ ५७ ॥ ५८ ॥ विधिधाताअगतिस्वस्वटभ्रमाधिकमध्यवहारसाधनजातमिव ॥ ५९ ॥ पुष्पाणामुच्चयसचयम् ॥ फलमूलकुशका
ष्ठादीनामप्युपलक्षणमेतत् ॥ ततस्तृतीयेइत्यर्थ ॥ ६० ॥ ६१ ॥ उक्तमनूद्योपसहरति ॥ इतीति ॥ मालवेश शिखिध्वजश्तिवर्णितप्रकारेणमंदरोपांतकच्छेविरचितेउटजेअत

भानावदृस्यतायातेतत्रस्नानादिपूर्वकम् ॥ किंचित्फलादिकंभुक्त्वातांनिनायतमस्विनीम् ॥ १० ॥ पुनःप्रात पुराण्युच्चैर्मंडलानिगिरीन्न
दी ॥ जवाद्ुल्लंघयामासराजाद्वादशशर्वरी ॥५१॥ ततोमंदरशैलस्यतटस्थजनदुर्गमम् ॥ प्रापकाननमत्यंतदूरस्थजनतापुरम् ॥५२॥
रट्यणालसलिलवापीवलितपादपम् ॥ शीर्णवेद्यालयज्ञातभूतपूर्वद्विजाश्रमम् ॥ ५३ ॥ क्षुद्रप्राणिविनिर्मुक्तसिद्धसेव्यलतालयम् ॥
आपूर्णपादपलतप्राणवृत्तिकरैःफलैः ॥५४॥ तत्रैकस्मिन्समेशुद्धस्थलेसलिलमालिते ॥ शीतलेशाद्वलश्यामेस्निग्धेसफलपादपे ॥५५॥
समंजरीभिर्वल्लीभि सचकारोटजालयम् ॥ प्रावृट्काल सविपुद्भिर्नीलाभ्रैरिवपंजरम् ॥ ५६ ॥ मसृणवेणवंदंडफलभोजनभाजन
म् ॥ अघपात्रपुष्पभांडमक्षमालांकमंडलुम् ॥ ५७ ॥ कथाशीतापनोदायमृगींचैवमृगाजिनम् ॥ आनीयायोजयत्तस्मिन्मठिकामंदि
रेनृप ॥५८॥ यत्किंचिदन्यद्वावस्तुयोग्यतापसकर्मणि ॥ तत्तत्रस्थापयामासजगतीव क्रमविधि ॥ ५९ ॥ सध्यापूर्वंजपप्रात प्रहरेस
तदाकरोत् ॥ पुष्पोच्चयद्वितीयेतुस्नानदेवार्चनंतत ॥ ६० ॥ पश्चाद्वनफलंकिंचिद्वनकंदमिसादिव ॥ भुक्त्वाजप्यपरोभूत्वानिनायैकांनि
शांवशी ॥ ६१ ॥ इतिदिवसमखेदमंदरोपांतकच्छेविरचितउटजेतमालवेशोनिनाय ॥ नवनृपतिविलासतनसस्मारकंवास्फुरतिहृदि
विवेकराज्यलक्ष्म्योहरंति ॥६२॥ ॥इत्यार्षेवा॰वा॰दे॰मोक्षोपायेपुनि॰पू॰चू॰शिखिध्वजप्रव्रज्यानामचतुरशीतितम सर्ग ॥८४॥
श्रीवसिष्ठउवाच ॥ ॥एवशिखिध्वजःपूर्णंमठिकायांवनेस्थित ॥ इदानींशृणुचूडालासाकिंकृतवतीगृहे ॥१॥ तत्रार्द्धरात्रसमयेदूरया
तेशिखिध्वजे ॥ हरिणीग्रामसुप्तेवचूडालाबुबुधेभयात् ॥ २ ॥ अपश्यत्पतिनिर्हीनाशयनशून्यतागतम् ॥ अभास्करमपूर्णेंदुशांतशोभ
मिवांबरम् ॥ ३ ॥ उत्तस्थौकिंचिदम्लानवदनाखेदशालिनी ॥ कुसितेवमहावल्लीनिरुत्साहांगपल्लवा ॥ ४ ॥

स्थित अन्यच्चदिवसंबहुनदिवसान्निनाय ॥ अप्रामनुभूतनवनृपतिविलासानसस्मार ॥ तत्कुतस्तत्राह ॥ कथेति ॥ विवेकेहृदिस्फुरतिसतिराज्यलक्ष्म्य कथावरिभ्रमपिहरतिवांछा
जननेनवशीकर्तुंशक्नुवंतिनकथिदपीत्यर्थ ॥ ६२ ॥ ॥ इतिश्रीवासिष्ठम॰तात्पर्यप्रकाशेनिर्वाणप्रकरणेपू॰चतुरशीतितम सर्ग ॥ ८४ ॥ ॥ ५ ॥ ॥ ५ ॥
राज्यामयुद्धयारात्राम्यपणपयिदरानम् ॥ भाव्यर्थदर्शनकालेबाधमवाप्यते ॥ १ ॥ उक्तमनूपवक्ष्यमाणकथयासंगमयति ॥ एवमिति ॥ १ ॥ मामसुप्तेवेतिराजवियोग
भीत्यासहसाआपत्यपरिशान्निद्रयाद्दनेतियोजनार्थम् ॥ २ ॥ पत्यानिर्हीनात्यक्ता ॥ ३ ॥ कुसितनक्षारकर्दमादिजलेनसिक्ता ॥ विशेषणमाधारजयोग्य ॥ ४ ॥

॥ ५ ॥ इतिचिंतयावक्ष्यमाणंचिंतयामासेत्यर्थः ॥ ६ ॥ तदेवाह ॥ तदिति ॥ विधिनाशास्त्रेणभर्तैवप्रकृताप्रथमागतिःशरणंउद्दिष्टाविहिता ॥ असतिहिभर्त्तरिपुत्रादयोगतिरि तिभाव ॥ ७ ॥ वातरध्रवातायनतेन ॥ ८ ॥ अन्येंदुविभ्रमद्वितीयचंद्रभ्रांतिम ॥ ९ ॥ वेतालयोग्येसमयेनिशिउदितप्रकाशमानम् ॥ १० ॥ भर्त्तुर्भविष्यद्भाविपदार्थजात म् ॥ ११ ॥ भविष्यदेवप्रकारनिमित्तकालदेशक्रियेयत्ताभ्युदयानि श्रेयसपर्यंतैर्विभज्यचिंतितवतीत्याह ॥ यथेति ॥ स्फारानिर्वृतिर्भूमानदविश्रांतिः ॥ १२ ॥ पुरःस्थितमिव

क्षणंशय्योपविष्टैवचिंतयामासचिंतया ॥ कष्टंरा ज्यंप्रभुस्यक्त्वावनंयातोगृहादिति ॥ ६ ॥ तन्मयेहाद्यकिंकार्यंतत्समीपंव्रजाम्यहम् ॥ भर्त्तैवगतिरुद्दिष्टाविधिनाप्रकृतास्त्रियः ॥ ७ ॥ इति संचिंत्यभर्त्तारमनुगंतुंसमुत्थिता ॥ चूडालावातरंध्रेणनिर्गत्यांबरमाययौ ॥ ८ ॥ बभ्रामांबरमार्गेणवातस्कंधेनयोगिनी ॥ कुर्वतीसिद्ध सार्थस्यमुखेनान्येंदुविभ्रमम् ॥ ९ ॥ ददर्शाथयथायातंरात्रौखड्गधरंपतिम् ॥ भ्रमंतमेकमेकांतेवेतालसमयोदितम् ॥ १० ॥ तादृशंपति मालोक्यस्थित्वागगनकोटरे ॥ भविष्यच्चिंतयामाससर्वंभर्त्तुरखंडितम् ॥ ११ ॥ यथायेनयदायत्रयावत्कार्यंयथोदयम् ॥ यथाचनिर्वृतिः स्फारागंतव्यातेनराघव ॥ १२ ॥ अवश्यंभवितव्यंतद्भर्त्तुर्दृष्ट्वापुरःस्थितम् ॥ तदेवसंवादयितुंगमनात्सान्यवर्त्तत ॥ १३ ॥ आस्तांममाद्य गमनंकालेनातिचिरेणहि ॥ मयास्यपार्श्वेगंतव्यंनियतेरेषनिश्चयः ॥ १४ ॥ इतिसंचिंत्यचूडालाप्रविश्यांतःपुरंपुनः ॥ सुष्वापशयनेशंभोः शिरसींदवीकला ॥ १५ ॥ केनचित्कारणेनासौगतःसंप्रतिभूपतिः ॥ इतिपौरंजनंसर्वमाश्वास्यातिष्ठदंगना ॥ १६ ॥ राज्यंररक्षभर्तु स्तत्क्रमेणसमदर्शनात् ॥ यथाकालेनकेदारंपक्वंकलमगोपिका ॥ १७ ॥ तयोस्तदावहत्कालोदंपत्योःस्थितयोस्तथा ॥ अदृष्टान्योन्यमु खयोराज्यकाननपालयोः ॥ १८ ॥ जगामाथदिनंपक्षोमासोथऋतुवत्सरः ॥ शिखिध्वजस्यविपिनेचूडालायाःस्वमंदिरे ॥ १९ ॥ बहु नात्रकिमुक्तेनवर्षाण्यष्टादशांगना ॥ चूडालोवाससदनेवनगुच्छेशिखिध्वजः ॥ २० ॥ अथयातेपुबहुषुवर्षेपुजरसावृते ॥ शिखिध्वजे महाशैलतटकोटरवासिनि ॥ २१ ॥ भर्तुःकषायपाकंतदालक्ष्यपालितंचिरात् ॥ तदातस्याथयातेपुवर्षेपुजरसावने ॥ २२ ॥ तदातस्या त्मकार्यस्यभवितव्यतयातथा ॥ भर्तुःसमीपगमनेममकालोयमित्यथ ॥ २३ ॥ संचिंत्यमंदरोपांतंगंतुंबुद्धिंचकारसा ॥ चचारांतःपुरा द्रात्रौततारनभसःपथम् ॥ २४ ॥ जगामवातस्कंधेनगच्छंतीखेददर्शसा ॥ कल्पवृक्षांशुकच्छन्नरत्नस्तवकभूषिताः ॥ २५ ॥

योगबलादपरोक्षदृष्टासंवादयितुंतदनुरूपमाचरितुमितियावत् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ कलमगोपिकाशालिपालिका ॥ १७ ॥ अवहत्अगमत् ॥ १८ ॥ कथमगम त्तदाह ॥ जगामेति ॥ ऋतुसहितोवत्सरः ॥ १९ ॥ २० ॥ २१ ॥ कषायाणारागादिवासनानापाकमालक्ष्यतत्त्वावत्कालंतयापालितंप्रतीक्षितमितियावत् ॥ तदेत्यादिरुक्तानु वादोवक्ष्यमाणार्थः ॥ २२ ॥ आत्मकार्यस्यस्वभर्तृबोधस्यतथावक्ष्यमाणप्रकारेणस्वोपदेशेनैवभवितव्यतया ॥ २३ ॥ ततारपुप्लुवे ॥ २४ ॥ २५ ॥

---

१ वृतेइत्यपिक्वचित्पाठः ॥ वनेइतिपाठेजरसाउपलक्षितस्येत्यन्वयः ॥ वृतेइतिपाठेशिखिध्वजेजरसावृतेसतीत्यन्वयः

रमा.कनिष्यनुक्ता ॥ परामृटार्नांवा शकलानिकलार्थ ॥ २६ ॥ सिद्धात्तमेभ्य आत्तानिगृहीतानिमदारमालाहरिचन्दनकस्तूर्यादिसौगन्ध्यानियत्तथाविधान्मारुतान्स्पर्श
यामासवत्स्वरा ॥ चन्द्रबिंबलक्षणस्यामृतांभोधेमहावीचिपरंपराभूतांनिर्मलज्योत्स्नाम ॥ २७॥ अवरस्यअंतरतामतवर्त्तिनागतासतीददर्श ॥ २८ ॥ स्वभामपेनअवियुक्ता
विपनाप्यवलोकयत् ॥ आत्मनामनसैवाबाच ॥ किमुबाचतदाह ॥ अहोइत्यादिना ॥ २९ ॥ ३० ॥ ममममन उत्कबिषकैर्बोध्यमानमपिइतिउत्कठने ॥ ३१ ॥ अपभ्रेष्ठवयो
नीजामाअपजा ॥ ३२ ॥ ३३ ॥ अप्तज ॥ मुधाप्यर्थभवतांइवितसत्किंस्थितमसीत्यर्थ ॥ ३४ ॥ अथवानायशोपदतिशेप ॥ फलत्तमाह ॥ भर्त्तारमिति ॥ ३५ ॥ इदा

नदनोद्यानिलयारक्ता सिद्धाभिसारिधा ॥ परामृष्टेंदुशकलान्प्रालेयकणवर्पिण ॥ २६ ॥ सिद्धोत्तमात्तसौगध्यान्स्पर्शयामासमा
रुतान् ॥ चन्द्रबिंबामृताभोधेमहावीचिपरंपराम् ॥ २७ ॥ अपश्यन्निर्मलज्योत्स्नामथरातरतांगता ॥ मेघांतरेणगच्छतीमेघलग्नाश्च
विद्युत ॥ २८ ॥ अवियुक्ता स्वभ्रासाभृयोभृयाव्यलोकयत् ॥ उवाचचात्मनैवाहोयावज्जीवशरीरिणाम् ॥ २९ ॥ नस्वभाव शमया
तिममाप्युत्कंठितमन ॥ कदाम्रगेन्द्रस्कंधतग्रणयप्रवणपुन ॥ ३० ॥ पश्यामिकांतमित्युक्तमयाप्युत्कठतेमन ॥ मंजरीजालवलितास्त
रुवद्भ्य स्वकपतिम् ॥ ३१ ॥ नमुचंतिक्षणमितिममाप्युत्कंठतेमन ॥ यथेयमग्रजाकांतमेतिसिद्धाभिसारिका ॥ ३२ ॥ तथाकदाहमे
प्यामिममापीतिमन स्थितम् ॥ इमेमदाश्चमरुतएतेचशशिन करा ॥ ३३ ॥ वनराजयएताश्चमामप्युत्कंठयंत्यहो ॥ हेचित्ताज्ञमुधैवां
त किंत्वताहवितास्थितम् ॥ ३४ ॥ साव्योमनिर्मलासाधोकतेयाताविवेकिता ॥ अथवाचित्तभर्त्तारस्वप्रत्युत्कठसेमखं ॥ ३५ ॥ तिशो
त्कठाभिवलितांकिसमुत्कठितनमे ॥ किंत्वयोत्कठसेवाभेभर्त्तायातोजराभवेत् ॥ ३६ ॥ तपस्वीकृशगात्रश्चभवन्निर्वासनस्तथा ॥ मनो
राज्यादभोगेभ्यामन्यस्यामूलतांगतम् ॥ ३७ ॥ वासनालतिकाप्रावृण्नदीनदगतायथा ॥ एकांतरतएकात्मानीरस शांतवासन ॥ ३८ ॥
मन्येभवतिमेभर्त्ताशुष्कवृक्षसमास्थिति ॥ तथापिचित्तकोत्कठाभवतोत्कठयान्वितम् ॥ ३९ ॥ मतिमुद्बोध्ययोगेनश्लेपयिष्याम्यहप
तिम् ॥ प्रम्रष्टपल्लवभृतु समीकृत्यमनोमुने ॥ ४० ॥

नीरसइत्याह ॥ किमिति ॥ वामहस्तशरीरपर्यालिंगनार्थसमुत्कठसेसतेभर्त्तानीयातस्त्वन्निरपेक्षएवभवेत्सभाव्यतइत्यर्थ ॥ ३६ ॥ राज्यादीनामभोगेभ्य अभोगार्थम
स्यमन अमूलतानिर्मूलतांगतंमन्यसभावये ॥ ३७ ॥ तथाअस्यवासनालतिकायथाप्रावृण्नदीक्षुद्रामहानदगतासतीनपृथगवशिष्यतेतथासपन्नेतिशेष ॥ एकांतिरत आसक्त
अतएवएकात्मा ॥ नीरसोनिरिच्छ ॥ ३८ ॥ एवंनराश्यपर्वशानाच्चिरुत्साहमन पुनरुज्जीवयतीत्याह ॥ तथापीति ॥ अस्त्वेवविध स तथापिहेचित्तकांतयोत्कठाअहंयोगेनम
दयमाप्यायनभर्तुर्मतिमुद्बोध्यतस्सहीष्टत्यपारभ्यशेपभोगोत्कंठयापुनर्पतिभवतासहश्लेपयिष्यामितत्योत्कठाकार्येतिपरेणान्वय ॥ ३९ ॥ तदेवस्पष्टमाह ॥ प्रम्रष्टेति ॥ ४०

॥ ४१ ॥ यद्यस्माद्धेतोर्भर्त्तातत्त्वबोधान्मयासमंतुल्यरूपमंतर्बाह्यार्थाचितितंयस्यतथाविध·संपत्स्यतइतिशेषः ॥ तदेवप्रशसंत्याह ॥ समयेति ॥ ४२ ॥ ४३॥ अब्दान्मेघान्॥ वनांतरवनमध्यम् ॥ ४४ ॥ पादपानालतानाचस्पंदेनवेद्यावनुमेयौगमागमीयस्या ॥ ४५॥ योगेनसमाहितचित्तेनेतियावत् ॥ योहारकेयूरादिभूषितःसन्मेरुकांतिरभवत्तमे वअत्रमदरोटजेकुशागत्वादिलक्षणंददर्शेतिपरेणसबंध ॥ ४६ ॥ ४७ ॥ भृगीशप्रसिद्धरुद्रद्वारपालमिव ॥ ४८ ॥ देवातिथिसमर्चनायपुष्पाणिमालांग्रथयतम् ॥ जटाभिर कितचिह्नितम् ॥ ४९ ॥ अनात्मज्ञताअज्ञानतदात्मकम् ॥ ५० ॥ यतोयस्माद्धेतोर्मेअतिप्रियःपतिर्मोहघनेनक्षुदिक्षुण्णामभिहतामिमादशामभ्यागतस्तत्तस्माद्धेतोरिहास्मि

राज्यएवनियोक्ष्यामिनिवत्स्यावःसुखंचिरम्॥ अहोनुचिरकालेनमनोरथमिमंशुभम्॥४१॥ अहमासादयिष्यामियद्भर्त्तासमचिंतितः॥ समग्रानंदवृंदानामेतदेवोपरिस्थितम्॥ ४२ ॥ यत्समानमनोवृत्तिसंगमास्वादनेसुखम्॥ इतिचिंतयतीव्योम्नाचूडालोल्लंघ्यपर्वतान्॥४३॥ देशानब्दान्दिगंतांश्चप्रापमंदरकंदरम्॥ अदृश्यैवनभःस्थैवप्रविवेशवनांतरम्॥ ४४ ॥ वात्येवपादपलतास्पंदवेद्यगमागमा॥ वनैकदेशेकस्मिंश्चित्कृतपर्णोटजंपतिम्॥ ४५॥ दृष्ट्वायोगेनबुबुधेदेहांतरमिवास्थितम्॥ हारकेयूरकटककुंडलादिविभूषितः॥४६॥ अभवन्मेरुकांतिर्यस्तमेवात्रददर्शसा॥ कृशांगंकृष्णवर्णंचजीर्णपर्णमिवस्थितम्॥ ४७॥ कज्जलांबुभरस्नातंभृंगीशमिवनिस्पृहम्॥ चीरांबरधरंशांतमेकाकिनमवस्थितम्॥ ४८ ॥ स्थलीनिषण्णंपुष्पाणिग्रथयंतंजटांकितम्॥ तमालोक्यानवद्यांगीचूडालापीवरस्तनी॥४९॥ किंचिज्जातविषादैवमुवाचात्मनिचेतसा॥ अहोनुविषमंमौर्ख्यंतदनात्मज्ञतात्मकम्॥५०॥ एवंविधाःसमायांतिदशामौर्ख्यप्रसादतः॥ अयंसराजालक्ष्मीवान्यतोमेतिप्रियःपतिः॥५१॥ त्वदिमोहघनक्षुण्णामिमामभ्यागतोदशाम्॥ तदवश्यमिहाद्यैवनाथंविदितवेद्यताम्॥ ५२॥ नयाम्यत्रनसंदेहोभोगमोक्षश्रियंतथा॥ इदंरूपंपरित्यज्यरूपेणान्येनकेनचित्॥ ५३ ॥ सकाशमस्यगच्छामिबोधंदातुमनुत्तमम्॥ बालेयंममकांतेतिमदुक्तंनकरोत्यलम्॥ ५४॥ तस्मात्तापसरूपेणबोधयामिपतिंक्षणात्॥ भर्ताकषायपाकेनपरिपक्वमतिःस्थितः॥ ५५॥ चेतस्यस्याद्यविमलेस्वंतत्त्वंप्रतिबिंबति॥ इतिसंचिंत्यचूडालाबभूवद्विजदारकः॥ ५६॥ ईषद्ध्यानाद्गतान्यत्वंक्षणादंबुतरंगवत्॥ पपातविपिनेतस्मिन्द्विजपुत्रकरूपिणी॥५७॥ भर्त्तुरध्याजगामाग्रंमंदस्मितलसन्मुखी॥ ददर्शद्विजपुत्रंतंपुरोयातंशिखिध्वजः॥ ५८॥

न्युटजेअद्यैवअवश्यनाथपतिविदितवेद्यतातथाभोगमोक्षश्रियनयामिप्रापयामीतिपरेणान्वयः ॥ ५१ ॥ ५२ ॥ ५३ ॥ किमर्थमिदंरूपपरित्याज्यतत्राह ॥ बालेति ॥ ५४ ॥ प्रागेवकुतस्तपस्विवेषेणसनबोधितस्तत्राह ॥ भर्तेति ॥ ५५ ॥ द्विजदारकोब्राह्मणपुत्रः ॥ ५६ ॥ कथंबभूवतदाह ॥ ईषदिति ॥ प्रागुक्ताग्नीषोमधारणान्वितादीषद्ध्यानात् ॥ अन्यत्वंपुंस्त्वम् ॥ ५७ ॥ अग्रपुरोदेशम् ॥ ५८ ॥

अतएवकिष्कुमात्रेणहस्तमात्रेणदगुण्यावत

मूर्त्तिमास्थितमपरवद्ग्वल्कनकमिवगौरा।राचिर्यास्यच्छाम्यंगानियस्य ॥५९॥ ६० ॥ व्यामःअकोष्ठाम्नाणिवधाद्विगुणावद्दिर्वैशोयेन मिवस्थितम ॥६२॥

लितायथवाअतएवानांतर्दृश्य।भूमावलग्नगात्रेणाक्षसूत्रेणाक्षमालयास्थितमुपलक्षितम ॥६१॥६२॥ मस्थगगसलग्नमायदयुमस्यतथाविधमचलपवतमिवस्थितम

॥६४॥ मतहेमतटीपततमस्यातमयायपाहोलक्ष्यते ॥ तमर्लीनप्रतिबिंबितपूर्णेंदुमिवसंचलम् ॥६५॥६६॥पत्रनिर्मितविष्टरमासनम ॥ करोत्करेकरतले॥६७॥कुमुदखंडस्य

वनांतरादुपायाततपोमूर्त्तिमिवास्थितम् ॥ द्रवत्कनकगौरांगमुक्ताहारविभूषितम् ॥ ५९ ॥ शुक्लयज्ञोपवीतांगशुक्लांबरयुगावृतम् ॥ ध्यामप्रकोष्ठद्विगुणेनाक्षसूत्रेणचारुणा ॥ भूमावलग्नगात्रेणकिष्कुमात्रेणचस्थित कमंडलुधरंकांतपुरोयातशिखिध्वज ॥ ६० ॥ म् ॥६१॥धुतलघ्यामसुधानसालिमालमिवांबुजम् ॥ भासयतप्रदेशतंशारीरैर्दीप्तिमंडले ॥६२॥ कुंडलाभूषितमुखनवमर्कमिवो गतम्॥ शिखासमोतमंदारशृंगस्थेंदुमिवाचलम् ॥ ६३ ॥ कांतोपशातवपुषमूर्जितविजितेंद्रियम् ॥ हिमाभभस्मतिलकभूषितालो फसुंदरम ॥६४॥ मेरुहेमतटालीनपूर्णेंदुमिवचचलम्॥ तमालोक्यद्विजसुतसमुत्तस्थौशिखिध्वज ॥६५॥ देवपुत्रागमधियासपरि त्यक्तपादुक ॥ देवपुत्रनमस्कारइदमासनमास्यताम् ॥६६॥इत्यस्यदर्शयामासपाणिनापत्रविष्टरम् ॥ ददौचद्विजपुत्रस्यपुष्पमुष्टिक रोत्करे॥ ६७॥ चंद्र कुमुदखंडस्यप्रालेयमिवपल्लवे॥ हेराजर्षेनमस्तुभ्यमितिद्विजसुतोवदत्॥ ६८॥ गृहीत्वाकुसुमान्यस्माद्विवेशपत्र विष्टरे॥ ॥शिखिध्वजउवाच॥ ॥देवपुत्रमहाभागकृतआगमनंकृतम्॥ दिवस सफलोमन्येयत्त्वामद्यास्मिदृष्टवान् ॥ ६९ ॥ इदम घ्यमिदपाद्यपुष्पाणीमानिमानद॥ इमाप्रग्रथितामालागृह्यतांमन्मतसुत॥७०॥ ॥श्रीवसिष्ठउवाच॥ ॥इत्युक्त्वापाद्यमर्घ्यंचमालां पुष्पाणिचानघ॥ शिखिध्वजस्तदिशायैददौदेव्यैयथाखिलम्॥ ७१॥ ॥चूडालोवाच॥ ॥सुबहूनिपरिभ्रांतोभूतलायतनान्यहम्॥ त्वत्त पूजायथाप्राप्तामयेयनतथान्यत ॥ ७२ ॥ पेशलेनानुरूपेणप्रश्रयेणामुनानघ॥ मन्येहनूनमत्यंतचिरजीवीभविष्यसि ॥ ७३ ॥ शांतेनमनसोदारमाराद्धन्मुक्तकल्पनम् ॥ निर्वाणार्थतपस्साधोकच्चित्संभृतवानसि॥ ७४ ॥ असिधारासमंसौम्यशांतव्रतमिदतव॥ स्फीतयद्राज्यमुत्सृज्यमहावननिषेवणम्॥७५॥

पल्लवेप्रालेयहिमकणजालमिव ॥ ६८ ॥ यपस्मात्त्वामद्यास्मिन्दिवसेदृष्टवान

सि ॥६९ ॥ ७० ॥ अखिलयथोक्तमनतिक्रम्यतियथाखिलम ॥ पदार्थानतिवृत्तौयथार्थेअव्ययीभाव ॥७१॥ नतथान्यतःप्राप्तेत्यनुषज्यते ॥ ७२ ॥ प्रश्रयेणविनयेन ॥

एताद्दृलक्षणेनमन्येत्वमाचिरजीविनाभवसीतिभाव ॥ ७३ ॥ आराद्दूरेउन्मुक्ता कल्पना फलसंकल्पायस्मिन् ॥ अतएवोदारनिर्वाणार्थंतप सम्यग्भृतवान्संचितवानसि ॥ कच्चिदिति

इष्टप्रश्नेनिपात ॥ ७४ ॥ शांतानामक्रोधनानांयतिजनस्थानांमनभूतमिदमहावननिषेवणमसिधारासमक्रूरमत्यंतायधाननिर्वाणसेत्यर्थ ॥ ७५ ॥

राज्यत्यागनिर्वाणार्थतपश्चरणयोरज्ञातयो.प्रशंसनायोगात्तस्यतपसासर्वज्ञतांसंभावयन्राजाद्विजसुतरूपादिमपदाप्रशंसति॥ जानासीत्यादिना ॥ ज्ञायसेमहाप्रभावइतिशेषः ॥ ७६ ॥ अथवाकिंवहुनासम्यगालोकाद्वीक्षणाद्देहकातिश्चाम्रतेनसिंचसीव ॥७७॥७८॥ शृंगंमेरुशिखरम् ॥ अमुनामद्दत्तमालारूपेण ॥ ७९ ॥ सुमनसांपुष्पाणांपत्रदल मिवपेलवसुकुमारतेअगम ॥८०॥ इदंपुष्पजातमित्थंदृश्यमानवैचित्र्येणसितग्रथितम ॥ षिञ्बंधनेकर्मणिक्त. ॥ अगेतिसबोधने ॥ तत्तस्माद्देवस्यतवार्चनादित्यर्थः ॥८१॥ दे वार्चनादप्यतिथिपूजनमधिकमितितदेकमपिजन्मसाफल्यहेतुस्त्वत्पूजनेतुमेद्वयमपियुगपत्संपन्नमितिसुतरांजीवितसाफल्यमित्याशयेनाह ॥ जीवितमिति ॥८२॥ तत्तस्मान्म

शिखिध्वजउवाच॥ ॥जानासिभगवन्सर्वंदेवस्त्वंकोत्रविस्मयः॥श्रियैवलोकोत्तरयाज्ञायसेचिह्नरूपया॥ ७६॥ एतान्यंगानितेचं द्राद्यदिटानीतिमेमतिः॥ अथवाकिंसमालोकादमृतेनेवसिंचसि॥ ७७॥ अस्तिमेदयिताकांतापातिमद्राज्यमद्यतत्॥ तवैवतस्यादृष्टा नितान्यंगानीहसुंदर ॥ ७८॥ उपशांतंचकांतंचवपुरापादमस्तकम् ॥ शृंगंशुभ्रांबुदेनेवपुष्पेणाच्छादयामुना॥ ७९॥निष्कलंकेंदुसं काशमंगमादित्यतेजसा ॥ मन्येतेग्लानिमायातिसुमनःपत्रपेलवम् ॥८०॥ देवार्चनायोपचितमिदमित्थंसितंमया॥ अंगत्वदंगसं गेनतस्ययातुकृतार्थताम्॥८१॥ जीवितंयातिसाफल्यंस्वमभ्यागतपूजया ॥ देवादप्यधिकंपूज्यःसतामभ्यागतोजनः॥ ८२ ॥ तत्क स्त्वंकस्यपुत्रस्त्वंकिमायातोस्यनुग्रहात् ॥ एतन्मेसंशयंछिंधिविमलेंदुसमानन॥८३॥ ॥ब्राह्मणउवाच॥ ॥राजन्मेशृणुवक्ष्यामि यथापृष्टमखंडिनम्॥ कोनामपरिपृच्छंतंविनीतंवंचयेत्पुमान्॥ ८४॥ अस्त्यस्मिञ्जगतीकोशेशुद्धात्मानारदोमुनिः॥ पुण्यलक्ष्म्यामु खेकांतेकर्पूरतिलकोपमः॥८५॥ सकदाचिन्मुनिर्देवोगुहायांध्यानमास्थितः॥ तत्रहेमतटेगंगावहत्युरुतरंगिणी ॥८६ ॥ मेरुलक्ष्म्यां स्फुरद्रूपाभातिहारलतायथा॥ एकदानारदमुनिर्ध्यानांतेससरित्तटे ॥८७॥ ध्वनद्वलयमश्रौषीह्लीलाकलकलारवम् ॥ किमेतदित्यसौ किंचिज्जातप्रायकुतूहलः॥८८॥ हेलयालोकयन्नद्यामपश्यल्ललनागणम्॥ रंभातिलोत्तमाप्रायंनिर्यातंजललीलया ॥ ८९॥ क्रीडंतं त्यक्तवसनंदेशेपुरुषवर्जिते॥ कांचनांभोजमुकुलसंकाशैःस्तनमंडलैः॥ ९० ॥

द्दत्तपूजामहणादनंतरमितिशेष. ॥८३॥ पृष्टमनतिक्रम्ययथापृष्टम् ॥ ८४ ॥ पुण्यलक्ष्म्या कांतेरम्येमुखेसुरभितरयत्कर्पूरतिलकंतदुपमायस्य ॥ अनेननारदोगौरागइतिगम्यते ॥८५॥ गुहायांमेरोरितिशेष ॥८६॥८७॥ ध्वनंतिवलयानियस्मिंस्तथाविधलीलाकलकलारवंजलक्रीडाकोलाहलध्वनिम् ॥ संभावनाप्राचुर्यार्थं.प्रायशब्दोप्यदंतोस्ति ॥ तदस्मिन्नन्नप्रायेसंज्ञायाम प्रायभवः रूपात्वाया दितिपाणिनिजैमिनिप्रभृतिभिःप्रयोगात् ॥८८॥ निर्यातंजलान्निर्गतम् ॥ जललीलयाजलसेचनादिक्रीडया ॥८९॥९०॥

ईदृशंकांतंस्त्रैणंस्त्रीसमूहमालोक्यमुनेर्मनस्तदनंतरमानंदितंप्रमत्तंसन्नआश्रितो विवेकांशोयेनतथाविधंबभूवेतिपरेणान्वयः ॥१०१॥२॥ चित्तेविकारात्सर्वांगेप्राणक्षोभस्तेनस र्वांगसारस्यरेतसःस्खलनवृत्तमित्याह॥बभूवेति ॥ तत्रदृष्टांतानाह ॥ फलमित्यादिना ॥३॥ छिन्नंक्षतलतावृंतशाखामूलस्थानंयस्यतथाविधःप्रत्यग्रस्तरुणःपादपोवटादिरिव ॥ उत्तमेतिराजसबोधनम् ॥४॥ द्विधापातंसद्योद्विधाखंडितबिसंमृणालमिवबागलन्सारभूतोरसःशुक्रयस्य ॥ राजप्रश्नःस्पष्टः ॥५॥६॥ तत्त्वज्ञानामपिप्रबलतरप्रारब्धेनविवेकां शनिरोधात्कदाचिद्देहधर्मानुवर्त्तनमस्त्येवेत्युत्तरमाह ॥ सर्वस्याएवेत्यादिना ॥ ७॥ यावत्स्वांतस्वनाशपर्यंतम् ॥ ८ ॥ सुखदु खमयत्वमेवदृष्टांतैर्दर्शयति ॥ क्षुधादिनेति ॥ ९ ॥

चंद्रबिंबकलापूरमेकत्रैवोपसंहृतम् ॥ स्त्रैणमालोक्यतत्कांतंसहसैवमनोमुनेः॥ १०१॥ अनाश्रितविवेकांशंबभूवानंदितंस्फुरत् ॥आनंदवलितेचित्तेक्षुब्धेप्राणानिलेस्थिते॥ २॥ बभूवतस्यहृष्टस्यमदनस्खलितंतदा॥ फलंरसापूर्णमिवग्रीष्मांतइवतोयदः॥ ३ ॥ प्रत्यग्रपादपच्छिन्नलतावृंतइवोत्तम ॥ अवश्यायकणस्यंदीशशांकइववामुनिः॥ ४॥ बिसंद्विधापातमिवगलत्साररसोभवत्॥ ॥ शिखिध्वजउवाच॥ ॥ तादृशोपिबहुज्ञोपिजीवन्मुक्तोप्यसौमुनिः॥५॥ निरिच्छोपिनिरागोपिनाकिंचिदुपमोप्यलम्॥ सबाह्याभ्यंतरंनित्यमाकाशविशदोपिच॥६॥ नारदोपिकथंब्रह्मन्मदनस्खलितोभवत्॥ ॥ चूडालोवाच॥ ॥ सर्वस्याएवराजर्षेभूतजातेर्जगत्त्रये॥७॥ देवादेरपिदेहोयंद्वयात्मैवस्वभावतः॥ अज्ञमस्त्वथतज्ज्ञंवायावत्स्वांतंशरीरकम्॥८॥ सर्वमेवजगत्यंगसुखदुःखमयंस्मृतम्॥ तृष्यादिनापदार्थेनकेनचिद्वर्धतेसुखम्॥ ९॥ आलोकइवदीपेनमहांबुधिरिवेंदुना॥ क्षुधादिनापदार्थेनदुःखंकेनचिदेवहि॥ ११०॥ तमोमेघपटेनेवस्वभावोत्यत्रकारणम्॥ स्वरूपेनिर्मलेसत्येनिमेषमपिविस्मृते॥११॥ दृश्यमुल्लासमाप्नोतिप्रावृषीवपयोधरः॥ अनारतानुसंधानादप्युन्मेषमविस्मृते॥ १२॥ स्वरूपेनोल्लसत्येषचित्तेदृश्यपिशाचकः॥ यथातमःप्रकाशाभ्यामहोरात्रौस्थितिंगतौ॥ १३॥ तथैवसुखदुःखाभ्यांशरीरंस्थितिमागतम्॥एवंहिसुखदुःखेद्वेजन्मकारणदर्शनात्॥ १४॥ अज्ञस्यगाढतांयातेपटेकुंकुमवद्दृढम्॥ तज्ज्ञस्यत्वंगलगतोमनागपिनतद्वशात्॥११५॥

दुःखवर्धतइत्यनुकृष्यते ॥ ११० ॥यथामेघलक्षणेनपटेनउपचितेननिशितमोवर्धतेतद्वत् ॥ यत्रतत्त्वज्ञानामपिक्षणंस्वरूपविस्मरणेईदृशानर्थास्तत्राज्ञानांकिंवाच्यमित्याशयेनाह ॥ स्वरूपेइति ॥ ११॥ अतएवसदैवदृश्यानुल्लासायसदैवसमाधिनास्वरूपाविस्मरणशीलेनभाव्यमित्याशयेनाह ॥ अनारतेति ॥ उन्मेषोनिमेषद्वयांतरालकालस्तावन्मात्रमपि ॥ १२ ॥ १३ ॥ एवज्ञाज्ञयोःप्रारब्धफलभोगसाम्येपिरजनारजनकृतोविशेषोस्त्येवेतिदृष्टांताभ्यामुपपादयति ॥ एवमित्यादिना ॥ जन्मकारणस्यदेहाद्यात्मभावस्यदर्शनात् ॥ १४ ॥ तज्ज्ञस्यतुतद्वशात्तत्त्वज्ञानवशात् ॥ मनागपिनलगतः ॥ १५ ॥

अतएवलोकेपिसुवेषस्यभोगेप्रवृत्तस्यराजादेःसमृष्टाःकर्पूरचंदनोदकसिक्ताःकीर्णकुसुमाधूपकस्तूर्यादिसुरभिणोमार्गाःप्रसिद्धा.कुवेषस्यनीचस्यनुतद्विपरीताइत्याह॥ येहीति॥
एवचायजीवोयावत्कालतरलतरनाडीमार्गाननुप्रवेशेनअपरिस्फुरन्स्वयतरलताशून्योभवतितावदस्यनदु खप्रसक्तिः ॥ तदास्यस्त्रक्चंदनाद्याकारवृत्त्याल्पस्यात्मसुखमभिव्य
ज्यते ब्रह्माकारवृत्त्यातुपूर्णमित्यवातरवैलक्षण्येपिविक्षेपाभावात्सशाम्यत्येवेतिस्वस्थावस्थमेनतावत्कालमुक्तमेवावेहि ॥ आविर्भूतसुखास्वस्थतैवमुक्तिरितितल्लक्षणसत्वादि
तिभावः ॥ २७ ॥ २८ ॥ तर्हिविषयसुखानुभवकालेकुतोजीवस्यनमुक्ततानुभवस्तत्राह ॥ सुखेति ॥ दु खग्रहणदृष्टातार्थंदुःखस्यवविषयसुखस्यापिकलनकलानुभवस्तद

येहिमार्गाःसुवेषस्यकुवेषस्यनतेशुभाः ॥ यावत्प्रमाणंजीवोयंसंशाम्यत्यपरिस्फुरन् ॥ २७ ॥ तावत्प्रमाणमेवैनंमुक्तंमुक्तमवेहिवै ॥ यावत्प्रमाणमधिकंस्फुरतिक्षुब्धमारुतम् ॥ २८॥ तावत्प्रमाणमेवैनंबद्धंबद्धमवेहिमे ॥ सुखदुःखकलास्पंदोबंधोजीवस्यनेतरः॥ २९ ॥ तदभावेहिमोक्षःस्यादितिद्विधाव्यवस्थितिः ॥ सुखदुःखदशोयावदानीतेनेंद्रियैःशठैः ॥ १३० ॥ तावत्सुखसमःसौम्योजीवस्तिष्ठतिशांतवत् ॥ सुखमालोक्यवादुःखमक्षातीतश्चलद्वपुः ॥ ३१ ॥ समुल्लसतिजीवोंतर्दृष्ट्वेंदुमिवतोयधिः॥ जीवःक्षुभ्यतिदृष्टेनसंविदांगसुखादिना ॥ ३२॥ आमिषेणेवमार्जारोमौर्ख्यमेवात्रकारणम् ॥ शुद्धेनबोध्यबोधेनस्वात्मज्ञानमयात्मना ॥ ३३ ॥ सुखदुःखादिनास्तीतितेनासौयातिसौम्यताम् ॥ नतत्सुखादिनोतन्मेमुधाचायमहंस्थितः ॥ ३४ ॥ इतिजीवःप्रबुद्धोहिनिर्वाणंयातिशाम्यति ॥ सुखाद्यवस्त्वतद्रूपमित्यंतर्बोधसंविदा ॥ ३५ ॥ नतदुन्मुखतांयातिजीवःशाम्यतिकेवलम् ॥ सर्वमेवचिदाकाशंब्रह्मेतिघननिश्चये ॥ ३६ ॥ स्थितिंयातेशमंयातिजीवोनिःस्नेहदीपवत् ॥ दीपवच्छममायातिसुखादिस्नेहसंक्षये ॥ ३७॥ सर्वमेवमितिज्ञानाज्जीवोऽद्वित्वविभावनात् ॥ सर्वमाकाशमेवेतिबुध्वाक्षोभंनगच्छति ॥ ३८॥

र्थरागाद्यश्चित्तस्यबहिःस्पंदोयश्चसुखविच्छित्तौतरलीभावस्तदुपायार्जनायानर्थसहस्रेस्यदः सएवजीवस्यबधोनत्वितरःसुखविश्रात्यशोपीतिक्षणमात्रमपिसुखविश्रांत्यातद
भावेमोक्ष:स्यादेवेतिससरणासंसरणाभ्याबधमोक्षयोर्द्विधाव्यवस्थितिर्मयोक्तेतिपरेणान्वयः ॥ २९ ॥ उक्तमेवार्थंप्रपचयति ॥ सुखदु खेत्यादिना ॥ १२० ॥ अक्षातीतइंद्रि
यागम्यःस्वप्रकाशइतियावत् ॥ ३१ ॥ दृष्टेनसुखादिनासुखतत्साधनविषयतदुपायधनादिनातद्रागसंविदाक्षुभ्यति ॥ अगेतिसंबोधने ॥ ३२॥ मौर्ख्यंनिरतिशयानंदस्वतत्त्वाज्ञा
नमेवात्रक्षोभेकारणम् ॥ केनतर्हितन्निवृत्त्याविश्रांतिस्तदाह ॥ शुद्धेनेत्यादिना ॥ बोध्योऽवश्यबोद्धव्य.स्वात्मातद्बोधेन ॥ ३३ ॥ सौम्यता.विश्रांतिम् ॥ ३४ ॥ ३५ ॥ ३६ ॥
सुखादिषुस्नेहोरागस्तत्क्षये ॥ ३७ ॥ सर्वंजगत्एवचिन्मात्रमेवेतिज्ञानात् ॥ अद्वित्वमैक्यतद्विभावनात् ॥ आकाशंशून्यम् ॥ ३८॥

अनेनप्रविस्यविभागनेमहेतुनापृथक्कार्यस्यस्यवधशून्यस्यपा ॥ कथतसस्यक्षोभविषमआगतलमाह ॥ जीवेनेति ॥ इदम्विधेनकल्पितनैवआद्यजीवेनहिरण्यगर्भेणएवसर्ग
जीवात्ममाहंसंसरिष्याम्येवस्ततस्तबोधादक्रमेणमुक्तोभविष्यामीतिसंकल्पनयैवबन्धमोक्षमार्गौकल्पयित्वासएवानुवस्यतइत्यर्थ ॥ ३९ ॥ प्रश्नःस्पष्ट ॥ ४० ॥ जीवेपिवदर्शना
प्रागवासनोद्बोधेनक्षुब्ध सन् ॥ ४१ ॥ कथक्षोभयतितदाह ॥ संविदाज्ञांशमात्रेणेति ॥ यदत्तिस्वभावानांप्राणादीनामधिष्ठात्र्याजीवसंविद अङ्कुरितरागादिवस्त्वनुरोधएवाम्य
नृपारूपामाज्ञातदंशमात्रेणेत्यर्थ ॥ मेदोस्थ्याद्यंतःसंचारिणोव्यानवातस्यस्पंदेनप्रेरणेनसर्वांगसस्थितोमेदोंतर्गत सारोमज्जासारश्चआशुप्रकृष्टसौगन्ध्यमिषानुगतरज स्वसूक्ष्मा
शत्यजति ॥ यथाछिन्नवृंतपत्रफलादिकस्वांतर्गतजलांशमंतर्वातस्पंदेनत्यजतितद्वदित्यर्थ ॥ ४२ ॥ तत्तुस्यक्तरज सर्वांगेभ्यश्चलितसन्नाडीद्वारा अधोमूलाधारस्थानंयाति ॥
यथासर्वतःस्रवत्जलजयतीतिगतः पुरोभागतस्माभिमिसारेकीभूयघनमपाआविपदाम्येपायवस्थभूतावर्षणोन्मुखसद्भोऽसन्निहितदर्शयातितद्वदित्यर्थ ॥ ४३ ॥

जीवस्यानेनशून्यस्यक क्लिष्टसोभविभ्रम ॥ जीवेनेदम्विधेनैवयथाप्रथमसर्गत ॥ ३९ ॥ स्वयसंविदितोमार्गस्तेनैवाधापिगच्छति ॥
शिखिध्वजउवाच ॥ ॥ सुखसचारयोग्यासुजीवेसरतिनाडिषु ॥ १४० ॥ देवपुत्रभवत्येवतद्वीयप्यवनकथम् ॥ ॥ चूडालोवाच ॥
जीव क्षोभयतिक्षुब्ध प्राणादिपवनावलिम् ॥ ४१ ॥ संविदाज्ञांशमात्रेणसेनामिवमहीपति ॥ वातस्पंदेनमेदोंतर्मज्जासारश्चसस्थि
त ॥ ४२ ॥ त्यजत्याशुप्रसौगंध्यरज पत्रफलादिकम् ॥ चलितंतत्त्वधोयातिगर्जोदिवघनादिवे ॥ ४३ ॥ देहनाडीप्रणालेनयातिशुक्र
बहिःस्वत ॥ ॥ शिखिध्वजउवाच ॥ ॥ देवपुत्रमहाज्ञोसिवेत्सिपूर्वापरस्थितिम् ॥ ४४ ॥ ज्ञायसेवचनादेवस्वभावोहिकिमुच्यते ॥
चूडालोवाच ॥ ॥ आद्यसर्गेयथासद्य स्फुरितंमम्मपाणि ॥ ४५ ॥ घटावटपटाद्यात्मतयैवाद्यव्यवस्थितम् ॥ काकतालीयवद्वारिबुद्बुदो
त्पत्तिनाशवत् ॥ घुणाक्षरवदुन्मूनतस्वभावंविदुर्बुधा ॥ १४६ ॥

स्वत स्वभावत ॥ देवादेरपिवहोयद्यात्स्वस्वभावतइतियस्त्वयोक्तमपरस्वभावशब्दार्थ कइतिराजापृच्छति ॥ देवपुत्रेति ॥ महाज्ञासौहन्यमहाज्ञ आत्मतत्त्वविदसि ॥ आत्म
ज्ञानात्पूर्वसांसारिकपदार्थसस्थितिमतकार्यादिकीशब्देनवेत्सि ॥ ४४ ॥ कथमहमीदृक्कयाज्ञातस्तत्राह ॥ ज्ञायसेइति ॥ सर्गादिकालेसर्गोन्मुखब्रह्मणात्तनमाणिकर्मानुसारेण
पारस्पारप्रधर्मकथपदार्थालनात्स्वालनिस्फुरितंतस्यपदार्थस्यआपलयतादृग्धर्मकत्वनियति.स्वभावशब्दार्थइत्याह ॥ आद्यसर्गेइति ॥ ४५ ॥ सांप्रतिकपटादिस्वभावे
विस्मयदृष्टसामर्थ्येविस्याद्पिसभाव्येत सर्गादौतुतच्चिद्रूपप्रासप्तप्रात्काकागमनक्षणेदैवात्तच्छिरसितालपतननिपातेनतस्यमरणमिवचारदृष्टमाभमयुक्तमितिबोधनायाद्यसर्गा
नुधावनमित्याद्यर्थदर्शयति ॥ काकेति ॥ समासावत्तद्विषयादिविभिदार्थेद्वयविषयात्समासात्तृतीयेइवार्थेच्छप्रत्यय ॥ सांप्रतिकेपिप्रतिवस्तुदेशकालनियतस्वभावेविस्मये
घटदृष्टसमर्थापदानिरूपयितुशक्येस्याशयेनदृष्टांतांतरमाह ॥ वारिबुद्बुदेति ॥ मायामात्रस्वाशकस्मिकोत्पादोऽस्मिन्नाशयेनदृष्टांतांतरमाह ॥ घुणाक्षरवदिति ॥ ४६ ॥

उक्तलक्षणस्वभाववशात प्ररूढेअस्मिन्जगति विविधविकारात्मकाअंडजादिचतुर्विधादेहाभ्रमंति ॥ तेषुकेचिज्ज्ञानदेहास्तेप्रक्षीणवासनतयाभूयोजन्मनेनभवंतिइतरेअज्ञानदे
हास्तुभूयोजन्मनेभवंति॥यतस्तेभोगेष्वेवघनास्थाइत्यर्थ.॥१४७॥ ॥इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०पंचाशीतितम सर्गः॥८५॥ ॥७॥ ॥ कुंभेकुंभस्यजन्माचष्टे द्धि
र्ब्रह्मसमागम ॥ नदाशिष्यस्यसार्वज्ञ्यमित्यादिरिहवर्ण्यते ॥१॥ यथावर्णितलक्षण स्वभाव सर्ववस्तुषुआप्रलयप्रसिद्धस्तथामायाशबलस्यात्मन.सर्गादिस्वभाव.श्रुत्यादिप्रसिद्ध
स्तद्वशतइत्यर्थ ॥ भोगार्थंसृष्टिरित्येकेक्रीडार्थमितिचापरे ॥ देवस्यैषस्वभावोयमाप्तकामस्यकास्पृहेतिभगवद्गौडपादा. ॥१॥ वासनानाक्रासज्ञानाभ्यासेनापक्षयम ॥ न.दर्श
नमनुभवइत्यर्थ ॥ २॥ इत्थमनुभवचमत्कारेकीर्तितेतत्प्रकारश्रोतुकामोराजाताप्रशसमान प्रस्तुतकथाशेषसक्षिप्यसमापयेत्याह ॥ अत्युदारमित्यादिना ॥३॥४॥५॥ क्कस्मि

अस्मिन्स्वभाववशतोजगतिप्ररूढेदेहाभ्रमंतिपरितोविविधाविकाराः ॥ प्रक्षीणवासनतयानभवंतिकेचिद्भूयोभवंतिचपुनस्त्वितरेघ
नास्थाः ॥ १४७॥ ॥इ०वा०वा०दे०मो०नि०पू०चू०सुखविचारयोगोपदेशोनामपंचाशीतितमःसर्गः ॥८५॥ ॥७॥
॥ चूडालोवाच ॥ ॥आत्मस्वभाववशतोजातंजगदिदंमहत् ॥ स्थितिंवासनयाभ्येत्यधर्माधर्मवशेस्थितम् ॥ १ ॥ वासनाक्रासमा
नीयधर्माधर्मैर्नगृह्यते ॥ ततोनजायतेजंतुरितिनोदर्शनंमुने ॥ २॥ ॥ शिखिध्वजउवाच ॥ ॥अत्युदारंमहार्थंचवक्षित्वंवदतांवर ॥
अनुभूतिमुपारूढंगूढंचपरमार्थवत् ॥ ३ ॥ त्वद्वाक्यविभवेनाद्यश्रुतेनाननसुंदर ॥ पीतेनेवामृतेनाहमंतर्यातोस्मिशीतताम् ॥ ४ ॥ तत्स
मासेनतांतावदात्मोत्पत्तिंवदाशुभे ॥ ततःश्रोष्यामियत्नेनज्ञानगर्भांगिरंतव ॥ ५ ॥ तेनपद्मजपुत्रेणमुनिनानारदेनतत् ॥ क्कृतंवीर्यमा
र्येणकथयाद्ययथास्थितम् ॥ ६ ॥ ॥ चूडालोवाच ॥ ॥ ततोनिबध्नतातेनमनोमत्तमतंगजम् ॥ विवेकविपुलालानेशुद्धयाधीवरत्र
या ॥ ७॥ तद्वीर्यंकल्पकालाग्निगलितेंदुद्रवोपमम् ॥ रसानांपारदादीनांदिव्यानामनुरंजनम् ॥८॥ मुनिनापार्श्वगेकुंभेस्फाटिकेविलस
द्रुचौ ॥ अद्भुतेविद्रुताकारंचंद्रेचंद्रइवार्पितम् ॥ ९ ॥ तत्रशैलेबृहत्कांतेस्थूलःपार्श्वेषुचाभितः ॥ गंभीरकुक्षिःसुदृढश्चोपलाहननक्षमः
॥ १० ॥ संकल्पितेनक्षीरेणसकुंभस्तेनपूरितः ॥ अमृतापूरभिन्नेनविधिनेवामृतार्णवः ॥ ११ ॥ तत्रमासाद्गतोवृद्धिंमुनिमंदाहुतिक्रमः ॥
अमृताब्धौशुभोगर्भइंदोरिंदुरिवानुजः ॥ १२ ॥ इंदुंमासइवापूर्णंकालेनसुषुवेघटः ॥ गर्भंकमलपत्राक्षंप्रसूनमिवमाधवः ॥ १३ ॥

न्याधारेकृतस्थापितम ॥ ६ ॥ आलानेगजबधस्तभे ॥ धीलक्षणयावरत्रयाचर्मरज्ज्वा ॥ ७॥ कल्पकालसबधिनाअग्निनागलितस्येदोर्द्रवउपमायस्य ॥ पारदकांचनरूप्या
दीनारसानाशभुवीर्याणामनुरंजनमनुकारिसदृशमितियावत् ॥ ८ ॥ ९ ॥ तत्रशैलेमेरौ ॥ पार्श्वेष्वभितश्चस्थूलोविपुलःअतएवगंभीरकुक्षिः ॥ उपलेष्वाहननमास्फालनतत्र
क्षम ॥ आस्फाल्यमानोप्यस्फुटन्नितिसुदृढत्वेउपपत्ति. ॥ ईदृश सकुंभस्तेननारदेनसंकल्पजेनक्षीरेणपूरितइतिपरेणान्वयः ॥ १० ॥ स्वसकल्पसृष्टामृतापूरात्मनाभिन्नेनविभ
क्तेनविधिनास्रष्टाअरश्वण्यश्चार्णवाविति ब्रह्मलोकेश्रुतिप्रसिद्धोऽमृतार्णवोयथापूरितस्तद्वदित्यर्थः ॥ ११ ॥ तत्रक्षीरेस्नेहोत्सुकमुनिमंदंअग्निकार्याहुतिषुक्रमयतिप्रवर्त्तयतीति
मुनिमदाहुतिक्रम.अमृताब्धौइदोरनुज.प्रतिबिबेदुरिववदृधे ॥ १२ ॥ मासःआपूर्णमिदुमिव ॥ १३ ॥

सूक्ष्मादृष्टपरिच्छिन्नादम्भोधेः क्षीराणवात्क्षयवर्जितात्परश्चन्द्र इव ॥ १४ ॥ १५ ॥ सर्वैर्जातकमायुपनयनान्तैः संस्कारैः संपन्ने तस्मिन्पुत्रे ॥ १६ ॥ विज्ञातान्यशेषाणि वाङ्मयानि विद्यास्थानानि येन तथाविधम् ॥ १७ ॥ रत्नाद्रौ स्फटिकाचले ॥ सद्योदित पूर्णश्चन्द्र इति यावत् ॥ १८ ॥ १९ ॥ ग्रहणधारणसौष्ठवपरिज्ञानाय अभिमरवादिनः वादयित्वा परीक्षितवान् सर्वविद्यास्थानस्य तथाविधमीत्याकेन्य वेशायेत ॥ २ ॥ ज्ञानानां पारं परमावधिं भूतस्य ज्ञानतः प्रविश्रान्तिं चकार ॥ २१ ॥ हे साधो सकुश अयत्वाः पुरस्थोऽहम् ॥ मनुष्याणां परिवत्सरस्य स्वभर्तुः समक्षं धर्मद्वयविदभ्याग्नालयाकथमिरमपतमुच्यते शतमश्वान्तदहनि सहस्रमनुगमान्ते आत्मानस्वजनइतिपुरुषः पुरुषानेद इति हि पूर्वरामायणेऽपि रामवचनम् ॥ योऽन्यथा सन्तमात्मानमन्यथा प्रतिपादयेत् किं तेन न कृतं पापं चौरेणात्मापहारिणेति महाभारते भारतं प्रति शकुन्तलावचनं चेत्यं कुप्यतेति चेत् ॥ भैषदोष ॥ उपवेश्य

परिपूर्णसमस्तांगः कुशाद्गर्भाद्विनिर्ययौ ॥ इन्दुः सूक्ष्मादिवाम्भोधेरपरः क्षयवर्जितः ॥ १४ ॥ दिनैः कतिपयैरेव वृद्धिमभ्याजगाम सः ॥ अप्रमेयागमोदयः शुक्लपक्षे शशी यथा ॥ १५ ॥ सर्वसंस्कारसंपन्ने सतस्मिन्नारदो मुनिः ॥ भांडाद्भांड इवाशेषं विद्याधनमयोजयत् ॥ १६ ॥ दिनैः कतिपयैरेव विज्ञाताशेषवाङ्मयम् ॥ चकार स मुनिवरः प्रतिबिंबमिवात्मनः ॥ १७ ॥ तेनाराजत पुत्रेण मुनिना मुनिनायकः ॥ रत्नाद्रौ प्रतिबिंबेन सद्योदित इवोडुराट् ॥ १८ ॥ अथैनं पुत्रमादाय ब्रह्मलोकं स नारदः ॥ जगामाथ स्वपितरं ब्रह्माणं चाभ्यवादयत् ॥ १९ ॥ कृताभिवंदनं ब्रह्मा पौत्रमादाय तं तदा ॥ अभिवादित वेदादिः स्वयमंके न्यवेशयत् ॥ २० ॥ अथाशीर्वादमात्रेण सर्वज्ञं ज्ञानपारगम् ॥ पौत्रं तं कुंभनामानं चकार कमलोद्भवः ॥ २१ ॥ साधो सोऽहमयं कुंभः पौत्रोऽहं पद्मजन्मनः ॥ पुत्रोऽहं नारदमुनेः कुंभनामास्मि कुंभज ॥ २२ ॥ निवसाम्यब्जजपुरे पित्रा सह यथासुखम् ॥ चत्वारः सुहृदो वेदा ममलीलाविलासिनः ॥ २३ ॥ मातृष्वसा मे गायत्री मम माता सरस्वती ॥ ब्रह्मलोकं मम गृहं पौत्रस्तत्रास्मि सुस्थितः ॥ २४ ॥ यथाकाममशेषेण जगति विहराम्यहम् ॥ लीलया परिपूर्णत्वान्न तु कार्येण केनचित् ॥ २५ ॥ धरां पतति मे पादो पततो न महीतले ॥ रजः स्पृशति नांगानि म्लानिं नायाति मे वपुः ॥ २६ ॥ अथाकाशपथा गच्छन् दृष्टवांस्त्वामहं पुरः ॥ इहतेनागतोऽस्म्यग सर्वं कथितवानिति ॥ २७ ॥

मातृब्रह्मविद्यापरोचनाय स्यतवास्यस्य तात्पर्यविषयार्थाबाधेनासत्त्वाभावात् वरप्रमाहणीरकामयत तेनैनं मनोजूतवादिनीवाक् यायाण श्रुते इत्यादि वैदिकार्थवादवाक्यप्रामाण्यापत्ते ॥ तस्य ज्ञानबलेन सार्वात्म्यमासर्वा अहमगुरभवसूर्यश्चेत्यादि वामदेवोक्तिवत् सोऽहमयं कुंभ इत्यादयुक्तिर्भाषितानृतवचनादोष ॥ कर्मणा मनसा वाचा सदा मसुहितयोर्विदितवचनात्तत्त्वविद्याविश्वासजननेन परमहितस्यास्य यथार्थस्य वचनात्वाभावादिति ॥ २२ ॥ २३ ॥ साक्षान्मातुः साम्यास्तु मातावयएव तस्य मातापदस्यापयमाह ॥ मातृष्वसेति पौत्रो ब्रह्मणः इति शेष ॥ २४ ॥ २५ ॥ उक्तार्थविश्वासार्थं स्वस्य विग्रहलिमानिदर्शयति ॥ धरामिति ॥ मयि धरां पतति भूलोके संचरति सति मे पादौ महीतलेन पततः ॥ २६ ॥ २७ ॥

उक्तिमुपसंहरति ॥ एषइति ॥ हेवनवासतज्ज्ञवनवासगुणांस्तत्फलचित्तशुद्धिंचजानन् अहमेषउक्तप्रकारजन्मादिमानित्यखिलमेवत्वत्पृष्टेयथानुभूतंमयावर्णितम ॥ पादा दंतेइत्यादेशश्छांदसः ॥ आर्यजनोत्तमेषुपृच्छत्सुसतत्सकथन निर्मातिकुर्वंत्येवयतस्तेसुभगे सद्भि सहप्रश्नोत्तरकथनसंव्यवहारेदक्षाअतस्त्वययदभीप्सितंतत्तत्कामपृच्छअह तद्वत्कुदक्षास्मीतिभावः ॥२८॥२९॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्र०नि०पू०षडशीतितम.सर्ग ॥ ८६ ॥ ॥ ७ ॥ ॥ कुंभप्रशसाराज्ञोत्रनिजदुःखनिवेदनम ॥ शिष्यत्वमुपदे श्यार्थेविश्वासश्चोपवर्ण्यते ॥ १ ॥ सर्गेजन्मपरपरालक्षणेससारे ॥ सभृतैःसचितैर्दैवायुगपत्परिपाकेनफलदानायस्फुरद्भिर्मत्पुण्यैर्भवानद्रावस्मिन्मंदराचलेसप्रेषितइतिमन्येस भावयामि ॥ बृहद्वातैःपुरोवातै ॥१॥ त्वदुपदेशान्ममावश्यभाविनीकृतार्थतेतिसूचनायसिद्धवत्कृत्याह॥ अद्येति ॥२॥३॥ राज्यलाभाद्यपेक्षयासाधुसमागमेउत्कर्षंदर्शयति॥

एषोहमित्यखिलमेवयथानुभूतंतेवर्णितंननुमयावनवासतज्ज्ञ ॥ संतोहिसंकथनमार्यजनोत्तमेषुनिर्मांत्यलंसुभगसंव्यवहारदक्षाः ॥ २८ ॥ ॥श्रीवाल्मीकिरुवाच॥ ॥इत्युक्तवत्यथमुनौदिवसोजगामसायंतनायविधयेस्तमिनोजगाम ॥स्नातुंसभाकृतनमस्करणा जगामश्यामाक्षयेरविकरैश्चसहाजगाम॥२९॥ ॥दि०॥१८॥ ॥इत्यार्षेवा०वा०दे० मोक्षोपायेषुनि०पू०चू० कुंभजननकथनंनामषडशीतितमःसर्गः॥८६॥ ॥७॥ ॥शिखिध्वजउवाच॥ ॥सर्गस्फुरद्भिर्मत्पुण्यैर्मन्येसंप्रेषितोभवान्॥ अलक्ष्यैःसंभृतैरद्रौ बृहद्वातैरिवांबुदः॥ १ ॥ अद्यतिष्ठाम्यहंसाधोधन्यानांधुरिधर्मतः॥ अमृतस्यंदिवचसायत्त्वयास्मिसमागतः ॥ २ ॥ नकेचनतथाभावाश्चेतःशीतलयंतिमे॥ राज्यलाभादयोप्येतेयथासाधुसमागमः॥३॥ निरर्गलरसोयत्रसामान्येनविजृंभते ॥ मुक्तरागादिमननंतत्कल्पनसुखावहम् ॥ ४ ॥ ॥श्रीवसिष्ठउवाच॥ ॥ एवंवादिनिसैवास्यवाक्यमाक्षिप्यभूपतेः॥ भूयःप्रोवाचचूडालामुनिदारकरूपिणी ॥५॥ ॥चूडालोवाच॥ ॥आस्तामेषाकथातावत्सर्वंतवर्णितंमया॥ त्वमेकथयहेसाधोकस्त्वमद्रौकरोषिकिम् ॥ ६ ॥ कियत्पर्यवसानेयंभवतोवनवासिता॥सत्यंकार्यंचनोसत्यंवक्तुंजानंतितापसाः॥ ७॥ ॥शिखिध्वजउवाच॥ ॥ देवपुत्रोसिजानासिसर्वमेव यथास्थितम्॥ लोकवृत्तांततज्ज्ञोसिकिमन्यत्कथयाम्यहम् ॥ ८ ॥ संसारभयभीतत्वान्निवसामिवनांतरे॥ जानतोपिहिमामार्यकथयाम्येवतेमनाक्॥ ९ ॥ शिखिध्वजोहंभूपालस्त्यक्त्वाराज्यमिहास्थितः॥ भृशंभीतोस्मितत्त्वज्ञसंसृतौजन्मतःपुनः ॥ १० ॥ सुखंपुनःपुनर्दुःखंपुनर्मरणजन्मनी॥ भवतस्तेनतप्येहंतत्त्वज्ञवनवीथिषु॥११॥

निरर्गलेति ॥ यत्रयस्मिन्साधुसमागमेनिरर्गलरसःअपरिच्छिन्नोब्रह्मानंदोमुक्तरागादिमननयथास्यात्तथासामान्येनदरिद्रादिसर्वजनसाधारण्येनविजृंभते ॥ तद्राज्यलाभादिकंतुकल्पनमात्रेणतुच्छसुखावहननिरर्गलसुखावहसाधारणचेत्यर्थः ॥ ४ ॥ आक्षिप्यनिरुध्यविवक्षितार्थसमाप्तेःपूर्वमेवेतियावत् ॥५॥ एषामत्प्रशसाकथाआस्ताम् ॥ सर्वंत्वत्पृष्टमितिशेषः ॥६॥ कियान्कालःपर्यवसानमवधिर्यस्या.साकियत्पर्यवसाना ॥ कार्यंवनवाससाध्यप्रयोजनचसत्यंवदनप्रच्छादय ॥ यतस्तापसास्त्वादृशाअसत्यंवक्तुनोजानंतिनजानंति ॥ ७ ॥ ८ ॥ मनाक्ईषत्सक्षेपेणेत्यर्थः ॥९॥ आस्थितस्तपइतिशेषः ॥ हेतत्त्वज्ञपुनर्जन्मनोभीत. ॥१०॥ भवत.जायेते ॥ तप्येसतप्तोस्मितपश्चरामिच ॥११॥

॥ ११ ॥ अधम कुठिनप्रयम ॥ अफल अशमफल ॥ एकाकीसहाय ॥ [illegible]
मयथामरेवातिथिपूजादिरूपाम ॥ अरवहिनो नियतकालावच्छिन्नाम् ॥ विद्याचाविद्याचयस्तद्वेदोभयसह अविद्ययामृत्युंतीर्त्वाविद्ययामृतमश्नुते इत्यादिश्रुतेरमृतत्वहेतु
र्निविर्मानयपरिगृहीतमपिकमसमच्चितमुपासनमविश्रांत्यजननाद्विपमिवस्थितंतत्कस्यहेतोस्तद्वदेतिभाव ॥ १४ ॥ कर्मसमुच्चितोपासनान्मुक्तिरितिराद्धो भ्रमोयावन्ननिवा
यतनावत्पुरवरिष्टमप्यात्मतत्त्वनप्रतिपद्यत इतिभ्रमनिवारणायतस्यपितामहोपदिष्टक्रममाश्रावयति ॥ पितामहमिति ॥ क्रियाज्ञानयोमध्येयदेकमुक्तिकारणंतद्ब्रूहीत्यर्थः ॥ १५ ॥
वसिमस्यसमनभवति ॥ क्रियातस्वर्गादिभोगविनोदायप्रवृत्तापितस्यफलतुल्यावपरूपायतयाअनर्थानुपार्जनेनायुःकालापनोदनायैवश्रुत्याउदिताउक्तेत्यर्थः ॥ तथाचश्रुति ॥
कुर्वन्नेवेहकर्माणिजिजीविषेच्छतंसमा ॥ एवंत्वयिनान्यथेतोऽस्तिनकर्मलिप्यतेनरेइति ॥ १६ ॥ अतएवेयमूर्तिविद्याचाविद्याचेतिश्रुतिश्चज्ञानानधिकारिविषया ॥ तमत्र

भ्रमन्नपिदिगंतेषुचरन्नपिपरंतप ॥ नासादयामिविश्रांतिमेकोनिधिमिवाधन ॥ १२ ॥ अयमाप्यफलोप्येकोप्यपूर्णोप्यसत्संगति ॥ शुष्याम्यत्रवनसाधाघुणक्षुण्णइवद्रुम ॥ १३ ॥ इमामखंडितांसम्यक्क्रियांसंपादयन्नपि ॥ दुःखाद्दुःखमिवोपैमि अंतमेवविपस्थितम् ॥ १४ ॥ ॥ चूडालोवाच ॥ ॥ पितामहमहंपूर्वंकदाचित्पृष्टवानिदम् ॥ यत्क्रियाज्ञानयोरेकंश्रेयस्तद्ब्रूहिमेप्रभो ॥ १५ ॥ ॥ ब्रह्मोवाच ॥ ज्ञानंहिपरमश्रेयः कैवल्यंतेनवेत्यलम् ॥ कालातिवाहनायैवविनोदायादिताक्रिया ॥ १६ ॥ अलब्धज्ञानदृष्टीनांक्रियापुत्रपरायणम् ॥ यस्यनास्त्यपरंपट्टंक्वयलंकित्यजत्यसौ ॥ १७ ॥ वासनामात्रसारत्वादज्ञस्यसफलाक्रिया ॥ सर्वाएवाफलाज्ञस्यवासनामात्रसंक्षयात् ॥ १८ ॥ सर्वाहिवासनाभावंप्रयात्यफलताक्रिया ॥ अशुभाफलवत्यापिसेकाभावेलताइव ॥ १९ ॥ ऋत्वंतरेयथायातिविलयंपूर्वमात्तवम् ॥ तथैववासनानाशेनाशमेतिक्रियाफलम् ॥ २० ॥ नस्वभावेनफलतियथाशरलताफलम् ॥ क्रियानिर्वासनापुत्रफलंफलतिनोतथा ॥ २१ ॥ सयत्स्ववासनोनालोयक्षंपश्यतिनान्यथा ॥ सदुःखवासनोमूढोदुःखंपश्यतिनान्यथा ॥ २२ ॥ आकारभासुराप्युच्चैर्नददातिफलंक्रिया ॥ शुभाशुभावात्अज्ञस्यफुल्लाशरलतायथा ॥ २३ ॥

स्तनरणत्वाभाविकदुःखदाम्पार्याबुद्धत्तत्वापक्षिकर्मणिप्रवृत्तमित्याशयेनाह ॥ अलब्धेति ॥ पौत्रस्याप्यपत्यत्वात्सुप्रत्युक्ति ॥ १७ ॥ ननुज्ञानिनोपिस्ववर्णाश्रमोचितकर्मकुर्वा
णादर्शनतत्क्षयमलब्धज्ञानदृष्टीनामवक्रियाशरणंतमाह ॥ वासनेति ॥ अज्ञधानोरागादिवाविहितनिषिद्धकर्मफलभुक् ॥ नचक्षत्रसत्त्वज्ञोकृतवासनानाशेमद्धारामोवासभवती
तिभाव ॥ मामशब्द कात्स्न्यपर ॥ १८ ॥ किमशुभाअपिक्रियाप्रलयंयत ॥ अमित्याह ॥ सर्वाहीति ॥ फलवत्योर्वापि ॥ यथारब्धफलाअपिक्रियावाधितानुवृत्तिमात्रेणसफल
शुष्कलतायाभवतितथानारब्धफलानरयंतीतिकिंवाच्यम् ॥ सर्वोयदसतेमूणानांतमकायथेतिन्यायादितिभाव ॥ १९ ॥ ऋत्वंतरेपीष्यशरदादौ ॥ पूर्वमात्तंग्रमकुलिगनी
हारजलधरादि ॥ २० ॥ निर्वासनापिक्रियाकुतोनफलतीतिचेत्काशलतावरस्वभावादेवेत्याह ॥ नेति ॥ २१ ॥ सुखदुःखभोगयोम्योरिमितिवासनैवतासदुःखवीजंपक्षभो
निफलवाछपक्षवासनावदित्याशयेनाह ॥ सयत्वेति ॥ २१ ॥ २२ ॥

ननुअज्ञदशायामर्थक्रियासमर्थत्वात्सत्यायावासनाधाःकथंज्ञानेनबाधस्तत्राह ॥ वासनेति ॥ इहअज्ञदशायामपि ॥ २४ ॥ प्राक्तनवासनानाशेपिज्ञानोदयोत्तरमुत्पन्नयात याक्रियाफलतुतत्राह ॥ यस्येति ॥ प्राज्ञस्यमरुदेशोयमितिप्रबोधवतः ॥ २५ ॥ पदपरमपुरुषार्थवस्तु ॥ २६ ॥ पितामहोक्तिमुपसंहरति ॥ ज्ञानेनेति ॥ २७ ॥ अज्ञानवान् ज्ञानविहायतपएवमोक्षहेतुरितिनिश्चित्यकिंस्थितइत्यर्थः ॥ २८ ॥ विवेकहीनस्यबहिर्मुखस्यदडकमडल्वाद्यल्पमपिममतादिविषयतयाअनर्थायालमित्याशयेनाह ॥ इत इति ॥ २९ ॥ यदितपोप्यनर्थोहेयस्तर्हिकउपादेयस्तमाह ॥ कोहमिति ॥ नावेक्षसेनविचारयसि ॥ ३० ॥ विचारइवगुर्वभिगमनसेवनपरिप्रश्नादयोप्युपादेयाइतिदर्शयति ॥

वासनाचेहनास्त्येवसाहंकारादिरूपिणी ॥ असत्यैवोदितामौर्ख्यान्मरुभूमाविवांबुधिः ॥ २४ ॥ यस्यमौर्ख्यंक्षयंयातंसर्वंब्रह्मेतिभावनात् ॥ नोदेतिवासनातस्यप्राज्ञस्येवांबुधिर्मरौ ॥ २५ ॥ वासनामात्रसंत्यागाज्जरामरणवर्जितम् ॥ पदंभवतिजीवोतर्भूयोजन्मविवर्जितम् ॥ २६ ॥ सवासनंमनोज्ञेयंज्ञानंनिर्वासनंमनः ॥ ज्ञानेनज्ञेयमभ्येत्यपुनर्जीवोनजायते ॥ २७ ॥ ॥ चूडालोवाच ॥ ॥ ज्ञानमेवपरंश्रेयइतिब्रह्मादयोपिते ॥ प्राहुर्महांतोराजर्षेत्वंकिमज्ञानवान्स्थितः ॥ २८ ॥ इतःकमंडलुरितोदंडकाष्ठमितोबृसी ॥ इत्यनर्थविलासेस्मिन्रमसेकिंमहीपते ॥ २९ ॥ कोहंकथमिदंजातंकथंशाम्यतिचेतिभोः ॥ राजन्नावेक्षसेकस्मात्किमज्ञइवतिष्ठसि ॥ ३० ॥ कथंबंधःकथंमोक्षइतिप्रश्नानुदाहरन् ॥ पारावारविदांपादान्कस्माद्राजन्नसेवसे ॥ ३१ ॥ दुःस्पंदसंविदाशैलकोटरेक्रिययानया ॥ जीवितंक्षिपयन्किंत्वंशिलाकीटवदास्थितः ॥ ३२ ॥ साधूनांसमदृष्टीनांपरिप्रश्नेनसेवया ॥ संगमेनचसायुक्तिर्लभ्यतेमुच्यतेयया ॥ ३३ ॥ साधुनैवसमंग्रासंभुंजानोवनकोटरे ॥ तिष्ठावष्टब्धदुश्चेष्टोधराविवरकीटवत् ॥ ३४ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ कांतयादेवरूपिण्यातयैवंप्रतिबोधितः ॥ अश्रुपूर्णमुखोवाक्यंशिखिध्वजउवाचह ॥ ३५ ॥ ॥ शिखिध्वजउवाच ॥ ॥ अहोनुबोधितोस्म्यद्यचिरात्सुरसुतत्वया ॥ मौर्ख्यादार्यसमासंगंमुक्त्वाहमवसंवने ॥ ३६ ॥ अहोनुमेक्षयंयातमन्येपापमशेषतः ॥ यत्त्वमेवसमागत्यसंप्रबोधयसीहमाम् ॥ ३७ ॥ गुरुस्त्वंमेपितात्वंमेमित्रंत्वंमेवरानन ॥ शिष्योनमस्करोम्यद्यपादौतवकुरुपांकुरु ॥ ३८ ॥ यदुदारतमंवेत्सियस्मिन्ज्ञातेनशोच्यते ॥ भवामिनिर्वृतोयेनतद्ब्रह्मोपदिशाशुमे ॥ ३९ ॥

कथमिति ॥ संसारसमुद्रस्यपारंपरतीरसन्मात्ररूपःशोधिततत्पदार्थः अवारमपरतीरचिन्मात्ररूपःशोधितत्वंपदार्थस्तदखंडैक्यलक्षणवाक्यार्थविदामित्यर्थः ॥ अथवापारावारःपरमानंदसमुद्रस्तद्विदामित्यर्थः ॥ ३१ ॥ दुःस्पंदाव्रतोपवासशीतोष्णादिदुःखदप्रवृत्त्युन्मुखीआत्मसंविद्यस्यांतथाविधयाअनयातपःक्रिययाजीवितमायुःक्षिपयन् ॥ ३२ ॥ सात्वदभिलषितविश्रांतिसुखप्रदाज्ञानयुक्तिः ॥ ३३ ॥ तर्हिमयेदानींकथंस्थेयंतदाह ॥ साधुनैवेति ॥ अवष्टब्धानिरुद्धास्तपःक्लेशादिबहिर्मुखदुश्चेष्टायेनतथाविधःसन्साधुनागुरुणासममेवग्रासमाहारंभुंजानस्तत्सेवापरस्तदुपदिष्टार्थेधराविवरकीटवन्निश्चलस्तिष्ठेत्यर्थः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ निर्वृतःसुखविश्रांतः ॥ ३९ ॥

ज्ञानमथपरमेयदतियस्त्वयापरमज्ञानंतारकमुक्तमवेषांज्ञानानांमध्येकतरद्भवेत् ॥ किमीदृशतटस्थविषयमेवतज्ज्ञानमतान्यादृशमितिभाव ॥ ४० ॥ श्रद्धस्वसोम्येतिश्रुतेर
श्रद्धधानेपुरुतोप्युपदेश स्थाण्वोरपेकाकरुतवद्यथोनिष्फलेतिपथमश्रद्धधानोभवेत्याह ॥ यदीति ॥ तर्हिस्वत्वत्पृष्टज्ञानयथायादृशंतद्वदामिवक्ष्यामि ॥ ४१ ॥ लीलयाअना
स्थयापृष्टस्यवकुर्वाच ॥ अक्षसविदभ्वक्षुरसम्निकर्षा ॥ ४२ ॥ श्रुते स्वर्गकामोयजनेत्यादिविधिनिर्दोषप्रामाण्येननिश्चित शिष्टैर्मुक्तसंशयमुपादीयतेतद्वदुपादेयमित्यथ ॥
अविचारितंप्रामाण्यसंशयेनाविकम्पितम् ॥ ४३ ॥ मुक्तहेतुभिरुपपादनयस्यतथाविधमपिप्रमाणमुद्यायथाआदत्से ॥ ४४ ॥ शुश्रूसहितमित्येवश्रावयम् कर्णसुखावहगीत
गाममिवप्रीत्याशृणु ॥ ४५ ॥ तथादौदेहाद्यभिमानस्याजनायषु स्वनिदानोपदर्शनायचमणिकाचोपाख्यानहस्तिकाख्यानचश्रावयितुमवतारयति ॥ स्वचरितेति ॥ स्वस्यतवच

घटज्ञानाद्यज्ञानेविभागा सत्यनेकश ॥ ज्ञानानांपरमज्ञानंकतरत्तारकंभवेत् ॥ ४० ॥ ॥ चूडालोवाच ॥ ॥ यद्युपादेयवाक्योह
राजपैतद्वदामिते ॥ यथाज्ञानमिदंकिंचिन्नवक्षेस्थाणुकाकवत् ॥ ४१ ॥ अनुपादेयवाक्यस्यवक्तुःपृष्टस्यलीलया ॥ व्रजत्यफलतांवाच
स्तमसोवाक्समविद ॥ ४२ ॥ ॥ शिखिध्वजउवाच ॥ ॥ यद्वक्षितद्दुपादेयमयाविधिरिवश्रुतं ॥ अविचारितमेवाशुसत्यमेतद्वचोनम
॥ ४३ ॥ ॥ चूडालोवाच ॥ ॥ यथाबाल पितुर्वाक्यंमुक्तहेतूपपादनम् ॥ आदत्तेहितथैवत्वंगृह्णाणेतद्वचोमम ॥ ४४ ॥ श्रवणानंतरयुष्या
शुश्रूमित्येवश्रावयन् ॥ शृणुगीतमिवत्यक्त्वाहत्वर्थित्वंवचोमम ॥ ४५ ॥ स्वचरितमदृशंतथोदयत्याश्चिरसमयेनविबोधनचवुद्धं ॥ भव
भयसुतरमहामनीनांशृणुकथयामिकथाक्रममनोज्ञम् ॥ ४६ ॥ ॥ इ० वा० वा० दे० मोक्षोपायेपुनि० पू० चूडालोपाख्यानशिखिध्व
जावबोधोनामसप्ताशीतितम सर्ग ॥ ८७ ॥ ॥ ७ ॥ ॥ चूडालोवाच ॥ ॥ अस्तिकश्चित्पुमान्श्रीमान्स्थाननित्यविरुद्धयो
गुणलक्ष्म्योरशेषेणयथाब्धिर्वाहवाभुनो ॥ १ ॥ कलावानसकुशलोव्यवहारविचक्षण ॥ सर्वसकल्पसीमांतोनतुजानातितत्पदम् ॥ २ ॥
अनंतयत्नससाध्येसचिंतामणिसाधने ॥ प्रवृत्तोवाडवोवह्निरब्धिमशोषणेयथा ॥ ३ ॥ तस्ययत्नेनमहताकालेनाध्यवसायिन ॥ सिद्ध
श्चिंतामणि किंवानसिध्यत्युद्यतात्मनाम ॥ ४ ॥ प्रवृत्तिमुद्यमप्रज्ञाप्रयुक्तेचेदखेदवान् ॥ अकिंचनोपिशक्रत्वसमवाप्नोत्यविघ्नत ॥ ५ ॥

रितेनसदृशंतथामहमतीनामपिबुद्धेश्चिरसमयेनविचारोदयद्वाराउदयस्याबुद्धेर्विबोधनमहामनीनांचसघएवभवभयसुतरयस्मात्तथाविधम् ॥ विशेषणपरनिपातश्छांदस ॥ ई
दृशकथाक्रमकथयामिशृण्वित्यथ ॥ ४६ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि पू सप्ताशीतितम सर्ग ॥ ८७ ॥ ॥ ७ ॥ ॥ मौर्ख्याच्चिंतामणिप्राप्तमुपेक्ष्यतपसा
चिरात् ॥ काचकश्चिन्मणिमत्वाजपाइतिकथोच्यते ॥ १ ॥ नित्यपरस्परविरुद्धयो औदार्यवैराग्यसर्वस्वत्यागादिगुणस्यलक्ष्म्या सपदश्वस्थानमावासभूत ॥ यथाअब्धिर्व
डवानलस्यअंबुनश्चविरुद्धयो स्थानतद्वत् ॥ १ ॥ तत्परमात्मपदंनजानाति ॥ २ ॥ सकिंचकारतत्राह ॥ अनंतेति ॥ अनंतैस्तपोजपदेवताप्रार्थनान्वेषणादिभिो यत्नैःससाध्ये
चिंतामणे साधनेतपआदौप्रवृत्त ॥ ३ ॥ अध्यवसायिनोदृढनिश्चयवतस्तस्यमहतातीव्रायासेनयत्नेनाल्पकालेनैवचिंतामणि सिद्धोऽग्रेस्थित ॥ दृढोद्योगफलावश्यभावनियम
इविदर्शयति ॥ किंवेति ॥ ४ ॥ मन्नाविति ॥ आश्रित्येतिशेष ॥ ५ ॥

यथाकश्चिदुदयाचलशृंगस्थोमुनिस्तत्रैवोदितमिंदुंहस्तप्राप्यमपिभ्रांत्यामेरावुदितदूरतरस्थमिवदुष्प्रापपश्यतितद्वद्ददर्शेत्यर्थः ॥ ६ ॥ अतएवमणिराजानांइंद्रेईश्वरेतस्मिंश्चिंता मणौनिश्चयवान्सनबभूव ॥ सुदीनोदरिद्रतम ॥ ७ ॥ स्मयोविस्मयस्तच्छालिना संभ्रमशालिनाभ्रांतेनमनसाइदंवक्ष्यमाणप्रकारम् ॥ ८ ॥ अयंमणिरित्यापातज्ञानम् ॥ नायं मणिरितिभ्रम ॥ मणिश्चेत्स्यात्तर्हिसमत्वत्यक्षोनभवेत् ॥ तत्तर्हिपरीक्षणायस्पृशामिस्पृशेयमितीच्छाभिलाप. ॥ नस्पृशामिनस्पृशेयम् ॥ यत.कदाचिन्मणिश्चेदभाग्यस्य ममस्पर्शतोतर्धानंव्रजेत् ॥ ९ ॥ इतिशंकायार्बीजमाह ॥ नैतावतेति ॥ आगमोत्रैतिह्यतत्क्रम ॥ १० ॥ कथतर्हिप्रत्यक्षरत्नालोकदर्शनंतत्राह ॥ कृपणइति ॥ कृपणोहंस्वका

मणिमग्रेस्थितप्रायंहस्तप्राप्यंददर्शसः॥ मेरावुदयशृंगस्थोमुनिरिंदुमिवोदितम्॥६॥ बभूवमणिराजेंद्रेनतुनिश्चयवानसौ॥ राज्येंद्रा गितिसंतासेसुदीनइवपामरः॥ ७॥ इदंसंचिंतयामासमनसास्मयशालिना॥ संप्राप्तापेक्षयादीर्घदुःखसंभ्रमशालिना॥ ८ ॥ अयंम णिर्मणिर्नायंमणिश्चेत्तद्भवेन्नसः॥ स्पृशामिनस्पृशाम्येनंकदाचित्स्पर्शतोव्रजेत्॥ ९ ॥ नैतावतैवकालेनमणींद्रःकिलसिद्ध्यति ॥ यत्ने नजीवितांतेनसिद्ध्यतीत्यागमक्रमः ॥ १० ॥ कृपणःकूणितेनाक्ष्णालोलालातलतोपमम् ॥ रत्नालोकंप्रपश्यामिद्विचंद्रत्वमिवभ्रमात् ॥ ११ ॥ कुतएतावतीस्फीताभाग्यसंपन्ममागता॥ अधुनैवयदाप्नोमिमणींद्रंसर्वसिद्धिदम्॥ १२ ॥ केचिदेवमहांतस्तेमहाभाग्याभवं तिहि॥ येषामल्पेनकालेनभवंत्यभिमुखाःश्रियः ॥ १३ ॥ अहमल्पतपाःसाधुवराकोमानुपःकिल॥ सिद्धयःकथमायांतिमामभाग्यै कभाजनम्॥ १४ ॥ एवंविकल्पसंकल्पैश्चिरमज्ञःपरामृशन्॥ नमणिग्रहणेयत्नमकार्षीन्मौर्ख्यमोहितः ॥ १५॥ नयदायेनलब्धव्यंनत त्प्राप्नोत्यसौतदा॥ चिंतामणिरवाप्तोपिदुर्धियाहेलयोज्झितः॥ १६ ॥ इतितस्मिन्स्थितेयातोमणिरुड्डीयसिद्धयः॥ त्यजंतित्र्यवमंतारं शरोगुणमिवोज्झितः॥ १७॥ हत्वाप्राज्ञपदंपुंसःसंयांतिकिलसिद्धयः॥ आगताःसंप्रयच्छंतिसर्वंयांत्यसहत्यलम्॥ १८ ॥ पुमान्भूयः क्रियायत्नंचक्रेरत्नेंद्रसाधने॥ नोद्विजंतेस्वकार्येषुजनाअध्यवसायिनः ॥ १९ ॥ ददर्शाथकचद्रूपंकाचखंडमखंडितम् ॥ हसद्भिर्वंचकैः सिद्धैःपुरस्कृतमलक्षितैः॥ २० ॥ अयंचिंतामणिरितिमूढस्तस्मिन्सवस्तुताम्॥ बुबुधेमोहितोत्यज्ञोमृदंहेमेतिपश्यति ॥ २१ ॥

र्पण्यवशात्कूणितेनभातिसकुचितेनाक्ष्णालोलालातकल्पितलतोपमरत्नालोकभ्रमात्प्रपश्यामि ॥ ११ ॥ भाग्यपुण्यतत्संपत् ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ कुतोनाकार्षीत्त त्राह ॥ नयदेति ॥ लब्धव्ययदितिशेष. ॥ १६ ॥ किमर्थमुड्डीयगतस्तत्राह ॥ सिद्धयस्त्यजतिहीति ॥ यथामौर्व्याउज्झित.शरोगुणमौर्वींत्यजतितद्वत् ॥ १७ ॥ ननुत्वयासपु रुषोव्यवहारविचक्षणइतिकथोपक्रमेउक्तस्तस्यसाविचक्षणतामणिसिद्धिकालेक्कगतातत्राह ॥ हत्वेति ॥ सिद्धयआगता सत्य पुस'प्राज्ञपदविचक्षणतांसंप्रयच्छति ॥ असहति असहमानेउपेक्षकेतुपुंसिअलयाति अपगच्छत्यश्वसर्वंतस्यप्राक्तनमपिप्राज्ञपदविचक्षणत्वहत्वाविनाश्यसयांतिकिलेत्यर्थः ॥ यथाहु. ॥ नदेवादंडमादायरक्षयत्यपराधिनम् ॥ बुद्धितस्यापकर्षतितेनासौदृश्यतेस्वतइति ॥ १८ ॥ १९ ॥ हसद्भि.परिहासपरैरतएववचकै.सिद्धै पुरस्कृतमग्रेस्थापितम् ॥ २० ॥ वस्तुताउपादेयताम ॥ २१ ॥

पर ॥ प्रियधनधान्यासक्तिपरम ॥ २३ ॥ एषदेशापदहमप्यादीनपिपमास्खजहावित्याह ॥ दशाहेति ॥ रूक्ष स्निग्धजनशून्य ॥ गतभायजोणामित्यर्थः ॥ २४ ॥ [illegible]
दम् ॥ २५ ॥ याआपनकमलादेर्निभाकांतिरिवगाढनीला ॥ मौरूयस्यैवयासमाअनुरूपामल्युरूपेतियावत् ॥ २६ ॥ तस्मान्मौरूयमेवदुःखहेतुषुपराकाष्ठस्युपसंहरति ॥ दु
खानीति ॥ मौरूयविजृंभेनयानिदुःखानिप्रसिद्धानितानिसर्वस्वनाशादेरापत्सकाशान्नापिजरयामरणेनवाभवतिमौरूर्यापगमेतस्यविरामापदादिसहस्रेभ्योपिदुःखादर्शनात्

अत्रोपपद्दिपमिथ्ररज्जुसर्पस्थलजलम् ॥ यंद्रौद्वौकुरुतेचित्तगतोमोहोऽमृतविषम् ॥ २२ ॥ तदग्धमणिमादायप्राक्तनींचश्रियंजहौ ॥ स
र्वचिंतामणेरस्मात्प्राप्यतेकिंधनैरिह ॥ २३ ॥ देशोयमसुखोरूक्षोजनैःपापिभिरावृत ॥ किंतद्देहगतप्रायैःकिनाममममधव ॥ २४ ॥
दूरगत्वायथाकामंसुखतिष्ठामिसंपदा ॥ इत्यादायमणिंमूढःशून्यकाननमाययौ ॥ २५ ॥ तत्रकाचकणेनासौतेनतामापदंययौ ॥ क
ज्जलाद्रिवनिभामौरूयस्यैवागयासमा ॥ २६ ॥ दुःखानिमौरूयविजृंभेनभवंतियानिनैवापदोनचजरामरणेनतानि ॥ सर्वापदांशिर
सितिष्ठतिमौरूयमेकंकृष्णाजनस्यवपुषामिवकेशजालम् ॥ २७ ॥ ॥ इ० वा० वा० दे० मो० नि० पू० चूडालोपाख्यानेमणिकाचोपाख्या
नंनामअष्टाशीतितम सर्ग ॥ ८८ ॥ ॥ ७ ॥ ॥ चूडालोवाच ॥ ॥ अथेममपरंरम्यंवृत्तांतंशृणुभूमिप ॥ परप्रबोधनंशुद्धं सा
धोसदृशमात्मन ॥ १ ॥ अस्तिविंध्यवनेहस्तीमहायूथपयूथप ॥ आगस्त्याशुद्धयासुध्याविंध्येनेवोदित स्वत ॥ २ ॥ वज्रार्चिर्विषमौदी
र्घौतस्यास्तांदशनौसितौ ॥ कल्पानलशिखातुल्यौसुमेरून्मूलनक्षमौ ॥ ३ ॥ सबद्धोलोहजालेनहस्तिपेनकिलाभित ॥ मुनींद्रिणेवविंध्या
द्रिरुपेंद्रेणेववावलि ॥ ४ ॥ नियद्धोयंत्रणामापशस्त्रकुशार्दितोगज ॥ तांजगामव्यथांधीरोनवाप्नोपुरमेतियाम् ॥ ५ ॥ रिपोर्हस्तिपके
दूरादपसर्पतिसवारण ॥ अय समुद्गकयास्मिन्निनायदिवसत्रयम् ॥ ६ ॥

हमपर्येकथयानस्यापिसतिमौरूर्येदुःखसहस्रदर्शनात् ॥ अत सर्वापदांशिरसिमौरूयमेवैकंतिष्ठति ॥ यथाजनस्यसर्वस्यशिरसिकृष्णकेशजालंतिष्ठतितद्वदित्यर्थ ॥ २७ ॥
इतिश्रीवासिष्ठ तात्पर्यप्रकाशेनि० पू अष्टाशीतितमःसर्ग ॥ ८८ ॥ बद्धविंध्यगजेंद्रस्ययत्नाच्छित्त्वापिबंधनम् ॥ अनिघ्नतोरिपुंभ्रान्त्यातपातोवर्ण्यते ॥ १ ॥ अथहस्तिका
ख्यानमपिनिदर्शनमतस्तदपिशृणुइत्याह ॥ अथेति ॥ वृत्तांतमाख्यानम् ॥ आत्मनस्तवसदृशम ॥ १ ॥ अगस्त्यस्येयमागस्तीतया ॥ सूयतिप्र्येतियलोप ॥ चिरस्थायाआपरि
पालनाच्छुद्धयाअसम्यग्अनुपहतयाबुध्याविंध्येनस्वतःप्राक्तनोन्नतरूपेणोदित प्रादुर्भूतइवेत्युत्प्रेक्षा ॥ २ ॥ वज्रस्यार्चिषदीप्त्यालेशवद्विषमौतीक्ष्णौ ॥ ३ ॥ लोहमयेनजालेन ॥ मु
नींद्रेणअगस्त्येन ॥ ४ ॥ यंत्रणांनियमनाम ॥ कदाप्यसंभावितत्वादलौकिकत्वाच्चनवेअपूर्वेहरराग्नौदसमानंत्रिपुरयाव्यथयामततिताम ॥ ५ ॥ समुद्गकेजालसंपुट ॥ ६ ॥

१ विंध्याचलनास्वेनप्राक्तनोन्नतरूपेणस्वयं

किंकिणीनामिवक्काणंध्वनिम् ॥ ७ ॥ स्वर्गस्यामरावत्या अर्गलंकवाटविष्कंभम् ॥ असुरोबलिरिव ॥ ८ ॥ रिपुर्हस्तिपकः ॥ ९ ॥ तालतरोस्तालतरुमारुह्यततस्तस्यहस्ति नोमूर्ध्निपपात ॥ यथाबलियज्ञेपदत्रयमिताभुवप्रतिगृह्यप्रथमेनपदेनभुवंद्वितीयेनस्वर्गमितिक्रमतस्तृतीयपादपूर्त्तयेमेरो सकाशाद्बलेर्मूर्ध्निपपाततद्वदित्यर्थः ॥ १० ॥ ११ ॥ करुणादयाम ॥ १२ ॥ इतिकलयश्चिंतयन्सन् ॥ १३ ॥ निगडव्यूहश्शृंखलाजालम् ॥ १४ ॥ १५ ॥ स्वस्थोदेहोधीश्चयस्यतथाविध.सन् ॥ १६ ॥ भेदशिर पादादिभगम

खेदान्निगडनिर्भेदेयत्नवान्समतंगजः ॥ चकारकिंकिणीक्काणंमुखोद्घातैरथान्यदा ॥ ७ ॥ दंताभ्यांयत्नतस्ताभ्यांमुहूर्तद्वितयेनसः ॥ बभंजश्शृंखलाजालंस्वर्गार्गलमिवासुरः ॥ ८ ॥ तंतस्यनिगडच्छेदमपश्यद्दूरतोरिपुः ॥ बलेःस्वर्गावदलनंहरिर्मेरुतलादिव ॥ ९ ॥ तस्यविच्छिन्नपाशस्यमूर्ध्नितालतरोरिपुः ॥ पपातक्रमतःस्वर्गेहरिर्मेरोर्बलेरिव ॥ १० ॥ सपतन्पादपद्माभ्यामप्राप्यकरिणःशिरः ॥ पपातोर्व्यांफलंपक्वंवाताहतमिवाकुलः ॥ ११ ॥ तंपुरःपतितंदृष्ट्वामहेभःकरुणांययौ ॥ स्फुरत्स्फारगुणाःसंतःसंतितिर्यग्गतावपि ॥ १२ ॥ पतितंदलयामीतिकिंनाममपौरुषम् ॥ वारणापीतिकलयन्नजघानसतंरिपुम् ॥ १३ ॥ केवलंनिगडव्यूहंविदार्याभिजगामह ॥ विततंसेतुमुत्सार्यविपुलौघइवांभसः ॥ १४ ॥ दयामाश्रित्यमातंगोभंक्काजालंजगामह ॥ विदार्यमेघसंघातंनभसीवदिवाकरः ॥ १५ ॥ गतेगजेसमुत्तस्थौहस्तिपःस्वस्थदेहधीः ॥ गजेनैवसमंतस्यव्यथादूरतरंगता ॥ १६ ॥ प्रोच्चलत्तालशिखरात्सतथापतितोपिसन् ॥ नभेदमापदुर्भेदामन्येदेहादुरात्मनाम् ॥ १७ ॥ वर्धतेप्रावृषीवाभ्रंकुकार्येष्वसतांबलम् ॥ आसीदधिकमुत्साहीसचचंक्रमणेतदा ॥ १८ ॥ वारणारिरसिद्धांगोगतेभोदुःखमाययौ ॥ आगत्यापगतेतार्धिनिधानइववर्धनः ॥ १९ ॥ सोन्वियेषगजंयत्नाद्गुल्मकांतरितंवने ॥ पयोदपिंडितंभोकुंराहुरिंदुमिवांबरे ॥ २० ॥ चिरेणालभतेभेंद्रंकस्मिंश्चित्काननेस्थितम् ॥ विश्रांतंतंतरुतलेसमरादिवनिर्गतम् ॥ २१ ॥ अथयत्रस्थितोनागस्तत्रतद्बंधनक्षमम् ॥ परयाराजसामग्र्यागजलंपटभूमया ॥ २२ ॥ सखातवलयंचक्रेहस्तिपःकाननेभितः ॥ सर्वदिक्कंविधिर्भूमौसमुद्रवलयंयथा ॥ २३ ॥ उपर्यस्थगयद्वालतौघेनसतंशठः ॥ शून्यतातंतुजालेनशरत्कालइवांबरम् ॥ २४ ॥ दिनैःकतिपयैरेववारणोविहरन्वने ॥ तस्मिन्निपतितःखातेशुष्काब्धाविवपर्वतः ॥ २५ ॥ व्रजन्पर्याकृतौकूपेपातालतलभीषणे ॥ खातशुष्काब्ध्यधोभागेगजरत्नसमुद्गके ॥ २६ ॥

॥ १७ ॥ चंक्रमणेपद्मांचलने ॥ १८ ॥ नसिद्धेअंगेस्वप्रयुक्तोपायौयस्य ॥ अतएवगतेभः ॥ १९ ॥ पयोदैःपिंडितछन्नम ॥ २० ॥ २१ ॥ तत्रसन्निधौ ॥ गजेलंपटानामासक्तजनानांभूमाबाहुल्ययस्यातथाविधयाराजप्रयुक्तयाखातसामग्र्या ॥ २२ ॥ विधिःस्रष्टा ॥ २३ ॥ शठोवंचकः ॥ शून्यतापिधायकतंतुजालप्रायेणशुभ्राभ्रपटलेनशरत्कालोंबरमिवतखातमुपरिबालतताजालेनास्थगयत् आच्छादितवान् ॥ २४ ॥ २५ ॥ पर्याकृतौवलयाकारेतस्मिन्कूपेखातशुष्काब्ध्यधोभागेव्रजन्नपिसगज.इतिअनयारीत्यागजरत्नसमुद्गकेभूयोदृढंबद्ध.सन्नद्यापितिष्ठतीतिपरेणान्वयः ॥ २६ ॥

॥१७॥ यथाहनिष्पन्नस्तस्तदास्वात निर्बंधनेंदु स्वनालक्ष्यत ॥१८॥ अतएवमुक्तिमामागामिकालमिदानीमेवशास्त्रीयपुरुषप्रयत्नेदु स्वबीजसमाजननशोधयादित्याहामौर्व्यामि ॥१९॥ यावत्तवदु खनिदानमज्ञानंनोच्छिन्नमापव्ययमसहस्त्रं कृतापिदु खोपशमोप्यथएवेत्याशयेनाह ॥ मुक्तोस्मीति ॥ किलार्थेचशब्द ॥२०॥ तस्मादज्ञानमेवमूलबध स्तन्निवृत्तिरदितीयात्मतत्त्वज्ञानादेवेतिदर्शयन्नुपसंहरति॥ मौर्व्यमिति ॥ हेमहात्मन्नद्ध सर्वार्थशून्य स्वयबद्धइतिचेतसियन्मौर्व्यंतदेवपरबधनमतस्तन्निवृत्त्यै आध्यात्मि काधिदैविकाधिभौतिकभिविधपरिच्छेदात्मनाआत्मबधभूतत्रिजगदात्मनःप्रकाशाबबोधमाजन्मयस्यतथाविधंसमस्तमात्ममयविद्धि ॥ तथाबेदनेआत्मव्यतिरिक्तापरिशेषा दात्मानित्यमुक्तएवभवति॥ ईदृशवेदनाभावेनमौर्व्येस्थितस्यपुंसआत्मैवसहस्रासर्वधाविधुःखबीजानांभूमिःप्ररोहक्षेत्रंभवतीत्यर्थ ॥३१॥ ॥इतिश्रीवासिष्ठम०ता०नि०पू० एकोननवतितमःसर्गः ॥८९॥ ॥५॥ ॥ मणिकाचयोःआख्यानतात्पर्यमिहविस्तरात् ॥ विवृणोतिपुरोराज्ञश्चूडालाकुम्भरूपिणी ॥१॥ हेअमरात्मजदेवपुत्रत्वयायत्मणिसाधक

इतिभूयोदृढंयद्वृत्तेनहस्तिपर्कनस ॥ तिष्ठत्ययापिदु खेनभूसद्मनियथाचलि ॥ २७ ॥ अहंनिष्पत्पुरैवासौयघग्रेपतितरिपुम् ॥ तन्नाल प्स्यत्ततोदु खंगज खातनिबंधनम् ॥ २८ ॥ मौर्ख्यादागामिनकालंवर्तमानक्रियाक्रमे ॥ अशोधयन्नरोदु खयातिविंध्यगजोयथा ॥ २९ ॥ मुक्तोस्मिशखनिगडादितितुष्टोहिवारण ॥ दूरस्थोपिपुनर्बद्धोमौर्ख्यकंपनयाधते ॥ ३० ॥ मौर्ख्यंहिबंधनमवेहिपरमहात्मन्ब द्धोनयद्धइतिचेतसितद्विमुक्त्यै॥ आत्मोदयत्रिजगदात्ममयंसमस्तमौर्ख्येस्थितस्यसहस्रानुसर्वभूमि ॥३१॥ ॥इ०वा०वा०दे०मो० नि०पू०चू०पाख्यानेहस्तिकोपाख्यानंनामएकोननवतितम सर्ग ॥८९॥ ॥५॥ ॥शिखिध्वजउवाच॥ ॥मणिसाधकविंध्येभब धनायमरात्मज॥ सूचितयत्कयाजालपूनर्मप्रकटीकुरु॥१॥ ॥चूडालोवाच॥ ॥वाक्यार्थदृष्टेर्निष्पत्त्याद्बुद्धेश्चित्तभित्तिपु॥ श्रृणुस्व यंकथांचित्रांचिभ्रमुन्मीलयामिते॥२॥ योसौशास्त्रार्थकुशलस्तत्त्वज्ञानेत्वपडित ॥ रत्नसाधक प्रोक्त सत्वमेवमहीपते॥३॥ तज्ज्ञोभव सिशास्त्रेपुरविमेरुतटेष्विव ॥ तत्त्वज्ञानेतुविश्रांतोनत्वंहपदिवांप्रसि॥४॥ विद्धिचिंतामणिसाधोसर्वत्यागमकृत्रिमम् ॥ तमतंसर्वदु खानांत्वसाधयसिशुद्धधी ॥५॥ सर्वत्यागेनशुद्धेनसर्वमासाद्यतेनघ॥ सर्वत्यागोहिसाम्राज्यंकिंचितामणितोभवेत्॥६॥ सिद्ध सर्व परित्याग साधाससाध्यतस्तव॥ खर्वीकृतजगद्भूतिर्विधास्वात्मोदयस्तथा ॥७॥ सत्यक्तभवताराज्यसदारधनबांधवम्॥ ब्रह्मणेवज गत्सगव्यापारस्वनिशागमे॥८॥ स्वदेशस्यातिदूरस्थमागतोसिममाश्रमम्॥ भुवोंतमिवविश्रांत्यैवेनतथ्यसकच्छप ॥ ९ ॥

कथामात्रस्वरिमम्ममिस्युक्त्यामवप्रबोधनोपायदनिष्पन्नमप्रकटीकुरु ॥१॥ ऋजुत्वयतल्लक्षणेदृष्टेचित्तलक्षणासुभित्तिपुचित्रांकथामेवोन्मीलितरेखामात्रेणकृतंविभ्रम्या प्यावयवैर्विम्यमोन्मीलयामीत्यर्थ ॥२॥ तथाहावस्तिकश्चित्पुमान्मूर्धाभानित्यादिनोक्तामणिसाधक सत्वमेवेत्याह ॥ योसाविति॥३॥ त्वयिकलाथामृशाब्धकुशलःइत्यापुक्त लक्षणमस्तीत्याह ॥ तज्ज्ञइति॥४॥ कासौचिंतामणिर्यत्साधनेऽहमयत्तस्तमाह ॥ विद्धीति ॥५॥ मस्यांचिंतामणित्वमुपपादयति ॥ सर्वत्यागेनेति ॥ साम्राज्यमात्यन्तिकीपूर्णका मता॥६॥ खर्वीकृतानुच्छीकृताहैरण्यगर्भपर्यतासमष्टिव्यष्टिभूतिरैश्वर्यपरम्परायेनतथाविधोविधालक्षण स्वात्मोदयोमिरतिशयानन्दाभ्युदयोयस्मात्तथाविधश्चसर्वपरित्याग ॥ चार्थेतथाशब्दः ॥७॥ कथंसिद्धस्तदाह ॥ सत्यक्तमिति ॥ ब्रह्मणेवेति ॥८॥ [illegible]

अहंमतिरभिमानरूपाअविद्या ॥ मृष्टाअखिलाअभ्रनीहारादिकलंकायेनशारदानिलेन ॥ १० ॥ अहंमतिपरित्यागेपरिशिष्टःपूर्णानंदात्मापरमपुरुषार्थ.स्वतएवत्वदिसाक्षा
त्स्फुरतीतिसर्वत्यागएवमोक्ष पर्यवसित·परमानंदश्चिंतामणिर्नतल्लाभेतदुपेक्ष्यान्यदन्वेषितव्यमित्याशयेनाह ॥ मनोमात्रेइति ॥ त्वत्तुत्यक्त्वाभिमानपरिशेषात्त्यागात्यागविक
ल्पैरावृतइतिनपूर्णताप्राप्तइत्याह ॥ त्यागात्यागविकल्पैरिति ॥ ११ ॥ विकल्पवशादेवप्राप्तेपिसर्वत्यागेअविश्वासस्तवाभूदित्याह ॥ नायमिति ॥ १२ ॥ इतिचिंतयासंकल्प
ग्रहणेचिरवृद्धिंगतेसतिसतेसर्वत्याग प्रोड्डीयगत. ॥ १३ ॥ यश्चिंतामपिआईषदपिवृणोतिस्वीकरोति ॥ १४ ॥ चित्तत्यागएवमुख्य सर्वत्यागश्चितायातुसत्याचित्तदुस्त्यजाचि
त्तेनतुसंकल्पद्वाराजगदेवसंगृहीतमितिनकस्यापित्यागस्तेप्रतिष्ठितइत्याशयेनाह ॥ चितैवेतिद्वाभ्याम ॥ १५ ॥ १६ ॥ ग्रामविहगम कपोतादि ॥ १७ ॥ सर्वत्यागस्यफलनि

केवलंसर्वसंत्यागेशेषिताहंमतिस्त्वया ॥ मृष्टाखिलकलंकेनस्वसत्तेवानिलेनखे ॥ १० ॥ मनोमात्रेत्वदस्यक्तेजगदायातिपूर्णताम् ॥
त्यागात्यागविकल्पैस्त्वंखमंभोदैरिवावृतः ॥ ११ ॥ नायंसपरमानंदःसर्वत्यागोमहोदयः ॥ कोप्युच्चैरन्यएवासौचिरसाध्योमहानिति
॥ १२ ॥ चिंतयेतिगतेवृद्धिंसंकल्पग्रहणेशनैः ॥ वात्ययेववनस्पंदेत्यागःप्रोड्डीयतेगतः ॥ १३ ॥ त्यागितास्याकुतस्तस्यचिंतामप्यावृ
णोतियः ॥ पवनस्पंदयुक्तस्यनिःस्पंदत्वंकुतस्तरोः ॥ १४ ॥ चितैवचित्तमित्याहुःसंकल्पेतरनामकम् ॥ तस्यामेवस्फुरंत्यांतुचित्तंत्यक्तंकथं
भवेत् ॥ १५ ॥ चित्तेचिंतागृहीतेतुत्रिजगज्जालकेक्षणात् ॥ कथमासाद्यतेसाधोसर्वत्यागोनिरंजनः ॥ १६ ॥ संकल्पग्रहणेनांतस्त्यागः
प्रोड्डीयतेगतः ॥ शब्दसंश्रवणेनांगयथाग्रामविहंगमः ॥ १७ ॥ निश्चितत्वंपरंसर्वत्यागआदायतेगतः ॥ आमंत्र्यापूजितोजंतुःसदुःखं
नकरोतिकिम् ॥ १८ ॥ सर्वत्यागमणावेवंगतेकमललोचन ॥ तपःकाचमणिर्दृष्टस्त्वयासंकल्पचक्षुषा ॥ १९ ॥ त्वयातस्मिंस्तपस्येवदुः
खदृष्टिभ्रमोदिते ॥ ग्राह्यैकभावनाबद्धाजलेंदौशशिनोयथा ॥ २० ॥ अवासनमनासक्त्याकृतानंतासवासना ॥ आद्यंतमध्यविषमादुः
खायैवतपःक्रिया ॥ २१ ॥ अमितानंदमुत्सृज्यसुसाध्यंयःप्रवर्त्तते ॥ मितेवस्तुनिदुःसाध्येस्वात्महासशठःस्मृतः ॥ २२ ॥ सर्वत्यागंसमा
रभ्यनचैषसाधितस्त्वया ॥ तथादुःखैकताज्ञानबद्धेनवनसद्मनि ॥ २३ ॥ राज्यबंधाद्विनिष्क्रम्यप्रसरद्दुःखपूरितात् ॥ वनवासाभिधेस्सा
धोबद्धोसिदृढबंधनैः ॥ २४ ॥

श्चितत्वत्यागेनापगच्छतानीतमिवेत्युत्प्रेक्षते ॥ निश्चितत्वमिति ॥ पूज्यस्यानिमंत्रितस्याथपूजनेदक्षाध्वरादावनर्थ.प्रसिद्ध किंपुन प्रार्थनासहस्रैरागतस्यापूजनेइत्याशयेनाह ॥
आमन्त्र्येति ॥ १८ ॥ तत·कोसौकाचखण्डोयोमयामणिबुद्ध्यागृहीतस्तमाह ॥ तपइति ॥ १९ ॥ दुःखहेतुत्वाद्दुःखमार्गमित्येवभावनादृढनिश्चय.॥ जलेंदौप्रतिबिंबचंद्रसत्यशशि
नोभावनेवबद्धेत्यर्थः ॥ २० ॥ पूर्वमवासनयथास्यात्तथाअनासक्त्यासर्वत्यागमुपक्रम्यपश्चादनंतासवासनातप·क्रियाकृतासाचत्वथा ॥ गृहधनदारादित्यागादादौविषमाअतफ
लासंगविषमामध्येवनवासशीतवातादिसहनाद्विषमेतिदुःखायैवेत्यर्थ. ॥ २१ ॥ अमितात्मानंदसुसाध्यंचसर्वत्यागमुत्सृज्यमितेदुःसाध्येचतपआदिवस्तुनिय·प्रवर्त्ततेसशठ अमि
तात्मस्वरूपविघातित्वात्स्वात्महेत्यर्थ. ॥ २२ ॥ वनसद्मनितथावर्णितप्रकारतपोदुःखैस्तदेकताप्रयोजकाज्ञानेनचबद्धेनत्वयाएषप्राक्समारब्ध सर्वत्यागोनसाधितः॥ २३ ॥ २४ ॥

मनवासमजानतांमागननुभूतवतांस्तुकुमाराणांवनवासव रनादधिकदु खमम्य ॥२५॥ खडिकोशकलमपि ॥ २६ ॥ उपपादितमणिसाधकचरितसाम्यमुपसंहरति ॥ इत्यमि ति ॥ अमइपमनममपाइन्यतमपारिममिपयनकथयासमानसम्यक्रमकठिनस्फुटीकृतम ॥ तन्मणिकाचवार्त्तीतिकमेवमवुत्करीत्यात्वस्वयमेवविचार्यतस्ततोगुरुष्यासर्वत्या गतपावायरवचिन्तामणिवदमलनिर्दोषंवेत्सिनदेवत्वचित्तकोशेनिधायफलप्राप्तिपर्यंतांपरिणतिंनयेत्यर्थ ॥ २७ ॥ ॥ इतिश्रीवासिष्ठम तात्पर्यप्रकाशेनि॰पू॰नवतितम स्सर्ग ॥ ॥ ९० ॥ ॥ ५ ॥ ॥ इदानींविध्येभवत्तांतवार्त्तातिकमुदीयते ॥ कृत्नेनराज्ञश्चरितबोधातत्यागसिद्धये ॥ १ ॥ वस्तुनस्तत्त्वस्यसम्यक्प्रतिपत्तयेबोधाय ॥ स्वयोचि

द्विगुणाएवतेचिंता.शीतवातातपादय ॥ यधनादधिकमन्येवनवासमजानताम्॥२५॥चिंतामणिर्मयाप्राप्तइत्यलंनुद्धवानमि ॥ नल न्धवान्भवान्साधोस्फटिकस्यापिखंडिकाम्॥ २६॥इत्येतदगमणियत्नकथासमानमम्यक्क्रमयाप्रकथिततवपद्मनेत्र॥ तद्बोध्यमेवममलस्वयमेवबुध्वायद्वेत्सितत्परिणतिंनयचित्तकोशे॥ २७॥ ॥इत्यार्षेवा॰वा॰दे॰मोक्षोपायेषुनि॰पू॰चू॰चिंतामणिसाधकवृत्तांत विवरणंनामनवतितम सर्ग ॥९०॥ ॥५॥ ॥चूडालोवाच॥ ॥इदानींराजशार्दूलवस्तुसप्रतिपत्तये॥ शृणुविंध्येभवृत्तांत विवृतिंस्मयकारिणीम्॥१॥ योसौविंध्यवनेहस्तीसोस्मिन्भूमितलेभवान्॥ यौवैराग्यविवेकौतौद्वौतस्यदशनौसितौ॥ २॥ यश्चासौवारणाक्रांतितत्परोहस्तिपःस्थित॰॥ तदज्ञानतवाक्रांतितत्परंतवदु खदम्॥३॥ अतिशक्तोप्यशक्तेनद्ध खादु खभयाद्भयम्॥ हस्तीह स्तिपकेनेवराजन्मौस्यंणनीयसे॥४॥ यल्लोइवज्रसारेणवारण परियन्त्रित॥ तदाशापाशजालेनभवानापदमावृत ॥ ५॥ आशाहि लोहरज्जुभ्योविषमाविपुलादृढा॥ कालेनक्षीयतेलोहंतृष्णातुपरिवर्धते॥६॥ यद्दद्देप्रेक्षतेवैरीगजमारादलक्षित ॥ प्रेक्षतेत्वांतदज्ञान क्रीडार्थबद्धमेककम्॥७॥ यद्वनजगज गत्रो शृंखलाजालबंधनम्॥ तत्तत्याजभवान्भोगभूमिराज्यमकंटकम्॥८॥ कदाचित्सुक रंगवश्शृंखलाबंधभंजनम्॥ नत्वस्यमनसस्साधोभोगाशाविनिवारणम्॥ ९॥ यद्विभेपाटयत्युच्चैर्बंधहस्तिपकोपतत्॥ त्वयित्यजतित द्राज्यमज्ञानपतितंकृतम्॥ १०॥ यदाविरक्तपुरुषोभोगाशांत्यक्तुमिच्छति ॥ तदाप्रकंपतेऽज्ञानछेद्येरक्षेपिशाचवत्॥ ११॥ यदावि वेकापुरुषोभोगान्सत्यज्यतिष्ठति॥ तदापलायतेऽज्ञानछिन्नेवृक्षेपिशाचवत्॥ १२॥

स्मयतस्कारिणीम ॥ १ ॥ यौतस्यद्वौदशनौवैराग्यविवे कास्याविस्मय ॥ २ ॥ ३ ॥ अतिशक्तोबलवानपित्वमशक्तेनदुर्बलेनापिमौर्ख्येणदु खादु खभयाद्भयनीयस ॥ ४ ॥ सवज्ञोलोहजालेनेत्युक्तिप्रकटयति ॥ यदिति ॥ प रितोयंत्रितोबद्धइमिपत्॥ भवानपाशाबंधिम्याप्येत्यापरमावृत ॥ राज्यपालनकालेतदित्यर्थ ॥ ५ ॥६॥ रिपौहस्तिपकेदूरावपश्यतीत्यनेनसूचिततद्दर्शनमुदाहरति ॥ यदिति॥ इहैरहस्ये ॥ अज्ञानस्यचेतनत्वमारोप्यबोधेप ॥७॥ एताभ्यांयमतसाभ्यामिस्पुक्तेस्तात्पर्यमाह ॥ यदिति ॥ ८॥९॥ सपतत्पातपश्चाभ्यामप्राप्यकरिण शिर पपातोर्म्यामि तिपद्भुक्तमस्यज्ञानेदर्शयति ॥ यदिभेइति ॥ पतितयथाभवतितथाकृतंत्वयापातितमिभजशरीरकमित्यर्थ ॥ १० ॥ तदेवस्पष्टयति ॥ यदेति ॥ ११ ॥ १२ ॥

॥१३॥ क्षतंशिथिलीभूतमपिमनस्त्यागस्त्वज्ञानेननिर्मनस्कतातल्लक्षणेनमहासिनानिहततदानीमेवतेचूडालोक्तिश्रवणात्तत्त्वबोधावसरोभूदितिभावः॥१४॥ तेनत्वदुपेक्षिता ज्ञानेन ॥१५॥ राज्यत्यागविधौतंदैवतथागतपतितमज्ञानयद्घातयिष्यस्तत्तदैवक्षयगतसत्त्वातप खातपातेननाहनिष्यदित्यर्थः॥१६॥ सखातवलयचक्रेइत्युक्तेस्तात्पर्यमाह॥ यदिति ॥ १७ ॥ परयाराजसामग्र्यागजलपटभूमयेत्यत्रोक्ताराजसामग्रीस्फुटयति ॥ यातस्येति ॥ तस्यगजारेर्हस्तिपकस्यराजप्रयुक्ताश्रीःखातसामग्रीसपद्याउक्तासातुअव ज्ञानविचारानादरस्तल्लक्षणस्यहस्तिपकनृपते अभ्यन्तरचारिणीअतरंगैश्वर्यभूता ॥ चिंतैवास्यविवेकम्यसर्वस्वमितिभावः ॥१८॥ हेसाधोत्वमगजोपिसन्नयमुक्तविवेकसंपन्नोग जेंद्रः अनेनाज्ञानलक्षणेनवैरिणाअभित खातेतरसानिक्षिप्त॥१९॥ उपर्यस्थगयद्वालतौघेनसतशठइत्यस्यतात्पर्यस्फुटयति॥यदिति ॥ सज्जनवृत्तिभिःशांतिक्षात्यादिगुणै सा धुजनसमागमैश्चईषदावृतम्॥२०॥इतिभूयादृढबद्धस्तेनहस्तिपकेनस॥निम्नत्यद्यापिदु खेनभूसद्मनियथाबलिरित्युपसहारस्यतात्पर्यवर्णयन्नुपसहरति॥इत्यद्यापीति॥२१॥ उ

भोगौघेनूनमुन्मुक्तेपतत्यज्ञानसंस्थितिः॥ पादपेक्रकचच्छिन्नेकुलायस्तद्गतोयथा॥१३॥ यदावनंप्रयातस्त्वंतदाज्ञानंक्षतंत्वया॥ पति तंसन्ननिहतंमनस्त्यागमहासिना॥१४॥ तेनभूयःसमुत्थायस्मृत्वापरिभवंकृतम्॥ तपःप्रपंचखातेस्मिन्गहनेत्वंनियोजितः॥१५॥ तदै वाघातयिष्यस्त्वंयद्यज्ञानंतथागतम्॥ राज्यत्यागविधौतत्त्वांनाहनिष्यत्क्षयंगतम्॥१६॥ यत्खातवलयस्तेनवैरिणाहस्तिनःकृतः॥ तत्त पोदुःखमखिलमज्ञानेनतवार्पितम्॥१७॥ यातस्यराजराजश्रीर्गजारेर्नृपसत्तम॥ सात्ववज्ञाननृपतेश्चिंताभ्यंतरसारिणी॥१८॥ त्वं गजेंद्रस्त्वयंसाधोदीर्घेवनेऽगजोपिसन्॥ अज्ञानवैरिणातेननिक्षिप्तस्तरसाभितः॥१९॥ यत्खातवलयोवाललताभिरवगुंठितः॥ आवृतं तत्तपोदुःखमीषत्सज्जनवृत्तिभिः॥२०॥ इत्यद्यापितपःखातेदुःखेत्वस्मिन्सुदारुणे॥ स्थितोसिपातालतलेनृपबद्धोयथाबलिः॥२१॥ ग जस्त्वमाशानिगडानिवैरीमोहोनिखातःपुनरुग्रबंधः॥ महीतलंविंध्यउदंतइत्थंत्वदीयउक्तःकुरुयत्करोपि॥२२॥ ॥इ० वा० वा० दे० मो० नि० पू० चू० हस्तिकाख्यानतात्पर्यविवरणंनामैकनवतितमःसर्गः॥९१॥ ॥७॥ ॥चूडालोवाच॥ ॥यदुक्तंनयशालिन्यातया विदितवेद्यया॥ तदाचूडालयाज्ञानंतत्कस्मान्नोररीकृतम्॥१॥ साहितत्त्वविदांमुख्यायद्यद्वक्तिकरोतिच॥ तत्सर्वंसत्यमेवांगतदनुष्ठेय मादरात्॥२॥ अथचेद्वचनंतस्यास्त्वयानानुष्ठितंनृप॥ तत्सर्वसंपरित्यागःकस्मान्ननिपुणीकृतः॥३॥

क्रमनुक्तंचपिंडीकृत्याह ॥गजइति॥ त्वगज॥ आशास्तवनिगडानि॥ मोहोवैरीहस्तिपक॥ उपेतपसिनिर्बंधएवनिखातः॥महीतलविंध्यः॥इत्थत्वदीयउदंतोवृत्तांतोमयाहस्तिकाख्यानेनोक्तः॥एवंपरिज्ञायतपःखा तादुद्गम्यतस्यरिपोर्नाशाययत्करोपितत्कुरुमाविलवस्वेत्यर्थः॥२२॥ ॥इतिश्रीवा०ता०नि०पू०एकनवतितमःसर्गः॥९१॥ ॥७॥ ॥ इहकुम्भवचःश्रुत्वासर्वत्यागपरोनृप.॥ त्यक्त्वावनादिवह्नौस्वसर्वंभाण्डमदीदहत्॥१॥ यदात्ववनप्रस्थितस्तदैवाज्ञानपतितसन्ननिहतमितित्वयोक्तत्रतदानीमममनस्त्यागोपाय'केनोपदिष्टोयोमयोपेक्षितइतिराजशकां वितर्कयतीचूडालोवाच॥यदुक्तमिति॥१॥ तस्याअतत्त्वविस्त्वानृतवादिनीत्वादिशकावारयति॥ साहीति॥ अनुष्ठेयमभूदितिशेषः॥२॥ यदिआत्मबुद्ध्याचिरंजीवेद्गुरुबुद्ध्या विशेषत' पग्बुद्धिर्विनाशायस्त्रीबुद्धिःप्रलयकरीतिवचनात्स्त्रीबुद्धिमुपेक्ष्यात्मबुद्धिनिश्चितसर्वत्यागमेवबद्धमस्थास्तर्हिसएवत्वयाकुतोनस्थिरीकृतइत्याह॥ अथचेदिति॥३॥

राज्यादिपरित्यागमात्रेण सिद्ध सर्वपरित्याग साधोर्ससाध्यतस्तव स्वर्गीकृतजगद्भूतिर्विधास्वात्मोदयस्तथेतित्वयैवोक्तम् नचमयात्यक्तराज्यादिपुन स्वीकृतम् तत्कथमयासर्व
त्यागाननिपुणास्त्वमिति शिखिध्वज पृच्छति ॥ राज्यमिति ॥४॥ केवलसर्वसत्यागेशेषिताहमतिस्त्वयेतिमयाप्रागुक्तमेवास्योत्तरम् विवेकाभावात्रसौनमतिपन्नस्तदपवनाश्रम
कुटाकमण्डल्वादिपरिग्रहशेषविनि शपत्यानितेकथंचिद्विपक्षप्याहंकारपाधिपरित्यज्यपूर्णोभविष्यतीतिमन्यमानाशनैस्सद्बुद्धिविचारमवतारयंस्तीगूढाभिसंधिनैव चूडालोवा
च ॥ धनमिति ॥ यस्त्वसवधिसर्वधनत्यागेसर्वत्याग सिध्यात् नचराज्यादयस्तत्त्वसमधिन सर्वथा ॥ अहंकारोहिराज्यादिकममतिकल्पयस्तत्त्वामितोमन्यतेनत्सात्तेतिभाष्यभा
वान्सर्वत्यागस्तवसिद्धइतिभावः॥५॥ यदहंकारेतारास्यारापारालाराज्यादित्वामितोपतिपन्नस्सुप्य्येनतर्हितस्यागादेवराज्यादित्यागसिद्धेर्नान्यथा सचत्वयानत्यक्तइत्या

॥शिखिध्वजउवाच॥ ॥राज्यत्यक्तगृहत्यक्तदेशस्त्यक्तस्तथाविध ॥दारास्त्यक्ताजयाप्यगसर्वत्यागोनर्किकृत ॥४॥ ॥चूडालोवाच॥
धनदारागृहराज्यभूमिश्छत्रंचयाधवा ॥ इतिसर्वनतेराजन्सर्वत्यागोहिकस्तव ॥ ५ ॥ तवास्त्येवापरित्यक्त सर्वस्माद्भागउत्तम ॥
तपरित्यज्यनि शेपमायास्यसिविशोकताम् ॥ ६ ॥ ॥ शिखिध्वजउवाच ॥ ॥ राज्यचेन्ममनोसर्वतत्सर्वंवनमेवमे ॥ शैलवृक्षादिगु
ल्मादयतदप्येतत्त्यजाम्यहम् ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इतिरामवदत्त्येवकुम्भवाक्यप्रणोदित ॥ निमेपातरमात्रेणवशीवीर शि
खिध्वज ॥ ८ ॥ प्रममाजवनास्थांतांकृत सुदृढनिश्चय ॥ प्रावृडापत्तटगतांरजोलेखामिवात्मना ॥ ९ ॥ ॥ शिखिध्वजउवाच ॥ ॥
सवृक्षाद्रिवनश्वभ्राद्विपिनादपिवासना ॥ परित्यक्तामयानूनपरित्याग स्थितोमम ॥ १० ॥ ॥ कुम्भउवाच ॥ ॥ अद्रेस्तटवनश्वभ्रमलि
लपादपस्थलम् ॥ इत्यादितवनोसर्वंसवत्याग कथतव ॥ ११ ॥ तवास्त्येवापरित्यक्त सर्वस्माद्भागउत्तम ॥ तपरित्यज्यनि शेपपरामा
यास्यशोकताम् ॥ १२ ॥ ॥ शिखिध्वजउवाच ॥ ॥ एतच्चेन्ममनोसर्वतत्सर्वस्वाश्रमोमम ॥ वापीस्थलोटजयुतस्तमेवाद्युत्यजाम्यहम्
॥ १३ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इतिरामवदत्त्येवकुम्भवाक्यप्रबोधित ॥ निमेपध्यानमात्रेणवशीवीर शिखिध्वज ॥ १४ ॥ प्रममार्जा
श्रमास्थातांसविदाशुद्धयाहृदि ॥ स्फुरतीस्फुरणेनैवरजोलेखामिवानिल ॥ १५ ॥ ॥ शिखिध्वजउवाच ॥ ॥ सवृक्षोटजवापीकाद्वास
नास्वाश्रमादपि ॥ परित्यक्तामयानूनसवत्याग स्थितोमम ॥ १६ ॥ ॥ कुम्भउवाच ॥ ॥ वृक्षोवापीस्थलगुल्मकुटजवृततीवृतिः ॥ इतिर्किं
चिन्नतेमर्वसवत्याग कुतस्तव ॥ १७ ॥ तवास्त्यन्योपरित्यक्त सवस्माद्भागउत्तम ॥ तपरित्यज्यनि शेपपरामायास्यशोकताम् ॥ १८ ॥

शयनाद्याश्रमेति ॥६॥ उक्तारीत्यममतिपद्यमान पूर्वपरित्यक्तत्वादेवराज्यादीनवेदानीराज्यादिसंबंधोनास्तीतिनत्यागार्हता शैलवृक्षादीनात्विदानीपरिग्रहान्नतस्यागमतरणतमस
त्यामसिद्धिरित्यस्याशयइतिमन्यमान शिखिध्वजउवाच ॥ राज्यमिति ॥ एवमग्रेपिराज्ञस्तात्पर्यभेदमकल्प ॥७॥८॥ प्रावृडोपोपर्षाप्रवाह ॥ रजोलेखापांसुगजिमिव ॥ ९ ॥ वा
सनाममतापरित्यक्तानममत्याग स्थित सर्वस्य ॥ १० ॥ कुम्भाशय पूर्ववत् ॥ ११ ॥ १२ ॥ त्यामाद्यनादिवनोसर्वमिस्यस्तुमामतथापितवाश्रमस्तदाभात्कथसर्वत्याग सिद्धइतिमामा
इतिमन्यमान शिखिध्वजउवाच ॥ एतच्चेदिति ॥ अप्यर्थकएवकार ॥ १३ ॥ १४ ॥ मामममेआस्थाममतापममार्ज ॥ १५ ॥ १६ ॥ कुम्भाशयोराजाशयश्चप्राग्वत् ॥ १७ ॥ १८ ॥

कुड्यानिभित्तय. ॥ अल्पाकुटीकुटीर· ॥ १९ ॥ विष्टरादासनात् ॥ दक्षासनयोर्विष्टरइतिषत्वम् ॥ अवदातात्माशुद्धचित्त· ॥ २० ॥ अंशुमान्सूर्य स्वस्यस्यंदनेरथेइवासने आलोकयन्नेवस्थितइतिशेष. ॥ २१ ॥ २२ ॥ अब्धिभू समुद्रोदरनिम्नभूमिरुन्नतभुवोव्टष्टिनद्यादिवारियथाएकत्रानयतितद्वत् ॥ २३ ॥ करैःकिरणैःसंचारवान्सक्रांतोर्को यथासूर्यकांतशिलास्थानपावकज्वालयतितद्वत् ॥ अणौज्वलेरकर्मकत्वाण्णौकर्त्तु.पावकस्यकर्मता ॥ भांडोपस्करस्यापितत्फलभस्मीभावाश्रयत्वात्कर्मताविवक्षिता ॥ ज्व लेर्मित्वविकल्पादुपधाह्रस्वाभाव. ॥ २४ ॥ विवेशवृस्यामितिशेष· ॥ ध्वसिकामन्वतरसधिप्रलयस्तत्रयथारवि स्वप्रदीपितेग्नौजगद्धुत्वामेरुश्रृंगेउपविशतितद्वत् ॥ २५ ॥ इ दानीमक्षमालात्यक्तुकाम कृतोपकारविस्मरणदोषपरिहरस्तामाह ॥ एतावंतमितिद्वाभ्याम ॥ हेपतिप्रियेस्वामिभक्तेनजात·परक्लेशेनस्वार्थसाधनबुद्धेर्भेदउच्छेदोयस्यतथावि

शिखिध्वजउवाच॥ ॥एतच्चेन्ममनोसर्वंतत्सर्वंभाजनादिमे॥ चर्मकुड्यकुटीरादितत्तावत्संत्यजाम्यहम् ॥१९॥ ॥श्रीवसिष्ठउवाच॥ इत्युक्त्वासमुत्तस्थावविक्षुब्धमतिःशमी॥ विष्टरादवदातात्माश्रृंगादिवशरद्घनः॥ २० ॥ कुंभस्त्वालोकयन्नेवतांक्रियाःसस्मितःस्वय म्॥ आसनेलोककार्येषुस्वस्यंदनइवांशुमान्॥ २१ ॥ यत्करोतिकरोत्वेतदस्यैतत्पावनंपरम् ॥ इतितूर्ष्णीस्थितःकुंभःशिखिध्वजमवै क्षत॥ २२ ॥ शिखिध्वजस्तुतत्सर्वंभांडोपस्करमाश्रमात्॥ एकत्रैवानयामासभुवोवार्यब्धिभूरिव ॥ २३ ॥ तत्संस्थाप्येंधनैःशुष्कैर्ज्वा लयामासपावकम्॥ करैःसंचारवानर्कःसूर्यकांतपदंयथा ॥ २४ ॥ भांडोपस्करजालंतदग्नौत्यक्त्वाविवेशसः ॥ ध्वंसिकायांजगद्धुत्वा मेरुश्रृंगेयथारविः॥ २५ ॥ एतावंतंमयाकालंवृत्तायत्त्वंपतिप्रिये॥ अजातबुद्धिभेदेनतेनैवकृतमस्तुते ॥ २६ ॥ भ्रांतौतुविनिवर्तिन्यां नाधुनोपकरोपिमाम्॥ मंत्राटव्यांचिरंभ्रांतंवित्तंकार्यवर्त्मसु॥ २७॥ दृष्टानिधर्मस्थानानिविश्राम्याम्यधुनासखि॥ इत्यक्षमालांज्व लनेचिक्षेपोत्काशिखिध्वजः॥ २८॥ कल्पांताग्नाविवव्योमतारालींपवनोमलाम्॥ मयानरम्रगेणत्वंचिरंवनमृगाच्युतम्॥ २९ ॥ अ बोधेनधृतंवृस्यामिदमेवम्रगाजिन॥ इदानींगच्छतुच्छायपंथानःसंतुतेशिवाः॥३०॥ वह्निनाव्योमतांगच्छसतारंव्योमतेसमम्॥ तद्दृ स्यंगात्कराभ्यांसधृत्वाचर्माजहादिति॥ ३१ ॥

धेनमयात्वयत्एतावतकालवृत्तापरिवर्त्तनश्रमप्रापितातेनैवतेतवमस्त्वेवनकृतपर्याप्तमस्तु ॥ २६ ॥ अधुनातुतपोजपादिकर्त्तव्यताभ्रांतौविनिवर्तिन्यामपगतायासत्यामांनोप करोपिअतोनत्वाश्रमेणयोजयामीतिविश्राम्येत्यर्थ ॥ अहमपित्वयासहजपभ्रमेणनानामत्राटवीषुभ्रात.संप्रतिविश्रमिष्यामीत्याह ॥ मत्राटव्यामिति ॥ कार्यवर्त्मसुक्रिया साध्यक्षुद्रसिद्धिमार्गेषुवित्तंभ्रांतम् ॥ २७ ॥ धर्मस्थानानितपोवनसिद्धिक्षेत्रादीनि ॥२८॥ यथापवन.कल्पांताग्नौव्योम्नस्तारालीनक्षत्रमालाक्षिपतितद्वत् ॥ अनेनाक्षमाला स्फाटिकीतिगम्यते ॥ मृगाजिनप्रत्याह ॥ मयेति ॥ २९ ॥ वृस्याकुशासने ॥ इदमेवतवोपकृतमस्त्वितिशेषः ॥ तुच्छायमूलकारणमायास्वभावाय ॥ पंथानःअवांतरकारणप्र विलयलक्षणामार्गा. ॥ ३० ॥ सतारव्योमतेसममित्युक्त्यापृषतस्यनच्चर्मशुक्लबिंदुचित्रमितिगम्यते ॥ तस्यहिसतारव्योमताप्राप्तिरनुरूपैवेति ॥ ३१॥

मृपेड़ायफ। मृत्यमा यमाकुम्यकराभ्यामर्थामहाविमिपूवमाभ्यय ॥ यथामलपवात अपलानगुधेराकुम्यरसमङ्कीत्यजनितगृत् ॥ दवार्ताकमडलुत्यक्तकाम छतज्ञताभ्याप मायपरासर्न ॥ महावसनत्यादिना ॥ सुधुवसनघनुतेनसुचरिभेणषभवतासता ॥ शवमत्ययातोयभनच्छम्म्।।२ ॥ प्रतिष्ठतमस्युपकरणनकृतम् ॥ सौंदर्यादिपराम्पयियथास भवमलपमयास्यानि॥३३॥ येनैवेति ॥ अनेनसकमडलुपूर्वकसाबिन्ध्रोमियाच्छुषार्थवह्निनाहेनसशोध्यस्त्वयगहीत स्थित सपुनराहेनसशोध्यान्यसैश्रोम्रियायवत्तइतिग म्यम ॥३४॥३५॥ यदुपकरणसाधुप्रतिपत्त्यर्थं भवत्तस्मयेमहत्तमापिदातव्यदाननप्रतिपाद्यमितिनियमादित्यर्थ ॥ मृसीधस्यस्तस्यानगुचितदोषमाह ॥ मूरवस्येवति ॥ यथामूरव स्यमतिरधार्मिहगोगुमपच्छमेपापपतमितथात्वमपिसदास्वमच्छन्नेअधोदेशेपतसि॥३६॥ अतोहमृसिकेमूर्खमनेरिवतेभैवदाहसतापगतिरुचिताअतोभस्मतांव्रजेत्यथ ॥ इत्यु

…सौं मृपोग्रावयुधेर्वातोदववक्षाविवाचलात् ॥ महावत्तेनभवतात्वयावारिधृतमम ॥ ३२ ॥ साधोकमंडलोसम्यङ्नतेप्रतिकृतकृतम् ॥ सौं द्वदस्यमनाज्ञस्यसौजन्यस्यस्थिरस्यच ॥ ३३ ॥ साधुत्वस्यचसवस्यत्वमेवपरमास्पदम् ॥ येनैववह्निनादेहंसंशोध्याभ्यागतोसिमाम् ॥ ३४ ॥ तेनैवगच्छहेमित्रपंथानस्संतुतेशिवा ॥ इत्युक्त्वाश्रोम्रियायैवकमंडलुमदात्तदा ॥ ३५ ॥ अभ्रयेमहतेवापिदातव्यसाधुयद्भवे न् ॥ मूखस्येवमतिगुप्तनित्यमेवपतस्यध ॥ ३६ ॥ उचितातेगति सैवमृसिकेभस्मतांव्रज ॥ इत्युक्त्वादायमृसिकामग्नावेवसम्हद्विकाम् ॥ ३७ ॥ शुश्रूयमासनार्थंवैचितितत्याजभासुरे ॥ यस्याज्यमचिरेणैवत्यक्तव्यंकिलतत्सदा ॥ ३८ ॥ विस्तर क्रियतेसद्भिरुपादेयइति स्थिति ॥ शीघ्रमभ्राविदसर्वंभांडजातत्यजाम्यहम् ॥ ३९ ॥ एकवारदहत्यग्निर्दात्यभवतितुष्टये ॥ साधोक्रियोपकरणनिक्रियायत्य जाम्यहम् ॥ नखेदस्त्वकर्तव्योनव्ययोग्योविभर्तिक ॥ ४० ॥ इत्युक्तवान्झटितिभोजनभाजनादिसर्वंजुहावववनवासविलासयोग्य म् ॥ तद्दाहजालमनलेसममेवराजाकल्पांततेजसिजगज्ज्वलतीवकाले ॥ ४१ ॥ ॥ इ० वा० वा० दे० मोक्षोपायेपुनि० पू० पू० सर्व त्यागकरणनामद्विनवतितम सर्गं ॥ ९२ ॥ ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥

कामदिकामनुमार्द्राभासुरेअग्नावेवतस्यामेतिपरणान्वय ॥३७॥ किमर्थंसर्वंतत्याजतत्राह ॥ शुश्रूयमिति ॥ चितिशुश्रूयर्थंचितिभूतचैतन्येआसनार्थम् ॥ विश्रात्यर्थंमित्यर्थ ॥ कुभस्याह ॥ यदित्यादि ॥ हसाधोयस्याज्यमभांडजातमचिरेणशीघ्रमेवत्यक्तव्यमविलम्बितम्यमित्यथ ॥३८॥ तत्कुलस्त्वाह ॥ विस्तरइति ॥ यत सद्भिरविषमनिसैर्भार्वैरुपा देयसंग्रहयोग्यउपकरणांतरपिविस्तर क्रियतेइतिलोकेवस्तुस्थितिप्रसिद्धा अतोहमिदंसर्वंभांडजातशीघ्रमेवाग्नौत्यजामि ॥ ३९ ॥ यत सर्वदासभांडमेकवारयुगपदेवदहतिचे ममनुरूपसत्यागस्तोषायभवतीत्यथ ॥ ननुहकुतमसकनसर्वत्यागविपयेत्ययासबोनकत्तव्योयतोलोकेपिअयोग्यकोविभर्तिधारयति ॥ तथाचाक्रियस्यममक्रियोप करणमयोग्यमेवतिनधारणयोग्यमितिभाव ॥४०॥ राजाशिखिध्वजइतिउक्तवान्सर्वंभोजनभाजनमाद्यप्रधानयस्यतथाविधमसर्वंवनवासविलासयोग्यभांडजालसमयु मपदेवअनलसदृग्निजुहाव ॥ यथाकालोज्वलनिकल्पांततेजसिजगद्युगपदेवजुहोतितद्वदित्यर्थ ॥४१॥ ॥ इ० वासिष्ठ ता० प्रकाशेनिर्वाण० पू० द्विनवतितम सर्ग ॥ ९२ ॥

स्वेनमनसावृथाममतासंकल्पेनकल्पितंसमर्थिततत्कुटीरूपंतृणमंदिरम् ॥ १ ॥
दग्ध्वोपकरणदेहंत्यक्तुकाम.शिखिध्वजः ॥ विनिवार्यात्रकुंभेनचित्तत्यागायबोध्यते ॥ १ ॥ स्वस्यवसनवल्कलम् ॥ भुज्यतेयस्मिंस्तद्भोजनंपत्रपुटकाद्यपि ॥ ३ ॥ पूर्वंदृष्टापश्चान्नष्टा
पिठरशरावकुशकाष्ठसंचयादियत्किंचिदभवत्तत्सर्वंददाहेत्यादिपरेणान्वयः ॥ २ ॥ केवलाकृतिर्देहमात्रावशिष्टः ॥ ६ ॥ वासनांममताम् ॥ तत्रसर्वोपकर
अदर्शनप्रामाजनस्थितिर्यत्र ॥ पूर्वकालेतिसमासः ॥ ४ ॥ तदेवोपपादयति ॥ आश्रमादिति ॥ ५ ॥

श्रीवसिष्ठउवाच॥ ॥अथोत्थायददाहासौशुष्कंतत्तृणमंदिरम्॥ अज्ञेनस्वेनमनसावृथासंकल्पकल्पितम्॥ १॥ शिष्टंयत्किंचिदभव
त्तत्सर्वंसशिखिध्वजः॥ असंरब्धमनामौनीक्रमेणसमयाधिया ॥ २॥ ददाहचसचिक्षेपतत्याजचबभंजवा ॥ भांडजातंस्ववसनंभो
जनाद्यपितुष्टवत्॥ ३॥ सबभूवाश्रमस्तस्यदृष्टनष्टजनस्थितिः॥ वीरभद्रबलध्वस्तदक्षयज्ञाश्रमोपमः ॥ ४ ॥ आश्रमात्तेमृगगणास्त्य
क्त्वोमंथमुद्ययुः॥ साग्निदाहात्पुरवराद्भीतभीतजनाइव ॥ ५॥ भांडजातंदहत्यग्नौसहशुष्कंधनेनतत्॥ केवलाकृतिरस्नेहस्तुष्टिमानाहभू
पतिः॥६॥ ॥शिखिध्वजउवाच॥ ॥वासनांतत्रसंत्यज्यसर्वत्यागीस्थितोस्म्यहम्॥ अहोनुचिरकालेनदेवपुत्रप्रबोधितः॥७॥ संपन्नः
केवलःशुद्धःसुखेनोद्बोधवानहम्॥ किंनामकिलवस्त्वेतद्भवेत्सांकल्पिकक्रमम्॥८॥यावद्यावत्प्रहीयंतेविविधाबंधहेतवः॥ तावत्तावत्स
मायातिपरमांनिर्वृतिंमनः॥९॥शाम्यामिपरिनिर्वामिसुखितोस्मिजयाम्यहम्॥ विबंधाःप्रक्षयंयाताःसर्वत्यागोमयाकृतः॥ १०॥दिगं
बरोदिक्सदनोदिक्समोयमहंस्थितः॥ देवपुत्रमहात्यागात्किमन्यदवशिष्यते॥११॥ ॥कुंभउवाच॥ ॥ सर्वमेवनसंत्यक्तंत्वयाराज
न्शिखिध्वज॥ सर्वत्यागपरानंदेमामुधाभिनयंकुरु ॥ १२॥ तवास्त्येवापरित्यक्तःसर्वस्माद्भागउत्तमः॥ यंपरित्यज्यनिःशेषंपरामा
यास्यशोकताम्॥१३॥ ॥श्रीवसिष्ठउवाच॥ ॥इतिश्रुतवतातेनकिंचित्संचिंत्यभूभृता॥इदमुक्तंमहाबाहोरामराजीवलोचन॥१४॥
शिखिध्वजउवाच॥ ॥इंद्रियव्यालसंघातोरक्तमांसमयाकृतिः॥ शिष्यतेसर्वसंत्यागेदेहोमेदेवतात्मज॥१५॥ तदुत्थायपुनर्देहंभृगुपा
तादविघ्नतः॥ विनाशात्मकतांनीत्वासर्वत्यागीभवाम्यहम्॥१६॥ ॥श्रीवसिष्ठउवाच॥ ॥इत्युक्त्वादेहमग्रस्थेश्वभ्रेत्यक्तुमसौजवात्॥
करोतियावदुत्थानंतावत्कुंभोप्युवाचह ॥ १७॥

णे ॥ प्रबोधितस्त्वयेतिशेषः ॥ ७ ॥ साकल्पिकोममतासंकल्पप्रयुक्त.सपहक्रमोयस्यतथाविधमेतदुपकरणजातंकिंनामनकिंचित्सारभूतमुपादानार्हमित्यर्थः ॥ ८ ॥ तत्त्याग
सुखमभिनयन्नाह ॥ यावद्यावदिति ॥ ९ ॥ विविधाबंधाबधहेतवोविषयाः ॥ १० ॥ ११ ॥ बाह्योपकरणत्यागमात्रेणभ्रान्त्याबालस्येवतस्यसर्वत्यागसुखाभिनयमसहमानः
कुंभउवाच ॥ सर्वमेवेति ॥ अभिनयव्यंजकचेष्टाविशेषम् ॥ १२ ॥ तवेत्यादिप्राग्वत् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ श्वभ्रेभृगौ ॥ १७ ॥

निरागस्कनिरपराधम् ॥ महावटेभूमौ ॥ तर्णकस्तवत्सम् ॥ १८ ॥ निरागस्कतामेवदर्शयति ॥ जडइति ॥ तवअपराधइतिशेषः ॥ १९ ॥ २० ॥ यस्यापराधसमन्यदर्शयति ॥ क्षोभयतीति ॥ सएवनिग्रहार्होस्य ॥ २१ ॥ ननुसुखदुःखोद्भवस्थानत्वात्कुतःशरीरनापराधित्वमाह ॥ सुखेति ॥ भूत्याउत्पत्तिस्थानतामात्रेण ॥ तत्रदृष्टांतमाह ॥ नेति ॥ यथाफलवांस्तरुर्वायुस्फुरणेआलस्पंदेफलादिपातेसतितन्तन्निमित्तत्वात्अपराधवान्भवति ॥ २२ ॥ यतःस्फुरन्वातएवफलानांशिरःपल्लवानांपुष्पाणांचवलात्पातनंकुरुतेइति सएवापराधी तरुणासाधुनाकिमपराद्धंतद्वदेहेनापिसाधुनात्मन किमपराद्धमित्यर्थः ॥ २३ ॥ त्रियस्मात्सर्वस्यागःपुनरधिकारिदेहदौर्लभ्येनज्ञानदौर्लभ्याद्विषमोहःसाधएवसप

कुंभउवाच ॥ ॥ राजन्किमितिदेहत्वंनिरागस्कमहावटे ॥ त्यजस्यज्ञोहित्वंपश्य कुपितोहंतितर्णकम् ॥ १८ ॥ जडोवराकोमूकात्मातपस्वी देहकोह्ययम् ॥ नकश्चनतवैतस्मिन्मामुधैवतनुंत्यज ॥ १९ ॥ आत्मन्येवैषमूकात्माध्यानवानवतिष्ठते ॥ सञ्चाल्यतेपरेणैवतरंगेणैव काष्ठकम् ॥ २० ॥ क्षोभयत्यन्यएवैनंनिग्रहार्होमुहुर्बलात् ॥ तपस्विनंयथैकांतसंस्थितंमत्ततस्करः ॥ २१ ॥ सुखदुःखादिभूत्याहिना पराधिशरीरकम् ॥ नात्मनःफलवानात्मस्पंदेवृक्षोपराधवान् ॥ २२ ॥ वातःफलशिरःपुष्पपातनंकुरुतेस्फुरन् ॥ तरुणासाधुनासाधोर पराद्धंकिमात्मन ॥ २३ ॥ त्यक्तेनापिशरीरेणकिलतामरसेक्षण ॥ सर्वत्यागोनतेयातिनिष्पत्तिविषमोहिस ॥ २४ ॥ मृगौकेवलमेतत्त्वं निरागस्कशरीरकम् ॥ मुधाक्षिपसिनोदेहत्यागेतत्त्यागिताभवेत् ॥ २५ ॥ येनायंक्षोभ्यतेदेहोमत्तेभेनेवपादपः ॥ तत्सत्यजसिचेत्पाप तन्महात्यागवान्भवान् ॥ २६ ॥ तस्मिंस्त्यक्तेभवेत्त्यक्तसर्वदेहादिभूपते ॥ नोचेन्निमग्नमप्येतद्भूयोभूयःप्ररोहति ॥ २७ ॥ ॥ शिखिध्व जउवाच ॥ ॥ केनायंचाल्यतेदेहः किंबीजंजन्मकर्मणाम् ॥ कस्मिंस्त्यक्तेपरित्यक्तंसर्वंभवतिसुंदर ॥ २८ ॥ ॥ कुंभउवाच ॥ ॥ साधोन देहत्यागेननराज्यत्यजनेनच ॥ नघोटजादिशोपेणसर्वत्यागोभवेन्नृप ॥ २९ ॥ यत्सर्वंसर्वतोयच्चतस्मिन्सर्वैककारणे ॥ सर्वस्मिन्सपरि त्यक्तेसर्वत्यागःकृतोभवेत् ॥ ३० ॥ ॥ शिखिध्वजउवाच ॥ ॥ सर्वंसर्वगतंसर्वहेयंत्याज्यंचसर्वदा ॥ सर्वंकिमुच्यतेब्रूहिसर्वतत्त्वविदांव र ॥ ३१ ॥ ॥ कुंभउवाच ॥ ॥ साधोसर्वगताकारंजीवप्राणादिनामकम् ॥ नजडंनाजडंभ्रांतंचित्तंसर्वमितिस्मृतम् ॥ ३२ ॥ चित्तमे वभ्रमंविद्धिविद्धिचेतोनरंनृप ॥ चित्तंविद्धिजगज्जालंचित्तंसर्वमितिस्मृतम् ॥ ३३ ॥

पतङ्गस्यच ॥ २४ ॥ तस्यैवदेहक्षोभकस्याहंकारस्यत्यागितामोभवेत्सिद्धोवित्यर्थः ॥ २५ ॥ २६ ॥ एतद्देहादिनिमग्नमलमज्ञानाविनानाशितमपितस्माद्देहबालकादेवजन्म कर्मबीजभूतायरोहति ॥ २७ ॥ २८ ॥ २९ ॥ सर्ववासनास्पदत्वात्सर्वम् ॥ सर्वविषयेषुपसृतत्वात्सर्वत ॥ सकल्पेनसर्वजनकत्वात्सर्वैककारणे ॥ ३० ॥ सर्वमहेयसर्वगतंच त्याज्यत्वमुपोम्यपसर्वत्वयोच्यततत्किमित्यर्थः ॥ ३१ ॥ चित्प्राधान्येनजीवनामकंक्रियाप्राधान्येनप्राणादिनामकंचित्तलिंगम् ॥ ३२ ॥ नरम्पवहर्तृपुरुषम् ॥ ३३ ॥

१ एकस्मिन्नित्यपिक्वचित्पाठः. २ भवेत्यक्तसर्वदेहादिसुदरेत्यपिक्वचित्पाठः

भिन्नताजीवब्रह्मभेदभिन्नचिद्रश्मितादृश्यवेदननारूपभेदश्चनास्ति ॥ १८ ॥ शुद्धचिद्रूपे सर्वथाज्ञाभानकदापिजडपदार्थानामसिद्धेस्तद्भावनामयुक्तमहमितिजीवरूपमपिना स्यतेनिश्चयमात्मैवपरिशिष्यतइत्यर्थः ॥ १९ ॥ नादृशात्मैवसत्यज्ञानमनंतब्रह्म नित्यविज्ञानमानंदब्रह्म ब्रह्मैवेदंविश्वमिदंवरिष्ठमित्यादिसर्ववेदार्थस्तद्भावनादेवतदनुभवाद्वि त्यर्थ ॥ तर्हितद्यिंतनंतदनुभवात्मिकाअखंडाकारवृत्तिः सर्वथाचित्वात्सापरिशिष्येतेत्याशंक्याह ॥ चेतितेति ॥ ब्रह्मचिंतनयाचेतितब्रह्मार्थैकसत्यत्वाश्चिंतादिवृत्तिरपिस्वेद्व बाधनवाप्यस्यहेतिनब्रह्मातिरिक्तपरिशेषप्रसक्तिरित्यर्थः ॥ २० ॥ उक्तमर्थंफलेनोपसंहरति ॥ तेनेति ॥ तेनसर्वद्वैतबाधनत्वब्रह्मैवासि तद्ब्रह्मअशेषमनेकमेकमेवसंपन्नसर्वजगत्त्वासत्त्व न्यमयं तथापिभासरूपाचिदपिथास्थितमविकृतमस्मीतिनिरामयतत्त्वावशिष्टमित्यर्थः ॥ २१ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशे नि० पू० सप्तनवतितमः सर्गः ॥ ९७ ॥ चित्तनाम्नीनिबोधस्यदृढीकारायविस्तरात् ॥ चेत्यासत्यादचित्तत्वप्रश्नोत्तरैस्तुविवर्ण्यते ॥ १ ॥ ननुआलोकेतनिरूपारोपिसत्येवचित्तेचित्तत्वमस्यमानस्यवामयथादृश्यतेनाहंति ॥ तत्र

इतिचित्तमहद्रूपनास्त्यतोनचजिन्नता ॥ निर्वासनःशांतमनामौनीपरमशोमय ॥ १८ ॥ सदेहोवाविदेहोवाभावस्थोप्यचलोपम ॥ सर्वथाद्वुद्धचिद्रूप पदार्थाभावसिद्धित ॥ १९ ॥ भावनाभावतश्चित्तनास्त्येवाहमितिस्वयम् ॥ एवब्रह्मेतिवेदार्थभावनादनुभूतित ॥ चेतितार्थैकसत्यत्वाच्चितानामक्वविद्यते ॥ २० ॥ तेनासिनिर्मलमकारणमादिमुक्तब्रह्मशाश्वतमशेषमनेकमेकम् ॥ शून्यनिरामय मसत्सदनादिमध्यसर्वजगच्चिदपिब्रह्मयथास्थिततत् ॥ २१ ॥ ॥ इ० वा० वा० दे० मो० नि० पू० चू० शिखिध्वजप्रबोधननामसप्तनव तितमः सर्गः ॥ ९७ ॥ ॥ ७ ॥ ॥ शिखिध्वजउवाच ॥ ॥ चित्तनास्तीतिमेबोधोयथायुक्त्यास्फुटंभवेत् ॥ तामन्यामथवाब्रूहियुक्तिं निपुणमया ॥ १ ॥ ॥ कुंभउवाच ॥ ॥ चित्तनास्त्येवहेराजन्कदाचित्किंचनक्वचित् ॥ यच्चेदंचित्तवद्भातितद्ब्रह्माभिधमव्ययम् ॥ २ ॥

हिचित्तमवाकारवृत्तिकबाध्यततोहितदीपनाशादेवपुनराध्यमामम ॥ किंचसचित्ताएवसचेतनाअचित्तास्त्वचेतनालोकप्रसिद्धास्तथादिजीवन्मुक्तानदृचित्तालहिंसवादिवदचेत ना स्वपरम् ॥ नचतथादृश्यते ॥ किंचसतिचित्तनिरतिशयानंदलक्षणपरमपुरुषार्थं शास्त्रफलमनुभवितुशक्यनास्ति ॥ नचाननुभूयमान कश्चित्पुरुषार्थोनामभवति ॥ किं चब्रह्माकारचित्तमपचित्तबाधतअभ्यहा ॥ नाद्य ॥ स्वात्मनिक्रियाविरोधात ॥ नहिरासदहन्त्यपि स्वात्मानमग्धुशक्नोति ॥ नद्वितीय ॥ तद्वाप्यस्यअगतस्तद्वाधकत्वायोगा त् ॥ चित्तस्यचित्तरस्यस्याकिबाधकत्वामसिद्धसुंदोपसुंदन्यायानवतारात् ॥ ब्रह्मणस्तुनादेः सर्वसाधकत्वमेवनबाधकत्वमितिचित्तबाधोनिरर्थकोदुष्करःसर्वानुभवपराहतश्चे त्याद्याशंकानिराससबोधदाढ्यकामोराजापृच्छति ॥ चित्तमिति ॥ तांमायुक्तामेवयुक्तिविशदीकृत्यब्रूहि ॥ अथवातस्यांतदुपयुक्तामदीयसर्वाशंकानिवारणसमर्थामन्यायुक्ति मिदर्थाकिंचिदन्यामनाचचित्तनास्ति ॥ तत्रसर्वत्रापपरिहारेणचित्तबाधोपपादिकायुक्तिमुपक्रमश्चित्तासत्त्वतदधिष्ठानब्रह्मणासत्त्वमप्रतिजानीते ॥ चित्तमिति ॥ कदाचित्कालेक्व

॥ निष्कर्षम् ॥ १ ॥

तांयुक्तिमाह ॥ अतइति ॥ यत.सर्वंचित्तादिजगदज्ञानात्मकंज्ञानेनाज्ञानबाधेनहेतुनानविद्यतेअतोहेतोरित्यर्थः ॥ अयंभावः ॥ भवेदयंस्वात्मनिक्रियाविरोधोयद्यज्ञानबाधा चित्तादिबाधोन्य स्यात् ॥ अज्ञानबाधएवतुसर्वतत्कार्यतत्सबधावरणविक्षेपादिसर्वनिवृत्तिरूपस्तस्मिन्सतिचित्तनास्त्येवेतिप्रतिज्ञातार्थोऽर्थसिद्धएव ॥ अतएवनपुनराध्यादि दोषप्रसक्तिरज्ञानस्यैवसर्वाध्यप्रयोजकस्यापगमात् ॥ स्वप्रकाशपूर्णानंदपरिशेषेणनिरतिशयपुरुषार्थसिद्धेश्च ॥ नचचित्ताधीनाचेतनताकित्वभिव्यक्तचिदधीनासाचजीव न्मुक्तेषुचित्तनाशेप्यस्त्येवेतिनाचेतनत्वप्रसंगः ॥ नचचित्तनाशेतत्कृताचिदभिव्यक्तिरपैति ॥ अनभिव्यक्तेरज्ञानावरणकृतत्वेनतदपगमेचितोभिव्यक्तेः स्वाभाविकत्वेनानपाया त् ॥ नहिवायुनाघनापसारणेनकृतासूर्याभिव्यक्तिःशरदिवायूपरमेअपैतीतिसर्वदोषपरिहारइति ॥ ३ ॥ प्रथमप्रतिज्ञासमर्थितांनिगमय्यद्वितीयामुपादत्ते ॥ नास्त्येवेति ॥ त त्समर्थनाय यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदितिश्रुतिप्रमाणयति ॥ केनेति ॥ ४ ॥ ननिरोधोनचोत्पत्तिर्नबद्धोनचसाधकइतिश्रुतिरपितत्रमानमित्याशयेनाह ॥ महाप्र लयेति ॥ महाप्रलय.प्राकृतस्तदुत्तरेपुराणादिप्रसिद्धेसर्गादौयदिनोदितमेवतर्हिचित्तनास्त्येवेतिप्रतिज्ञावाक्येत्वयाकथयचेदचित्तवद्वार्तातिनिर्देश.कृतस्तत्राह ॥ निर्देशस्त्विति

अतोऽज्ञानात्मकंयत्तज्जगदेवनविद्यते ॥ तत्राहंत्वंतदित्यादिकल्पिताःकलनाःकुतः ॥ ३ ॥ नास्त्येवजगदेवेदंयच्चेदंकिंचनोदितम् ॥ ब्रह्मै वास्तीहसकलंकेनतद्बुध्यतेकथम् ॥ ४ ॥ महाप्रलयसर्गादावेवेदंनोदितंजगत् ॥ निर्देशस्त्विदमित्यत्रत्वद्बोधायमयाकृतः ॥ ५ ॥ उपादा नात्मकादीनांकारणानामभावतः ॥ अकारणंचभावानामशेषाणांत्वसंभवात् ॥ ६ ॥ एवमज्ञानबुद्ध्यात्मजगत्तस्मान्नविद्यते ॥ तस्मा द्यदिदमाभातिभासनंब्रह्मनेतरत् ॥ ७ ॥ अनाख्येनाकृतौदेवेकरोतीदमितित्वसत् ॥ भापितंनोपपत्त्यात्मनसत्यंनानुभूयते ॥ ८ ॥ अना ख्योप्रतिघःस्वात्मानिराकारोयईश्वरः ॥ सकरोतिजगदितिहासायैववचोऽधियाम् ॥ ९ ॥ अनेनैवप्रयोगेणराजंश्चित्तंनविद्यते ॥ जग देवनसत्साधोकुतश्चित्तादितद्गतम् ॥ १० ॥ चेतोहिवासनामात्रंवास्येतुसतिवासना ॥ वास्यंजगत्तदेवासदतश्चित्तास्तिताकुतः ॥ ११ ॥ यदिदंकचतिब्रह्मस्वयमात्मात्मनात्मनि ॥ कृतंतस्यैवतेनैवचित्तमित्यादिनामकम् ॥ १२ ॥

॥ ५ ॥ पूर्वोक्तयुक्तिरप्येतत्साधनसमर्थेत्या शयेनाह ॥ उपादानेति ॥ ६ ॥ द्वितीयप्रतिज्ञानिगमयति ॥ तस्मादिति ॥ ७ ॥ ननुयदिसर्गादिनास्त्येवतर्हितदात्मानꣳस्वयमकुरुतएकोवशीसर्वभूतांतरात्मा एकंबीजंबहुधायः करोति कर्त्ताभोक्तामहेश्वरइत्यादिश्रुतिस्मृतिवादानाकागतिरितिचेन्नेहनानेतिश्रुत्यपेक्षितनिषेध्यसमर्पणेनाद्वैतव्युत्पादनार्थवादत्वेनगतिर्नतत्त्वार्थतेत्याशयेनाह ॥ अनाख्ये इति ॥ अनाख्येनामरहितेअनाकृतौरूपरहितेयुक्तिशून्यत्वान्नोपपत्त्यात्मनिष्कलंनिष्क्रियमित्यादितात्त्विकश्रुतिविद्वदनुभवबाधितत्वान्नसत्यलौकिकैरपिनानुभूयते ॥ ८ ॥ शीतवातादिप्रतिघातवारणायगृहादिनिर्माणप्रसिद्धम् ईश्वरस्त्वप्रतिघःकरोतीतिअधियांतात्पर्यशून्यानामर्थवादानासर्वज्ञस्यतथाचेष्टोक्तिर्हासायैवेत्यर्थः ॥ ९ ॥ एवंजगत्स र्गासिद्धौप्रतिज्ञातार्थसिद्धिरित्याह ॥ अनेनैवेति ॥ यदाजगदेवनसत्तदातदंतर्गतचित्तादिकुत.सदित्यर्थः ॥ १० ॥ जगदसत्वेविषयासत्त्वादपिचित्तासत्त्वसिद्धिरित्याह ॥ चेतो हीति ॥ वास्येवासनाकर्मणिविषये ॥ ११ ॥ तर्हिचित्तादिव्यवहारस्यकोविषयइतिचेन्मायोपहितब्रह्मैवेत्याह ॥ यदिदमिति ॥ नाम्नासंघोनामकम् ॥ १२ ॥

चतोद्दिवासमामामिति श्लोकव्याचष्टे ॥ जगदिति ॥ दृश्यं वास्यमिति दर्शनानुसारिणीवासनेति पोतनार्थम् ॥ कारणाभावत इति विषयबाधेनिर्विषयवासनास्थित्ययोगादिति भाव ॥ १३ ॥ यद्विरकपनीति श्लोकमपि परमार्थदृशातत्फलवर्णनपरतयाव्याचष्टे ॥ अतइति ॥ १४ ॥ मायातत्त्वदृशापिव्याचष्टे ॥ यत्किंचिदिति ॥ परमाकाशरूपेऽपि दादर्शे यत्किंचिदनिर्वचनीयमायारूपम् ॥ इयदस्यम्म ॥ १५ ॥ अशेषानर्थकारिणी अहंजगदित्येषाप्रतिपत्तिर्मेतत्साक्षिणो ममस्वप्नवन्मिथ्यैवाभाति नूननिश्चयेनेत्यर्थः ॥ १६ ॥ १७ ॥ १८ ॥ यदिनोत्पन्नं तर्हि अमदनादि नित्यमेवास्तु किमस्याभाव इत्याह ॥ लोकेति ॥ दृश्यस्यवस्तुनः अनादित्वजन्मादिविक्रियारहितत्वमाकीदृश्यवालोकतोवाशास्त्रतोवा स्वानुभवतोपिवानोपपद्यत इति परेणान्वयः ॥ १९ ॥ साकारस्यस्थूलस्यप्रतिघातयोग्याकृतेश्चास्यजगतोलोकशास्त्रानुभूतिभिः सिद्धामहाप्रलयादयोऽनुक्रमेणाप्रलयांताविं

जगदृश्यमिदंवास्यतदेवोत्पन्नमेवनो ॥ कारणाभावतःपूर्वमेवातश्चित्तताकुत ॥ १३ ॥ अतश्चिद्व्योममात्रात्मपरमाकाशनामकम् ॥ स्फारवेदनमेवेदंकचत्यस्तिकुतोजगत् ॥ १४ ॥ यत्किंचित्परमाकाशइत्यकचकचायते ॥ चिदादर्शेनजातत्वान्नचित्तनोजगत्क्रिया ॥ १५ ॥ अहंत्वंजगदित्येषाप्रतिपत्तिर्नवास्तवी ॥ मिथ्यास्वप्नइवाभातिनूनमेऽशेषकारिणी ॥ १६ ॥ दृश्यस्यजगतोऽभावाद्यतोनास्त्येववासना ॥ अतस्तदात्मकंचित्तंकीदृशंक्कुतःकथम् ॥ १७ ॥ अप्रबुद्धैरवगतंचित्तदृश्यमिदंजगत् ॥ असद्वित्तनिराकारपूर्वमुत्पन्नमेवनो ॥ १८ ॥ नोत्पन्नंकारणाभावात्सर्गादावेवसर्वदा ॥ लोकशास्त्रानुभवतोनचदृश्यस्यवस्तुन ॥ १९ ॥ अनादित्वमजत्ववास्थैर्यंवाप्युपपद्यते ॥ साकारस्यास्यजगतःस्थूलस्यप्रतिघाकृते ॥ २० ॥ समस्तकारणाभावाल्लोकशास्त्रानुभूतिभि ॥ युज्यतेचनिराकर्तुंन महाप्रलयादय ॥ २१ ॥ शास्त्रानुभववेदापसिद्धांतैस्त्वमयोपिवा ॥ प्रलयाश्चनसंतीतिवक्त्युन्मत्तकएवच ॥ २२ ॥ लोकशास्त्राणिवेदाश्चप्रमाणंयस्यनोमते ॥ असन्मोत्पतिमूढःससज्जनंजनसंश्रयेत् ॥ २३ ॥ नचसप्रतिघस्यास्यदृश्यस्याप्रतिघक्वचित् ॥ कारणंभवितुंशक्तसाकारस्यनिराकृति ॥ २४ ॥ इत्यमालक्ष्यमाणंतत्तदेवसततंमुने ॥ नयनार्थक्रियाकारिभवेन्नेत्यमिदंजगत् ॥ २५ ॥

कारानिराकर्तुंयुज्यतेनिराकरणोपपादकसमस्तकारणाभावादित्यन्वयः ॥ २० ॥ २१ ॥ २२ ॥ लोकवेदप्रमाणादोषप्रपनेषितिर्बहिष्कार्यतैवस्यादित्याह ॥ लोकइति ॥ असम्यक्केवललोकमात्राश्रयेभ्यश्चार्वाकेभ्योप्यतिमूढः ॥ २३ ॥ तर्हि मुत्युक्तब्रह्मकारणतापक्षएवाभ्युपगम्यतामित्याह ॥ नचेति ॥ २४ ॥ निराकारब्रह्मकारणकत्वं वादिभ्यास्तुमुतसदनभ्युपगमात्प्रमराम्वादिभ्यश्चस्याद्विबादरायणव्यायेनजगतोब्रह्मतास्विकस्वभावतायामेवतात्पर्यमितिमागुक्तमेव ॥ इत्थंब्रह्मभावतयाआलक्ष्यमाणजगद्व्यवहारेमूलसत्ता मनमार्थक्रियासमर्थंभवत्येवेतिनलोकविरोध ॥ परमार्थतोब्रह्मीभूतमेवेतिनमृषादृशिपसिद्धरूपमप्येषविरोधोपीत्याशयेनाह ॥ इत्यमिति ॥ इत्यमप्रसिद्धरूपम् ॥ २५ ॥

इदानींसर्वसर्गश्रुतीनांनेतिनेतीत्यादितन्निराकरणश्रुतीनांचतात्पर्यंपिंडीकृत्योपसंहरति॥ तस्मादित्यादित्रिभिः ॥ पूर्वात्पूर्वंचतन्निरंशंचतस्येतिपूर्वात्पूर्वनिरंशतः॥षष्ठ्यंतास्त्वार्षावि
भक्तिकस्तसिः ॥ २६ ॥ सर्वरूपस्यपूर्णस्वभावस्यब्रह्मणः स्वतोविनैवशास्त्रंयदात्मकचननंतत्स्वकवपुःस्वरूपमेवसर्गप्रलयरूपधृक्जगदिवक्षणंयावदज्ञानकालज्ञातमितिसर्वस्रष्टि
श्रुतीनामर्थः ॥ तदेवस्वरूपक्षणांतरेतत्त्वमस्यादिशास्त्रमनुसृत्यबुद्धंसद्ब्रह्मैवनिर्गतद्वैतात्मनिस्वभावेआस्तेइतिनेतिनेतीत्यादिद्वैतनिषेधश्रुतेस्तात्पर्यार्थइतियोज्यम् ॥ २७॥२८ ॥
अतःशास्त्रीयबोधात् ॥ २९ ॥ एवंज्ञातसर्वंजगत्प्रशांतंसन्निरालंबनिराधारमजयथास्थितसद्ब्रह्मैव ॥ इदमज्ञदृष्टरूपंतुअत्यंतासत्त्वान्नानाअनानापिचन ॥ अतोयथास्थितंव्य

तस्मादिदंनिरंशस्यचिद्व्योम्नोप्रतिघाकृतेः॥ निराकृतेरनंतस्यपूर्वात्पूर्वनिरंशतः॥ २६ ॥ ब्रह्मणःसर्वरूपस्यशांतस्यात्तस्ययत्समम्॥स्व
तएवात्मकचनंसर्गप्रलयरूपधृक्॥ २७॥ स्वकंवपुश्चतेनैवज्ञातंजगदिवक्षणात् ॥ क्षणांतरानुबुद्धंसद्ब्रह्मैवास्तेनिरात्मनि ॥ २८ ॥ ब्रह्मै
वेदमतःसर्वंक्वचिन्नजगदादिधीः॥ क्वचित्तादिक्वचित्तादिक्द्वैतैक्यादिकल्पना ॥ २९ ॥ सर्वंनिरालंबमजंप्रशांतमनादिरित्यात्मयथा
स्थितंसत्॥ इदंतुनानेवनचाप्यनानायथास्थितंतिष्ठसुकाष्ठमौनम्॥ ३०॥ ॥इत्यार्षेवा०वा०दे०मो०नि०पू०चू० शिखिध्वजाव
बोधनंनामअष्टनवतितमःसर्गः॥ ९८॥ ॥छ॥ ॥शिखिध्वजउवाच॥ ॥नष्टोमोहःस्मृतिर्लब्धात्वत्प्रसादान्महामुने॥ स्थि
तोस्मिगतसंदेहोविश्रांतमतिरात्मवान् ॥ १ ॥ ज्ञातज्ञेयोमहामौनीतीर्णमायामहार्णवः ॥ शांतोहमनहंरूपोज्ञःस्थितोस्मिनिरामयः
॥ २ ॥ अहोनुसुचिरंकालंप्रभ्रांतोहंभवांबुधौ॥ स्थानमक्षयमक्षुब्धमधुनाप्राप्तवानहम् ॥ ३॥ एवंस्थितेमुनेनास्तिसाहंतादिजगत्त्रय
म्॥ मूर्खबुद्धमिदंभातियत्तद्ब्रह्मेतिवेद्म्यहम्॥ ४ ॥ ॥कुंभउवाच॥ ॥ जगदेवनयत्रास्तेतत्राहंत्वंविभासनम्॥ इत्थमेवरसंसारकक
तःकीदृशःकथम्॥ ५॥ यथास्थितव्यवहृतिर्मौनीशांतमनामुनिः॥ सौम्यार्णवोदरावर्त्तपरिस्पंदवदास्वभो॥६॥

वहरंस्त्वत्सुकाष्ठमौनोवागादिव्यापारशून्यस्तिष्ठेत्यर्थः ॥ ३० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०अष्टनवतितमःसर्गः ॥ ९८ ॥ ॥छ॥ ॥ प्र
बुद्धोपिनरेंद्रोत्रभूयःकुंभेनबोध्यते ॥ स्थूणानिखननन्यायाद्बोधोस्यसुदृढोस्त्विति ॥ १ ॥ एवंबोधितोराजाउपदेशजन्यज्ञानेनसर्वसंदेहादिबीजंस्वाज्ञानंनष्टमित्यभिलप्यदर्श
यति ॥ नष्टइत्यादिना ॥ विस्मृतात्मनःसाक्षात्कारएवस्मृतिरित्युच्यते ॥ १ ॥ २ ॥ ३ ॥ मूर्खबुद्धमिदंसाहंतादिजगत्त्रयंनास्ति ॥ ४ ॥ कुंभस्तदुक्तमेवानुमोदमानउवाच ॥ ज
गदेवेत्यादि ॥ अवरससारोगंधर्वनगरव्यवहारः ॥ किंदृत्तान्यधिकरणनिमित्तदृष्टांतप्रकारप्रतिक्षेपार्थानि ॥ ५ ॥ सौम्यार्णवोदरेप्रशांतोयआवर्त्तपरिस्पंदस्तद्वदास्वतिष्ठ ॥६ ॥

१ पूर्वादित्यस्यैकदेशान्वयेनित्यसापेक्षत्वात्समासः ॥ अथवापंचम्यलुकूछादसः २ पुंस्त्वमार्षम्

शब्दार्थात्मशब्दार्थस्वरूपंतुनभोमयशून्यमेव ॥ ७॥ चिच्चमत्कृतिनामकपरात्मरूपनभस्तदेवकचकचायतेस्वचाकचक्येनदीप्यते ॥ ८॥ यथानभसिअभ्रादूमुखीष्टगेंद्रनीलक टाहाकारसन्निवेशदृष्टेर्विवेकदृशाशांतीतथात्मसौरालोककचनमस्त्यर्थइत्यर्थः ॥ ९॥यथासमस्त्यहंकारात्मास्वयंभू संकल्पमात्रतथास्वयंव्यस्त्यहंकारोपि ॥ एतौसमष्टिव्य ष्टिबंधमोक्षावेत्येतौतदभिमानतत्परित्यागवेदनायत्तौ ॥१०॥ तदेवस्पष्टमाह ॥ अहमित्येवेति ॥ ११ ॥कोसौमोक्षस्तमाह ॥ यदिति ॥ सदापर्यायेणसतांबंधमोक्षसंकल्पा नांसाक्षिभूतस्वरूपवेदनतदेवशुद्धकेवलत्वंकैवल्यपदकथ्यतइत्यर्थः ॥ १२ ॥ सिद्धिर्मोक्ष ॥ आपद्बंधः ॥ सत्यमहमेवानहमितिशुद्धकैवल्यात्मबोधवान्भव ॥ १३ ॥ शु

ब्रह्मरूपमिदंशांतमित्यमस्तियथास्थितम्॥ अहंजगदिदंचेतिशब्दार्थात्मनभोमयम् ॥ ७ ॥ इदमाद्यंतरहितंसर्वंसंसारनामकम्॥ चिच्चमत्कृतिनामात्मनभ कचकचायते॥ ८ ॥ सन्निवेशदृशा शांतौतदस्तिकनकंयथा॥ जगदाद्यर्थसंशांतौब्रह्मेदंविद्यतेतथा॥ ९ ॥ यथा स्वयंभू संकल्प स्वयंनामतयैवहि॥ एतौस्ववेदनायत्तौबंधमोक्षौव्यवस्थितौ॥ १० ॥ अहमित्येवसंकल्पोबंधायातिविनाशिने ॥ नाहमित्येवसंकल्पोमोक्षायविमलात्मने॥ ११ ॥ यद्बंधमोक्षसंकल्पशब्दार्थानांसदासताम्॥ स्वरूपवेदनंतत्स्यात्केवलत्वंचकथ्यते॥ १२ ॥ अनहंवेदनंसिद्धिरहंवेदनमापद ॥ सोहमेवानहमितिशुद्धबोधोभवात्मवान्॥ १३॥ असंकल्पनमात्रेणसम्यग्ज्ञानोदयात्मना॥ संकल्प क्षीयतेसिद्धौस्वयमेवासदात्मक ॥ १४॥ अप्रतर्क्येस्वरूपेहिनास्तिकारणताशिवे॥ कारणाभावत कार्यपदार्थोपिनविद्यते॥१५॥ पदार्थाभावसंसिद्धौवेदननोपपद्यत॥ कारणाभावतोनित्यमहंभावस्यनोदय ॥१६॥अहंभावानुदयत संसार कस्यकीदृश॥संसाराभावत सर्वंपरमेवावशिष्यते॥ १७॥ यदिदंभासतेतत्सत्परमेवात्मनिस्थितम्॥ परंपरेपरापूर्णसममेवविजृंभते॥ १८॥ तेननिस्तिमितसर्वंशिलाकीर्णमिवाचलम्॥ चिद्रश्मिमयाकारमिवब्रह्मजगत्स्थितम्॥ १९ ॥

द्धबोधस्संकल्पक्षयात्सिध्यतीत्याह ॥ असंकल्पनेति ॥ १४ ॥ शुद्धस्यकारणत्वासंभवात्स्वपदार्थाभावस्तदभावनिश्चयात्संकल्पक्षय संकल्पनाशादहंभावक्षयस्तत्क्षया ज्जीवभावादिसंसारक्षयस्ततश्चब्रह्ममात्रावशेषइतिक्रममाह ॥ अप्रतर्क्यइतित्रिभि ॥१५॥१६ ॥१७ ॥ भागपियदिदंजगदाकारेणभासतेतत्परमार्थतोब्रह्मैवतथास्थिततस्वबो धेनघनापूर्णंकिंतुपरेस्वभावेस्थितपरमेवपरेणापूर्णसमस्वरूपमेवविजृंभतेप्रकटीभवति ॥ १८ ॥ तेनसर्वैकरूपत्वेनहेतुना ॥ वज्रशिलयाकीर्णनिबिडितवज्रशिलोदरमिवाचल दृढम् ॥ तथचपञ्चगत्स्थिततद्ब्रह्मचिद्रश्मिमयमर्त्यविधाकारसहस्रमिव ॥ १९ ॥

मुक्तौतर्हिकथंस्थितंतदाह ॥ पुरइति ॥ सदेवसददर्शनादसन्मयम् ॥ २० ॥ कथंतर्ह्यचलेजगत्स्पंदप्रत्ययस्तत्राह ॥ छायेति ॥ यथावज्रशिलोदरेप्रतिबिंबपुरुषोऽस्पंदमानए
वस्पदेतेतद्वत्स्पदि ॥ २१ ॥ सम्यग्ज्ञानप्रबोधस्योदयेबाह्यारूपालोकाआतरामनस्काराश्चनीरसानिःसाराइत्यागमप्रमाणजास्थिरभावनाभवतितामेवनिर्वाणहेतुत्वान्निर्वा
णविदु ॥ २२ ॥ जगच्छब्दार्थरहितयःपश्यतिसपश्यतीतियदुक्तनद्दृष्टांतैर्विवृणोति ॥ यथेति ॥ खगतप्रकाशोयथादीपाद्याकारसन्निवेशविनास्तियथावाकटकादिसन्निवे
शनिर्मुक्तहेमास्तितथाजगदप्यसन्निवेशब्रह्मास्तीतिसभावनीयमित्यर्थ ॥ २३ ॥ रूपालोकमनस्काराइत्येतदपिविवृणोति ॥ नीरसाइति ॥ ब्रह्मरूपिणोबोधाद्ब्रह्मभूतस्यजग
तोजगत्प्रत्ययकारिणोरूपालोकमनस्कारानीरसाःकोर्थ असदाभासाभवतीत्यर्थः ॥ २४ ॥ यथाबहून्यपितरंगादीनिसमुद्रेऊर्मिशब्दार्थरहितमंबुमात्रभवतितथाबहून्यपिव
स्तूनिज्ञानोदयेनिसर्गवद्ब्रह्मैकमेवभवतीत्यर्थ ॥ २५ ॥ सर्गशब्दार्थभेदबाधेसर्गपरब्रह्मणोरैक्यमेवेतिव्यतिहारेणद्रढयति ॥ सर्गएवेति ॥ हियस्मात्एषएवसर्वंखल्विदंब्रह्मेत्यादिश्रौत

पुरःसंकल्पकेनष्टेसंकल्पनगरस्ययत्॥ रूपंतद्विद्धिजगतःखादच्छंसदसन्मयम्॥ २०॥ छायापुरुषवत्स्पंदिशांतंनिर्मननंजगत्॥ जगच्छ
ब्दार्थरहितंयःपश्यतिसपश्यति॥ २१॥ रूपालोकमनस्कारानीरसागमभावना॥ सम्यग्ज्ञानावबोधस्यनिर्वाणंवैविदुर्बुधाः॥ २२॥ यथा
स्तिवातोनिःस्पंदोयथास्तिखगतोपिवा॥ यथाहेमासन्निवेशमस्तिब्रह्मजगत्तथा॥ २३॥ नीरसाअसदाभासाजगत्प्रत्ययकारिणः॥ रूपा
लोकमनस्काराःसंतीमेब्रह्मरूपिणः॥ २४॥ ऊर्मिशब्दार्थरहितंयादृगंबुबहून्यपि॥ सर्गशब्दार्थरहितंतादृग्ब्रह्मनिसर्गवत्॥ २५॥ सर्गएव
परंब्रह्मपरंब्रह्मैवसर्गदृक्॥ सर्गशब्दार्थरहितोवाक्यार्थस्त्वेषशाश्वतः॥ २६॥ ब्रह्मशब्दार्थसंपत्तौसर्गशब्दार्थधीःकृता॥ सर्गशब्दार्थसंसि
द्धौब्रह्मशब्दार्थधीःकृता॥ २७॥ समस्तशब्दशब्दार्थभावनाभावनोदयम्॥ शुद्धंतिष्ठतिचिद्व्योमब्रह्मशब्देनकथ्यते॥ २८॥ सम्यग्दर्शन
संसिद्धावुभयोरप्यवेदने॥ यच्छिष्टमजरंशांतंततोवाग्विनिवर्त्तते॥ २९॥ संशांतसर्वात्मकवेदनौघमस्तीदमेकात्मकस्वस्वरूपम्॥ यथा
स्थितंसर्वजगत्स्वरूपंपाषाणरूपंचपरंज्ञरूपम्॥ ३०॥ ॥ इ० वा० वा० दे० मो० नि० पू० चू० शिखिध्वजावबोधनंनामनवनवतितमः
सर्गः॥ ९९॥ ॥ ६॥ ॥ शिखिध्वजउवाच॥ ॥ एवंचेत्तन्ममहाबुद्धेयादृशंकारणंपरम्॥ कार्यंतादृशमेवेदंजगदित्येववेद्म्यहम्॥ १॥

वाक्यार्थः ॥ २६ ॥ बृंहणाद्ब्रह्मेतिब्रह्मशब्दस्यार्थसंपत्तावेवसर्गशब्दार्थधीर्लोकेकृता एवंसर्गोनामरूपयोर्विसर्गस्त्यागइतिसर्गशब्दार्थसंपत्तौत्रिविधपरिच्छेदनिवृत्तेर्बृंह
धात्वर्थानुसारिब्रह्मशब्दार्थताकृतेत्यनयोरेकार्थतैवेत्यर्थः ॥ २७ ॥ ब्रह्मशब्दस्यतर्ह्यशब्देवस्तुनिकथंप्रवृत्तिस्तत्राह ॥ समस्तेति ॥ अल्पस्यापिपरिच्छेदस्याभ्युपगमेबृंहधात्व
र्थसंकोचापत्तेरशब्दशब्देनेवतादृशमेवब्रह्मशब्देनकथ्यतइत्यर्थः ॥ २८ ॥ अथवाजगच्छब्दस्येवब्रह्मशब्दस्यापिवाच्यार्थवदनोत्तरलक्षणयाअखंडार्थसम्यग्दर्शनसंसिद्धौ
यच्छिष्टवस्तुततोब्रह्मशब्दादिवागपिनिवर्त्ततइत्यर्थः ॥ २९ ॥ हेराजन्इदंसर्वंजगत्स्वरूपंयथास्थितंयदस्तितदप्यतिदृढत्वाद्वज्रपाषाणरूपंपरब्रह्मस्वरूपमस्त्येव ॥ यदापीदंजग
दज्ञानेनसंशांतसर्वात्मकवेदनौघसंपन्नंतदापिएकात्मकस्वस्वरूपंसदस्त्येवेतिब्रह्मजगतोरेकैवसत्तेतिनकस्याप्यसत्त्वमित्यर्थः ॥ ३० ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि०
पू० नवनवतितमःसर्गः ॥ ९९ ॥ ॥ ६ ॥ ॥ वार्यतेब्रह्मवसत्त्वजगतोब्रह्मसत्तया ॥ जन्मादिविक्रियाऽस्पृष्टब्रह्मैवसदितीर्यते ॥ १ ॥ यदिब्रह्मजगतोरेकैवसत्तातर्हितयासत्त
याब्रह्मेवजगदपिपरमार्थसत्यंकिंनस्यात् मिथ्यावस्तुनोहिकारणदुर्निरूपं सत्यस्यतुसत्यंब्रह्मैवकारणसंभवतितुल्यत्वादितिराजाशंकते ॥ एवंचेदिति ॥ १ ॥

सत्यमायाशबलशुद्धस्य सत्तयैव समसत्ताकं जगत् कारणं भवेत् ॥ यत्तु निर्गुणं परसत्तानुपजीविअद्वयत्वात्पूर्वकालाभावेन पूर्ववृत्तित्वशून्यं निर्विकारं च तस्मात्कार्यं कुतो भवे यनतत्समसत्ताकस्यादित्यर्थः ॥ १ ॥ अस्तु तर्हि तमस्थितमायाशबलमेव जगत् कारणमिति चेत्तमाश्याह ॥ नेहेति ॥ इह निर्विशेषे मायाशबलकारणं तत्कार्यं जगच्च नास्ति ॥ मायाद स्वीयमायातच्छबलतत्कार्याणां सद्भावोपगमात् परमार्थदृष्ट्यातु सर्वमिदं जगच्छांतमजमेवेत्यर्थः ॥ तथा चोक्तं वार्तिके ॥ अविद्यास्तीत्यविद्यायामेवासित्वा प्रकल्प्यते ॥ ब्रह्मद स्यात्वविषयनकथंचनयुज्यत इति ॥ ३ ॥ अजातेन च सादृश्यमसत्किरित्याह ॥ जायत इति ॥ ४ ॥ कुतो न जायते तत्राह ॥ बीजमेवेति ॥ तत्र बीजाभावेऽपि तदेव बीजमिति नस्या त्त्वाह ॥ अप्रतर्क्यमिति ॥ ५ ॥ कुतस्तत्र बीजादिहेत्वभावः निषेधप्रमाणसिद्धत्वमुपेत्य देशकालाभावादित्याह ॥ देशेति ॥ तर्हि प्रमाणगोचरत्वमेव तत्र हेतूपादानकारणगोचरास्तु न वि रोधादित्याह ॥ अकर्त्रिति ॥ यस्य प्रमाणस्याकर्तृकर्माविकारकमात्र विरोधि ब्रह्म विषयस्तेन हेतूपादानकारणयोः प्रमा जायत इति कथं वक्तुं शक्यमित्यर्थः ॥ ६ ॥ ७ ॥ अत

॥ कुम्भ उवाच ॥ ॥ यन्न कारणतां तस्य कार्यं तदुपपद्यते ॥ यन्न कारणमेवादौ तस्मात्कार्यं कुतो भवेत् ॥ २ ॥ नेहास्ति कारणं किंचिन्न च कार्यं कदाचन ॥ विद्यमानमिदं सर्वं सर्वं शांतमजं जगत् ॥ ३ ॥ जायते कारणात्कार्यं यत्तत्कारणवद्भवेत् ॥ यन्न जायत एवेह तस्मिन्नु सदृ शता कुतः ॥ ४ ॥ बीजमेव न यस्यास्ति तत्कथं वद जायते ॥ अप्रतर्क्यमनाख्यं च यत्तस्यक्वैव बीजता ॥ ५ ॥ देशकालवशात्सर्वे हेतुमत प्रमाणगा ॥ अकर्तृब्रह्मविषय प्रमाकारणयोः कथम् ॥ ६ ॥ अकर्तृकर्मकरणं नास्ति कारणता शिवे ॥ तस्मात्तत्कारणं नास्ति जगच्छ ब्दाय वेदनम् ॥ ७ ॥ ब्रह्मैव त्वस्वरूपं सद्यत्स्थितं धारयस्व तत् ॥ असम्यग्दर्शिविषयं तदेव जगदाश्रितम् ॥ ८ ॥ चिन्मात्रमजरं शांतं यदेक त्वमीयते ॥ तेनैवायं जगद्भ्रमसंछांतं बुध्यते वपुः ॥ ९ ॥ अन्यथैव च यो भावश्चेतसः पृथिवीपते ॥ स एव नाशः कथितः स्वानुभूतश्च पंडि ते ॥ १० ॥ चित्तनाशस्वभावं तद्धि विनाशात्मकं नृप ॥ क्षणनाशो यतः कस्य चित्तशब्देन कथ्यते ॥ ११ ॥ असंकल्पनमात्रेण सम्यग्ज्ञानो दयात्मना ॥ संकल्पः क्षीयते सिद्धः स्वयमेवासदात्मकः ॥ १२ ॥ नाथैवांगीकृताभावं यदि विश्वं हि कथ्यते ॥ विद्यमानं कथं तस्यान्नुता तोऽस्मीति विरोति यः ॥ स्वैतिमेवागतं विद्धि जीवनं तस्य संभ्रमः ॥ १५ ॥ ॥ हस्तावुत्क्षिप्य यो ब्रूते शूद्रोऽस्मीति स्वशागिरा ॥ कथं स विप्रो भवति विप्रत्वं त्वस्य कीदृशम् ॥ १४ ॥ विदत्तधातुरत्युच्चैर्म

एवंस्वरूपशुद्धाकाशकल्पमनिर्विशेषवस्तु तदेवाह ॥ मतिमत्वदृशात् विधारयस्व नाप्यादृशम् ॥ असद्दृशा यत्तदेव जगद्रूपेणाश्रितमित्यर्थः ॥ ८ ॥ चिन्मात्रमयैव जगद्भ्रमभावेन सपद्यत अतस्त्वाकारमनो भास्या पश्चजमवाकारणेत्याह ॥ चिन्मात्रमिति द्वाभ्याम् ॥ ९ ॥ नाशो नामस्वरूपहानि ॥ १० ॥ तदेव स्फुटमाह ॥ चित्तमिति ॥ सत्क्षणमात्रमपि स्वरूप विस्मरणरूपो नाशः कल्पकालविस्तृतचित्तशब्दमाध्यत इत्यर्थः ॥ ११ ॥ तत्र चित्तमसंकल्पमपर्यवसितत्वज्ञानेनन नश्यतीत्याह ॥ असंकल्पनेति ॥ १२ ॥ अस्तु संकल्पनाशस्तथा पि विश्वकथं निवर्ततः इति चेन्मिथ्यात्वात्तं मतिविशतिपरमात्मन्यकीभवति न च स्वतंत्रतया वर्तितत इति विश्वमिति तन्मामभिवचनमभिप्रेत्याह ॥ नाथैवेति ॥ यत्त्वाधिष्ठानेनाबाधेन विश निर्विद्यमानं कथं स्यादित्यर्थः ॥ १३ ॥ तत्र लोकवत्प्रमाणयति ॥ हस्ताविति द्वाभ्याम् ॥ १४ ॥ सन्निपातेन विक्षता कुपिता धातवो यस्य न यथाविधः संमूर्च्छितस्तं भृत्युरिति यावत् ॥ १५ ॥

१ मतमितिपाठेऽपि मतिरित्येवार्थः ॥

२ पर्यवसितत्वज्ञानेनेत्यधिकमित्याद्यः

चित्तायत्तीत्यनुभवस्यतर्हिकागतिरितिचेद्भ्रांतित्वमेवेतिदृष्टांतैराह ॥ भ्रमाकृतीति ॥ १६ ॥ भ्रांतिपुंजरूपमेवतर्हिनतत्सदस्तुनेत्याह ॥ तदिति ॥ तस्याज्ञानव्यतिरिक्तस्वरूपाभा
वादित्यर्थ ॥ १७ ॥ १८ ॥ अज्ञानात्मनैवतर्हिचित्तादिसत्यमस्तुतत्राह ॥ अज्ञानेति ॥ ज्ञानबाध्यत्वान्नाज्ञानात्मनापिसत्यतासिद्ध्यतीत्यर्थः ॥ उक्तदृष्टांताभ्यामुपपादयति ॥
जलज्ञानमित्यादिना ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ यावत्सकलम् ॥ २३ ॥ अहंकारादिसंयुतकिंचिद्देहादि ॥ अप्यर्थेएवकारः ॥ तर्हिकिमस्तितदाह ॥ संविदिति

भ्रमाकृतियदस्तीहदृश्यतेऽलातचक्रवत् ॥ मृगतृष्णाद्विचंद्रादिबालवेतालकादिवत् ॥ १६ ॥ तत्कथंकिलनामस्यात्सत्यंभ्रमभरात्मक
म् ॥ अज्ञानभ्रांतिरेवांतश्चित्तमित्येवकथ्यते ॥ १७ ॥ अज्ञानमुच्यतेचित्तमसत्सदिवसंस्थितम् ॥ असंवेदनमज्ञानंज्ञानंसंवेदनंभवेत्
॥ १८ ॥ अज्ञानसत्वसंवित्तेर्ज्ञानात्संवेदनात्क्षयः ॥ जलज्ञानंमुधाभ्रांतिःसाधोमरुमरीचिषु ॥ १९ ॥ नैतज्जलमितिज्ञानात्संवित्तेःप्रवि
लीयते ॥ इदंचित्तमितिप्रौढंयदज्ञानमलंहृदि ॥ २० ॥ नास्तिचित्तमितिज्ञानात्तत्समूलंविनश्यति ॥ यथारज्ज्वांभुजंगत्वमज्ञानभ्रमसंभ
वम् ॥ २१ ॥ नसर्पोयमितिज्ञानाद्दृढरूढात्प्रणश्यति ॥ तथात्मनिमनोभूतमज्ञानभ्रमसंभवम् ॥ २२ ॥ चित्तंनास्तीतिविज्ञानाद्दृढरूढा
द्विनश्यति ॥ चित्तंमनोहमित्यंतर्यावदज्ञानसंभवम् ॥ २३ ॥ नचित्तमस्तिनोचैवमहंकारादिसंयुतम् ॥ किंचिदेवजगत्यस्मिन्संविदेकांत
निर्मला ॥ २४ ॥ तयासंकल्प्यचित्तादिकृतमासीद्विमूढया ॥ अद्यासंकल्पतःसर्वंपरित्यक्तंप्रबुद्धया ॥ २५ ॥ संकल्पेनयदायातित्वसंकल्पे
नगच्छति ॥ पवनेनमहाबाहोज्वालाजालमिवानले ॥ २६ ॥ आत्मतत्त्वैकघनयाततयाब्रह्मसत्तया ॥ जगत्सर्वमितिव्याप्तंसमुद्रइववा
रिणा ॥ २७ ॥ नाहमस्मिनचान्योस्तिनत्वंनैतेनचित्तकम् ॥ नेंद्रियाणिनचाकाशमात्मात्वेकोस्तिनिर्मलः ॥ २८ ॥ घटाद्याकाररूपेणस
एवायंविलोक्यते ॥ इदंचित्तमयंचाहमितिकैवकुकल्पना ॥ २९ ॥ नजायतेनम्रियतेकिंचिदस्मिञ्जगत्त्रये ॥ केवलोयंचिदुल्लासःसदस
द्भावनात्मना ॥ ३० ॥ सर्वमात्मापरंब्रह्मसत्प्रकटमाततम् ॥ द्वित्वैकत्वेनविद्येतेनभ्रांतिर्नचसंभ्रमः ॥ ३१ ॥ सर्वेंद्रियगणाकारेसन्ने
वासिसखेततः ॥ नदह्यसेमहाबुद्धेनचक्वचनलिप्यसे ॥ ३२ ॥ नतेविनश्यतिसखेनचकिंचिद्विवर्धते ॥ निर्मलाकाशरूपस्यकैवल्यानंत
रूपिणः ॥ ३३ ॥ इच्छानिच्छात्मिकेशक्तीयेतरापित्वमेवच ॥ नत्वंशुव्यतिरेकेणशशांकउपलभ्यते ॥ ३४ ॥

॥ २४ ॥ २५ ॥ २६ ॥ व्याप्तमस्तम् ॥ २७ ॥ कथमस्ततदाह ॥ नाहमिति ॥ २८ ॥ तर्हिजीवन्मुक्तैर्घटाद्याकारेणकिमवलोक्यतेतत्राह ॥ घटादीति ॥ २९ ॥ ३० ॥ स
भ्रमोमरणादिभयम् ॥ ३१ ॥ सर्वस्मिन्निंद्रियगणेतद्ग्राह्यवक्ष्याद्याकारेचसन्नेवसन्मात्रस्वरूपस्त्वमसि ॥ अतोदाहहेतुभिराध्यात्मिकादिभावैर्नदह्यसे ॥ ३२ ॥ ३३ ॥ इतरा
क्रियाशक्तिरपित्वमेव ॥ अतस्तवेष्टमनिष्टंकर्तव्यंचनास्तीत्यर्थद्योतनायचकारः ॥ अंशवःकलास्तद्व्यतिरेकेण ॥ ३४ ॥

मिजिरजर्पर्दजन्मरद्धिविपरिणामानिरस्यंते॥ सैदकरूपमित्यननाम्येविकारा ॥ सकृद्विलसत्सकृद्भातम् ॥ कष्टाप्रमाणेमस्वस्वरूपपरिचयस्तवाभ्यालीलायस्यतथाविधसत्
सम्प्राप्तयाउविमम ॥ द्वाघसर्वम्प्यवहारेभ्य:प्राक्सिद्धमद्यसुतवेवास्मतस्मित्यर्थ ॥ ३५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू शततम सर्ग ॥ १० ॥ ॥ ५ ॥
ज्ञानदार्ढ्यनराद्योऽप्रवर्ण्यतेऽत्रतकृत्यता ॥ जीवन्मुक्तावषित्तत्वस्थितिस्तत्स्वस्यचेर्यते ॥ १ ॥ परिणत पूर्वभावविहायतद्रावमाम ॥ १ ॥ शिलातलादुत्कीर्णप्रतिमाविरिव
॥ २ ॥ ३ ॥ निर्विकल्पानांयोगिनांशोभनतल्पभूतेनिरतिशयानंदपदे ॥ ४ ॥ ५ ॥ महाविभवोनिरतिशयानंदलक्षणाभूमिका ॥ सर्वस्यहैरण्यगर्भानंदानंस्यविषयानंदजा

अजमजरमनाद्यजस्वभावसकृदमलंविलसत्सदेकरूपम् ॥ विगलितकलनकलास्यलीलसकृदितमाद्यमजतदात्मतत्त्वम् ॥ ३५ ॥
इत्यार्षेवा०वा०द०मो०नि०पू०चू०शिखिध्वजपरमाववोधननामशततम सर्ग ॥१००॥ ॥५॥ ॥श्रीवसिष्ठउवाच॥ ॥इतिकु
भवचोराजाश्रावयन्नदकृत्रिमम् ॥स्वयमात्मपदेतस्मिन्क्षणपरिणतोभवत्॥१॥बभूवामीलितमनोलोचन शांतवाङ्मुनि ॥शिलात
लादिवोत्कीर्णोनिस्पंदावयवाकृति ॥२॥ ततोमुहूर्तमात्रेणप्रबुद्धस्फुरितेक्षणम् ॥तमुवाचमहाबाहोचूडालाकुंभरूपिणी॥३॥ ॥कुंभ
उवाच॥ ॥कच्चिदस्मिन्पदेस्फारेशुद्धेविततनिर्मले॥सुतल्पेनिर्विकल्पानांसुखविश्रांतवानसि॥४॥कच्चिदत प्रबुद्धोसिकच्चिद्भ्रांतिस्त्व
योज्झिता॥कच्चिज्ज्ञेयपरिज्ञातदृष्टंदृष्टव्यमेववा॥५॥ ॥शिखिध्वजउवाच॥ ॥भगवंस्त्वत्प्रसादेनमहाविभवभूमिका॥महतीपद
वीदृष्टासर्वस्योर्ध्वंस्थितामया॥६॥सतांविदितवेद्यानामहोयतमहात्मनाम्॥अपूर्वैकामृतमय सर्ग सारफलप्रद ॥७॥जन्मनापिम
यालब्धंयन्नामनमहामृतम्॥तदद्यत्वत्समासंगात्तेनैवासादितंस्वयम्॥८॥अनंतमाद्यममृतचेतल्कमललोचन॥कथनासादितमभूत्पू
र्वमात्मपदमया॥९॥ ॥कुंभउवाच॥ ॥मनस्युपशमयातेत्यक्ताभोगैषणास्थिते॥कषायपाकेनिर्वृत्तेसर्वेंद्रियगणस्यच॥१०॥यांतिचे
तसिविश्रांतिविमलादेशिकोक्तय ॥यथासितांशुकेशुद्धेबिंदव कुंकुमांभस ॥११॥कषायाणामनंतानांसंततानांशरीरके ॥स्ववास
नास्वरूपाणामद्यपाकस्तवोदित॥१२॥देहान्मलानिसर्वाणिकालेनकमलेक्षण॥साधोर्वृक्षात्फलानीवपाकेनविगलंत्यध ॥१३॥

तस्योर्ध्वमुत्कर्षकाष्ठायांस्थिता ॥ ६ ॥ सतेतिद्वयं ॥ अपूर्वमनादौससारेकदाप्यननुभूतत्वेकामृतनिरतिशयानंदत्वमधुर अतएवसारफलप्रद ॥ ७ ॥ सामान्योक्तंविशिष्यवि
वृणोति ॥ जन्मनेति ॥ तेनमहामृतस्वरूपभूतेनैवमयाअनायासेनाभ्यस्तकथंतवपत्समासंगात्स्वयमेवानायासेनासादितम् ॥ ८ ॥ ९ ॥ पूर्वचित्तकषायपाकाभावान्नासादि
तमिदानींनुनपमातत्परिपाकादासादितमित्याशयेनकुंभउत्तरमाह ॥ मनसीत्यादिना ॥ सर्वेंद्रियगणस्यचाम्मनसश्चभोगलक्षणकषायाणांपाकेनिर्वृत्तेसति ॥ यथावस्तुति ॥
कषायपक्ति कर्मभिज्ञानतुपरमाश्रुति ॥ कषायेकर्मभि पक्वेततोज्ञानमुत्पद्यतइति ॥ १ ॥ ११ ॥ ॥ १२ ॥ देहाल्लिंगदेहात् ॥ मलानिरागादिकषाया पापानिच ॥ १३ ॥

बिसेमृणालरूपेधानुष्कपरिकल्पितेलक्ष्ये ॥ १४ ॥ १५ ॥ ज्ञानार्थासकथामुपदेशतात्पर्येणाव धारितवानसीतिशेषः ॥ उपदिष्टार्थानांत्वदिधारणात्सोपदेश ॥ प्रबुद्धवांस्तत्फ लसाक्षात्कारज्ञानवान्जातोसीत्यर्थ ॥ १६ ॥ १७ ॥ तवाज्ञानमद्यमध्याह्नकालेक्षीणमितिमयाज्ञातमित्याह ॥ यावदिति ॥ १८ ॥ इदानीमद्यतनदिनस्योत्तरभागे ॥ त्व दयात्सपरित्यक्तेचेतसिक्षयमागतेसति ॥ १९ ॥ अचित्ततयानिःस्वरूपताबुद्ध्या ॥ २० ॥ दृष्टेःपरमात्माभिव्यक्ते. ॥ २१ ॥ आलम्ब्यन्योन्याध्यासात्सदसत्तामयत्वमेवहि

वासनात्मसुयातेपुमलेपुविमलंसखे ॥ यद्वक्तिगुरुरंतस्तद्विशतीषुर्यथाबिसे ॥ १४ ॥ कषायपाकेसंपन्नेत्वंमयाद्यविबोधितः ॥ तेनाद्यै वतवाज्ञानक्षयोजातोमहामते ॥ १५ ॥ अद्यपक्वकषायस्त्वमद्यैवज्ञानसंकथाम् ॥ अद्येहसोपदेशस्त्वमद्यैवासिप्रबुद्धवान् ॥ १६ ॥ शुभाशुभानांसर्वेषांकर्मणामद्यसंक्षयः ॥ सत्संगव्यपदेशेनतवनिष्पत्तिमागतः ॥ १७ ॥ यावदस्यदिनस्यैषपूर्वभागोमहीपते ॥ ताव च्चेतोहंममेतितवाज्ञानंबभूवह ॥ १८ ॥ इदानींमद्वचोबोधाच्चेतसिक्षयमागते ॥ त्वदयात्संपरित्यक्तेसंप्रबुद्धोसिभूपते ॥ १९ ॥ त्वदिया वन्मनःसत्तातावदज्ञानसंस्थितिः ॥ चित्तंचित्ततयात्यक्तेज्ञानस्याभ्युदयोभवेत् ॥ २० ॥ द्वित्वैकत्वदृशौचित्तंतदेवाज्ञानमुच्यते ॥ एत योर्विलयोदृष्टस्तज्ज्ञानंसापरागतिः ॥ २१ ॥ प्रबुद्धोसिविमुक्तोसित्यक्तंचित्तंत्वयानृप ॥ सदसत्तामयत्वंहित्वयात्यक्तमसत्पदम् ॥ २२ ॥ वीतशोकोनिरायासोनिस्संगोनन्यआत्मवान् ॥ महोदयोमुनिर्मौनीस्वरूपेतिष्ठनिर्मले ॥ २३ ॥ ॥ शिखिध्वजउवाच ॥ ॥ एवंहिभग वन्जंतोर्मूर्खस्यैवास्तिचित्तभूः ॥ प्रबुद्धस्यनतज्ज्ञस्यचित्तंनामकिलप्रभो ॥ २४ ॥ जीवन्मुक्तास्तदेतेहिविहरंतिकथंवद ॥ अविद्यमान मनसोयुष्मदाद्यास्तथानराः ॥ २५ ॥ इतिमेकथयाशेषमन्यैःस्ववचनांशुभिः ॥ हार्दंतमोमेनिपुणमेवंप्रायैःप्रमार्जय ॥ २६ ॥ ॥ कुंभ उवाच ॥ ॥ यथावदसितत्त्वज्ञतत्तथैवहिनान्यथा ॥ चित्तंहिजीवन्मुक्तानांनास्त्यंकुरइवाश्मनाम् ॥ २७ ॥ पुनर्जननयोग्यायावास नाघनवासना ॥ साप्रोक्ताचित्तशब्देननसातज्ज्ञस्यविद्यते ॥ २८ ॥ ययावासनयातज्ज्ञाविहरंतीहकर्मसु ॥ तांत्वंसत्वाभिधांविद्धिपुन र्जननवर्जिताम् ॥ २९ ॥ जीवन्मुक्तामहात्मानःसत्वस्थाःसंयतेंद्रियाः ॥ विहरंतिगतासंगंनचित्तस्थाःकदाचन ॥ ३० ॥

चित्तनामतदेवअसतोजगत पदकल्पनास्थानम ॥ २२ ॥ २३ ॥ चित्तेत्यक्तेजीवन्मुक्तानांकेनातःकरणेनव्यवहारसिद्धिरितिप्रष्टुराजापीठिकांरचयति ॥ एवंहीति ॥ यदीत्य र्थेकिलशब्द ॥ २४ ॥ प्रष्टव्याशदर्शयति ॥ जीवन्मुक्ताइति ॥ तत्तर्हि ॥ २५ ॥ अन्यैर्दुर्वचमितिशेषः ॥ अन्यैःप्रसिद्धसूर्याद्यंशुविलक्षणै.स्ववचनांशुभिःप्रसिद्धतमोविल क्षणहार्दतम प्रमार्जयेतिवा ॥ २६ ॥ २७ ॥ २८ ॥ यथाभर्जितावितुन्नाश्चलाजानव्रीह्यादिशब्दवाच्यानाप्यंकुरादिजननक्षमास्तद्वत्तत्त्वज्ञानभर्जितनिरावरणसत्वंमनःश ब्दवाच्यनापिपुनर्जन्मसमर्थमित्यर्थः ॥ २९ ॥ जीवन्मुक्तव्यवहाराभासेतदेवकरणाभासइत्याह ॥ जीवन्मुक्ताइति ॥ ३० ॥

१ वितुषाइत्यपिपाठ.

॥३१॥३२॥ तथापिसत्ववतोदेवपावद्भावव्यवहारं सेत्स्यतीत्याशयेनाह ॥ सत्ववानसीति ॥ ३३॥ ३४ ॥ त्वयाप्राक्किंकीर्तितोयोमहात्याग ससर्वरूपचित्तयत्समुज्झितमयमे सेत्यर्थः ॥ ३५ ॥ चित्तत्यागेतपोदानादिसर्वकर्माण्यन्तर्भूतानितत्फलेषुचित्तस्वर्गापवर्गावितत्फलान्यन्तर्भूतानीत्याशयेनाह ॥ स्वर्गेति ॥ प्रबुद्धामेधाउपदिष्टार्थधारणायस्या स्तथाविधयाअतएवपरमबोधवत्याधियाकृतश्चित्तत्यागएवस्वर्गापवर्गवित्तादिरित्यर्थ ॥ ३६ ॥ तपआदिफलेतुनज्ञानफलमन्तर्भवतीत्याशयेनाह ॥ तपोनामेति ॥ यथतो मनस्तामरूपसमताया सकाशात्तामतपज्ञानफलंमोक्षसुखक्षयातिशयनिर्मुक्तमित्यर्थः ॥ ततआगतत्स्यर्थैमयद्रूपेतिमयट् ॥ ३७ ॥ नससत्येअनित्ये चसत्यस्यशाश्वतस्य चातर्भावसंभावनापीत्याशयेनाह ॥ तदिति॥ तज्ज्ञानफलसन्सत्यम यसतीतियस्तुशाश्वतच तत्स्वर्गादिकिंचिन्नतुसर्व्यंगुरुष ॥ भावाभावैरा विर्भावतिरोभावैरुपारूढमाक्रा

मृदंचित्तचित्तमाद्धुः प्रबुद्धसत्वमुच्यते ॥ अप्रबुद्धाहिचित्तस्या सत्वस्यासुमहाधिय ॥ ३१ ॥ भूय प्रजायतेचित्तसत्वभूयोनजायते ॥ अप्रबुद्धस्यबंधोस्तिनप्रबुद्धस्यभूपते ॥ ३२ ॥ सत्ववानसिसजातोमहात्यागीस्थितोभवान् ॥ अशेषेणत्वयाचित्तत्यक्तमघेतिविद्म्यहम् ॥ ३३ ॥ समस्तवासनोन्मुक्तोराजन्नयैवराजसे ॥ आकाशसाम्यमायातमन्येतवमुनेमन ॥ ३४ ॥ शमप्राप्तोसिपरमसिद्ध समसम स्थिति ॥ अयंहिसमहात्याग सर्वंयत्तत्समुज्झितम् ॥ ३५ ॥ स्वर्गापवर्गवित्तादितपोदानफलान्यपि ॥ प्रबुद्धमेधयासाधोधियापरम बोधया ॥ ३६ ॥ तपोनामकियन्मात्रद्धु खक्षयकरंभवेत् ॥ क्षयातिशयनिर्मुक्तयत्सुखसमतामयम् ॥ ३७ ॥ तत्सत्तद्वस्तुतत्किंचिन्नतु स्वर्गादिभंगुरम् ॥ भावाभावैरुपारूढस्थिताधिगतवेदनम् ॥ ३८ ॥ स्वर्गोनामकिमानंद सोपिसंदेहसंस्थित ॥ अप्राप्तस्वात्मसंसिद्धं क्रियाकांड शुभोभवेत् ॥ ३९ ॥ येननासादितहेमरीर्तिकिंसपरित्यजेत् ॥ चूडालादिसमामगाद्ध्वेज्ञात्वसुखेनत ॥ ४० ॥ तत्किमत्र मनर्थेस्मिन्निमग्नस्त्वतपोमये ॥ आश्रमादिविकल्पांशसाध्यस्याधकुकर्मण ॥ ४१ ॥

तपूर्वोत्तरकालयोरदृष्टस्थितवर्तमानमेवाधिगतवेदनमात्मदर्शनसत्त्वमवित्यर्थः ॥ ३८ ॥ दुःखबहुप्रयासलभ्यश्च स्वर्गादितुच्छसुखमज्ञानामेवबहुमननतस्त्वविद्वामित्याशयेना ह ॥ स्वर्गइति ॥ स्वर्गोनामेतिकिमानंदस्तुच्छसुखम् ॥ किंरूपेइतिसमास ॥ अधर्मनीयधर्मकीर्तनाद्यल्पापराधसहस्रनाश्यत्वात्संदेहसंस्थित ॥ ३९ ॥ ज्ञानदौर्लभ्यादज्ञानो युक्तएवतुच्छस्वर्गादिपरिग्रहइत्याशयेनाह ॥ येनेति ॥ रीतिपित्तलम् ॥ नवतुज्ञानमात्रदुर्लभमभूत्तथापित्वयैवतपःक्लेशोनिमग्नइत्याह ॥ चूडालेति ॥ ४० ॥ आश्रमोवानप्र स्थाश्रम ॥ आदिपदात्तथाव्ययपत्नतुचितकर्माधिकारनिर्वाहकविशेषणामराधिप ॥ तदभिमानतत्साधनाचिन्तादिविकल्पविक्षेपाशसहस्रसाध्यस्यमधकत्वात्फलतोपिकुत्सि तस्यकर्मण तवधिनिष्कृष्टपादात्प्रमाणादिनपर्क्लेशामधुरेअनर्थेत्वमत्रपर्यंतकिमर्थंनिमग्न ॥ ४१ ॥

स्वर्गादिमहासुखहेतोस्तपस कथमनर्थत्वतत्राह ॥ आद्यंताविति ॥ भोसुमतेयतोस्यतपसआदिभागआचरणावस्थाअंतभाग फलक्षयावस्थाचदु खरूपावेव मध्येस्वर्गादिभो
गावस्थायामेवसुखस्मकिल ॥ तर्हिकिमयाकृतंतपोव्यर्थमेवनेत्याह ॥ यतइति ॥ यतस्तपसैवतेचित्तकषायपाकात्संप्रतितत्त्वबोधसमयोजातः अतोहेतो सर्वैतपोरूपावि
कल्पाशायस्मिन्नविकल्पेतत्त्वज्ञानेपरिणमतितत्फलेनैवफलवतोपिचभवति ॥ ४२ ॥ तत्रज्ञानेबद्धपद.स्थिरोभव ॥ विविदिषंतियज्ञेनदानेनतपसेत्यादिश्रुतेस्तत्फलेनैवतेतपस.
साफल्यमितिभाव ॥ज्ञानफलचिद्व्योमलाभेनसर्वमेवलब्धम् ॥ सर्वस्यजगतस्ततएवोद्भवस्थितिलयश्रुतेरित्याशयेनाह ॥ चिद्व्योम्नइति ॥ ४३ ॥ यद्यपिकार्यमिष्टमकार्यमनिष्टं
चसर्वमपिब्रह्मसमुद्रंविदवएवतथापितुच्छत्वात्तत्सर्वंवध्यनिष्फलमेवातस्तत्त्यक्त्वापूर्णसमुद्रस्थानीयनिर्विशेषमेवसमाश्रयेत्याह ॥ इदमिति ॥ ४४ ॥ परमप्रेमास्पदत्वान्निरति
शयानंदरूपस्यस्वस्यइष्टांतरप्रार्थनापेक्षयातादृशस्वलाभप्रार्थनमेववरमित्याशयेनाह ॥ इष्टमिति ॥ यथाऽलब्धदयितयास्त्रियालब्धव्यदयितप्रतिमेइष्टप्रार्थयस्वेत्यन्यत्प्रार्थ्यं

आद्यंतावस्यसुमतेमध्यएवसुखंस्मभोः॥यतस्तेसमयोजातोयस्मिन्परिणमंतिच ॥४२॥ तपोरूपाविकल्पांशास्तत्रबद्धपदोभव ॥ चि
द्व्योम्नोनभसोत्यच्छात्सर्वेभावाःसमुत्थिताः॥ ४३ ॥ तथैवपरिदृश्यंतेतत्रैवविलयंगताः॥ इदंकार्यमिदंनेतिसंकल्पाब्रह्मविदवः॥ ४४ ॥
वंध्यंशिखिध्वजत्यक्त्वापूर्णमेवसमाश्रय ॥ इष्टंमेप्रार्थयस्वेतियथैवप्रार्थ्यतेसखे ॥ ४५ ॥ स्त्रियातथैवसकथंदयितःप्रार्थ्यतेस्वयम् ॥
संकल्परचितानेतान्भावानापदभासुरान् ॥ ४६ ॥ गृह्णंतिनमहात्मानःप्राज्ञाजलरवीनिव ॥ स्वर्गमोक्षादिफलदंयत्किंचित्सर्वमेवतत्
॥ ४७॥ त्यक्त्वासमसमाभासोयोस्यसावेववैभव ॥ सत्त्वंसत्त्वेननाशेननास्यंहिविगतस्पृहः ॥ ४८ ॥ पदार्थौघमिमंगृह्णंस्तिष्ठास्पंदित
चित्तभूः॥ अपरिस्पंदचित्तस्यसंसृतिर्नेहधावति ॥ ४९ ॥ पौरुषप्रभवासाधोविपत्तिर्हिमतौयथा ॥ यानियानीहदुःखानिप्रस्फुरंतिजग
त्त्रये ॥ ५० ॥ चेतश्चापलजान्येवतानितानिमहीपते ॥ स्थिरंशांतंगतस्पंदंयस्यचित्तमचापलम् ॥ सदैवसमहानंदसाम्राज्यस्यसभाज
नम् ॥ ५१ ॥ अथचेतसितत्त्वज्ञस्पंदास्पंदौत्वमेकताम् ॥ नीत्वातिष्ठयथाकाममैक्यमागत्यशाश्वतम् ॥ ५२ ॥

नेतथैवस्वयदयितएवकथनप्रार्थ्यते तस्मिन्स्वाधीनतयालब्धेतदधीनलब्धव्यांतराणास्वतएवलाभादितिभावः ॥ ४५ ॥ अंगीकृत्यात्मातिरिक्तेष्टानापुरुषार्थत्वलब्धत्वादेवाप्रा
र्थनीयत्वमुक्तम ॥ वस्तुतस्तुतेषांतत्त्वज्ञदृशातुच्छत्वादग्राह्यत्वमेवेत्याह ॥ संकल्पेति ॥ आपदइवअभासुरानरमणीयान् ॥ ४६ ॥ जलरवीन्रविप्रतिबिंबानिव ॥ ज्ञानलाभान
तरस्वर्गादिसाधनानीवापवर्गसाधनान्यपिहेयान्येवेत्याशयेनाह ॥ स्वर्गेति ॥ ४७ ॥ सर्वपदार्थेषुसदृशःसत्वेनैवग्राह्य.असदृशस्तुनित्यनष्टत्वेनैवग्राह्यश्चित्तचाचल्यंविनेत्याह ॥
सत्वमिति॥ ४८ ॥ अस्पंदितचित्तभूरित्युक्तेःप्रयोजनमाह ॥ अपरिस्पंदेति ॥ नधावतिनप्राप्नोति ॥ यथास्वाभाविकप्रवृत्तिलक्षणपुरुषापराधप्रभवाविपत्तिर्मतौविवेकज्ञानो
दयेसतिनप्राप्नोतितद्वदित्यर्थः ॥ ४९ ॥ ५० ॥ सम्यग्भग्नावरणतयाराजतइतिसम्राट्साक्षात्कृतआत्मातद्भावस्यभाजनमित्यर्थः ॥ ५१ ॥ स्पंदास्पंदौतत्साक्षिमात्रतादर्श
नेनैकतांनीत्वासाक्षिणमपिब्रह्मात्मैक्यमागत्यप्राप्यभूमानंदभावेनयथाकामपूर्णकामतयातिष्ठेत्यर्थः ॥ ५२ ॥

शिखिध्वजस्तत्तदुक्त्या स्पंदास्पंदयोरैक्यानुपपत्तिं कथमिति राजा पृच्छति ॥ कथमिति ॥ ५३ ॥ तयोः स्वरूपेणैक्यं न विरोधस्याधिष्ठानमात्रचिन्मात्ररूपेणैक्यं तदाह ॥ एकमिति ॥ ५४ ॥ सत्यज्ञानमनन्तं ब्रह्मेत्यादिश्रुतिभिः परिलक्षितम् ॥ आगत्यामृषे ॥ ५५ ॥ स्पंदास्पंदयोरैक्यमुपपादयति ॥ चिदेवेति ॥ सर्गोऽयमस्वरूपं चित्स्पंद एव ॥ अविद्याविरूपपरिस्पंदः परमार्थतः ॥ मृषार्थे समशब्दो मिथ्यात्वद्योतनार्थ ॥ नामपरिस्पंद इत्यर्थ ॥ ५६ ॥ अचित्स्पंद इति ॥ सत सत्त्वाद्याख्यालिङ्गचित्स्पंदोऽस्पंदश्चैकरूपतया भाति तत्र स भेदमात्ररूपमेव शिवं परिशिष्यत इत्यर्थ ॥ ५७ ॥ सर्गस्तदा कस्य कथं विलीयत इत्यत आह ॥ चिदिति ॥ सत सत्त्वाद्याख्यालिङ्गचित्

शिखिध्वजउवाच॥ ॥ कथमैक्यविरोधात स्पंदास्पंदाविमावुभौ ॥ सर्वसंशयविच्छेदकारिन्नेतद्वदाशुमे॥५३॥ ॥कुंभउवाच॥ एकं वस्तु जगत्सर्वं चिन्मात्रं वारिवांबुधि ॥ तदेव स्पंदते धीभिः शुद्धवारीव वीचिभि ॥५४॥ ब्रह्मचिन्मात्रममलसत्वमित्यादिनामकम्॥ यद्भाततदिदं मूढा पश्यंत्यगजगत्तया॥५५॥ चित्स्पंद एव सर्वस्वसर्गेतस्माद्विसस्तृति ॥ परिस्पंदोहि विध्यादिशब्दस्पंदसमपरम्॥५६॥ चित सएव चलत्स्पंदस्तथास्पंदश्च भाविता ॥ एकरूपतयानामतत्रेदममलं शिवम् ॥५७॥ सर्गश्चित्स्पंदमात्रात्मा सम्यग्दृष्टौ विलीयते॥ उदेत्यसम्यग्दर्शनाद्रज्ज्वां सर्पभ्रमो यथा॥५८॥ सस्पंदाचित्तदभिधानि स्पंदात्वियमातता॥तुर्यातीतपदारूढा वाचाव कुतन पायते॥५९॥ शास्त्रसज्जनसंपर्कसतताभ्यासयोगत ॥ कालेनामलतां याते चेतसींदाविबोदिता॥६०॥ एतत्केवलमाभातं स्वानुभूतिभिराततम्॥ एवमतस्त्वानुभूतं पुंस्य यसरूपमात्मना॥६१॥ प्राप्तासि सारस्वमनादिमध्यमत्रैव तिष्ठस्वपदे निविष्टः ॥ नोरूपनिर्भेदमहाचिदात्मा जातोसि मा धोगवलुर्वातशोक ॥६२॥ ॥इत्यार्षे वा॰ वा॰ दे॰ मोक्षोपायेषु॰ निर्वाणप्रकरणे पू॰ चूडालाख्याने शिखिध्वजबोधननामैकाधिकशततम सर्ग ॥१०१॥ ॥५॥ ॥५॥

सर्गस्तत्कथं भवतीत्यत आह ॥ सर्ग इति ॥ यत स असम्यग्दर्शनाभासाउदेति ॥ ५८ ॥ तदभिधानसंगाभिधा ॥ निस्पंदा तु तुर्यातीतपदारूढा ॥ ५९ ॥ कदा तयोर्विभागो भवतीति तदाह ॥ शास्त्रेति ॥ यथा वस्तुनि तिमिरदोषक्षयेणामलतायां नेत्रे नित्यसिद्धैव चंद्रकला उदितावत् ॥ ६० ॥ यदि वाचावक्तुमपार्यते तर्हि कथं त्वया मादृशो प्रकथ्यते तत्राह ॥ एतदिति ॥ स्वमनुभूतं फलतया विभेदं स्वानुभूतिभिर्वक्तव्यं कथ्यते लाक्षणिकस्य त्वय ॥ ६१ ॥ त्वमपि स्वानुभूत्या प्राप्तो भवेर्यथा तमद्वयसारं स्थैर्यमासं कुर्वित्याह ॥ प्राप्तोसीति ॥ अदृक्वहाद्विरूपाणाम भावाद्वसर्वं दृढं निर्भेदं अतएव महाचिदात्मा जातस्त्वबोधाद्यानुभूतोसि तत एव वीतशोकस्तथाको मोहः क शोक एकत्वमनुपश्यत इति श्रुतेरिति भाव ॥ ६२ ॥ ॥ इति श्रीवासिष्ठ॰ तात्पर्यप्रकाशे निर्वाण पू॰ एकोत्तरशततम सर्ग ॥ १०१ ॥ ॥५॥ ॥५॥ ॥५॥

आमन्त्र्यांतर्हितेकुंभेविस्मितस्यमहीपतेः ॥ चिरंविमृश्यविश्रांतिःसमाधाविहवर्ण्यते ॥ १ ॥ यथेदंसर्वमुत्थितमित्यध्यारोपेणयथाचप्रविलीयतइत्यपवादेनचसर्वंपूर्णंब्रह्मतत्त्वं
तेमयाकथितम् ॥ १ ॥ गुरुशास्त्राभ्याश्रुत्वास्वीयविचारेणमत्वाचसम्यग्बुद्धासाक्षाद्दृष्टेआवरणभंगात्स्पष्टेपरेपदेकदाचित्समाधिप्राधान्येनकदाचिद्व्यवहारेणचयथेच्छसित
थातिष्ठ ॥ २ ॥ स्वर्गमिद्रसभाम् ॥ ३ ॥ ४ ॥ एषामदुपदिष्टैव ॥ ५ ॥ सप्रणामप्रतिवचनात्पूर्वंमतर्धानम् ॥ साध्वीभिर्भर्तृकृतनमस्कारस्यायाप्तत्वात् ॥ ६ ॥ स्वमादिप्रतिभा
नगतंधनादिवस्तु ॥ अतेजागरे ॥ ७ ॥ चित्रमाश्चर्यम् ॥ ८ ॥ चिरोदयसदाप्रभातशाश्वताभ्युदयवाब्रह्म ॥ ९ ॥ कालयुक्त्याभाग्योदयसमययोगेन ॥१०॥११॥१२॥ इयंसा

कुंभउवाच॥ ॥इतितेकथितंसर्वंशिखिध्वजमहीपते॥ यथेदमुत्थितंसर्वंयथाचप्रविलीयते॥ १॥ एतच्छ्रुत्वाचबुद्धाचमत्त्वाचमुनिना
यक॥ यथेच्छसितथातिष्ठदृष्टेस्पष्टेपरेपदे ॥ २ ॥ स्वर्गंगच्छाम्यहंपर्वकालेस्मिन्नारदोमुनिः ॥ ब्रह्मलोकात्समायातोभवत्यमरसंसदि
॥ ३ ॥ नमांपश्यतिचेत्तत्रतत्कोपमुपगच्छति॥ नोद्वेजनीयाभव्येनगुरवोहिकदाचन॥ ४ ॥ त्यक्तसंकल्पलेखेननकिंचिदभिवांछता ॥
त्वयासदैववस्तव्यंदृष्टिरेषैवपावनी॥ ५॥ ॥श्रीवसिष्ठउवाच॥ ॥इतियावत्प्रतिवचःपुष्पहस्तःशिखिध्वजः॥ प्रणामायददात्येषताव
दंतर्धिमाययौ॥ ६॥ प्रतिभानगतंवस्तुयथैवांतेनदृश्यते॥ नदृष्टवांस्तथाकुंभमग्रेराजाशिखिध्वजः॥ ७॥ गतेकुंभेमहीपालःपरंविस्म
यमाययौ॥ तमेवाचिंतयंश्चित्रंचित्रार्पितइवाभवत्॥८॥ इदंसंचिंतयामासचित्रंविलसितंविधेः॥ यत्कुंभव्यपदेशेनबोधितोस्मिचिरो
दयम्॥ ९॥ क्वनारदसुतःकुंभःक्वाहंनामशिखिध्वजः॥ केवलंकालयुक्त्यैवसोहंसंपरिबोधितः॥ १० ॥ अहोनुसम्यक्कथितंदेवपुत्रेणयु
क्तिमत्॥ अहोनुसंप्रबुद्धोस्मिमोहनिद्राकुलश्चिरात्॥ ११॥ क्वाहमासंविनिर्मग्नःक्रियाजालकुकर्दमे॥ इदंकार्यमिदंनेतिमिथ्याविभ्रम
चक्रके॥ १२॥ अहोनुशीतलाशुद्धाशांतेयंपदवीनिजा॥ रसायनोद्भवाकारासत्वंशीतयतीहमे ॥ १३ ॥ शाम्यामिपरिनिर्वामिसुख
मासेचकेवलम्॥ तृणाग्रमपिनेच्छामिसंस्थितोस्मियथास्थितम्॥ १४॥ एवंसंचिंतयन्राजानूनंनिर्वासनाशयः॥ शैलादिवसमुत्की
र्णोमौनमेवावतस्थिवान्॥ १५॥ तस्मिन्नेवततोमौनेनिःसंकल्पेनिराश्रये॥ प्रतिष्ठांनिश्चलांप्राप्यसतस्थौगिरिशृंगवत्॥ १६॥ सतत्र
संशांतभयोऽचिरेणचिरेणविश्रांतमतिःसमात्मा॥ चिरेणसंप्राप्तनिजामलात्मायोगेनसुष्वापततोदितात्मा॥ १७॥ ॥ इ० वा० वा०
दे० मो० नि० पू० चू० शिखिध्वजसमाधानंनामद्व्यधिकशततमःसर्गः॥ १०२॥ ॥ ७॥

क्षात्कृतात्मरूपासाम्राज्यपदवी ॥ सत्वनिर्वासनंम
न ॥ १३ ॥ तेनैवस्वस्यपूर्णकामतामाह ॥ शाम्यामीति ॥ १४ ॥ शैलात्समुत्कीर्णःप्रतिमादिरिवमौनवागादिचेष्टारहितयथास्यात्तथासमाहितोवतस्थिवान् ॥ छादसत्वाल्लि
ट.क्वसु ॥ १५ ॥ मौनेमुनिकर्मणिसमाधौ ॥१६॥ सराजातत्रसमावौसप्राप्तनिजामलात्मासन्समात्मासमरसःसन्चिरेणविश्रातमतिर्भूत्वाअचिरेणसद्यएवसशांतभयःसन्चि
रंकालानुवृत्तेनयोगेनअदितात्माअखण्डितस्वभावःसुष्वापसुषुप्तइवविशश्रामेत्यर्थ. ॥ १७॥ ॥इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाण०पू०द्व्युत्तरशततमःसर्ग. ॥ १०२ ॥

चूडालाया वरगत्वाम्महेणपुनरागम ॥ यम्रायुत्थापनरालसत्कालापश्चवर्ण्यते ॥ १ ॥ एवमुक्तरीत्याशिखिध्वजोराजानिर्विकल्पसमाधानात्काष्ठकुड्योपमस्थितिरभूदिति
शेष ॥ चूडालोक्तवृत्तांतमितियावत् ॥ १ ॥ ततारपुत्रस ॥ २ ॥ देवपुत्राकृतिकुंभवेषम ॥ स्त्रैणशीशरीररूपमाकारजपाह ॥ ३ ॥ नृपकर्मराजकार्यप्रजानुरंजनमित्यर्थ ॥४॥
कुंभनारदपम ॥ ५ ॥ समुत्कीर्णप्रतिमाकारनिर्मितद्रुमकाष्ठमिवनिश्चलम ॥ ६ ॥ अथराजा ॥ ७ ॥ इदानींप्रारब्धकर्मशेषकालेवेहत्यागंकिकिमर्थंकरोतिनकरोत्वित्या

श्रीवसिष्ठउवाच॥ ॥निर्विकल्पसमाधानात्काष्ठकुड्योपमस्थिति ॥एवशिखिध्वजोराजाचूडालामधुनाशृणु ॥ १ ॥ शिखिध्वजत
भर्त्तारकुंभवपेणतेनसा॥ प्रबोध्यांतर्धिमागत्यततारतरसानभ ॥ २ ॥ देवपुत्राकृतिंव्योम्निजहौमायाविनिर्मिताम्॥ विदग्धमुग्धमा
कारंक्षणजग्राहसुंदरम्॥ ३ ॥ नभसास्वपुरप्रापविवेशांत पुरक्षणात्॥ ददर्शाथभूवलोकस्यनृपकर्मचकारच ॥ ४ ॥ वासरत्रितयेनाथ
पुनरधरमत्यसा॥ यभूवकुंभोयोगेनशिखिध्वजवनयर्यो॥५॥ तथातत्रैवतभूपमपश्यद्वनभूमिगा॥ निर्विकल्पसमाधिस्थसमुत्कीर्ण
मिवद्रुमम्॥६॥ अहोनुखलुभोदिष्ट्याविश्रांतोयमिहात्मनि॥ स्थित स्वस्थ सम शांतइत्युवाचपुन पुन ॥ ७॥ तदेनतावदेतस्माद्बोधया
मिपरात्पदात्॥ इदानीमेवकिंदेहत्यागमेषकरोतिवै॥८॥ किंचित्कालस्फुरत्वेपराज्येनविपिनेनवा॥ममभेवगमिष्यावस्त्यक्तदेहाविमो
समौ॥ ९॥ तस्यापदेशोविषम परिणामनगच्छति॥ अनेनाभ्यासयोगेनतावदाबोधयाम्यहम्॥ १० ॥ इतिसंचिंत्यचूडालासिंहनाद
चकारसा॥ भूयोभूय प्रभोरग्रेवनेचरभयप्रदम्॥ ११ ॥ नचचालशिलेवासौयदानादेनतेनस ॥ भूयोभूय कृतेनापितदासातव्यचाल
यत्॥ १२ ॥ चालित पातितोप्येषयदानबुबुधेनृप ॥ तदासंचितयामासचूडालाकुंभरूपिणी ॥ १३ ॥ अहोपरिणत साधु स्वपदेभग
वानयम्॥ तदेनहियथायुक्त्यासांप्रतबोधयाम्यहम्॥ १४॥ अथवैनंमहात्मानंकिमर्थबोधयाम्यहम्॥ विदेहबोधमासाद्यतिष्ठत्वेपय
यासुखम्॥ १५॥ अहमप्यगनादेहमिमत्यक्तापरपदम्॥ अपुनर्जननायैवगच्छामीहाहिकिंसमम्॥ १६॥

शय ॥ ८ ॥ विपिनभोग्यकमक्षयपर्यंतविपिनेनवा ॥ समतुल्यकालमवसमौतुल्यस्वभावौगमिष्याव ॥ कैवल्यमितिशेष ॥ ९ ॥ उपदेशाभ्यासयोकृत परिणामसप्तमभू
मिकावस्थितिपर्यंतपरिपाकनगच्छतिइदानींमवबोधयामे ॥ तथाचजीवन्मुक्तिसुखानुभवायमप्ययमबोध्यइतिभाव ॥ १० ॥ प्रभोर्भर्तु ॥ ११ ॥ पाणिसंघर्षेणाचालयत्
॥ १२ ॥ १३ ॥ सप्तमभूमिकानुप्रवेशपर्यंतपरिणत ॥ अहोशब्दआश्चर्ये ॥ तथाचतस्योपदेशोविषम परिणामनगच्छतीतिमदीयसंभावनाव्यर्थैवेतिभाव ॥ १४ ॥ अतएवाह ॥
अथवेति ॥ विदेहमित्यनु ॥ १५ ॥ समसहंवगच्छामि इहजीवनेकिमधिकसुखमितिशेष ॥ १६ ॥

महामतिरित्यनेनावश्यभोक्तव्यतदीयप्रारब्धकर्मशेषमपिसास्वमत्यादृष्ट्वापुनःसंचिंतयामासेतिसूचनाय ॥ १७ ॥ सत्वंनिर्वासनंमनस्तस्यसंस्कारलेशात्मनाशेषोयदिहृदवरे प्रारब्धावशेषितमायालेशोपहितेहार्दब्रह्मण्यस्ति ॥ १८ ॥ कालेनतदुद्भवसमयेन ॥ यथावसनारंभेद्रुमेमूलकोशेमूलप्रदेशेयोभौमोरसस्तस्मिन्सूक्ष्मभावेनालीनंभाविपुष्पजालमिवसत्वशेषोयद्यस्तीतिपूर्वेणान्वयः ॥ १९ ॥ तर्हिमत्प्रबोधितोयजीवन्मुक्तःसन्एवमहमिवविहरन्भवत्येव ॥ अथयदिसत्वशेषस्यापिबाधान्मुक्तोभवतितत्तर्हहमपिसममनेनसाकमेवमुक्तिंगच्छामि॥ २० ॥ स्पर्शेनदेहोष्मलिंगेनवक्ष्यमाणलिंगेनपतिजीवतीतिसाशंकमालोक्यसबोधहेतूदयनेसत्वशेषव्यबुध्यत अस्त्यत्त्वदिसत्वशेषोस्त्येवेत्यवाच

इतिसंचिंत्यदेहंस्वंत्यक्तुमभ्युद्यतासती ॥ पुनःसंचिंतयामासचूडालासामहामतिः ॥ १७॥ आलोकयामिचैतावदेनंदहंमहीपतेः॥ यद्यस्यसत्त्वशेषोस्तिबोधबीजंहृदंतरे ॥ १८ ॥ तत्कालेनैषभगवान्संप्रबोधमुपैष्यति ॥ मूलकोशरसालीनंपुष्पजालमिवद्रुमे ॥ १९ ॥ तदेवंविहरन्जीवन्मुक्तएवभवत्यलम् ॥ मुक्तोभवत्यथयदिमन्येगच्छामितत्समम् ॥ २० ॥ इतिसंचिंत्यचूडालास्पर्शेनेननयेनच ॥ पतिमालोक्यसाशंकमुवाचवरवर्णिनी ॥ २१ ॥ अस्त्येवसत्वशेषोस्यत्त्वदिसंबोधकारणम् ॥ संबोधहेतूदयनंसत्वशेषंव्यबुध्यत ॥ २२॥ ॥ श्रीरामउवाच॥ ॥ भृशंसंशांतचित्तस्यकाष्ठलोष्टसमस्थितेः॥ सत्वशेषःकथंब्रह्मन्ज्ञायतेध्यानशालिनः॥ २३॥ ॥ श्रीवसिष्ठउवाच॥ प्रबोधकारणंयस्यदुर्लक्ष्याणुवपुर्हृदि॥ विद्यतेसत्वशेषोंतर्बीजेपुष्पफलंयथा॥ २४॥ चित्तस्पंदवियुक्तस्यतस्यास्पंदितसंचितः॥ द्वित्वैकत्वविहीनस्यसमस्याचलसंस्थितेः॥ २५॥ कायःममसमाभोगानग्लायतिनत्हृष्यति॥ नास्तमेतिनचोदेतिसममेवावतिष्ठते ॥ २६ ॥ द्वित्वैकत्वादियुक्तस्ययस्यप्रस्पंदतेमनः॥ तस्यदेहोन्यतामेतिनास्पंदस्यकदाचन॥ २७॥ चित्तस्पंदोहिसर्वेषांकारणंजगतःस्थितेः॥ रागभावविकाराणांकुसुमानांयथामधुः॥ २८॥ अस्मिन्प्रयास्यतोदेहेचेतसोहिमुहुर्मुहुः ॥ हर्षःकोपोनसंमोहोवशमेतिरघूद्वह ॥ २९॥

चेतिपरेणसहान्वयः ॥ २१ ॥ २२ ॥ स्पर्शेनेननयेनचेतियदुक्ततत्रनयशब्दार्थजिज्ञासूरामःपृच्छति ॥ भृशमिति ॥ २३ ॥ देहेवृद्धिविपरिणामापक्षयादिविकारानुदयःसत्वशेषेलिंगमित्युत्तरवक्तुर्लिंग्यमनुवदति ॥ प्रबोधेतिद्वाभ्याम ॥ २४ ॥ द्वित्वैकत्वविहीनस्यनिर्विकल्पस्य ॥ २५ ॥ ग्लायतिग्लानिंगच्छति ॥ २६ ॥ अन्यस्यतुतद्वैपरीत्यमित्याह ॥ द्वित्वैकत्वादीति ॥ २७ ॥ तत्कुतस्तत्राह ॥ चित्तस्पंदइति ॥ जगतःस्थितेर्व्यवहारस्यहेतुभूतानांसर्वेषांभावविकाराणांकारणम् ॥ २८ ॥ अतएवपुनर्जन्मबीजसत्वेस्माद्देहाद्देहांतरंप्रयास्यतश्चेतसोमुहुर्मुहुर्यत्नेननिगृह्यमाणोपिहर्षःकोपःसंमोहश्चनवशमेतिननिग्रहीतुंशक्यते ॥ तदेवपुनर्जन्मावश्यभाविलिंगमित्यर्थः ॥ २९ ॥

चित्तेइत्यादिविकाराणांनुकायविविकारानिवर्तनइत्याह ॥ चित्तइति ॥ सत्त्वेननिर्वासनचित्तेनवर्जितः अप्रतिसंधानेनत्यक्तः ॥ तथाचचित्तेनाहतयापरिग्रहएवदेहस्याधि
विकारहेतुरितिभावः ॥ ३ ॥ देहजरावलितादिरोगोरामादिशापश्चनदृश्यते ॥ ३१ ॥ कियत्कालंजीवन्मुक्तेः सत्त्वमुपलभ्यतइतिचेत्प्रारब्धशेषक्षयेणतदुपशमपर्यंतमित्याह ॥
सत्त्वस्येति ॥ सत्त्वानिभातिस्फुरत्यमावित्यत्स्वयम् ॥ कालात्प्रारब्धशेषक्षयकालात् ॥ ३२ ॥ सत्त्वस्यापिक्षयेनुमतोदेहोविलीयतइत्याह ॥ देहेइति ॥ नोचित्तमित्यस्यमरणा
भिप्रायम् ॥ नापिसत्त्वमितिमरणाभिप्रायम् ॥ पक्वत्वेनमरणेन ॥ ३३ ॥ शिखिध्वजदेहेहेतुर्जीवनलिंगानितयादृष्टानीत्याह ॥ शिखिध्वजस्येति ॥ तेजसाऊष्मणा ॥ ३४ ॥

चित्तेप्रशममायातेकायोयं सत्ववर्जितः ॥ बाधतेनापरस्येवतस्यभावविकारम् ॥३०॥ वीच्यादिनयथोदेतिसमायाजलसंतते ॥ तथा
नदेहसंततोपि समायामन्यसतते ॥३१॥ सत्त्वस्यानुपलंभोस्तिनतस्योपशमाद्दते ॥ यावद्भातिसमतत्त्वकालाच्छाम्यतिकेवलम् ॥ ३२॥
देहयस्मिंस्तुनोचित्तनापिसत्त्वचविद्यते ॥ सतापेहिमवग्रामपक्वत्वेनविलीयते ॥ ३३॥ शिखिध्वजस्यदेहोसौनिश्चित्तस्तेजसार्जितः ॥ स
त्वांशेनचसंयुक्तस्तेननग्लानिभाजनम् ॥३४॥ ततथाभूतमालोक्यभर्तुर्देहवरांगना ॥ अनुज्झितवतीदेहंचिंतयामाससत्वरम् ॥३५॥
चित्तत्त्वसवगशुद्धंप्रविश्याबोधयाम्यहम् ॥ भविष्यद्बोधनकातमयतत्रहिसास्थिता ॥ ३६ ॥ नबोधयामियद्येनचिरात्तद्बुध्यतेस्वयम् ॥
चिमेकवावतिष्ठइमित्यंवबोधयाम्यहम् ॥३७॥ इतिसंचिंत्यचूडालादेहकरणपंजरम् ॥ संत्यज्यप्रापचित्तत्वंस्थितिमापतवर्जिते ॥३८॥
ततसाचेतनास्पंदंकृत्वासत्त्ववत प्रज्ञा ॥ स्वविवेशपुनर्देहंस्वनीडमिवपक्षिणी ॥ ३९ ॥ कुंजारुतिरथोत्थायनिविष्टाकुसुमस्थले ॥ सा
मगानुप्रवृत्तासाभ्रमराध्वनि स्वना ॥४०॥ तसामस्वनमाकर्ण्यचित्सत्त्वगुणशालिनी ॥ बुबुधेभूपतेर्देहवसंतइवपद्मिनी ॥ ४१ ॥ दृश
विकासयामासतांतदाकइवालिनीम् ॥ गृहीतसत्त्वसंपत्तिः शिखिध्वजमहीपतिः ॥ ४२॥

यथासमाधाययत्नमनुसंधत्त ॥ तथेत्यादिना ॥ स्वदेहमनुज्झितवतीसती ॥ ३५ ॥ चित्तत्वमागुक्तलक्षणशुद्धसत्त्वदायकायप्रवेशेनप्रविश्यतमतत्त्वभावेसंस्थितासतीचिरका
लेनभविष्यद्बोधनकालमर्पनेनसबोधयामीति ॥ ३६ ॥ ननुचिरेणसत्त्वमेवबुध्यतांकिंबोधनत्वरयातत्राह ॥ नेति ॥ राज्यपालनेनियम्याहनभर्तुस्तत्समाधौस्यातुराक्ता ममु
न्निनाथस्यचिनमर्कात्किंस्यसत्त्वस्यानुशकामीतिभाव ॥ ३७ ॥ स्वदेहंसंत्यज्यतद्देहंप्रविश्यतदीयेहादिस्वलक्षणेचित्तसत्त्वेस्थितिमापेत्यथ ॥ ३८ ॥ तथनिर्विकल्पसमाधिना
क्षीरोदकवदेकतांभूतायाश्चेतनायाःस्वीयचित्ताभासपक्षिणीव पृथग्भवनानुकूलस्पंदम् ॥ ३९ ॥ ४० ॥ चिमुचिराभाससत्त्वचिताराजबुद्धिः शिखिध्वजाहंभावसंस्कारो
द्बोधेनमानसापाददेहमावस्थासाबुबुधे ॥ ४१ ॥ तांसमाधिनिमीलिताम् ॥ ४२ ॥

गायनमित्यशित्यात्वाभावश्छांदसः ॥ परेणदिव्येनवपुषायुक्तमपरंसामवेदमिवेत्युत्प्रेक्षा ॥ ४३ ॥ कुसुमंपुष्पांजलिम् ॥ अनेनतपःप्रभावात्प्राक्संचितपुण्यानामम्लानतागम्य
ते ॥ ४४ ॥ दिष्ट्यास्वभाग्योदयेनउदिता.पुनर्दर्शनाभ्युदयफलस्मृतिगोचरतांगताः ॥ अथवाकिमद्भाग्यचितया महांतःस्वतएवपरानुग्रहोद्यताइत्याशयेनाह ॥ केनामेति
॥ ४५ ॥ मदुक्तकारणनचेदिहागमनेद्वितीयंकिंकारणंभवेत्संभावितंतद्ब्रूहीत्यर्थः ॥ ४६ ॥ त्वयैवसमंसाकम् ॥ स्थानत्वामेवस्मरदितियावत् ॥ ४७ ॥ अतएवरम्येपिस्वर्गेसा

अपश्यत्कुंभमग्रस्थंसामगायनतत्परम् ॥ परेणवपुषायुक्तंसामवेदमिवापरम् ॥ ४३ ॥ अहोबतवयंधन्याःपुनःप्राप्तोमुनिःस्वतः ॥ इत्येवो
दाहरन्राजाकुंभायकुसुमंददौ ॥ ४४ ॥ दिष्ट्योदिताःस्मोभगवंस्तवचेतसिपावने ॥ केनामवामहासत्वाःप्रसादेष्वंगनोस्थिताः ॥ ४५ ॥ अ
स्मत्पवित्रीकरणमेवागमनकारणम् ॥ नचेत्किंचागमेब्रूहिद्वितीयंकारणंभवेत् ॥ ४६ ॥ ॥ कुंभउवाच ॥ ॥ यतःप्रभृतियातोस्मित्वत्सका
शादनिंदितः ॥ ततःप्रभृतिचेतोमेत्वयैवेहसमंस्थितम् ॥ ४७ ॥ रम्येस्वर्गेनतिष्ठामिसमीपेतवसांप्रतम् ॥ अभीष्टमुद्यदेवांगरम्याणांतत्पु
रःस्थितम् ॥ ४८ ॥ त्वादृशोबंधुराप्तश्चसुहृन्मित्रंतथासखा ॥ विश्वास्योवापिशिष्यश्चमन्येजगतिनास्तिमे ॥ ४९ ॥ ॥ शिखिध्वजउवाच ॥
अहोनुफलितंपुण्यपादपैर्नःकुलाचले ॥ यस्माद्भवानसंगोपिवांछत्यस्मत्समागमम् ॥ ५० ॥ इदंवनमिमेवृक्षाभृत्योयमहमादृतः ॥
रोचतेतेनचेत्स्वर्गस्तदिहस्थीयतांप्रभो ॥ ५१ ॥ भवद्वितीर्णयायोगयुक्त्याविश्रांतवानहम् ॥ यथासाधोतथामन्येस्वर्गेविश्रमणंकुतः
॥ ५२ ॥ तामेवसंस्थितिंस्वच्छामवलंब्यप्रकाशिनीम् ॥ विहरेहयथाकामंस्वर्गेभूमितलेतथा ॥ ५३ ॥ ॥ कुंभउवाच ॥ ॥ परेपदेमहा
नदेकच्चिद्विश्रांतवानसि ॥ इदंभेदमयंदुःखंकच्चित्संत्यक्तवानसि ॥ ५४ ॥ कच्चिदापातरम्येभ्यःसंकल्पेभ्योरतिर्भृशम् ॥ निर्मूलतांगतारा
जन्भोगनीरसमेवते ॥ ५५ ॥ हेयादेयदशातीतंशांतंशमसमस्थिति ॥ यथाप्राप्तेष्वनुद्वेगंकच्चित्तवमनःस्थितम् ॥ ५६ ॥ ॥ शिखिध्वज
उवाच ॥ ॥ त्वत्प्रसादेनभगवन्दृष्टादृश्यातिगागतिः ॥ प्राप्तःसंसारसीमांतोलब्धोलब्धव्यनिश्चयः ॥ ५७ ॥ चिरादतिचिरेणैवविश्रांतो
स्मिनिरामयः ॥ लब्धंलब्धव्यमखिलंतमःसंश्चिरसंस्थितः ॥ ५८ ॥ नोपदेष्टव्यमस्माकंकिंचिदप्युपयुज्यते ॥ सर्वत्रैवातितृप्तोस्मिसंस्थि
तोस्मिगतज्वरः ॥ ५९ ॥

प्रतनतिष्ठामिकिंतुतवसमीपेतिष्ठामि ॥ हेअंगयतोबहूनामपिरम्याणांमध्येचित्तस्ययदेवाभीष्टंभवतितत्उद्यत्उद्योगप्राप्यमेवसत्पुरःस्थितंभवतिनोद्योगंविनेतित्वद्दर्शनोद्योगव
शादेवममागमनमित्यर्थः ॥ ४८ ॥ मयिकोवातेप्रीतिहेतुरतिशयस्तत्राह ॥ त्वादृशइति ॥ ४९ ॥ कुलाचलेअस्मिन्मदद्रे ॥ ५० ॥ मत्प्रीत्यातेस्वर्गोनरोचतेचेत्तर्हिइहमत्स
न्निधौ ॥ ५१ ॥ ममापित्वद्वितीर्णसमाधिसुखलाभस्यस्वर्गेवांछानास्तीत्याह ॥ भवद्वितीर्णयेति ॥ वितीर्णयादत्तया ॥ ५२ ॥ तांमत्समुपदिष्टामेवभूमानंदसंस्थितिमवलंब्य ॥
प्रकाशिनींस्वप्रकाशाम् ॥ ५३ ॥ ५४ ॥ ५५ ॥ शमेनसमस्थिति ॥ ५६ ॥ ५७ ॥ चिराद्बहुकालोत्तरम् ॥ अतिचिरेणदिनत्रयपर्यंतम् ॥ ५८ ॥ ५९ ॥

अथात्मनामभिरिशाय ॥ तथामसत्यनिशासममन स्वस्यात्ममएवपरत्यमाश्रितम ॥ ६० ॥ यदित्वरन्यत्किंचनेनयासितर्हित्वकीदृशोवशिष्टस्तमाह ॥ नि संस्थेतिरिति ॥ स्पष्ट ॥ ६१ ॥ ॥ ॥ निर्माणशिवम तात्पर्यप्रकाशेनि॰प्र॰पू ऽयधिकशततम सर्ग ॥ १०३ ॥ ॥ ५ ॥ ॥ कुंभस्यरमणोराज्ञासभोगेच्छाप्रदर्श्यते ॥ स्वगापदशात्पूर्वा नविपण्णपुनरागम ॥ १ ॥ इत्युक्तप्रकाराभिरात्मनीत्यध्यात्मविचित्राभि कथाभि परस्परसंवदनाविति शेष ॥ १ ॥ सरसानिस्निग्धानिसारसानिपद्मानिपक्षिमिथुनानिवाय स्मिन् तस्मिन्सरसिनि परम्पूलादिनाअवनरक्षकप प्रसिद्धएंदिनवनेपनेइवतिशेष ॥ २ ॥ तेनजीवन्मुक्तप्रसिद्धेनाचारेण ॥ वनेमहारण्ये ॥ काननवीथिषुअवांतरवनप

ज्ञातमज्ञातमप्राप्तमत्यक्तंत्यक्तव्यमाश्रितम् ॥ तत्त्वपरत्वसर्वमेस्वस्यैवास्तिनकिंचन ॥ ६० ॥ नि संस्थितिर्विगतमोहभयोविरागोनित्यो दित ममममाशयसवसौम्य ॥ सर्वात्मक सकलसंकलनावियुक्तआकाशकोशविशदस्सममास्थितोस्मि ॥ ६१ ॥ ॥ इत्यार्षेवा॰ वा॰दे॰मो॰नि॰पू॰चू॰कुंभपुनरागमननामत्र्यधिकशततम सर्ग ॥ १०३ ॥ ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इत्य ध्यात्मविचित्राभि कथाभिस्तौपरस्परम् ॥ आसातेवेद्यवेत्तारौमुहूर्तत्रितयवन ॥ १ ॥ ततउत्थायकस्मिंश्चित्सानौसरससारसे ॥ मरोव रेवनेचैवविहृतौनंदनेवने ॥ २ ॥ तनाचारेणताभिश्चकथाभिस्तौवनेतत ॥ नीतवतौदिनान्यष्टौतासुकाननवीथिषु ॥ ३ ॥ ॥ अथकुंभ उवाचान्यद्गनयावोगिराविति ॥ तदोमितिनृपोमत्वातावुभौप्रविचेरतु ॥ ४ ॥ वनान्यनेकरूपाणिजंगलानितटानिच ॥ सरांसिगुल्मजा लानिशृंगाणिगहनानिच ॥ ५ ॥ नदीदेशांस्तथाग्रामान्नगराणिवनानिच ॥ मंजुघोषान्गिरीन्कुंजास्तीर्थान्यायतनानिच ॥ ६ ॥ सममे वममत्वेहासमवेतौस्थितावुभौ ॥ समसत्त्वौसमोत्साहौभासतौतस्यतु सदा ॥ ७ ॥ आनर्चतु पितृन्देवान्भुजातेचराघव ॥ समंतमेव मिनचसमयुद्धायगृवतु ॥ ८ ॥ तमालवनखंडेषुमंदारगहनेषुच ॥ दंपतीस्निग्धहृदयौसुहृदौतौविरेजतु ॥ ९ ॥ इदंगेहमिदंनेतिविकल्प फलनामन ॥ नजहारतयोरामवात्येवविधुधाचलम् ॥ १० ॥ विचेरतुस्तौसुहृदौक्वचिद्धूलिविधूसरौ ॥ क्वचिच्चंदनदिग्धांगौक्वचिद्भ स्मानुरंजितौ ॥ ११ ॥ क्वचिद्दिव्यांबरधरौचित्रांबरधरौक्वचित् ॥ क्वचित्पल्लवसंछन्नौक्वचित्कुसुममंडितौ ॥ १२ ॥

निःशरव ॥ मनरिनाद्यमपिनकमभासङ्स्यनिफलतामुच्यत ॥ ३ ॥ ओमित्यभिमती ॥ नृपस्येवकुंभस्याप्यर्थसिद्धावनास्थयेस्तुभयकर्तृकचरितसमानकर्तृकतामाश्रित्यमत्वे विकामन्त्यनिर्देश ॥ ४ ॥ ५ ॥ ६ ॥ समवर्त्तासमुदितौसतौचित्तस्यापिसममेवस्थितीशसतोपरस्परानुभवकथयतौ ॥ ७ ॥ सिक्तमलादेर्शीतलप्रदेशोचेतिपाठम् ॥ ८ ॥ ९ ॥ भनिश्चनस्थितिरक्षणमाह ॥ इदमिति ॥ विकल्पफलमातयामनानजहार ॥ १० ॥ प्रियाप्रियविकल्पोपितयोर्नाभूदित्याह ॥ विचेरतुरित्यादिना ॥ ११ ॥ १२ ॥

---

१ आशानाास्त्यपिक्वचिताठ

सत्वेननिर्वासनचित्तेनोदात्ततयाउत्कृष्टतया ॥ १३ ॥ अथकेवलमित्रभावेनपरस्परोपभोजकप्रारब्धभोगोत्तरकालदंपतिभावोपभोजकप्रारब्धोद्भवकाले ॥ १४ ॥ कामेन अज्ञधर्मेणरागेणनवंचिता ॥ १५ ॥ यथाप्राप्तभोगप्रतिअतिष्ठतांअनिवृत्तगतीनाम् ॥ एकस्याभोगनिवृत्तावेवायंहोनिर्बंधस्तदात्मिकायावृत्ति सामूढतैव ॥ १६ ॥ अधर्मरोग श्रमादिहेतुभ्योभोगेभ्योलोकत्रपहायनिवर्त्तितव्यमेवअत्रनुनतत्रमक्तिरित्याशयेनाह ॥ निजइति ॥ एवंसर्वसामग्रीसत्वेपियास्वभर्त्रा रनकामवतीसाअजीवन्मुक्ताचेद्धर्मोपभो

दिनैःकतिपयैरेवसमचित्ततयातया ॥ सत्वोदात्ततयाचैवराजाकुंभवदाबभौ ॥ १३ ॥ अथतंसुरगर्भाभंचूडालासाशिखिध्वजम् ॥ दृष्ट्वाशोभामुपगतंचिंतयामासमानिनी ॥ १४ ॥ अयंपतिरदीनात्मारम्याश्चवनभूमयः ॥ इयंस्थितिरनायासायानकामेनवंचिता ॥ १५ ॥ जीवन्मुक्तधियांभोगंयथाप्राप्तमतिष्ठताम् ॥ एकाग्रहात्मिकातुच्छामूढतैवोदिताभवेत् ॥ १६ ॥ निजःपतिरुदारात्मानिराधिश्चनवंवयः ॥ गृहाणिपुष्पजालानिसाहतायानकामिनी ॥ १७ ॥ वनपुष्पलतागेहेस्वायत्तेभर्तरिप्रिया ॥ रमतेयाननिर्दुःखासाहतैवदुरंगना ॥ १८ ॥ रम्यंविवाहितंकांतंपतिमासाद्यनिर्जने ॥ स्त्रीसतीयानरमतेतांधिगस्तुदुरंगनाम् ॥ १९ ॥ समुज्झतायथाप्राप्तमपिवेद्यविदासदा ॥ अनिंद्यंसमुदारार्थंकिंतज्ज्ञेनकृतंभवेत् ॥ २० ॥ तत्किंचिद्रचयाम्याशुप्रपंचंप्रेक्षयावने ॥ येनायंभूपतिर्भर्त्तारमतेमयिमानदः ॥ २१ ॥ इतिसंचिंत्यचूडालाकुंभवेषधरापतिम् ॥ प्राहकाननगुल्मस्थाकोकिलंकोकिलायथा ॥ २२ ॥ ॥ कुंभउवाच ॥ ॥ चैत्रमासस्यशुक्लोयंप्रतिपद्दिवसोमहान् ॥ अद्यास्थानंमहारंभंस्वर्गेभवतिवैहरेः ॥ २३ ॥ सन्निधानंमयातत्रकर्तव्यंपितुरग्रतः ॥ यथास्थिताहिनियतिर्नसंत्याज्याकदाचन ॥ २४ ॥ प्रतिपालयितव्यंमेत्वयेहचवनावनौ ॥ क्रीडतानवपुष्पायांसमुद्वेगमगच्छता ॥ २५ ॥ आगच्छामिदिनांतेघनिर्विकल्पंनभस्तलात् ॥ सर्गादतितरामेवत्वत्संगोममतुष्टये ॥ २६ ॥ इत्युक्त्वामंजरींकुंभोददौमित्रायकौसुमीम् ॥ प्रीतयेस्वामिवप्रीतिंकांतांनंदनवृक्षजाम् ॥ २७ ॥

गविघातपापेनहता जीवन्मुक्ताचेल्लोकसमहभगप्रयुक्तनिंदादिनाहतेत्यर्थः ॥ १७ ॥ उक्तमेवस्पष्टमाह ॥ वनेति ॥ १८ ॥ १९ ॥ अनिंद्यस्यउदारार्थंभोगंसमुज्झताकिंकिमधिकफलंकृतंभवेत् ॥ नकिंचिदित्यर्थः ॥ २० ॥ प्रेक्षयास्वप्रज्ञया ॥ मयिरमतेरतिसुखंलभते ॥ २१ ॥ २२ ॥ आस्थानंदेवर्षिसभामेलनम् ॥ हरेरिंद्रस्य ॥ २३ ॥ पितुर्नारदस्य ॥ २४ ॥ प्रतिपालयितव्यमेआगमनमासायंप्रतीक्षितव्यम ॥ २५ ॥ निर्विकल्पआगमनपाक्षिकत्वरहितंनियतमितियावत् ॥ २६ ॥ कांतामनोहरा नंदनवृक्षःकल्पतरुस्तज्जांमंजरीम् ॥ २७ ॥

॥९८॥१ रुस्थानभवलकैलासमिवोच्छ्रितस्थितम् ॥२२॥ तैलोक्यशासपसिद्धैरधिरूढमन्तःशंखवीणाछत्रचामरादिभिर्दंपयोर्मंगलैः संयुतम् ॥२४॥ अंतःपुरेस्वानिस्वाभि न्नसमाधिभोगादीनि ॥२५॥ देहधारणाद्विरतोविदेहकैवल्यसुखेप्रतिष्ठितोऽभूदित्यर्थः ॥२६॥ एतदेवस्पष्टमाह ॥ देहमिति ॥ इतिअनयामामुक्तरीत्या ॥२७॥ राज्यकृत्वामया चूडालयासहस्रमप्यभासमस्तान्कांश्चिदपि ॥२८॥ भुक्तेभुक्तभोगेपुनीरागाबुद्धिर्यस्य समेभ्योपिसमादृष्टिर्यस्य सआर्य शिखिध्वजइतिवर्णितप्रकारेणबोधेनकामलक्षण मृत्युंमित्वादशशिशिरान्पलक्षितवर्षसहस्राणिजम्बूद्वीपएकराजस्यभावएकराज्यंचकार ॥ २९ ॥ पूर्वार्धेनशिखिध्वजस्थितिमनूद्यतांरामायकर्मण्यलयोरुत्तरार्धेनोपदिशति ॥

पताकाध्वजसंबाधमुक्ताजालमनोरमम् ॥ नृत्यगेयपरस्त्रीकंस्वभूमावचलस्थितम् ॥२३॥ प्रविश्यायगृहंतेस्ते संयुतनृपमंगलैः ॥ सम्य क्समानयामासप्रणतप्रकृतिव्रजम् ॥२४॥ पुरोत्सवंप्रशांत्कृत्वादिनसप्तकमुत्तमम् ॥ अकरोद्राजकार्याणिस्वानिस्वांतःपुरेनृप ॥२५॥ दशवर्षसहस्राणिराज्यंकृत्वामहीतले ॥ सहचूडालयारामविरतोदेहधारणात् ॥ २६ ॥ देहमुत्सृज्यनिर्वाणमस्नेहइवदीपक ॥ अपुनर्ज न्मनेरामजगामेतिमहामति ॥ २७ ॥ दशवर्षसहस्राणिसमदृष्टितयातया ॥ राम्यतयारमव्यापिनिर्वाणपदमाप्तवान् ॥ २८ ॥ विगत भयविषादोमानमात्सर्यमुक्तःप्रकृतसहजकर्माभुक्तनीरागबुद्धि ॥ इतिसमसमदृष्टिर्मृत्युमार्योथजित्वादशशिशिरसहस्राण्येकराज्य चकार ॥२९॥ भुक्त्वाभोगाननेकान्भुविसफलमहीपालचूडामणित्वेस्थित्वावैदीर्घकालंपरमसततपदप्राप्तवान्सत्वशेष ॥ एवंरामागतं त्वमरततमनुसरन्कार्यजातंविशोकस्तिष्ठोत्तिष्ठस्वयंवाप्रसभमनुभवन्भोगमोक्षादिलक्ष्मी ॥ ३० ॥ ॥इ०वा०वा०दे०मो०नि०पू० चू०शिखिध्वजनिर्वाणंनामदशोत्तरशततमःसर्गः ॥११०॥ ॥५॥ ॥चूडालोपाख्यानसमाप्तम् ॥ ॥श्रीवसिष्ठउ वाच ॥ ॥एततेसर्वमाख्यातंशिखिध्वजकथानकम् ॥ अनेनगच्छन्मार्गेणनकदाचनखिद्यसे ॥ १ ॥ एतांदृष्टिमवष्टभ्यरागद्वेषविना शिनीम् ॥ नित्यंनीरागयाबुद्ध्यातिष्ठावष्टभ्यतत्पद ॥ २ ॥

भुक्त्वेति ॥ सशिखिध्वजोदीर्घकालंभुविसफलमहीपालानांचूडामणित्वेस्थित्वाअनेकान्भोगान्भुक्त्वाअजरमजरपरंपदसत्त्वसम्यग्ज्ञानस्थेपःसन्प्राप्तवान् ॥ हेरामत्वमपिआ गतमारब्धप्राप्तमरततकार्यजातमनुसरन्विशोकःसमाधौतिष्ठ ॥ अथवास्वयंप्रसभभोगमोक्षज्ञानलक्ष्मीरनुसरन्नुत्तिष्ठव्युत्थितस्तिष्ठ तवसमाधिव्युत्थानयोर्नफलभेदोस्तीत्य र्थः ॥ ३० ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०दशोत्तरशततमःसर्गः ॥ ११० ॥ ॥ ५ ॥ ॥ राघवाराजेवपिभावसर्वंत्वस्यात्सितःकथ ॥ अंतेइका रस्त्यामात्पूर्णोगुरिमिवर्ण्यते ॥ १ ॥ अनेनमार्गेणगच्छन्स्वप्रसेनिरवकाशसंरोधभविष्यसि ॥ १ ॥ बुद्ध्याअवष्टभ्यपरमार्थतयादृष्टवबलविततस्पूर्णानिष्पन्नेन ॥ २ ॥

१ अस्यशिखिध्वजाख्यानस्यनापिव्यवहारः

भोगमोक्षमयस्तत्प्रचुर ॥ ३ ॥ शिखिध्वजस्यप्रसिद्धेनसर्वत्यागक्रमेणैवकचोपियथाबोधमवाप्तवांस्तथात्वमपिबुध्यस्व ॥ ४ ॥ समासेनसाकल्येन ॥ ५ ॥ ६ ॥ बालभावात्समुत्तीर्णोनिर्गतोयौवनप्राप्तमात्रइतियावत् ॥ पदपदार्थज्ञःसर्वविद्यास्थानेपुनिष्णातस्तत्त्वमसिवाक्यगोचरपदपदार्थज्ञश्च ॥ ७॥ जीवएवतंतुरिवस्वबंधसहस्रकरोयस्यतथाविधेनजतुनामादृशेन ॥ ८ ॥ उड्डीयतेशीघ्रनिर्गम्यतइतियावत् ॥ अतिवैराग्यदार्ढ्याच्यक्तविषयेपश्चात्तापोद्वेगरहितंयथास्यात्तथाकृतेनसर्वत्यागेन ॥ ९ ॥ १० ॥ महाशयाः

यथाशिखिध्वजोराज्यंकृतवानेवमीदृशम् ॥ रामव्यवहरन्राज्येभोगमोक्षमयोभव ॥ ३ ॥ शिखिध्वजक्रमेणैवयथाबोधमवाप्तवान् ॥ कचोबृहस्पतेःपुत्रस्तथाबुध्यस्वराघव ॥ ४ ॥ ॥ श्रीरामउवाच ॥ ॥ बृहस्पतेर्भगवतःपुत्रोसौभगवान्कचः ॥ यथाप्रबुद्धोभगवन्समासेनतथावद ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ शृणुराजन्कथांश्रीमाञ्छिखिध्वजवदेवसः ॥ प्रबोधंपरमंयातोदेवदेशिकजःकचः ॥ ६ ॥ बालभावात्समुत्तीर्णःसंसारोत्तरणोन्मुखः ॥ कचःपदपदार्थज्ञोबृहस्पतिमभाषत ॥ ७ ॥ ॥ कचउवाच ॥ ॥ भगवन्सर्वधर्मज्ञ कथंसंसृतिपंजरात् ॥ अस्मान्निर्गम्यतेब्रूहिजंतुनाजीवतंतुना ॥ ८ ॥ ॥ बृहस्पतिरुवाच ॥ ॥ अनर्थमकरागारादस्मात्संसारसागरात् ॥ उड्डीयतेनिरुद्वेगंसर्वत्यागेनपुत्रक ॥ ९ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ इत्याकर्ण्यकचोवाक्यंपितुःपरमपावनम् ॥ सर्वमेवपरित्यज्य जगामैकांतकाननम् ॥ १० ॥ बृहस्पतेस्तद्गमनंनोद्वेगायबभूवह ॥ संयोगेचवियोगेचमहांतोहिमहाशयाः ॥ ११ ॥ अथवर्षेषुजातेषु त्रिषुपंचसुसोनघ ॥ पुनःप्रापमहारण्येकस्मिंश्चित्पितरंकचः ॥ १२ ॥ परिपूज्याभिवाद्यैनंसमालिंगितपुत्रकम् ॥ अपृच्छद्वाक्पतिंभूयः सकचःकांतयागिरा ॥ १३ ॥ ॥ कचउवाच ॥ ॥ अद्येदमष्टमंवर्षंसर्वत्यागःकृतोमया ॥ तथापितातविश्रांतिंनाधिगच्छाम्यनिंदिताम् ॥ १४ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ एवमार्तवचस्तस्मिन्कचेवदतिकानने ॥ सर्वमेवत्यजेत्युक्त्वावाक्पतिर्दिवमुद्ययौ ॥ १५ ॥ गतेतस्मिन्कचोदेहाद्वल्कलाद्यप्यथात्यजत् ॥ गतेंद्वभ्रार्कतारेणशरद्व्योमासमोभवत् ॥ १६ ॥ पुनर्वर्षत्रयेणैषकस्मिंश्चित्काननांतरे ॥ तत्याजांबुदवर्षादिशरदीवनभस्तलम् ॥ १७ ॥

मेरुवत्स्थिराशयाः ॥ ११ ॥ त्रिषुपंचसुचवर्षेषुअष्टस्वित्यर्थः ॥ तच्चित्तपरिपाकतारतम्यंविज्ञायशेषंत्याजयितुमागमंपितरंप्रापेत्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥ दिवमाकाशम् ॥ १५ ॥ गतेंद्विति ॥ सन्निहितसूर्योदयकालिकशरद्व्योमेतियावत् ॥ १६ ॥ पुनरित्याद्यर्धमुत्तरश्लोकेदूयमानमनाइत्यतःप्राग्योज्यम् ॥ कथंचशरद्व्योमासमोभवत्तत्राह ॥ तत्याजेति ॥ क्वचिद्गिरिगुहाश्रयेणाबुदवर्षादितत्याजपरिजहार ॥ १७ ॥

शरदारीगुरुकचिदिमितेपूर्वासएवदूयमानमनाएवपुनर्बंर्यथयेनकस्मिंश्चित्काननांतरेतमेवपितरंगुरुमागतमाप ॥ १८ ॥ १९ ॥ वेणुलतादय ॥ आदिपदात्कमंडलुवृस्यजिनादयपि ॥१ ॥२१॥ अम्यपअम्बिष्टवान् ॥२२॥ यदानवेदनदृष्टवान् ॥ चित्तस्यस्वान्वेषणविशारुतायाःआकृष्चित्तास्यानेभपयनादितिभाव ॥ पितरंधियायषौचिंतितवानितियावन् ॥२३॥ ननुभिपुरवाह्यादस्वराणामिवदेहेंद्रियविषयत्यागादेवचित्तत्यागःसेत्स्यतितिमाह ॥ पदार्थेति ॥ तदेतत्पदार्थवदेहादिर्किचित्तस्यकमावित्तस्यादित्यनिर्णयादनागस्कचित्तनिलयनापराधशून्यदेहादिष्वर्थीकस्यजामित्यागास्यनोचितइत्यर्थ ॥२४॥२५॥२६॥२७॥ चित्तमिदं सोक्षिणाचित्तपृथक्कृत्यजानतोजीवन्मुक्तजना ॥२८॥ हेमयत्रि

उवासैकोदिगतेपुशांतशून्यवपु श्वसन् ॥ दूयमानमना प्रापतमेवपितरंगुरुम् ॥१८॥ कृतपूजाक्रमोभक्त्यासमालिंगितपुत्रकम् ॥ अपृच्छत्सपचोसूय स्वेदगद्गदयागिरा ॥ १९॥ ॥कचउवाच॥ ॥तातसर्वपरित्यक्तकथावेणुलताद्यपि ॥ तथापिनास्तिविश्रांति स्वपदेऽपि वरोम्यहम् ॥ २० ॥ ॥ बृहस्पतिरुवाच ॥ ॥ चित्तसर्वमितिप्राहुस्तत्त्यक्त्वापुत्रराजसे ॥ चित्तत्यागविदु सर्वत्यागसवविदोजना ॥२१॥ ॥श्रीवसिष्ठउवाच॥ ॥इत्युक्त्वावाक्पति पुत्रपुप्लुवतरसानभ ॥ अन्वियेषकचश्चित्तपरित्यक्तुमखिन्नधी ॥ २२ ॥ चिंतयन्नप्यसौचित्तनयदावेदकानने ॥ तदाचिंतयामासधियैवपितरंययौ ॥ २३॥ पदार्थस्वदेहादिनचित्तमितिकथ्यते ॥ तदेतत्किक्ववाप्यर्थी निरागस्कत्यजाम्यहम् ॥ २४॥ पितु सकाशंगच्छामिज्ञातुचित्तमहारिपुम् ॥ ज्ञात्वातत्संत्यजाम्याशुततस्तिष्ठामिविज्वर ॥२५॥ ॥श्रीवसिष्ठउवाच॥ ॥इतिसंचिंत्यसकचउज्जगामत्रिविष्टपम् ॥वाक्पतिंप्राप्यसस्नेहवसंदेप्रणनामच॥२६॥ अपृच्छच्चैनमेकांतेकिंचित्तभगवन्वद ॥ स्वरूपंब्रूहिचित्तस्ययेनतत्संत्यजाम्यहम् ॥ २७ ॥ ॥ बृहस्पतिरुवाच ॥ ॥ चित्तनिजमहंकारविदुश्चित्तविदोजना ॥अतयायमहंभावोजतोंतश्चित्तमुच्यते ॥ २८ ॥ ॥कचउवाच॥ ॥त्रयस्त्रिंशन्महाकोटिप्रमाणस्यमहामते ॥ गुरोगीर्वाणवृंदस्यकथमेतद्दतिमे ॥ २९ ॥ मन्येस्यदुष्करस्त्यागोनसिद्धिमुपगच्छति ॥ कथमेपकिलत्यक्तुंशक्यतेयोगिनांवर ॥ ३० ॥ ॥बृहस्पतिरुवाच॥ ॥अपिपुष्पावदलनादपिलोचनमीलनात् ॥ सुकरोहंकृतेस्त्यागोनक्लेशोत्रमनागपि ॥ ३१ ॥ यथेतदेवतनयतथाशृणुवदामिते ॥ अज्ञानमात्रससिद्धंवस्तुज्ञानेननश्यति ॥ ३२ ॥

स्त्रिंशन्महाकोटिप्रमाणस्यगीर्वाणवृंदस्यगुरो हेमहामतेबृहस्पतेअहंभावएवचित्तमित्येतत्कथमस्मेयम ॥ अहंकारस्यलोकेआत्मतयैवप्रसिद्धेस्तस्यागेआत्मत्यागापत्त्यानैरात्म्यापत्तिरितिभाव ॥ २९ ॥ नाप्यात्मनस्त्यागोवास्तवत्यदेयस्वभावत्वादित्याशयेनाह ॥ मन्येइति ॥ ३० ॥ सत्यतत्साक्ष्यपरिचयेतत्त्यागोदुष्कर परिचितेतुसाक्षिणिपुष्पावदलनादपिमुकरइत्याशयेनबृहस्पतिरुत्तरमाह ॥ अपीति ॥ ३१ ॥ अज्ञानग्रुढसाक्ष्यपरिचयलक्षणोमोहस्तन्मात्रसिद्धमहंकारादिवस्तु तच्चज्ञानेनतत्परिचयमात्रेण ॥ ३२ ॥

१ साक्षिणश्चित्तपृथक्कृत्येत्यपेक्षितमितिभाति

बालकस्थितवेतालवद्वस्तुऽसन्नेवसन्निवसंपन्नोऽज्ञदृष्ट्यास्थित' ॥ ३३ ॥ तथाहंकृतिरपिमिथ्यास्फुरतीत्यन्वय' ॥ ३४ ॥ नचसदसन्निति शेषः ॥ ३५ ॥ सर्वप्रपंचमिथ्यात्वेकिं विद्यतेतदाह ॥ एकमिति ॥ सर्वमिथ्यात्वेपितद्वेदनविद्यते ॥ तदविद्यमानताया साधकाभावादेवासिद्धेरितिभावः ॥ ३६ ॥ तदसत्वेजगत्प्रथानुपपत्तेरपितदस्तीत्याह ॥ सर्वत्रेति ॥ अभिन्नवेतिशेष ॥ ३७ ॥ तत्रदृग्दृश्ययोर्मध्येअयमहंकार क कुतोनिमित्तात्कथंदृग्दृश्यमेलनात्प्रकारांतरेणवाउत्थित उभयविलक्षणस्वभावस्यास्योद्भवएवदुर्वचइत्याह ॥ क्वेति ॥ रजोराशि शुष्कपांसुनिचय' ॥ ३८ ॥ अयदेहादि'सपित्रादिनोजातोहम ॥ दिक्कालाभ्यांविवशीकृतवृद्धयपक्षयादिनापरिणमितम् ॥ ३९ ॥ तर्ह्यहंकस्तत्राह ॥ दिगिति ॥ सर्वार्थमयसर्वपदार्थविकारात्मनाभासमानवस्तुतत्त्वपारार्थ्याददृयत्वाच्चैकार्थम् ॥ ४० ॥ सर्वार्थमयमित्यस्यसर्वपदार्थसारभूतमित्यर्थांतरंसदृष्टांतदर्शयन्मक्त

वस्तुतोनास्त्यहंकारःपुत्रमिथ्याभ्रमोयथा॥असन्सन्निवसंपन्नोबालवेतालवत्स्थितः॥३३॥ यथारज्ज्वांभुजंगत्वंमरावंबुमतिर्यथा॥ मिथ्यावभासःस्फुरतितथामिथ्याप्यहंकृतिः॥३४॥ असदेवयथाद्वित्वंमोहादिंदौविलोक्यते॥ तथास्फुरत्यहंकारोनसत्योवाप्यसन्नच ॥३५॥ एकमाद्यंतरहितंचिन्मात्रममलांतरम्॥ खादप्यतितरामच्छंविद्यतेसर्ववेदनम्॥ ३६ ॥ सर्वत्रसर्वदासर्वप्रकाशंसर्वजंतुषु ॥ तदेवैकंकचत्यंबुविलोलास्वब्धिवीचिषु॥ ३७ ॥ अत्रकोयमहंभावःकुतोवाकथमुत्थितः॥ क्वाप्सुजातोरजोराशिःक्वानलादुत्थितंजलम्॥ ३८ ॥ अयंसोहमितिव्यर्थप्रत्ययंत्यजपुत्रक ॥ तुच्छंपरिमिताकारंदिक्कालविवशीकृतम् ॥ ३९ ॥ दिक्कालाद्यनवच्छिन्नंस्वच्छंनित्योदितंततम्॥ सर्वार्थमयमेकार्थंचिन्मात्रममलंभवान्॥ ४० ॥ फलकुसुमदलानांसर्वदिक्संस्थितानांरसइवजगतांत्वंसंस्थितःसर्वदैव॥ विमलतरचिदात्मानित्यमेवास्यनंतःकइवकचतवाहंनिश्चयोभावमूर्त्तेः॥४१॥ ॥इ० वा० वा० दे० मो० नि० पू० कचोपाख्यानेकचप्रबोधोनामैकादशोत्तरशततमःसर्गः॥ १११ ॥ ॥ ६ ॥ ॥श्रीवसिष्ठउवाच॥ ॥इतिप्राप्यपरंयोगमुपदेशमनुत्तमम्॥ जीवन्मुक्तोबभूवासौततोदेवगुरोःसुतः ॥ १ ॥

तनिगमयति ॥ फलेति ॥ सर्वदिक्षुसंस्थितानाफलानाकुसुमानांदलानांपर्णानांचकारणीभूत' सारभूतश्चतरोरतर्गतोरसइवत्वंसर्वजगतांकारणीभूतःसारभूतश्चांतःसर्वदैवसंस्थितोविमलतरोनतश्चिदात्मैवनित्यमसि ॥ हेकचभावमूर्त्तेरखंडाद्वयसन्मात्रस्वरूपस्यतवायपरिच्छिन्नोहंनिश्चयःकइवनकश्चिदित्यर्थः ॥ अथवासर्वदिक्संस्थितानांफलकुसुमादीनामैकरस्यमापन्नोरसोमध्विवसर्वजगतांसारभूतनिरतिशयानंदरूपःसंस्थितइत्यर्थः ॥ अतःसर्वदैवत्वमनंतोविगतमायामलश्चिदात्मैवासीत्यादिप्राग्वत् ॥ ४१ ॥ ॥ इति श्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वा० पू० एकादशोत्तरशततमःसर्गः ॥ १११ ॥ ॥ ६ ॥ ॥ कचाख्यानप्रबुद्धस्यरामस्यप्रश्नतोत्रहि ॥ मिथ्यापुरुषकाख्यानरक्षणमुदीर्यते ॥ १ ॥ युज्यतेअखंडैक्येनावधार्यतेप्रत्यगात्मापरमात्मनायेनसयोगस्ततथाविधमुपदेशम् ॥ १ ॥

नपात्वपविश्व ॥ २ ॥ मैनमिति ॥ मिथ्यात्वबुद्ध्याउपेक्षणमेवतस्यागोनस्वत्वनिषसकथमसापेक्षइतिभाव ॥ ३ ॥ यत्नेनतवनिवारणेकथमरणजन्मभयनिर्मोक्षस्तमाह ॥
असभवतीति ॥ शमननप्रसमासप्तमी ॥ ननुकामकर्मवासनारूपबीजबलान्मरणजन्मर्माकुतोनस्यात्तत्राह ॥ नभइति ॥ अहंकारक्षेत्रेसत्येवतानिबीजानिप्ररोहंतिनतु
द्वापसर्गानिभाव ॥ ४ ॥ अहंकारबाधितेअवशिष्ट कीदृशोहमत्राह ॥ निरंशमिति ॥ ५ ॥ इदृशोहंकथमहंभावभावितोभूवमत्राह ॥ यथेति ॥ तथाअहंभावभावितोप्यस्म्य
हंभावतइत्यर्थ ॥ ६ ॥ तत्प्रकारहेतुमाह ॥ अबोधेनेति ॥ तन्निरासेपिहेतुमाह ॥ बोधेनेति ॥ ७ ॥ द्वित्वमति कार्यदर्शन एकत्वमति कारणदर्शन तेद्वेत्यक्त्वाउभयानुस्यू

निर्ममोनिरहंकारश्छिन्नग्रंथि प्रशांतधी ॥ कथोयथास्थितोरामतथातिष्ठाविकारवान् ॥२॥ अहंकारमसद्विद्धिमैनमाश्रममात्यज॥
असत शशशृंगस्यकिलत्यागग्रहौकुत ॥ ३ ॥ असंभवत्यहंकारेकुतेमरणजन्मनी॥ नभःक्षेत्रेतयाव्युप्तकेनसंगृह्यतेफलम् ॥ ४ ॥ निर
शशांतमकलमवभावात्मकततम्॥ परमादप्यणो सूक्ष्मंचिन्मात्रत्वमनोमयम्॥५॥ यथाभसस्तरंगादियथाहेम्नोंगदादिच ॥ तद्वा
तद्विद्धिरामतथाहंभावभावित ॥६॥ अबोधेनजगत्सर्वमायामयमिवास्थितम॥ बोधेनसकलंब्रह्मरूपमप्यतेनघ॥ ७॥ द्वित्वैकत्व
मतीत्यकाशेपस्य सुखितोभव॥ मादु खितोभवव्यर्थंत्वमिथ्यापुरुषोयथा॥ ८॥ मायेयमतिदुष्पारासासारीगाढतांगता॥ शरदामि
हिमंवाशुबोधेनायातितानवम्॥ ९॥ ॥श्रीरामउवाच॥ ॥परमामागतोस्म्यतसृर्भिविज्ञानाच्छतेनते॥ अवग्रहभयाक्रांत स्वासारेणे
वचातप ॥१०॥ अद्यतेनवसिक्तोहमतगंच्छामिशीतताम्॥ उपर्यपिसमस्तानातिष्ठाम्यतुलसंपदाम् ॥ ११ ॥ नतृप्तिमनुगच्छामिव
चांसिवदतस्तव॥ ऐदवानांमरीचीनांचकोरस्तृपितोयथा ॥ १२ ॥ तमोपिभूयपृच्छामित्वांप्रश्नमिममीश्वर॥ कोनामतृप्तोप्यग्रस्तन
पिबत्यमृतासवम्॥ १३॥ किमुच्यतेमुनिश्रेष्ठमिथ्यापुरुषनामकम्॥ वस्त्ववस्तुकृतजगद्वस्तुजातवदाशुमे॥ १४॥

तस्मात्समपरिशिष्यमवतिष्ठित सुखितोभवेत्यर्थ ॥ अतदर्शनेनुवक्ष्यमाणपुरुषस्येवदु खप्राप्तिस्तवमाभूदित्याह ॥ मेति ॥ ८ ॥ तानवमपक्षयम् ॥ ९ ॥ अवग्रहोवर्षप्रतिबंधस्त
त्प्रयुक्तातपभयोनतवोऽयंधारामतस्त्वासारेणेव ॥ १० ॥ अपीतिपूर्ववाक्यार्थसमुच्चये ॥ हिरण्यगर्भसंपत्तीनामतुलसंपदामुपरिनिरतिशयानंदलक्षणेतिष्ठामि ॥ ११ ॥ नतउक्ती
नामास्वादनेनतृप्तिभाव ॥ १२ ॥ ज्ञातम्पतत्त्वस्यसम्यगनुभवाप्तोपि ॥ अग्रस्तरूपमासवपेयम ॥ १३ ॥ एवमशसयोन्मुखीकृतगुरुमति मादु खितोभवव्यर्थंत्वमिथ्यापुरुषो
यथेतिपात्ससूचितमिथ्यापुरुषाख्यानकौतुकात्प्रश्नं पृच्छति ॥ किमुच्यतइति ॥ यन्मिथ्यापुरुषेणवस्तुअवस्तुकृतं अवस्तुजगद्वस्तुजातंकृतमवेत्यर्थ ॥ १४ ॥

तत्त्वदृशाहासजननीम् ॥ १५ ॥ बालइवपेलवयाधियामूढोविक्षिप्तः ॥ मौर्ख्येणाज्ञानेनचगूढ सवृत ॥ १६ ॥ एकांतेजनदृष्ट्यगोचरेस्थाने ॥ तस्यस्वरूपेणापिमिथ्यात्वमा ह ॥ केशोड्रकमिवेति ॥ १७ ॥ तत्रतदाश्रयस्थानेतस्मान्मिथ्यापुरुषादन्यत्किमपिनास्ति यत्किंचिदस्तीतिप्रतीयतेतत्सएवनतद्व्यतिरिक्तम् ॥ यच्चान्यत्तत्पश्यतितत्तस्यैवभ्रात्या भासमितिसएवेत्युक्तिरित्यर्थ. ॥ अहमेवेदमदृश्यसर्वमितिसनपश्यति यतोदुर्मतिरित्यर्थ ॥ १८ ॥ खस्याहमुपजीवक. खमेउपजीव्य अत खमेवाहमिदंशाचखमात्यरक्षा

श्रीवसिष्ठउवाच ॥ मिथ्यापुरुषबोधायशृणुराघवशोभनाम् ॥ इमामाख्यायिकांहासजननींमदुदीरिताम् ॥ १५ ॥ अस्तिकश्चिन्महा बाहोमायायंत्रमयःपुमान् ॥ बालपेलवधीमूढोगूढोमौर्ख्येणकेवलम् ॥ १६ ॥ सएकांतेक्वचिज्जातःशून्येतत्रैवतिष्ठति ॥ केशोंड्रकमिव व्योम्निमृगतृष्णेववामरौ ॥ १७ ॥ तस्मादन्यन्नतत्रास्तियदस्तिचसएवतत् ॥ यच्चान्यत्तत्तदाभासंनचपश्यतिदुर्मतिः ॥ १८ ॥ संकल्प स्तस्यसंजातस्तत्रवृद्धिमुपेयुषः ॥ खस्याहंखमहंखंमेखंरक्षामीतिनिश्चलः ॥ १९ ॥ खंस्थापयित्वारक्षामिवस्त्विष्टंस्वयमादरात् ॥ इतिसं चिंतयन्व्योमरक्षार्थंसोकरोद्गृहम् ॥ २० ॥ तस्यकोशेबबंधास्थांरक्षितंखंमयेत्यसौ ॥ गृहाकाशेनसंतुष्टस्ततःसरघुनंदन ॥ २१ ॥ अथका लेनतत्तस्यगृहंनाशमुपाययौ ॥ ऋत्वंतरेणाब्दइववातेनेवतरंगकः ॥ २२ ॥ हागृहाकाशनष्टंत्वंहाक्वयातमसिक्षणात् ॥ हाहाभग्नमसि स्वच्छमित्येवैतच्छुशोचसः ॥ २३ ॥ इतिशोकशतंकृत्वापुनस्तत्रैवदुर्मतिः ॥ कूपंचक्रेखरक्षार्थंकूपाकाशपरोभवत् ॥ २४ ॥ ततोनाशं सकालेननीतःकूपोपितस्यवै ॥ कूपाकाशेगतेशोकनिमग्नोसौततोभवत् ॥ २५ ॥ कूपाकाशप्रलापांतेकुंभंशीघ्रमथाकरोत् ॥ कुंभाका शपरोभूत्वास्वयंनिर्वृतिमाययौ ॥ २६ ॥ कुंभोपितस्यकालेननाशंनीतोरघूद्वह ॥ यामेवदिशमादत्तेदुर्भगःसाहिनश्यति ॥ २७ ॥ कुंभा काशप्रलापांतेखरक्षार्थंचकारसः ॥ कुंडंतथैवतेनासौकुंडाकाशपरोभवत् ॥ २८ ॥ कुंडमप्यस्यकालेनकेनचिन्नाशमाययौ ॥ तेजसे वतमस्तेनकुंडाकाशंशुशोचसः ॥ २९ ॥ कुंडाकाशस्यशोकांतेखरक्षार्थंचकारसः ॥ चतुःशालंमहाशालंतदाकाशमयोभवत् ॥ ३० ॥

मि ॥ १९ ॥ खस्यइष्टवस्तुखतत्स्वयकस्मिश्चिदुपाधौस्थापयित्वास्वयमादराद्रक्षामि ॥ २० ॥ तस्यगृहस्यकोशेअतर्भागे ॥ आस्थामदीयमिदमेतावत्खमित्यभिमानम् ॥ सतुष्टःअभूदितिशेष. ॥ २१ ॥ ऋत्वंतरेणशरदा ॥ २२ ॥ एतदाकाशम् ॥ २३ ॥ कूपाकाशेपरोममतयाआसक्तः ॥ २४ ॥ नाशपांसुमृत्तिकादिपूरणेनतिरोभावम् ॥ २५ ॥ निर्वृतितदभिमानसुखम् ॥ २६ ॥ यामेवेतिसामान्योक्त्यातदुपपत्तिः ॥ २७ ॥ २८ ॥ केनचिद्वनगजमहिषास्फटनादिनिमित्तेन ॥ २९ ॥ चतुःशालचतुर्दिक्षुशालायस्यतथा विधम् ॥ मध्येमहाशालसभाकारगृहम् ॥ तदाकाशासक्त्यातदाकाशमयः ॥ स्त्रीमयोजाल्मइतिवत् ॥ ३० ॥

॥ ११ ॥ कुसूलधान्यासपनम ॥ १२ ॥ १३ ॥ तस्यमिथ्यापुरुषस्य ॥ १४ ॥ उपसंहरत्येवमिति ॥ हेरामसमिथ्यापुरुषएवरीत्यागृहेणगहनेनदुःखवेशेनकूपकुंभाद्युपाधिना खगगनंगुहायांतत्तद्भंगेगृहन्स्थितस्तद्गतागतिसंगमूढस्तत्तदभिमानात्तन्निर्माणरक्षणविनाशेपुघनतराद् खांतरादपिघनद् खजातमायातितितोयातिनिर्गच्छतिचेत्यर्थ ॥१५॥ इतिर्मीवासिष्ठम०तात्पर्यप्रकाशेनि पू द्वादशोत्तरशततम सर्ग ॥ ११२ ॥ ॥ मिथ्यापुरुषशब्दादेरर्थोस्फुटमीयते ॥ तथैवाख्यायिकायाश्चतात्पर्यसाम्यवर्णनात् ॥ १ ॥ उत्तानार्थस्याप्यस्यचेष्टाप्रायस्यप्रक्षावस्त्वसंभवमन्यमानोमिथ्यापुरुषाख्यायिकायाअन्यापदेशवाक्यवदन्यार्थेतात्पर्यमितिनिश्चित्यरामस्तंपृच्छति ॥ मिथ्येति ॥ मिथ्यानर प्रसंगेनत्वयायोमायापुरुष कथित अयंकिमभिप्रेतस्तस्यव्योमरक्षणंचकिमभिप्रेतोच्यतइत्यर्थ ॥ १ ॥ यथाभूतयथास्थितम ॥२ ॥ शून्यांबरमायाकाशस्तद्युस्थितम॥३॥

तदप्यस्यजहाराशुकाल कवलितप्रज ॥ जीर्णपर्णयथावातस्तत शोकपरोभवत् ॥ ३१ ॥ सचतु शालशोकातेखरक्षार्थंचकारह ॥ कुसूलमंबुदाकारंतदाकाशपर स्थित ॥३२॥ तदप्यस्यजहाराशुकालावातइवांबुदम् ॥ कुसूलनाशशोकेनतेनासौपयतप्यत ॥ ३३ ॥ एवगृहघतु शालकुभकुडकुसूलकै ॥ तस्यापर्यवसानात्माकालोयमतिवर्त्तते ॥ ३४ ॥ एवंस्थित सविवशोगगनगुहायांगृहन्गृहेणग हनेनकिलात्मबुद्ध्या ॥ दु खांतराद्घनतराद्घनदु खजातमायातियातिचगतागतिसंगमूढ ॥ ३५ ॥ ॥ इ० वा० वा० दे० मो० नि० पू० मिथ्यापुरुषोपाख्यानेआकाशरक्षणनामद्वादशोत्तरशततम सर्ग ॥ ११२ ॥ ॥ ५ ॥ ॥ श्रीरामउवाच ॥ ॥ मिथ्यानरप्रसंगेन किंमायापुरुष प्रभो ॥ कथितोयत्वयाव्योमरक्षणंचकिमुच्यते ॥ १ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ शृणुरामयथाभूतमेतत्प्रकटयामिते ॥ मिथ्यापुरुषवृत्तांतकथयाकथिताधुना ॥ २ ॥ मायायंत्रमय प्रोक्तोय पुमान्रघुनंदन ॥ एनत्वंतमहंकारंविद्धिशून्यांबरोत्थितम् ॥ ३ ॥ यस्मिन्नाकाशकोशेस्मिन्साधोजगदिदंस्थितम् ॥ तदनंतमसच्छून्यंसर्गादौभवतिस्वयम् ॥ ४ ॥ अत स्थितसुदुर्लक्ष्यब्रह्मव्योम्नोयश द्ववत् ॥ तस्मादुदेत्यहंकार पूर्वस्पंदइवानिलात् ॥ ५ ॥ दृढियात सगगनेकल्पयत्यात्मतांगत ॥ अनात्मात्माभिधानेनतेनासौयतते तत ॥ ६ ॥ अनात्मात्मैकरक्षार्थंदेहान्नानाविधानसौ ॥ भूयोभूयोविनाशेपिसृजत्याकुलतांगत ॥ ७ ॥

सर्गादौसृष्टेप्राक ॥ ४ ॥ किंनिरधिष्ठानान्मायाकाशाद्युस्थिततमस्थितचनेत्याह ॥ अतरिति ॥ नतन्निरधिष्ठानंकित्वमरधिष्ठानतयास्थितंसुदुर्लक्ष्यंब्रह्मयस्यतथाविधम् ॥ नन्व दृढियात्कथमहंकारादिजगदुस्थिततत्रदृष्टांतमाह ॥ व्योम्न शब्दवदिति ॥ अहंकारोलिंगात्मासचमायामयस्याभिप्रेतस्तत्रदृष्टांतांतरमाह ॥ स्पंदइवेति ॥ ५ ॥ अनात्मैवर्था स्याआत्मतांगत सन्स्वकारणेगगनेदृढियात कल्पनासहस्रैरिदमेवइष्टमिदमनिष्टमित्यादिकल्पयति तेनकल्पितेनैवाहमित्यात्माभिधानेनअसौइष्टानिष्टप्राप्तिपरिहारायतते ॥ ६ ॥ तस्यानात्मभूतस्यात्मनोरक्षार्थंमहत पूर्वपूर्वदेहनाशउत्तरोत्तरनानाविधान्देहान्कामकर्मवासनानुसारेणसृजति ॥ ७ ॥

सःअहंकारएव ॥ ८ ॥ कूपकुंभादिशब्दैरप्युच्चावचदेहाएवलक्षणयोक्ताइत्याह ॥ कूपेति ॥ तद्योग्नितदवच्छिन्नेमायामयात्मनिआत्मभावनांयाति ॥ ९ ॥ क्रियोपाधिभेद निमित्तयौगिकनामानि ॥ यैर्यैः क्रियोपाधिभिर्जगदाकारविभ्रमैरयमहंकारआत्मानमोहयतीत्यर्थः ॥ १० ॥ प्राणधारणाज्जीवोबाह्यार्थाध्यवसायाद्बुद्धिस्तन्मननान्मनस्त च्चितनाच्चित्तमसत्कल्पनान्मायापरिणामिस्वभावत्वात्प्रकृतिःसंकल्पनात्संकल्पःसंकल्पितार्थस्याकलनात्कलनातस्यविपरिणामादिनिमित्तत्वात्कालस्तत्रैकदेशभेदकल्पना त्कलाचेत्यपिविश्रुतैःप्रसिद्धैः ॥ ११ ॥ आदिपदादुत्पत्तिप्रकरणोक्तमनोनामानिसर्वाण्यपिगृह्यन्ते॥अन्यैःकामःसंकल्पोविचिकित्साश्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्यादिश्रुति स्मृत्यादिप्रसिद्धवृत्तिभेदनामभिश्चवृत्तिबाहुल्येनबहुतागतैः ॥ १२ ॥ तस्मादन्यन्नतत्रास्तियदस्तिचसएवतदितियदुक्ततदनुभवमारोपयति ॥ भूतेति ॥ पूर्णेब्रह्मणिस्वेनप्रथमशू

सएवमायापुरुषोमिथ्यापुरुषएवसः॥ असदेवोदितोव्यर्थोप्यहंकारोहिमायया ॥ ८ ॥ कूपकुंडचतुःशालकुंभादीन्देहकानसौ ॥ कृत्वा रक्षितआत्मेतियातितद्योग्निभावनम् ॥ ९ ॥ अहंकारस्यतस्यास्यनामानीमानिराघव ॥ शृणुयैर्जगदाकारविभ्रमैर्मोहयत्यसौ ॥ १० ॥ जीवोबुद्धिर्मनश्चित्तंमायाप्रकृतिरित्यपि ॥ संकल्पःकलनाकालःकलाचेत्यपिविश्रुतैः ॥ ११ ॥ एवमाद्यैस्तथान्यैश्चनामभिर्बहुतांगतैः॥ सहस्ररूपोहंकारःकल्पितार्थैर्विजृंभते ॥ १२ ॥ भूताकाशेततेशून्येजगन्निर्भित्तिनिश्चितम् ॥ सुखदुःखान्यनुभवन्मिथ्यैवपुरुषःस्थितः ॥ १३ ॥ यथैवमिथ्यापुरुषोरक्षन्व्योमात्मशंकया ॥ घटाकाशादिपुक्लिष्टएवंमाक्लेशवान्भव ॥ १४ ॥ आकाशादपिविस्तीर्णःशुद्धःसूक्ष्मः शिवःशुभः ॥ यआत्मासकथंकेनगृह्यतेरक्ष्यतेथवा ॥ १५ ॥ हृदयाकाशमात्रस्यशरीरक्षयसंक्षये ॥ व्यर्थंभूतानिशोचंतिनष्टआत्मेतिशं कया ॥ १६ ॥ घटादिषुप्रणष्टेषुयथाकाशाद्यखंडितम् ॥ तथादेहेपुनष्टेपुदेहीनित्यमलेपकः ॥ १७ ॥ शुद्धश्चिन्मात्रआत्मायमाकाशादप्य णोरणुः ॥ स्वानुभूत्यंशमात्रंहिखवद्रामननश्यति ॥ १८ ॥ नजायतेनम्रियतेक्वचित्किंचित्कदाचन ॥ जगद्विवर्त्तरूपेणकेवलंब्रह्मजृंभते ॥ १९ ॥ सत्यमेकंपदंशांतमादिमध्यांतवर्जितम् ॥ भावाभावविनिर्मुक्तमितिमत्वासुखीभव ॥ २० ॥

न्यरूपेभूताकाशेततेविस्तृतेसतितत्रवाय्वादिकल्पनाक्रमेणकल्पितजगद्गंधर्वनगरमिवनिर्भित्तिकुड्याद्यावरणशून्यमेवयुक्त्याविमर्शैर्निश्चितम् ॥ नह्यच्छिद्रेब्रह्मणिच्छिद्रआका शःप्रथममुपपद्यते ॥ सचशून्यात्माअतिविस्तृतोऽचलश्चलनात्मावायुःकथंसपद्यते सचवायुर्नीरूपोऽनुष्णस्तद्विरुद्धस्वभावतेजःकथंसपद्यते तच्चोष्णदाहस्वभावंकथंतद्विरुद्ध शैत्याप्यायनस्वभाववारिसपद्यते तच्चद्रवशोषाकाठिन्यस्वभावकथंतद्विरुद्धस्वभावपृथिवीभावमापद्यतेअतोनिर्भित्त्येवजगदितिनिश्चितंतत्रचसपुरुषोमिथ्यैवसुखदुःखान्य नुभवन्स्थितइत्यर्थः ॥ १३ ॥ नचपश्यतिदुर्मतिरितिवर्णिताज्ञमिथ्यापुरुषोयथामिथ्याक्लेशमनुभूयस्थितस्तथात्वमाभूरित्याह ॥ यथैवेति ॥ १४ ॥ १५ ॥ शरीरलक्षणस्य क्षयस्यनिवासस्यसंक्षये ॥ १६ ॥ १७ ॥ स्वानुभूत्यंशःअहंकारनिष्कृष्टस्वप्रकाशचित्तावन्मात्रंहि ॥ १८ ॥ १९ ॥ २० ॥

माणितमिथ्यापुरुषरूपमहंकारत्याजयन्पूर्वशिष्टचिन्मात्रैकस्थैर्योपदेशेनोपसहरति॥सर्वापदामिति ॥ अस्वतन्त्रमन्यापारकत्वादस्वतन्त्रम् ॥ आसन्नोनरकादिपातोयस्मात्तथाविध
सर्वविवेकविरोधि अनार्यैनियमहंकृतिपदं सकलमभिमतव्यवहारेंद्रियविषयलक्षणफलासहितंबोधाम्मूलोच्छेदेनविमुच्यशेषेनिष्कृष्टचिन्मात्रैसुबद्धपदृढस्थितिश्चेत्सर्वोत्तम
नामयासीत्यर्थः ॥ २१ ॥ ॥ इतिश्रीवासिष्ठम॰तात्पर्यप्रकाशेनि॰पू॰मयोदशोत्तरशततम सर्ग ॥ ११३ ॥ ॥ ५ ॥ ॥ विविच्यसदसद्रूपेदृष्टांतैरिहभूरिशः ॥
असद्रूपनिरासेनसद्रूपेस्थैर्यमीर्यते ॥ १ ॥ अथत सर्वस्यमनोविकल्पमात्रत्वादविकल्पकसुमदर्शनमेमुक्तरोनिरासइतिव्युत्पादयितुमथमपरेब्रह्मणिमन कल्पनामाह ॥ परस्मादि

सर्वापदांनिलयमध्रुवमस्वतन्त्रमासन्नपातमविवेकमनार्यमज्ञम् ॥ बोधादहंकृतिपदंसफलंविमुच्यशेषेसुबद्धपदमुत्तमतांप्रयासि ॥ ॥२१॥ ॥इ॰वा॰वा॰दे॰मो॰नि॰पू॰मिथ्यापुरुषोपाख्याननामत्रयोदशोत्तरशततम सर्ग ॥११३॥ ॥५॥ ॥श्रीवसिष्ठउवाच॥ परस्माद्ब्रह्मणःपूर्वंमनःप्रथममुत्थितम् ॥ मननात्मकमाभोगितत्स्यमेवस्थितिंगतम् ॥ १ ॥ पुष्पकोशइवामोदोमहोर्मिरिवसागरे ॥ रश्मिजालमिवादित्येमनोब्रह्मणिराघव ॥ २॥ तस्यादस्यात्मतत्त्वस्यविस्मृत्यैवगतंस्थितिम् ॥ नान्यस्मादागतंरामजगद्रज्जुभुजंगवत् ॥३॥ आदित्यव्यतिरेकेणयोभावयतिराघव ॥ रश्मिजालमिदंह्येतत्तस्यान्यदिवभास्वत ॥४॥ कनकव्यतिरेकेणकेयूरंयेनभावितम् ॥ केयूरमेवतत्तस्यनतस्यकनकंहितत् ॥ ५ ॥ आदित्याव्यतिरेकेणरश्मयोयेनभाविता ॥ आदित्यएवतेतस्यनिर्विकल्प सउच्यते ॥ ६ ॥ सलिलव्यतिरेकेणतरंगोयेनभावित॥ तरंगबुद्धिरेवैकास्थितातस्यनवारिधी ॥७॥ सलिलाव्यतिरेकेणतरंगोयेनभाव्यते॥ अंबुसामान्यताबुद्धिर्निर्विकल्प सउच्यते॥ ८ ॥ कनकाव्यतिरेकेणकेयूरंयेनभाव्यते ॥ कनकैकमहाबुद्धिर्निर्विकल्प सउच्यते॥ ९ ॥ पावकव्यतिरेकेणज्वालालीयेनभाविता॥ तस्याग्निबुद्धिर्गलतिज्वालाधीरेवतिष्ठति ॥ १० ॥

ति ॥ पूर्वंसर्गादिकालेप्रथमसर्वकल्पनाम्न्यःपूर्वंतन्मनस्तत्परेब्रह्मणिअपृथक्सत्तयास्थितमेवसत्कल्पनांतरनिमित्ततयाऽभ्यासात्स्थितिंगतमित्यर्थः ॥ १ ॥ अपृथक्सत्तया
स्थितौदृष्टांतानाह ॥ पुष्पकोशेइति ॥ २ ॥ तस्यमेवेत्यशदृष्टांतैर्विशदीकृत्यस्थितिंगतमित्यर्थंविवृणोति ॥ तस्येति ॥ विस्मृत्याभ्रमतिसंधानात्मकेनाज्ञानेनैवसर्वजगत्कल्प
नामूलतयास्थितिंगतम् ॥ ३ ॥ तथाचजगत्सत्त्वाभावव्यपनयाभावनेअभ्यासत्त्वाभावनयाविभावनेनुसत्परमहिनेतिदृष्टांतैरुपपादयति ॥ आदित्येत्यादिना ॥ इदंरश्मिजालंय
आदित्यव्यतिरेकेणभावयतितस्यप्रतिभास्वतआदित्यादन्यदिवस्यादित्यन्वय ॥ ४ ॥ नतस्येति ॥ कनकत्वबुद्धे केयूरेणैवापरोधादितिभाव ॥ ५ ॥ आदित्याव्यतिरेकेणनि
र्विकल्पोरश्मिभेदविकल्पशून्य ॥ ६ ॥ कल्पिताकल्पितरूपाभ्यामर्थद्वयसत्त्वनाकल्पनबुद्धिभ्यांपुरुषोपिसविकल्पोनिर्विकल्पश्चभवतीत्याह ॥ सलिलेत्यादिना ॥ ७ ॥
॥ ८ ॥ ९ ॥ गलतिनोद्भवति ॥ १० ॥

कल्पिताकारानुविद्धाबुद्धिस्तत्रैवास्थाबद्धातन्मूलानिकल्पनातराणिचकरोतीत्याह ॥ ज्वालेति ॥ अभ्रलेखेवज्वालाजालंज्वालाजालाभ्रलेखासेवरंजितातदाकारतापन्ने कल्पिताकारानुविद्धाबुद्धिस्तत्रैवास्थाबद्धातन्मूलानिकल्पनांतराणिचकरोतीत्याह ॥ ज्वालेति ॥ ११॥१२॥ निर्विकल्प उक्तयासमाहकद्विविधविकल्परहि तियावत् ॥ स्थितिर्बुद्धिवृत्ति ॥ तद्गतानिज्वालाजालगतानिचलनोर्ध्वगमनऋजुवक्रतादीनिचआदत्तेकल्पयति ॥ नानातामिति ॥ कोटरशब्दआंतरप्रत्यग्व त ॥ वस्तुषुवैकल्पिकपदार्थेषु ॥ मज्जतिसत्यबुद्ध्याआसज्जते ॥ १३ ॥ दृष्टांतेउपपादितविकल्पत्यागप्रकारदार्ष्टांतिकेउपदिशति ॥ नानातामिति ॥ कोटरशब्दआंतरप्रत्यग्व स्तुपर ॥ १४ ॥ स्फुरतास्वप्रकाशेनात्मनैवसकल्पनामिकाशक्तियदाकरोतितदामनोभवतीतिपरेणान्वय. ॥ १५ ॥ विश्वाकारास्वाकृतिभावयन्विश्वात्मासमष्टिमनोभवति ॥ १६ ॥ तद्विश्वाकारसकल्पात्मकसमष्टिचेतोहिरण्यगर्भात्मकम् ॥ १७ ॥ यथायथाभावयतितदवयुत्यप्रपंचयति ॥ कीटत्वमिति ॥ १८ ॥ १९ ॥ मिथ्याशब्दोऽलीकप

ज्वालाजालाभ्रलेखेवरंजितासातथास्थितिः ॥ तामेवास्थांसमादत्तेतद्गतान्याकुलामतिः ॥ ११ ॥ पावकाव्यतिरेकेणज्वालालीयनभा व्यते॥ तस्याग्निबुद्धिरेकास्तिनिर्विकल्पःसउच्यते ॥ १२॥ योनिर्विकल्पःसमहान्सोसंक्षीणमहामतिः ॥ प्राप्तव्यंतेनसंप्राप्तंनासौवस्तुषुम ज्जति ॥ १३ ॥ नानातामखिलांत्यक्त्वाशुद्धचिन्मात्रकोटरे ॥ संवेद्येनविनिर्मुक्तेसंवित्तत्त्वेस्थितोभव ॥ १४ ॥ स्वयमेवात्मनैवात्माशक्तिं संकल्पनामिकाम् ॥ यदाकरोतिस्फुरतास्पंदशक्तिमिवानिलः ॥ १५ ॥ तदापृथगिवाभासंसंकल्पकलनामयम् ॥ मनोभवतिविश्वात्मा भावयन्स्वाकृतिंस्वयम् ॥ १६ ॥ तत्संकल्पात्मकंचेतोयथेदमखिलंजगत् ॥ संकल्पयतिसंकल्पैस्तथैवभवतिक्षणात् ॥ १७ ॥ कीटत्वमब्ज जत्वंचमेरुत्वंमरुतांतथा ॥ मनोजीवमहंकारबुद्धिचित्तादिनामकम् ॥ १८ ॥ संकल्पताद्वितैकत्वमेत्यचेतोजगत्स्थितिम् ॥ तनोतितस्यां तदनुनानातांगच्छतिस्वयम् ॥ १९ ॥ संकल्पमयमेवेदंजगदाभोगिदृश्यते ॥ नसत्यंनचमिथ्यैवस्वप्नजालमिवोत्थितम् ॥ २० ॥ जंतोर्य थामनोराज्यंविविधारंभभासुरम् ॥ ब्राह्मंतथेदंविततंमनोराज्यंविराजते ॥ २१ ॥ यथाभूतार्थभावित्वात्तदेतत्प्रविलीयते ॥ परमार्थेन दृष्टंचेत्तदिदंनैवकिंचन ॥ २२ ॥ दृश्यंत्वपरमार्थेनप्रयातिशतशाखताम् ॥ जलमूर्मितरंगादिकलनार्हपरिस्फुरन् ॥ २३ ॥ यथांबुधिर्व पुर्धत्तेस्वभावेनतथाचितः ॥ कुर्वन्कर्मसहस्राणित्यणुचित्स्पंदनादृते ॥ २४ ॥

रः ॥ स्वप्नजालमिवानिर्वचनीयमित्यर्थः ॥ २० ॥ ब्रह्मणोहिरण्यगर्भस्येदब्राह्मम् ॥ २१ ॥ मिथ्यात्वादेवतत्त्वज्ञानेनयथास्थितब्रह्मात्मनैवभावित्वान्मायिकरूपेणप्रविलीय तइत्याह ॥ यथाभूतेति ॥ तथाचश्रुतिर्मनसैवेदमाप्तव्यंनेहनानास्तिकिंचनेति ॥ २२ ॥ तत्त्वदर्शनाभावेतर्हिकिंभवतितदाह ॥ दृश्यमिति ॥ तदाअज्ञातपरमार्थवलेनैवशत शाखताप्रयातियथाअंबुधिर्जलमेवसन्ऊर्मितरंगादिकलनार्हरूपपरिगृह्यस्फुरन्अंबुधिवपुर्धत्तेतथाकर्मसहस्राणिकुर्वन्जनोपिअणुचितश्चिदाभासयुक्तस्यमनसःस्पंदनादृते कूटस्थचितोऽपूर्वंकिंचिदपिविकारादिनकुरुते अतस्त्वमपिकिंचित्तुच्छतरभेदत्यजन्सन्गमनादिसर्वव्यवहारंकुर्वन्नप्यपूर्वमभिनवजगद्रूपंकिंचिद्वैतरूपंसत्यंनविद्यतेकिंतुपूर्वसि द्धब्रह्मैवपरमार्थसत्यंविद्यतइतिभावयेतिचतुर्थार्धपर्यंतमन्वयः ॥ २३ ॥ २४ ॥

॥ २५ ॥ २६ ॥ प्रबृंहिताकारविवर्त्तविजृम्भिताकारतद्बाधविजृम्भिताकारया ॥ प्रशमस्वभावमुक्तप्रतीतिविषयमवसाययति ॥ पदार्थैस्ताविना ॥ २७ ॥ २८ ॥ सवेद्यत्वमपिशब्दात्त्
न्निदानमपि ॥ २९ ॥ इरामायमोक्षएवबन्धदृश्याविकाविफलाभिमानासकलांश्चितांप्रसमस्तसर्वयत्नेननिरस्यत्यागाविसर्वेंद्रियजयान्मौनीवशीविगतमानमदश्चसन्स्वोचितराज्या
दिकार्यंकुर्वन्ननहंकृतिमहात्मैवभूत्वातिष्ठस्वेत्यर्थः ॥३०॥ ॥ इतिश्रीवा॰तात्पर्यप्र॰नि॰पू॰चतुर्दशोत्तरशततमःसर्गः ॥ ११४ ॥ ॥ ७ ॥ ॥ महाकर्त्रादिशब्दानाम्व्याख्यानम्

नापूर्वंकुरुतेकिंचित्किंचिदिदमतस्त्यजन् ॥ गच्छन्शृण्वन्स्पृशन्जिघ्रन्वदन्व्यवहरन्स्वपन् ॥ २५ ॥ नापूर्वंविद्यतेकिंचित्सत्यमित्येव
भावयन् ॥ यद्यत्करोपितद्ब्रह्मचिन्मात्रममलंततम् ॥ २६ ॥ ब्रह्मप्रबृंहिताकारतस्मादन्यन्नविद्यते ॥ पदार्थजातेसर्वस्मिन्नवित्सारमये
स्थिते ॥ २७ ॥ संविदेवेदमखिलंजगन्नान्यास्तिकल्पना ॥ संवित्स्फुरणमात्रेस्मिन्जगज्जालकनामनि ॥ २८ ॥ इदमन्यदिदंचान्यदि
तिमिथ्याग्रहः कुतः ॥ सम्भवादखिलाकारेष्वेकस्याएवसंविदः ॥ संवेद्यमपिनास्त्येवबन्धमोक्षावतः कथम् ॥ २९ ॥ मोक्षोयमेवखलुबन्धइ
तिप्रमत्याचितांनिरस्यसकलांविफलाभिमानाम् ॥ मौनीवशीविगतमानमदोमहात्माकुर्वन्स्वकार्यमनहंकृतिरेवतिष्ठ ॥ ३० ॥ ॥ इ
त्यार्षेवा॰वा॰दे॰मो॰नि॰पू॰परमार्थोपदेशोनामचतुर्दशाधिकशततमः सर्गः ॥ ११४ ॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ महा
कर्त्तामहाभोक्तामहात्यागीभवानघ ॥ सर्वाः शंकाःपरित्यज्यधैर्यमालम्ब्यशाश्वतम् ॥ १ ॥ ॥ श्रीरामउवाच ॥ ॥ किमुच्यतेमहाकर्त्ता
महात्यागीकिमुच्यते ॥ किमुच्यतेमहाभोक्तासम्यक्कथयमेप्रभो ॥ २ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ एतद्व्रतत्रयंरामपुराचन्द्रार्धमौलिना ॥
भृंगीशायतुसम्प्रोक्तंयेनासौविज्वरः स्थितः ॥ ३ ॥ सुमेरावुत्तरेशृंगेपूर्वंशशिकलाधरः ॥ अतिष्ठदभ्रसंकाशेसमग्रपरिवारवान् ॥ ४ ॥
तमपृच्छन्महातेजास्तनुविज्ञानवान्स्थितः ॥ भृंगीशःप्रणतोरामबद्धांजलिरुमापतिम् ॥ ५ ॥ ॥ भृंगीशउवाच ॥ ॥ भगवन्देवदेवेश
सर्वज्ञपरमेश्वर ॥ यदहंपरिपृच्छामिकृपयातद्वदाशुमे ॥ ६ ॥ संसाररचनांनाथतरंगतरलामिमाम् ॥ अवलोक्यविमुह्यामितत्त्वविश्रां
तिवर्जितः ॥ ७ ॥ कंमतंनिश्चयंकांतमुररीकृत्यसुस्थितम् ॥ अस्मिन्जगज्जीर्णगृहेतिष्ठामिविगतज्वरम् ॥ ८ ॥

रिहशम्भुना ॥ लक्ष्माणिजीवन्मुक्तानांवर्ण्यंतेभृंगिणेऽधिमे ॥ १ ॥ सर्वाःपुण्यपापादिशंकाःपरित्यज्यधैर्यंनिर्भयकूटस्थात्मभावम् ॥ १ ॥ किंलक्षणःप्राप्तोमहाकर्त्ताउच्य
तइतिप्रिष्टपि ॥ २ ॥ अभ्यासकालमपेक्ष्यप्रतत्त्वयमिन्युच्यतेफलकालत्वमानित्याविकमिवेदलक्षणत्रयसंपद्यते ॥ असौभृंगीशः ॥ ३ ॥ ४ ॥ तनुविज्ञानवान्मन्दात्मज्ञानः ॥
यद्यपिगाणपत्यप्राप्तिकालएवसार्वज्ञ्येनतेनप्राप्तमस्तितथाप्यात्मज्ञानस्यानितरज्ञानसाधारण्याय भोमासस्यामीषमारोप्योक्तिः ॥ ५ ॥ ६ ॥ तरंगतरलांनश्वरीम् ॥ ज्ञातेपि
तत्त्वेप्रमासस्याविश्रांतिवर्जितः ॥ ७ ॥ कांतंविश्रांतिसुखरम्यम् ॥ तिष्ठामितिष्ठेयम् ॥ ८ ॥

॥ ९ ॥ १० ॥ तत्रसर्वा शंका परित्यज्येत्यर्शंविवृणोति ॥ धर्माधर्माविति ॥ अकर्त्रभोक्त्रात्मनिश्चयात्कर्तृत्वादिशंकाविरहिताकृतिः ॥ हत्वापिसइमांल्लोकाननितिवज्ज्ञानप्र
भावोक्तिरियनतुयथेष्टाचरणाभ्यनुज्ञेतिबोध्यम् ॥ ११ ॥ रागद्वेषादिपदैस्तद्व्यजकचेष्टाउच्यते ॥ फलाफलेइष्टानिष्टयोऽनपेक्षेणनिष्कामेनमनसालोकसंग्रहमात्रप्रयोजनेन
करोति ॥ १२ ॥ मौनमुनिकर्ममननयोगादि ॥ गतउद्वेग.फलासिद्ध्यन्यथात्वप्रयुक्तउद्वेगोयस्मिन्कर्मणि ॥ १३ ॥ दैवात्सपन्नेप्वश्वमेधकलजभक्षणादिकार्येषुधार्मिकोहं
पापोहमितिवाकुशंकयाकल्पितैर्धर्माधर्मैः ॥ १४ ॥ १५ ॥ शोकनिमित्तेषुनशोचतेउदयनिमित्तेषुचनोदेति ॥ १६ ॥ प्रारब्धोपनीतयथोचितप्रयोजनकालेकार्यानुरूपवृत्तस्थ

महाभोक्तामहाकर्त्तामहात्यागीभवानघ ॥ ९ ॥ ॥ भृंगीशउवाच ॥ किमुच्यतेमहाकर्त्तामहाभोक्ताकिमुच्यते ॥ किमुच्यतेमहात्यागीसम्यक्कथयमेप्रभो ॥ १० ॥ ॥ईश्वरउवाच॥ ॥धर्माधर्मौमहाभागशंकाविरहिताशयः ॥ यःकरोतियथाप्राप्तौमहाकर्त्तासउच्यते ॥ ११ ॥ रागद्वेषौसुखंदुःखंधर्माधर्मौफलाफले ॥ यःकरोत्यनपेक्षेणमहाकर्त्तासउच्यते ॥ १२ ॥ मौनवान्निरहंभावोनिर्मलोमुक्तमत्सरः ॥ यःकरोतिगतोद्वेगंमहाकर्त्तासउच्यते ॥ १३ ॥ शुभाशुभेषुकार्येषुधर्माधर्मैःकुशंकया ॥ मतिर्नलिप्यतेयस्यमहाकर्तासउच्यते ॥ १४ ॥ सर्वत्रविगतस्नेहोयःसाक्षिवदवस्थितः ॥ निरिच्छंवर्त्ततेकार्येमहाकर्त्तासउच्यते ॥ १५ ॥ उद्वेगानंदरहितःसमयास्वच्छयाधिया ॥ नशोचतेयोनोदेतिमहाकर्त्तासउच्यते ॥ १६ ॥ यथार्थकालेमतिमानसंसक्तमनामुनिः ॥ कार्यानुरूपवृत्तस्थोमहाकर्त्तासउच्यते ॥ १७ ॥ उदासीनःकर्तृतांचकर्माकर्माचरंश्चयः ॥ समंयात्यंतरत्यंतंमहाकर्त्तासउच्यते ॥ १८ ॥ स्वभावेनैवयःशांतःसमतांनजहातिवै ॥ शुभाशुभंत्वाचरन्योमहाकर्तासउच्यते ॥ १९ ॥ जन्मस्थितिविनाशेषुसोदयास्तमयेषुच ॥ सममेवमनोयस्यमहाकर्तासउच्यते ॥ २० ॥ नकिंचनद्वेष्टितथानकिंचिदभिकांक्षति ॥ भुंक्तेचप्रकृतंसर्वंमहाभोक्तासउच्यते ॥ २१ ॥ नादत्तेप्याददानश्चनाचरत्याचरन्नपि ॥ भुंजानोपिनयोभुंक्तेमहाभोक्तासउच्यते ॥ २२ ॥ साक्षिवत्सकलंलोकव्यवहारमखिन्नधीः ॥ पश्यत्यपगतेच्छंयोमहाभोक्तासउच्यते ॥ २३ ॥

स्तत्प्रयोजनानुकूलचेष्टावान् ॥ १७ ॥ कर्माकर्मविहितनिषिद्धकर्मणीस्वयंदैवाच्चरंस्तत्कर्तृतामन्यप्रेरणेनहेतुकर्तृतामापद्यमानश्चांतर्मनस्यकर्त्रात्मदृढनिश्चयेनोभयत्रयःसम
भावयाति ॥ १८ ॥ योमित्रेषुशुभममित्रेष्वशुभमाचरन्नपिसमतांनजहाति हियस्माद्धेतोर्यःस्वभावेनैवशांतः ॥ नह्यस्यचंद्राह्लादकतासदृश स्वभावोन्यथाभवतीत्यर्थः ॥ १९ ॥
जन्मादिषुषट्सुभावविकारेषुउदयोवृद्धिरस्तमयोपक्षयस्तत्सहितेषुशरीरेषुनिर्विकारसन्मात्रात्मदर्शनात्सममेवमनोयस्य ॥ २० ॥ महाभोक्तुर्लक्षणान्याह ॥ नकिंचिदित्यादिना ॥
प्रकृतंप्रस्तुतंप्रारब्धोपनीतम् ॥ २१ ॥ इंद्रियैर्विषयानाददानोप्यद्वयात्मपूर्णात्मप्रतिष्ठत्वान्नादत्ते ॥ हस्तपादादिनाआदानगमनाद्याचरन्नपिनिर्ष्क्रियात्मबुद्ध्यानाचरति ॥ एवमशनायाद्यतीतनित्यतृप्तात्मदर्शनान्नभुंक्ते ॥ २२ ॥ उदासीनःसाक्षाद्द्रष्टासाक्षीतद्वत् ॥ २३ ॥

अवापज्ञपारिक्रियायोगे ॥ भावाभावैर्लोभमये ॥ ममाविक्षेपात्सर्वैः ॥ नोत्कामतिनविक्षिपति ॥ १४ ॥ रम्यमह्रद्यस्यारम्यम् ॥ यथास्वणमयोम्याघोरम्यस्वणदृस्या रम्यलधनिभाव ॥ २५ ॥ समनुल्यस्याभोगायसमुपगृह्णाति ॥ २६ ॥ यस्मादुपयामानोपयामा ॥ चकार प्रागुक्तगुणकत्वसमुच्चयार्थ ॥ २७ ॥ अधमअस्वादुनिकृष्टम व्यन्जम ॥ २८ ॥ विरसरनिविपातम ॥ २९ ॥ स्वदपकारशकरापरिष्कृतभक्ष्यभेदे ॥ ३० ॥ अभोज्यभाकुमशस्यम् ॥ अस्वादुतिक्तादि ॥ विकल्पितविकल्पनम ॥ ३१ ॥ भरामनष्टकाद्रवान्वकराच्छादनादि ॥ परउत्कृष्टविद्याभ्याच्छादनादि ॥ ३२ ॥ इतिप्रागुक्तलक्षणयाधियानिरतिशयानन्दपूर्णाद्ब्रह्मधियामिथ्येतिसत्यक्तमितिभा ॥ ३३ ॥

सुखेदुःखे क्रियायोगेभावाभावेभ्रमप्रदे ॥ यस्यनोत्क्रामतिमतिर्महाभोक्तासउच्यते ॥ २४ ॥ जरामरणमापच्चराज्यंदारिद्र्यमेवच ॥ रम्यमित्येवयोवेत्तिमहाभोक्तासउच्यते ॥ २५ ॥ महांतिसुखदुःखानियःपयांसीवसागर ॥ समसमुपगृह्णातिमहाभोक्तासउच्यते ॥ २६ ॥ अहिंसाममतातुष्टिश्चर्यैयादिवाशव ॥ नोपयस्माद्योपयातामहाभोक्तासउच्यते ॥ २७ ॥ कट्वम्ललवणतिक्तमस्वष्टंस्वष्टमुत्तमम् ॥ अधमयोऽत्तिसाम्येनमहाभोक्तासउच्यते ॥ २८ ॥ सरसनीरसचैवसुरतविरततया ॥ यः पश्यतिसमसौम्योमहाभोक्तासउच्यते ॥ २९ ॥ क्षारेखटप्रकारेचशुभंवाप्यशुभंतथा ॥ समतासुस्थिरायस्यमहाभोक्तासउच्यते ॥ ३० ॥ इदभोज्यमभोज्यचेत्येवत्यक्ताविकल्पितम् ॥ गताभिलापयाभुक्तंमहाभोक्तासउच्यते ॥ ३१ ॥ आपदसंपदमोहमानदमपरंपरम् ॥ योभुक्तेसमयाबुद्ध्यामहाभोक्तासउच्यते ॥ ३२ ॥ धर्माधर्मौसुखंदुःखतयामरणजन्मनी ॥ धियायेनेतिसत्यक्तमहात्यागीसउच्यते ॥ ३३ ॥ सर्वेच्छा सकला शंका सर्वेहा सर्वनिश्चया ॥ धियायेनपरित्यक्तामहात्यागीसउच्यते ॥ ३४ ॥ देहस्यमनसोदुःखैरिंद्रियाणांमन स्थिते ॥ नूनयेनोज्झितासत्तामहात्यागीसउच्यते ॥ ३५ ॥ नमेदेहानजन्मापियुक्तायुक्तनकर्मणी ॥ इतिनिश्चयवानतमहात्यागीसउच्यते ॥ ३६ ॥ येनधर्ममधर्मंचमनोमननमीहितम् ॥ सर्वमतःपरित्यक्तंमहात्यागीसउच्यते ॥ ३७ ॥ यावतीदृश्यकलनासकलेयविलोक्यते ॥ सायेनसुष्ठुसत्यक्तामहात्यागीसउच्यते ॥ ३८ ॥ इत्युक्तंदेवदेवेनभृंगीशायपुरानघ ॥ एतांदृष्टिमवष्टभ्यातिष्ठरामगतज्वर ॥ ३९ ॥ नित्योदितविमलरूपमनंतमाद्यंब्रह्मास्तिनेतरकलाकलनंहिकिंचित् ॥ इत्येवभावयनिरंजनतामुपेतोनिर्वाणमेहिसकलामलशांतवृत्तिः ॥ ४० ॥

सर्वाईहायाकायन कायचेष्टा ॥ धियाविषयबाधादेवपरित्यक्ता ॥ १४ ॥ देहादीनांसत्तानसदुःखं सहयेनमिथ्यात्वबुद्ध्याउज्झितात्यक्ता ॥ ३५ ॥ युक्तायुक्तेविहितनिषिद्धेश्वरानिष्टाचरणरूपेवा ॥ ३६ ॥ धर्ममधर्मंचशारीरम ॥ मनोमननमानसम ॥ ईहितमाचारिचेष्टितम ॥ ३७ ॥ सुष्ठुसम्यग्दर्शनेनबाधाससत्यक्ता ॥ ३८ ॥ उपसंहरति ॥ इत्यादि ॥ ३९ ॥ यथा भावनयामहाकर्तामहाभोक्तामहात्यागीवानायासनभर्वत्तिनोभावनांरामायोपदिशति ॥ नित्योदितमिति ॥ देहात्मत्वेदेहादिविषयकोशानामवस्थात्रयस्यचनिरासननिरंजनतामुपेत सर्वपरिशिष्टनित्योदितविमलात्मब्रह्मैवास्तिकिंचित्तदितरस्यनाकलननास्तित्येवभावय ॥ एवंसदाभावयन्भावाभिव्यक्त्याकलनामलभ्यशांतावस्थयोयस्यतथाविधः सन्निर्वाणमेहिप्राप्नुहीत्यर्थः ॥ ४० ॥

हेअगइहमसारेयत्किंचिद्भातितत्समस्तेषुकल्पेषुद्विपरार्द्धावधिकालावयवेषुप्रसिद्धानासर्वकार्याणामेकबीजमूलकारणभूतमनामयंस्वयंजन्मादिविकारामयशून्यंपरमात्मरूप
ब्रह्मैव ॥ तच्चबृहत्सर्गभेदैर्बृंहितसर्वभावविकल्पमपिखमाकाशमेवास्ति ॥ सर्वविकल्पशून्यमेवेत्यर्थ. ॥ ४१ ॥ यन क्वचित्किंचिदपिसतूस्थूलमसतसूक्ष्मंअपिशब्दात्कारणचस
देकरसाद्ब्रह्मणोऽन्यन्नसंभवत्येव ॥ सत.पृथक्त्वेअसत्त्वापत्ते ॥ अपृथक्त्वेसदेकरस्यापत्ते ॥ प्रकारांतरस्यचसभावनायोगादितिभावः॥ हेसाधोऽनस्त्वसद्ब्रह्मैवाहमित्येवातर्दृढ
निश्चय सन्प्रथमसमाध्यभ्यासबलेनस्थित्वासप्तमभूमिकाक्रमेणाधिरुह्यगताशंकविलासतथैवास्वेत्यर्थः ॥ ४२ ॥ हेमाधोत्वयदिअतर्मुखःसन्निराकृताहंकृतितामुपैपितदाव
हिष्ठसमस्तकार्यंजातकुर्वन्नपिकदाचिदपिखेदंनायास्येवेत्यन्वय. ॥ ४३ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०पंचदशोत्तरशततम सर्गः ॥ ११५ ॥ ॥ ७ ॥

अन्यत्क्वचित्किं अनामयंब्रह्मसमस्तकल्पकार्यैकबीजंपरमात्मरूपम् ॥ बृहच्चतद्बृंहितसर्वभावंखमस्तिभातीहयदंगकिंचित् ॥ ४१ ॥ चिदिदंकदाचिन्नसंभवत्येवसदप्यसच्च ॥ इत्येवसाधोदृढनिश्चयोंतःस्थित्वागताशंकविलासमास्व ॥ ४२ ॥ अंतर्मुखःसन्सततंसमस्तं कुर्वन्बहिष्ठंखलुकार्यजातम् ॥ नखेदमायासिकदाचिदेवनिराकृताहंकृतितामुपैषि ॥ ४३ ॥ ॥इ०वा०वा०दे०मो०नि०पू० ब्रतत्र यनिरूपणंनामपंचदशोत्तरशततमःसर्गः॥ ११५॥ ॥७॥ ॥श्रीरामउवाच॥ ॥भगवन्सर्वधर्मज्ञचित्तेहंकारनाम नि॥ गलितेवागलद्रूपेलिंगंसत्वस्यकिंभवेत्॥ १॥ ॥श्रीवसिष्ठउवाच॥ ॥बलादपिहिसंजातानलिंपंत्याशयंसितम्॥ लोभमोहाद योदोषाःपयांसीवसरोरुहम्॥ २॥ मुदिताद्याःश्रियोवक्त्रंनमुंचंतिकदाचन॥ गलत्यहंकारमयेचित्तेगलतिदुष्कृते॥ ३॥ वासनाग्रंथय श्छिन्नाइवत्रुट्यंत्यलंशनैः॥ कोपस्तानवमायातिमोहोमांद्यंहिगच्छति॥ ४॥ कामःक्लमंगच्छतिचलोभःक्वापिपलायते॥ नोल्लसंतींद्रि याण्युच्चैःखेदःस्फुरतिनोच्चकैः॥ ५॥ नदुःखान्युपबृंहंतिनवल्गंतिसुखानिच॥ सर्वत्रसमतोदेतिहृदिशैत्यप्रदायिनी॥ ६॥ सुखदुःखाद यस्त्वेतद्दृश्यंतेयदिवामुखे॥ दृश्यंतएवतुच्छत्वान्नानुलिंपंतितेमनः॥ ७॥ चित्तेगलतिगीर्वाणगणस्यस्पृहणीयताम्॥ साधुर्गच्छत्युदत्य स्यसमताशीतचंद्रिका॥८॥

चित्तस्यगलतोनित्यंचतुर्थादिषुभूमिषु ॥ गलितस्यचलक्ष्माणिवर्ण्यतेत्रपुमाश्रयात् ॥ १ ॥ सत्वस्यक्षीणवासन स्यमनसोलिंगलक्षणम ॥ १ ॥ एवपृष्टोवसिष्ठ प्रथमलोभमोहादिदोषक्षयएवमुख्यतल्लक्षणमित्याह ॥ बलादिति ॥ संजाताःसजनिता.परीक्षाद्यर्थंपरेणबलादपिसंपादिताइत्य र्थ. ॥ सितशुद्धशुभच ॥२॥ सदामुखप्रसन्नतादिरपितल्लक्षणमित्याह ॥ मुदिताद्याइति ॥ दुष्कृतेविषादहेतौपापेज्ञानाग्निनागलतिसति ॥३॥उक्तप्रपचयनूलक्षणांतराण्यप्याह॥ वासनेत्यादिना ॥ ४ ॥ ५ ॥ शैत्यतापनिवृत्तिस्तत्प्रदायिनी ॥ ६ ॥ ननुज्ञानिनामपिकदाचिन्मुखेसुखदुःखादिलिंगानिप्रसादमालिन्यादीनिदृश्यतेयथाप्राक्कुंभस्यदुर्वास.शापश्र वणेशिखिध्वजस्ययथावाविश्वामित्रेणहरिश्चंद्रच्छलनेपुत्रघातेनचवसिष्ठस्य तत्कथमुदिताद्याःश्रियोवक्त्रंनमुचतीतिलक्षणघटतेतत्राह ॥ सुखदु.खादयइति ॥ भोजकप्रारब्ध प्राबल्येनदुःखनाल्लिंगमालिन्याभासयो.कदाचिद्दृश्येप्युत्तरक्षणेमिथ्यात्वबुद्धिबाधितत्वान्नतयोस्तच्चित्तलेपकत्वमितिनस्वाभाविकमुखादिप्रसादविघातइत्यर्थः ॥ ७ ॥ ८ ॥

अप नेराधिपपदादिपानि ॥ निघूर्तविनीतम ॥ ९ ॥ भावैर्भिभावैरभावैरारिम्भ्यैर्विरुद्धोविषमोपि ॥ सर्वागलिताहंकाराणाम ॥ १० ॥ इदानीमात्मलाभस्यातिसुलभत्वादर्शय स्वयमप्रयत्नमपि सुपसहरति ॥ युध्यालोकनेति ॥ युध्यिलक्षणेनालोकेनप्रकाशेन ॥ अथवाप्रत्यक्षमवणयाबुद्धयाआलोकनमालोकस्तावन्मात्रेणसाध्येलभ्येअस्तमिता आपदायस्मिन्नुत्स्थंस्ततया विधेयपरमात्मवस्तुनियोनप्रवर्ततेतंधिगस्त्वित्यर्थः ॥ ११ ॥ मवत्सीतर्हिक प्रथममुपायइमिचेद्विवेकवैराग्येएवेत्याह ॥ विश्रांतिमिति ॥ हेअगदु स्तरमानामाम जननमरणोपलक्षितसंसारसागरमुत्तितीर्षोरुत्तरितुमिच्छो पुरुषस्यमत्सारेनिरतिशयानंदात्मनि चिरमुचितां विश्रांतिप्रापमुमहमहं इदजगत्किंपरमात्मनःस्वरूप किमीदृशस्यास्यहेतुःकिम्भोगैश्चकिंस्याद्विति निरंतराभ्यस्ताविचारवैराग्यात्मिकामतिरेवप्रथमोऽभिमतउपायोऽभ्युपाय ॥ तस्मात्तमेवाश्रयेत्यर्थः ॥ १२ ॥ ॥ इतिश्री

उपशांतचकांतचसैथ्यमप्रतिरोधिच ॥ निभृतयोर्जितंस्वच्छंवहतीत्यमहद्वपु ॥ ९ ॥ भावाभावविरुद्धोपिविचित्रापिमहानपि ॥ नान टायनखेदायसतांसंस्तुतिविभ्रम ॥ १० ॥ युध्यालोकेनसाध्येस्मिन्वस्तुन्यस्तमितापदि ॥ प्रवर्ततेनयोमोहात्तंधिगस्तुनराधमम् ॥ ११ ॥ विश्रांतिमाप्तुमुचितांचिरमंगद्गु स्तरत्नाकरंजननसागरमुत्तितीर्षो ॥ कोहंकथजगदिदंचपरंचकिंस्यात्किंभोगकैरितिमति परमोभ्यु पाय ॥ १२ ॥ ॥ इत्यार्षेवासिष्ठमहारामायणेवा०दे०मो०नि०पू०गलितचित्तलक्षणकथननामषोडशाधिकशततम सर्ग ॥ ११६ ॥ श्रीवसिष्ठउवाच ॥ ॥ भवतामादिपुरुषइक्ष्वाकुर्नामभूपति ॥ इक्ष्वाकुवंशप्रभवयथामुक्तस्तथाशृणु ॥ १ ॥ इक्ष्वाकुर्नामभूपाल स्वरा ज्यपरिपालयन् ॥ कदाचिदेकांतगतामनसासमचिंतयत् ॥ २ ॥ जरामरणसंक्षोभसुखदु खभ्रमस्थित ॥ अस्यदृश्यप्रपंचस्यकोहेतु स्यादितिस्वयम् ॥ ३ ॥ जगतोनविवेदासौकारणंचिंतयन्नपि ॥ अथैकदापृच्छदसौब्रह्मलोकागतमनुम् ॥ ४ ॥ पूजितंस्वसभासस्थंभग वंतंप्रजापतिम् ॥ ॥ इक्ष्वाकुरुवाच ॥ ॥ मांयोजयतिधार्ष्ट्येनभगवन्करुणानिधे ॥ ५ ॥ भवत्प्रसादएवायमवंतंप्रष्टुमंजसा ॥ कुत स र्गायमायात स्वरूपचास्यकीदृशम् ॥ ६ ॥ कियदेतज्जगत्कस्यकदाकेनेतिकथ्यते ॥ अहंकथंचविषमादस्मात्संसृतिविभ्रमात् ॥ ७ ॥ विमु च्येयपनालीनाज्जालादिवविहंगम ॥ ॥ मनुरुवाच ॥ ॥ अहोनुचिरकालेनविवेकस्तुविकासिनि ॥ ८ ॥ वितथानर्थविच्छेत्तासार प्रश्नस्त्वयारुत ॥ यदिदृश्यसतेकिंचित्तन्नास्तिनृपकिंचन ॥ ९ ॥

वा०तात्पर्य०नि०पू०षोडशोत्तरशततमःसर्ग ॥ ११६ ॥ ॥ १ ॥ ॥ कोहंकथजगदितिविचारेणनिदर्शनम ॥ इक्ष्वाकोर्मनुनाप्रोक्तोविवेकःसंप्रकीर्त्यते ॥ १ ॥ आदिपुरुषो मूलपुरुषायथा ॥ यादृशविचारेणमुक्तःप्रागुक्तपदविश्रांतस्तथातविचारंशृण्वित्यर्थ ॥ १ ॥ २ ॥ इतिस्वयसमचिंतयदितिपूर्वेणान्वय ॥ ३ ॥ नविवेदविवेकेनवेद ॥ ब्रह्मलोकादागतं मनुस्वपितरम ॥ ४ ॥ तमप्रथममनुयार्थनयाभिमुखीकरोति ॥ मामिति ॥ ५ ॥ प्रष्टव्यांशदर्शयति ॥ कुतइत्यादिना ॥ ६ ॥ सस्यथापरिमाणतश्चकियम् ॥ कस्यभोक्तु स्वामि नश्च ॥ कदाकेनरचितमितिप्रश्नस्यार्थशि कथ्यते ॥ अनेनमुख्यादिप्रमाणमूलमुपदेशपरंपरासमवायागतमेवतयावाच्यमनुतर्केणकिंचित्कल्पयित्वेतिसूचितम ॥ ७ ॥ विमुच्येये निकवकतरिपक्षी ॥ ८ ॥ त्वमतस्यापदशयोनितात्स्वरूपचास्यकीदृशमितिप्रश्नस्यप्रथममुत्तरमाह ॥ यदिति ॥ तथाचमिथ्याजगत असत्स्वरूपमतस्त्वेतिभाव ॥ ९ ॥

ननुसांख्याउपादानेपरमसूक्ष्मतयास्थितमेवकार्यंनिमित्तैराविर्भाव्यतेइत्याहुः ॥ वेदांतिनस्तुसद्ब्रह्मैवजगदात्मनासर्गेसंपद्यतइति तत्कथंतन्नास्तीत्युच्यतेतत्राद्यंप्रत्याह ॥ यस्त्वि
ति ॥ साक्षिणाइंद्रियैर्वायन्नोदृश्यतेतत्किंचिदपिस्वोपादानेनस्थितंप्रमाणाभावादित्यर्थः ॥ १० ॥ स्यादपिनसभावनाप्यस्ययतोनास्तीत्यर्थः ॥ द्वितीयंप्रत्याह ॥ अविनाश
मिति ॥ ११ ॥ प्रतिबिंबमिति ॥ तथाचादर्शसत्तायाःप्रतिबिंबेष्विवससर्गाध्यासाद्ब्रह्मसत्तानुविद्धजगदस्तुनामतथापिस्वतःसत्त्वंतस्यनास्त्येवेतितन्नास्तीत्युक्तिर्युक्तैवेतिभावः
॥ १२ ॥ कस्तर्हिबहुस्यांप्रजायेयेतिसंकल्प्यब्रह्मणएवजगज्जीवभावश्रुतेराशयस्तत्राह ॥ भा:स्वभावेति ॥ स्फुरणशक्तयश्चिदाभासाः ॥ ब्रह्मांडतांस्थूलसमष्ट्यभिमानेनत
द्रूपताम् ॥ भूततांपृथिव्याद्यभिमानेनतद्रूपताम् ॥ १३ ॥ अन्यत्वंचतुर्विधभूतग्रामताम् ॥ तथामिथ्योपाधिषुभ्रांत्याचिदाभासानांबंधादिकल्पनानवस्तुतस्तत्प्रसक्तिरित्याह ॥

यथागंधर्वनगरंयथावारिमरुस्थले ॥ यत्तुनोदृश्यतेकिंचित्तन्नकिंचिदिवस्थितम् ॥ १० ॥ मनःषष्ठेंद्रियातीतंयत्स्यादपिनकिंचन ॥ अ
विनाशंतदस्तीहतत्सदात्मेतिकथ्यते ॥ ११ ॥ इयंतुसर्वदृश्याढ्याराजन्सर्गपरंपरा ॥ तस्मिन्नेवमहादर्शेप्रतिबिंबमुपागता ॥ १२ ॥ भाः
स्वभावसमुत्पन्नाब्रह्मस्फुरणशक्तयः ॥ काश्चिद्ब्रह्मांडतांयांतिकाश्चिद्गच्छंतिभूतताम् ॥ १३ ॥ अन्यास्त्वन्यत्वमायांतिभवत्येवंजगत्स्थि
तिः ॥ नबंधोस्तिनमोक्षोस्तिब्रह्मैवास्तिनिरामयम् ॥ नैक्यमस्तिनचद्वित्वंसंवित्सारंविजृंभते ॥ १४ ॥ एकंयथास्फुरतिवारितरंगभंगैरेवं
परिस्फुरतिचिन्नचकिंचिदेव ॥ त्वंबंधमोक्षकलनेप्रविमुच्यदूरेस्वस्थोभवाऽभवभयोऽभयसारएव ॥ १५ ॥ ॥ इ० वा० वा० दे० मोक्षो
पायेषुनिर्वाणप्रकरणेपू० इक्ष्वाकुमनुसंवादेसप्तदशाधिकशततमः सर्गः ॥ ११७ ॥ ॥ ७ ॥ ॥ मनुरुवाच ॥ ॥ संकल्पोन्मु
खतांयाताःसत्यश्चिन्मात्रसंविदः ॥ आपस्तरंगत्वमिवयांतिभूमिपजीवताम् ॥ १ ॥ तेजीवाःसंसरंतीहसंसारेपूर्वमुत्थिते ॥ सुखदुःखद
शामोहोमनस्येवास्तिनात्मनि ॥ २ ॥ अदृश्योदृश्यतेराहुर्गृहीतेनयथेंदुना ॥ तथानुभवमात्रात्मादृश्येनात्मावलोक्यते ॥ ३ ॥ नशास्त्रैर्ना
पिगुरुणादृश्यतेपरमेश्वरः ॥ दृश्यतेस्वात्मनैवात्मास्वयासत्त्वस्थयाधिया ॥ ४ ॥

नबंधोस्तीति ॥ १४ ॥ उक्तद्वितीयप्रश्नोत्तरमुपसंहरति ॥ एकमिति ॥ यथाएकंवारितरंगभेदैःपरिस्फुरतिएवंचिदपिजगद्भेदैःपरिस्फुरति ॥ मायामात्रत्वात्तत्त्वनकिंचिदेव
अतस्त्वंबंधमोक्षभ्रमौदूरेप्रविमुच्यनविद्यतेभवभयंयस्यतथाविधः सन्नभयंब्रह्मसारएवभवेत्यर्थः ॥ १५ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० पू० सप्तदशोत्तरश
ततमः सर्गः ॥ ११७ ॥ ॥ ७ ॥ ॥ कुतःसर्गःकदाकस्यकेनेत्येषामिहोत्तरं ॥ तथात्मदर्शनोपायामनुमात्रप्रकीर्तिताः ॥ १ ॥ तत्रादौशुद्धसंविदोजीवभावेनिमित्तमा
ह ॥ संकल्पेति ॥ चिन्मात्रस्यशुद्धचैतन्यस्याविद्यायातत्तत्संस्कारविचित्रायांप्रतिबिंबरूपाःसंविदःसंस्काराणामंतःकरणतयापरिणामेतदवच्छिन्नतयाजीवतांयांति ॥ १ ॥
पूर्वमुत्थितेउपाधितयाआविर्भूतेसंसारेसमष्टिव्यष्टिमनसःकार्ये ॥ एवंसतियत्फलितंतदाह ॥ सुखदुःखेति ॥ २ ॥ नन्वदृश्यआत्माकथंदृश्येमनसिसंसारदुःखीतद्विमुक्तोवाअ
विवेकेविवेकेवादृश्यतेतत्राह ॥ अदृश्यइति ॥ दृश्येनांतःकरणेनचरमसाक्षात्काररूपतत्परिणामेनचनिमित्तेन ॥ ३ ॥ सत्त्वस्थयानिरहंममतावस्थया ॥ ४ ॥

निरहममतारहद्रियाविपुकथप्रष्टव्य मिदृष्टांतेनस्पष्टयति ॥ पथिकाइति ॥ ५ ॥ अवधीरणमुपमासारिनापीडनम् ॥ ६ ॥ पदार्थमात्रउदासीनपदार्थसाधारणसत्यज्यआत्मम प्शुद्धात्मदस्यातद्भावमधुर ॥ ७ ॥ ८ ॥ नविद्यतेकिंचिन्मात्रमविषयतयाविधयचिन्मात्रतद्रूपोगगनादप्यणु सूक्ष्म ॥ संसारबंधनीनमुक्तिहेतुरितियावत् ॥ ९ ॥ अहजगतो नवहिर्भावसंगविप्रवेशनस्फुरण शुद्धदृष्टांतमाह ॥ यथेति ॥ १० ॥ यथाअगदाद्याकारताहेमएवसन्निवेशावयवविन्यासवैचित्र्यतद्वदात्मनोपिजगत्तन्मूलमायारूपेदत्य थ ॥ ११ ॥ आत्मनःकालात्मभागस्यतद्रूपविनुकालस्यजगन्नुपसंहारस्यानसमुद्रतामाह ॥ विनाशेति ॥ विनाशएववाडवोवडवाग्निस्तेनाक्रांतविशिष्टम् ॥ भूतानिप्राणि

पथिका पथिदृश्यंतेरागद्वेषविमुक्तया ॥ यथाधियातथैवैतेद्रष्टव्याःस्वेंद्रियादय ॥५॥ एतेपुनादरःकार्यं सतानैवावधीरणम् ॥ पदार्थ मात्रताविश्रांतिपूर्वेतेयथासुखम् ॥६॥ पदार्थमात्रदेहादिधियासंत्यज्यदूरत ॥ आशीतलांतःकरणोनित्यमात्ममयोभव ॥ ७॥ दे होहमितियाबुद्धि साससारनिबंधनी ॥ नकदाचिदियबुद्धिरादेयाहिमुमुक्षुभि ॥८॥ नकिंचिन्मात्रचिन्मात्ररूपोस्मिगगनादणु ॥ इ तियाशाश्वतीबुद्धिस्सानससारबंधनी ॥ ९ ॥ यथाविमलतोयानांबहिरंतश्चभावनम् ॥ तेजस्तिष्ठतिसर्वत्रतथात्मासर्ववस्तुषु ॥ १० ॥ सन्निवेशाशवैचित्र्ययथाहेमांगदादिता ॥ आत्मनस्तदतद्रूपातथैवजगदादिता ॥ ११ ॥ विनाशवाडवाक्रांतभीमंकाममहार्णवम् ॥ जगज्जालतरंगिण्योयांतिभूततरंगिका ॥ १२ ॥ तथाप्ययाप्यपूर्णस्यय पाताकालवारिधे ॥ तमात्मानमहागस्यराजन्भावयसर्वदा ॥ १३ ॥ अनात्मन्यात्मतामस्मिन्देहादौदृश्यजालके ॥ त्यक्त्वासत्वमुपारूढोगूढस्तिष्ठयथासुखम् ॥ १४ ॥ कुपकोटरसंसुप्तविस्मृत्यजन नीसुतम् ॥ यथारोदितिपुत्रार्थंतथात्मार्थमयंजन ॥ १५ ॥ अजरामरमात्मानमबुद्ध्वापरिरोदिति ॥ हाहतोहमनाथोहनष्टोस्मीतिवपु र्व्यय ॥१६॥ यथावारिपरिस्पंदान्नानाकारविलोक्यते ॥ तथासंकल्पवशतश्चिद्द्रूपपरिबृंहति ॥ १७॥ सस्याप्यसंकल्पकलंकमुक्तचित्त त्वमात्मन्युपशांतकल्प ॥ स्पंदेप्यसंस्पंदमिवेहतिष्ठस्वस्थ सुखीराज्यमिदप्रशाधि ॥ १८ ॥ ॥इत्यार्षेवासिष्ठम०वा०दे०मो०नि० पृ०इक्ष्वाकुमनुसंवादेअष्टादशोत्तरशततमःसर्ग ॥ ११८ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ७ ॥

निकायास्तरमायासाम् ॥ १२ ॥ यथासर्वजगज्जालभक्षणेप्ययाप्यपूर्णस्यात्मस्यकालवारिधेर्यःपातापानकर्ता ॥ १३ ॥ सत्वनिर्वासनीभावम् ॥ १४ ॥ नित्यलब्धेप्यात्म न्यप्राप्ततामत्वाशोकदृश्याह ॥ कुपकोटरेति ॥ १५ ॥ वपुर्व्ययेदेहनाशे ॥ १६ ॥ परितोबृंहतिकार्यपरंपरयावर्धते ॥ १७ ॥ हेपुत्रत्वसंकल्पकलंकमुक्तचित्तमात्मनिसंस्थाप्यस मूलसर्वसंसारोपशमेप्रारब्धभोगोपयोगितत्वनिभासावशेषाद्युपशांतकल्प सम्यग्व्यवहारायवहद्रियाविस्पंदेपितस्याभासमात्रत्वादसत्स्पंदमस्पंदमेवेहव्यवहारभूमौस्वस्थ सुखीनिष्ठ इदराज्यप्रशाधिपालय ॥ शास शास्तेरस्याशीपूर्त्वेनासिद्धत्वाद्धेर्धि ॥ १८ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाण पू०अष्टादशोत्तरशततम सर्ग ॥ ११८ ॥

वर्ण्यंतेपुरुषस्यात्रस्वातंत्र्यमोक्षबंधयोः ॥ विद्याविद्यात्मशक्तिभ्यांसत्यासत्यात्मनिश्चयात् ॥१॥ स्पंदेप्यसंस्पंदमिवेहतिष्ठत्युक्तंतत्रब्रह्मकिमर्थमाययास्पंदतेकथंचासंस्पंदतिष्ठ
तीतीक्ष्वाकोर्जिज्ञासालिंगैरुपलक्ष्यमनुराह॥सर्गात्मभिरिति॥ विभुरयपरमात्माप्रसवधर्मिण्याअविद्याशक्त्याअविदुष.प्रतिसर्गात्मकैः स्पंदैः क्रीडते विदुष प्रतितुतत्संहारात्मिक
याविद्याशक्त्यासमूलसर्गसंहृत्यबाधितत्वात्कूटस्थाद्वयेआत्मनिसदैवतिष्ठतीत्यर्थ ॥ १ ॥ तत्रसर्गात्प्रवृत्तस्यसर्गशक्त्युदयइववैराग्यान्निवृत्तस्यसंहारशक्त्युदयोविस्वरसतएव
भवतीत्याह ॥ स्वयमिति ॥ २ ॥ तत्रज्ञातात्मनिजीवजगत्साधारणसत्तासमान्यात्मनाविभाव्यमानेतद्विशेषात्मकबाह्याध्यात्मिकपदार्थजालकल्पनेदृष्टांतानाह ॥ चंद्रेति ॥
अर्चिष प्रभाज्वालाप्रभेदायथाकल्पितास्तथाजगद्वैचित्र्यतद्ग्राहकबुद्ध्यादिवैचित्र्यकल्पितमित्यन्वयः ॥ तमायोग्रहणमायाशबलदृष्टांतार्थम् ॥ ३ ॥ ४ ॥ सर्वगतस्यप्रकाश

मनुरुवाच॥ ॥सर्गात्मभिर्विभुःस्पंदैःक्रीडतेबालवत्स्वयम्॥ संहारात्मकशक्त्याथसंहृत्यात्मनितिष्ठति॥१॥ स्वयमस्यतथाशक्तिरुदे
त्याबध्यतेयया॥ स्वयमस्यतथाशक्तिरुदेत्युन्मुच्यतेयया॥ २॥ चंद्रार्कवह्नितमायोरत्नादीनांयथार्चिषः॥ यथापत्रादिवृक्षाणांनिर्झरा
णांयथाकणाः॥ ३ ॥ तथेदंब्रह्मणिस्फारेजगद्बुद्ध्यादिकल्पितम्॥ दुःखप्रदमतज्ज्ञानांतदेवातदिवस्थितम्॥ ४॥ अहोनुचित्रामायेयं
ताततविश्वविमोहिनी॥ सर्वांगप्रोतमप्यात्मायदात्मानंनपश्यति॥ ५॥ चिदादर्शमयंसर्वंजगदित्येवभावयन्॥ यस्तिष्ठत्युपशांतेच्छःस
ब्रह्मकवचःसुखी॥६॥ अहमर्थविमुक्तेनभावेनाभावरूपिणा॥ सर्वंशून्यंनिरालंबंचिद्रूपमितिभावयेत्॥ ७॥ इदंरम्यमिदंनेतिबीजंतं
दुःखसंततेः॥ तस्मिन्साम्याग्निनादग्धेदुःखस्यावसरःकुतः॥८॥ राजन्नभावनास्त्रेणरम्यारम्यविभागिता॥ पौरुषातिशयेनाशुस्वेनैवां
तर्विलूयताम्॥ ९॥ अभावनेनभावनंविलूयकर्मकाननम्॥ परंसमेत्यतानवंविशोकएवतिष्ठभोः॥ १०॥

स्यात्मनोऽदर्शनमसतोऽप्रकाशस्यापिजगत स्फुटदर्शनंचाश्चर्यमघटितघटनासमर्थमायाबलादेवेत्याह ॥ अहोइति ॥ सर्वेष्वंगेष्ववयवप्रायेषुबाह्याध्यात्मिकभावेषुप्रोतमतर्ब
हिश्चव्याप्तमप्यात्मानयद्यस्मान्नपश्यति ॥ ५॥ कयातर्हिभावनयाआत्मानदृष्ट्वासुखीस्यात्तामाह ॥ चिदादर्शमयमित्यादिना ॥ आदर्शेनगरादिरिवब्रह्मणिजगत्प्रातिभासिक
नवास्तवमितिभावयन्नित्यर्थ. ॥ मोहशरैरभेद्यब्रह्मैवकवचयस्यस ॥ ६ ॥ ७ ॥ इतिवैषम्यकल्पनमितिशेषः ॥ ८ ॥ अभावनासमाध्यभ्यासेनसर्वदृश्यविस्मृतिस्तल्लक्षणेना
स्त्रेणरम्यारम्ययो.पदार्थयोर्विभाविताप्रियाप्रियतावैषम्यकल्पना साहिरागद्वेषहेतु.समदृष्टिदार्ढ्यलक्षणपुरुषप्रयत्नातिशयेनविलूयताछिद्यताम ॥ ९ ॥ समाधिलक्षणेनाभा
वनेनबाह्यार्थभावनतत्प्रयोजकधर्माधर्मलक्षणकर्मकाननचविलूयपरमाकाशादप्यधिकतानवसौक्ष्म्यंसमेत्यतद्बलेनशोकहेत्वलेपेविशोकएवतिष्ठत्यर्थ ॥ १० ॥

६पुपत्वत्रयवविवक विलासवान्समाधिनागलितवासकल्पनाभास पूर्णात्मनाभरितभुवनाभोगभूत्वा अधिगत परानंदस्यंदात्...

यस्यतथाविपलद्विभागवहिर्स्फुरनस्वर्वंडम्आपन्नोऽत एवनिरलससारामयः पञ्चमपदभूमिकासुचिरायस्थित्वातिसममभूमिकायामात्यन्तिकविक्षेपवैषम्यशमेनसमस्वच्छिकापु

णताम्भित शुभआत्यन्तिकवासनाज्ञानकालुष्यक्षयात्स्वच्छआभोगआकारोयस्यतथाविधोऽभयचिद्वपुर्भवेत्यर्थः ॥ अथवाचतुर्भिःपाद्भिश्चतुर्थ्यायाश्चतस्रोभूमिकाः क्रमेणव

र्णिताव्याख्या ॥ ११ ॥ ॥ इतिश्रीवासिष्ठम॰तात्पर्यप्रकाशेनिर्वाणप्रकरणेएकोनविंशाधिकशततम सर्ग ॥ ११९ ॥ ॥ ९ ॥ ॥ ९ ॥ ॥ ९ ॥ ॥

मुमुक्षुभूमिकाप्तिस्तामुच्यमानस्यनूत्तरा ॥ मक्तस्यपरतस्तिस्रोभूमिका समदर्शिता ॥ १ ॥ परसमेत्यनानन्तमितियोगभूमिकाभ्यासफलमुक्त्वाउपायभूताभूमिकाभेदान्वर्ण

यति ॥ शास्त्रसज्जनेति ॥ तथावसाधनचतुष्टयसंपन्नस्यसहितगुरुसन्निध्यादिमहायकश्रवणप्रथमाभूमिकेत्यादिनिष्कर्षा उत्पत्तिप्रकरणदर्शिताएवाभवोध्या ॥ १ ॥ विचार

शान्तिभुवनाभोगाभूत्वाविभागवद्दिस्फुरनोगलितफलनाभासोल्लासोविवेकविलासवान् ॥ अधिगतपरानंदस्यंदश्चिरायनिरामय श

ममममितस्वच्छाभोगोभवाभयचिद्वपु ॥ ११ ॥ ॥ इत्यार्षेवा॰वा॰दे॰मो॰नि॰पू॰इक्ष्वाकुमनुसंवादेएकोनविंशाधिकशततम

सर्ग ॥ ११९ ॥ ॥ ७ ॥ ॥ मनुरुवाच ॥ ॥ शास्त्रसज्जनसंपर्कैः प्रज्ञामादौविवर्धयेत् ॥ प्रथमाभूमिकैषोक्तायोगस्यैवचयो

गिन ॥ १ ॥ विचारणाद्वितीयास्यात्तृतीयासंगभावना ॥ विलापनीचतुर्थीस्याद्वासनाविलयात्मिका ॥ २ ॥ शुद्धसंविन्मयानंदरूपाभ

वतिपंचमी ॥ अर्धसुप्तप्रबुद्धाभोजीवन्मुक्तोत्रतिष्ठति ॥ ३ ॥ स्वसंवेदनरूपाचषष्ठीभवतिभूमिका ॥ आनंदैकघनाकारासुषुप्तसदृश

स्थिति ॥ ४ ॥ तुर्यावस्थापशांतायमुक्तिरेवहकेवलम् ॥ समतास्वच्छतासौम्यासप्तमीभूमिकाभवेत् ॥ ५ ॥ तुर्यातीतातुर्यावस्थापरा

निर्वाणरूपिणी ॥ सप्तमीसापरिप्रौढाविषय स्यान्नजीवताम् ॥ ६ ॥ पूर्वावस्थात्रयत्वत्रजाग्रदित्येवसंस्थितम् ॥ चतुर्थीस्वप्नइत्युक्ता

स्वप्नाभंयत्रवैजगत् ॥ ७ ॥ आनंदैकघनीभावात्सुषुप्ताख्यातुपंचमी ॥ असंवेदनरूपायषष्ठीतुर्यपदाभिधा ॥ ८ ॥

णामननम् ॥ असंगस्याद्वितीयात्मनाभावना निदिध्यासनम् ॥ विलापनीतस्वसाक्षात्कारेणाज्ञानाविप्रपंचस्यबाधस्तत्साधिनी ॥ वासनापदनतवाश्रयाऽविलयमसते ॥ २ ॥

शुद्धसंविन्मयसमाधिपरिपाकात्प्रथमपुरायआनंदलहूपा ॥ तादृशादृष्टतिनानुभवमारोहयति ॥ अर्धेति ॥ यथानिद्राशेषेणार्धसुप्तःऽर्धप्रबुद्ध पुरुषोवासराद्यादीनाक

णपञ्चप्यन स्वापसुखासक्तोनप्रतिवचनादिव्यवहारमिच्छतितद्वदुत्थानकालेऽप्यस्यांभूमिकायांयोगीतिष्ठतीत्यर्थः ॥ ३ ॥ स्वसंवेदनस्वरसतएवाक्षीयमाणाप्रज्ञाकारानुभवरू

पिलक्षणा ॥ तदवाह ॥ आनंदेति ॥ ४ ॥ अथपरासाचत्तिरपिक्षीयतेतदाविस्फुरतमसैवपूर्णस्वप्रकाशमवशिष्यतेतथाजीवत स्थिति सप्तमीभूमिकासैवमयाशमसमसितस्व

च्छभोगतियामुक्तत्वथ ॥ आद्यभूमिकात्रयस्यवक्ष्यमाणरीत्यैकाकारात्पष्ठीतुर्या ॥ ५ ॥ सप्तम्याअष्टम्याश्चयोगिजीवनाजीवनमात्रविशेषोनान्यइत्यभेदएवेत्याशयेनाह ॥

तुर्यातीतेति ॥ सप्तमीभूमिरेवतुर्यातीताप्यापरिप्रौढासतीविदेहमुक्तिःसपद्यतेसाचजीवतांयोगिनांविषयोनस्यादित्यर्थः ॥ ६ ॥ ७ ॥ ८ ॥

॥ अंतरिति ॥ तयासप्तमभूमिकाप्रसिद्धया तामेवप्रशंसति ॥ मनोवचोभिरित्यादिना ॥ ९ ॥ तस्यामेवसर्वदृश्यानांप्रत्यगात्मनिसम्यग्विलयादात्यंतिकीजीवन्मुक्ततेत्याह ॥ ॥ १० ॥ ११ ॥ तस्यातुजीवन्मुक्तस्यकीदृशोनुभवस्तमाह ॥ नम्रियेइति ॥ १२ ॥ एककःएकचरोयतिः ॥ १३ ॥ १४ ॥ १५ ॥ अतिक्षुद्रेषुतृणाग्रेषु अतिमहत्स्यवरे अतिप्रकाशेभानौयत्तत्प्रसिद्धतरसन्मात्रतदेवप्रत्यक्चिन्मात्रमहमस्मीत्यखंडमहावाक्यार्थंमत्वेत्यर्थः ॥ १६ ॥ चितोमेमहिमाव्यापकइतितस्यपरमात्मनोमहिमानंज्ञात्वाक्षयीमरणादिदुःखभागित्यर्थः ॥ तथाचश्रुतिः ॥ एषनित्योमहिमाब्राह्मणस्यनवर्धतेकर्मणानोकनीयान् ॥ तस्यैवस्यात्पदवित्तंविदित्वानलिप्यतेकर्मणापापकेनेति ॥ १७ ॥ जीवन्मु

अंतःप्रत्याहृतिवशाच्चेत्यंचेन्नविभावित ॥ मनोवचोभिरग्राह्यास्वप्रकाशपदात्मिका ॥ ९ ॥ तुर्यातीतपदावस्थासप्तमीभूमिकोत्तमा ॥ मुक्तएवास्यसंदेहोमहासमतयातया ॥ १० ॥ यद्भोगसुखदुःखांशैरपरामृष्टपूर्णधीः ॥ सशरीरोऽशरीरोवाभवत्येवंमतिःपुमान् ॥ ११ ॥ नम्रियेनचजीवामिनाहंसन्नाप्यसन्नयम् ॥ आत्मारामोनरस्तिष्ठेत्तन्मुक्तत्वमुदाहृतम् ॥ १२ ॥ व्यवहार्युपशांतोवागृहस्थोवाथवैककः ॥ अहंनकिंचिच्चिदितिमत्वाजीवोनशोचति ॥ १३ ॥ अलेपकोहमजरोनीरागःशांतवासनः ॥ निर्मलास्मिचिदाकाशमितिमत्वानशोचति ॥ १४ ॥ अहमंतादिरहितःशुद्धोबुद्धोऽजरामरः ॥ शांतःसमसमाभासइतिमत्वानशोचति ॥ १५ ॥ तृणाग्रेष्वंबरेभानौनरनागामरेषुच ॥ यत्तदस्तितदेवेतिमत्वाभूयोनशोचति ॥ १६ ॥ तिर्यगूर्ध्वमधस्तान्मेव्यापकोमहिमाचितः ॥ तस्यानंतविलासस्यज्ञात्वेतिकइवक्षयी ॥ १७ ॥ बद्धवासनमर्थोयःसेव्यतेसुखयत्यसौ ॥ यत्सुखायतदेवाशुवस्तुदुःखायनाशतः ॥ १८ ॥ अविनाभावनिष्ठत्वंप्रसिद्धंसुखदुःखयोः ॥ तनुवासनमर्थोयःसेव्यतेवाविवासनम् ॥ १९ ॥ नासौसुखायतेनासौनाशकालेनदुःखदः ॥ क्षीणवासनयाबुद्ध्यायत्कर्मक्रियतेनघ ॥ २० ॥ तद्दग्धबीजवद्भूयोनांकुरंप्रविमुंचति ॥ देहेंद्रियादिनाकर्मकरणौघेनकल्प्यते ॥ २१ ॥ एकःकर्त्ताचभोक्ताचकइवांगोपपद्यते ॥ भावनांसर्वभावेभ्यःसमुत्सृज्यसमुत्थितः ॥ २२ ॥ शशांकशीतलःपूर्णोभातिभासेवभास्करः ॥ क्रियमाणाकृताकर्मतूलश्रीर्देहशाल्मलेः ॥ २३ ॥ ज्ञानानिलसमुद्धूताप्रोड्डीयक्वापिगच्छति ॥ सर्वैवहिकलाजंतोरनभ्यासेननश्यति ॥ २४ ॥

क्तानामपिजीवनस्यविषयभोगाधीनत्वाद्विषयनाशेऽज्ञवदेवदुःखप्राप्तिमाशंक्यविशेषंवक्तुमज्ञस्यविषयनाशेदुःखोत्पत्तिप्रकारमाह ॥ बद्धवासनमितिसार्धेन ॥ १८ ॥ अविनाभावनिष्ठत्वसहावस्थितिनियमः ॥ जीवन्मुक्तानांतद्वैलक्षण्यमाह ॥ तनुवासनमिति ॥ चतुर्थादिभूमिकासुतनुवासनंसप्तमभूमौतुविवासनम् ॥ १९ ॥ एवंकर्मापितेषामलेपकमित्याह ॥ क्षीणेति ॥ २० ॥ देहेंद्रियादिषुभिन्नेष्वेकात्मतादात्म्याध्यासेनतत्कृतकर्मस्वहमेवैककर्त्तेत्यभिमानेहिकर्मभिर्लेपःस्यात् नचमुक्तानांसोस्तीत्याशयेनाह ॥ देहेंद्रियादिनेति ॥ २१ ॥ भावनामहंताद्यध्यासम् ॥ सर्वेभ्योदेहेंद्रियादिभावेभ्यःसम्यगुत्सृज्यसम्यगुत्थितोनिर्गतः ॥ २२ ॥ कृतासंचितरूपा ॥ २३ ॥ कर्मैवज्ञानकलापिकालेननश्येदित्याशंक्याह ॥ सर्वैवेति ॥ २४ ॥

॥ २५ ॥ यथासरस्सुजलधिषुसमुद्रेषु चाच्छंतोयमेकमवस्फुरतितथाखिलेषुमायिकवस्तुषुतत्तद्भेदाध्यासाद्विश्वरूप स्वमस्तुसम्भावस्वभावआत्माएकएवस्फुरतिअत हे अ
गभविलममनस्त्वबाधेनसर्वशांतर्यानिसंकलनमयुक्तभूरिविषयकलापपरिशिष्टसत्तांशमात्रमेवाहमितिविद्धीत्यर्थ ॥ २६ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशे नि
पू० विशत्युत्तरशततम सर्ग ॥ १२० ॥ ॥ ५ ॥ ॥ यथापरूप्यतेजीवोयथाचोद्धृत्यमुच्यते ॥ अमनेभावनेसम्यग्विभज्यमनुनेरिते ॥ १ ॥ यथास्मानिरतिश
यानंदब्रह्मस्वभावस्यकिंपत्कालमज्ञानाज्जीवाख्यातमाह ॥ यावदिति ॥ सांकिसत्यानेत्याह ॥ अविवेकेनेति ॥ १ ॥ अज्ञानक्षयात्क्षयबाधम ॥ २ ॥ भोगाशेषस्वर्गनरकादी
कपर्वाभितोत्यजेत्याह ॥ ऊर्ध्वादिति ॥ भोगार्थताद्रूपायोघटकटरज्जवाभाघटीभवघटवद्भ्रमोमाभूरित्यर्थ ॥ ३ ॥ तस्याविषये सद्व्यवधनमन्योन्यकंठासंजनलक्षणदर्शयति ॥

एषाज्ञानफलात्वत सरूज्जातादिनेदिने॥ वृद्धिमेतियलादेवसुक्षेत्रव्युमशालिवत् ॥ २५॥ एक स्फुरत्यखिलवस्तुपुविश्वरूपआत्मासर
स्सुजलधिष्विवतोयमच्छम् ॥ सशांतसंकलनभूरिकलापमेकसत्तांशमात्रमखिलजगदंगविद्धि ॥ २६ ॥ ॥ इ० वा० वा० दे० मो०
नि० पू० इक्ष्वाकुम० सप्तभूमिकाविभागोनामविंशत्युत्तरशततम सर्ग ॥ १२० ॥ ॥५॥ ॥ मनुरुवाच ॥ ॥ यावद्विपयभोगाशाजी
वाख्यातावदात्मन ॥ अविवेकेनसंपन्नासाप्याशाहिनवस्तुत ॥ १ ॥ विवेकवशतोयातासयमाशायदातदा॥ आत्माजीवत्वमुत्सृज्य
ब्रह्मतामेत्यनामय ॥ २ ॥ ऊर्ध्वादधस्तथाधस्तात्पुनरूर्ध्वंव्रजंश्चिरम् ॥ मासंसारारघट्टस्यचितारज्ज्वाघटीभव ॥३॥ इदममाहमस्येति
व्यवहारघनभ्रमम् ॥ येमोहात्परिसेवंतेअधस्तायांत्यध शठा ॥४॥ अस्याहमेषमेसोयमहमेवतुये किल॥ मोहाबुद्ध्यापरित्यक्तऊर्ध्वा
दूर्ध्वंप्रयांतिते॥५॥ स्वप्रकाशस्वमात्मानमवलम्ब्याविलयितम् ॥ आस्वसपूरिताकाशजगतिस्वपपश्यहे ॥ ६ ॥ यदेवैवचितोरूपततयु
च्चमस्वहितम्॥ तदेवतीर्णसंसार परमेश्वरतांगत ॥ ७॥ ब्रह्मेंद्रविष्णुवरुणाद्यघटकर्तुंसमुद्यता ॥ तदहंचिद्वपु सर्वकरोमीत्येवभावयेत्
॥८॥ येपुयेपुपदार्थेषुदर्शनपुनिगद्यते॥ सर्वमेवांगतत्सत्यंचिद्विलासात्मकंकृश ॥ ९ ॥ चिन्मात्रत्वप्रयातस्यतीर्णमृत्योरचेतस ॥ यो
भवेत्परमानंद केनासौउपमीयते ॥ १० ॥ नाप्यशून्यंनशून्यचनाचिद्रूपनचिन्मयम् ॥ नात्मरूपनान्यरूपभुवनभावयन्भव ॥ ११ ॥

इदमिति ॥ ४ ॥ तस्यानुरूपतम्मूलतादात्म्याध्यासमपित्याजयतस्तत्फलसर्वोत्कर्षमाह ॥ अस्येति ॥ ५ ॥ जगतिसपूरितसर्वतोप्यव्यवधानेनभरितचिदाकाशमेवपश्य ॥ ६ ॥
तत्पूर्णम ॥ ७ ॥ मनुजगत्कर्तृत्वाद्यस्यनास्तिकथपरमेश्वरतामतस्तमाह ॥ ब्रह्मेति ॥ ८ ॥ नन्वसत्या सर्वा क्रियास्तत्त्वविस्ताससुकथमात्मन कर्तृताभावयेदितिचेन्नार्थदोष
आत्मसत्तयैवसर्वकल्पनानांसत्यत्वसंभवादित्याशयेनाह ॥ येष्विति ॥ दर्शनेपुशास्त्रेषु ॥ ९ ॥ ननुसंसारतरणेनकोलाभस्तमाह ॥ चिन्मात्रत्वमिति ॥ निरुपमस्वप्रकाशान
दर्माभिरलाभइत्यर्थ ॥ १० ॥ यदिब्रह्मसत्तयासमरशून्यतर्हिहेतापत्ति यद्विमेतिनतीतिनिषेधाच्छून्यतर्हिसर्वकर्तृत्वालक्षणेश्वरताव्याघात तथायदिजगदचिद्रूपमेवत
र्हिचिदाचिभानादभवमिस्तकल्पनंतेअसद्रूपानुविद्धमेवहिभासकत्वेनसाभास्यतेननीरूप यदितुचिदनुवेधायमस्यचिद्विकारताप्युपेयतेतर्हिचितःसविकारतापत्तिः एवममा
लक्ष्यत्वपिअमतोःसगेनात्ममार्गवधाभावात्तेनस्वात्स्वर्शूल्यताक आत्मरूपत्वेनुमध्यानेनबाधइत्यादिदोषानिर्वचनीयताछादनेनपरिहरति ॥ नापीति ॥ ११ ॥

कथंतर्हितच्छाम्यतितत्राह ॥ एतदिति ॥ एतस्यात्मनःस्वंपारमार्थिकंरूपमासाद्यसाक्षात्कृत्य ॥ १२ ॥ प्रकृतिःस्वाभाविकात्मरूपम् ॥ भावनाअनादिविस्तृतस्वरूपप्रतिसंधा
नंचरमसाक्षात्कारं तत्तदनुप्रवेशात्तन्नाम्नीसाक्षात्काराभिधायदाभवतितदाएषप्रसिद्धःप्रत्यगात्मैवसशास्त्रप्रसिद्धोमोक्ष स्यादित्यर्थः ॥ १३ ॥ तादृशसाक्षात्कारेणजीवन्मु
क्तःकथंतिष्ठतितदाह ॥ प्रशांतेति ॥ शास्त्रार्थजिज्ञासाकाव्यनाटकाद्यर्थजिज्ञासालौकिकप्रियाप्रियादिविकल्पविक्षेपाश्चनिवर्तंतेइतिसमः ॥ १४ ॥ ॥ इतिश्रीवासिष्ठम०
ता०प्र०नि०पू०एकविंशत्युत्तरशततमःसर्गः ॥ १२१ ॥ ॥ ७ ॥ ॥ निरूढस्यात्मबोधस्यतुर्यातीतपदस्थितेः ॥ मुक्तस्येहयतेश्चर्यालक्षणैर्मनुनेर्यते ॥ १ ॥ निरस्तनिःशेषवि
कल्पविप्लवःसमःसुखंतिष्ठतीतियायोगिनःस्थितिरुक्तातामेवप्रपंचयति ॥ येनकेनचिदित्यादिना ॥ आच्छन्नोवस्त्रैराच्छादितः ॥ आशितोभोजितः सयोगीसम्राट्मानुषानंदपरा
वधिप्राप्तोराजेवेतिपामरदृशेयमुपमा ॥ तत्त्वदृशानुतदानंदस्योपमास्ति यतोवाचोनिवर्तंतइत्यादिश्रुत्याहैरण्यगर्भानंदांतविषयानंदसीकरमहार्णवतयानिरवधित्वप्रतिपाद

एतत्स्वरूपमासाद्यप्रकृतिःपरिशाम्यति ॥ नदेशोमोक्षनामास्तिनकालोनेतरास्थितिः ॥ १२ ॥ अहंकृतेर्विमोहस्यक्षयेणेयंविलीयते ॥
प्रकृतिर्भावनानाम्नीमोक्षःस्यादेषएवसः ॥ १३ ॥ प्रशांतशास्त्रार्थविचारचापलोनिवृत्तनानारसकाव्यकौतुकः ॥ निरस्तनिःशेषविकल्प
विप्लवःसमःसुखंतिष्ठतिशाश्वतात्मकः ॥ १४ ॥ ॥ इ०वा०वा०दे०मो०नि०पू०इक्ष्वाकुमनुसं०एकविंशत्यधिकशततमःसर्गः ॥ १२१ ॥
मनुरुवाच ॥ ॥ येनकेनचिदाच्छन्नोयेनकेनचिदाशितः ॥ यत्रक्वचनशायीचससम्राडिवराजते ॥ १ ॥ वर्णधर्माश्रमाचारशास्त्रयंत्रण
योज्झितः ॥ निर्गच्छतिजगज्जालात्पंजरादिवकेसरी ॥ २ ॥ वाचामतीतविषयोविषयाशादशोज्झितः ॥ कामप्युपगतःशोभांशरदीव
नभस्तलम् ॥ ३ ॥ गंभीरश्चप्रसन्नश्चगिराविवमहाह्रदः ॥ परानंदरसाक्षुब्धोरमतेस्वात्मनात्मनि ॥ ४ ॥ सर्वकर्मफलत्यागीनित्यतृप्तोनि
राश्रयः ॥ नपुण्येननपापेनलिप्यतेनेतरेणच ॥ ५ ॥ स्फटिकःप्रतिबिंबेनयथायातिनरंजनम् ॥ तज्ज्ञःकर्मफलेनांतस्तथानायातिरंजनम्
॥ ६ ॥ विहरञ्जनतावृंदेदेहकर्तनपूजनैः ॥ खेदाह्लादौनजानातिप्रतिबिंबगतैरिव ॥ ७ ॥ निस्तोत्रोनिर्विकारश्चपूज्यपूजाविवर्जितः ॥
संयुक्तश्चवियुक्तश्चसर्वाचारनयक्रमैः ॥ ८ ॥ तस्मान्नोद्विजतेलोकोलोकान्नोद्विजतेचसः ॥ रागद्वेषभयानंदैस्त्यज्यतेपिचयुज्यते ॥ ९ ॥

नात् ॥ १ ॥ तस्यार्थसिद्धंविद्वत्संन्यासमाह ॥ वर्णेति ॥ शास्त्रेणयंत्रणाकिंकरवन्नियमनंतयावर्जितः ॥ जगतिजालवद्बंधहेतोरैहिकामुष्मिकक्रियातत्फलकर्तृत्वभोक्तृत्वा
दिवासनासंघादित्यर्थः ॥ २ ॥ वाचामतीतस्यनिरतिशयानंदस्यानुभवस्यैवविषयः ॥ अतएवविषयाशादशोज्झितः ॥ ३ ॥ परस्यानंदस्यरसनरसोनिरंतरमास्वादनंतस्माद
क्षुब्धोऽप्रच्युतः ॥ ४ ॥ इतरेणहर्षविषादादिनाच ॥ ५ ॥ कर्मफलेनप्रारब्धोपनीतसुखदुःखादिना ॥ रंजनरूपतारापत्तिम् ॥ ६ ॥ तदेवस्पष्टमाह ॥ विहरन्निति ॥ देहस्यक
र्तनैश्छेदनैःपूजनैश्चदेहप्रतिबिंबमिवमिथ्येतिपश्यतीतिप्रतिबिंबगतैरिवेत्युच्यते ॥ ७ ॥ पूज्यःपूजितोपिनिःस्तोत्रःअप्रशंसमानः पूजाविवर्जितोपिनिर्विकारइतिकर्मधारयेक्रमे
णविशेषणान्वयः ॥ संयुक्तश्चेत्यादिरस्यैवप्रपंचः ॥ ८ ॥ उद्विजतेबिभेति ॥ रागद्वेषादिपदैस्तन्निमित्तविषयालक्ष्यन्ते ॥ कदाचित्प्रारब्धबलाद्युज्यतेत्यज्यतेच ॥ ९ ॥

कस्यचित्कुशलमतेरपिप्रमेयप्रमितिविषयेस्वयमत्त्वतोनारोहतिनांतर्भवति ॥ तस्मतस्तंकुशलमतयोपिनपरिच्छेत्तुंशक्नुवंतीत्यर्थ ॥ व्यवहारतस्तुबालेनापिप्रमेयीक्रियतेअस्मे
माप्यनुवर्तनेनवशीक्रियते यतोयमऋजुराशय शुद्धचित्तत्वादृजुरित्यर्थ ॥ १० ॥ तस्यज्ञानसमकालमेवमुक्त्यावेहाविबाधेनचपुनर्मुक्तिनिमित्ततीर्थादेर्देहत्यागस्यमार्गितवनास्ती
त्याह ॥ तनुमिति ॥ कदाचनकदाचिदपितनुमावात्यजतुवर्त्तमानक्षणइदानीमपिवातनुंत्यजतु तथाप्यसौज्ञानसप्राप्तिसमयेएवमुक्तोविदेहश्चेतिपरेणसंबंधः ॥ ११ ॥ तदुप
पादनायबंधमोक्षस्वरूपमाह ॥ अहंभ्रांतिरिति ॥ १२ ॥ सपूजनीयइति ॥ तथाचश्रुतिः ॥ यंयंलोकंमनसासंविभातिविशुद्धसत्वः कामयतेयांश्चकामान् ॥ तंतंलोकंजयतेतां
श्चकामांस्तस्मादात्मज्ञंह्यर्चयेद्भूतिकामइति ॥ १३ ॥ तत्पूजनमेवपरमपुरुषार्थप्रापकज्ञानहेतुरपीत्याह ॥ नेति ॥ हेअंगक्षीणोभवामयोयेषांतथाविधानांजीवन्मुक्तानांभक्त्या
भजनेनयत्परमपदंज्ञानद्वाराआसाद्यतेतत्पदंतीर्थादिभिर्नासाद्यतइत्यन्वय ॥ १४ ॥ ब्रह्मपदमेरुशिखरस्थम् ॥ १५ ॥ ॥इ॰वा॰ता नि॰पू॰द्वाविंशत्युत्तरशततम सर्ग:॥१२२॥

प्रमेयेकस्यचिदपिनरोहतिमहाशय ॥ प्रमेयीक्रियतेचापिबालेनाप्यदुराशय ॥ १० ॥ तनुंत्यजतुवातीर्थेश्वपचस्यगृहेपिवा ॥ माकदा
चनवाराजन्वर्त्तमानेपिवाक्षणे ॥ ११ ॥ ज्ञानसंप्राप्तिसमयेमुक्तोसौविगताशय ॥ अहंभ्रांतिर्हियंधायमोक्षोज्ञानेनतत्क्षय ॥ १२ ॥
सपूजनीय सस्तुत्योनमस्कार्य सयत्नत ॥ सनिरीक्ष्योभिवाद्यश्चविभूतिविभवैषिणा ॥ १३ ॥ नयज्ञतीर्थैर्नतप प्रदानैरासाद्यतेतत्परम
पवित्रम् ॥ आसाद्यतेक्षीणभवामयानांभक्त्यासतामात्मविदांयदग ॥ १४ ॥ ॥श्रीवसिष्ठउवाच॥ ॥एवमुक्त्वासभगवान्मनुर्ब्रह्मग
हयर्यौ ॥ इक्ष्वाकुरपितांदृष्टिमवष्टभ्यस्थिरोभवत् ॥ १५ ॥ ॥ इत्यार्षेवा॰वा॰दे॰मो॰नि॰पू॰इक्ष्वाकुमनुसंवादेइक्ष्वाकुप्रबोधन
नामद्वाविंशत्युत्तरशततम सर्ग ॥ १२२ ॥ ॥ ६ ॥ ॥श्रीरामउवाच॥ ॥एवंस्थितेहिभगवञ्जीवन्मुक्तस्यसन्मते ॥ अपू
र्वोतिशय कोसौभवत्यात्मविदांवर ॥ १ ॥ ॥श्रीवसिष्ठउवाच॥ ॥ज्ञस्यकस्मिंश्चिदेवांशेभवत्यतिशयेनधी ॥ नित्यतृप्त प्रशांतात्मा
सआत्मन्येवतिष्ठति ॥ २ ॥ मन्त्रसिद्धैस्तप सिद्धैर्तंत्रसिद्धैश्चभूरिश ॥ कृतमाकाशयानादिकातत्रस्यादपूर्वता ॥ ३ ॥

ज्ञस्याणिम्याप्त्यसिद्धेभ्य खेचरत्वाणिमादिषु ॥ अनिर्वचनीयपूर्णत्वाद्विशेषाभावाभिधीयते ॥ १ ॥ वर्णितलक्षणस्यजीवन्मुक्तस्यमणिमभावादिसिद्धानामिवखेचरादिसिद्धिरूपोपि
कश्चिदपूर्वोतिशयोस्तिनवेतिसंदिहानोराम पृच्छति ॥ एवमिति ॥ एवंत्वद्वर्णितरूपेलक्षणजातेस्थितेसति ॥ १ ॥ तस्याप्यसिद्धागोचरनिरतिशयानंदात्मगोचरोनुभवएवविशेष
इत्याशयनान्तरमाह ॥ ज्ञस्येति ॥ ज्ञस्यकस्मिंश्चिदितरसिद्धागम्यपरमात्मतत्त्वांशेधीरेवातिशयेनभवतीतियोजना ॥ अथवाअप्यर्थेएवकार ॥ ज्ञस्यसांसारिकस्मिन्नंशेकस्मिं
श्चिदप्यतिशये:स्थितपधीर्नभवतीतियोजना ॥ तदुक्तमाह ॥ नित्यतृप्तइति ॥ २ ॥ मन्त्रसिद्धादिरूपेणाप्यहमेवस्थितइतिसर्वात्मभूम्याते भावानांखेचरादिसिद्धीनांतेनभाम
तास्तास्तुतस्यनापूर्वतापीत्याह ॥ मन्त्रसिद्धैरिति ॥ अथवाअपूर्वशब्दानविषयपूर्वकारणपस्येतिष्पुत्पत्त्यात्मस्वविष्याम नित्यनिरतिशयानंदएवमुख्य: ॥ आकाशयानादिसिद्धि
जातनुवधसिध्यादिति कृतत्वपमनोत्पादितमिमितप्रसपूर्वतैवनापूर्वतत्त्वम ॥ ३ ॥

यद्यपूर्वशब्दस्यानन्यप्राप्तत्वमप्यर्थस्तथापिवद्धभिर्मंत्रसिद्धादिभिरणिमादिसिद्धिजातंप्राप्तमेवेतितेनतेष्वपूर्वतेत्याह॥ अणिमाद्यपीति ॥ सर्वात्मभूतस्यज्ञस्यसर्वसांसारिकसिद्धी नातत्त्वयत्नेनतैरेवसाधितत्वादपिनत्वेनपुन.साधनेप्रयोजनमस्तीत्याशयेनाह ॥ यत्नेनेति ॥ ४ ॥ तर्हितत्त्वविदस्तेभ्य·कोतिशयस्तत्राह ॥ एषएवेति ॥ तत्त्वज्ञानमेवातिशयइ त्यर्थः ॥ अतिशयातरमाह ॥ सर्वत्रेति ॥ वस्तुषुभोग्येषु ॥ ५ ॥ नीरागत्वफलान्येवतत्त्वज्ञलक्षणतयावर्णयन्नुपसंहरति ॥ एतावदिति ॥ तत्त्वबोधेसशांतेनचिरंतनभ्रमेणनिर्व तस्यविश्रांतस्यअलिंगासर्वधर्मशून्याब्रह्मचिदेवमूर्तिं सैंधवघनवदेकरसंस्वरूपयस्यतथाविधस्यएतावदेवखलुलिंगंलक्षणम् ॥ यन्मदनादीनामापदामनुदिननिपुणमत्यंततनुत्व मपक्षयइत्यर्थः ॥ ६ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०त्रयोविंशत्युत्तरशततमःसर्गः ॥ १२३ ॥ ॥ ७ ॥ ॥ निष्कारणत्वंजीवानाग्रास्तरागेणवद्धता ॥ रूपाण्य वस्थास्तुर्यंचमृगव्याधीयमीर्यते ॥ १ ॥ इतरसिद्ध्यपेक्षयाआत्मज्ञानस्योत्कर्षोनित्यनिरतिशयानदानुभवत्वादेव प्रत्यगात्मनश्चनित्यनिरतिशयानदरूपताब्रह्मस्वरूपत्वादेवेत्यर्थ

अणिमाद्यपिसंप्राप्तंतादृशैरेवभूरिशः॥ यत्नेनसाधितत्वात्तैर्नेतरेणात्मदर्शिना ॥ ४ ॥ एषएवविशेषोस्यनसमोमूढबुद्धिभिः॥ सर्वत्रा स्थापरित्यागान्नीरागममलंमनः॥ भवेत्तस्यमहाबुद्धेर्नासौवस्तुषुमज्जति॥ ५॥ एतावदेवखलुलिंगमलिंगमूर्तेःसंशांतसंसृतिचिरभ्र मनिर्वृतस्य॥ तज्ज्ञस्ययन्मदनकोपविषादमोहलोभापदामनुदिनंनिपुणंतनुत्वम्॥ ६ ॥ ॥ इत्यार्षेवा०वा०दे०मो०नि०पू०अज्ञा देर्ज्ञस्यविशेषकथनंनामत्रयोविंशत्युत्तरशततमःसर्गः॥ १२३॥ ॥ ७॥ ॥श्रीवसिष्ठउवाच॥ ॥यथासत्वमुपेक्ष्यस्वंश नैर्विप्रोदुरीहया॥ अंगीकरोतिशूद्रत्वंतथाजीवत्वमीश्वरः॥ १ ॥ भूतानिद्विविधान्येवप्रतिसर्गेस्फुरंतिवै॥ आद्यविस्पंदजातानितानि निष्कारणानिवै॥ २॥ ईश्वरात्समुपागत्यपुनर्जन्मांतराणिच॥ भूतान्यनुभवंत्यंगस्वकृतैरेवकर्मभिः॥ ३॥

स्योपपत्तयेब्रह्मणएवस्वस्वभावोपेक्षावशाज्जीवभावप्राप्तिमाह ॥ यथेत्यादिना ॥ यथाकश्चिद्विप्र·शूद्रांकामयमानस्तत्संभोगसहवासादिदुरीहयास्वंस्वोचितंसत्वंसात्त्विकब्रा ह्मणधर्मशनैरुपेक्ष्यचिरकालेनशूद्रत्वमगीकरोतितथाईश्वरोबुद्ध्यादिसंगत्यातत्प्रयुक्तभोगाशयास्वनित्यशुद्धपूर्णानंदस्वभावमुपेक्ष्यजीवत्वमगीकरोतीत्यर्थः ॥ १ ॥ उपाधिप्रा धान्येनभोग्यान्युपहितप्राधान्येनभोक्तृणीतिद्विविधानिमायागतानादिद्विविधसंस्कारपरंपरानुसारिणोहिरण्यगर्भात्मकादाद्यविस्पंदाज्जातानिमायागंधर्वनगरवदाविर्भूतानि अतोमिथ्यात्वान्निष्कारणानिवास्तवसामग्रीनिरपेक्षाणिनहिस्वाभघटादिःस्वोत्पत्तौदडचक्रादिसामग्रीसापेक्षइत्यर्थः ॥ २ ॥ ननुसाधुकारीसाधुर्भवतिपापकारीपापोभवति पुण्योवैपुण्येनकर्मणाभवतिपापःपापेन तस्माल्लोकात्पुनरेत्यान्यस्मैलोकायकर्मणेइत्यादिश्रुतिषुजन्मकर्मणोर्बीजांकुरवदनादिःपरस्परकार्यकारणभावोवगम्यतेतत्कथमीश्व रस्यकर्मशून्यस्यजीवभावेनाद्यसर्गेजन्मोच्यतेतत्राह ॥ ईश्वरादिति ॥ स्वकृतैरुपहितकृतैः ॥ नेश्वरस्यजीवभावेकर्मापेक्षाकिंतुजीवभावापन्नस्यनंतरदेहादिजन्मनिपूर्वपूर्वदेहादि कृतकर्मापेक्षा यथासवितुर्जलेप्रतिबिंबनेनचलनादिक्रियापेक्षाप्रतिबिंबस्यतरंगभेदेपुसंक्रमेतत्तद्गतविक्रियानुभवेचोपाधिक्रियापेक्षातद्वदितिभावः ॥ ३ ॥

तदवस्पष्टमाह ॥ नापकारणभावइति ॥ तथाचोक्तवार्तिके ॥ वियद्वस्तुस्वभावानुरोधादेवनकारकात् ॥ वियत्संपूर्णतोत्पत्तौकुम्भस्यैवदृशाधियामिति ॥ ४ ॥ पश्चाच्चेपांकर्मा
णांनिवृत्त्यायमनमाह ॥ आत्मज्ञानादिति ॥ यादृशमात्मानयोजानातितादृशतदनुरूपसंकल्पयतिसंकल्पानुरूपंचकरोति नहिमनुष्यादिदेहात्मताबुद्धिमिनापुण्यपापेसंकल्पयति
परानिवा ॥ तथाचोक्तभगवद्भिर्भाष्यकृद्भिः ॥ नह्यनध्यस्तात्मभावेनदेहेनकश्चिद्व्याप्रियतेइति ॥ देहाध्यासोपिसंकल्पद्वारैवपुण्यपापप्रवृत्तिहेतुरित्याह ॥ संकल्पइति ॥ ५ ॥
तत्कुर्यात्स्वार्थानिसंकल्पितथाविधत्वपुण्यापुण्यप्रवृत्तिभोगवासनादिसंतानमबंधस्यकारणम् ॥ ६ ॥ संकल्पत्यागेउपायमाह ॥ सावधानइति ॥ ग्राह्यग्राहकभेदभ्रमेहिसति
ग्राहकस्यग्राह्यअनुकूलताप्रतिकूलतानुसंधानाद्धानोपादानानुकूलप्रवृत्तिसंकल्पाभवति ॥ ग्राह्यग्राहकविभ्रमस्यागेनतत्साक्षिण्यैकात्म्यलक्षणसावधानत्वाभ्यासेतुसंकल्प

कार्यकारणभावोयमीदृशोजन्मकर्मणोः ॥ अकारणमुपायातिसर्वेजीवा परात्पदात् ॥४॥ पश्चात्तेपांस्वकर्माणिकारणंसुखदुःखयोः ॥
आत्मज्ञानात्समुत्पन्न संकल्प कर्मकारणम् ॥५॥ संकल्पित्वंहिबंधस्यकारणंतत्परित्यज ॥ मोक्षस्तुनि संकल्पित्वंतदभ्यासपरोभव
॥६॥ सावधानोभवत्वंचग्राह्यग्राहकसंभ्रमे ॥ अजस्रमेवसंकल्पदशांपरिहरत्वछने ॥७॥ माभवग्राह्यभावात्माग्राहकात्माचमा
भव ॥ भावनामखिलांत्यक्त्वायच्छिष्टंतन्मयोभव ॥८॥ अजस्रयमेवार्थंपतत्यक्षगणोनघ ॥ यद्यातेतत्ररागेणतत्रारागेणमुच्यते
॥९॥ किंचिद्यत्राचतेतुभ्यतद्द्वेष्टामिभवास्थितौ ॥ नकिंचिद्रोचतेचित्तंतन्मुक्तोसिभवास्थितौ ॥१०॥ तस्मात्पदार्थनिचयात्सहस्थावर
जंगमात् ॥ तृणादेर्देवपर्यन्तान्माकिंचित्तवरोचताम् ॥११॥ यत्करोपियदश्नासियज्जुहोपिददासियत् ॥ नकर्त्तासिनभोक्तासितत्रमु
क्तमति शर्मा ॥१२॥ सतोतीतनशोचतिभविष्यंचिंतयतिनो ॥ वर्तमानंचगृह्णातिकर्मप्राप्तमखंडितम् ॥१३॥ मनसिग्रथिताभावास्तृ
ष्णामोहमदादय ॥ मनःसंवमनोरामच्छेदनीयंविजानता ॥१४॥

मूलमेवाच्छिद्यतइतिभाव ॥ ७ ॥ अमुमेवार्थंकठोक्त्याह ॥ माभवेति ॥ यच्छिष्टंसाक्षिस्वरूपंतन्मयस्तदेकरसः ॥ ८ ॥ असावधानत्वेतुप्राप्तेनुकूलरागाद्वर्जनीयइतिवैराग्य
वैराग्याभ्यासस्याप्यावश्यकतांदर्शयति ॥ अजस्रमिति ॥ ९ ॥ रागवैराग्ययोः स्वरूपंविविच्यदर्शयंस्तयोर्बंधमोक्षलिंगतांदर्शयति ॥ किंचिदिति ॥ यत्यदि ॥ तत्तर्हि ॥ १० ॥
अपरूपार्थोनुपपत्तिर्दरत्कार्यादर्शादिहिरण्यगर्भलत्कार्यांतात्तद्भोग्यविषयरूपात्परार्थनिचयात्मिधारितंकिंचिदर्पितमनरोचताम् ॥ ११ ॥ मन्येवपरवैराग्येणभोक्तृत्वाध
ध्यासनिर्भावनात्मानंभोजनादिक्रियाप्राप्तंदुःखमत्वात्तत्कर्तृत्वोपबंधस्यान्नेवेत्याशंक्याह ॥ यदिति ॥ तत्रतासुक्रियासुमुक्तमतिःकूटस्थात्मनिविष्टमतिः ॥ तथाचोक्तंभगवता ॥ नैव
किंचित्करोमीतियुक्तोमन्येततत्त्ववित्इति ॥ १२ ॥ इष्टवियोगानिष्टसंभवनादिप्रयुक्तशोकेनबंधप्रसक्तिमाशंक्याह ॥ सतइति ॥ १३ ॥ सर्वबंधजयेमनोजयएवोपाय सच
मनःसंवनाम्यनत्वाह ॥ मनसीति ॥ १४ ॥

1 अहासियदित्यपिपाठः

यदुपायेनमनसामनोजयस्तमाह ॥ विवेकेनेति ॥ १५ ॥ मनसामनोजये आत्माश्रयदोषपरिहरति ॥ क्षालयनीति ॥ मलेनक्षारादिना ॥ १६ ॥ मनःसवलितोजीवस्तत्रकि यानश पृथक्कृत्यमनसाच्छेदनीयइतिदर्शयितुजीवरूपाणिविभजते ॥ जीवस्येति ॥ परित्यजमनसाछिधि ॥ १७ ॥ तानिदर्शयति ॥ पाणीत्यादिना ॥ १८ ॥ १९ ॥ विश्व स्यरूपकनिरूपकसत्तास्फूर्तिप्रदमित्यर्थ ॥ २० ॥ २१ ॥ स्थूलसूक्ष्मरूपेजीवस्यजाग्रत्स्वमयो.प्रसिद्धे तावन्मात्रपरित्यागेपिनसम्यक्तस्यपरिशुद्धिरित्यवस्थात्रयातीतजिज्ञा समानोराम पृच्छति ॥ जाग्रदिति ॥ स्थितसकीर्णमतएवस्पष्टमलक्षितम ॥ विशेषेणतत्सकरव्यावर्तनेन ॥ २२ ॥ अहभावोजाग्रत्स्वमयोर्विक्षेपः अनहभाव सुपुप्तौतन्मूल

क्षालयंतिमलेनैवमलंक्षालनकोविदाः॥ वार विवेकेनातितीक्ष्णेनबलादयइवायसा॥ मनसैवमनश्छिंधिसर्वभ्रमस्यशांतये॥१५॥ यंत्यस्त्रमस्त्रेणविषंप्रतिविषेणच॥१६॥ जीवस्यत्रीणिरूपाणिस्थूलसूक्ष्मपराणिच॥ तत्रास्ययत्परंरूपंतद्भजद्वेपरित्यज॥१७॥ पाणि पादमयोयोयंदेहोभोगायवल्गति॥ भोगार्थमेतज्जीवस्यरूपंस्थूलमिहास्थितम्॥१८॥ स्वसंकल्पमयाकारंयावत्संसारभावियत्॥ चित्तंतद्विद्धिजीवस्यरूपंरामातिवाहिकम्॥१९॥ आद्यंतरहितंसत्यंचिन्मात्रंनिर्विकल्पकम्॥ यत्तद्विद्धिपरंरूपंतत्तीयंविश्वरूपकम्॥२०॥ एतत्तुर्यपदंशुद्धमत्रबद्धपदोभव॥ संपरित्यज्यपूर्वेद्वेमातत्रात्ममतिर्भव॥२१॥ ॥श्रीरामउवाच॥ ॥जाग्रत्स्वप्नसुपुप्तेपुस्थि तंत्रिष्वप्यलक्षितम्॥ तुर्यंब्रूहिविशेषेणविविच्यमुनिनायक॥२२॥ ॥श्रीवसिष्ठउवाच॥ ॥अहंभावानहंभावौत्यक्त्वासदसतीतथा॥ यदसक्तंसमंस्वच्छंस्थितंतत्तुर्यमुच्यते॥२३॥ यास्वच्छासमताशांताजीवन्मुक्तव्यवस्थितिः॥ साक्ष्यवस्थाव्यवहृतौसातुर्यकलनोच्यते॥२४॥ नैतज्जाग्रन्नचस्वप्नंसंकल्पानामसंभवात्॥ सुपुप्तभावोनाप्येतदभावाज्जडतास्थितेः॥२५॥ शांतसम्यक्प्रबुद्धानांयथास्थि तमिदंजगत्॥ विलीनंतुर्यमेवाहुरबुद्धानांस्थिरंस्थितम्॥२६॥ अहंकारकलात्यागेसमतायाःसमुद्भवे॥ विशरारौकृतेचित्तेतुर्याव स्थोपतिष्ठते॥२७॥ अथेमंशृणुदृष्टांतंकथ्यमानंमयाधुना॥ प्रबुद्धोपियथाबोधमुपैपिविबुधोपम॥२८॥ कस्मिंश्चित्काननाभोगेम हामौनंव्यवस्थितम्॥ दृष्ट्वाद्भुतमिदंकिंचिन्मुनिंपप्रच्छलुब्धकः॥२९॥

मावरणतावुभौव्यष्टिरूपौजीवोपाधीसमष्टिरूपौतुअसद्वाइदमग्रआसीत्ततोवैसदजायतइत्यादिश्रुतिप्रसिद्धेसदसतीतेचत्यक्त्वा ॥ २३ ॥ जीवन्मुक्तेषुव्यवस्थितिर्निष्कृष्टस्थितिर्य स्या. ॥ व्यवहृतौव्यवहारकालेसाक्ष्यवस्थेतिप्रसिद्धा ॥ २४ ॥ तस्याजाग्रदादिसकरवारयति ॥ नैतदिति ॥ जडताआवरणतत्स्थितेरज्ञानस्य ॥ २५ ॥ नन्वद्वितीयतुर्रीयजोग्रदा दिद्वैतकालेजीवन्मुक्तानामपिकथस्यात्तत्राह ॥ शातमिति ॥ विलीनंज्ञानबाधितम ॥ २६ ॥ जलविलीनसैधववद्विशरारौकृतेसति ॥ २७ ॥ जाग्रतोव्यवहरतःकथचित्त.वि शरारुस्यादित्यसभावनामृगव्याधीयोदाहरणेनवारयति ॥ अथेममित्यादिना ॥ २८ ॥ महामौनज्ञानबाधितवागादिचेष्टम ॥ इदवक्ष्यमाणंपप्रच्छ ॥ २९ ॥

१ आपद्वावादीत्यपिक्वचित्पाठः

वाणभिन्नमभिद्रुतपलायितमृगपश्चान्मार्गेउपगतालुब्धकइतिपूर्वान्वयि ॥ किंपप्रच्छतत्राह ॥ मुनेइत्यादिना ॥ ३० ॥ पुनर्मृगइत्युक्तिभ्रममात् ॥ ३१ ॥ व्यवहारेष्वनभ्यस्ते ष्वितिशेष ॥ ३२ ॥ अहंकारमयमभिमानप्रचुरम् ॥ चिरमेव ॥ ३३ ॥ ३४ ॥ अवस्थात्रयाणुम्यनुभवश्रुत्यादिवाप्यत्वात्तुर्यंतराजापत्त्यादिदशास्थूलादिदशावनास्ति ॥ ३५ ॥ गुणमयपात्मकमायामयचित्तकार्यत्वात्तिसृणामवस्थानांमायावाधेचित्तस्यप्रशांततवदपितदुपादेयावस्थानामसत्त्वमित्याह ॥ जाग्रदित्यादिना ॥ ३६ ॥ तिस्रोऽवस्थारजआदि गुणत्रयाभ्येनविधाविभज्यदर्शयति ॥ घोरमिति ॥ स्वर्गनरकपुनर्जन्मादिहेतुपुण्यपापोत्पादनाद्दीनीभावाधिक्याच्चजाग्रन्मयजाग्रदवस्थचित्तघोरमित्यासूक्ष्मम् ॥ ३७ ॥ गुण त्रयात्मकमायाच्छन्नविभिर्हीनम ॥ मनश्चित्तयोगिनांप्रारब्धशेषभोगायप्रसमनिशौक्ष्म्यमिवसत्त्वांशएवानुवर्ततिनरजस्तमोंशलेशइत्याह ॥यत्रेति ॥ रजसाअक्षोभ्यमाणत्वात्त

पश्चादुपगतोवाणभिन्नमृगमभिद्रुतम् ॥ मुनेमदीयवाणेनविद्धोमृगइहागत ॥ ३० ॥ कप्रयातोमृगइतिप्रत्युवाचसतमुनि ॥ समशी लावयसाधोमुनयोवनवासिन ॥ ३१ ॥ नास्माकमस्त्यहंकारोव्यवहारेपुय क्षम ॥ सर्वाणींद्रियकर्माणिकरोतिहिसखेमन ॥ ३२ ॥ अहंकारमयतन्मेनूनंप्रगलितंचिरम् ॥ जाग्रत्स्वप्नसुषुप्ताख्यादशावेद्मिनकाश्चन ॥ ३३ ॥ तुर्यंएवहितिष्ठेहतत्रदृश्यनविद्यते ॥ इतितस्य वच श्रुत्वामुनिनायस्यराघव ॥ ३४ ॥ लुब्धकोर्थमविज्ञायजगामाभिमतांदिशम् ॥ अतोवच्मिमहाबाहोनास्तितुर्यंतरादशा ॥ ३५ ॥ निर्विकल्पाहिचित्तुर्यंतदेवास्तीहनेतरत् ॥ जाग्रत्स्वप्नसुषुप्ताख्यंत्रयरूपंहिचेतस ॥ ३६ ॥ घोरंशांतंचमूढंचआत्मचित्तमिहास्थितम् ॥ घोरंजाग्रन्मयंचित्तंशांतंस्वप्नमयंस्थितम् ॥ ३७ ॥ मूढंसुषुप्तभावस्थंत्रिभिर्हीनंमृतंभवेत् ॥ यच्चचित्तमृतंतत्रसत्वमेकंस्थितंसमम् ॥ तदेवयोगिन सर्वेयत्नात्संपादयंतिहि ॥ ३८ ॥ समस्तसंकल्पविलासमुक्तंतुर्यंपदंतिष्ठनिरामयात्मा ॥ यत्रास्थिता साधुसदैवमुक्ता प्रशां तस्थितामुनयोमहांत ॥ ३९ ॥ ॥इ० वा० वा० दे० मो० नि० पू० मृगव्याधीयनामचतुर्विंशत्युत्तरशततम सर्ग ॥ १२४ ॥ ॥ ७ ॥

॥ श्रीवसिष्ठउवाच ॥ ॥ सिद्धांतोध्यात्मशास्त्राणांसर्वापह्नवएवहि ॥ नाविद्यास्तीहनोमायाशांतंब्रह्मेदमक्लमम् ॥ १ ॥

मम ॥ तादृशेचित्तेनैमल्यातिशयेनस्वात्मसुखस्यसदैवाविर्भावात्सर्वव्यापारोपरमेणसमाध्यभ्यासयत्नात्संपादयंतीत्यर्थ ॥ ३८ ॥ अतस्त्वमपितादृशचित्तसंपाद्यतुर्यपदेविश्रां तस्तिष्ठेत्याह ॥ समस्तेति ॥ स्पष्टम् ॥ ३९ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनि० पू० चतुर्विंशत्युत्तरशततम सर्ग ॥ १२४ ॥ ॥ ७ ॥ ॥ सर्वापह्नवसिद्धांतिवादिनां यमविभ्रमा ॥ तुर्येतथाविधेस्थैर्यंसोपायमुपदिश्यते ॥ १ ॥ अविद्ययाजीवस्यावस्थात्रयप्रपंचस्यमाययाऐश्वरस्यवियदादिप्रपंचस्यचेतिसर्वस्यद्वैतजातस्यापह्नवआत्मान मधिकृत्यप्रवृत्तानांश्रुतिस्मृतीतिहासपुराणादिशास्त्राणांपरमसिद्धांतोनवस्तुप्रकाशन स्वप्रकाशस्यात्मवस्तुन स्वत सिद्धत्वात्तत्सिद्धौप्रमाणाप्रसरादित्याह ॥ सिद्धांतइति ॥ शां तंसर्वोपद्रवरहितंनिरतिशयानंदं...नकम्पनइत्यक्लमम्...मित्यर्थ ॥ तथाचश्रुति ॥ यतोवाचोनिवर्तंते अप्राप्यमनसासहेति ॥ तथाचप्रविलापार्यैरप्युक्त म् ॥ यत्परमेयप्रमाकिमर्थंप्रमाणमितिचस्वसिद्धतुनिवर्तकत्वादिति ॥ १ ॥

श्रुत्यादिसिद्धांतापरिज्ञानादेवस्वबुद्धिवैभवेनजगन्मूलान्वेषिणांवादिनांब्रह्मशब्दवाच्येसर्वशक्त्यात्मकमायाशबलेब्रह्मणिबुद्धिदोषवैचित्र्यान्नानाविधा कल्पना प्रवृत्ताइत्या
ह ॥ शांतइतिद्वाभ्याम् ॥ २ ॥ निर्णीयस्वस्वबुद्ध्यनुसारेणसिद्धांतभेदान्कल्पयित्वा ॥ ३ ॥ सर्वंमायातदृश्यजातपरित्यज्य ॥ समनस्कसर्वेंद्रियव्यापारोपरमान्महामौनी ॥ पू
र्णानंदचिदात्मनिनिर्वाणवान्सन्आत्मन्येवास्वेतिपरेणान्वयः ॥ ४ ॥ ५ ॥ पंचमादिभूमिकाजयाज्जाग्रदवस्थोपिसुषुप्तइवस्थित. ॥६॥ अवेदनात्प्रियद्वेष्यत्वाननुसंधानात् ॥७॥
अवेदनादित्येतदेवस्पष्टयति ॥ दृष्ट्वेति ॥ ८ ॥ सवेदनीयचिंतनीयम् ॥ असुखदुःखम ॥ मध्यमतदुभयसाधनम् ॥ ९ ॥ विज्ञात सर्वेषाभुवनत्रयवस्तूनासारोयेन अतएवश्रीम
तृस्वत सर्वत.प्रकाशेनशोभमानयद्रसायननिरतिशयसुखममृतंचतन्मयः ॥ अतएवचआसमतात्पीनपुष्टमंडलयस्यतादृशोयःशशांक पूर्णचंद्रस्तत्कल्प.परंपरमात्मानमभ्युपेत

शांतएवचिदाभासेस्वच्छेसमसमात्मनि ॥ समग्रशक्तिखचितेब्रह्मेतिकलिताभिधे ॥ २ ॥ निर्णीयकेचिच्छून्यत्वंकेचिद्विज्ञानमात्रताम् ॥
केचिदीश्वररूपत्वंविवदंतेपरस्परम् ॥ ३ ॥ सर्वमेवपरित्यज्यमहामौनीभवानघ ॥ निर्वाणवान्निर्मननःक्षीणचित्तःप्रशांतधीः ॥ ४ ॥
आत्मन्येवास्वशांतात्मामूकांधबधिरोपमः ॥ नित्यमंतर्मुखोभूत्वास्वात्मनांतःप्रपूर्णधीः ॥ ५ ॥ जाग्रत्येवसुषुप्तस्थःकुरुकर्माणिराघव ॥
अंतःसर्वपरित्यागीबहिःकुरुयथागतम् ॥ ६ ॥ चित्तसत्तापरंदुःखंचित्तासत्तापरंसुखम् ॥ अतश्चित्तंचिदेकात्मानयक्षयमवेदनात् ॥ ७ ॥
दृष्ट्वारम्यमरम्यंवास्थेयंपाषाणवत्समम् ॥ एतावतात्मयत्नेनजिताभवतिसंसृतिः ॥ ८ ॥ सवेदनीयंनसुखंनासुखंनचमध्यमम् ॥ एता
वतात्मयत्नेनदुःखांतोनंतआप्यते ॥ ९ ॥ आपीनमंडलशशांकवदंतरेवश्रीमद्रसायनमयःसुखमेतितज्ज्ञः ॥ विज्ञातसर्वभुवनत्रयवस्तु
सारःकुर्वन्ननामकुरुतेपरमभ्युपेतः ॥ १० ॥ इ० वा० वा० दे० मो० नि० पू० तुर्यैस्थैर्योपायकथनंनामपंचविंशत्युत्तरशततमःसर्गः
॥ १२५ ॥ ॥ ७ ॥ ॥ श्रीरामउवाच ॥ ॥ सप्तानांयोगभूमीनामभ्यासःक्रियतेकथम् ॥ कीदृशानिचचिह्नानिभूमिकां
प्रतियोगिनः ॥ १ ॥

स्तज्ज्ञोजीवन्मुक्तिसुखमेति ॥ कुर्वन्नपिप्रारब्धोपनीतंव्यवहारंनकुरुते ॥ प्रतिबिंबचेष्टायामिवनस्वस्यकर्तृत्वंपश्यतीत्यर्थः ॥ १० ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशे
नि० पू० पंचविंशत्युत्तरशततम.सर्गः ॥ १२५ ॥ ॥ ७ ॥ ॥ उच्यंतेयोगभूमीनामभ्यासक्रमलक्षणे ॥ अतरालेमृतौभोगास्ततोजन्मांतरेजय. ॥ १ ॥ जाग्रत्येवसु
षुप्तस्थःकुरुकर्माणिराघवेतिचतुर्थभूमिकारूढंरामंप्रतिपंचमादिभूमिकास्थितिःसंपाद्येत्युक्तम् ॥ तत्संपादनकामोरामःस्वजितजेतव्यभूमिकाविभागज्ञानायतल्लक्षणानितदभ्या
सक्रमचपृच्छति ॥ सप्तानामिति ॥ भूमिकांप्रतिप्रतिभूमिकंयोगिनःकीदृशानिचिह्नानिभवंति ॥ वीप्सायाप्रतेःकर्मप्रवचनीयसंज्ञायाद्विर्वचनस्याव्ययीभावस्यवाआवश्यक
त्वात्तदकरणछांदसम् ॥ १ ॥

उदाररूपासुचित्तशुद्ध्यनुकूलासुशौचसत्सङ्गेश्वरोपासनजपा
तस्यप्रथमभूमिकाप्राप्तिक्रममाह ॥ कथमित्यादिना ॥ ७ ॥ भावनासुभोगतत्साधनचिंतासु ॥ विरागंवैरस्यम् ॥ उदाररूपासुचित्तशुद्ध्यनुकूलासुशौचसत्सङ्गेश्वरोपासनजपा दिरूपासुक्रियासुक्रमतेसज्जते ॥ तेनचान्वहचित्तशुद्ध्युपचयेनतृष्णाक्षयानुमोदते ॥ ८ ॥ विचिकित्सतिजुगुप्सते ॥ मर्माणिपरेषारहस्यदोषान्नोदाहरतिनभाषते ॥ ९ ॥ परेषा मृदूनि स्वस्यचमनसः अनुद्वेगकराणिमृदून्यल्पायासमहाफलानियमनियमादिकर्माणिसेवते ॥ भोगेचपापावश्यभावात्तनापेक्षते ॥ १० ॥ पेशलान्यनुद्वेगकराणि ॥ उचितानिस त्यप्रियहितादिरूपाणि ॥ ११ ॥ एवगुणविशिष्टपुरुषस्यसच्छास्त्रश्रवणाधिकारलक्षणायाप्रथमभूमिकायामवतारइत्याह ॥ तदेति ॥ सज्जनान्शांतिदांतिज्ञानविज्ञानसपन्ना न् ॥ १२ ॥ यत कुतश्चित्तत्सेवानुकूलधनादिसाधनमानीयतान्सेवमानस्तन्मुखाज्ज्ञानशास्त्राणिपुराणमोक्षधर्माध्यात्मसहितादीन्यवेक्षतेश्रृणोतीत्यर्थ. ॥ १३ ॥ भूमिकावा

**कथंविरागवान्भूत्वासंसाराब्धिंतराम्यहम् ॥ एवंविचारणपरोयदाभवतिसन्मतिः ॥७॥ विरागमुपयात्यंतर्भावनास्वनुवासरम् ॥ क्रि यासूदाररूपासुक्रमतेमोदतेन्वहम् ॥८॥ ग्राम्यासुजडचेष्टासुसततंविचिकित्सति ॥ नोदाहरतिमर्माणिपुण्यकर्माणिसेवते ॥ ९ ॥ मनो नुद्वेगकारीणिमृदुकर्माणिसेवते ॥ पापाद्बिभेतिसततंनचभोगमपेक्षते ॥ १० ॥ स्नेहप्रणयगर्भाणिपेशलान्युचितानिच ॥ देशकालोपप न्नानिवचनान्यभिभाषते ॥ ११ ॥ तदासौप्रथमामेकांप्राप्तोभवतिभूमिकाम् ॥ मनसाकर्मणावाचासज्जनानुपसेवते ॥ १२ ॥ यतःकु तश्चिदानीयज्ञानशास्त्राण्यवेक्षते ॥ एवंविचारवान्यःस्यात्संसारोत्तारणंप्रति ॥ १३ ॥ सभूमिकावानित्युक्तःशेषःस्वार्थइतिस्मृतः ॥ वि चारनाम्नीमितरामागतोयोगभूमिकाम् ॥ १४ ॥ श्रुतिस्मृतिसदाचारधारणाध्यानकर्मणाम् ॥ मुख्ययाव्याख्ययाख्याताञ्छ्रयतेश्रेष्ठपं डितान् ॥ १५ ॥ पदार्थप्रविभागज्ञःकार्याकार्यविनिर्णयम् ॥ जानात्यधिगतश्रव्योगृहंगृहपतिर्यथा ॥ १६ ॥**

न्प्रथमभूमिकाप्रविष्टइत्युक्तः ॥ शेष उक्तसाधनचतुष्टयादिसपत्तिहीनस्त्वध्यात्मयथासक्तोपिरागादिनाअनधिकारिजनप्रतारणेनार्जनादिनाउदरभरणशीलत्वात्स्वार्थोवच कइत्यर्थ. ॥ सेयशुभेच्छाख्याप्रथमाभूमिका ॥ तस्यक्रमेणद्वितीयभूमिकाप्रवेशक्रममाह ॥ विचारेति ॥ भूमिकामागत अधिकारप्राप्त्याऽवतीर्णः ॥ १४ ॥ सतत्रकिंकरोति तदाह ॥ श्रुतीति ॥ श्रुतीनास्मृतीनासदाचाराणाधारणाध्यानकर्मणासाध्येनसमाधिनासाधनैश्चयमनियमासनप्राणायामप्रत्याहारै प्रतिपाद्येयस्ययोगशास्त्रस्यतस्यचमुख्य याअनुष्ठानानुष्ठापनफलोपहितयाव्याख्ययाव्याख्यानेनख्याताऩ् आत्मतत्वानुभवोपदेशकुशलत्वाच्छ्रेष्ठान्पडितानुगुरूनुश्रयतेश्रवणमननादिविचारायशरणगच्छतीत्यर्थः ॥ तथाचश्रुतिः ॥ तद्विज्ञानार्थंसगुरुमेवाभिगच्छेत्समित्पाणि श्रोत्रियब्रह्मनिष्ठमिति ॥ १५ ॥ स्वयंव्याकरणाद्यगाभिज्ञत्वात्पदानातदर्थानाचवाच्यलक्ष्यादिरूपाणालक्षणादिप्र विभागज्ञ.शिष्योगुरुमुखादधिगतश्रव्य सन्कार्यसाध्यकर्मकाडार्थस्तद्विलक्षणमकार्यसिद्धब्रह्मकाडार्थस्तयोर्विनिर्णयगृहपतिःस्वगृहकोष्ठविभागमिवस्पष्टजानाति ॥ १६॥

---

१ कर्मणामितिषष्ठाबहुवचनघटितस्तस्येत्यतोमथःसर्वत्रापलब्धोपिविसगतत्वाद्विचारणाय ॥ यदितुधारणाध्यानकर्मण साध्येनसमाधिनासाधनैर्यमनियमासनप्राणा यामप्रत्याहारैःसहधारणाध्यानेकर्मणिप्रतिपाद्येयस्ययोगशास्त्रस्यतस्यचेतिपाठ.कल्प्यतेतर्हिसर्वसगतमितिभाति ॥ धारणाध्यानेकर्मणीयस्येतिसमासः ॥ प्रतिपाद्यप्रतिपा दकभावःसबधःषष्ठ्यर्थः ॥

यद्दिलोकमर्यादानुसारेणपरद्राध्यितामपि ॥ अनेनप्रथमभूमिकायामेवतेषामतनिवृत्ततादर्शिता ॥ १७ ॥ शास्त्ररहस्यंपरमतात्पर्यंप्रमाणासंभावनानिरासेनाधिगच्छति ॥ गुरु
सज्जनाभिमतमात्मरहस्यप्रमेयासंभावनानिरासेनाधिगच्छति ॥ १८ ॥ एवंद्वितीयभूमिकांजित्वातस्तृतीयभूमिकाप्रवेशमाह ॥ असंसंगेति ॥ ततस्तृतीयांभूमिकांपततिप्रवि
शति ॥ १९ ॥ यथावदिति श्लोकद्वयंयथायोगपूर्वभूमिकाद्वयानुसारं ॥ २० ॥ २१ ॥ यामवासविक्षेपशून्येनसमाप्यभ्यासानिर्वाहाद्वनवासविहारेण ॥ २२ ॥ यद्यपि
ततसारस्तूत्थानकालेपूर्वभूमिकाद्वयधर्मानुवृत्तिरप्यावश्यकीतिदर्शयति ॥ अभ्यासादिति ॥ २३ ॥ असंगसुखसौम्यनसूक्तिविभज्यप्यास्थाय ॥ तृतीयामिति ॥ २४ ॥ सा

मदाभिमानमात्सर्यमोहलोभातिशायिताम् ॥ बहिरप्याश्रितामीषत्त्यजत्यहिरिवत्वचम् ॥ १७ ॥ इत्थंभूतमतिःशास्त्रगुरुसज्जनसेव
नात् ॥ सरहस्यमशेषेणयथावदधिगच्छति ॥ १८ ॥ असंसर्गाभिधामन्यांतृतीयांयोगभूमिकाम् ॥ ततः पतत्यसौकांतः पुष्पशय्यामि
वामलाम् ॥ १९ ॥ यथावच्छास्त्रवाक्यार्थेमतिमाधायनिश्चलम् ॥ तापसाश्रमविश्रामैरध्यात्मकथनक्रमैः ॥ २० ॥ संसारनिंदकैस्तद्वद्वै
राग्यकरणक्रमैः ॥ शिलाशय्यासमासीनोजरयत्यायुरातनम् ॥ २१ ॥ वनवासविहारेणचित्तोपशमशोभिना ॥ असंगसुखसौम्येनका
लंनयतिनीतिमान् ॥ २२ ॥ अभ्यासात्साधुशास्त्राणांकरणात्पुण्यकर्मणाम् ॥ जंतोर्यथावदेवेयंवस्तुदृष्टिःप्रसीदति ॥ २३ ॥ तृतीयांभू
मिकांप्राप्यबुधोनुभवतिस्वयम् ॥ द्विप्रकारमसंसंगंतस्यभेदमिमंशृणु ॥ २४ ॥ द्विविधोयमसंसंगः सामान्यः श्रेष्ठएवच ॥ नाहंकर्तानभो
क्ताचनबाध्योनचबाधकः ॥ २५ ॥ इत्यसंजनमर्थेषुसामान्यासंगनामकम् ॥ प्राक्कर्मनिर्मितंसर्वमीश्वराधीनमेवच ॥ २६ ॥ सुखंवाय
दिवादुःखंकैवात्रममकर्तृता ॥ भोगाभोगामहारोगाः संपदः परमापदः ॥ २७ ॥ वियोगायैवसंयोगाआधयोव्याधयोधियः ॥ कालश्च
कलनायुक्तःसर्वभावाननारतम् ॥ २८ ॥ अनास्थयैतिभावानांयदभावनमांतरम् ॥ वाक्यार्थलब्धमनसः सामान्योसावसंगमः ॥ २९ ॥

मान्यः पूर्वभूमिकासाधारणः ॥ स्वदेहक्रियाफलयोर्नकर्तानभोक्ताचेत्युदासीनः ॥ परक्रियाफलानांचनबाध्योनबाधकश्चेत्यसंगः ॥ २५ ॥ इतिनिश्चयेन ॥ अर्थेष्विदरयेष्वसं
जनमनभिष्वंगः ॥ सामान्यासंगसमर्थदर्शोक्तमुपपादयति ॥ प्राक्कर्मेतिसार्धत्रिभिः ॥ सुखस्याप्राप्यमाणत्वेवादुःखस्याप्यमाणत्वेसर्वप्राक्कर्मनिर्मितकर्मत्वानभ्युपपक्षे ईश्वरस्वात
त्र्यपक्षेतीश्वराधीनमेव ॥ चाशब्दउत्तरपक्षस्यप्रामाणिकत्वद्योतनार्थः ॥ २६ ॥ पक्षद्वयेपिममास्वातंत्र्यात्तत्रमकर्तृत्वानुशासनिकीकर्तृताकेवलकाचिदपीत्यर्थः ॥ असंस
गोपयुक्तमभ्यासमस्थादेतुत्वभावेपुदर्शयति ॥ भोगाइति ॥ २७ ॥ २८ ॥ इयमनास्थापिममत्वादिसाहाय्येनवाक्यार्थज्ञानासक्तस्यैवासंसंगहेतुःस्वापनाम्पस्येत्याह ॥
वाक्यार्थेति ॥ २९ ॥

अयंचासंसग.पूर्वभूमिकयोरेवसत्संगाद्युपायैःसम्यगभ्यसनीयइत्याह ॥ अनेनेति ॥ श्रवणमननात्मिकानामात्मसविदांप्रयोगेणआवर्त्तनेन ॥ तथाचभगवतोबादरायणस्यसूत्र माद्वत्तिरसकृदुपदेशादिति ॥ ३० ॥ आत्मवस्तुनिप्रमाणप्रमेयासभावनाद्वयनिरासेनस्फुटतांइत्थमेवात्मवस्त्वितिविश्वासगोचरतामागतेसति ॥ ३१ ॥ सप्तम्यंतत्रयपूर्वान्वयि वस्तुनीत्यस्यविशेषणम् ॥ श्रेष्ठाससगंदर्शयति ॥ नाहमित्यादिना ॥ नाहंकर्त्ताकित्वीश्वरएवकर्त्ता ॥ ममप्राकृतमिदानीक्रियमाणवाकर्मनास्तीत्यादिनिरासतत्प्रतियोग्यादि विकल्पशब्दार्थवेदनामपिदूरतरेकृत्वायन्मौनमासनमितिपरेणान्वयः ॥ ३२ ॥ मौनवाङ्मनश्चक्षुरादिचेष्टाशून्यनिदिध्यासनपरिपाकफलनिर्विकल्पसमाधिनायत्आसनमव स्थानम् ॥ ३३ ॥ यद्ब्रह्मैकरस्यविलीनचित्तवृत्त्यात्मकमासितमतर्बाह्यादिसर्ववस्त्वालंबनशून्यमित्यर्थः ॥ चेतनेचिदाभासे ॥ सर्वाविषयससम्यः ॥ ३४ ॥ यतआसितभास

अनेनक्रमयोगेनसंयोगेनमहात्मनाम् ॥ वियोगेनासतामंतःप्रयोगेणात्मसंविदाम् ॥३०॥ पौरुषेणप्रयत्नेनसंततात्भ्यासयोगतः ॥ क रामलकवद्वस्तुन्यागतेस्फुटतांदृढम् ॥ ३१ ॥ संसारांबुनिधेःपारेसारेपरमकारणे ॥ नाहंकर्त्तेश्वरःकर्त्ताकर्मवाप्राक्तंमम ॥ ३२ ॥ कृत्वा दूरतरेनूनमितिशब्दार्थभावनम् ॥ यन्मौनमासनंशांतंतच्छ्रेष्ठासंगउच्यते ॥ ३३ ॥ यन्नांतर्नबहिर्नाधोनोर्ध्वंनाशासुनांबरे ॥ नपदार्थे नापदार्थेनजडेनचचेतने ॥ ३४ ॥ आसितंभासनंशांतमभासंनभसासमम् ॥ अनाद्यंतमजंकांतंतच्छ्रेष्ठासंगउच्यते ॥ ३५ ॥ संतोषा मोदमधुरःसत्कार्यामलपल्लवः ॥ चित्तनालाग्रसंलीनोविघ्नकंटकसंकटः ॥ ३६ ॥ विवेकपद्मोरूढोंतर्विचारार्कविकासितः ॥ फलंफ लत्यसंसंगात्तृतीयांभूमिकामिमाम् ॥ ३७ ॥ समवायाद्विशुद्धानांसंचयात्पुण्यकर्मणाम् ॥ काकतालीययोगेनप्रथमोदेतिभूमिका ॥ ३८ ॥ भूमिःप्रोदितमात्रातैरमृतांकुरिकेवसा ॥ विवेकेनांबुसेकेनरक्ष्यापाल्याप्रयत्नतः ॥ ३९ ॥

नंस्वप्रकाशचिद्रूपम ॥ अभासप्रकाशकांतरशून्यम ॥ ३५ ॥ सचायंसमाधिःसदाचारोपबृंहितविवेकस्यफलमितिवक्तुंविवेकंपद्मत्वेनरूपयति ॥ संतोषेति ॥ सत्कार्याणिनि ष्कामकर्माणिउपासनगुरुशुश्रूषाश्रवणादीन्येवपल्लवायस्य ॥ चित्तलक्षणनालाग्रेसलीनैरागादिवासनाप्रभवैर्बहुतरविघ्नकंटकैःसंकटोनिबिडितः ॥ ३६ ॥ सोयमसंसंगएवतृ तीयाभूमिकेत्याह ॥ फलमिति ॥ ३७ ॥ प्रथमभूमिकैवानेकजन्मसचितसुकृतपरिपाकैरैहिकपुण्यसचयैश्चदैवादंकुरिताचेत्तैवसत्सगमादिनामहतायत्नेनरक्षणीयासाचेद्रक्षि ताअनायासेनैवद्वितीयादिभूमिकाःसेत्स्यंतीतितत्रैवयत्नाधिक्यमुपदिशति ॥ समवायादिति ॥ विशुद्धानांतत्त्वविदांसमवायाद्दानमानभजनाद्युपायैर्मेलनात् ॥ ३८ ॥ समवेतै स्तैःकिंकार्यंतदाह ॥ भूमिरिति ॥ यतस्तैर्विशुद्धैःसाशुभेच्छालक्षणाभूमिरीषच्छुभप्रवृत्त्युन्मुखतयाप्रोदितामेघैरंकुरिताभूमिरिवप्रतिदिनविवेकोपदेशलक्षणेनांबुसेकेनयथाअ मृताअम्लानाभवतितथारक्ष्यावर्धनीयादुष्प्रवृत्त्यादिविघ्ननिवारणयत्नेनपालनीयाचेत्यर्थः ॥ ३९ ॥

एकोंशोऽधिमर्धितोऽन्याउत्त ... विचारेणोदयमभिवर्द्धनयेत्॥४०॥ एकोंशोऽभिवर्धितोऽन्याउत्त
एषाशुभेच्छासाधनचतुष्टयमध्ये वैराग्यलक्षणेन शान्त्यादिलक्षणेन वा येनांशेन प्रथममंकुरितोऽहसन्तितमेवांशं विचारेणोदयमभिवर्द्धनयेत्॥ एषेति ॥ ४१ ॥ सोपायवर्णितां तृतीयभूमिकां सफलामुपसंहरति ॥ श्रेष्ठेति ॥ ४२ ॥ प्रसंगादन्तराले मूढपुरुषगतिं राम पृच्छति ॥ मू
ढस्येति ॥ आभिजात्याद्यधिकारिविशेषणहीनस्याध्यात्मकथाविमुखस्य कामभोगार्थमेव प्रवृत्तस्याधमस्य सोपायान्तरेण मोक्षोऽस्ति वा न वेति प्रथमप्रश्नार्थः ॥ ४३ ॥ आद्यभू
मिकाप्रथमप्रवेशादारभ्य तृतीयभूम्यादिरूढस्य शायामृतस्य कीदृशी गतिरिति द्वितीयस्य ॥ ४४ ॥ आद्यप्रश्नस्योत्तरमाह ॥ मूढस्येत्यादिसार्धद्वयेन ॥ काकतालीययोग

येनांशेनोद्गमत्येषा विचारेणोदयं नयेत्॥ तमेवानुदिनयत्नात् रुपीवलइवांकुरम्॥४०॥ एषा हि परिमृष्टान्तरन्यासां प्रसवैकभूः ॥ द्विती
यां भूमिकां यत्नात्तृतीयां प्राप्नुयात्ततः॥४१॥ श्रेष्ठासंसंगताद्येषा तृतीया भूमिका त्विह॥ भवति प्रोज्झिताशेषसंकल्पकलनः पुमान्॥४२॥
श्रीरामउवाच॥ ॥ मूढस्यासत्कुलोत्थस्य प्रवृत्तस्याधमस्य च॥ अप्राप्तयोगिसंगस्य कथमुत्तरणं भवेत्॥४३॥ एकां प्राप्य द्वितीयां वा
तृतीयां चेतरां च वा॥ आरूढस्य मृतस्याथ कीदृशी भगवन्गतिः॥४४॥ ॥श्रीवसिष्ठउवाच॥ ॥मूढस्यारूढदोषस्य तावत्संसृतिरातता॥या
वज्जन्मान्तरशतैः काकतालीययोगतः॥४५॥ अथवा साधुसंगत्या वैराग्यं नाभ्युदेति हि॥ वैराग्येऽभ्युदिते जन्तोरवश्यं भूमिकोदयः॥४६॥
ततो नश्यति संसार इति शास्त्रार्थसंग्रहः॥ योगभूमिकयोत्क्रान्तजीवितस्य शरीरिणः॥४७॥ भूमिकांशानुसारेण क्षीयते पूर्वदुष्कृतम्॥
ततः सुरविमानेषु लोकपालपुरेषु च॥४८॥ मेरूपवनकुञ्जेषु रमते रमणीसखः॥ ततः सुकृतसंभारे दुष्कृते च पुराकृते॥४९॥ भोगजाले प
रिक्षीणे जायन्ते योगिनो भुवि॥ शुचीनां श्रीमतां गेहे गुप्ते गुणवतां सताम्॥५०॥ जनित्वा योगमेवैते सेवन्ते योगवासिताः॥ तत्र प्राग्भाव
नाभ्यस्तयोगभूमिक्रमं बुधाः॥ स्मृत्वा परिपतन्त्युच्चैरुत्तरभूमिकाक्रमम्॥५१॥

न त्वविचारत एव वा साधुसंगत्या वा वैराग्यं यावन्नाभ्युदेतीति परेणान्वयः ॥ ४५ ॥ ४६ ॥ द्वितीयस्योत्तरमाह ॥ योगभूमिकयेत्यादिना ॥ ४७ ॥ ४८ ॥ दुष्कृतक्षयानुसारेण रम
तइत्यर्थाद्गम्यते ॥ दुष्कृतं च निमित्तमात्रानुवादः ॥ न हि तस्य नरकादिभोगोऽस्ति न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छतीति भगवद्वचनात् ॥ आनुषंगिकं तु स्वभोगाभिप्रायं वा ॥ स्व
र्गिणाम विचारी रमानस्वादिदु खसहस्रसत्त्वात् ॥ ४९ ॥ भोगजाले भुज्यमाने सुकृतसंभारे दुष्कृते च परिक्षीणे सतीत्यन्वयः ॥ योगिनः शुचीनां श्रीमतामित्यादि वचनम् ॥ ५० ॥ यो
गमेवेति ॥ पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि स इति भगवद्वचनात् ॥ तदेवाह ॥ योगवासिता इति ॥ परिपतन्त्यारोहन्ति ॥ ५१ ॥

---

१ इत आरभ्य सप्तदशत्यन्त सार्धश्लोकद्वयस्थाने पुस्तकान्तरे अन्य पाठ उपलभ्यते स च मूढस्यारूढदोषस्य तावत्संसृतिरातता ॥ यावज्जन्मान्तरशतैर्नो विता प्रथमा भूः ॥
॥ १ ॥ अथवा साधुसंगत्या काकतालीययोगतः ॥ संसारस्य परामर्शाद्वैराग्यं नाभ्युदेति हि ॥ २ ॥ वैराग्येऽभ्युदिते जन्तोरवश्यं भूमिकोदय इति ॥ अनयोर्मध्ये मूललि
खितपाठ एव टीकानुगुण इति भाति ॥

भेददर्शनगुणेनप्रसिद्धजाग्रत्साम्यादित्य प्रश्नयोरुत्तरमुत्क्रमप्रकृतमनुसरति ॥ भूमिकात्रितयमित्यादिना ॥ आद्यभूमिकात्रयेजाग्रच्छब्दप्रवृत्तिनिमित्तमाह ॥ यथावदिति ॥ तामेवार्यतामनार्यजन र्थ. ॥ ५२ ॥ निमित्तांतरमप्याह ॥ उदेतीति ॥ आर्यतापूज्यताप्रयोजकसद्गुणोत्कर्षः ॥ यांदृष्ट्वेति ॥ यद्यदाचरतिश्रेष्ठइतिन्यायादित्यर्थः ॥ ५३ ॥ व्यावृत्ताप्रथमलक्षयति ॥ कर्तव्यमिति ॥ कामंपर्याप्तम् ॥ सर्वनित्यनैमित्तिककर्मेत्यर्थः ॥ ५४ ॥ यथाचारंवृद्धाचारानुसारि तत्रापियथाशास्त्रम् ॥ तत्रापियथाचित्तस्व चित्तयत्कृत्वाप्रसीदतिनपश्चात्तप्यतेतादृशमेव ॥ व्यवहारंलौकिकमपि ॥ ५५ ॥ तदेवार्यत्वंप्रथमभूमिकायाशुभेच्छायामंकुरितम् ॥ द्वितीयभूमिकायाश्रवणादिप्रवृत्त्यात्रि कासितम् ॥ तृतीयभूमिकायाचित्तैकाग्र्यफलेनफलितमित्यर्थः ॥ ५६ ॥ तत्रांतरालेमृतानानिष्कामकर्मानुष्ठानक्षीणपापानाकर्मणापितृलोकोविद्ययादेवलोकइत्यादिश्रुतिप्र सिद्धोदेवलोकादिभोगोपिशुभसंकल्पाहितसद्वासनासंभृतत्वान्नकाम्यकर्मानुष्ठायिनामिवरागादिदुर्वासनासंभरणेनाधःपातहेतुरित्याशयेनाह ॥ आर्यतायामिति ॥५७॥ आ

## यथावद्भेदबुद्ध्येदंतज्जाग्रदितिदृश्यते ॥ ५२ ॥ उदेतियोगयुक्तानामत्रकेवलमार्यता ॥ यां भूमिकात्रितयंत्वेतद्रामजाग्रदितिस्मृतम् ॥

दृष्ट्वामूढबुद्धीनामभ्युदेतिमुमुक्षुता ॥५३॥ कर्तव्यमाचरन्काममकर्तव्यमनाचरन् ॥ तिष्ठतिप्राकृताचारोयःसआर्यइतिस्मृतः ॥५४॥ यथाचारंयथाशास्त्रंयथाचित्तंयथास्थितम् ॥ व्यवहारमुपादत्तेयःसआर्यइतिस्मृतः ॥५५॥ प्रथमायामंकुरितंद्वितीयायांविकासित म् ॥ फलीभूतंतृतीयायामार्यत्वंयोगिनोभवेत् ॥ ५६ ॥ आर्यतायांमृतोयोगीशुभसंकल्पसंभृतान् ॥ भोगान्भुक्त्वाचिरंकालंयोगवा ञ्जायतेपुनः ॥५७॥ भूमिकात्रितयाभ्यासादज्ञानेक्षयमागते ॥ सम्यग्ज्ञानोदयेचित्तेपूर्णचंद्रोदयोपमे ॥५८॥ निर्विभागमनाद्यंतंयो गिनोयुक्तचेतसः ॥ समंसर्वंप्रपश्यंतिचतुर्थींभूमिकामिताः ॥ ५९ ॥ अद्वैतेस्थैर्यमायातेद्वैतेप्रशममागते ॥ पश्यंतिस्वप्नवल्लोकांश्चतुर्थीं भूमिकामिताः ॥ ६० ॥ भूमिकात्रितयंजाग्रच्चतुर्थीस्वप्नउच्यते ॥ विच्छिन्नशरदभ्रांशविलयंप्रविलीयते ॥ ६१ ॥

ज्ञानेज्ञानविरोधिद्वैतवासनाजालेअसंभावनाविपरीतभावनादोषेचक्षयमागतेसतिनिष्प्रत्यूहान्महावाक्यादपरोक्षाखण्डाकारज्ञानोदयेसतिमूलाज्ञानक्षयाद्योगिनश्चतुर्थीभूमि कामितागता सन्तःसर्वंजगत्सममानंदैकरसंपश्यंतीतिपरेणान्वयः ॥५८॥५९॥६०॥ व्यावहारिकसत्तयाजगद्भानसाम्याज्जाग्रत् ॥ प्रातिभासिकसत्तयातद्भानसाम्यात्स्वप्नउच्य ते ॥ पञ्चम्याभूमिकायासुषुप्तिपदप्रवृत्तिनिमित्ततत्साम्यदर्शयति ॥ विच्छिन्नेति ॥ सुषुप्तिकालेसकलेविलीनेतमोभिभूत सुखरूपमेतीतिश्रुतौसुषुप्तौसर्वविलयप्रसिद्धेरत्रापि प्रातिभासिकत्रिपुटीपरिशेषस्यापिविलयेनतत्साम्यादितिभावः ॥ विच्छिन्नस्यशरदभ्रखण्डस्यकेवलाकाशमात्रपरिशेषलक्षणंविलयमिवशुद्धचिन्मात्रपरिशेषलक्षणस्वभाव प्रविलीयतेप्रविलयेनप्राप्नोतीत्यर्थः ॥ लीङर्थफलव्यापाराशयोर्मध्येफलांशस्यविलयशब्देननिष्कृष्यानुवादात्तस्यचव्यापारांशप्रतिकर्मत्वान्मृदुपचतीतिक्रियाविशेषणेप्वि वात्रापिद्वितीया ॥ अवशिष्टव्यापारांशमात्रंप्रविलीयतइतितिङतप्रकृत्योच्यतेउदपेषपिनष्टीत्यत्रेव ॥ ६१ ॥

सत्ताविस्मृतावशेष ॥ सुषुप्तमितिपदंगीर्णनामपस्यास्ताम् ॥ ६१ ॥ उदितआविर्भूतस्वरूप ॥६२॥ सुषुप्तस्थानएकीभूत प्रज्ञानघनएवेतिश्रुत्युक्तप्रज्ञानघनतासाम्यात्सुत स्यात्सुषुप्तपदनामेत्याशयेनाह ॥ सुषुप्तेति ॥ आनन्दमयाद्यानन्दभुगितिश्रुतिप्रसिद्धांतर्मुखस्थानन्दास्वादनसाम्याद्वपितन्नामेत्याशयेनाह ॥ अतर्मुखतयेति ॥ ६४ ॥ चिरासन अस्यताप्युच्चस्वताप्युत्थानवासन सन्निस्यर्थ ॥ ६५ ॥ उक्तसुषुप्तमपेक्ष्यतुर्याभिधानाम् ॥ तल्लक्षणाम्याह ॥ यत्रेत्यादिना ॥ ६६ ॥ द्वैतस्यैक्यस्यापिसर्व्यांतरस्यावत्तकस्यात्यात्तदुभयवर्जित ॥ तथात्वमिकत्वहृदयपथिसर्वसंदेहभेदमाह ॥ निर्ग्रंथिरिति ॥ भिद्यतेहृदयग्रंथिश्छिद्यतेसर्वसंशयाइतिश्रुतेरितिभाव ॥ ६७ ॥ अनिर्वाण प्रारब्धपृ तराशापनिर्वाणामुक्त ॥ यथाचित्रदीप अनुपर्वाणापिनज्वलतीतिनिर्वाणःअजगरस्वभावेनांतर्बहिश्चशून्य ॥ ६८ ॥ अनाद्यनानदस्वभावेनत्वन्तर्बहिश्चपूर्ण ॥ तस्याद्वि

मत्तावशेषएवास्तेपंचमींभूमिकागत ॥ पंचमींभूमिकामेत्यसुषुप्तपदनामिकाम् ॥ ६२ ॥ शांताशेषविशेषांशस्तिष्ठत्यद्वैतमात्रके ॥ गलितद्वैतनिर्भासमुदितोंत प्रबुद्धवान् ॥ ६३ ॥ सुषुप्तघनएवास्तेपंचमींभूमिकामित ॥ अतर्मुखतयातिष्ठन्बहिर्वृत्तिपरोपिसन् ॥ ६४ ॥ परिश्रांततयानित्यनिद्रालुरिवलक्ष्यते ॥ कुर्वन्नभ्यासमेतस्यांभूमिकायांविवासन ॥ ६५ ॥ षष्ठींतुर्याभिधामन्यांक्रमात्क्रमतिभूमिकाम् ॥ यत्रनासन्नसद्रूपोनाहनाप्यनहंकृति ॥ ६६ ॥ केवलक्षीणमननमास्तेद्वैतैक्यनिर्गत ॥ निर्ग्रंथि शांतसंदेहोजीवन्मुक्तोविभावन ॥ ६७ ॥ अनिर्वाणोपिनिर्वाणश्चित्रदीपइवस्थित ॥ अतःशून्योबहिःशून्यःशून्य कुम्भइवांबरे ॥ ६८ ॥ अत पूर्णोबहि पूर्ण पूर्णकुम्भइवार्णव ॥ किंचिदेवपसपन्नस्त्वथवैपनकिंचन ॥ ६९ ॥ षष्ठ्यांभूम्यामसौस्थित्वासप्तमींभूमिमाप्नुयात् ॥ विदेहमुक्ततातूक्तासप्तमीयोगभूमिका ॥ ७० ॥ अगम्यावचसांशांतासासीमासर्वभूमिषु ॥ कश्चित्साशिवमित्युक्त्वाकेश्चिद्ब्रह्मेत्युदाहृता ॥ ७१ ॥ केश्चित्प्रकृतिपुंभाववैविक्त्यइतिभाविता ॥ अन्यैरप्यन्यथानानाभेदैरात्मविकल्पिते ॥ ७२ ॥ नित्यमव्यपदेश्यापिकथंचिदुपदिश्यते ॥ सप्तैताभूमिका प्रोक्तामयातवरघूद्वह ॥ ७३ ॥

तीयरूपस्यससारदशायांकदाप्यप्रसिद्धत्वेनांकिंचिद्रूपेणपरमाश्चर्यरूपेणसपन्न ॥ वास्तवद्वस्यानित्यसिद्धत्वान्नांकिंचनसपन्न ॥ ६९ ॥ सप्तमीभूमिकापरिसीमात्वेसैवमुक्तेर्नेतिसप्तमीसापरिसीमाविषय स्यान्नजीवतामितिप्रागुक्तेत्यर्थ ॥ ७० ॥ वचसामगम्यायोगिमानसानुभवैकगम्येत्यर्थ ॥ तत्रजीवत सप्तमीभूमिकैवनास्तीतियोगिमानसानुभवमप्यनापिनरुपानास्तीतिभ्रमितव्यम ॥ सासीमासर्वभूमिष्वितितस्यासर्वभूमिमध्यपातसीमात्वोक्तिविरोधापत्ते ॥ आसामभ्यासयोगेनेत्युत्तरप्राप्त्यसनीयत्वोक्तिविरोधाच्च ॥ शिवमितिशैवैरुक्ता ॥ शिवमद्वैतचतुर्थमन्यतइतिश्रुत्यनुरोधादितिभाव ॥ ब्रह्मेतिवेदांतिभि ॥ ७१ ॥ प्रकृतिपुंसोर्भाव अविविक्तावस्थितिस्तस्यविवेकइतिसांख्ययोगिभि ॥ अन्यैर्जैमिनिसात्वतमाहेश्वरबुद्धार्हदादिभि स्वर्गोवासुदेवोसहेश्वरोऽनुपप्लवविज्ञानमनुपप्लवसुखमित्यादिस्वस्वबुद्ध्यनुसारिविकल्पैर्नानाभेदैरन्यथान्यथाभावितेत्यर्थ ॥ ७२ ॥ यदेवसामनन्यंतर्हिकथमुपदिश्यतेतमाह ॥ नित्यमिति ॥ कथंचिद्भागत्यागलक्षणाद्युपायैरित्यर्थ ॥ ७३ ॥

परवैराग्यदाक्ष्येसत्येवभूमिकासुप्रवेशोभवतिनान्यथेतिमत्तकरिण्याख्यायिकाच्छलेनवर्णयितुमारभते ॥ अस्तीत्यादिना ॥ ७४ ॥ विग्रहव्यग्रासदासमरोद्युक्तामहद्भ्यांदशना भ्याशसनशस.प्रख्यातिस्तद्वती ॥ अस्तुसाकिंततस्तत्राह ॥ साचेदिति ॥७५॥ तयैताभूमिकानिरुद्धाअतस्तद्वधविनानैकापिभूमिकाजेतुंशक्येत्यर्थ ॥७६॥ सायावन्नविजिता तावत्तदाक्रातासुक्षुद्रसासारिकसपद्रूपास्वपिसमरभूमिषुप्रवेष्टुमपिकोनामसुभट समर्थोयोद्धेत्यर्थ ॥ प्रश्न.स्पष्ट ॥७७॥७८॥ क्वचैषारमतइत्यस्योत्तरमाह॥ शरीरकाननेइति॥ विविधदैन्यधावनशोकमोहाद्युल्लासकरणशीला ॥ मत्तानीद्रियाण्येवोग्रा कोपना.कलभा शावकायस्या ॥ रसनाकलभाषिणीमधुरबृंहितसाधनयस्या ॥७९॥ प्रख्यातौदतौ दर्शयति ॥ कर्मेति॥कर्मशुभाशुभरूपम् ॥ मदमत्तेत्यत्रोक्तमदंदर्शयति ॥ मदइति॥एवमग्रेपियोज्यम् ॥८०॥८१॥ नागीकरिणी ॥ जीवसचयान्प्राणिनिकायान् ॥८२॥ आश

आसामभ्यासयोगेननदुःखमनुभूयते॥ अस्त्यत्यंतमदोन्मत्तामृदुमंथरचारिणी॥ ७४॥ करिणीविग्रहव्यग्रामहादशनशंसिनी॥ सा चेन्निहन्यतेनूनमनंतानर्थकारिणी॥ ७५॥ तदेतासुसमग्रासुभूमिकासुनरोजयी॥ करिणीमदमत्तासायावन्नविजितौजसा॥ ७६॥ कोनामसुभटस्तावत्संपत्समरभूमिषु॥ ॥श्रीरामउवाच॥ ॥कासौप्रमत्ताकरिणीकाश्चतारणभूमयः॥ ७७॥ कथंनिहन्यतेचैषा क्वचैषारमतेचिरम्॥ ॥श्रीवसिष्ठउवाच॥ ॥रामेच्छानामकरिणीइदंमेस्त्वितिरूपिणी॥ ७८॥शरीरकाननेमत्ताविविधोल्लासका रिणी॥मत्तेंद्रियोग्रकलभारसनाकलभाषिणी॥ ७९॥ मनोगहनसंलीनाकर्मदंतद्वयान्विता॥ मदोस्यावासनाव्यूहःसर्वतःप्रसरद्वपुः ॥८०॥ संसारदृष्टयोरामतस्याःसमरभूमयः॥ भूयोयत्रानुभवतिनरोजयपराजयौ॥८१॥ इच्छानागीनिहंत्येषाकृपणान्जीवसंच यान्॥ वासनेहामनश्चित्तंसंकल्पोभावनंस्पृहा॥८२॥ इत्यादिनिवहोनाम्नामस्यास्त्वाशयकोशगः॥ धैर्यनाम्नावरास्त्रेणप्रस्तुतामवहे लया॥८३॥ नागींसर्वात्मिकामेतामिच्छांसर्वात्मनाजयेत्॥ यावद्वास्त्विदमित्येवमियमंतर्विजृंभते॥८४॥ तावदुग्राकुसंसारमहावि षविषूचिका॥ एतावानेवसंसारइदमास्त्वितियन्मनः॥८५॥ अस्यतूपशमोमोक्षइत्येवंज्ञानसंग्रहः॥प्रसादकारिणीस्वच्छानिरिच्छेवि मलाकृतौ॥८६॥ तैलबिंदुरिवादर्शेविश्राम्यत्युपदेशवाक्॥ असंवेदनमात्रेणनोदेतीच्छाभवांकुरः॥८७॥

यकोशगश्चित्तकोशगतोवृत्तिवैचित्र्यप्रयुक्तइतियावत् ॥ कथनिहन्यतेचैषेतिप्रश्नस्योत्तरमाह ॥ धैर्येति ॥८३॥ सर्वात्मिकाब्रह्मलोकांतसर्वभोग्यगोचराम् ॥ सर्वात्मनासर्वथा सर्वमहमेवेतिभावितेनात्मनावा ॥ नहिनित्यलब्धात्मरूपतयाभावितेतृष्णाभवतिकिंत्विदमित्यलब्धतयादृष्टेइत्याह ॥ यावदिति ॥८४॥ ससारमहाविषविषूचिकारूपातृष्णाता वदेवविजृंभतइत्यनुकृष्यते ॥८५॥ तृष्णैवसंसारस्तत्क्षयएवमोक्षभूमिकोदयहेतुत्वान्मोक्ष कथवैराग्यस्यभूमिकोदयहेतुतातद्दर्शयति ॥ प्रसादेति ॥ ८६ ॥ रागादिपुरुषापराध मलिनेचित्तेश्रुत्याचार्याद्युपदेशवाक्पद्मपत्रेजलबिंदुरिवनसंश्लिष्यते ॥ वैराग्यादिसाधनसंपन्नेतुआदर्शेतैलबिंदुरिवसंश्लिष्टासतीअविद्यामलमार्जनेनप्रसादोब्रह्माकारप्रथना नुकूलास्वच्छतातत्कारिणीपर्यवस्यतीत्यर्थः ॥ रागादेरनुदयेउदितस्यच्छेदनेचोपायमाह ॥ असंवेदनेति ॥इच्छारूपोभवांकुर.संवेदनविषयस्मरणतत्परित्यागमात्रेणनोदेति॥८७॥

मनागभ्युदिताप्यसंवेदनशस्त्रेणैवच्छेत्तव्या ॥ ८८ ॥ विच्छुरिताभ्याम ॥ दीनताभोगकार्पण्यम् ॥ असंवेदनस्वरूपमुत्सारयति ॥ स्वसंवेदनेति ॥ सुप्तु असंवेदनं स्वसंवेदनतदनुरू
द्यनिरोधपरं प्रत्याहारपरं च चित्तस्यातस्तूष्णींनिर्व्यापारतया आसनम् ॥ ८९ ॥ तदभ्यासकालेसावधानतारूपपरिपाककालेत्ववधानविनिर्मुक्तसुषुप्तिमरणावस्थयोरिव
स्वत एवसम्पद्यत इत्याशयेनाह ॥ अवधानेति ॥ तामनर्थकारिणीमिच्छामर्त्सीं प्रत्याहारलक्षणेनबडिशेनाकृष्य नियच्छनवशीकुर्वतः सर्वसमृद्ध्याप्तिर्मुक्तिः ॥ ९० ॥ ननु भावकल्पना
स्यामार्ग मुक्तिरिति च शास्त्रयात्कमिदानीमिच्छात्यागाविति कथमुच्यते तमाह ॥ इदमेस्त्विति ॥ संवेगश्चित्तधावनविषयानुसंधानलक्षणकल्पनाफलावस्थेयमिति कल्पनमाहुरि
त्यर्थ ॥ भावनस्मरणम् ॥ ९१ ॥ संकल्प एव सर्वानर्थमूलमिति प्राक्तनानां सर्वेषामप्ययमेवाभिप्राय इत्याशयेनाह ॥ स्मरणमिति ॥ कथं तर्हि स्मृतिसंकल्पपदयोः पर्यायतातमाह ॥
तमपि ॥ ९२ ॥ संकल्प अननुभूतमपि भाव्यत इति विशेषात् पर्यायत्वेपि भूमिकाकल्पसु भिदैयत्वेन कश्चिद्विशेष इत्यजोदोऽभविवक्षित इत्याशयेनाह ॥ अनुभूतामिति ॥ ९३ ॥ इदा

मनागभ्युदितैवेच्छा छेत्तव्यानर्थकारिणी॥ असंवेदनशस्त्रेण विषस्येवांकुरावली॥८८॥ इच्छाविच्छुरितो जीवो विजहाति न दीनताम्॥
स्वसंवेदनयत्नस्तु तूष्णीमेवातरासनम्॥८९॥ अवधानविनिर्मुक्तसुमंशवशतंयया॥ तां प्रत्याहारबडिशेनेच्छामत्सीं नियच्छत॥९०॥
इदमेस्त्विति संवेगमाहु कल्पनमुत्तमा ॥ अयं स्याभावनं यत्तत्कल्पनात्याग उच्यते॥ ९१ ॥ स्मरणं विद्धि संकल्पं शिवमस्मरणं विदु ॥
तत्र प्रागनुभूतं च नानुभूतं च भाव्यते॥९२॥ अनुभूतानानुभूतान्स्मृतिं विस्मृत्य काष्ठवत्॥ सर्वमेवाशु विस्मृत्य गूढस्तिष्ठ महामते ॥९३॥
ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति तत्॥ असंकल्पः परं श्रेयः स किमतनं भाव्यते ॥ ९४॥ किल तूष्णींस्थितेनैव तत्पदं प्राप्यते परम्॥
परमं यत्साम्राज्यमपि रामतृणायते॥ ९५॥ गम्यदेशैकनिष्ठस्य यथा पांथस्य पादयो ॥ स्पन्दो विगतसंकल्पस्तथा स्पन्दः स्वकर्मसु॥९६॥
बहुनात्र किमुक्तेन संक्षेपादिदमुच्यते ॥ संकल्पनं परो बंधस्तदभावो विमुक्तता॥ ९७॥

नींपरमकारुणिको वसिष्ठः सर्वमनानांविषयसंकल्पत्यागं विना मोक्षो न सिध्यतीति त्याग एवावश्यकार्य इति समयवासिष्ठोपदेशरहस्यमाक्रोशेनापि दृढीकरिष्यन्नाह ॥ ऊर्ध्वबा
हुरिति ॥ विरौमि ऊर्ध्वं स्वरेण पुनःपुनराक्रोशामि ॥ एवं क्रियमाणमप्याक्रोशं बधिरवत्सुममयसद्दृश्यं च कश्चिदपि जनो न शृणोति ॥ शृण्वत्स्वपि च श्रवणफलादर्शनादुक्तिः ॥ अ
सदुक्ते किमर्थं न भाव्यते न चिन्त्यते कृतकृत्यता पर्यवसितं क्रियते नेति मत्तमध्यमाधिकारिणां सम्यग्ज्ञानमन्तरेणार्थसिद्धिरित्यर्थः ॥ ९४ ॥ तूष्णीं सर्वव्यापारोपरमेण स्थितेनैव पुंसा
मत्तादृशपरमपदं प्राप्यते किल निश्चितं सिद्धौ ॥ तथा च श्रुतिः ॥ यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह बुद्धिश्च न विचेष्टते तामाहुः परमां गतिमिति ॥ परमं हैरण्यगर्भं तमपि साम्रा
ज्यसुखं परमभूमानन्दतृणवत्तुच्छतामापद्यत इत्यर्थः ॥ ९५ ॥ ननु सर्वथा संकल्पत्यागे देहस्पन्दाप्रसिद्धेर्व्यवहारलोपे कथं जीवनं तमाह ॥ गम्येति ॥ यथा गन्तव्ये स्वगृहादिदेशे एवै
कनिष्ठा अविच्छिन्नचित्तवृत्तिधारा यस्य तथाविधस्य पान्थस्य पादयोर्विगतसंकल्प एव मतिक्षणस्पन्दो भवतीति तथा योगिनोऽपि विनैव संकल्पं पूर्वाभ्याससंस्कारमात्रादृष्टवशादेवानिषिद्ध
स्वकर्मसु स्पन्दो भविष्यतीत्यर्थः ॥ ९६ ॥ ९७॥

कयादृष्ट्याअसकल्पनभवेत्तामाह ॥ सर्वमिति ॥ भूतार्थचिद्रूपंनित्यसिद्धपरमार्थचिद्रूपम ॥ ९८ ॥ अवेदनंतादृशदृष्टिपरिणत्याअहंममेत्यध्यस्तसर्वभेदविस्मरणमेवजी
वब्रह्मैक्यलक्षणयोगविदुर्ब्रह्मविद ॥ तविद्याद्दुःखसंयोगवियोगयोगसंज्ञितमितिभगवतातथाव्याख्यातत्वादितिभाव. ॥ योगस्थ.कुरुकर्माणीतितद्वाक्यतुलोकसंग्रहेच्छप्रत्यै
च्छिकविहितानुष्ठापनार्थंननियमार्थमित्याशयेनाह ॥ योगस्थइति ॥ अथसमाधिपरश्चेन्माकुरु ॥ ९९ ॥ यथासिभोइति ॥ यथास्थितस्वरूपावाप्तौयथास्थितस्थितेरेवो
चितत्वादितिभाव. ॥ १०० ॥ सास्थितिरेवसर्वप्रपञ्चनिवृत्तिरूपत्वाच्चूडालोपदर्शितःसर्वत्यागोपीत्याह ॥ शिवमिति ॥ १०१ ॥ विस्तरोक्तमनर्थतत्त्वपुरुषार्थवत्वचनिष्कृष्य
करतलामलकवद्दर्शयन्नुपसंहरति ॥ अहममेति ॥ १०२ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनि०पू०षड्विंशत्युत्तरशततमःसर्गः ॥ १२६ ॥ ॥ इहरामस्यविश्रातिर्भ
रद्वाजोत्सुकोक्तय. ॥ लक्षणजाग्रदादीनातुरीयचोपवर्ण्यते ॥ १ ॥ एतावत्पर्यंतंश्रीवसिष्ठरामसंवादंश्रावयित्वारामविश्रांतिस्मरणसन्निधापितेनिरतिशयानंदपूर्णात्मनिविश्रां

सर्वमेवमजंशांतमनंतंध्रुवमव्ययम् ॥ पश्यन्भूतार्थचिद्रूपंशांतमास्वयथासुखम् ॥ ९८ ॥ अवेदनंविदुर्योगंशांतमासितमक्षयम् ॥
योगस्थःकुरुकर्माणिनिर्वासनोथमाकुरु ॥ ९९ ॥ अवेदनंविदुर्योगंचित्तक्षयमकृत्रिमम् ॥ अत्यंततन्मयोभूत्वातथातिष्ठयथासिभो
॥ १०० ॥ शिवंसर्वगतंशांतंबोधात्मकमजंशुभम् ॥ तदेकभावनंरामसर्वत्यागइतिस्मृतः ॥ भावयच्छ्वदंतःस्वंकार्यंकर्मसमाचर
॥ १०१ ॥ अहंममेतिसंविदन्नदुःखतोविमुच्यते ॥ असंविदन्विमुच्यतेयदीप्सितंसमाचर ॥ १०२ ॥ ॥ इ०वा०वा०दे०मो०नि०पू०
परमार्थस्वरूपवर्णनंनामषड्विंशत्युत्तरशततमःसर्गः ॥ १२६ ॥ ॥ ७ ॥ ॥ श्रीभरद्वाजउवाच ॥ ॥ इतिवरमुनिनोक्तंज्ञानसा
रंपुराणंसकलमनुनिशम्यश्रीरघूणांकुलाग्र्यः ॥ विमलमतिरपृच्छत्किंचिदन्यत्स्वयंवासमसुखपरिपूर्णःपूर्णबोधस्थितोसौ ॥ १ ॥
सखलुपरमयोगीविश्ववंद्यस्सुरेशोजननमरणहीनःशुद्धबोधस्वभावः ॥ सकलगुणनिधानंसन्निधानंरमायास्त्रिजगदुदयरक्षानुग्रहा
णामधीशः ॥ २ ॥

तन्तूर्ष्णींभूतंगुरुश्रीवाल्मीकिंदृष्ट्वायापिस्वयंतत्रविश्रांत्यलाभादयेपिश्रवणोत्सुकोभरद्वाज·पृच्छति ॥ इतीत्यादि ॥ हेगुरोविमलमति श्रीरघूणाकुलाग्र्योऽसौश्रीराम.वरमुनि
नाश्रीवसिष्ठेनइतिवर्णितैर्बहुभिःप्रकारैरुक्तमुपदिष्टपुराणचिरंतनब्रह्मादिमहर्षिसंप्रदायागतज्ञानसारंनिशम्यश्रुत्वाअग्रेपिजिज्ञासुःकिंचिदपृच्छत् ॥ अथवाएतावतैवोपदेशेनशां
तसर्वसंदेहमोहःस्वयसमेनविषयवैचित्र्यप्रयुक्ततारतम्यरहितेनसाक्षात्कृतेनात्मसुखेनपरिपूर्ण.सन्पूर्णबोधात्मैवभूत्वास्थितस्तद्वदेतिशेषः ॥ १ ॥ ननुसमानेप्रथश्रवणेत्वयास्वस
देहमोहनिवृत्त्यनिवृत्तिभ्यामेवरामस्यापितेकुतोनावधार्यतेइतितुनाशक्य यतोममरामस्यचमहदंतरमस्तीत्याह सखल्विति ॥ सनित्यसिद्धज्ञानयोगैश्वर्यानावृतचित्स्वभावः
सर्वस्यवशीसर्वस्येशानइत्यादिश्रुतिप्रसिद्धईश्वरोजगत्पालनायावतीर्णोजगद्गुरुरपिसर्वलोकानुग्रहायज्ञानशास्त्रप्रवृत्त्यर्थंस्वेच्छयास्वस्याज्ञानमिवपरिकल्प्यश्रोतुंप्रवृत्तः अहं
त्वनाथज्ञएवमुमुक्षुरल्पतरसाधनसंपन्नइतिमहदंतरमितिभावः ॥ २ ॥

एवंपृष्टो वाल्मीकि प्रश्नद्वैविध्यकादिप्रश्नकथाशेषेणसमर्थयन्नुत्तरमाह ॥ इतिश्रुत्वेत्यादिना ॥ ३ ॥ शक्तिपात अखण्डाकारमाश्रयजन्यचित्तवृत्तीनित्यनिरतिशयानन्दालनत्वा
विभावस्तस्मात् ध्यासपूर्दाहादनलक्षणात्मेपणप्रकारामलंविद्न कुण्डलिन्या सुषुम्नामार्गेषट्चक्राणिभित्वाब्रह्मरन्ध्रप्रवेशेनशिवशक्तिसंयोगलक्षणोयोगशास्त्रप्रसिद्धोवा ॥
यस्तुमपशाम्भवसिद्धागुरो शिष्यानुग्रहातिशयेनस्वदेहस्पर्शाशिष्यदेहप्रविश्यतदीयनाडीपरिशोधनद्वारातत्कुण्डलिन्या समयचक्रपुसंचारणेनसद्यःभुवनसमाधारापरोक्षमदर्शनरू
प शक्तिपात मनहाविवक्षित ॥ श्रीरामस्यस्वधर्मीश्वरस्यसाक्षात्वात् स्वत सिद्धतयातदनपेक्षणात्तेनलोकोपकारासिद्धेश्चेति ॥ उद्बुद्ध स्वस्वरूपेजागरितोविकसितश्च ॥ ४ ॥
विभागउक्तानुक्तार्थविवेचनम ॥ आदिपदाद्वासार्थपर्यालोचनमाभयपसते ॥ तद्वयाभि परिपाटीभिमनोबुद्ध्यादिव्यापारैर्विवर्जित ॥ आनन्दामृतेनपूर्णोऽसमःप्राणायस्य

॥ श्रीवाल्मीकिरुवाच ॥ ॥ इतिश्रुत्वावसिष्ठस्यवाक्यंवेदांतसंग्रहम् ॥ विदिताखिलविज्ञानोराम कमललोचन ॥३॥ शक्तिपातवशो न्मेषप्रस्फुटामलचिद्घन ॥ मुहूर्तमासीद्बुद्धश्चैतन्यानंदसागर ॥ ४ ॥ प्रश्नोत्तरविभागादिपरिपाटीविवर्जित ॥ आनंदामृतपूर्णासुरोम स्फटिकलिंगक ॥ ५ ॥ महासामान्यरूपत्वाच्चिद्व्यापकतयास्थित ॥ नित्यमष्टगुणैश्वर्यतृणप्रायमनोरथ ॥ ६ ॥ नकिंचिदूचेसंपन्न शिवे परिणत पदे ॥ ॥ श्रीभरद्वाजउवाच ॥ ॥ अहोखलुममाश्चर्यंराम प्राप्तोमहत्पदम् ॥ ७ ॥ कथमेतादृशीप्राप्तिरस्माकंमुनिनायक ॥ मूढा लब्धाश्चकिंचिज्ज्ञामादृशा कथपापिन ॥ ८ ॥ क्वचब्रह्मादिभि प्राप्यांदुर्लभारामसंस्थिति ॥ अहोमुनीश्वरगुरोकथविश्राम्य तेमया ॥ दुष्पारस्यभवांभोधेर्त्रायतेतद्वदाशुमे ॥ ९ ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ श्रीरामवृत्तांतमशेषमादितोवसिष्ठवाक्यानुगत निरूपितम् ॥ धियाविचार्यानुपरांतशंभ्रमोमयापितादृक्कथनीयमत्रते ॥ १० ॥ अविद्याया प्रपंचोयंनास्तिसत्यमिहाण्वपि ॥ विवेचय तिविबुधाविवदत्यविवेकिन ॥ ११ ॥

॥ ५ ॥ महासामान्यसर्वाधिष्ठानसन्मात्र सत्यम्भिन्नस्तद्रूपत्वसंपत्ते ॥ सर्वतश्चिद्व्यापकतयापूर्ण स्थित ॥ सएवास्यनिरतिशयानन्दाविर्भावइत्याशयेनाह ॥ नित्यमिति ॥ अष्ट
गुणानामष्टसंख्यानामणिमादिभयाणांतृणप्रायामनोरथालिप्सायस्य ॥ ६ ॥ शिवपदेनिरतिशयानन्दवस्तुनिपरिणतएकरसभूत संपन्न ॥ इत्यमुत्तमाधिकारिणोरामस्यश्रव
णादमनन्तरमतिमुपवर्ण्यमध्यमाधिकारिणांचित्तशुद्ध्यर्थमुपासनाविशेषमवस्थात्रयविवेकदृश्यप्रविलापनाविमननोपायांश्चवक्तुमवतारहेतून् भरद्वाजीत्सुक्यादीनरिष्टनेम
प्रभृतीन्वाल्मीकिर्वर्णयति ॥ भरद्वाजउवाचेत्यादिना ॥ ७ ॥ ८ ॥ दुष्पारस्यभवांभोधेर्मोहवारिदनिशाप ॥ ९ ॥ एवंपृष्टवाल्मीकि श्रुतपर्यालोचनावर्तनमेवप्रथममावृत्ति
रसकृदुपदेशादितिन्यायसिद्धमुपदिशति ॥ श्रीरामेति ॥ तादृक्त्वत्तनुभवानुकूलमवस्थात्रयविवेचनादिकथनीयकथ्यतेशृण्वित्यर्थ ॥ १० ॥ मिथ्याभूताविद्याकार्यत्वादेवम
पंचस्यात्वरः चिरैरिक्तसद्भावागमचबुद्धिमनावाङ्मुखाशक्यमित्याह ॥ अविद्याया इत्यादिना ॥ ननुप्रपंचस्याविद्याकार्यत्वंचेत्किमर्थंवादिनांविवादस्तमाह ॥ विवेचयंतीति ॥ ११ ॥

